एवार्थे । स एव देवेषु गच्छति । देवास्तमेव परिगृह्णन्ति नान्यमित्यर्थः ॥ ४ ॥

वेङ्कट० अग्ने ! यं यज्ञम् हिंसारहितमहिंसितं त्वत्सन्निधानादसुरैः, सर्वतः परिभवसि गार्हपत्यादिव्यूहेन अरानिव नेमिः स एव देवेषु गच्छति ॥ ४ ॥

मुद्गल० हे अग्ने ! त्वं यं[1] यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि । सः इत् स एव यज्ञः देवेषु तृप्तिं जनयितुं स्वर्गे[2] गच्छति ॥ ४ ॥

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒रा ग॑मत् ॥ ५ ॥

अ॒ग्निः । होता॑ । क॒विऽक्र॑तुः । स॒त्यः । चि॒त्रश्र॑वःऽतमः । दे॒वः । दे॒वेभिः॑ । आ । ग॒म॒त् ॥ ५ ॥

स्कन्द० अग्निः होता देवानाम् । कविक्रतुः । कविशब्दोऽत्र क्रान्तवचनः, [1]न मेधाविनाम । क्रतुशब्दः प्रज्ञानाम कर्मनाम वा, क्रान्तं गतं[2] सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः । सत्यः अविसंवादकः[3] यथाभिलषितफलदः[4] इत्यर्थः । चित्रश्रवस्तमः चायृ पूजानिशामनयोः [5]इत्यस्य [चित्रमिति रूपम्] । चित्रं[6] पूजनीयम् । [7]विचित्रपर्यायो वा चित्रशब्दः[7] । [8]श्रव इत्यन्ननाम वा, धननाम वा, कीर्तिपर्यायो वा[8] । अतिशयेन पूज्यं विचित्रं वा [9]अन्नादीनामन्यतमं[9] यस्य स चित्रश्रवस्तमः । देवः [10]दानादिगुणः देवेभिः सहयोग-लक्षणा एषा तृतीया । देवैः सह आगमत्[10] आगच्छतु ॥ ५ ॥

वेङ्कट० अग्निः होता क्रान्तप्रज्ञः[11] सत्यकर्मा अतिशयेनाश्चर्यश्रवणः देवः देवैः सह आगच्छतु ॥ ५ ॥

मुद्गल० अयम् अग्निः देवः देवेभिः अन्यैर्देवैर्हविर्भोजिभिः सह आगमत् अस्मिन् यज्ञे समागच्छतु[12] कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः क्रान्तप्रज्ञः । सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः श्रवः कीर्तिः । अतिशयेन विचित्रकीर्तियुक्तः ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये प्रथमो वर्गः ॥ १ ॥

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत् तत् स॒त्यम॑ङ्गिरः ॥ ६ ॥

यत् । अ॒ङ्ग । दा॒शुषे॑ । त्वम् । अ॒ग्ने॒ । भ॒द्रम् । क॒रि॒ष्यसि॑ । तव॑ । इत् । तत् । स॒त्यम् । अ॒ङ्गि॒रः॒ ॥ ६ ॥

स्कन्द० [13]अङ्ग इति निपातोऽत्र पादपूरणः क्षिप्रार्थो वा सामर्थ्यात्[13] । यत्[14] क्षिप्रम् दाशुषे [15]दाश्वान् यजमानः । हविषां दातृत्वात् तस्मै[15] । त्वम् हे अग्ने ! भद्रम् भजनीयं स्तुत्यमुत्कृष्टम्[16] । इष्टमित्यर्थः[13] । किं पुनस्तत्, धनमन्नं वा । करिष्यसि [13]दाशुषे इति सम्प्रदानचतुर्थीश्रुतेरिह करोतिः क्रियासामान्यवचनो दाने वर्तते[13] । दास्यसि इत्यर्थः । तव इत् तत् [13]इच्छब्द एवार्थे वर्तते[13] ।

---

१. नास्ति वि मै[1]. २. सो मूको. ३-३. क्रतु. प्रज्ञाया कर्माणि वा वि[1] अ कु. ४. अभिल° वि[2] अ; अभिसंपाद° साम्ब. ५. °स्प्रदः वि[1] अ कु. ६-६. नास्ति वि[1] अ कु. [-] नास्ति मूको. ७-७. विचित्रं वा चित्रम् वि[1] अ कु. ८-८. श्रः अन्न वा धन वा कीर्तिर्वा वि[1] अ कु; °न्ननाम वा कीर्ति° वि[2]. ९-९. अन्न धन यशश्च (यशो वा कु.) वि[1] अ कु. १०-१०. दाता दीप्तश्च । देवैः वि[1] अ कु. ११. क्रान्त° वि[1] अ. १२. °गच्छत वि मै[1]. १३-१३. नास्ति वि[1] अ कु. १४. यदङ्ग कु; अङ्ग वि[1] अ. १५-१५. यजमानाय वि[1] अ कु. १६. °ष्टं वा अ कु.

तवैव तत्। [1]यज्ञान्तरे हविः कृत्वा तुभ्यमेव प्रदास्यत इत्यर्थः। सत्यम् अविसंवाद्येवैक, नैतदनृतं मयोच्यत इत्यर्थः[1]। अथवा करिष्यसि [2]इत्यत्र करोतिरन्वर्णीतसनर्थो द्रष्टव्यः। लडर्थे लृट्[2]। यद् यजमानाय भद्रं धनमद्य वा चिकीर्षसि। तवैव तत् सत्यं नान्यस्य [3]कस्यचित्। यथाचिकीर्षितदानकरणसमर्थो नान्यः कश्चिदित्यर्थः[3]। हे अङ्गिरः ! [4]अङ्गिरा ऋषिः। तस्योत्पत्तिकारणमग्निः, नाग्निरङ्गिराः। एवं हैतिहासिकाः स्मरन्ति—

'निसावतारिकं रात प्रजाकाम प्रजापतिः।
आहरत् सहितं साध्यैर्विश्वैर्देवैस्तथा सह ॥
तत्र वाग्दीक्षणीयायामागाम शरीरिणी।
"रेतश्चस्कन्द तां दृष्ट्वा" कस्यार्थं वरुणस्य च ॥
'तच्छुक्रं प्रवहन्' वायुरग्नौ प्रास्यद् यदृच्छया।
[10]ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥' (तु बृदे ५,९७-९९) इति ॥

[11]तेन अङ्गिरसः कारणमग्निः, नाग्निरङ्गिराः। अत इदं सोऽयमित्यभिसम्बन्धात् कार्यशब्देन [12]कारणस्याभिधानम्। अङ्गिरसः कारणभूत ! इत्यर्थः[12]। अथवा गुणतः [13]अग्नेरिदमभिधानम्[13]। अङ्गानि शरीराण्यथवा तद्वदङ्गि शरीरं, तस्य स्थितिहेतुः अशितपीतरसोऽङ्गिरसः, तं करोति अङ्गिरसयति। 'तत् करोति तदाचष्टे' (पावा ३,१,२६) इति णिच्। ण्यन्तात् क्विप्। हे अङ्गिरः ! शरीरस्थितिहेतोरशितपीतरसस्य कर्तरित्यर्थः। जाठरो ह्यग्निरन्नं रसीकरोति। रसो लोहितमांसमेदोऽस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति ॥ ६ ॥

वेङ्कट० यत् त्वम् क्षिप्रम्[14] अग्ने ! हविः प्रयच्छतेऽनन्तरमेव कल्याणं करिष्यसि। तव एव तत् सत्यम् [15]अङ्गिरः, सत्यम्[15] एतत् [16]अन्यस्तु कृतं[16] विस्मरत्यपि ॥ ६ ॥

मुद्गल० हे अङ्ग ! अग्ने ! त्वम् दाशुषे हविर्दत्तवते यजमानाय भद्रम् वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि। तत् भद्रम् तव इत् तवैव। सुखहेतुरिति शेषः। हे अङ्गिरः ! अग्ने तव सत्यम्। न त्वत्र विसंवादोऽस्ति ॥ ६ ॥

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम्। नमो॒ भर॑न्त॒ एम॑सि ॥७॥

उप॑। त्वा॒। अ॒ग्ने॒। दि॒वेऽदि॑वे। दोषा॑ऽवस्तः। धि॒या। व॒यम्। नमः॑। भर॑न्तः। आ। इ॒म॒सि॒ ॥७॥

स्कन्द० [1]उपेत्युपसर्गं इमसीत्यन्तेनाख्यातेन सम्बन्धयितव्यः। हे अग्ने ! दिवेदिवे[2] अहन्यहनि दोषावस्तः ! [3]दोषेति रात्रिनाम[3]। वस आच्छादने। रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः !।

---

१-१ यजमानाय भद्रं दास्यसि स यज्ञान्तरे तुभ्यं दास्यति। तस्मात्तवैव। सत्यं मयोक्तम् वि[1] अ कु २-२ विशेषणे वि[1] अ कु ३-३ यथेष्टान्प्रदत्स्यमेव नान्यः वि[1] अ कु ४-४ अङ्गिरस ऋषेरग्निः उत्पत्तिः। तेनैतदाह वि[1] अ कु ५ दिवेदिवे° वि[1] मूको ६ °वेरतेदिनि न बृदे ७-७ तां दृष्ट्वा सुरस्य बृदे ८ तस्या° वि[2] मूको कु ९-९ शुक्रं चस्कन्द तद् बृदे १० °तोऽर्चिभ्यो बृद, °तोऽग्नि वि[2] ११ मूको कु ११-१२ कारणस्याभिधानमिति स्वयमेव वि[1] अ कु १३-१३ नास्ति वि[1] अ कु १४ नास्ति मूको[1] १५-१५ अङ्गिरसम् वि[1] ए १६-१६ नास्ति एप वि[2]. १७-१७ उपेमसि इत्यग्ने वि[1] अ कु १८-१८ दोषा रात्रिः वि[1] अ कु

धिया यादृश्यस्माकं प्रज्ञा[1] तादृश्या वयं नमः स्तुतिं भरन्तः [2]हृञ् हरणे इत्येतस्यैवैतद् रूपम्[2]। 'हृग्रहोर्भश्छन्दसि' (पावा ८, २, ३२) इति हस्य भः[2]। हरन्तः प्रापयन्तः स्तुतिं कुर्वन्त इत्यर्थः। त्वा त्वाम् उप एमसि आङत्र धात्वर्थानुवादी। उपगच्छामः[3] ॥ ७ ॥

वेङ्कट० उपगच्छामः त्वाम् अग्ने! वयम् अन्वहं [4]सायञ्च प्रातश्च[4] अग्निहोत्रकर्मणा अन्नं[5] भरन्तः ॥ ७ ॥

मुद्गल० हे अग्ने! वयम् अनुष्ठातारः दिवेदिवे प्रतिदिनं दोषावस्तः रात्रावहनि च धिया बुद्ध्या नमः भरन्तः नमस्कारं संपादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः ॥ ७ ॥

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥ ८ ॥

राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे ॥ ८ ॥

स्कन्द० [6]कीदृशं त्वाम् । उच्यते। राजन्तम् राजतिरैश्वर्यकर्मा (तु. निघ २,२१) ईशानम्। कस्य। अध्वराणाम् यज्ञानाम्। गोपाम् रक्षितारं च। कस्य। ऋतस्य यज्ञस्यैव। ऋतशब्दो ह्यपठितोऽपि भूयिष्ठं यज्ञनाम दृश्यते। दीदिविम् अत्यर्थं दीप्तम्। वर्धमानं स्वे आत्मीये दमे यज्ञगृहे। 'दमे' (निघ ३,४) इति गृहनाम। सामर्थ्यादत्र यज्ञगृहे वर्तते[6] ॥८॥

वेङ्कट० दीप्यमानं [7]यज्ञानां गोपायितारं सत्यस्य दीप्तं स्वे दमे आहवनीये समिध्यमानमुपेमः[7] ॥ ८ ॥

मुद्गल० राजन्तम् दीप्यमानम् अध्वराणाम् यागानां गोपाम् रक्षकम् ऋतस्य सत्यस्य[8] अवश्यंभाविनः कर्मफलस्य दीदिविम् पौनःपुन्येन द्योतकं स्वे दमे स्वकीये गृहे यज्ञशालायां हविर्भिः वर्धमानम् ॥८॥

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ९ ॥

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥ ९ ॥

स्कन्द० [9]सः इति पूर्वप्रतिनिर्देशो वा तच्छब्दश्रुतिसामर्थ्यादेव वा योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः यं त्वामस्तोष्महि इति। स त्वं नः अस्माकं पितेव सूनवे 'सूनुः' (निघ २,२) इत्यपत्यनाम। षष्ठ्यर्थे चात्र चतुर्थी। यथा पिता पुत्रस्य, एवं हे अग्ने! सूपायनः सूपगमः सुखोपसर्पी भव। सचस्व सेवस्व च नः अस्मान् स्वस्तये 'स्वस्तीत्यविनाशनाम' (या ३,२१) अविनाशाय। रक्षितुमस्मानस्मत्समीपे नित्यं भवेत्यर्थः[9] ॥९॥

वेङ्कट० सः त्वम् अस्मभ्यं यथा पिता पुत्राय अग्ने! सूपचरः, एवं सूपचरो[10] भव। सेवस्व च अस्मान् अविनाशाय ॥ ९ ॥

मुद्गल० हे अग्ने! सः त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तः भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। दृष्टान्त—पितेव यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति, तद्वत् ॥९॥

इति प्रथमाष्टके प्रथमाध्याये द्वितीयो वर्गः ॥

१. 'सत्र॰ वि[1] अ कु. २-२. हृग्रहोर्भश्छन्दसि वि[1] अ कु. [नास्ति मूको. ३. उपाग॰ साम्त्र. ४-४. सायं प्रा॰ साम्त्र[1] कु. ५ नमः साम्त्र कु. ६-६. राजन्त राजतिरैश्वर्यकर्मा ईशानम्। अध्वराणां रक्षितारम्। यज्ञस्य अत्यर्थं दीप्तम्। 'जॄशृस्तॄजागृभ्यः क्विन्' (पाउ ४,५४), 'दिवो द्वे दीर्घश्चाभ्यासस्य' (पाउ ४,५५) इति दीदिविः। वर्धमानमात्मीये यज्ञगृहे वि[1] अ कु ७-७. "नः स्वे दमे आहवनीये समिध्यमानमुपेम"। गोपायितारं सत्यस्य दीप्तम् वि[1] क साम्त्र. ८. नास्ति वि मै[1] ९-९. स त्वमस्माकं पितेव। यथा पिता पुत्रस्य सूपगमः एव नः त्वं सुखोपसर्पी भव। 'षच षच समवाये', 'षच सेचने' सेवस्वास्मान्। स्वस्तयेऽविनाशाय। रक्षितुमस्मानस्मत्समीपे नित्यं भव वि[1] अ कु. १०. सूपचा॰ साम्त्र[1].

[ २ ]

वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥ १ ॥

वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः । तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥

स्कन्द० 'पृथग्देवताः सप्तात उत्तरेऽनन्तरास्तृचाः' (तु बृदे ३,१२६)। 'ये सप्त तृचा अत उत्तरं अनन्तरास्ते पृथग्देवत्याः। 'तृचो वायव्यः' (तु बृदे ३,१२७)। प्रथमस्तावत् तृचो वायुदेवत्यः। हे वायो! आ याहि आगच्छ। हे दर्शत! अर्हे कृत्यार्थेऽयमतच्। दर्शनीय¹ दर्शनार्ह¹। यो हि दृष्टो दर्शनफलं साधयति, स दर्शनार्हः। नेतरः। किं कारणमागच्छामि। उच्यते। इमे सोमा अरङ्कृताः अलशब्दस्य पर्याप्त्यर्थस्य भूषणार्थस्य चेदम्। लकारस्य रत्वं छान्दसम्। पर्याप्ताः कृता बहवः कृता भूषिता वा श्रयणादिभिर्वा संस्कारैः संस्कृता इत्यर्थः। तेषाम् द्वितीयार्थे षष्ठी एषा। षष्ठीनिर्देशादेव वा एकदेशमिति शेषः। तान् वैकल्पिकस्वावयवलक्षण पाहि पिब। अतः सम्प्रयोगानन्तरमागमनस्य श्रुधि शृणु हवम् आह्वानम्। मा अनादरः कृथाः¹ ॥ १ ॥

वेङ्कट० पूर्वं सूक्तं प्रातरनुवाके शंसनीयम्। अथ सूक्ताभ्यां प्रातस्सवनदेवताः स्तौति। वायो! आ याहि दर्शनीय! इमे सोमाः पर्याप्तिभूषणाभ्यामलङ्कृताः। तान् पिब। शृणु च नः ह्वानम् ॥

यादृग्गोत्रे निपातोऽस्ति यस्तिङ् नेह निहन्यते।
स्युज्मयं वदेत् तस्य निहतश्चेदथाऽस्मुटम् ॥
निहन्यमाने पूर्वस्मिन् हि सस्थापनमिष्यते¹।
पिब सोमानिमांश्च त्वं शृणु ह्वानमिदं च नः ॥ इति ॥ १ ॥

मुद्गल० नवर्चं द्वितीयं सूक्तम्। मधुच्छन्दा ऋषिः। गायत्रम्। आद्यस्तृचो वायुदेवताकः। द्वितीय इन्द्रवायुदेवताकः। तृतीयो मित्रावरुणदेवताकः ॥

हे दर्शत! दर्शनीय! वायो! कर्मण्यवस्थिते आ याहि आगच्छ। त्वदर्थम् इमे सोमा अरङ्कृताः संस्कृताः। तेषाम् तान् सोमान् पाहि पिब। तत्पानार्थं हवम् अस्मदीयमाह्वानं श्रुधि शृणु ॥ १ ॥

वायं उक्थेभिर्जरन्ते त्वामच्छा जरितारः। सुतसोमा अहर्विदः ॥ २ ॥

वायो इति। उक्थेभिः। जरन्ते। त्वाम्। अच्छ। जरितारः। सुतऽसोमाः। अहःऽविदः ॥२॥

स्कन्द० 'उक्थशब्दः स्तोत्रवचनः। स्तोत्रैः। जरतेः स्तौतिकर्मणः अच्छशब्दोऽभि स्थाने वर्तते। उपसर्गो धर्मान्तरेण जरतेः इत्यात्मनेपदम् सम्बध्यते। जरतिश्चात्र स्तुत्यर्थः। 'जरते अर्चति' (निघ ३,१४) इत्यर्चतिकर्मसु पठितत्वात्। अभिजरन्ते¹ अभिष्टुवन्ति त्वां जरितारः स्तोतारः।

१ १ वायव्य प्रथमस्तृचः। हे वायो! आगच्छ। ...। ... (पाउ ३,११०) इति ...। ... दर्शनीय। नेतर। ...। इमे सोमाः अलङ्कृताः। ... गाथम्। ... भूषिताः संस्काराः ... वा। तान् पिब। तेषामिति ... ... श्रुणु ... वि' म पु २ ... ३ पा ८, १, ६३ ४ ... ५ ... वि' मं ६ ६ ... । ... भाष्ट ... वि' म पु

'[1]जरिता' (निघ ३,१६) इति स्तोतृनाम। कीदृशाः। सुतसोमाः कृतसोमाभिषवाः। तुभ्यं यः प्रदास्यते सोमः स्तुताय, तमभिषुत्येत्यर्थः।[1] अहर्विदः अहश्शब्दोऽग्राह्य यः समाप्यते ज्योतिष्टोमादिः सोमयागः तस्य वाचकः, न दिवसस्य[2]। प्रक्रान्तस्य ज्योतिष्टोमादेरहःपरिमितस्य सोमयागस्य ज्ञातार इत्यर्थः ॥ २ ॥

वेङ्कट० वायो! त्वाम् प्रति शस्त्रैः स्तुवन्ति स्तोतारः अभिषुतसोमाः अहर्विदः[1] लब्धाहर्मुखाः ॥२॥

मुद्गल० हे वायो! जरितारः स्तोतारः ऋत्विग्यजमानाः त्वाम् अच्छ अभिलक्ष्य उक्थेभिः आज्यप्रउगादिभिः शस्त्रैः जरन्ते स्तुवन्ति। कीदृशाः। सुतसोमाः अभिषुतेन सोमेनोपेताः। अहर्विदः अहःशब्द एकेनाह्ना निष्पाद्ये अग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः। क्रत्वभिज्ञा इत्यर्थः ॥२॥

वायो॒ तव॑ प्रपृञ्च॒ती धेना॑ जिगाति दा॒शुषे॑। उ॒रू॒ची सोम॑पीतये ॥ ३ ॥

वायो॒ इति॑। तव॑। प्र॒ऽपृ॒ञ्च॒ती। धेना॑। जि॒गा॒ति॒। दा॒शुषे॑। उ॒रू॒ची। सोम॑ऽपीतये ॥ ३ ॥

स्कन्द० हे वायो! तव [1]अवयवभूता [1]प्रपृञ्चती पृची सम्पर्के। सामर्थ्याच्च सोमसम्पर्के वर्तते, न च यत्र क्वचित्। सम्पर्केण चात्र स्वहेतुरभिलाषो लक्ष्यते। अभिलाषार्थ एव वा पृञ्चतिः[2]। प्रकर्षेण सोमसभिलषन्तीत्यर्थः। 'अथवा 'पपृक्षा', महयति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात् पृञ्चतिः स्तुत्यर्थोऽपि। न सम्पर्कार्थ एवेति गम्यते। व्यत्ययेन वा शतृप्रत्ययः कर्मणि। प्रपृञ्चती प्रकर्षेण स्तूयमानेत्यर्थः। धेना जिह्वा। किं करोति। उच्यते। जिगाति गतिकर्मायं 'जिगाति' 'इन्वति' (निघ २,१४) इति गतिकर्मसु पाठात्। गच्छति। दाशुषे 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ॰' (पा २, ३, १२) इत्येवमियं कर्मणि चतुर्थी[3]। 'दाश्वांसं यजमानं प्रतीत्यर्थः[4]। कीदृशी। 'उरूची उरुशब्दो बहुनाम (द्र. निघं ३,१)। अञ्चतिर्गत्यर्थः। बहून् यजमानान् प्रति गन्त्री। अवयवभूतजिह्वागमनेनात्रावयविनो वायोरेव गमनं लक्ष्यते। त्वं गच्छसीत्यर्थः। किमर्थम्। सोमपीतये सोमपानार्थम्[5] ॥ ३ ॥

वेङ्कट० वायो! धेनेन स्तोतॄन् प्रपृञ्चती संयोजयन्ती शतं युष्मभ्यं सहस्रं युष्मभ्यमित्येवं बहुञ्चन्ती[6] तव वाक् दाश्वांसमुद्दिश्य सोमपानार्थं निष्क्रामति ॥ ३ ॥

मुद्गल० हे वायो! तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति गच्छति। हे यजमान! त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूते इत्यर्थः। कीदृशी धेना। प्रपृञ्चती प्रकर्षेण सोमसम्पर्कं कुर्वती सोमगुणं वर्णयन्तीत्यर्थः। उरूची उरून् बहून् यजमानान् गच्छन्ती। सोमयाजिनः सर्वान् वर्णयन्तीत्यर्थः ॥३॥

इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम्। इन्द॑वो वामु॒शन्ति॒ हि ॥ ४ ॥

इन्द्र॑वायू॒ इति॑। इ॒मे। सु॒ताः। उप॑। प्रयः॑ऽभिः। आ। ग॒त॒म्। इन्द॑वः। वा॒म्। उ॒शन्ति॑। हि ॥ ४ ॥

---

१-१. नास्ति वि[1] अ कु. २. नास्ति ल. ३. जिह्वा वि[1] अ कु. ४-४. गच्छति यजमानम्। पृची सम्पर्के स्तुतौ वा। सोमसम्पृक्ता। अथवा व्यत्ययात् कर्मणि शतृ (शता वि[1]; शत्रा अ) प्रत्ययः। प्रस्तूयमाना। धेना जिह्वा (जिह्वा धे॰ अ)। वाङ् गतौ गच्छसि। दाश्वान् यजमानः। 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (पा २, ३, १२) इति द्वितीयार्थे चतुर्थी वि[1] अ कु. ५-५. धेना। उरूची बहून् प्रति गन्त्री। उरु बहु। अञ्चु गतौ। सं गच्छसीत्यर्थः। किमर्थं सोमपानाय वि[1] अ कु. ६. °बहूनी साम्ब°.

स्कन्द० 'तृच ऐन्द्रवायव'। 'ऐन्द्रवायवोऽपि तृच एव'। हे इन्द्रवायू ! इमे सुता अभिषुता सोमा। 'एतद् ज्ञात्वा उप प्रयोभि आ गतम्' उपेत्युपसर्ग आगतमित्याख्यातेन सम्बध्यते। प्रयश्शब्दो यातेर्धा तो। गन्तृवचन। प्रकर्षेण गन्तृभि 'अत्यन्तवद्भिरश्वैरुपागच्छतम्'। अथवा 'प्रयश्शब्दोऽपठितोऽप्यन्ननाम'। सहयोगलक्षणा चात्र तृतीया। इमे अभिषुता सोमा। न च केवला। किं तर्हि। सवनीयपुरोडाशादिभिरन्नै सह'। एतद् ज्ञात्वोपागच्छतमिति। 'अथवा उपागच्छतमित्येतदपेक्ष एव सहयोग। अन्नै सहोपागच्छतम्'। 'महा यानि दातव्यान्यन्नानि, तानि गृहीत्वोपागच्छतमित्यर्थ'। कस्मात्। इन्दव वाम् उशन्ति हि 'हिशब्दो यस्मादर्थे। यस्मादिन्दव एते सोमा वा युवाम् उशन्ति कामयन्ते' वयमिन्द्रवायुभ्या पीयेमहि 'इत्येवम्। तस्मादुपागच्छतमिति' ॥ ४ ॥

वेङ्कट० इन्द्रवायू ! इमे सोमा सुता अस्माक प्रदित्सितैरन्नै सह उपागच्छतम्। एते सोमा वाम् कामयन्ते हि ॥४॥

मुद्गल० हे इन्द्रवायू ! भवदर्थम् इमे सोमा सुता अभिषुता। तस्माद्युवां प्रयोभि अन्नै अस्मभ्य दातव्यैस्सह उप आगतम् अस्मत्समीप प्रत्यागच्छतम्। हि यस्मात् इन्दव सोमा वा युवाम् उशन्ति कामयन्ते'। तस्मादागमनमुचितम् ॥४॥

वायुविन्द्रश्च चेतथः सुतानां वाजिनीवसू। तावा यातमुप द्रवत् ॥ ५ ॥

वायो इति। इन्द्र। च। चेतथ। सुतानाम्। वाजिनीवसू इति वाजिनीऽवसू। तौ। आ। यातम्। उप। द्रवत् ॥ ५ ॥

स्कन्द० 'तावायातमिति तच्छब्दाद् यच्छब्दोऽत्राध्याहर्तव्य। यौ हे वायो ! इन्द्र च चशब्दात् त्व च। चेतथ जानीथ। किम्। सुतानाम् द्वितीयार्थे षष्ठी। अथवा षष्ठीश्रुतिसामर्थ्यादेव वा शेषमिति वाक्य शेष। सुतान् सोमान्, सुताना सोमाना वा शेष स्वादम्। वाजिनीवसू वाजिनीत्येतद्विहासम्भवात्सो पोनाम। किं तर्हि। यौगिकम्। वाजो हविर्लक्षणमन्नम्, तद् यस्या अस्ति सा वाजिनी यागसन्तति तद्वन्तौ। हविष्मद्यागसन्ततिधनावित्यर्थ। अथवा वाजो वेगो बल वा तद्वती वाजिनी सेना, तद्वन्तौ। वेगबलवत्यान्यतरया युक्तया सेनयोपेतावित्यर्थ। तौ आयातम् उप इत्युपसर्ग पुरस्तादाख्यातस्य सम्बन्धयितव्य। उपागच्छतम्। द्रवत् क्षिप्रम्। 'मक्षु, द्रवत्' (निघ २, १५) इति हि क्षिप्रनामसु पठितम् ॥५॥

---

११ नास्ति वि' अ कु, इन्द्रवायवतृचे नपि तृच एव साम्ब' २२ नास्ति वि' अ कु ३-३ 'आगच्छतम् वि' साम्ब ४४ प्रय अन्नम्। सवनीयपुरोडाशादिभि अभिषुता वि' अ कु ५५ अन्नकामा वय पश्म। अस्मदागमनैरैभ्मस इति वा वि' अ कु ६-६ सोमा युवा कामयन्ते अस्मान् वि' अ कु ७ कामयन्ते वि मे' ८८ अत्र पर्यायेण अध्याहर्तव्यौ । [illegible] वायुरेव। हे वायो ! त्वम् इन्द्रश्च युवामुभौ सुतानभिषुतान् सोमान् चेतथ जानीथ। यद्वा अभिषुताना सोमाना विशेषमित्यध्याहार। कीदृशौ युवाम्। वाजिनीवसू। वाजिनीरन्नयुक्ते [illegible] (?) (निघ १, ८) तयापि अन्नसाध्य गृह्यते। वाज अन्न तस्यां हवि [illegible] वाजिनी यागक्रियेति। [illegible] इति वाजिनीवसू। आमन्त्रितवादनुदात्त। तौ तथाविधौ युवा द्रवत् क्षिप्रम् उप समीपम् आयातम् आगच्छतम्। [illegible] क्षिप्रनामसु (निघ २, १५) 'मक्षु, द्रवत्' इति पठितम्। नत्र [illegible] वि' अ कु

वेङ्कट० वायो ! त्वम् अयम्[1] इन्द्रो[2] दूरस्थावेव [3]सुतान् सोमान्[3] जानीथः । तौ[4] क्षिप्रम् उपागच्छतम् । अन्नेन वासयितारौ वाजिनीवसू इति ।

सुतसोमपरिज्ञानं [5]तदागमनकारणम् ।
नयोद्गातमिहारभ्यातं वक्ष्यते तत्र कारणम् ॥
ऋचामभिहितार्थानां यथा पश्चाद् समन्वयः ।
हेतुत्वहेतुमद्भावौ तथैवाऽत्राऽपि सङ्गतौ ॥ इति ॥ ५ ॥

मुद्गल० चकारेणान्यः[6] समुच्चीयते । सन्निहितत्वाद्वायुरेव । हे वायो ! त्वम् इन्द्रश्च [7]युवामुभौ सुतानाम् अभिषुतान् सोमान् चेतथः जानीथः । कीदृशौ युवाम् । वाजिनीवसू वाजोऽन्नं तद्यस्यां हविस्सन्ततावस्ति सा वाजिनी । तस्यां वसत इति वाजिनीवसू । तौ तथाविधौ युवां द्रवत् क्षिप्रम् उप समीपे आयातम् आगच्छतम् ॥५॥

इति प्रथमाष्टके प्रथमाध्याये तृतीयो वर्गः ॥

वाय॒विन्द्र॑श्च सुन्व॒त आ या॑त॒मुप॑ निष्कृ॒तम् । म॒क्ष्वि१॒॑त्था धि॒या न॑रा ॥ ६ ॥
वायो॒ इति॑ । इन्द्रः॑ । च॒ । सु॒न्व॒तः । आ । या॒त॒म् । उप॑ । निः॒ऽकृ॒तम् । म॒क्षु । इ॒त्था ।
धि॒या । न॒रा॒ ॥ ६ ॥

स्कन्द० [8]हे वायो ! इन्द्रः च चशब्दात् त्वं च । सुन्वतः सोममभिषुण्वतः यजमानस्य स्वभूतम् आ यातम् उप उपागच्छताम् । निष्कृतम् निरित्येष समित्येतस्य स्थाने । संस्कृतं वेद्याख्यं प्रदेशम् । मक्षु क्षिप्रम् । इत्थाशब्दोऽमुत इत्यस्यार्थे । अमुतोऽन्तरिक्षात् स्वस्मात् स्थानात् । 'धीः' (निघ २,१) इति कर्मनाम । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । कर्मणा हेतुना । अस्मदीययागकर्म परिसमापयितुमित्यर्थः । नहि युवयोरनागतयोरेतत् परिसमाप्यते[8] । अथवा 'इत्था' (निघ ३,१०) इति सत्यनाम[9] धियश्च विशेषणम् । सत्येन भवतोरविसंवादिना सर्वदैव युष्मत्सम्बद्धेन कर्मणा हेतुनाऽस्मदीययागकर्म परिसमापयितुमित्यर्थः । हे नरा ! [10]मनुष्यनामैतत् । देवानां च मनुष्यत्वासम्भवात् सर्वत्र तदाकारत्वान्मनुष्यनामभिर्व्यपदेशः । मनुष्याकारौ । यथा मनुष्यो हस्ताद्युपेतशरीरः, तद्वद्हस्ताद्युपेतशरीरावित्यर्थः[10] ॥६॥

वेङ्कट० वायो ! इन्द्रः च सुन्वतः संस्कृतं[11] सोमम् उपागच्छतं शीघ्रम् । इत्थं क्रियमाणं कर्मोद्दिश्य नेतारौ ॥६॥

मुद्गल० हे वायो ! त्वम् इन्द्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतम् संस्कर्तारं सोमम् उपायातम् आगच्छतम् । हे नरा ! नरौ । पौरुषेण सामर्थ्येनोपेतौ । युवयोरागतयोश्च सतोः धिया अमुना कर्मणा मक्षु त्वरया संस्काराः सम्पत्स्यन्ते । इत्था सत्यम् ॥६॥

---

१. नास्ति कु साम्द. २. चन्द्रश्च साम्द[2,4]; चन्द्रो साम्द[1]; इन्द्रश्च मु. ३-३. सोमान् सु° साम्द[1]. ४. नास्ति साम्द[2]. ५. न्तदाग° वि[1] ल साम्द[1]; नवाग° साम्द[2,1]. ६. °रेण नान्यः वि मे[2]. ७. तौ यु° मूको. ८-८. हे इन्द्रवायू ! यजमानस्य स्वभूतं संस्कृतं वेद्याख्यं प्रदेशमुपागच्छतम् । नि° भावेत्यर्थः । मक्षु क्षिप्रम् । इत्था अमुतः अन्तरिक्षात् । कर्मणा हेतुना । धीः कर्माणि । अस्मत्कर्मणः परिसमाप्तिः युष्मदागमनेनैव स्यात् नि[2] अ कु. ९. °नाम । नादइशब्दस्य पञ्चमी वि[1] अ कु. १०-१०. नरासरौ नि[1] अ कु. ११. संस्कृतो° साम्द[1]; संस्कुतन् रूपं.

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ॥ ७ ॥

मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् । धियम् । घृताचीम् । साधन्ता ॥७॥

स्कन्द० "मैत्रावरुण" । मित्रावरुणदेवतोऽपि तृच एव । मित्रम् हुवे आह्वयाम्यहम् । कीदृशम् । पूतदक्षम् 'दक्ष' (निघ २,९) इति सकारान्त बलनामसु पठितम् । अकारान्तमपि तु तस्यैव पर्यायान्तर द्रष्टव्यम् । पूत शुद्धम् अपगतदोष बल यस्य स पूतदक्ष, । त पूतदक्षम् । नच केवल मित्रम् । किं तर्हि । वरुण च कीदृशम् । रिशादसम् रिशिर्हिंसार्थ । असु क्षेपणे । रिशतोऽस्यतीति रिशादस । रिशदास इति प्राप्ते छान्दसो ह्रस्वदीर्घव्यत्यय । त रिशादसम् । हिंसकान् क्षेप्तारम् । प्रतिहिंसितारमित्यर्थ । एवमर्धर्चो विमकस्तुति । परस्तु सहस्तुति । धियम् वृष्ट्याख्य कर्म धी, ताम् । घृताचीम् 'घृतम्' (निघ १,१२) इत्युदकनाम । अञ्चतिर्गत्यर्थ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थ. । उदक पृथिवी प्रति या गमयति, सा घृताची, ताम् । साधन्ता साधयन्तौ । वृष्टिं कुर्वन्तावित्यर्थ [1] ॥ ७ ॥

वेङ्कट० मित्रम् ह्वयामि शुद्धबल वरुणम् च रिशता[2] हिंसितृणा क्षेप्तारम् उदकाभिमुखं कर्म साधयन्तौ पृथिवीस्थौ । 'अहोरात्रे वै मित्रावरुणावहोरात्राभ्या खलु वै पर्जन्यो वर्षति' (तैस २,४,१०,१) इति ब्राह्मणम् ॥७॥

मुद्गल० अहमस्मिन् कर्मणि हविष्प्रदानाय पूतदक्षम् पवित्रबल मित्रम् हुवे तथा रिशादसम् रिशाना हिंसकानामदसमत्तार वरुणम् च हुवे आह्वयामि । कीदृशौ मित्रावरुणौ । घृतमुदकमञ्चति भूमि प्रापयति या धी वर्षणकर्म[3], ता घृताचीम् धियम् साधन्ता साधयन्तौ कुर्वन्तौ ॥७॥

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ॥ ८ ॥

ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतुम् । बृहन्तम् । आशाथे इति ॥ ८ ॥

स्कन्द० "ऋतेन इति हेतौ तृतीया, यज्ञेन हेतुना । यस्मान्मनुष्यैरिज्येथे, तस्मात् । हे मित्रावरुणौ ! ऋतावृधौ यज्ञेन वर्धितारौ । यत्र हि यद्धविस्तदुपभुञ्जाना स्तूयमानाश्च देवता वीर्येण वर्धन्ते । तदायत्तत्वात् तासा स्थित । अथवा वृष्टिरत्रान्तर्णीतण्यर्थ । ऋतशब्दोऽपि यज्ञनामैव उदकनाम (तु निघ १,१२) वा । यज्ञस्योदकस्य वा वर्धयितारावित्यर्थ. । अथवा 'ऋतम्' (निघ ३,१०) इति सत्यनाम । सत्यस्य स्तोतुर्यजमानस्य वर्धयितारौ । ऋतस्पृशौ यज्ञस्योपभोगकाले स्प्रष्टारौ । यज्ञे हविषा प्रतिग्रहीतारा-वित्यर्थ । अथवा ऋतस्य सत्यस्य स्तोत्रस्य स्प्रष्टारौ श्रोतारावित्यर्थ । अथवा ऋतस्योदकस्य वृष्टिकाले स्प्रष्टारौ वर्षितारावित्यर्थ । क्रतुम् कर्म । बृहन्तम् महत् । आशाथे व्याप्नुथ । कुरुथ इत्यर्थ । अथवा ऋतेनेत्यत्रापि ऋतशब्द उदकनाम । करणे च तृतीया । उदकेन क्रतु कर्म यज्ञाख्य व्याप्नुथ. । यत्र यत्र तस्मिन् विषये वर्षथ इत्यर्थ "॥८॥

---

1 1 [illegible] । [illegible] । [illegible] हिंसकस्तारम् । रिशि हिंसायाम् । [illegible] [illegible] । [illegible] । [illegible] । [illegible] । [illegible] । धियं [illegible] । [illegible] । [illegible] । [illegible] । [illegible] । [illegible] 2 2 [illegible] 3 वर्षणम् [illegible] (तु [illegible]) । [illegible] हेतुना । हे मित्रावरुणौ । [illegible] । [illegible] । [illegible] । [illegible] वा । [illegible] । [illegible] वर्धितारौ वा । [illegible] । [illegible] । [illegible] । [illegible] † [illegible] वा [illegible].

वेङ्कट० सत्येनैव मित्रावरुणौ ! सत्यस्य वर्धयितारौ ! सत्यस्य स्प्रष्टारौ ! यज्ञं महान्तम् आनशाथे[1] ॥८॥

मुद्गल० हे मित्रावरुणौ ! युवाम् क्रतुम् प्रवर्तमानमिमं सोमयागम् आशाथे आनशाथे व्याप्तवन्तौ । केन निमित्तेन । ऋतेन अवश्यंभाविफलया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । ऋतावृधौ 'ऋतमित्युदकनाम' (या २,२५) । उदकस्य वर्धयितारौ । अत एव च[2] ऋतस्पृशा उदकं स्पृशन्तौ । कीदृशं क्रतुम् । बृहन्ताम् अतिशयेनातिप्रौढम् ॥८॥

कुवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ९ ॥
कुवी इति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया । दक्षम् । दधाते इति । अपसम् ॥९॥

स्कन्द० [3]कवी मेधाविनौ नः तादर्थ्यं एषा चतुर्थी । अस्माकमर्थम् । मित्रावरुणा द्विवचनस्यायमाकारः मित्रावरुणौ । तुविजातौ 'तुवि' (निघ ३,१) इति बहुनाम । बहूनामर्थाय जातौ तुविजातौ । सर्वेषां प्राणिनामुपकर्तुमुत्पन्नावित्यर्थः । अननं जातं जन्मोच्यते । बहूनि जन्मानि ययोस्तौ तुविजातौ । यच्चानयोः कर्मात्मना पुनःपुनर्जन्म तदपेक्षया जन्मबहुत्वम् । उरुक्षया 'उरु' (निघ ३,१) इति बहुनाम विस्तीर्णपर्यायो वा । बहुनिवासौ विस्तीर्णनिवासौ वा । दक्षम् बलं सेनालक्षणम् । दधाते धारयतः अपसं कर्म च । 'अपः' (निघ २, १) इति हि कर्मनाम । अस्मदर्थं स्वसेनां पुष्णीतः, तया च वृष्ट्यादिकर्म कुरुतः । अथवा न इति सम्प्रदाने चतुर्थी । दधातिरपि दानार्थः । अस्मभ्यं बलं यागादिकर्म च दत्त इत्यर्थः[3] ॥९॥

वेङ्कट० क्रान्तदर्शिनौ[4] मित्रावरुणौ अस्मभ्यम् अहोरात्रयोः प्रादुर्भावादनेकजन्मानौ बहुनिवासावनेकयज्ञौ वा[5] बलं प्रयच्छतः वेगं च ।

[6]प्रउगतृचानां मध्ये सूक्तविच्छेदो दक्षं दधाते अपसमित्यभिमताशंसनादित्याहुः । अर्थमिच्छन्तो हि सूक्तैः स्तुवन्ति देवता इति[6] ॥९॥

मुद्गल० मित्रावरुणावेतौ देवौ नः अस्माकं दक्षम् बलम् अपसम् कर्म च दधाते पोषयतः । कीदृशौ । कवी मेधाविनौ । तुविजातौ बहूनामुपकारकतया[7] समुत्पन्नौ । उरुक्षया बहुनिवासौ ॥९॥

इति प्रथमाष्टके प्रथमाध्याये चतुर्थो वर्गः ॥

[ ३ ]

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ॥ १ ॥
अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ॥ १ ॥

स्कन्द० [8]अश्विदेवतोऽपि तृच एव । हे अश्विना ! यज्वरीः करणस्येयं कर्तृत्वेन विवक्षा[8] । इष्यन्ते याभिस्ता यज्वरीः । इषः हविर्लक्षणान्यन्नानि । द्रवत्पाणी क्षिप्रहस्तौ, शीघ्रकारिणावित्यर्थः ।

---

१. आशाथे साम्ब[१] कु. २. नास्ति मे[१]. ३-३. मेधाविनौ अस्माकं मित्रावरुणौ बहवर्थं जातौ उरुक्षयौ बहुनिवासौ विस्तीर्णनिवासौ वा । लोकोपकारार्थं तत्र तत्र जातौ च निवसन्तौ च । दक्षं सेनालक्षणं बलं धारयतः कर्म च । अस्मदर्थं स्वसेनया वृष्ट्यादिकर्म कुरुतः वि[१] अ कु. ४. क्रान्तदर्शिनौ वि[१] ल साम्ब[१]. ५. नास्ति ल वि[१] साम्ब. ६-६. ऋ १, ३, १ द्र. साम्ब कु. ७. °तया° मूको. ८-८. हे अश्विनौ वि[१] अ कु. ९. (हे !) द्र° साम्ब.

शुभस्पती 'शुभम्' (निघ १,१२) इत्युदकनाम। तस्याधिपती[1]। पुरुभुजा बहूना हविषा भोक्तारौ। चनस्यतम् [2]'चन इत्यन्ननाम' (या ६, १६)। तदिच्छत चनस्यतम्। इच्छया चात्र तत्पूर्वकं भक्षणं लक्ष्यते[3]। अस्मदीयानि हवींषि भक्षयतमित्यर्थ ॥१॥

वेङ्कट० यजमानस्य [3]यष्टॄणि अन्नादीनि[3] क्षिप्रहस्तौ उदकस्य ईश्वरौ बहुभोजनौ चनस्यतम् चनोऽन्नं तदिच्छतम्। इह [4]वृत्तस्थस्य [5]कर्मणः पदान्तरेण पृथक् व्यक्त निर्देश[5] समानशब्दैरनेकत्र भवति 'गवां गोपति' (ऋ १,१०१,४), 'सोम सोमपातमा' (ऋ १,२१,१), 'द्रविणोदा द्रविणस' (ऋ १,१५,७) इति। इह तु समानार्थेन, इषश्चनस्यतमिति ॥१॥

मुद्गल० द्वादशर्चं तृतीय सूक्तम्। आद्यस्तृच आश्विन। द्वितीय ऐन्द्र। तृतीयो वैश्वदेव। चतुर्थ स्सारस्वत। तेषु तृचेषु प्रतिपाद्या वाय्वादय सरस्वत्यन्ता सप्तसंख्याका प्रउगशस्त्रस्य देवता। मधुच्छन्दा ऋषि। गायत्रम् ॥

हे अश्विनौ! युवाम् इष हविर्लक्षणान्यन्नानि चनस्यतम् इच्छतम् भुञ्जाथामित्यर्थ। कीदृशीरिष। यज्वरी यागनिष्पादिका। कीदृशावश्विनौ। द्रवत्पाणी हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यां युक्तौ। शुभस्पती शोभनस्य कर्मणः पालकौ। पुरुभुजा विस्तीर्णभुजौ ॥१॥

अश्विना पुरुदंससा नरा शवीरया धिया। धिष्ण्या वनतं गिरः ॥ २ ॥

अश्विना। पुरुऽदंससा। नरा। शवीरया। धिया। धिष्ण्या। वनतम्। गिरः ॥ २ ॥

स्कन्द० 'अश्विना हे अश्विनौ' पुरुदंससा [6]'दंस' (निघ २,१) इति कर्मनाम। बहुकर्माणावित्यर्थ। नरा मनुष्याकृती। शवीरया 'शु' (निघ २,१५) इति क्षिप्रनाम। ईर गतौ। क्षिप्रमीरणं गमनं शवीरम्। अथवा 'शव' (निघ २, ९) इति बलनाम। परबलस्य प्रेरणमपनोद शवीर। तेन यौ यात गच्छत तौ, शीघ्रगामिनौ परबलापनोदगामिनौ वेत्यर्थ। अथवा अनवग्रहत्वात् पदस्य याशब्दो विभक्तेरादेशो न याते रूपम्। शवीरशब्दस्तु पूर्ववत् कर्तृसाधन। शीघ्रगामिनौ परबलस्य प्रेरयितारौ वेत्यर्थ। मत्वर्थीयो मत्वर्थीय शवीरशब्द। यज्ञान् शत्रून् वा प्रति गन्तारावित्यर्थ। धिया प्रज्ञया चित्तेन। महताऽऽदरेणेत्यर्थ। धिष्ण्या 'धिषणा' (निघ १,११) इति वाङ्नाम। तस्याः पुत्रौ धिष्ण्यौ। अपत्ये यत्प्रत्ययो द्रष्टव्य। अथवा 'धी' (निघ ३,९) इति प्रज्ञानाम। ष्णै वेष्टने। धी वेष्टयित्री सर्वार्थग्रहण समर्था ययोस्तौ धिष्ण्यौ। धिष्ण्यावेव धिष्ण्यौ। अत्यन्तप्रज्ञावित्यर्थ। वनतम् वन षण सम्भक्तौ। सम्भजतम्। गिर अस्मदीया स्तुतिलक्षणा वाच[7] ॥ २ ॥

---

१-१ उदकाधिपती त्रि' अ कु. २-२ चन अन्न तदिच्छतम्। 'सुप आत्मन क्यच्' (पा ३,१,८) इति चनस्यतम् त्रि' अ कु. ३-३ यष्टव्यानि सास्व'[1] कु. °अन्नादि त्रि' रुप. ४ मनस्थ° सास्व', मतस्थ° सास्व'[1], प्रथमपदस्य कु. ५-५ वर्ते पदान्तरेण पृथक् यत्नं नि° सास्व'[1], °पृथक् नि° सास्व' कु. ६-६ नास्ति त्रि' सास्व. ७-७ बहुकर्माणौ। नरा मनुष्याकृती। शवीरया शु क्षिप्रम्। ईर गतौ। क्षिप्रगामिनौ। अथवा शवो बलं परबलापनोदनशीलौ। अथवाऽनवग्रहत्वात् 'सुपां सुलुक्°' (पा ७, १, ३९) इति ... गतौ। सर्वत्र गन्तारौ। यज्ञान् शत्रून् वा प्रति गन्तारौ। धिया प्रज्ञया। धिष्ण्या। धिषणाया वाच पुत्रौ धिष्ण्यौ। 'अनुपसर्गाल्लक्षणदर्शयो यञ्चलमे' (पा ४, १, १४०) इति यत्। अथवा धी प्रज्ञा। ष्णै वेष्टने। ययो धी सर्वार्थग्रहणसमर्था तौ धिष्ण्यौ। स्वार्थे यत्। वनतं सम्भजतम्। 'वन षण' सम्भक्तौ। गिर अस्मदीया त्रि' अ कु.

वेङ्कट० अश्विनौ ! आश्चर्यभूतविविधकर्माणौ[१] नेतारौ क्षिप्रमुपद्रुत प्रति गमन यस्यास्तया धिया कर्मणा धिष्ण्या धिषणार्हौ । धिषणा वाक् । तया स्तोतव्यौ भजेथा स्तुती ॥ २ ॥

मुद्गल० अश्विना ! हे अश्विनौ ! युवा गिर अस्मदीया स्तुती धिया आदरयुक्तया बुद्ध्या वनतम् सभजतं स्वीकुरुतम्[२] । कीदृशावश्विनौ । पुरुदससा बहुकर्माणौ । नरा नेतारौ । धिष्ण्या धार्ष्ट्य-युक्तौ । कीदृश्या धिया । शवीरया गतियुक्तया ॥२॥

दस्रा॑ यु॒वाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः । आ या॑तं रुद्रवर्तनी ॥ ३ ॥

दस्रा॑ । यु॒वाक॑वः । सु॒ताः । नास॑त्या । वृ॒क्तऽब॑र्हिषः । आ । या॒त॒म् । रु॒द्र॒व॒र्त॒नी॒ इति॑ रु॒द्र॒ऽव॒र्त॒नी॒ ॥ ३ ॥

स्कन्द० [१]हे दस्रा ! दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा, नासत्यनामाऽपर, तथापि द्विवचन निर्देशादन्यतरनिर्देशेनापि सर्वत्र साहचर्यादुभयो प्रतिपादनम् । क्रियाशब्दविज्ञान वा । दसु उपक्षये, दसु च इत्येतस्य, दसि दर्शनदशनयोरित्येतस्य वा दस्रौ । उपक्षपयितारौ शत्रूणा, दर्शनीयौ वेत्यर्थ । युवाकव युवा कामयन्त इति युवाकव । †कमेर्डुप्रत्यय औणादिक । युवेत्यपि च प्रत्ययलक्षणेन युष्मदो युवादेश । युष्मत्पानकामा इत्यर्थ । के । सुता सोमा । अथवा यु मिश्रण इत्यस्य युवाकव । मिश्रिता । केन । सामर्थ्याद् वसतीवर्येकधनादिभिरद्भि श्रयणैर्वा । सुता अभिषुताश्च सोमा । हे नासत्या ! नासत्यनामानौ । अन्यतरनाम्ना चेद् साहचर्यादुभयप्रतिपादनम् । न वा असत्यौ । द्वौ प्रतिषेधौ प्रकृतार्थं गमयत । सत्यावेव । वृक्तबर्हिष सोमा । भवदुपवेशनार्थं बर्हिर्वेद्या स्तीर्णमित्यर्थ । एतद् ज्ञात्वा आ यातम् आगच्छतम् । हे रुद्रवर्तना रुद रोदने वा रुद्रा शब्दवती‡ वर्तनी गमनमार्गौ ययोस्तौ रुद्रवर्तनी । यतो यत शत्रुशब्द, ततस्ततो गन्तारौ । स्वय वा पथि गच्छन्तौ शब्दस्य कर्तारावित्यर्थ[३] ॥३॥

वेङ्कट० "दर्शनीयौ ! युष्मत्पानकामा[४] सोमा 'सत्यावेव नासत्यावित्यौर्णवाभ । सत्यस्य प्रणेतारा वित्याग्रायण' (या ६, १३) । वृक्तबर्हिष सोमा स्तरणार्थं छिन्नबर्हिष आगच्छत युद्धे घोरगमनमार्गौ ! ॥ ३ ॥

मुद्गल० हे अश्विनौ ! आ यातम् अस्मिन् कर्मण्यागच्छतम् । किमर्थमिति तदुच्यते । सुता युष्मदर्थं सोमा अभिषुता । तान्[५] स्वीकर्तुमिति शेष । कीदृशावश्विनौ । दस्रा दस्रौ शत्रूणामुपक्षपयितारौ[६] । नासत्या अनृतभाषणरहितौ । रुद्रवर्तनी रुद्राणां शत्रुरोदनकारिणां शूरभटाना वर्तनिमार्गौ ययोस्तौ रुद्रवर्तनी । कीदृशा सोमा । युवाकव[७] वसतीवरीभि एकधननामभिश्चाद्भिर्मिश्रिता । वृक्तबर्हिष वृक्तानि मूलैर्वर्जितानि बर्हीष्यास्तरणरूपाणि येषा सोमाना ते वृक्तबर्हिष ॥३॥

---

१ °भूतकर्माणौ लप २ कुरु° मूको ३ ३ दस्रा । अश्विनोरेक दस्र नामधेयोऽपर । उभाभ्यामुभावुच्येते । तसु उपक्षये दसु च । दसि दशदर्शनयो । 'स्फायितञ्चि°' (पाउ २ १२) इत्यादिना रक् । शत्रूणामुपक्षयितारौ वा दर्शनीयौ वा । युवाकव । युवा कामयन्त । कमेर्डुप् । अभिषुता । अथवा यु मिश्रणे । वसतीवर्येकधनाभि मिश्रयितारा । अभिषुता सोमा । नासत्या हे नासत्यौ । न असत्यौ सत्यावेव । वृक्तबर्हिष वृक्तानि बर्हींषि येषा सोमाना ते सोमा । भवदुपवेशनार्थं बर्हिरादि येषा सोमाम । आयातम् । एतद् ज्ञात्वा आगच्छतम । हे रुद्रवर्तनी । रुदे रोदने । 'रुदेर्णिलुक् च' (पाउ २ २२) इति रक् । रुद्रा शब्दवती गा वर्तनी मार्ग ययोस्तौ रुद्रवर्तनौ । यतो यत शब्द ततस्तत गन्तारौ स्वरूपगामिनौ वा । वि[१] भ कु † कमेडुप्° मूको ‡ शब्दवती मूको ४ ४ नास्ति लप वि[२]. ५ तद् मै[१], नास्ति वि मै[२] ६ °पयिता° मूको ७ °कव अभिषुता मूको

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥ ४ ॥

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ ४ ॥

स्कन्द० "एन्द्राग्न पञ्चमस्तृच ।" योऽयं पञ्चमस्तृच, स इन्द्रदेवत । हे इन्द्र[1] आ याहि आगच्छ । चित्रभानो[1] भानुर्दीप्ति । विचित्रदीप्ते[1] पूजनीयदीप्ते[1] वा । किं कारणम् । सुता अभिषुता इमे सोमा । त्वायव त्वत्कामा । ईप्सि नामेन्द्रोऽस्मात् पिबेत् इत्येवंकामा इत्यर्थ । न चाभिषुता एव केवल, किन्तर्हि, अण्वीभि तना पूतास अण्व्य इत्यङ्गुलीनाम । 'धारेण शश्वता तना (ऋ ९, ३, ६), 'तना पुनान आयुषु (ऋ ९, १६, ८) इत्यादिदर्शनात् तनाशब्दो दशापवित्रवचन । अण्वीभिर्दशापवित्रेण च पूता । हस्तेन दशापवित्रमादाय पूता सर्पी यर्थं[1] ॥ ४ ॥

वेङ्कट० 'इन्द्र[1] आगच्छ[2] चित्रदीप्ते[1] । सुता 'इमे सोमा त्वत्कामा भवन्ति[1] अङ्गुलीभि दशापवित्रेण च पूता[1] ॥ ४ ॥

मुद्गल० हे चित्रभानो चित्रदीप्ते इन्द्र[1] अस्मिन् कर्मणि आ याहि आगच्छ । सुता अभिषुता इमे सोमा त्वायव त्वां कामयमाना वर्तन्ते । अण्वीभि ऋत्विजामङ्गुलीभि सुता इत्यन्वय । किंच एते सोमा तना नित्य पूतास पूता शुद्धा ॥४॥

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥ ५ ॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥ ५ ॥

स्कन्द० हे इन्द्र[1] 'आ याहि आगच्छ । धिया अस्मदीयया प्रज्ञया । इषित शुद्धोऽप्ययमिषिरधि पूजार्थ इष्टव्य । अथवा अभ्यर्थित इत्यर्थ । विप्रजूत 'विप्र (निघ ३ १५) इति मेधाविनाम । जुतिर्गत्यर्थ । केवलोऽपि च सोपसर्गार्थ । मेधाविभिर्ऋत्विग्भिरभिगत । कथं । सामर्थ्यात् स्तुतिभि[1] । अथवाऽभ्यर्थितोऽर्थ्यस्त्वृत्विग्भिरभिष्टुत इत्यर्थ । आगच्छामि । उच्यते । सुतावत सुता सोमा यस्य सन्ति स सुतावान् यजमान, तस्य । उप ब्रह्माणि उपशब्द सामीप्ये । 'ब्रह्म' (निघ २ ७) इत्यन्ननाम । यजमानस्य स्वभूतानां हविर्लक्षणानामन्नानां समीप इत्यर्थ । वाघत ऋत्विङ्नामैतत् (द्र निघ ३, १८) । इह तु सुतावतो यजमानस्य विशेषणत्वाद्बहुवर्णीतमर्थ । ऋत्विग्वतो यजमानस्य इति । अथवा वाघत इत्येतदर्थे सुतावत इत्येतद्विशेषणम् । ब्रह्मशब्दश्च स्तुतिवचन । सुतावत कृतसोमाभिषवस्य ऋत्विजो या स्तुतय तत्समीपे । यत्र सोममभिषुत्यार्त्विज स्तुवन्तीत्यर्थ[1] ॥ ५ ॥

वेङ्कट० 'इन्द्र[1] आगच्छ[1] कर्मणा प्रेषित मेधाविभिराहूत यजमानस्य यो होता तस्य[1] स्तोत्राणि[1] ॥५॥

---

१ [illegible] हे इन्द्र[1] आगच्छ विचित्रदीप्ते[1] पूजनीयदीप्ते[1] वा । किं कारणम् । अभिषुतास्सोमा । त्वायव त्वत्कामा । [illegible]स्मात्[illegible]रन् । अण्व्य अङ्गुल्य । तना [illegible]पवित्रवाची । [illegible]भिषुता एव न, हस्तेन [illegible]पवित्रमादाय पूता [illegible] मूको । २ २ [illegible]आगच्छ [illegible] साम्ब[1], [illegible] ३ ३ नास्ति [illegible] [illegible] मात्रा[2] ४ ४ आगच्छ [illegible] धिया [illegible] [illegible] मेधा[illegible] । [illegible] । मेधाविभि ऋत्विग्भि अभिगत । यथा ऋत्विग्भिश्च स्तुत । [illegible] सुता[illegible] । [illegible] । [illegible] ऋत्विज । [illegible] । [illegible] ऋत्विज वा स्तुत्य [illegible] [illegible] ५ ५ नास्ति [illegible].
[illegible] [illegible] मात्रा[2].

मुद्गल० हे इन्द्र ! त्वम् आ याहि अस्मिन् कर्मण्यागच्छ । किमर्थम् । वाघतः ऋत्विजः ब्रह्माणि वेदरूपाणि स्तोत्राणि उपैतुम् । कीदृशस्त्वम् । धिया अस्मदीयया प्रज्ञया इषितः प्राप्तः । अस्मद्भक्त्या प्रेरित इत्यर्थः । विप्रजूतः यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि ऋत्विग्भिः प्रेरितः । कीदृशस्य वाघतः । सुतावतः अभिषुतसोमयुक्तस्य ॥५॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥६॥

इन्द्र । आ । याहि । तूतुजान । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥६॥

स्कन्द० हे इन्द्र ! आ याहि तूतुजान क्षिप्रनामैतत् (तु निघ २, १५) । क्षिप्रं त्वरमाण इत्यर्थः । उप ब्रह्माणि हे हरिवः ! हरी अश्वौ, तद्वन्[1] । आगत्य च सुते इति द्वितीयार्थे सप्तम्यथा । सुतम् अभिषुतम् । दधिष्व धारय स्वोदरे । पिबेत्यर्थः । नः अस्माकं स्वभूतं चनः सोमलक्षणमन्नम्[1] ॥ ६ ॥

वेङ्कट० 'इन्द्र'[2] उपागच्छ त्वरमाणः स्तोत्राणि गमनसाधनभूताश्ववन् । आगत्य चास्मिन्[3] सुते सोमे[4] अस्मभ्यमन्नं देहि ॥ ६ ॥

मुद्गल० हे हरिवः ! अश्वयुक्त इन्द्र ! त्वं ब्रह्माणि स्तोत्राणि उप उपैतुम् आ याहि आगच्छ[5] । कीदृशस्त्वम् । तूतुजानः त्वरमाणः । आगत्य चास्मिन् सुते सोमाभिषवयुक्ते कर्मणि नः अस्मदीयं चनः अन्नं हविर्लक्षणं दधिष्व धारय स्वीकुर्वित्यर्थः ॥६॥

इति प्रथमाष्टके प्रथमाध्याये पञ्चमो वर्गः ॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ॥७॥

ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत । दाश्वांसः । दाशुषः । सुतम् ॥७॥

स्कन्द० 'वैश्वदेवस्तृचः षष्ठः ।' हे ओमासः ! "अवतेरव पालनार्थस्य तर्पणार्थस्य वा" कर्तरि मन् प्रत्ययः । अवितारः[1] रक्षितारः तर्पयितारो वा । चर्षणीधृतः चर्षणयो मनुष्याः तेषां तैस्तैरुपकारैर्धारयितारः । 'विश्वे सर्वे देवासः देवाः आ गत आगच्छत'[2] । दाश्वांसः "प्रत्यक्षकृतोऽयं मन्त्रः । न च दमा[?] सन्निहितम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता नेया" । ये दाश्वांसो दत्तवन्तो यजमानाय धनानि ते । "दाशुषः हर्वीषि दत्तवतः यजमानस्य स्वभूतं सुतम् सोमं प्रति ॥ ७ ॥

वेङ्कट० अवितारः[4] मनुष्यधृतः[5] सर्वे देवाः[6] इहागच्छत दानशीलाः दाशुषः सुतम् ॥ ७ ॥

मुद्गल० हे विश्वे देवासः ! देवाः ! दाशुषः हविर्दत्तवतो यजमानस्य सुतम् अभिषुतं सोमं प्रति आगत आगच्छत । ते च देवाः ओमासः रक्षकाः चर्षणीधृतः मनुष्याणां धारकाः दाश्वांसः फलस्य दातारः ॥७॥

विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि ॥८॥

विश्वे । देवासः । अप्ऽतुरः । सुतम् । आ । गन्त । तूर्णयः । उस्राःऽइव । स्वसराणि ॥८॥

---

१ १ आगच्छ त्वरमाण । तुज त्वरणे । क्रियासमभिहारे यङ्लुक् । उप ब्रह्माणि व्याख्यानम् । हरिव अश्ववन् । 'मतुवसो रु सम्बुद्धौ छन्दसि' (पा ८,३,१) इति रु । सुत द्वितीयार्थे सप्तमी । अभिषुत धारय । न चन अस्माकं सोमलक्षणमन्नम् वि' अ कु　२ २ नास्ति वि स्प　[3]आगच्छ कु　[4]'स्याम्मिन्° स्प　३ नास्ति वि मै'　४ ४ अव पालनतर्पणयो वि' अ कु　५ नास्ति वि' अ कु　६ ६ विश्व देवास सर्वे देवा मागच्छत । ज्योतिरुक् वि' अ कु

स्कन्द० "[1]सारस्वतोऽयं सप्तमस्तृचः ।' सरस्वतीदेवतोऽयम् । पावका शोधयित्री अंहसां पापानामपनेत्री । अथवा पवतिः क्षरणार्थः । 'सोमः पवते जनिता मतीनाम्' (ऋ ९,९६,५) इति । ण्यन्तश्चात्र द्रष्टव्यः[1] । क्षारयित्र्युदकानाम् । नः '[2]अस्माकं स्वभूतम्[2] । सरस्वती मध्यमस्थाना[3] वाक् । कीदृशी । वाजेभिः वाजिनीवती "[4]वाजः' (निघ २,७) इत्यन्ननाम । वाजिनीशब्दोऽपि तस्यैव पर्यायान्तरं द्रष्टव्यम् । यजमानेभ्यो याति ददाति तैः, हविर्लक्षणैश्चान्नैरन्नवती । अथवा वाजेभिरिति तृतीयानिर्देशाद् युक्तमिति वाक्यशेषः । हविर्लक्षणैरन्नैर्युक्तम् । वाजिनीवती वाजो बलं (द्र. निघ २, ९) वेगो वा, तद्वती वाजिनी । काऽसौ । सरस्वत्याः स्वभूता सेना । तद्वती वाजिनीवती सरस्वती । अथवा वाजो हविर्लक्षणमन्नं, तद् यस्या अस्ति सा वाजिनी यागसन्ततिः । तद्वती वाजिनीवती सरस्वती । यज्ञं वष्टु वश कान्तौ । कामयताम् । कामनेनात्रागमनं संभजनं च लक्ष्यते । यो हि यं कामयते, स तमागच्छति, सम्भजति च । आगच्छतु, सम्भजतां चेत्यर्थः । धियावसुः प्रज्ञाधना । अथवा वसेराच्छादनार्थस्य वसुशब्दः । प्रज्ञयाऽऽच्छादयित्री सर्वार्थानाम्[4] ॥१०॥

वेङ्कट० शोधयित्री अस्माकं सरस्वती अन्नैः अन्नवती यज्ञम् वहतु कामयतां वा । प्रज्ञया सर्वेषां वासयित्री ॥ १० ॥

मुद्गल० सरस्वती देवी वाजेभिः हविर्लक्षणैरन्नैर्निमित्तभूतैः नः अस्मदीयं यज्ञम् वष्टु कामयताम् । कामयित्वा च निर्वहत्वित्यर्थः । कीदृशी सरस्वती । पावका शोधयित्री । वाजिनीवती अन्नवत्क्रियावती । धियावसुः कर्मप्राप्यधननिमित्तभूता ॥१०॥

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥११॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ॥११॥

स्कन्द० चोदयित्री '[5]सूनृतानाम् अपठितमपि वाङ्नामैतत्[5] । मध्यमस्थाना हि सरस्वती । सा '[6]च गर्जितलक्षणां वाचं चोदयित्री । चेतन्ती जानती । सुमतीनाम् द्वितीयार्थे षष्ठीयम् । सुमतीन् भक्तिपरान् यजमानान् । यज्ञम् दधे धारयति सरस्वती भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणवागायत्तत्वाद्, तस्याश्च सरस्वत्यायत्तत्वात्[6] ॥११॥

वेङ्कट० चोदयित्री सत्यानां प्रज्ञापयन्ती उदाराणां सुमतीनाम्, यज्ञम् धारयति[7] सरस्वती मन्त्रभूता[8] ॥११॥

मुद्गल० या सरस्वती सेयमिमं यज्ञम् दधे धारितवती । कीदृशी । सूनृतानाम् प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री । सुमतीनाम् शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती ॥११॥

---

१-१. पावका शोधयित्री अंहसामपनेत्री । पवतिः क्षरणे वा ण्यन्तश्चात्र वि[1] अ कु. २-२. नास्ति वि[1] अ कु. ३. प्रथमस्थाना साम्ब. ४-४. अन्नैरन्नवती अन्नयुक्ता । वाजो बलं वेगो वा । स्वसेनायुक्ता हविर्लक्षणान्नमस्या अस्तीति वा । यज्ञं वष्टु वश कान्तौ संभक्तौ च । यज्ञमिच्छतु आगच्छतु संभजताञ्च । वष्ट्विति प्रार्थनया अत्रागमनसंभजने च लक्ष्येते । धियावसुः प्रज्ञाधना प्रज्ञयाऽऽच्छादयित्री वा वि[1] अ कु. ५-५. प्रेरयित्री प्रियसत्यवतीनां वाचाम् वि[1] अ कु. ६-६. सा मेघगर्जनेन चोदयित्री । चेतन्ती । चिति स्मृत्याम् जानन्ती । सुमतीन् भक्तिपरान् यजमानान् । यज्ञं दधे यज्ञं धारयति सरस्वती । भूयिष्ठस्य यज्ञस्य मन्त्ररूपा वाक् सरस्वत्यायत्ता ततः वि[1] अ कु. ७. धारयित्री साम्ब[2,3]; धारयन्ती साम्ब.[1] ८. मन्त्रभूता वि[1] ल.

जुहूमसि आह्वयामः । दृष्टान्त -गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव । यथा लोके गोदोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत् ॥१॥

**उप॑ नः॒ सव॒ना ग॑हि॒ सोम॑स्य सोमपाः पिब । गो॒दा इद्रे॒वतो॒ मदः॑ ॥२॥**

उप॑ । नः॒ । सव॑ना । आ । ग॒हि॒ । सोम॑स्य । सो॒म॒ऽपाः॒ । पि॒ब॒ । गो॒ऽदाः । इत् । रे॒वतः॑ । मदः॑ ॥२॥

स्कन्द० [1]उपेत्युपसर्गः आगहीत्याख्यातेन सम्बध्यते । उप आ गहि उपागच्छ । नः अस्माकं स्वभूतानि सवनानि प्रातस्सवनमाध्यन्दिनतृतीयसवनानि । यज्ञनाम वा ( तु निघ ३, १७ ) सवनशब्दः । यज्ञान् । उपागत्य च, सोमस्य द्वितीयार्थे षष्ठी । षष्ठीश्रुतेरेकदेशमिति शेषः । सोमं सोमस्य वैकदेशं, स्वांशलक्षणं वा । हे सोमपाः ! सोमानां पातः ! । पिब किं कारणम् । उच्यते । गोदा इत् इच्छब्दः पदपूरणः, यस्मादर्थे वा । गवां दाता यस्मात् । रेवतः धनवतः तव मदः । यस्मात् त्वं सोमेन मत्तो गा ददासीत्यर्थः[1] ॥२॥

वेङ्कट० उपागच्छ अस्माकं सवनानि सोमं च सोमपातः ! पिब अथ परोक्षः । गोदाः एव भवत्याश्रितस्य [2]आढ्य । मदः[3] तृप्त आढ्य. प्रयच्छति पशूनिति ॥ २ ॥

मुद्गल० हे सोमपाः ! सोमं पातुं नः अस्मदीयानि सवना त्रीणि सवनानि प्रति उप समीपे आ गहि आगच्छ । आगत्य च सोमस्य सोमं पिब रेवतः धनवतस्तव मदः हर्षः गोदा इत् गोप्रद एव । त्वयि हृष्टे सत्यस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

**अथा॑ ते॒ अन्त॑मानां वि॒द्याम॑ सुम॒तीना॑म् । मा नो॒ अति॑ ख्य॒ आ ग॑हि ॥३॥**

अथ॑ । ते॒ । अन्त॑मानाम् । वि॒द्याम॑ । सु॒ऽम॒तीना॑म् । मा । नः॒ । अति॑ । ख्यः॒ । आ । ग॒हि॒ ॥३॥

स्कन्द० [4]अथेत्यानन्तर्ये । अथ सोमपानानन्तरम् । ते तव अन्तमानाम् द्वितीयार्थे षष्ठीयम् । अन्तमान् सन्निकृष्टान् । विद्याम विद ज्ञाने । जानीयाम । कीदृशान् । सुमतीन् स्वद्भक्तिप्रज्ञोपेतान् । तव स्वयमपि सन्निकृष्टः इन्द्र ! सन्निकृष्टान् ज्ञातुमलमिति स्वसन्निकर्षोऽनेन प्रकारेणाशास्यते । अथवा अन्तमानां सुमतीनामिति निर्धारणे षष्ठी । तव सन्निकृष्टानां सुमतीनाम् मध्ये विद्याम । विद सत्तायाम् । वयमपि भवेमेत्याशास्महे । अथवा विदिर्लाभ इत्येतस्यैतद्रूपम् । तव यानि सन्निकृष्टानि सुमतीनि । मतिः स्तुतिः मन्यतेरर्चतिकर्मत्वात् (तु निघ ३,१४) । सुस्तुतीनि सुपूजितानि अत्यन्तोत्कृष्टानि धनानि, तानि, तेषां वैकदेशं लभेमहि । किञ्च मा न अतिख्यः अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे वा । न प्रथने । माऽस्मान् [†] कदाचिदपि परित्याक्षीः, अतिक्रमीर्वा । किन्तर्हि । सर्वदैवागच्छ । अथवा ख्यातिः प्रथनार्थ एव । न इति कर्मश्रुतेः, अतोति चोपसर्गाद् योग्यक्रियाध्याहारः । माऽस्मानतिख्य । मा अन्येभ्य प्रकाशीभूः । अन्यसकाशं मा गम । अस्मत्समीपमेवागच्छेत्यर्थः[4] ॥३॥

---

१-१. उपागच्छ अस्माकं सवनानि त्रीणि न । यज्ञो वा सवनम् । यज्ञान् । उपागत्य च सोमस्य हे सोमपाः ! सोमं पिब सोमस्यैकदेशं वा । कस्मात् । यस्मात् गवां दाता । रेवतः धनवतः तव मदः । यस्मात् त्वं मत्त गा ददासि वि[1] भ कु. २. आढ्यस्य ल. ३. मदतृ[1] कु. ४-४ अथ सोमपानानन्तरम् । तव अन्तमान् सन्निकृष्टतमान् विद्याम जानीयाम । सुमतीन् लब्धकीर्तीन् चिर ( स्थिर)प्रज्ञोपेतान् । वय स्वत्सन्निकर्षं लब्धुकामाः जानीयाम इत्याशास्महे । एतद्द्वारेण त्वामपि । अथवा निर्धारणे षष्ठी । तव सन्निकृष्टानां सुमतीनां मध्ये वयमपि भवेम इति वा आशा । अथवा सुमतिः सुस्तुतिः । अत्यन्तोत्कृष्टानि धनानि । तानि लभेम तेषां वा एकदेशम् । किञ्च मा न. अतिख्य । अतिख्यातिः परित्यागे अतिक्रमे वा । न प्रथने । मास्मान् कदाचिदपि परित्याक्षीः अतिक्रमीर्वा । किं तर्हि आगहि सर्वदैव । ख्या प्रथने वा । अतः योग्यक्रियाध्याहारश्च । मा अस्मान् अति ख्य अन्यसकाशं मा गम. । अस्मत्समीपमेव आगच्छ वि[1] भ कु. †. मा प्रथने नास्मान् मूको. ।

वेङ्कट० सम्प्रति तव सन्निकृष्टायास्त्वयि विद्यमानायाः सुमतौ वयं लभेमहि। सर्वेणाऽभ्युदयेनाथ युक्तोऽसि त्वमिति[1] मतिं सुमतिं। मा अस्मान् अपहाय अन्यान् द्राक्षीः। इहाऽऽगच्छ ॥ ३ ॥

मुद्गल० अथ सोमपानानन्तरं हे इन्द्र! ते तव अन्तमानाम् अन्तिकतमानामतिशयेन समीपवर्तिनां सुमतीनाम् शोभनमतियुक्तानां पुरुषाणां मध्ये स्थित्वा विद्याम वयं त्वां जानीयाम। त्वमपि नः अति मा ख्यः अस्मानतिक्रम्य अन्येषां स्वस्वरूपं मा प्रकथय। किन्तु आ गहि अस्मानेवागच्छ ॥३॥

परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम्। यस्ते सखिभ्य आ वरम् ॥४॥

परा। इहि। विग्रम्। अस्तृतम्। इन्द्रम्। पृच्छ। विपःऽचितम्। यः। ते। सखिऽभ्यः। आ। वरम् ॥४॥

स्कन्द० आत्मन एवान्तरात्मनः प्रैषः। हे अन्तरात्मन्! परागच्छ। कीदृशम्। विग्रम् मेधाविनामैतत् (तु निघ ३,१५)। मेधाविनम्। अस्तृतम् स्तृञ् आच्छादने हिंसायां वा। अनाच्छादितं सर्वप्रकारमहिंसितं वा। कम्। इन्द्रम् इन्द्रसकाशं गच्छेत्यर्थः। गत्वा च पृच्छ कम्। विपश्चितम् एतदपि मेधाविनामैव (तु निघ ३,१५)। विग्रमिति पौनरुक्त्यप्रसङ्गाच्चेदमिन्द्रविशेषणम्। किं तर्हि। स्तोतृप्रतिनिर्देशः। मेधाविनं स्तोतारम्। कतमोऽसौ पुमानत्यन्तमेधावी स्तोता, यस्य त्वं सम्यक् स्तुतिं शृणोषि इत्येतत्त्वमिन्द्रं पृच्छेत्यर्थः। सः किं करोति, इन्द्रः पृच्छ्यमानश्चोच्यते, यः ते तव सखिभ्यः सखिस्थानीयेभ्यः पुत्रपौत्रादिभ्यो वा आ वरम्, आ इत्युपसर्गाद् वरं सखिभ्य इति च कर्मसम्प्रदानश्रुतेर्योग्यक्रियाध्याहारः। आदत्ते वरं ददाति। अभिलषितं ददातीत्यर्थः[1] ॥ ४ ॥

वेङ्कट० स्तोतः! इतस्त्वमुपगच्छ[2]। गत्वा च मेधाविनम् अस्तृतम्[3] अहिंसितं शत्रुभिः, इन्द्रम्[4] पृच्छ 'कीदृशः क्व स वर्तते' इति कञ्चन[5] विपश्चितं पृच्छ। यः इन्द्रः तव पुत्रादिभ्यः वरणीयं धनम् आ प्रयच्छति ॥ ४ ॥

मुद्गल० अत्र यजमानं प्रति होतुः सूक्तं। हे यजमान! त्वम् इन्द्रं परेहि इन्द्रस्य समीपे गच्छ[6]। गत्वा च विपश्चितम् मेधाविनं होतारं मा पृच्छ। असौ होता सम्यक् स्तुतवान् न वेत्येवं प्रश्नं कुरु। यः इन्द्रः ते तव यजमानस्य सखिभ्यः ऋत्विग्भ्यः वरम् श्रेष्ठं धनपुत्रादिकम् आ समन्तात् प्रयच्छतीति शेषः। तादृशमिन्द्रमिति पूर्वेणान्वयः। पुनरपि कीदृशम्। विग्रम् मेधाविनम् अस्तृतम्[7] अहिंसितम् ॥४॥

उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत। दधाना इन्द्र इद् दुवः ॥५॥

उत। ब्रुवन्तु। नः। निदः। निः। अन्यतः। चित्। आरत। दधानाः। इन्द्रे। इत्। दुवः ॥५॥

---

1 °आगच्छेति वि' स्प; °क्तो भवतीति मास्क'. २ २ विग्रं मेधाविनम्। अस्तृतमनाच्छादितमहिंसितं वा। इन्द्रम्। तत्सकाशं गत्वा तं पृच्छ च। विपश्चितं मेधाविनं स्तोतारम्। कतमः कतमोऽसौ पुमानत्यन्तमेधावी यस्य त्वं सम्यक् स्तुतिं शृणोषि इति गत्वा तं पृच्छ। यः त्वत्सखिभ्यः वरं ददाति इन्द्र। सखायः कश्चित्पुत्रपौत्रादयो वा। अनुदीं स्याः। अत्र योग्यक्रियाध्याहारः। आदत्ते वि' अ ३ ... मुको मास्क'. ३ °तस्त्वमुप ग° मास्क'. ४ नास्ति कु माम्. ५ इन्द्रम् कु माम्. ६ कञ्च वि° मास्क'. ७ आगच्छ वि मै. ८ पृच्छ वि मै'।

स्कन्द० [1]उतशब्द पदपूरण । अप्यर्थे समुच्चये वा । उत्तरस्या च ऋचि यद् वक्ष्यते, तदपेक्षस्समुच्चय । अपि ब्रुवन्तु उच्चारयन्तु । किम् । सामर्थ्यादिन्द्रस्य स्तुती । इन्द्र नित्य स्तुवतामित्यर्थ. । न अस्माक स्वभूता ऋत्विज पुत्रपौत्रादयो वा । निद ये त्वस्माक निन्दितार ते नि अन्यत चित् आरत चिच्छब्द एवार्थे । अन्यत एव निरारत निर्गच्छन्तु । अन्येनैव पथा प्रयान्तु । मा इन्द्र कदाचिदपि सत्वतो ज्ञासिषु, मा च स्ताविषुरित्यर्थ । दधाना इन्द्रे इद् दुव इच्छब्द पदपूरण । इन्द्रे परिचर्यां दधाना इन्द्र परिचरितुमिच्छन्त इत्यर्थ[1] ॥ ५ ॥

वेङ्कट० अपि च [2]कामममत[1] स्थिरवा अस्मान् निन्दितार ब्रुवन्तु निर्गच्छन्तु[3] वा अन्यत । वय त्विन्द्रे परिचर्यां दधाना न बिभिम । इत् इति पूरणमिति । अस्योत्तरा भूयसे निर्वचनाय[4] ॥ ५ ॥

मुद्गल० न अस्माक सबन्धिन ऋत्विज इति शेष । ते ब्रुवन्तु [5]इन्द्र स्तुवन्तु[5] । उत अपि च हे निद [5][1] निन्दितार पुरुषा [1] नि आरत इतो देशान्निर्गच्छत । अन्यतश्चित् अन्यस्मादपि देशान्निर्गच्छत । कीदृशा ऋत्विज । इन्द्रे दुव परिचर्यां दधाना कुर्वाणा । इत् अवधारणे । सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थ ॥५॥

इति प्रथमाष्टके प्रथमाध्याये सप्तमो वर्ग ॥

उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ॥६॥

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥६॥

स्कन्द० [7]अपि न अस्मान् सुभगान् सुधनान् । अरि शत्रुपर्यायोऽयमीश्वरनाम वा (तु निघ २,२२) । व्यत्ययेन चैकवचनम् । शत्रवोऽपि ईश्वरा अपि वोचेयु हे दस्म [1] उपक्षपयित [1]‡ शत्रूणा, दर्शनीय [1] वा । कृष्टय मनुष्या । तादृश धनमस्मभ्य देहि, येन शत्रवोऽपि ईश्वरा अपि वा अस्मान् सुधनान् ब्रुवन्ति, किमुतान्ये मनुष्या इत्यर्थ । किञ्च स्याम इत् इच्छब्द पदपूरण । वय ‡ भवेम तव इन्द्रस्य सम्बन्धिनि शर्मणि सुखे । त्वया दत्तेन धनेन सुखिनश्च भवेमेत्यर्थ । अथवा 'शर्म' (निघ ३,४) इति गृहनाम । मरणोत्तरकाल तवेन्द्रस्य गृहे भवेम । इन्द्रलोक गच्छेमेत्यर्थ [7] ॥ ६ ॥

---

१ १ उत चार्थे । परस्या ऋच समुच्चये । ब्रुवन्तु उच्चारयन्तु । सामर्थ्यात् इन्द्रस्तुती । ते नित्य स्तुवन्तु अस्माक ऋत्विज पुत्रपौत्रादयो वा । निद इन्द्र कदाचिदपि मा तत्त्वत ज्ञासिषु मा च स्तौषु । दधाना इन्द्रे परिचर्याम् । परिचरितुमिच्छन्त वि[1] अ कु २ २ काम प्रत्यक्षमेवामत वि[1] कु साम्ब ३ गच्छतो वि[1] एप साम्ब[3] ४ [०]नाय उत न इति ए ५ ५ नास्ति वि मै[5] ६ आमन्त्रित ! (तु सा ) ७ ७ अपि अस्मान् सुभगान् सुधनान् । शत्रु ईश्वरो वा । शत्रवोऽपि ईश्वरा अपि वोचेयु । हे दस्म ! दसु उपक्षये दर्शने च । शत्रुहन् दृश्य वा, कृष्टयो मनुष्या । येन शत्रवोऽपि ईश्वरा अपि वा अस्मान् सुधनान् ब्रुवन्ति ।

रिपु सुभगान्वदतादीया इन्द्रस्यैनावती स्तुती । ।
या न अन्यस्माच्छिष्यसु ता इन्द्र त्वा सुपूनका ! ॥
अत प्रमत्तादि दाय धनिन स्थाम तादृशा ।
ईश्वरा रिपवोऽप्यस्मान् यद् ब्रुवु सुधनानिति ॥

शत्रव । किमुत अन्ये मनुष्या । तादृशं धनं देहि । किंच स्याम भवेम इन्द्रसम्बन्धिनि सुखे । त्वद्दत्तेन धनेन सुखिनश्च भवेम । शर्म गृहं वा । भवेम त्वद्गृहे स्याम । मृता इन्द्रलोकं गच्छाम वि[1] अ कु † [०]क्षयित मूको ‡ [०]णोऽयम् मूको

वेङ्कट० अरि दुष्य इत्येकवचनबहुवचनयोर्भिन्नपादस्थयोर्भिन्नमन्त्रस्थयोरिव विरम्याभिधानात् सामानाधिकरण्य सिध्यति । अपिच अस्मान् इन्द्रसमाश्रयणात् सुभगान् अहिंसितधनान् अरि विब्रवीतु, विब्रुवन्तु वाऽस्यो मनुष्याः । दर्शनीय ! अथाऽपि वयम् इन्द्रस्य स्वभूत सुखे स्याम एव ॥ ६ ॥

मुद्गल० हे दस्म ! शत्रूणामुपक्षपयितः ! इन्द्र ! त्वदनुग्रहात् अरि उत शत्रवोऽपि न अस्मान् सुभगान् शोभनधनोपेतान् वोचेयु उच्यासुः । दृश्य मनुष्याः अस्मन्मित्रभूता वदन्तीति किमु वक्तव्य मिति शेष । ततो धनसम्पन्ना वयम् इन्द्रस्य शर्मणि इन्द्रप्रसादलब्धे सुखे स्याम इत् भवेमैव ॥६॥

## एमाशुमाशवे भर यज्ञश्रियं नृमादनम् । पतयन्मन्दयत्सखम् ॥७॥

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयतऽसखम् ॥७॥

स्कन्द० ईम् शब्द एनमित्यस्यार्थे । एन सोमम् आशुम् क्षिप्रनामैतत् (तु निघ २,१५) । स्वकार्यकरणेषु क्षिप्रम् । आशवे तादर्थ्ये चैषा चतुर्थी । सर्वार्थेषु क्षिप्रस्येन्द्रस्यार्थाय आभर आहर अध्वर्यो ! यज्ञश्रियम् यज्ञ य श्रयति स यज्ञश्री, त यज्ञश्रियम् । हविष्ट्वमापन्नमित्यर्थ । नृमादनम् नरो मनुष्या ऋत्विज तदाकारा वा देवा , तेषा मदकर पतयत् पतयतिर्गतिकर्मा । द्वितीयैकवचनस्य च छान्दसश्छान्दसो लुक् । पतयन्त गच्छन्तम्, इन्द्र प्रति गन्तारमित्यर्थ । मन्दयत्सखम् मन्दयतिरर्चतिकर्मा (तु निघ ३,१४) । सखीन् तान्यभिप्रेतानि स्तोतृ सम्पादयन् य आत्मन स्तुति कारयति तस्य इन्द्रस्य सखीभूतम् ॥ ७ ॥

वेङ्कट० आ भर एन 'क्षिप्रव्यापिन सोमं' क्षिप्रव्यापिन इन्द्राय । य सोमो यज्ञ श्रयति मदयति च मनुष्यान् तम् । पतयन्त पातयति हि सोम पातारम् । मदयति च सखायम् । पातैव सखेति ॥ ७ ॥

मुद्गल० ईमिति निपात इदशब्दार्थे । हे यजमान ! आशवे व्याप्तसोमयागव्यासाय इन्द्राय ईम् आ भर इम सोममाहर । कीदृश सोमम् । आशुम् सवनत्रयव्याप्त यज्ञश्रियम् यज्ञस्य सम्पद्रूप नृमादनम् नृणा ऋत्विग्यजमानाना हर्षहेतु पतयत् पतयन्त कर्माणि प्राप्नुवन्त मन्दयत्सखम् य इन्द्रो मद यति यजमानान् हर्षयति, तस्मिन्निन्द्र सखीभूतोऽस्य सोम तत्प्रीतिहेतुत्वात् ॥७॥

## अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ॥८॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घन । वृत्राणाम् । अभव । प्र । आव । वाजेषु । वाजिनम् ॥८॥

---

१. °मिवात् मामद° । २ २ मर्गेषु मुद्गल इ य ३ पारयो स्प ४ °क्षयित मूको

५-५ ईं एनम् । एन °मिम् । आशु क्षिप्रम् । आशव तादर्थ्यचतुर्थी । सर्वार्थेषु क्षिप्रस्य इन्द्रस्य अथाय । आभर आहर । अध्वर्यो यज्ञश्रियम् । यज्ञ यो य श्रयति स यज्ञश्री तम् । हविष्ट्वमापन्नम् । नृमादनम् नर ऋत्विज तदाकारा देवा वा तेषा मदकरम् । पतयत् पतयन्त गच्छन्त इन्द्र प्रति गन्तारम् । मन्दयत्सखम् मदि अर्चायाम् । सखीन् तानभिप्रेतानि स्तोतॄन् सम्पादयन् य आत्मानं स्तुति कारयति स मन्दयति इन्द्रस्य । इन्द्रसखीभूतम् । वि° अ कु

६ ६ नास्ति वि° मपु ७ नास्ति मपु

स्कन्द० [1]अस्य इति षष्ठी द्वितीयार्थे। षष्ठीश्रुतेरेकदेशमिति शेषः। इमं सोमम्, अस्य सोमस्यैकदेशं स्वांशलक्षणं पीत्वा हे शतक्रतो! शतशब्दो बहुनाम (तु. निघ ३,१)। क्रतुः कर्म प्रज्ञा वा। बहुकर्मन्! बहुप्रज्ञ! वा। घनः हन्ता वृत्राणाम् असुराणामन्येषां वा अभवः त्वम्। प्रावः प्रकर्षेणारक्षः त्वम्। वाजेषु 'वाजे' (निघ २,१७) इत्येकवचनान्तं सङ्ग्रामपठितम्, सङ्ग्रामेषु। कम्। वाजिनम् सङ्ग्रामवन्तं हविर्लक्षणेनान्नेनान्नवन्तं वा। अथवा अभवः प्राव इति लोडर्थे लङ्। हन्ताऽस्मदीयानां शत्रूणां भव। प्रकर्षेण चाव संग्रामेषु मां वाजिनमिति। आत्मत्राणे संसर्गे वा ब्राह्मणवैश्ययोरपि शस्त्रादानस्मरणात् सम्भवति ऋषीणामपि संग्रामः। विशेषेण तु मधुच्छन्दसः क्षत्रियप्रसूतत्वात्। तत्रेदं शत्रुहननमात्मरक्षा चाशास्यते[1] ॥ ८ ॥

वेङ्कट० अमुं सोमं पीत्वा शतप्रज्ञ! हन्ता शत्रूणाम् अभवः। पालय[2] च युद्धेषु युद्धवन्तं स्तोतारम् ॥ ८ ॥

मुद्गल० हे शतक्रतो! इन्द्र! त्वम् *अस्य सोमस्य सम्बन्धिनमंशं पीत्वा वृत्राणाम् शत्रूणां घनः अभवः* हन्ताऽभूः। ततो वाजेषु संग्रामेषु वाजिनम् संग्रामवन्तं स्वभक्तं प्रावः प्रकर्षेण रक्षितवानसि ॥८॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। धनानामिन्द्र सातये ॥९॥

तम्। त्वा। वाजेषु। वाजिनम्। वाजयामः। शतऽक्रतो इति शतक्रतो। धनानाम्। इन्द्र। सातये ॥९॥

स्कन्द० [3]तच्छब्दः प्रकृतापेक्षः। तम् त्वा वाजेषु वाजिनम् वाजो बलं तद्वन्तम्। वाजयामः वाजयतिरर्चतिकर्मा (तु. निघ ३,१४)। स्तुमः। हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ! वा। किमर्थम्। उच्यते। संग्रामे जिगीषितानां धनानाम् हे इन्द्र! सातये षणु दाने। दानाय। अथवा वन षण सम्भक्तौ। सम्भजनाय लाभायेत्यर्थः[3] ॥९॥

वेङ्कट० तम् त्वा युद्धेषु बलिनं स्तुतिभिर्बलिनं कुर्मः। शतप्रज्ञ! धनानाम् इन्द्र! लाभाय ॥ ९ ॥

मुद्गल० हे शतक्रतो! इन्द्र! धनानाम् सातये संभजनार्थं वाजेषु युद्धेषु वाजिनम् बलवन्तं तम् पूर्वोक्तं त्वा त्वां वाजयामः अन्नवन्तं कुर्मः ॥९॥

यो रायो३ऽवनिर्महान्त्सुपारः सुन्वतः सखा। तस्मा इन्द्राय गायत ॥१०॥

यः। रायः। अवनिः। महान्। सुऽपारः। सुन्वतः। सखा। तस्मै। इन्द्राय। गायत ॥१०॥

---

१-१. अस्य इमं सोमस्य एकदेशं वा पीत्वा हे बहुकर्मन् बहुप्रज्ञ वा। क्रतुः कर्मप्रज्ञयोः। घनः हन्ता। वृत्राणां शत्रूणामसुराणां वा। अभवः त्वम्। प्रावः प्रकर्षेण अरक्षः। वाजेषु संग्रामेषु। वाजिनं संग्रामवन्तं हविष्मन्तं वा। लोडर्थे वा लङ्। अस्मदीयानां शत्रूणां हन्ता भव संग्रामेषु संग्रामवन्तं मां प्राव च मत्सम्बन्धिनं वा। विप्रवैश्ययोरपि शस्त्रादानस्मरणात् संभवति ऋषीणामपि संग्रामः। एष क्षत्रप्रसूतस्तु। तस्मादात्मत्राणादि हननाशा च युक्ता वि[1] अ कु. २. भावयः वि[1] ल साम्व[1]. ३-३. तं प्रकृतं त्वा वाजेषु बलं तद्वन्तम्। वयं अर्चामः स्तुमहे। हे बहुकर्मन्! बहुप्रज्ञ! वा। धनानां संग्रामे जिगीषितानां धनानाम्। इन्द्र दानाय संभजनाय वा वि[1] अ कु.

स्कन्द० य इन्द्र. 'राय धनस्य। 'अवनि' (निघ १,१) पृथिवीनामैतत्। आश्रयत्वसामान्यात्तु इन्द्रे प्रयुज्यते। यथा पृथिवी सर्वार्थानामाश्रय तद्वदाश्रय इत्यर्थ। अथवा अवते स्वाम्यर्थस्य वा अवाप्त्यर्थस्य वा कर्तरि अयमनिप्रत्यय. (तु पाउ २,१०२)। धनस्येशिता अवाप्ता वेत्यर्थ। कीदृश। महान् सुपार पृ पालनपूरणयो.। सुष्ठु च पालयिता। सुन्वत अभिषव कुर्वतः सोमयाजिन इत्यर्थ। सखा सखिस्थानीयश्च सुन्वत एव। तस्मा इन्द्राय। तादर्थ्ये एषा चतुर्थी। तस्येन्द्रस्यार्थाय। तमिन्द्र स्तोतुमित्यर्थ। गायत सामगा उद्गातार !। उच्चारणवचनमात्रो वा गायति। कै गै शब्दे। स्तुतिमुच्चारयत यूयमृत्विजो मत्स्तुत्योता वा[1] ॥ १० ॥

वेङ्कट० य स्तोतुर्धनस्य रक्षक महान् शोभनपूरण[2]। सुन्वत सखा तस्मै इन्द्राय गायत इति ॥१०॥

मुद्गल० य इन्द्र राय धनस्य अवनि रक्षक. तस्मै इन्द्राय गायत हे ऋत्विज ! तत्प्रीत्यर्थं स्तुति कुरुत। कीदृश इन्द्र। महान् गुणैरधिक सुपार सुष्ठु कर्मण पूरयिता सुन्वत यजमानस्य सखा सखिवत् प्रिय ॥१०॥

इति प्रथमाष्टके प्रथमाध्याये अष्टमो वर्ग ॥

[ ५ ]

'आ तु' इति दशर्चं द्वितीय सूक्तम्। मधुच्छन्दा ऋषि। इन्द्रो देवता। गायत्रम्।

आ त्वेता नि षीदतेन्द्रमभि प्र गायत। सखाय: स्तोमवाहसः ॥१॥

आ। तु। आ। इत। नि। सीदत। इन्द्रम्। अभि। प्र। गायत। सखाय। स्तोमऽवाहस ॥१॥

स्कन्द० 'तु शब्द पदपूरण क्षिप्रपर्यायो वा। आ आ इत्युपसर्गस्याभ्यासात् तत्सम्बन्धिन इत इत्यास्यातस्याप्यभ्यास, क्षिप्रमेव। आख्याताभ्यासे च लोके गम्यतामित्यादौ अवश्य कर्तव्यता प्रतीयते। क्षिप्रमवश्यमागच्छतेत्यर्थ। आगत्य च नि षीदत उपविशत यथास्थानम्। निषद्य च इन्द्रम् अभि प्रगायत गायतिरर्चतिकर्मा (तु निघ ३,१४)। प्रकर्षेणाभिष्टुत[1]। हे सखाय ! ऋत्विज ! स्तोमवाहस स्तोमानामिन्द्र प्रति प्रापयितार, "स्तोतार इत्यर्थ" ॥ १ ॥

वेङ्कट० पूर्वेण सूक्तेनाहूतमिन्द्र स्तोतुमुपक्रमते। आगच्छत क्षिप्रमुद्गातार !। उपसर्गा प्रयुक्ता अपि प्रागाख्यातात् पुन प्रयुज्यन्ते। वक्ष्यते तत्र कारणम्। आगत्य च नि षीदत गानार्थम्। अथ इन्द्रम् अभि प्रगायत सखाय ! "प्रस्तावात् प्रतिहारादुपगानाच्च स्तोमस्य" नेतार ! ॥ १ ॥

मुद्गल० हे सखाय ! ऋत्विज ! तु क्षिप्रमस्मिन् कर्मणि आ इत आगच्छत। आगत्य च नि षीदत उपविशत। उपविश्य च इन्द्रम् अभि प्रगायत सर्वत प्रकर्षेण स्तुत। कीदृशा सखाय। स्तोमवाहस त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ॥१॥

---

१ १ धनस्य आश्रय अवनि मू; यथा महाश्रया महत् [illegible]। [illegible] स्वामिनि अवाप्तौ वा। धनस्य ईशिता [illegible] वा। महान् सुपार सुष्ठु पालयिता। सुन्वत अभिषवं कुर्वत सोमयाजिन। सखा सखिस्थानीयश्च सुन्वत एव [illegible]। [illegible] इन्द्रस्यार्थाय। तमिन्द्रं स्तोतुम्। हे उद्गातार गायत [illegible] वा वि[?] अ कु २ [illegible] वि[?] इ[?] [illegible]। ३ ३ [illegible] आख्यातस्यापि द्वित्वम्। मु [illegible]। [illegible] कर्तव्यता [illegible]। [illegible] इन्द्रम् अभिप्रगायत [illegible] वि[?] अ कु ४ ४ नास्ति वि[?] अ मु ५-५ प्रस्ताव प्रतिहारयोरुपगानस्य [illegible]। मु, [illegible] स्तो[?] [illegible]

पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ॥२॥

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥२॥

**स्कन्द०** [१]कीदृशमिन्द्रम् । उच्यते । पुरुतमम् पुरुशब्दो बहुनाम (द्र. निघ ३, १)। तमशब्दोऽपि नातिशयप्रत्ययः। अर्थासम्भवादुदात्तत्वाच्च। किन्तर्हि, तमु अभिकाङ्क्षायाम् इत्यस्य रूपम्। बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते याच्यते, स पुरुतमः, तं पुरूतमम्। पुरूणाम् बहूनाम् ईशानम् स्वामिनम्। वार्याणाम् वरणीयानाम् उत्कृष्टानां धनानाम्। इन्द्रम् क्रियाशब्देनेदमिन्द्रस्य गुणाभिधानं, न नाम्ना प्रतिनिर्देशः। कुत एतत्। अस्यामृचि आख्याताभावात् पूर्वयर्चैकवाक्यभावाद्वा। तस्यां चेन्द्रशब्दस्य नाम्नो विद्यमानत्वात्। इदि परमैश्वर्ये। अत्यन्तेश्वरमित्यर्थः। कदा पुनः स्तवाम। उच्यते। सोमे सचा सुते सचा सहेत्यर्थः। सर्वैर्ऋत्विग्भिः सहाभिषुते[१]। कालोपलक्षणं चेदम्। अभिषवोत्तरकालमित्यर्थः ॥ २ ॥

**वेङ्कट०** बहूनाम् उपक्षययितारम्[२]। 'गवामसि गोपतिः' (ऋ ७,९८,६) इत्यनेन समानो निर्देशः। धनानाम् ईश्वरम् इन्द्रम् [३]सहाभिप्रगायत अभिषुते[३] सोमे ॥ २ ॥

**मुद्गल०** हे सखायः ! ऋत्विजः ! सचा यूयं सर्वैः सह सुते अभिषुते सोमे प्रवृत्ते सति इन्द्रम् अभिप्रगायत। कीदृशमिन्द्रम्। पुरुतमम् पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः तम्। पुरूणाम् बहूनां वार्याणाम् वरणीयानां धनानाम् ईशानम् स्वामिनम् ॥२॥

स घा नो योग आ भुवत्स राये स पुरंध्याम् । गमद्वाजेभिरा स नः ॥३॥

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् । गमत् । वाजेभिः । आ । सः । नः ॥३॥

**स्कन्द०** [४]घ इति पदपूरणः। सः प्रकृत इन्द्रः नः अस्माकं योगे योग उद्योगः, उत्साहः, अलब्धलाभो वा तस्मिन्। आ भुवत् आभिमुख्येन भवतु। योगमस्माकं करोत्वित्यर्थः। सः एव राये धने। सः एव पुरन्ध्याम् बहुशां प्रज्ञायाम्। गमद् वाजेभिः आगमदागच्छतु। वाजेभिः सहयोगलक्षणेयं तृतीया। अस्मभ्यं यानि दातव्यानि तैरन्नैः सह, तानि गृहीत्वेत्यर्थः। अथवा हेताविंयं तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। हविर्लक्षणैरन्नैर्हेतुभूतैः। हविरुपभोगार्थमित्यर्थः। कः, स एवेन्द्रः। कस्य वाजेभिः, नः अस्मत्सम्बन्धिभिः[४] ॥ ३ ॥

**वेङ्कट०** सः एव अस्माकम् [५]सम्प्राप्तमप्राप्यर्थमाभवतु[५]। सः धनाय। सः पुरन्धिर्बहुधीर्योषा तस्यै च। अन्नैश्च अस्मान् आगच्छतु स ॥ ३ ॥

**मुद्गल०** घ अवधारणे। सः एवेन्द्रः पूर्वोक्तगुणविशिष्टः नः अस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे आ भुवत् [६]आभवतु। पुरुषार्थं साधयत्वित्यर्थः। सः एव राये धनार्थमाभुवत्[६]। स एव पुरन्ध्याम् योषिति आभुवत्। स एव वाजेभिः देयैरन्नैः सह नः अस्मान् आ गमत् आगच्छतु ॥३॥

---

१-१. पुरूतमं तमप् स्वरितं तशायम्। तस्मादाभिकाङ्क्षार्थः। बहुभिः प्रार्थितम्। पुरूणा बहूनामीशानं स्वामिनं वार्याणामुत्कृष्टानां धनानामिन्द्रम्। इदि परमैश्वर्ये अत्यन्तेश्वरम्। अनयोः ऋचोः एकवाक्यता। सोमे ऋत्विग्भिः सह सुते वि[१] अ कु. २. °क्षपिता° साम्व[१]. ३-३. अभिप्रगायत सहाभिषु° कु साम्ब. ४-४. सः इन्द्रः अस्माकमुद्योगे आभिमुख्येन भवतु। स एव धने। स एव बहुधा प्रज्ञायाम्। मेधा पुरन्धिः। आगच्छतु च अस्मद्देयैः अन्नैः हविरुपभोगार्थं वा। सम्बन्धार्थे नः वि[१] अ कु. ५-५. °र्थं योगमावह° साम्ब[१] कु; °र्थं योगमाभव° साम्ब[२]; °र्थमावहतु रूपं साम्ब[३]. ६-६. नास्ति वि मै[१].

यस्य॑ सं॒स्थे न वृ॒ण्वते॒ हरी॑ स॒मत्सु॒ शत्र॑वः । तस्मा॒ इन्द्रा॑य गायत ॥४॥

यस्य॑ । स॒म्ऽस्थे । न । वृ॒ण्वते॑ । हरी॒ इति॑ । स॒मत्ऽसु॑ । शत्र॑वः । तस्मै॑ । इन्द्रा॑य । गा॒य॒त ॥४॥

स्कन्द० यस्य इन्द्रस्य [1]स्वभूते संस्थे अपठितमपि संग्रामनामैतत्, संग्रामे । न वृण्वते वृणोतिरत्र सामर्थ्यात् प्राप्त्यर्थे प्राप्नुवन्ति । हरी अश्वौ । समत्सु संस्थे इत्यनेन गतत्वात् क्रियाशब्दोऽयं, न संग्रामनाम । मद भक्षणे सम्भक्षयत्सु परस्परं योद्धृषु । महति युद्धे प्रवृत्त इत्यर्थः । शत्रवः वैरिणः । यः संग्रामे महति युद्धे प्रवृत्ते दूरस्थानेव रथप्रासान् । निहन्तीत्यर्थः । तस्मा इन्द्राय सामान्युच्चारयत स्तुतीर्वा[1] ॥ ४ ॥

वेङ्कट० यस्मिन् अवस्थिते न वारयन्ति तस्य स्वभूतावश्वौ संग्रामेषु शत्रवः । तस्मै इन्द्राय गायत ॥ ४ ॥

मुद्गल० समत्सु युद्धेषु यस्य इन्द्रस्य संस्थे रथे युक्तौ हरी द्वावश्वौ शत्रवः न वृण्वते न सम्भजन्ते । रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः । तस्मै इन्द्राय तत्सन्तोषार्थमृत्विजः ! गायत स्तुतिं कुरुत ॥४॥

सु॒त॒पाव्ने॑ सु॒ता इ॒मे शुच॑यो यन्ति वी॒तये॑ । सोमा॑सो॒ दध्या॑शिरः ॥५॥

सु॒त॒ऽपाव्ने॑ । सु॒ताः । इ॒मे । शुच॑यः । य॒न्ति॒ । वी॒तये॑ । सोमा॑सः । दधि॑ऽआशिरः ॥५॥

स्कन्द० [2]सुतानां सोमानां पात्रे सुता इमे यन्ति गच्छन्ति । न चाप्रदीयमानानां गमनं सम्भवतीति प्रदानमनेन लक्ष्यते । सम्प्रदानचतुर्थीश्रुते दानार्थ एव वा युति, प्रदीयन्त इत्यर्थः । किमर्थं, वीतये पानाय । के । सोमाः सोमा दध्याशिरः दधिमिश्राः । सोममिश्रं हि दध्याशीरुच्यते[2] ॥ ५ ॥

वेङ्कट० सुतं सोमं[3] यः पिबति तस्मै सुता इमे सोमाः[4] पूताः पानाय गच्छन्ति दधिमिश्रणाः[5] ॥ ५ ॥

मुद्गल० इमे सोमासः अस्मिन् कर्मणि सम्पादिताः सोमाः सुतपाव्ने अभिषुतस्य सोमस्य पानकर्त्रे, तस्य पातुं, वीतये भक्षणार्थं यन्ति तमेव प्राप्नुवन्ति । कीदृशाः सोमाः । सुताः अभिषुताः शुचयः दशापवित्रेण शोधितत्वाच्छुद्धाः दध्याशिरः अवनीयमानं दधि आशीः दोषघातकं येषां सोमानां ते दध्याशिरः ॥५॥

इति प्रथमाष्टके प्रथमाध्याये नवमो वर्गः ॥

त्वं सु॒तस्य॑ पी॒तये॑ स॒द्यो वृ॒द्धो अ॑जायथाः । इन्द्र॒ ज्यैष्ठ्या॑य सुक्रतो ॥६॥

त्वम् । सु॒तस्य॑ । पी॒तये॑ । स॒द्यः । वृ॒द्धः । अ॒जा॒य॒थाः॒ । इन्द्र॑ । ज्यैष्ठ्या॑य । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥६॥

---

1 1. संग्रामे न प्राप्नुवन्ति । वृ अश्वौ । हरी अश्वौ । समत्सु संभक्षयत्सु । महायुद्धे परस्परमश्नन्ति योद्धारः । तस्य वैरिणः । यस्मात् शत्रूणामसि । दूरस्थानपि सरथो यथा निहन्ति । एवंगुणाय इन्द्राय सामानि स्तुतीर्वा उच्चारयत वि[1] अ कु. 2-2. अभिषुतसोमस्य पात्रे अभिषुता इमे सोमाः शुद्धा गच्छन्ति पानाय । अप्रदीयमानानां गमनं न सम्भवति । प्रदानं यन्ति इत्यनेन लक्ष्यते । चतुर्थी दानार्थे वा । सुतपाव्ने शुचयो दीयन्ते । के सोमा दधिमिश्राः । दध्ना युक्त सोमः दध्याशीः वि[1] अ कु. 3. नास्ति वि[1] ल माध्य[2]. 4. सोमान् वि[1] लप. 5. ०मिश्रणाः मूको; ०मिश्र० ल सोम. [०मिश्रा० माध्य[2].

स्कन्द० [1]त्वम् सुतस्य सोमस्य पीतये पानार्थं सद्य तस्यामेव वेलाया शरीरेण च वीर्येण च परिवृद्ध प्रतिबन्धकापनयनसमर्थं अनायथा, जायसे भवसि। नच केवलार्थं सोमपीतये। किन्तर्हि, हे इन्द्र ज्यैष्ठ्याय च ज्येष्ठा प्रशस्यतमा प्रवृद्धतमा वा। तेषा कर्म ज्यैष्ठ्य, तस्मै च वृत्रवधादिकाय च हे सुक्रतो! सुकर्मन्! सुप्रज्ञ! वा। अथवा पीतय इति तृतीयार्थे चतुर्थी। त्व सुतस्य सोमस्य पानेन सद्य एव समान एवाहनि पानानन्तरमेव शरीरेण च वीर्येण च परिवृद्धो भवसि। किमर्थं, ज्यैष्ठ्याय सुकर्मणे वृत्रवधादिकाय[1] ॥ ६ ॥

वेङ्कट० त्वम् सुतस्य पानार्थं सद्य वृद्ध भवसि प्रवृद्धशरीर। इन्द्र! श्रेष्ठ कर्म कर्तुं शत्रुषु सुप्रज्ञ[2]! ॥ ६ ॥

मुद्गल० हे सुक्रतो! शोभनकर्मन्! इन्द्र! त्वम् सुतस्य अभिषुतस्य सोमस्य पीतये पानार्थं ज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च सद्य तस्मिन्नेव क्षणे वृद्ध अनायथा अभिवृद्धयोत्साहेन युक्तोऽभू ॥६॥

## आ त्वा विशन्त्वाशव सोमास इन्द्र गिर्वण । शं ते सन्तु प्रचेतसे ॥७॥

आ। त्वा। विशन्तु। आशव। सोमास। इन्द्र। गिर्वण। शम्। ते। सन्तु। प्रऽचेतसे ॥७॥

स्कन्द० [1]आ त्वा विशन्तु प्रविशन्तु त्वा। त्वया पीयन्तामित्यर्थ। कीदृशा, आशव स्वकार्यकरणे क्षिप्रा। के। सोमास सोमा। हे इन्द्र! गिर्वण। गिर स्तुतय। वनति सम्भक्त्यर्थं। स्तुतिभि सम्भजनीय! स्तुतीना वा सम्भक्त!। आविश्य च शम् सुखनामैतत् (तु निघ ३,६)। सुख तुभ्य सन्तु भवतु। प्रचेतसे प्रकृष्टप्रज्ञानाय[2] ॥ ७ ॥

वेङ्कट० आ विशन्तु [3]त्वा क्षिप्रा [4]सोमा इन्द्र! गीर्भिर्वननीय! शम् च तुभ्य भवतु[5] सुमतये ॥ ७ ॥

मुद्गल० हे इन्द्र! त्वा त्वा सोमास सोमा आ विशन्तु आभिमुख्येन प्रविशन्तु। कीदृशा सोमा। आशव सवनत्रये प्रकृतिविकृत्योर्व्याप्तिमन्त। कीदृशेन्द्र[1]! हे गिर्वण! गीर्भि स्तुतिभिस्सम्भजनीय देवविशेष! तथाविध हे इन्द्र! ते तव प्रचेतसे प्रकृष्टज्ञानाय शम् सुखरूपा सोमा सन्तु ॥७॥

## त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो । त्वां वर्धन्तु नो गिरः ॥८॥

त्वाम्। स्तोमा। अवीवृधन्। त्वाम्। उक्था। शतक्रतो इति शतऽक्रतो। त्वाम्। वर्धन्तु। न। गिर ॥८॥

स्कन्द० [1]त्वाम् स्तोमा स्तोत्राणि अस्मदीयोद्गातृप्रयुक्तानि अवावृधन् वर्धितवन्त। स्तूयमाना हि देवता वीर्येण वर्धन्ते। न च केवला स्तोमा त्वदीयान्युक्थान्यपि त्वा वर्धितवन्ति। हे शतक्रतो! उक्थशब्द-स्तार्तीयसवनिकहोतृकशस्त्रविशेषवचन। शस्त्रमात्रवचनो वा। त्वाम् वर्धन्तु वर्धयन्तु न अस्माकमपि स्वभूता गिर स्तुतय[2] ॥ ८ ॥

---

१ १ त्वं सोमस्य पानार्थं तस्यामेव वेलाया तन्वा वीर्येण वा वृद्ध प्रतिबन्धकापनयनसमर्थं भवसि। न केवलं सोमपानाय ज्यैष्ठ्याय च। प्रशस्यस्य श्र (पा ५,३,६०) ज्य च (पा ५,३,६१) इति अतिशयेन प्रशस्य प्रवृद्धो वा ज्येष्ठ तत्कर्म ज्यैष्ठ्यम्। तस्मै च वृत्रवधादिकाय। हे सुकर्मन्! सुप्रज्ञ! वा। पीतये पानेन इत्यर्थे वा। त्वं सोमपानेन सद्य प्रवृद्धो भवसि इन्द्र सुकर्मणे वि[1] अ कु २ [1]प्रज्ञ वि[1] ल्पं ३ ३ प्रविशन्तु त्वा, त्वया पीयन्ताम्। आशव मादने क्षिप्रा सोमा। हे इन्द्र! गिर्वण! गिर स्तुतय ताभि संभजनीय स्तुतीना संभक्त वा। आविश्य स्वात्सुखा भवन्तु। प्रचेतस प्रकृष्टप्रज्ञानाय वि[1] अ कु। भवन्तु मूको ४ ४ त्वा क्षिप्र साग्व[1] ५ भवन्तु ल ६ [1]आ इन्द्र मूको ७ ७ त्वामस्मदीयोद्गातृप्रयुक्तानि स्तोत्राणि वर्धयन्ति। केवलं सोमा एव न, त्वदीयानि उक्थान्यपि। उक्थं तृतीयसवने होतु शस्त्रविशेषवचनं शस्त्रमात्रवचनं वा। आज्यप्रउगे प्रात सवने, मरुत्वतीयनिष्केवल्ये माध्यन्दिने, वैश्वदेवाग्नि मारुतोक्थ्यषोडश्याप्तिनानि परस्मिन्। हे बहुकर्मन्! बहुप्रज्ञ! वा। त्वा वर्धयन्तु अस्मत्स्तुतय वि[1] अ कु

वेङ्कट० त्वाम् त्रिवृदादय स्तोमा अवीवृधन् त्वाम् शस्त्राणि च शतकर्मन्[1]। त्वाम् एव वर्धयन्तु अस्माकमपि[2] गिर ॥८॥

मुद्गल० हे शतक्रतो[1] इन्द्र[1] त्वाम् स्तोमा सामगाना स्तोत्राणि अवीवृधन् वर्धितवन्ति। तथा[2] उक्था शस्त्राणि त्वामवीवृधन्। न अस्माक गिर स्तुतय त्वाम् वर्धन्तु वर्धयन्तु ॥८॥

अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम्। यस्मिन् विश्वानि पौंस्या ॥९॥

अक्षितऽऊति। सनेत्। इमम्। वाजम्। इन्द्रः। सहस्रिणम्। यस्मिन्। विश्वानि। पौंस्या ॥९॥

स्कन्द० अक्षिता अन्येनाहिंसिता[3] अक्षीणा वा ऊति पालन यस्य स[4] अक्षितोति। [5]सनेत् सम्भजतु इमम् वाजम् सङ्ग्रामम् इन्द्र सहस्रिणम्[5] योद्धृसहस्रयुक्तम्। अस्मिन् सङ्ग्रामेऽस्मद्रक्षणाय सन्निहितो [6]भवत्वित्यर्थ। यस्मिन् [6]सङ्ग्रामे। किम्। उच्यते। विश्वानि सर्वाणि पौंस्या बलनामैतत् (तु निघ २,९) हस्त्यश्वरथपदातिलक्षणानि बलानि। अथवा 'वाज' (निघ २,७) इत्यन्ननाम। इदमस्मदीय सोमलक्षणमन्न सम्भजेत् पिबेदिन्द्र स्तुतिसहस्रयुक्तम्। यस्मिन् बलानि सर्वाणि सामर्थ्यलक्षणानि। वाज पीत सर्वसामर्थ्यानि जनयतीत्यर्थ। अथवा यस्मिन् विश्वानि पौंस्येति इन्द्रविशेषणम्। यस्मिन्निन्द्रे सर्वाणि बलानि य सर्वैर्बलैर्बलवान्, यो महाबल इत्यर्थ[7] ॥९॥

वेङ्कट० अक्षीणरक्षणो[8] भजेत अनेकपुरुषयुक्तम् इमम् सङ्ग्राम, यस्मिन् सर्वाणि बलानि[9] प्रादुर्भवन्ति ॥९॥

मुद्गल० इन्द्र इमम् वाजम् सोमरूपमन्न सनेत् सम्भजेत्। कीदृश इन्द्र। अक्षितोति अहिंसितरक्षण। कदाचिदपि रक्षा न विमुञ्चतीत्यर्थ। कीदृश वाजम्। सहस्रिणम् सहस्रसङ्ख्यायुक्तम्। यस्मिन् वाजे विश्वानि सर्वाणि पौंस्या पुंस्त्वानि बलानि वर्तन्ते तादृश वाजमिति पूर्वेणान्वय ॥९॥

मा नो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः। ईशानो यवया वधम् ॥१०॥

मा। नः। मर्ताः। अभि। द्रुहन्। तनूनाम्। इन्द्र। गिर्वणः। ईशान। यवय। वधम् ॥१०॥

स्कन्द० [10]मा न अस्माकम् मनुष्या अभि द्रुहन् द्रोह कार्षु। तनूनाम् शरीराणा हे इन्द्र[1] गिर्वण[1] स्तुतिभि सम्भजनीय[1] स्तुतीना वा सम्भक्त[1] ईशान प्रभुस्त्वम्। यवय यौति पृथग्भावे। पृथक् कुरु अपनयास्मत्त वधम् हिंसा हन्तार वा[10] ॥१०॥

वेङ्कट० मा अभिद्रुह्यन्तु इन्द्र[1] अस्माकमङ्गेभ्य शत्रव। गीर्भिर्वननीय[1] ईश्वरस्त्व पृथक् कुरु शत्रूणामायुधम् इति ॥१०॥

मुद्गल० हे गिर्वण। इन्द्र। मर्ता विरोधिनो मनुष्या न अस्मदीयाना तनूनाम् शरीराणा मा अभिद्रुहन् अभितो द्रोह मा कुर्यु। ईशान समर्थस्त्व वधम् वैरिभि सम्पाद्यमान यवय अस्मत्त पृथक्कुर ॥१०॥

इति प्रथमाष्टके प्रथमाध्याये दशमो वर्ग ॥

---

१ शतकर्मन् वि॰ सात्कर्मन् २ यथा मूको ३ अन्यैरहिं॰ वि॰ अ कु ४. असौ वि॰ अ कु ५-५ सम्भजतु इम सङ्ग्राममिन्द्र वि॰ अ कु ६ भवतु वि॰ अ कु ७-७ सर्वाणि बलानि हस्त्यश्वरथादीनि। वाजमन्न वा। अस्माभिर्दत्तमन्नमक्षं सम्भजेत् पिबेदिन्द्र स्तुतिसहस्रयुक्तम्। यस्मिन् विश्वानि बलानि। स पीत सामर्थ्यानि जनयति, यस्मिन् इन्द्रे सर्वाणि पौंस्यानि। यो महाबल इति वा वि॰ अ कु ८ °णोऽसौ मूको ९ बलानि शत्रूणां मा॰ ल १०-१० अस्माकं मनुष्या अभिद्रोह मा कार्षु। मा शरीराणामिन्द्र स्तुतिभिर्भजनीय। यु पृथग्भावे। प्रभु त्वं अपनय अस्मत्त वधं हिंसा हन्तारं वा वि॰ अ कु

[ ६ ]

युञ्जन्ति॑ ब्र॒ध्नम॑रु॒षं चर॑न्तं॒ परि॑ त॒स्थुषः॑ । रोच॑न्ते रोच॒ना दि॒वि ॥१॥

यु॒ञ्जन्ति॑ । ब्र॒ध्नम् । अ॒रु॒षम् । चर॑न्तम् । परि॑ । त॒स्थुषः॑ । रोच॑न्ते । रो॒च॒ना । दि॒वि ॥१॥

स्कन्द० 'योग सम्बन्ध । युञ्जन्ति सम्बन्धयन्ति । केन । सामर्थ्यात् स्तुतिभिर्हविर्भिश्च । के । सामर्थ्यात् स्तोतार यष्टारश्च । ब्रध्नम् महन्नामैतत् (तु निघ ३, ३) । महान्तमिन्द्रम् । अरुषम् रुशतिर्दीप्त्यर्थ । 'रुशद्वत्सा रुशती' (ऋ १, ११३, २) इति प्रदर्शनात् । तस्य वा रोचतेर्वा दीप्तिकर्मण आङ्पूर्वस्येद रूपम् । आङश्च ह्रस्वत्वम् । आरुशम् आरोचमान वा । दीप्तमित्यर्थ । 'अरुपति । आर्यति' (निघ २, १४) इति गतिकर्मसु पाठादरुपतेर्गत्यर्थस्यारुषशब्दो गन्तृवचनो वा । शत्रून् यज्ञान् वा प्रति गन्तारम् । चरन्त परि सर्वतो गच्छन्तम् । यत्र यत्रेन्द्रो गच्छति तत्र तत्रैन स्तोतारो यष्टारश्च स्तुवन्ति यजन्ति चेत्यर्थ । अथवा युञ्जन्तीति युजि शुद्धोऽपि सामर्थ्यात् सोपसर्गार्थे द्रष्टव्य । स्वार्थसिद्धौ स्तोतारो यष्टारश्चैन नियुञ्जते महान्त दीप्त चेन्द्र सर्वतो गच्छन्तम् । यत्र यत्र गच्छति तत्र तत्रैन मनुष्या इदमिद च न कुर्वित्यर्थ याचन्त इत्यर्थ । अथवा रथोऽत्र सामर्थ्याद् युज्यमान । नेन्द्र युञ्जन्ति । इन्द्रस्य रथ ब्रध्नमरुष च सर्वतो गन्तार गच्छन्तम् । के । सामर्थ्यात् सारथयो मातलिप्रभृतय. अन्येऽस्य रथ युञ्जन्ति । [स न स्वय युनक्ति बाह्वादिगुणम् । युञ्जन्ति न किञ्चिदिति] । एव गुणकीर्तनादिन्द्रस्येय स्तुति । किञ्च तस्थुष रोचन्ते रोचना दिवि तस्थुष इति षष्ठीनिर्देशात् प्रभावेनेति वाक्यशेष । स्थितस्य व्याप्रियमाणस्येन्द्रस्य प्रभावेन रोचन्ते दीप्यन्ते रोचना दीप्तिस्वभावकानि नक्षत्राणि दिवि द्युलोके । कथ पुनरिन्द्रप्रभावेन नक्षत्राणि दीप्यन्ते । उच्यते । वक्ष्यते—'इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि' (ऋ १, ७, ३) इति । सूर्यस्य प्रभावश्च सुषुम्नो नाम रश्मि । तत्सम्बन्धाच्चन्द्रमा नक्षत्राणि च दीप्यन्ते । अथवा युजिरुत्पूर्वार्थे अन्तर्णीतण्यर्थश्च द्रष्टव्य । उद्योजयन्त्युत्साहयन्ति वृष्टिकर्माणि ब्रध्नमरुष चेन्द्रम् । किं कुर्वन्तम् । उच्यते । चरन्तम् । परि तस्थुष । परिशब्दो लक्षणे कर्मप्रवचनीय । तस्थुष इत्यनेन च सम्बध्यते । तस्थिवस्शब्द स्थावरवचन । गच्छन्त स्थावराणि प्रति । स्थावरग्रहण चात्र जङ्गमस्यापि प्रदर्शनार्थम् । सोमपानायासुरयुद्धलोलुपतया जङ्गमस्थावरात्मक कृत्स्न जगत् परिभ्रमन्तमित्यर्थ[१] ।

---

१ । युञ्जन्ति स्तुतिभि हविर्भिर्वा तत्कर्तार, सम्बधयन्ति महान्तमिन्द्रम् । 'यद्दोऽमात्रोऽद्भुतो ब्रध्न इतीमे महति श्रुता' । रुश दीप्तौ रुच च । आरुशं आरोचन वा । आङश्च ह्रस्वत्वमरुष दीप्तम् । गन्तारं वा अरुष गतावपि च । शत्रून् यज्ञान् वा प्रति गन्तारम् । चरन्तं गच्छन्तम् । परि सर्वत । यत्र यत्र इन्द्रो गच्छति तत्र तत्र एन स्तोतारो यष्टारश्च स्तुवन्ति यजन्ति च । अथवा एते स्वार्थसिद्ध्यै महान्तमिन्द्रं दीप्त सर्वतो गच्छन्तं नियुञ्जते इति वा । यत्र यत्रेन्द्रस्तत्र तत्र मनुष्या इदमिदं च न कुरु इति याचन्ते । अथवा मातल्यादय इन्द्ररथं युञ्जन्ति बाह्वादिगुणम् । एवञ्चेन्द्रस्तुति । किञ्च तस्थुष स्थितस्य व्याप्रियमाणस्येन्द्रस्य प्रभावेन दीप्यन्ते नक्षत्राणि द्युलोके । स्वभावदीप्तान्येवैतानि इत्यत्र उच्यते 'इन्द्रो दीर्घाय' (ऋ १, ७, ३) इति । सूर्यप्रभवश्च सुषुम्न सूर्यरश्मि । तत्सम्भवात् चन्द्रमा नक्षत्राणि च दीप्यन्ते । अथवा युजि उत्पूर्व अन्तर्णीतण्यर्थश्च । उद्योजयन्ति वृष्टिकर्माणि महान्तं दीप्तमिन्द्रं परितस्थुष परिभ्रमन्तं लक्षणार्थे परि । सोमपानासुरवधश्रद्धया स्थावरजङ्गमात्मकं कृत्स्नं जगत् परिभ्रमन्तम् वि' अ कु ‡ नास्ति साम्यं वि' । [-]. स न स्वयं युनक्ति बाह्वादिगुण, युञ्जन्ति न किञ्चिदिति मूको

र्के उद्योतयन्ति। उच्यते। रोचन्ते रोचना दिवि। एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छन्दावध्याहार्यौ। ये आदित्यरश्मयो रोचन्ते रोचना दिवि ते आदित्यरश्मयो हि प्रावृडारम्भे रसदातारः। ते रसानर्पयन्त उद्योतयन्तीन्द्रं वृष्टिकर्मणि। एतस्मिंस्त्वर्थे रश्मिविषयत्वाद् रोचनेत्येतत् पदमुप्मान्तं न्याय्यं दृश्यते। न स्वरान्तम्। अतो नैष पदकाराभिप्रायः। ज्योतिष्ट्वापेक्षं वा रश्मीनां नपुंसकत्वम्। अध्वर्यवस्त्वादित्यदेवतामृचं मन्यन्ते। कथम्। एतेषां हि [१]विनियोजने 'असौ' इत्युक्तोऽश्वोऽनयाऽऽदित्यरूपेणोच्यते। कथमवगम्यते। श्रुतेः। एवं हि श्रुतिर्भवति[२] 'युञ्जन्ति ब्रध्नमरुषमिति'। असौ वा आदित्यो ब्रध्नोऽरुषः। अमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै' (माश १३ २,६,१) इति। तस्मादादित्यदेवतेयमिति। तत्र। तत्रापि विनियोगवशाद्विधीयमानोऽश्वो ब्रध्नोऽरुषश्चोच्यते। भक्तिमात्रं तु श्रुतिः। अपि च यदि श्रुतिबलात् तत्रादित्यो देवता, तथा भवतु नाम। इह त्वैन्द्रप्रकरणे समाम्नानात् ब्रध्नारुषयोश्चेन्द्रेऽपि सम्भवात् परस्यां चर्चि 'अस्य' शब्देनानुवादात्। तेनेन्द्रादिष्टस्य ब्रध्नस्यान्वादेशात् तस्यां चर्चि हरिसम्बन्धादिन्द्रतायाः असन्दिग्धत्वादैन्द्रत्वमेवास्या ऋच इति ॥१॥

वेङ्कट० युञ्जन्ति महान्तम् आरोचमानं दिवि चरन्तम् परि तस्थिवांसो देवाः वा लोका वा। रोचन्ते च रोचनानि नक्षत्राणीन्द्रतेजसा सन्नुक्षितानि। अभवत्वेऽपि[३] प्रमाणमन्यत्रापि दृष्टम् ॥ १ ॥

मुद्गल० ऐन्द्र्यः। 'आदह' इत्येतां चतुर्थीमारभ्य षडृचो मारुत्यः। तासु मध्ये 'वीळु चित्', 'इन्द्रेण' इत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः।

इन्द्रो हि परमैश्वर्ययुक्तः। परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते। ब्रध्नम् आदित्यरूपेणावस्थितम् अरुषम् हिंसकरहिताग्निरूपेणावस्थितम् चरन्तम् 'वायुरूपेण सर्वतः'[४] प्रसरन्तमिन्द्रम् परि तस्थुषः परितोऽवस्थिताः लोकत्रयवर्तिनः प्राणिनः युञ्जन्ति स्वकीयकर्मणि देवतात्वेन सम्बद्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्तिविशेषभूतानि रोचना नक्षत्राणि दिवि द्युलोके रोचन्ते प्रकाशन्ते ॥१॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा ॥२॥

युञ्जन्ति। अस्य। काम्या। हरी इति। विऽपक्षसा। रथे। शोणा। धृष्णू इति। नृऽवाहसा ॥२॥

स्कन्द० युञ्जन्ति सारथयः अस्य इन्द्रस्य स्वभूतौ काम्या कामयितव्यावुत्कृष्टौ कामसम्पादिनौ[५] वा हरी अश्वौ। विपक्षसा सव्यदक्षिणभेदेन विभिन्नौ रथपक्षौ ययोस्तौ विपक्षसौ। सकारश्छान्दस उपजनः। पर्यायान्तरं वा पक्षश्शब्दो[६] द्रष्टव्यः। रथस्य सव्यदक्षिणपार्श्वस्थावित्यर्थः। क्व युञ्जन्ति। रथे। कीदृशौ। शोणा रक्तवर्णौ। धृष्णू प्रगल्भौ, अभिभवितारौ शत्रूणाम्। नृवाहसा मनुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ[७] ॥२॥

---

१-१. के इन्द्रं योजयन्ति हरी। सूर्यरश्मय आदित्यरश्मयो हि प्रावृडारम्भे अवयन्त उद्योतयन्ति इन्द्रं वृष्टौ। एतदर्थे रोचना इति पदं स्यात्। ज्योतिष्ट्वापेक्षो वा रश्मीनां नपुंसकत्वम्। इयद् आदित्यदेवता वा। एवं श्रुति वि॰ मूको॰ । [illegible] [१] 'ब्रध्नमिन्द्रम्' मास्व॰ वि॰, 'ब्रध्नमिन्द्रम्' मास्व॰. [२] 'ब्रध्नमरुषमित्युक्तश्चो' मूको॰ २ 'नित्यं' मूको॰ ३. अस्त्वेऽपि कु मास्व॰ ४-४ नास्ति मूको॰ ५-५ अस्येन्द्रस्य सारथयः कामयितव्यावुत्कृष्टौ कामसम्पादिनौ वा अश्वौ। विभिन्नौ रथस्य सव्यदक्षिणपार्श्वौ स्थितौ। क॰। रथे। शोणा रक्तवर्णौ। धृष्णू प्रगल्भौ दृप्याभिमानिनौ। नराणां वोढारौ। नृवाहसौ इति वा वि॰ मा॰ कु॰ [६] सैवादिनौ मूको॰ [७] पक्षशब्दो द्र॰ वि॰.

वेङ्कट० युञ्जन्ति अस्य रथे कमनीयौ अश्वौ[1] सव्यदक्षिणयो॰ पार्श्वयोर्युज्यमानौ शोणवर्णौ शत्रूणां धर्षकौ नेतुरस्य वोढारौ देवा॰ ॥२॥

मुद्गल० अस्य इन्द्रस्य रथे हरी अश्वौ सारथयः युञ्जन्ति । कीदृशौ हरी । काम्या कामयितव्यौ । विपक्षसा विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ । रथस्य द्वयो पार्श्वयोर्योजिताविर्त्यर्थ॰ । शोणा रक्तवर्णौ धृष्णू प्रगल्भौ नृवाहसा नृणां पुरुषाणामिन्द्रवत्सारथिप्रमुखानां वोढारौ ॥२॥

के॒तुं कृ॒ण्वन्न॑के॒तवे॒ पेशो॑ मर्या अपे॒शसे॑ । समु॒षद्भि॑रजायथाः ॥३॥

के॒तुम् । कृ॒ण्वन् । अ॒के॒तवे॑ । पेशः॑ । म॒र्याः॒[2] । अ॒पे॒शसे॑ । सम् । उ॒षत्ऽभिः॑ । अ॒जा॒य॒थाः॒ ॥३॥

स्कन्द० [3]"केतु' (निघ ३,९) इति प्रज्ञानाम । प्रज्ञां कुर्वन् । अकेतवे षष्ठ्यर्थे चतुर्थीयम् । प्रज्ञारहितस्य । पेशः रूपनामैतत् (तु निघ ३,७) । रूपं च । हे मर्या । व्यत्ययेनाप्येकवचनस्य स्थाने बहुवचनम् । मर्य ! मर्त्याकार इन्द्र ! अपेशसे रूपवर्जितस्य । प्रज्ञारूपे चात्र प्रदर्शनार्थे । यस्य यद्यदभिलषितं तस्य तत्तत् सम्पादयन्नित्यर्थः । समुषद्भिः सम्‌शब्दः सहार्थे । उपच्छन्दो वश कान्ताविर्त्यस्य कान्तिवचनो न वस , अर्थासम्भवात् । सह कान्तिभिः त्वम् अजायथाः जन्मन एव प्रभृति त्वं सर्वस्य सर्वाभिलषित-सम्पादी कान्तश्चासीरित्यर्थः । अथवा माध्यमिका स्तनयित्नुलक्षणा वाच उषस , ताभि॰ सह त्वमजायथा॰ । जन्मन प्रभृति गर्जितेत्यर्थं[6] ॥३॥

वेङ्कट० रात्रौ स्वपतो गतप्रज्ञस्य [4]प्रज्ञा उदिते इन्द्रे भवति[4] । तमसा[5] तिरोहितरूपाणां गवादीनां रूपं च ज्ञायते । केतुम् कृण्वन् प्रज्ञानरहिताय पेश च अपेशसे सम् अजायथा त्वम् उषोभिः सह । तमिममाश्चर्यं मनुष्याणां निवेदयितुं तान्[6] सम्बोधयन्ति मर्या[7] ! इति ॥३॥

मुद्गल० हे मर्या मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहार॰ । किमाश्चर्यमिति तदुच्यते । आदित्यरूपो-ऽयमिन्द्र॰ उषद्भि दाहकैः रश्मिभिः प्रतिदिनं संभूय अजायथा उदपद्यत । किं कुर्वन् । अकेतवे रात्रौ निद्राभिभूततरेन प्रज्ञानरहिताय प्राणिने । केतुम् कृण्वन् प्रात प्रज्ञान कुर्वन् । अपेशसे रूपरहिताय अन्धकारनिवारणेन पेश रूपमभिव्यज्यमान कुर्वन् ॥३॥

आदह॑ स्व॒धामनु॒ पुन॑र्गर्भ॒त्वमे॑रि॒रे । दधा॑ना॒ नाम॑ य॒ज्ञिय॑म् ॥४॥

आत् । अह॑ । स्व॒धाम् । अनु॑ । पुनः॑ । ग॒र्भ॒ऽत्वम् । आ॒ऽई॒रि॒रे । दधा॑नाः । नाम॑ । य॒ज्ञिय॑म् ॥४॥

स्कन्द० 'पञ्चादह स्वधामिति मारुत्योऽनन्तरा ऋच' (बृदे २,१३९) "सुरूपकृत्नुमित्यैन्द्रमामेधातिथे॰' इत्यैन्द्रत्वे प्राप्तेऽयमपवाद । 'आदह स्वधाम्' इत्येता पञ्चानन्तरा मरुद्देवता । 'वीळु चिदारुजत्नुभि' (ऋ १,६,५) इत्यस्या देवतान्तरोपदेशात् तद्वर्जमन्या पञ्चमारुत्यः प्रतीयेरन् तन्निवृत्त्यर्थमनन्तरव-चनम् । आत् शब्दोऽथशब्दपर्याय आनन्तर्ये । अह इति विनिग्रहार्थीय एवशब्दार्थे । स्वधाम् इति स्वधा-शब्द उदकनाम (तु निघ १,१२) । अनु इति पश्चादर्थे । कस्य पश्चात् । सामर्थ्याद् वृष्टे । एवं सम्बन्ध-योजनाद् वृष्टे पश्चादेवोदकं पुनर्गर्भत्वम् एरिरे ईर गताविर्त्यस्य पथन्तस्येदं रूपम् । गमयन्त्यापादयन्ति मरुत । पुन शब्दश्चातीतसंवत्सरगर्भत्वापादनापेक्ष॰ । एतदुक्त भवति— 'वार्षिकांश्चतुरो मासान्

१. पार्श्वे साम्ब २. तु वैप १,२४६१ a. ३-३. केतुं प्रज्ञा कुर्वन् । षष्ठ्यर्थे चतुर्थी प्रज्ञारहितस्य । पेश॰ रूपञ्च । हे मर्य ! मर्त्याकार इन्द्र ! । अपेशसे रूपवर्जितस्य । यस्य यद्यदभिमतं तस्य तत्तत् सम्पादयन् । समुषद्भि सह कान्तिभि । वश कान्तौ । सम्प्रसारणपक्षे ग्रहिज्यादिना (पा ६, १, १६) । त्वं जन्मन कान्तोऽसि । दृष्टप्रदानेन च । माध्यमिकाभि स्तनयित्नुलक्षणाभि वाग्भि॰ उषआस्यै सह अजायथा । जन्मनः गर्जिता वि[1] अ कु. ४-४. प्रज्ञोदयं कुर्वन् साम्ब कु. ५. तमसो वि[1] रूप. ६. त्वा साम्ब. ७. मर्त्याः साम्ब कु. ८. इतो मूको. ९-९. आत् अथ अह एव । स्वधामुदकमनु पश्चात् अनन्तरम् । वृष्टे पश्चात् अनन्तरम् । वृष्टेः पश्चादेव उदकं पुनर्गर्भत्वमापादयन्ति मरुत॰ । पुन अतीताब्दवृष्ट्यनन्तरम् वि[1] अ कु.

वर्षित्वा तदनन्तरमष्टौ मासास्तदुदकं रश्मिभिः प्रत्याहृत्य तदागामिसंवत्सरे वर्षितुं पुनर्गर्भमापादयन्ति मरुतः, इति। अथवा 'स्वधा' (निघ २,७) इत्यन्ननाम। सस्यलक्षणं चात्रान्नमुच्यते। अनुशब्दश्च पश्चादर्थ एतेन सम्बध्यते। स्वधामनु सस्यलक्षणस्यान्नस्य पश्चात्। सस्य निष्पाद्यानन्तरमेव पुनर्गर्भत्वमापादयन्ति मरुत इत्यर्थः। किम्। सामर्थ्यादुदकम्। किं कुर्वन्तः। उच्यते। दधाना धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा। किम्। नाम तदेवोदकम्। 'नाम' (निघ १,१२) इति ह्युदकनाम पठितम्। कीदृशम् यज्ञियम् यज्ञसम्पादि मरुद्भिर्गृह्यते। अष्टौ मासानन्तरिक्ष आदित्यमण्डले वा धार्यमुदकं गर्भी भवति। अत एवमुच्यते—दधाना नाम यज्ञियं पुनर्गर्भत्वमेरिर इति। अथवा नामशब्दः सञ्ज्ञावचनः। धारयन्तो यज्ञिया सञ्ज्ञाम्। कतमाम्। सामर्थ्यान्मरुत इत्येताम्। मरुन्नामान इत्यर्थः। तथैवमन्यथाऽस्या ऋचोऽर्थयोजना—अनुशब्दः पश्चादर्थे सामर्थ्याद् वृष्ट्यैव सम्बध्यते। स्वधामित्येतत्तु सस्यलक्षणान्नवचनं गर्भत्वमेरिरे इत्येतेन सम्बध्यते। दधाना इत्यपि दधातिर्दानार्थः। नामशब्दोऽप्युदकनाम। एवमेकवाक्यता—वृष्टेः पश्चादनन्तरमेव सस्यलक्षणमन्नं पुनर्गर्भत्वमेरिरे मरुतो ददत उदकं यज्ञसम्पादि[1]। एतदुक्तं भवति—वर्षास्वोषधीर्जनयित्वा न तावतैव कृतार्थीभवन्ति मरुतः[1]। किन्तर्हि[2]। ता एव पुनर्गर्भयन्ति उदकदानेनेति ॥४॥

वेङ्कट० अनन्तरमेव वृष्टेर्मरुतः अन्नार्थं पुनरपि गर्भत्वम् प्राप्नुवन्ति। अष्टौ मासान्[3] तिरोभूता वर्तन्ते वर्षाभ्योऽनन्तरम्। आद्यर्थेऽहशब्दः। दधाना नाम यज्ञार्हम्[4]। 'देवेह चान्यान्[5]' चैताहं[5] च' (तै ४,६,५,५) इत्यादिकम् ॥४॥

मुद्गल० आत् आनन्तर्यार्थे। अह अवधारणे। आदह वर्षर्तोरनन्तरमेव स्वधामनु इतः परं जनिष्यमाणमन्नमनुलक्ष्य मरुतो देवा गर्भत्वम् एरिरे मेघमध्ये जलस्य कर्तारः पर्जन्यं प्रेरितवन्तः। प्रतिसंवत्सरमेव कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशा मरुतः। यज्ञियम् यज्ञार्हं नाम दधाना धारयन्तः ॥४॥

वी॒ळु चि॑दारुज॒त्नुभि॒र्गुहा॑ चिदिन्द्र॒ वह्नि॑भिः। अवि॑न्द उ॒स्रिया॒ अनु॑ ॥५॥
वी॒ळु। चि॒त्। आ॒रु॒ज॒त्नुऽभिः॑। गुहा॑। चि॒त्। इ॒न्द्र॒। वह्नि॑ऽभिः। अवि॑न्दः। उ॒स्रियाः॑।
अनु॑ ॥५॥

स्कन्द० 'एष वीळु चिदिन्द्राय मरुद्भिः सह गीयते' (बृदे २,१४०) न[6] केवलं मरुद्वत्। ऐन्द्रमारुतीय मारुत्यत्र केवलेत्यर्थः। वीळ्यते सस्तम्भकर्मणो वाळु दृढम्। चिच्छब्दोऽप्यर्थे। दृढमपि पर्वतादि आरुजत्नुभिः रुजो भङ्गे। तद्योगलक्षणा चेयं तृतीया। भञ्जद्भिर्मरुद्भिः सह। गुहा चित् गुहायामपि स्थिताः। हे इन्द्र[1] कीदृशैर्मरुद्भिः। उच्यते। वह्निभिः वोढृभिः। अविन्दः लब्धवानसि। काः। उस्रियाः देवानां स्वभूता गाः। अनु पश्चात्। कस्य। सामर्थ्यात् सरमाप्रत्यागमनस्य[7]।

११ गमित्वा कदा भवेत्। मासानष्टौ तदर्थं पुनर्गर्भमापादयन्। मरुतः इति। स्वधा अन्नं वा। सस्यलक्षणं [illegible] भवन्ति पुनर्गर्भत्वं गमयन्ति मरुतः। किं गर्भत्वेन आपादयन्ति। उदकम्। उदकमादित्यमण्डले अन्तरिक्षे वा स्थाप्यम्। उदकं पर्जन्यादि। अथवा नामशब्दो रश्मि नाम। नाम उदकं मरुद्भिः ते धार्यम्। गर्भभावं अत एवमुच्यते। नाम संज्ञा वा। धारयन्तः यज्ञिया संज्ञाम्। मरुन्नामान इत्यर्थः। एवं वा अन्यथा अस्या ऋचः [illegible] पुनर्गर्भत्वमेरिरे इति। इह गर्भः। इतः उदकं पर्जन्यादि वि॰ भ कु २-२. नास्ति वि॰ भ कु ३ मरुत नास्ति कु ४ यज्ञार्हम् नास्ति कु ५-५ इदं चान्याहं एव कु नास्ति ६ एवं तर्हि नास्ति कु नास्ति ७-७ वीळु इत्यत्र। दृढमपि पर्वतादि भञ्जद्भिः मरुद्भिः सह गुहायामपि स्थिताः। इन्द्र। वोढृभिः मरुद्भिः लब्धवानसि। देवानां गा पश्चात् वि॰ भ कु

पणिभिरसुरैरपहृता गा गुहायां निहिता सरमाप्रत्यागमनोत्तरकाल[1] मरुद्भि सह त्वमलभथा इत्यर्थ ॥५॥

**वेङ्कट०** दृढमपि पर्वतसानु[2] आभिमुख्येन भञ्जद्भि पर्वतस्य गुहायामपि इन्द्र ! त्वा वोढृभिर्मरुद्भि त्वं[3] पणिभिरपहृता गा अनु अविन्द ॥५॥

**मुद्गल०** अस्ति किञ्चिदुपाख्यानम्। पणिभिर्देवलोकात् गावोऽपहृता अन्धकारे प्रक्षिप्ता । ताश्चेन्द्रो मरुद्भिस्सहाजयदिति । हे इन्द्र ! वीलु चित् दृढमपि दुर्गम स्थानम् आरुजत्नुभि भञ्जद्भि वह्निभि वोढृभिरन्यत्र नेतु समर्थैर्मरुद्भि[4] सहितस्त्व गुहा चित् गुहायामपि स्थापिता उस्रिया गा अनु अविन्द-अन्विष्य लब्धवानसि ॥५॥

इति प्रथमाष्टके प्रथमाध्याये एकादशो वर्ग ॥

देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ॥६॥

देवऽयन्त । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिर । महाम् । अनूषत । श्रुतम् ॥६॥

**स्कन्द०** देवयन्त[5] देवशब्दोऽत्र प्रकृतान् मरुत एवाह । तानि छन्तो दृश्यन्त । यथा मतिम् मन्यतिरर्चतिकर्मा (तु निघ ३,१४) । मन्यते स्तूयतेऽसाविति मतिरिन्द्र । ज्ञाता या मति विद्वान् ब्राह्मण । यथा सर्वस्तुत्यमिन्द्र विद्वास वा ब्राह्मण तद्वत् । अच्छ निपातोऽयमाप्तुमित्यस्यार्थे आप्तुम् । किम् । विदद्वसुम् विन्दतेर्लाभार्थस्य विदच्छब्द, कर्मसाधनश्च द्रष्टव्य । गणाभिप्राय चैतदेकवचनम् । लब्धधन मरुद्गणम् । गिर तृतीयार्थे प्रथमेयम् । गीर्भि स्तुतिभि महाम् महान्तम् अनूषत नू स्तवने । स्तुवन्ति स्तुवन्तु वा ऋत्विजो मत्पुत्रपौत्रादयो वा । कीदृशम् । श्रुतम् ख्यातम्[5] ॥६॥

**वेङ्कट०** देवानिच्छन्त यथा पूजनीयमिन्द्रम् अभिष्टुवन्ति 'तथाऽभिष्टुवन्ति' विदद्वसुम् वेदयद्वसुम्[6] उदारम् गिर स्तोतार महान्त मरुद्गणमिति[7] ॥६॥

**मुद्गल०** देवयन्त मरुत्सञ्ज्ञकान्[8] देवानिच्छन्त गिर स्तोतार ऋत्विज महाम् प्रौढ मरुद्गणम् अच्छ प्राप्तुम् अनूषत [10]स्तुतवन्त । कीदृश मरुद्गणम् । विदद्वसुम् वेदयाद्भि महिमान प्रख्यापयद्भिर्वसुभि धनैर्युक्तम् श्रुतम् विख्यातम् । मरुद्गणस्य दृष्टान्त—यथा मतिम् मन्तारमिन्द्र यथा स्तुवन्ति तथेत्यर्थ ॥६॥

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ॥७॥

इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मान । अबिभ्युषा । मन्दू इति । समानऽवर्चसा ॥७॥

**स्कन्द०** [11]इन्द्रेणेति सहयोगलक्षणा तृतीया । इन्द्रेण सह त्व मरुद्गण[?] स हि दृक्षसे हिशब्द पदपूरण । सम्यग दृश्यसे । सङ्गच्छमान सङ्गच्छमान तत्र तत्र वृत्रवधादौ कार्य । अबिभ्युषा भयवर्जितेन[11] ।

---

१ °मनकालोत्तर वि[1] अ कु २ °सान्वादि कु ३ त साम्ब, त्वा वि[1] त्वप ४ ४ °मरुद्भि मू को ५ ५ देवा मरुत तानि इच्छन्त देवयन्त । यथा मतिम्। स्तुतौ ज्ञाने वा । सर्वस्तुत्यमिन्द्र विद्वासं विप्रं वा तद्वत । अच्छ आप्तुम्। विदद्वसु लब्धधन मरुद्गणम् । गीर्भि तृतीयार्थे प्रथमा । महा महान्तम । अनूषत स्तुवन्तु । वा ऋत्विज मत्पुत्रादयो वा । श्रुत ख्यातम वि[1] अ कु ६ ६ नास्ति साम्ब कु ७ देवय° वि[1] ८ कर्मग° वि[1] त्वप ९ °सञ्ज्ञका° मे[2] १० स्तुवन्त मूको ११ ११ इन्द्रेण सह त्वं मरुद्गण ! सम्यक् दृश्यसे सगच्छमान तत्र तत्र अद्भुतकर्माणि । अबिभ्युषा भयवर्जितेन वि[1] अ कु

'तस्या एकान्तरायास्तु अर्धर्चोऽन्त्यो द्विदैवत' (बृदे २, १४०)। 'या ऐन्द्रमारुत्युक्ता ऋगेका 'वीळुचित्' इति तस्या एकान्तरा या 'इन्द्रेण स हि' इत्येषा, तस्या अर्धर्चोऽन्त्यो द्विदैवतः ऐन्द्रमारुतः । मन्दू मन्दतेर्मोदनार्थस्यैतद् रूपम् । नित्यप्रमुदितौ समानवर्चसा तुल्यदीप्ती च इन्द्रमरुद्गणौ[1] ॥७॥

वेङ्कट० इन्द्रेण हि 'सदृक्षसे सङ्गच्छमान'[2] अबिभ्युषा मरुद्गण[3] । युद्धार्थं[4] तौ[5] युवाम् इन्द्रमरुद्गणौ मदिष्णू भवथ सयुक्तौ समानवर्चसौ । यद्वा मन्दुना समानवर्चसा इन्द्रेणेति ॥७॥

मुद्गल० हे मरुद्गण ! त्वम् इन्द्रेण सञ्जग्मान सङ्गच्छमान सम् दृक्षसे सम्यग्दृश्येथा खलु । अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः । कीदृशेनेन्द्रेण । 'अबिभ्युषा भयरहितेन' । कीदृशाविन्द्रमरुद्गणौ । मन्दू नित्यप्रमुदितौ समानवर्चसा तुल्यदीप्ती ॥७॥

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥८॥

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥८॥

स्कन्द० 'सर्वत्रैवात्र द्वितीयार्थे तृतीया । अनवद्यान् अगर्ह्यान् । द्युशब्दो दीप्तिवचनः अभिगतदीप्तीन् अत्यन्तदीप्तान् । मखः यज्ञः । सहस्वत् बलवत् सुष्ठ्वित्यर्थः । अर्चति स्तौति । यद्यज्ञे ऋत्विजः स्तुवन्ति, तदिदं यज्ञ एव स्तौतीत्युच्यते । अथवा मखं करोति मखयति । 'तत् करोति' (पाधा ३,१,२६) इति णिच् । ण्यन्तादच् । मखः यज्ञकारी । स स्तौति । कान् । "गणैः गणान् सप्त सप्तकान् । इन्द्रस्य काम्यैः काम्यान् प्रियान् । अथवा अनवद्यैरित्यादिषु तृतीया स्वार्थ एव । तृतीयानिर्देशात्तु युक्त इति च वाक्यशेषः । अर्चतीति व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अनवद्यादिगुणैर्मरुद्गणैर्युक्तो यज्ञः सुष्ठ्वर्च्यते । सुष्ठु अर्च्यन्तेऽत्र मरुतो देवा इन्द्रश्च अतः । यज्ञोऽत्यन्तपूज्य इत्यर्थः[6] ॥८॥

वेङ्कट० 'अनवद्यैः अभिद्योतमानैः सह स्तोता सहस्वन्तमिन्द्रम् अर्चति गणैः इन्द्रस्य प्रियैः । गणशब्दे एकवचनबहुवचने पर्यायेण भवतः[7] ॥८॥

मुद्गल० मखः प्रवर्तमानोऽयं यज्ञः अनवद्यैः दोषरहितैः अभिद्युभिः द्युलोकमभिगतैः काम्यैः फलप्रदत्वेन कामयितव्यैः गणैः मरुत्समूहैः सहितम् इन्द्रस्य इन्द्रम् सहस्वत् बलोपेतं यथा भवति तथा अर्चति पूजयति ॥८॥

अतः परिज्मन्ना गहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ॥९॥

अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि । सम् । अस्मिन् । ऋञ्जते । गिरः ॥९॥

---

१-१ मन्दू नित्यप्रमुदितौ तुल्यदीप्ती च इन्द्रमरुद्गणौ वि[१] अ कु. २ २ °दक्षसे स सङ्ग° साम्य कु. ३ °ब्दुषा कु. °ब्गा साम्य. ४ नास्ति वि[१] अ. ५ वो एप, नास्ति साम्य कु. ६ ६ द्वितीयार्थे तृतीया । अनवद्यैरगर्ह्यान् अभिगतदीप्तीन् । सु दीप्ति वि[१] अ कु. 'यान् [illegible] साम्य', °ध्यान् सुष्टु° साम्य'. ७ ७ गणैः सप्त सप्तकान् मरुद्गणान् । इन्द्रस्य काम्यान् प्रियान् । तृतीया स्वार्थ एव वा । अनवद्यादिगुणैर्युक्तो यज्ञ स्तूयते । कर्मणि कर्तृप्रत्ययः । यत्र मरुतो देवा स यज्ञः अत्यन्तपूज्य वि[१] अ कु. †-† सुष्ठु अत्र मरुतो देवा इन्द्रश्च । यज्ञोऽत्यन्तं पूज्यते मूको. ८-८. नास्ति वि[१] अप

स्कन्द० [1]अत इति मरुद्गणस्थानस्यान्तरिक्षस्य निर्देश । अतोऽन्तरिक्षलोकात् । हे परिज्मन् ! अज गतिक्षेपणयोरित्यस्यैतद् रूपम् । सर्वतोगामिन् [1] मरुद्गण ! आगहि आगच्छ । दिवो वा द्युलोकाद्वा । रोचनात् दीप्तात् । अधिशब्दस्तु आगहीत्येतेन सम्बध्यते धात्वर्थानुवादी च । पादपूरणो वा नार्थान्तर वचन 'अधिपरी अनर्थकौ' (पा १,४,९३) इति । अथवा अधिशब्द सामर्थ्याद्वाऽर्थे । रोचनाद्वा आदित्यमण्डलाद्वेत्यर्थ । किं कारणमागच्छेति । उच्यते । सम् अस्मिन् ऋञ्जते 'ऋञ्जति प्रसाधनकर्मा' (या ६, २१) । आत्मन एवाय परोक्षरूपेण प्रथमपुरुषनिर्देश । अय मधुच्छन्दा नाम ऋषि ऋत्विग् ब्राह्मणाच्छस्याख्योऽस्मिन् यज्ञे समृञ्जते सम्यक् प्रसाधयति उपकल्पयति गिर [1] ॥ ९ ॥

वेङ्कट० [2]अत अन्तरिक्षात् परितो गन्तर्मरुद्गण [1] आगच्छ । आदित्यस्य [3]वा रोचनात् लोकात् । अधि-परी सप्तमीपञ्चम्योरर्थं स्फुटीकुरुत [2] । अस्मिन् [4] मरुद्गणे सम्प्रसाधयति स्तुती, मधुच्छन्दा ॥ ९ ॥

मुद्गल० हे परिज्मन् ! परितो व्यापिन् ! मरुद्गण [1] अत अस्मात् मरुद्गणस्थानादन्तरिक्षात् [5]आगहि अस्मिन् कर्मणि [5] आगच्छ । दिव [6]द्युलोकाद्वा समागच्छ [6] । रोचनादधि दीप्यमानादादित्यमण्डलाद्वाऽऽ-गच्छ । अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि तत सर्वस्मादागच्छेत्यर्थः । किमर्थमागमनमिति, तदुच्यते । अस्मिन् कर्मणि वर्तमान ऋत्विक् गिर स्तुती सम् ऋञ्जते सम्यक् प्रसाधयति [1] । एता स्तुती श्रोतु-मागच्छेत्यर्थ ॥९॥

इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥१०॥

इत । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इन्द्रम् । मह । वा । रजस ॥१०॥

स्कन्द० [7]अत पर यथाप्राप्तमैन्द्रमेव । इतो वा इत्येतस्य सन्निहितवचनस्य [1] पार्थिवात् इत्यनेन व्यवहितेनापि सामानाधिकरण्यम् । इतो वा पार्थिवाल्लोकात् । सातिम् षणु दाने, वन षण सम्भक्तौ इत्यस्य वा । सातिर्दान लाभो वा । ताम् ईमहे याच्ञाकर्माऽयम् (तु निघ ३,१९) । याचामहे । दिव वा द्युलोकाद्वा । अधिशब्दस्तु पदपूरण । क याचामहे । इन्द्रम् नचैताभ्यामेव केवलाभ्याम् । किन्तर्हि । महो वा रजस रजश्शब्दो लोकवचन । महतो लोकाद्वा । कतमस्मात् । महत्त्वात् पारिशेष्याच्चान्तरिक्षात् [7] । यत कुतोऽप्यस्मभ्यमिन्द्रो ददात्वित्यर्थ ॥ १० ॥

वेङ्कट० अत उत्तरमिन्द्र एव देवता । कुत इन्द्र आगच्छतीति न वय जानीम । तमिन्द्रम् अस्या भूमेरागच्छन्त [8] देय धन याचामहे । अपि वा दीप्तात् पार्थिवात् लोकात् । [9]पृथिवीत्यन्तरिक्षनाम (तु निघ १,३) । इन्द्रम् मह वा रजस स्वर्गादिति ॥१०॥

---

१-१ अन अन्तरिक्षात् । परिज्मन् अज गतिक्षेपणयो । हे परिज्मन् सर्वतोगामिन् मरुद्गण ! आगच्छ । दिवो वा द्युलोकाद्वा रोचनाद्दीप्तात् । अधि आगहि । 'अधिपरी अनर्थकौ' । अथवा अधि वार्थे । दिवो वा रोचनात् आदित्यमण्डलाद्वा । समृञ्जते । ऋजि प्रसाधने । ब्राह्मणाच्छंस्याख्य ऋत्विक् मधुच्छन्दा । अस्मिन्यज्ञे सम्यक् प्रसाधयति उपकल्पयति गिर । प्रथमपुरुषप्रयोग परोक्षरूपत्वात् वि [1] अ कु २-२ नास्ति वि [1] लप † नास्ति साम्व कु ३ ततोऽस्मिन् वि [1] ४ ४ नास्ति वि. ५ ५ नास्ति वि मै [1] ६ °साधयति वि. ७ ७ इत पार्थिवात् साति दाने लाभ वा । ता याचामहे दिवो वा द्युलोकाद्वा । कर्मनिदम् । अन्तरिक्ष रज । महत-न्तरिक्षात् वि [1] अ कु † °नस्य वा पार्थि° साम्ब वि [1] ८ °च्छन् वि [1] लप ९ °विम्बन° साम्ब [1].

मुद्गल० इन्द्रम् देवं प्रति सातिम् धनदानम् अधि ईमहे आधिक्येन याचामहे । कस्माल्लोकादिति, तदुच्यते । इतः अस्मादस्मिद्दृश्यमानात् पार्थिवात् पृथिवीलोकाद्वा दिवः वा द्युलोकाद्वा महः महतः मोदात् रजसो वा पश्वादीनां रञ्जकादन्तरिक्षलोकाद्वा । अयमिन्द्रो यतः कुतश्चिदानीय अस्मभ्यं धनं प्रयच्छतित्यर्थः ॥१०॥

इति प्रथमाष्टके प्रथमाध्याये द्वादशो वर्गः ॥

[ ७ ]

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥१॥

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनूषत ॥१॥

स्कन्द० 'इत्' शब्दः एवार्थे । इन्द्रम् एव । गीयन्ते इति गाथा सामानि, तद्वन्तो गाथिनः उद्गातारः । बृहत् तृतीयार्थे द्वितीयेयम् । बृहत्साम्ना, महता वा † साम्ना । इन्द्रम् एव अर्केभिः मन्त्रैः ऋग्लक्षणैः अर्किणः मन्त्रवन्तो होतारः । इन्द्रम् एव वाणीः वाङ्नामैतत् (तु निघ १,११) । तृतीयार्थे चात्र द्वितीया[1] । यजुर्लक्षणैः । अध्वर्यव अनूषत अस्तुवन्[2] ॥ १ ॥

वेङ्कट० इन्द्रम् एव उद्गातारः बृहता साम्ना स्तुवन्ति । इन्द्रम् शस्त्रैः होतारः । इन्द्रम् एव सर्वा गिरः[3] स्तुवन्ति ॥१॥

मुद्गल० 'इन्द्रम्' इति दशर्चं चतुर्थं सूक्तम् । मधुच्छन्दा ऋषिः । इन्द्रो देवता । गायत्रम् । गाथिनः उद्गातारः इन्द्रमित् इन्द्रमेव बृहत् 'त्वामिद्धि हवामहे' (ऋ ६, ४६, १ ) इत्येतस्यामृचि उत्पन्नेन बृहन्नामकेन साम्ना अनूषत स्तुतवन्तः[4] । अर्किणः अर्चनमन्त्रोपेता होतारः अर्केभिः ऋग्रूपैर्मन्त्रैः इन्द्रमेव अनूषत । ये त्ववशिष्टा[5] अध्वर्यवस्ते वाणीः वाग्भिर्यजूरूपाभिः इन्द्रम् अनूषत ॥१॥

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥२॥

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥२॥

स्कन्द० 'इन्द्र एव हर्योः अश्वयोः सचा सह संमिश्लः आ आभिमुख्येन सम्मिश्रयिता । केन । सामर्थ्याद् रथेन । रथे यौगपद्येन नियोक्तेत्यर्थः । कीदृशयोः । वचोयुजा षष्ठीद्विवचनस्यायमाकारः[6] । युज्येथामिति वचनमात्रेण स्वयमेव[7] यौ युज्येते, तौ वचोयुजौ तयोः । अत्यन्तविनीतयोरित्यर्थः[8] । इन्द्र एव वज्री वज्रवान् हिरण्ययः सादृश्यादेष व्यवहारः । हिरण्मयसदृशः दीप्तवर्ण इत्यर्थः[9] ॥ २ ॥

वेङ्कट० एकाकी चरन् इन्द्र एव अश्वयोः[10] सहायभूतः । स एव च[11] संयोजयति[12] उक्तिमात्रेण युज्यमानौ[13] इन्द्रः वज्रवान्[14] हिरण्मयसर्वशरीरः[15] ॥२॥

---

१ १. इन्द्रमेव उद्गातारः । तृतीयार्थे द्वितीया । बृहत् महता साम्ना । इन्द्रमेव अर्कभिः होतारः । अर्कम् ऋग्लक्षणं मन्त्रं तद्वन्तः । इन्द्रमेव । तृतीयार्थे द्वितीया । वाग्भिः वि[1] अ कु † महता साम्ना स्ताव[1] २. स्तुवन्त साम[11] वि[1] ३. नास्ति वि[1] स्प ४. स्तुवन्त सूक्ते ५. अवि[0] मै[1] । ६-६. इन्द्र एवाश्वयोः संमिश्रयिता रथेन । रथयोगादेन नियोक्ता । 'सुपां' (पा ७,१,३९) इत्यनेन षष्ठीद्विवचनस्य अत्र वि[1] अ कु † ºमिश्रयिता स्ताव[11] ७. नास्ति वि[1] अ कु ८-८. तयोस्तु विनीत स्ताव[11] ९-९. वज्रवान् हिरण्मयसदृशः दीप्तवर्णः वि[1] अ कु १०. ºश्वयोरेकाº साम्ब कु ११. नास्ति साम्ब[1] कु १२. ºजयति साम्ब[1] कु १३. युज्यमानौ वि[1] स्प, ºमानौ कु १४. वज्री साम्ब[11] कु १५. हिरण्मº साम्ब कु

मुद्गल० इन्द इत् इन्द्र एव हर्योः अश्वयोः सचा सह युगपत् आ संमिश्लः सर्वतः सम्यग् मिश्रयिता । कीदृशो· र्हर्योः । वचोयुजा इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः । सुशिक्षितयोरित्यर्थः । अयम् इन्द्रः वज्री वज्रयुक्त हिरण्ययः हिरण्मयः सर्वाभरणभूषित· ॥२॥

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत् ॥३॥

इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि । गोभिः । अद्रिम् । ऐरयत् ॥३॥

स्कन्द० अत्रेतिहासमाचक्षते—"वृत्रो महत्तमस्ततान । तेन तमसा वृतं सर्वमन्धमज्ञानं[1] बभूव । तत इन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकार' इति । तदेतदुच्यते—इन्द्रः दीर्घाय आप्रलय-भाविने चक्षसे दर्शनाय आ सूर्यम् रोहयत् सूर्यमारोपितवान् दिवि द्युलोके । किञ्च वि गोभिः अद्रिम् ऐरयत् गोशब्दोऽत्र वज्रवचनः । 'अहन् गवा मघवन्' (ऋ ५,३०,७) इति यथा । 'अद्रिः' (निघ १,१०) इति मेघनाम । वज्रैर्व्यैरयत् प्राणेभ्यो विगमितवान् हतवान् हन्ति वेत्यर्थः । वधार्थ एव सामर्थ्यादीरयतिः । अथवा गोशब्द उदकवचनः । हेतौ च तृतीया । प्रयोजनस्य हेतुत्वविवक्षा । उदकार्थं मेघं हतवान् हन्ति वेत्यर्थः[2] ॥ ३ ॥

वेङ्कट० इन्द्रः मनुष्याणां चिराय दर्शनाय दिवि सूर्यम् आ रोहयत्[3] तेजोभिश्च त्रिविधं वर्षार्थं मेघं प्रेरयति ॥३॥

मुद्गल० अयम् इन्द्रः दीर्घाय प्रौढाय चक्षसे दर्शनाय दिवि द्युलोके सूर्यम् आ रोहयत्, वृत्रासुरेण जगति सम्पादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः । स च सूर्यः गोभिः स्वकीयैः रश्मिभिः अद्रिम् पर्वतप्रमुखं सर्वं जगत् वि ऐरयत् विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवान् ॥३॥

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥४॥

इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥४॥

स्कन्द० "हे इन्द्र वाजेषु युद्धेषु नः अस्मान्[4] अव रक्ष । कीदृशेषु । सहस्रप्रधनेषु प्रधनशब्दोऽत्र न संग्रामनाम । उत्कृष्टवचन. । महान्ति धनानि प्रधनानि निमित्तभूतानि येषां ते सहस्रप्रधनाः । बहून्यल्पधना येत्यर्थः । च शब्दस्तु पदपूरणो वा । श्रुतिसामर्थ्याद्वा अल्पधननिमित्तकेषु चेति शेषः । उग्रः प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यच्छन्दतच्छन्दावध्याहृत्यैकवाक्यता नेया । यस्त्वमुग्रः अन्येन वाऽप्रसह्यः क्रूर इत्यर्थः, स अव इति । कीदृशीभिः उग्राभिः अन्येनाप्रसह्याभिः ऊतिभि· पालनैः[5] ॥ ४ ॥

---

१. येषु मे[1]. २-२. तमस्तान तमोभिरेतान्तरका वृत्राः सर्वोऽन्धमुद्वयोऽभूतरलदिन्द्रम् अहन च ॥ दीर्घतमस्ये नूतं दिवि सूर्यमरोहयत् । इन्द्रः आप्रलयमविने दर्शनाय सूर्यमारोपितवान् दिवि । किच गो. वज्रः । अद्रिः मेघः । वज्रै. मेघं प्राणेभ्यः मगमनीयान् हतवत्या । ईर वधे । गौ· उदकं वा । उदकहेतोः मेघं हन्ति हतवान् वि[1] म मु. † सर्वमधर्म[1] मूको. ३. मेघो[1] वि[1] दर्श. ४-४. इन्द्र युद्धेषु अस्मान् रक्ष बहुमहत्धननिमित्तेषु । च सङ्गात् अल्पधननिमित्तेषु च । यः त्वम् उग्र अनाध. मन्ते. स त्वम् अस्माक. पालनैः नः मर वि[1] म कु. † अस्माकम् साम्ब" वि[1]. म°-१.

वेङ्कट० इन्द्र ! क्षुद्रेषु सङ्ग्रामेषु अस्मान् [1]रक्ष महत्सु च उद्गूर्णे उद्गूर्णे[1] पालने । अस्योत्तरा भूयसे निर्वचनाय ॥४॥

मुद्गल० हे इन्द्र ! त्वम् शत्रुभिरप्रधृष्यस्त्वम् उग्राभि अप्रधृष्याभि ऊतिभि अस्मद्विषयरक्षाभि वाजेषु युद्धेषु न अस्मान् अव रक्ष । तथा सहस्रप्रधनेषु च सहस्रसङ्ख्याकगजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥४॥

इन्द्रं व॒यं म॑हाध॒न इन्द्र॒मर्भे॑ हवामहे । युजं॑ वृ॒त्रेषु॑ व॒ज्रिण॑म् ॥५॥

इन्द्र॑म् । व॒यम् । म॒हा॒ऽध॒ने । इन्द्र॑म् । अर्भे॑ । ह॒वा॒म॒हे॒ । युज॑म् । वृ॒त्रेषु॑ । व॒ज्रिण॑म् ॥५॥

स्कन्द० [1]महाधन सङ्ग्रामनामैतत् (द्र निघ २,१७) । महति सङ्ग्रामे । इन्द्रम् एव अर्भे अल्पनामैतत् (द्र निघ ३,२) अल्पे । क । पूर्वेन निर्देशात् सङ्ग्राम एव । हवामहे आह्वयाम । युजम् युज्यतेऽसाविति युक् सहाय तम् । वृत्रेषु सङ्ग्रामव्यतिरिक्तेष्वपि च शत्रुषु इन्द्रमेव समाह्वयाम वज्रिणम्[2] ॥ ५ ॥

वेङ्कट० इन्द्रम् वयम् महति सङ्ग्रामे हवामहे, इन्द्रम् अल्पे च सहायम् उपद्रवेषु आयुधवन्तम् ॥५॥

मुद्गल० वयम् अनुष्ठातार महाधने प्रभूतधननिमित्ते[1] तम् इन्द्रम् हवामहे आह्वयाम । अर्भे अर्भके स्वल्पेऽपि धने निमित्तभूते सति इन्द्रम् हवामहे । कीदृशमिन्द्रम् । युजम् सहकारिणम् वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणम् वज्रोपेतम् ॥५॥

इति प्रथमाष्टके प्रथमाध्याये त्रयोदशो वर्ग ॥

स नो॑ वृषन्न॒मुं च॒रुं सत्रा॑दाव॒न्नपा॑ वृधि । अ॒स्मभ्य॒मप्र॑तिष्कुतः ॥६॥

स । नः॒ । वृ॒ष॒न् । अ॒मुम् । च॒रुम् । सत्रा॑ऽदावन् । अप॑ । वृ॒धि॒ । अ॒स्मभ्य॑म् । अप्र॑तिऽस्कुत ॥६॥

स्कन्द० [1]न इति तादर्थ्ये चतुर्थीयं वृषन् इत्यनेन सम्बध्यते । अस्मदर्थं वर्षित । यो हि सर्वार्थं वर्षति परं यस्मै मधुच्छन्दोऽर्थम् । तत एवैवमामन्त्रयते नो वृषन्निति । अमुम् चरुम् मेघम् । 'चरु' (निघ १, १०) इति मेघनाम । सत्रादावन् 'सत्रा' (निघ ३, १०) इति सत्यनाम । [सततपर्यायो वा । सत्य सतत वा [illegible] [1] अपावृधि उद्घाटय] । अस्मभ्यम् अस्मदर्थम् । अप्रतिष्कुत स्कुञ् आप्रवणे । आप्रवणमा गमन मवलेगतत्यर्थत्वात् । अन्यनाप्रतिगत अप्रतिष्कुत । युद्धेऽभियुञ्जान अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थ । अत्र च 'स नो वृषन्' इति तच्छब्दान्मन्त्रस्य चास्य प्रत्यक्षकृतत्वाद् 'अप्रतिष्कुत' इत्येतस्या नामन्त्रितत्वाद् यच्छब्दोऽध्याहार्य । यस्त्वमप्रतिष्कुत स अपावृधि[2] ॥ ६ ॥

---

१ १ [illegible] सास्व', [illegible] उद्गूर्णे सास्व[1], 'प्र उद्गीर्ण उद्गीर्णे कु २ २ [illegible] महायम । वृत्रेषु [illegible]व्यतिरिक्तेष्वपि शत्रुषु वज्रयुधमिद्र सदा (सा वि' भ) [illegible] वि' म कु ३ [illegible] ४ ४ [illegible] वर्षित । [illegible] मधुच्छन्दोऽर्थमेव । तत नो वृषन् [illegible] । अमुं मेघम् । [illegible] अपवृधि मेघ[illegible] कुरु । अस्मदर्थमप्रतिगत । [illegible] युद्धार्थं [illegible] न प्रत्यभियुक्तपूर्व । यस्त्वं अप्रतिष्कुत स त्वं [illegible] वि' म कु [illegible] सास्व' [illegible] कुरु सास्व'.

वेङ्कट० सः नः [1]वर्षितः ! अमुम् मेघं[1] महतो दातः[2] ! तेजोभिः अरात्रुधि शत्रुभिरप्रतिशब्दितः[3] अप्रतिष्कुतो[4] वा । 'नः अस्मभ्यम्' इत्यनयोः पूरणमेकम् ॥६॥

मुद्गल० हे सनादावन् ! अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः ! अतो व्रीह्यादिनिष्पत्त्यर्थं हे वृषन् ! वृष्टिप्रदेन्द्र ! नः अस्मदर्थम् अमुम् दृश्यमानम् चरुम् मेघम् अपावृधि उद्घाटय । तथैव अस्मभ्यम् अस्मदर्थम् सः त्वम् अप्रतिष्कुतः प्रतिशब्दरहितः । यद्यदस्माभिर्याच्यते 'तत्र सर्वत्र' नेति प्रतिशब्दं नोच्चारयसीत्यर्थः ॥६॥

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ॥७॥

तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ॥७॥

स्कन्द० 'तुञ्जः' (तु. निघ २,२०) इति न वज्रनाम† । किन्तर्हि । तुञ्जतेर्दानकर्मणः (तु. निघ ३, २०) । तुञ्जो दानम् । दाने दाने । कस्य । सामर्थ्याद् वृष्टेः धनानां वा । ये उत्तरे पूर्वेभ्यः प्रकृष्टतमा मदीयाः स्तोमाः इन्द्रस्य वज्रिणः यच्छन्द्रश्रुतेस्तच्छन्दोऽध्याहार्यः । तैरपि न विन्धे विन्दतेर्लाभार्थस्येदं रूपम् । अहम् अस्य इन्द्रस्य सुष्टुतिम् सुष्ठु स्तुतिम् अशेषगुणप्रकाशनरूपाम् । तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । अथवा अयं 'न विन्ध' इति स्पर्शनार्थो वा । तैरपि न विन्धे न स्पृशामि । अस्य सुष्टुतिम् अशेषगुणप्रकाशनरूपाम् । एतदुक्तं भवति–येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमाः, तेऽपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनसमासाः । किं पुनरन्ये‡ इति[7] ॥७॥

वेङ्कट० दाने दाने उत्तरोत्तरम्[8] । ऋषय एनं स्तुवन्ति । तेषु स्तोमेषु न अस्य अहं दानानुगुणाम् सुष्टुतिम् विन्दामि ॥७॥

मुद्गल० तुञ्जेतुञ्जे यस्मिंस्तस्मिन् फलदातरि देवान्तरे ये स्तोमाः स्तोत्रविशेषाः उत्तरे उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि वज्रिणः वज्रयुक्तस्य इन्द्रस्य सुष्टुतिम् योग्यां शोभनां स्तुतिम् न विन्धे न विन्दामि ॥७॥

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥८॥

वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा । ईशानः । अप्रतिऽस्कुतः ॥८॥

स्कन्द० [10]वृषा वर्षिता इन्द्रः यूथेव वंसगः वंसगो वृषभ उच्यते वननीयगमनत्वात् । स यथा गोयूथानि प्रति उद्रवत् । कृष्टीः मनुष्यान् शत्रून् वा मनुष्यान् प्रति इयर्ति गतिकर्मायम् । गच्छति । ओजसा स्वबलेन ईशानः सर्वस्येश्वरः अप्रतिष्कुतः अप्रत्यागतो युद्धेऽभियुञ्जानः† । अन्येनाप्रत्याभियुक्तपूर्व‡ इत्यर्थः[10] ॥८॥

---

१-१. वर्षितारममुम् साम्ब[1,1]; ०रं मेघममुम् साम्ब[2]. २. नास्ति साम्ब[2]. ३. शत्रुप्र० वि[2] लपं. ४. ०प्रतिष्कृ० साम्ब[2]. ५. श्रुदितम् मै[1]. ६-६. नास्ति मूको. ७-७. तुञ्ज दाने । दाने दाने वृष्टेर्वा धनस्य वा । पूर्वेभ्यः पूर्वेभ्यः प्रकृष्टतराः मदीयाः स्तोमाः ये तैरपि न लभे अहमस्य वज्रिणः इन्द्रस्य सुष्टु स्तुतिम् । वृष्टिधनदाने दाने पूर्वस्मात् पूर्वस्मात् प्रकृष्टतराः स्तुतयः इन्द्रगुणानशेषान्प्रकाशयितुमसमर्थाः । तेनाहं सुष्टु स्तुतिं न विन्धे न स्पृशामि । विन्ध स्पर्शने वा । दानतुष्टस्यापि मम स्तुतयः अशक्ताः । किं पुनरस्य वि[1] अ कु. † न वज्रनाम साम्ब.- ‡ किं पुनरन्येनेति मूको. ८. ०त्तरे कु; ०त्तरम् साम्ब[1]. ९. एवम् साम्ब[2,1] वि[1]. १०-१०. वृषा वर्षिता । वननीयगमनो वृषभो यथा गोयूथानि तद्वत् कृष्टीः मनुष्यान् शत्रून् प्रति गच्छति स्वबलेन सर्वेश्वरः अप्रत्यागतः । वि[1] अ कु. † युद्धे नियु० मूको. ‡ ०नानियुक्त० साम्ब[1].

वेङ्कट० वर्षिता गोयूथानीव[1] वननीयगमन ऋषभ इन्द्रो वीरः युयुत्सून् मनुष्यान् बलेन अभिगच्छति सर्वस्य ईशान अप्रतिकृत ॥ ८ ॥

मुद्गल० वृषा कामानां वर्षितेन्द्र. ओजसा स्वकीयेन बलेन अनुग्रहीतुम् कृष्टी मनुष्यान् इयर्ति प्राप्नोति। कीदृश इन्द्र.। ईशान. समर्थ अप्रतिष्कुत प्रतिशब्दरहित याच्यमानं न परिहरतीत्यर्थ[2]। दृष्टान्तः— वंसगः वननीयगतिर्वृषभो यूथेव गोयूथानि यथा प्राप्नोति तद्वत् ॥ ८ ॥

य एकश्चर्षणीनां वसूनामिरज्यति। इन्द्रः पञ्च क्षितीनाम् ॥९॥

यः। एकः। चर्षणीनाम्। वसूनाम्। इरज्यति। इन्द्रः। पञ्च। क्षितीनाम् ॥९॥

स्कन्द० [3]य एक एक एव चर्षणीनाम् मनुष्याणां ब्राह्मणादीनाम् वसूनाम् धनानां च इरज्यति ऐश्वर्यकर्माऽयम् (तु निघ २,२१) ईष्टे। इन्द्र पञ्च षष्ठ्यर्थे प्रथमैषा। पञ्चानां क्षितीनाम् मनुष्यजातीनां, गन्धर्वाः पितरो देवा इत्येतासाम्। यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्यैकवाक्यता नेया[3] ॥ ९ ॥

वेङ्कट० य एव[4] इन्द्र मनुष्याणां पञ्चानां क्षितीनां निवसताम् गन्धर्वाः पितरो देवा असुरा रक्षांसीति पञ्चत्वम्। तेषां प्रदेयानां[5] धनानाम् ईष्टे। 'पूर्वस्यामृचि वाक्यपरिसमाप्ति'[6] ॥ ९ ॥

मुद्गल० य इन्द्र स्वयम् एक एव चर्षणीनाम् मनुष्याणाम् तथा वसूनाम् धनानाम् इरज्यति ईष्टे। ईश ऐश्वर्ये। स इन्द्र पञ्च निषादपञ्चमानाम् क्षितीनाम् निवासार्हाणां वर्णानामनुगृह्णातीति[7] शेष. ॥ ९ ॥

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः ॥१०॥

इन्द्रम्। वः। विश्वतः। परि। हवामहे। जनेभ्यः। अस्माकम्। अस्तु। केवलः ॥१०॥

स्कन्द० [8]व इति तादर्थ्ये चतुर्थी। यजमानप्रतिनिर्देशश्च। हे यजमाना.! इन्द्रम् युष्मदर्थम् विश्वत सर्वेभ्य परि हवामहे परिशब्दो धात्वर्थानुवादी पदपूरण। आह्वयाम। जनेभ्य 'पञ्चजना। विवस्वन्त.' (निघ २,३) इति मनुष्यनामसु पाठान्मनुष्यनामैतत्। अन्येभ्यो मनुष्येभ्यः। अस्माकम् अस्तु केवल पञ्चम्यर्थे प्रथमैषा। अस्माकं केवलानामस्तु। माऽन्येषां भूत्। क.। सामर्थ्याद् स्तुत्यो यष्टव्यश्च[8] ॥१०॥

वेङ्कट० व इति पञ्चमी। व जनेभ्य सर्वेभ्य एव वयम् इन्द्रम् हवामहे। स अस्माकम् अस्तु असाधारण ॥१०॥

मुद्गल० हे ऋत्विग्यजमाना. विश्वत सर्वेभ्य जनेभ्य. परि उपरि अवस्थितम् इन्द्रम् व युष्मदर्थं हवामहे आह्वयाम.। अत स इन्द्र अस्माकम् केवल. असाधारण अस्तु। इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थ ॥१०॥

इति प्रथमाष्टके प्रथमाध्याये चतुर्दशो वर्गः। द्वितीयोऽनुवाक ॥

---

1. °वानिव वि[?] भ. 2. परिहर्ता° वि. 3-3. य एक एव वृषा धनानां च इष्टे इन्द्र पञ्चानां मनुष्यानामित्येवाम स इन्द्रः स्वामीष्टे वि[?] अ मु. 4. नास्ति सास्व कु. 5. मन्त्र° सास्व'. 6-6 °पदमि° सास्ना° सास्व'; °चर्षणिवाक्यस्य समाप्ति सास्व''', °वाक्यस्य परिस° कु. 7. 'तुष्टी' मूको 8-8. हे यजमाना युष्मदर्थमिन्द्र सोम्य परि हवामहे अन्येभ्यो मनुष्येभ्य। केवल इति प्रथमा षष्ठ्यर्थे। अस्माकमेव केवलानामस्तु। स्तुत्य यष्टव्यश्च वि[?] अ मु. † °मन्येषामभूद् सास्व.

[ ८ ]

'एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥ १ ॥

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥ १ ॥

स्कन्द० आ इत्युपसर्गो भरेत्यनेनाख्यातेन सम्बध्यते । हे इन्द्र ! सानसिम् वन षण सम्भक्तौ । सम्भजनीयम् । रयिम् धनम् । सजित्वानम् सद्भूतानामपि शत्रूणां जेतृ[1] । सदासहम् षह मर्षणे । अभिभवे छन्दसि । सर्वदा चाभिभवितृ[1] । वर्षिष्ठम् वृद्धतमम् अत्यन्तबहु[2] । ऊतये तर्पणायास्माकम् । आ भर आनय । देहीत्यर्थः ॥ १ ॥

वेङ्कट० आहर इन्द्र ! भजनीयम् रयिम् जयशीलपुरुषयुक्तं सदा शत्रूणामभिभवितारं वृद्धतमं रक्षणायास्मभ्यम् ॥ १ ॥

मुद्गल० 'एन्द्र सानसिं रयिम्' इति—दशर्चं प्रथमं सूक्तम् । मधुच्छन्दा ऋषिः । इन्द्रो देवता । गायत्रम् । हे इन्द्र ! ऊतये अस्मद्रक्षार्थम् रयिम् धनम् आभर आहर । कीदृशं रयिम् । सानसिम् संभजनीयम् । सजित्वानम् समानशत्रुजयशीलम् । धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते । सदासहम् सर्वदा शत्रूणामभिभवहेतुम् । वर्षिष्ठम् अतिशयेन वृद्धं प्रभूतमित्यर्थः ॥१॥

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता ॥ २ ॥

नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥ २ ॥

स्कन्द० किं कुरुथ इति[3] उच्यते । नि येन नीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । निपतेन येन[4] धनेन । मुष्टिहत्यया हन्तिर्गत्यर्थः । "मुष्टेर्गमनेन उपांशुप्रहारेणेत्यर्थः"[5] । वृत्रा शत्रून् नि रुणधामहै अपकर्तुं प्रवृत्तान्निवारयामः । त्वोतासः त्वया पालिताः सन्तः । अथवा न्युपसर्गाभ्यासात् तत्सम्बन्धिनो रुणधामहै इत्याख्यातस्याप्यभ्यासः । 'अभ्यासे च भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीय, अहो दर्शनीय इति' (या १०, ४२) । सुन्तु निवारयाम इत्यर्थः । कीदृशेन । अर्वता "अश्वनामैतत् (तु. निघ १,१४) । सामर्थ्यादन्तर्हितमत्वर्थः[6] । अर्ववता अश्वसंयुक्तेन । अथवा अर्वतेर्गतिकर्मण एतद् रूपम् । आत्मनि गतेन स्वायत्तेनेत्यर्थः ॥ २ ॥

वेङ्कट० कीदृशमित्याह— येन धनेन मुष्टिहननेन दारिद्र्याणि वयं निरुन्ध्मः । पादान्तरे[7] पुनः निः प्रयुज्यते । त्वया रक्षिताः । शत्रूंश्च येन अश्वबता[8] नि रुणधामहै तमाहरेति । अस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

मुद्गल० येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण । वृत्रा शत्रून् नि रुणधामहै निरस्तान् करवाम । तादृशं धनमाहरेत्यर्थः । त्वोतासः त्वया रक्षिता वयम् अर्वता अस्मदीयेनाश्वेन निरुणधामहै इत्यनुषङ्गः ॥२॥

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधः ॥ ३ ॥

इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ॥ ३ ॥

---

१. १,८,१ मारभ्य १,१०,२ पर्यन्तं स्कन्द० स्थाने सायणभाष्योद्धार. वि॰ भ. २. जेतारम् कु. ३. °भवितारम् कु. ४. °बहुम् कु. ५. नास्ति सायणे कु. ६. तेन सायणे. ७-७. कुंठे "दर्शनेन" वि॰; °प्रहारेणेत्यर्थः मूको. ८-८. नास्ति वि॰. १°नामैतन्मत्वर्थः कु. ९. पदा° वि॰ द; पदान्तेषु सर्व. १०. नास्ति वि॰ द.

स्कन्द० इन्द्र ! त्वोतास त्वया पालिता वय 'रसद्गुस्ताद् वज्रम् घना घन सुवीर हन्तार'[1] वा शत्रूणाम्। आ ददीमहि गृह्णीयाम। गृहीत्वा जयेम सम् सम्यग् जयेम। युधि युद्धे। कान्। स्पृध स्पर्धितॄन्। अथवा 'स्पृध' (निघ २,१७) इति सङ्ग्रामनाम, त करोति स्पृधयति। ण्यन्तात् क्विप्। स्पृध सङ्ग्रामकारिण इत्यर्थ ॥३॥

वेङ्कट० इन्द्र ! त्वया रक्षिता वयम् हन्तृ आयुधम् आ ददीमहि[2]। सम् जयेम युद्धे स्पर्धितॄन् शत्रून्[3] इति ॥३॥

मुद्गल० हे इन्द्र ! त्वोतास त्वया पालिता वयम्[4] घना घन शत्रुप्रहरणायात्यन्तं दृढम् वज्रम् आयुधम् आ ददीमहि स्वीकुर्म । तेन वज्रेण युधि युद्धे स्पृध स्पर्धमानान् शत्रून् सम् जयेम सम्यग् जयेम ॥३॥

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम्। सासह्याम पृतन्यतः ॥ ४ ॥

वयम्। शूरेभि। अस्तृऽभि। इन्द्र। त्वया। युजा। वयम्। ससह्याम। पृतन्यत ॥४॥

स्कन्द० वयम् शूरेभि शूरै आत्मीयैर्मनुष्यै. अस्तृभि स्तृणाति सामर्थ्याद् हिंसार्थ । अहिंसितै । हे इन्द्र ! त्वया च युजा सहायेन। वयम् सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा। पृतन्यत इत्यनेन सम्बध्यते। अस्माभि सह पृतन्यत सङ्ग्राम कर्तुमिच्छत सासह्याम अत्यर्थं पुन पुनर्वाभिभवेम ॥४॥

वेङ्कट० वयम् शूरै आयुधाना क्षेप्तृभि त्वया च सहायेन अभिभवेम। सङ्ग्राम कर्तुमिच्छत । पुन वयम् इति पूरणम् ॥ ४ ॥

मुद्गल० वयम् कर्मानुष्ठातार शूरेभि शौर्ययुक्तै अस्तृभि आयुधाना प्रक्षेप्तृभिर्भटै[5] सयुज्येमहीति शेष। हे इन्द्र तादृशभटसहिता[6] वयम् युजा सहायभूतेन त्वया पृतन्यत सेनामिच्छत शत्रून् सासह्याम अतिशयेनाभिभवेम ॥४॥

महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः ॥ ५ ॥

महान्। इन्द्र। पर। च। नु। महिऽत्वम्। अस्तु। वज्रिणे। द्यौ। न। प्रथिना। शव ॥५॥

स्कन्द० इन्द्र महान्[7] शरीरेण पर च उत्कृष्टश्च सर्वतो गुणै । नु इति पदपूरण । महित्वम् महत्त्व चैतत् सर्वदा अस्तु वज्रिणे इन्द्राय इत्येतद् 'इन्द्रायाशास्महे[8]। द्यौर्न नशब्द उपरिष्टादुपचार सर्वत्रो पमार्थो, द्युलोक इव च। प्रथिना प्रथिम्ना विस्तीर्णत्वेन। शव इन्द्रस्य बल सेनालक्षणम्। यथा द्यौ विस्तीर्णा तद्वद् विस्तीर्णमित्यर्थ ॥ ५ ॥

वेङ्कट० महनीय.[9] इन्द्र तारकश्च[10] शत्रूणाम्। तस्मै सदा महित्वम् अस्तु इति स्वयमाशास्ते । द्यौ इव विस्तीर्णतया बलमस्य भवति ॥ ५ ॥

मुद्गल० अयम् इन्द्र महान् शरीरेण प्रौढ पर च गुणैरुत्कृष्टोऽपि। नु किञ्च। वज्रिणे वज्रयुक्तायेन्द्राय महित्वम् पूर्वोक्त द्विविधमाधिक्य सर्वदा अस्तु। भक्त्या प्रार्थनमेतत्। किञ्च[11] द्यौर्न द्युलोक इव शव बलम् इन्द्रस्य सेनाख्यम् प्रथिना पृथुत्वेन [12]युज्यतामिति शेष[12] ॥५॥

इति प्रथमाष्टके प्रथमाध्याये पञ्चदशो वर्ग ॥

---

१ सद्रु° माभ वि°. २ हन्ता माभ वि°. ३. आ°र्धमहि एप. ४ नास्ति साअ°. ५ नास्ति मूको. ६ °भट°° मूको. ७ नास्ति माभ°१. ८. इन्द्रायाशा° वि°. ९ महनी° वि° एप. १० °तार° वि°, घा बाधार्या वृत्ति (द्र वेर १, २४९८ [ ) ११ नास्ति वि. १२-१२ युज्मिम् मै°.

समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवः ॥ ६ ॥

सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धियाऽयवः ॥ ६ ॥

स्कन्द० समोहे (निघ २,१७) इति सङ्ग्रामनाम । वा शब्दोऽप्यर्थे[1] समुच्चये । परापेक्षया च समुच्चयः । ये[2] सङ्ग्रामेषु च आशत व्याप्नुवन्ति । कम् । प्रकरणादिन्द्रम् । केन । सामर्थ्यात् स्तुतिभिः । इन्द्रं स्तुवन्तीत्यर्थः । नरः मनुष्याः तोकस्य अपत्यनामैतत् (तु. निघ २,२) । अपत्यस्य च । सनितौ सम्भक्तौ लाभे । विप्रासः मेधाविनः । वा धियायवः वाशब्दः परस्ताद् द्रष्टव्यः । धियायवो वा प्रज्ञाकामाश्चेत्यर्थः । किम् तेषामिति साकाङ्क्षत्वाद् वाक्यस्य निराकाङ्क्षीकरणार्थम् । ते[3] यथास्वमभिलषितं लभन्त इति वाक्यशेषः । अथवा समोहे वा य इत्यत्रैव "यच्छ्रुतेः योग्यार्थक्रियाध्याहारः[4]", तच्छब्दाध्याहारश्च । सङ्ग्रामे य इन्द्रं स्तुवन्ति ते आशत व्याप्नुवन्ति मनुष्याः । किम् । सामर्थ्यात् [5]यज्ञम् । तत्र[5] यजन्तः तोकस्य सनितौ धियायवश्च प्रज्ञाकामाश्च[6] ॥ ६ ॥

वेङ्कट० सङ्ग्रामजिगीषया ये एनं युद्धे आप्नुवन्ति मनुष्याः, अपत्यस्य वा भजनार्थम्, ये वा प्राज्ञाः कर्मकामाः[7] । उत्तरत्र सम्बन्धः ॥ ६ ॥

मुद्गल० ये नरः समोहे संग्रामे तोकस्य अपत्यस्य सनितौ वा लाभे वा आशत व्याप्तवन्तः । इन्द्रस्तुत्येति शेषः । वा अथवा विप्रासः मेधाविनः 'धियायवः प्रज्ञाकामाः' सन्तः आशत । ते सर्वे लभन्ते इत्यध्याहारः ॥६॥

यः कुक्षिः सोमपातमः समुद्रइव पिन्वते । उर्वीरापो न काकुदः ॥ ७ ॥

यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते । उर्वीः । आपः । न । काकुदः ॥ ७ ॥

स्कन्द० यः इन्द्रस्यावयवभूतः कुक्षिः आकारैकदेशः । सोमपातमः अतिशयेन सोमानां पाता । यच्छब्द-श्रुतेस्तच्छब्दोऽध्याहार्यः । स समुद्रइव पिन्वते पिविरिह[8] सेचने । कर्मणि चायं व्यत्ययेन । यथा नदीभिः समुद्रस्तद्वत् पिन्वते सिच्यते अस्माभिः । केन । सामर्थ्यात् सोमेन । उर्वीः आपः न द्वितीयेय-मुपमा । तृतीयार्थे चात्र प्रथमा । बह्वीभिरद्भिरिव च । काकुदः काकुदं ताल्वित्याचक्षते । व्यत्ययेन चात्र पुंलिङ्गता । यथा तृषितस्य कस्यचिद् बह्वीभिरद्भिस्तालु सिच्यते, तद्वदित्यर्थः । केचित्तु यास्कं काकुदमत्रोपमानमित्याहुः । तद्व्यतिरेकेण बह्वीभिः सिच्यते यस्मात्तस्यापामधिदैवतत्वात् ॥ ७ ॥

वेङ्कट० तेभ्यः सोमेभ्यस्तांस्तान् कामान् यः अस्य कुक्षिः अतिशयेन सोमस्य पाता[10] समुद्रइव सदाऽक्षीणः उद्गमयति । सः कुक्षिः बहूनि उदकानि पिबन् तालु इव भवति । तद्धि निष्ठीवनेऽपि न शुष्यतीति ॥७॥

मुद्गल० यः कुक्षिः अस्येन्द्रस्योदरप्रदेशः सोमपातमः अतिशयेन सोमस्य पाता । स कुक्षिः समुद्रइव पिन्वते वर्धते । 'काकुदः मुखसंबन्धिन्यः उर्वीः' बह्वाः आपः न जलानीव । जिह्वामध्यन्धम् आस्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितः न शुष्यतीत्यर्थः ॥७॥

---

१. अप्यर्थे माष; उभयः कु. २. नास्ति माष वि.[1] ३. तेषाम् माष वि[1]. ४-४. °तत्तदेना-योग्यार्थाध्या° माष. ५. यज्ञ कु. ६. प्रज्ञाः माष वि[2]. ७. कर्मभिस्तं दुर्गमुभस्ता वानाः वि[1] लपं. ८-८. प्रदिशम् मं[1]. ९. पिविरि कु. १०. पातमः माष कु.

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥ ८ ॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥ ८ ॥

स्कन्द० एवशब्द एवमित्यस्यार्थे । 'पक्वा शाखा न' इत्येतस्माच्च परो द्रष्टव्य । हि-शब्दस्तु पदपूरण । अस्य इन्द्रस्य सूनृता सर्वकामधुक । इन्द्रस्य स्वभूता धेनु सूनृताऽत्रोच्यते । सा विरप्शी रप रूप व्यक्तायां वाचि इत्यस्य क्रियाशब्दोऽयम् न महन्नामैतत् । महीत्यन्यस्यात्र महन्नाम्नो विद्यमानत्वात् सूनृतासामानाधिकरण्याच्च अस्य स्त्रीप्रत्ययान्तत्वात् । 'विरप्शिने वज्रिणे'* (ऋ ६,३२,१) इत्यादिप्रयोगदर्शनाच्च इन्प्रत्ययान्तस्य महन्नामसु पाठात् (तु निघ ३, ३) । विरपणशीला शब्द कारिणी । गोमती 'अथाप्यस्या ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या २,५) इत्येव पयोऽत्र गो शब्देनोच्यते । 'गोभि श्रीणात (ऋ ९,४६,४) इति यथा । पयस्वती । मही महती । पक्वा शाखा न इव[1] । पक्वानि फलानि यस्या सा शाखैव पक्वेत्युच्यते । नशब्दश्चोपमार्थीय अन्यत्रोपमानोपमेयगत-धर्मप्रतिनिर्देशार्थयोर्यथा एवमित्येतयोरप्यर्थे वर्तते । 'अग्निर्न ये' (ऋ १०,७८,२) । यथा 'अग्नि एव' भ्राजसा रुक्मवक्षस इत्यर्थ । इह त्वेवशब्दस्य श्रुतत्वाद् यथाशब्दमात्रार्थे । उपमानोपमेययोश्च सूनृताशाखयो साधारणधर्मापेक्षत्वात् तत्सामर्थ्ययोग्यपदाध्याहार । यथा पक्वा शाखा रसबिन्दु क्षरत्येव क्षरति । किम् । सामर्थ्यात् पय । सर्वकामान् । पयस्वती हि सा सर्वकामधुक । कस्मै क्षरति । दाशुषे पद्यर्थे एषा चतुर्थी । दाशुषे यजमानस्यार्थाय । अथवा सूनृता गर्जितलक्षणा वाक । गोमती माध्यमिका आपोऽत्र गाव उच्यन्ते । 'यस्य गा अन्तरश्मन ' (ऋ ६,४३,३) इति यथा । तद्वती । सा च पक्वेव शाखा क्षरति । किम् । सामर्थ्यात् पय [2]दवते ॥ ८ ॥

वेङ्कट० एवम् हि अस्य वाक विविधरवणा[3] पशुमती महती पक्वफलशाखा इव यजमानाय भवति ॥ ८ ॥

मुद्गल० अथ इन्द्रस्य सूनृता [4]प्रियसत्यरूपा वाक दाशुषे हविर्दत्तवते[5] यजमानाय तदर्थम् एव हि एव खलु अनन्तरपदवक्ष्यमाणगुणोपेता भवतीत्यर्थ । कीदृशी । विरप्शी विविधगुणोपेतवाक्ययुक्ता[6] बहु-विधोपचारवादिनीत्यर्थ । गोमती बह्वीभिर्गोभिरुपेता गोप्रदेत्यर्थ । अत एव मही महती पूज्या । दृष्टान्त । पक्वा शाखा न यथा बहुभि पक्वै फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत् ॥८॥

एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित्सन्ति दाशुषे ॥ ९ ॥

एव । हि । ते । विऽभूतय । ऊतय । इन्द्र । माऽवते । सद्य । चित् । सन्ति । दाशुषे ॥ ९ ॥

स्कन्द० एव इत्येरमर्थे प्रकृते सूनृतापेक्षश्च । हि इति पदपूरण । "यथा सूनृतैव" ते तव स्वभूता विभूतय ऐश्वर्याणि ऊतय पालनानि च हे इन्द्र । मावते सद्यश्चित् सन्ति दाशुषे माशब्दोऽत्र "माच्छन्द प्रमाच्छन्द"[7] (मा १४,१८, तै ४,३,७,१) इति छन्द शब्दसामानाधिकरण्याच्छन्दोविशेषवचन । तद्वान मावान्[8] । मत्सदृशो वा । वतुप्रकरणे[10] युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' (पावा ५,२,३९) इति । मावते दाशुष इति चोभयत्र तादर्थ्ये चतुर्थी । चिच्छब्द एवार्थे । छन्दोविशेष-वतो मत्सदृशस्य वा यजमानस्यार्थाय सन्ति भवन्ति । यद्वैव मत्सदृशो यजमान स्वार्थायार्थयते, तद्वैव तदर्था भवन्ति ॥ ९ ॥

---

१ एव मूको । २-२ नास्ति साम्ब वि[1] । ३ दधते मूको । ४ °रवणा साम्ब कु । ५-५ मुदितम् मै[1] । ६ °वाक्ययु° वि मै[1] । ७-७ यथैवम् साम्ब वि[1] । ८-८ मच्छन्द प्रच्छन्द साम्ब वि[1] । ९ मानि कु । १० मतुप्र° साम्ब वि[1]; वतुप्र° कु, °रणेषु साम्ब[1] ।

45644

वेङ्कट० एवम् हि ते विभूतयः[1] रक्षणानि च मत्सदृशाय यजमानाय सद्यएवमेव भवन्ति[2] ॥ ९ ॥

मुद्गल० हे इन्द्र! ते तव विभूतयः ऐश्वर्यविशेषाः एव हि एवंविधाः खलु। किंविधा इति। तदुच्यते। मावते मत्सदृशाय दाशुषे हविर्दत्तवते यजमानाय ऊतयः त्वदीयरक्षारूपाः सद्यश्चित् सन्ति यदा कर्म अनुष्ठितं तदैव भवन्ति ॥९॥

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या। इन्द्राय सोमपीतये ॥१०॥

एव। हि। अस्य। काम्या। स्तोमः। उक्थम्। च। शंस्या। इन्द्राय। सोमऽपीतये ॥१०॥

स्कन्द० 'एव इत्येवमित्यर्थे। अस्य तथैव कमनीये[3] स्तोमः उक्थम् च स्तोत्रं च शस्त्रं च शंस्या आ[4]सोमाप्तेः शंसनीये। किमर्थम्। अस्मै एव इन्द्राय सोमपीतये। सोमाप्त्युत्तरकालं [5]कथमयमिन्द्रः सोमं पिबेदित्येवमर्थमित्यर्थः।[5] ॥ १० ॥

वेङ्कट० 'यथाहमस्याऽशंसिषमेवम्' अस्य कमनीये स्तोत्रशस्त्रे शंसनीये सोमपानार्थम् इन्द्राय। विरस्याभिधानात् षष्ठीचतुर्थ्यौ सङ्गच्छेते। अर्थाभेदादित्यपरे इति[6] ॥१०॥

मुद्गल० अस्य इन्द्रस्य स्तोमः सामसाध्यं स्तोत्रम् उक्थम् च ऋक्साध्यं शस्त्रमपि एव हि एते उभे एवंविधे खलु। किंविधे इति। तदुच्यते। काम्या कामयितव्ये शंस्या ऋत्विग्भिश्शंसनीये। किमर्थं शंसनमिति। तदुच्यते। इन्द्राय सोमपीतये[7] इन्द्रस्य सोमपानार्थम् ॥१०॥

इति प्रथमाष्टके प्रथमाध्याये षोडशो वर्गः ॥

[९]

21-3-70

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा ॥ १ ॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्वऽभिः। महान्। अभिष्टिः। ओजसा ॥ १ ॥

स्कन्द० हे इन्द्र! आ इहि आगच्छ। आगत्य च मत्सि मन्दस्व तृप्य[8]। अन्धस 'अन्धः'(निघ २,७) इत्यन्ननाम। तृतीयार्थे चेयं षष्ठी। अन्नेन। कतमेन। विश्वेभिः सोमपर्वभिः सर्वैः सोमविशेषैः। यानि स्वर्दर्शमभिषुतानि सोमाख्यस्यान्नस्य पर्वाणि, तैः सर्वैरित्यर्थः। अथवा सोममयानि पर्वाणि येषां ते सोमपर्वाणः देवाः। यो हि यदाहारो भवति, तस्य तन्मयानि पर्वाणि भवन्ति। सोमाहाराश्च देवाः। सहयोगलक्षणा चात्र तृतीया। तृप्य[9] सोमलक्षणेनान्नेन सर्वैः सोमाहारैर्देवैः सहेत्यर्थः। किं कारणम्। उच्यते। यस्मात् महान् त्वं वीर्येण शरीरेण वा। अभिष्टिः [10]अभ्येषणशीलश्च शत्रूणाम्। अभियष्टव्यो वा। केन हेतुना। ओजसा बलेन बलवत्त्वादित्यर्थः। अथवा यस्त्वं महानभिष्टिश्च स मत्सीत्येवं यच्छब्दतच्छब्दाध्याहारेणैकवाक्यता योज्या ॥ १ ॥

वेङ्कट० इन्द्र! आगच्छ माद्य च अन्नेन विश्वैः सोमलक्षणैरभिषुतैः महान् बलेन शत्रूणामभ्येषणशीलः[11] ॥ १ ॥

---

१. ०तये सायण०. २. ०न्ति सायण०; भवतीति कु. ३-३. ०तथैव कमनीये. मूको; कमनीयः कु. ४. ०स्तोत्रः मूको. ५-५. ०मिन्द्र! तेन विवेचन सायण वि०. ६-६. यथा ०य शंसि० सायण०; ०सायण०; यथा ०शंसि० वि० ०; यथा ०गि० कु. ७. ०पातिनि सायण ह. ८. तृप्यस्व सायण० कु. ९. तृप्यस्व कु. १०. अभ्येषण० सायण वि०. ११. ०णशीलः सायण कु.

मुद्गल० 'इन्द्रेहि' इति दशर्चं द्वितीयं सूक्तम् । मधुच्छन्दा ऋषिः । इन्द्रो देवता[1] । गायत्रम् । हे इन्द्र ! एहि अस्मिन् कर्मण्यागच्छ । आगत्य च विश्वेभिः सर्वैः सोमपर्वभिः सोमरसरूपैः अन्नैः अन्धोभिरन्नैः मत्सि माद्य हृष्टो भव । 'ततः ऊर्ध्वम् ओजसा बलेन महान् भूत्वा अभिष्टिः शत्रूणामभिभविता भवेति शेषः ॥ १ ॥

एमे॑नं सृजता सु॒ते म॒न्दिमिन्द्रा॑य म॒न्दिने॑ । चक्रिं॒ विश्वा॑नि॒ चक्र॑ये ॥ २ ॥

आ । ई॒म् । ए॒न॒म् । सृ॒ज॒त॒ । सु॒ते । म॒न्दिम् । इन्द्रा॑य । म॒न्दिने॑ । चक्रि॑म् । विश्वा॑नि । चक्र॑ये ॥ २ ॥

स्कन्द० आ इत्युपसर्गं सृजत[2] इत्याख्यातेन सम्बन्धयितव्यः । ईम् इति पदपूरणः । एनम् सोमम् आ सृजत सृजतिरत्र दानार्थः । आ[3] इत्येष नि इत्येतस्य स्थाने[3] । विसृजत[4] इत्युच्यते । अध्वर्यूणां चायं प्रैषः । दत्त यूयमध्वर्यवः । सुते द्वितीयार्थे सप्तमीयम् । अभिषुतम् । अथवा सुत इति स्वार्थ एव सप्तमी । सृजतिस्तु प्रक्षेपणार्थः । प्रक्षिपतैनं सोममन्यस्मिन्[5] 'ग्रहचमसस्थे सोमे'[6] । पुनरभ्युन्नयतेत्यर्थः । कीदृशम् । मन्दिम् तर्पयितारम् । कस्मै । इन्द्राय सम्प्रदाने तादर्थ्ये वा[7] चतुर्थीयम् । इन्द्राय दत्त, इन्द्राय वाभ्युन्नयत । कीदृशाय । मन्दिने तर्पयित्रे तर्पयितव्याय वा । कीदृशम् । चक्रिम् ताच्छील्येऽयं क्रिन् । स्वकार्यकरणशीलम् । कीदृशाय । विश्वानि चक्रये सर्ववृष्ट्यादिकर्मकरणशीलाय ॥२॥

वेङ्कट० आ सृजत एनम् सोमम् सुते । ईम् इति पदपूरणम्[8] । तर्पयितारम् इन्द्राय तर्पयित्रे । विश्वस्य कर्मणः कर्तारम्[9] । विश्वानि कर्माणि चक्रये 'न लोकाव्यय॰' (पा २,३,६९) इति [10]प्रतिषिद्धा षष्ठी[10] ॥२॥

मुद्गल० ईम् इत्यनर्थकः पादपूरणाय प्रयुक्तः । हे अध्वर्यवः ! सुते अभिषुते चमसस्थे सोमे एनम् सोमम् इन्द्राय इन्द्रार्थम् आ सृजत पुनरभ्युन्नयत । शुक्रामन्थिचमसगणेषु[11] पुनरभ्युन्नयत । कीदृशमेनम् । मन्दिम् हर्षहेतुम् । चक्रिम् साधुकरणशीलम् । कीदृशायेन्द्राय । मन्दिने हर्षयुक्ताय । विश्वानि सर्वाणि कर्माणि चक्रये कृतवते ॥२॥

मत्स्वा॑ सुशिप्र म॒न्दिभि॒: स्तोमे॑भिर्विश्वचर्षणे । सचै॒षु सव॑ने॒ष्वा ॥ ३ ॥

मत्स्व॑ । सु॒ऽशि॒प्र॒ । म॒न्दिऽभि॑: । स्तोमे॑भिः । वि॒श्व॒ऽच॒र्ष॒णे॒ । सचा॑ । ए॒षु । सव॑नेषु । आ ॥३॥

स्कन्द० मत्स्व मोदस्व तृप्यस्व वेत्यर्थः । हे सुशिप्र ! 'शिप्रे हनू नासिके वा' (शा ६,१७) । सुहनो[12] सुनस ! वा । कीदृशैः । मन्दिभिः मोदयितृभिः स्तावकैर्वा । कैः । स्तोमेभिः स्तवनैः । हे विश्वचर्षणे ! पश्यतिकर्मायम् । सर्वस्यापि द्रष्टः ! सचा सह । केन । सामर्थ्यात् स्वसखीभर्मरुद्भिः[13] । क । एषु सवनेषु 'सवनम्' (निघ ३,१७) इति यज्ञनाम । एतेषु यज्ञेषु प्रातस्सवनमाध्यन्दिनतृतीयसवनेषु वा । आकारः पदपूरणः ॥३॥

वेङ्कट० मन्दस्व सुहनो[14] ! मादयितृभिः स्तोत्रैः सर्वस्य द्रष्टः ! सहास्माभिः एषु सवनेषु । आकारः सहार्थं स्पष्टीकरोति ॥ ३ ॥

१. नास्ति त्रि २ गृह्णीयात्° त्रि[1] ३ ३ [पु स्क भा या १,१०] केचित्त्वेति इत्यदि सृजतौ युध्यते माम्ब त्रि[1] ४ नास्ति कु ५ °ममभि° कु ६ ६ °चमसे मनुष्ये माम्ब वि[1] ७ नास्ति माम्ब ८ सामर्थ्यं, पूरणम् माम्ब कु ९, °तार माम्ब कु १०-१० षष्ठी प्रतिषिद्धा माम्ब कु. ११. °षु °षु मूको १२ °निर्मितभि माम्ब त्रि[1] १३ स्मानखी° कु, स्मसखी° माम्ब[1], स्वसखीभि° माम्ब[1] त्रि[1] मूको १४ सुहनो माम्ब

**मुद्गल०** हे सुशिप्र शोभनहनो ! तादृश ! हे इन्द्र ! मन्दिभिः हर्षहेतुभिः स्तोमेभिः स्तोमैः स्तोत्रैः मत्स्व हृष्टो भव। हे विश्वचर्षणे ! सर्वमनुष्ययुक्त ! सर्वैर्यजमानैः पूज्य ! इत्यर्थः। तादृशेन्द्र ! त्वम् एषु यागगतेषु त्रिषु सवनेषु सचा देवैरन्यैः सह आ गच्छेति शेषः ॥३॥

## असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। अजोषा वृषभं पतिम् ॥ ४ ॥

असृग्रम्। इन्द्र। ते। गिरः। प्रति। त्वाम्। उत्। अहासत। अजोषाः। वृषभम्। पतिम् ॥४॥

**स्कन्द०** असृग्रम् सृष्टवानहम्। हे इन्द्र ! ते तव गिरः स्तुतीः। ताश्च सृष्टाः सत्यः प्रति त्वाम् उत् अहासत ओहाङ् गतौ। स्वर्ग्यवस्थितं त्वां प्रतीतो लोकादूर्ध्वं गताः। अजोषाः सेवितवानसि। कीदृशं त्वामुदहासत। वृषभम् वर्षितारं पतिम् स्वामिनं सर्वस्य ॥४॥

**वेङ्कट०** [1]असृजम् इन्द्र ! ते स्तुतीः। सृष्टाश्च ताः त्वाम् प्रत्युदगच्छन्[2]। त्वञ्च सेवितवानसि स्तुतीनां वर्षितारं मां स्तोमानामीश्वरम् ॥ ४ ॥

**मुद्गल०** हे इन्द्र ! ते गिरः त्वदीयाः स्तुतीः असृग्रम् सृष्टवानस्मि। ताश्च गिरः स्वर्गेऽवस्थितम् त्वाम् प्रति उदहासत उद्गत्य प्राप्नुवन्। तादृशीर्गिरः त्वम् अजोषाः सेवितवानसि। कीदृशं त्वाम्। वृषभम् कामानां वर्षितारम् पतिम् यजमानानाम् पालयितारम् ॥४॥

## सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम्। असदित् ते विभु प्रभु ॥ ५ ॥

सम्। चोदय। चित्रम्। अर्वाक्। राधः। इन्द्र। वरेण्यम्। असत्। इत्। ते। विऽभु। प्रऽभु ॥ ५ ॥

**स्कन्द०** सम् चोदय प्रेरय चित्रम् अर्वाक् अस्मान् प्रति। अस्मभ्यं देहीत्यर्थः। किम्। राधः धनम्। हे इन्द्र ! कीदृशम्। वरेण्यम् वरणीयम् अत्यन्तोत्कृष्टम्। किं कारणम्। उच्यते। असत् इत् लडर्थेऽयं पञ्चमो लकारः। इच्छब्दोऽपि यस्मादर्थे। अस्ति यस्मात् ते तव विभु प्रभु विभूतं च प्रभूतं च धनम्। यावता कार्यं साध्यते, तद् विभु। ततोऽतिरिक्तं प्रभु। यस्मादत्यन्तप्रभूतधनोऽसीत्यर्थः ॥५॥

**वेङ्कट०** सम् प्रेरय पूजनीयं धनम् अस्मदभिमुखम् इन्द्र ! वरणीयम्। अस्ति हि ते विभु च प्रभु च धनम् ॥५॥

**मुद्गल०** हे इन्द्र ! वरेण्यम् श्रेष्ठम् राधः धनम् चित्रम् [1]मणिमुक्तादिरूपेण बहुविधम् अर्वाक्[1] अस्मदभिमुखं यथा भवति तथा सम् चोदय सम्यक् प्रेरय। भोगाय यावत्पर्याप्तं तावद्विभुशब्देनोच्यते। ततोऽप्यधिकं प्रभुशब्देन। तादृशं धनम् ते असत् इत् अस्त्येव। [2]तस्मादस्मभ्यं प्रयच्छेत्यर्थः[2] ॥५॥

इति प्रथमाष्टके प्रथमाध्याये सप्तदशो वर्गः ॥

## अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः। तुविद्युम्न यशस्वतः ॥ ६ ॥

अस्मान्। सु। तत्र। चोदय। इन्द्र। राये। रभस्वतः। तुविऽद्युम्न। यशस्वतः ॥ ६ ॥

**स्कन्द०** अस्मान् सुष्ठु तत्र चोदय हे इन्द्र ! राये धनार्थम्। क्व[4]। सामर्थ्याद् यत्र गते धनं लभ्यते। कीदृशान्। रभस्वतः क्षिप्रानित्यर्थः[5]। तुविद्युम्न ! 'तुवि' (निघ ३,१) इति बहुनाम। द्युम्नं धनं वा यशो वा अन्नं वा। बहुधन ! बहुयशः ! बह्वन्न ! वा। यशस्वतः 'यशः' (निघ २,७) इत्यन्ननाम। हविर्लक्षणेनान्नेनान्नवतः। यष्टृनित्यर्थः ॥ ६ ॥

---

१. असृग्रम् स्रष्टं. २. प्रत्युदगच्छन्तु कु; प्रत्युदगच्छत् साम्य[२,३]. ३-३. त्रुटितम् मं[१]. ४. क्व तत्र साम्य[२]. ५. क्षिप्रमि° मूको.

वेङ्कट० अस्मान् सुष्ठु तत्र[1] चोदय यत्र धनं रम्यते इन्द्र ! धनार्थं वेगवत स्तुतिप्रवृत्तान् अपि वा[1] युद्धोद्युक्तान् बहुल[1] हविष्मत ॥ ६ ॥

मुद्गल० हे तुविद्युम्न ! प्रभूतधन ! इन्द्र ! राये धनसिद्ध्यर्थम् अस्मान् अनुष्ठातॄन् तत्र कर्मणि सु चोदय सुष्ठु प्रेरय। कीदृशानस्मान्। रभस्वत[1] उद्योगवत यशस्वत कीर्तिमत[1] ॥६॥

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत्। विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

सम्। गोऽमत्। इन्द्र। वाजऽवत्। अस्मे इति। पृथु। श्रवः। बृहत्। विश्वऽआयुः। धेहि। अक्षितम् ॥ ७ ॥

स्कन्द० सम् इत्युपसर्गो धेहि इत्याख्यातेन सम्बन्धयितव्य। गोमत् गावो यस्मिन् सन्ति तद् गोमत्। गोभि सहितम्। हे इन्द्र ! वाजवत् अन्नेन च सहितम्। अस्मे अस्मभ्यम्। पृथु विस्तीर्णं प्रभूतम्। श्रव धननामैतत् (तु निघ २,१०)। धनम्। बृहत् महत् सारवत्। विश्वायु आयुर्जीवितम्। तेन च सर्वेण सहित सम् धेहि सम्यग् देहि। अक्षितम् अहिंसितम्, केनचिदपि हिंसितुमशक्यम् ॥ ७ ॥

वेङ्कट० गोमत् बलवच्च अस्मासु विस्तीर्णम् परिवृद्धम्[2] उच्छ्रितम् अन्नम् धेहि सर्वान्नस्त्वम्[3] अक्षीणम् ॥७॥

मुद्गल० हे इन्द्र ! श्रव धनम् अस्मे अस्मभ्य सम्यक् प्रयच्छ। कीदृश श्रव। गोमत् बह्वीभिर्गोभिरुपेतम् वाजवत् प्रभूतेनान्नेनोपेतम् पृथु परिमाणेनाधिकम् बृहत् गुणैरधिकम् विश्वायु कृत्स्नायुष्यकारणम् अक्षितम् विनाशरहितम् ॥७॥

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम्। इन्द्र ता रथिनीरिषः ॥ ८ ॥

अस्मे इति। धेहि। श्रवः। बृहत्। द्युम्नम्। सहस्रऽसातमम्। इन्द्र। ता। रथिनीः। इषः ॥ ८ ॥

स्कन्द० अस्मभ्य देहि। किम्। श्रव बृहत् श्रवोऽत्र कीर्तिरुच्यते। कीर्तिं महतीम्। द्युम्नम् धननामात्र द्युम्नम्[4] (तु निघ २,१०)। धन च। कियत्। सहस्रसातमम् सहस्रसङ्ख्यानामतिशयेन सम्भक्तृ, बहुसहस्रसङ्ख्याक मित्यर्थ[5]। न च केवले कीर्तिधने। किं तर्हि। हे इन्द्र ! ता रथिनी इष तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्य। या वयमर्थयामहे, या अन्येभ्योऽपि स्तोतृभ्यो धत्से। ता रथिनी रथसहिता इष अन्नानि ॥ ८ ॥

वेङ्कट० 'अस्मासु धेहि' बृहत् अन्न द्योतमानम् अनेकपुरुषसम्भक्तृ। दत्तानि च[6] तानि अन्नानि कुरु रथयुक्तानि ॥ ८ ॥

मुद्गल० हे इन्द्र ! बृहत् श्रव महती कीर्तिम् अस्मे धेहि अस्मभ्य प्रयच्छ। तथा सहस्रसातमम् अतिशयेन सहस्रसङ्ख्यादिनोपेतम् द्युम्नम् धनम् अस्मे धेहि। तथा ता व्रीहियवादिरूपेण प्रसिद्धा रथिनी बहु रथोपेता इष अन्नानि अस्मे धेहि ॥८॥

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम्। होम गन्तारमूतये ॥ ९ ॥

वसो। इन्द्रम्। वसुऽपतिम्। गीःऽभि। गृणन्तः। ऋग्मियम्। होम। गन्तारम्। ऊतये ॥ ९ ॥

---

१ नास्ति मात्र[1] २ नास्ति कु सास्व[1] ३-३ नास्ति मै[1] ४ परिवृद्धम् कु सास्व[1] ५ स्व द्युम्नम् कु सास्व[1] ६ नास्ति कु ७ 'सङ्ख्यानामि' सास्व[1], सङ्ख्यानामि[1] ८-८ नास्ति वि[1] स्क

स्कन्द० वसोः इति षष्ठीनिर्देशाद्दर्धार्थेति शेषः । धनस्यार्थाय इन्द्रं वसुपतिम् धनानां स्वामिनम् गीर्भिः स्तुतिभिः गृणन्तः स्तुवन्तः । ऋग्मियम् ऋच स्तुतौ । अर्चना ऋक् । तत्सद्भावित्वात् ऋक् । तदर्हन्तं, स्तुतियोग्यमित्यर्थः । होम आह्वयाम स्वयज्ञे[1] । गन्तारम् यज्ञं प्रति ऊतये सोमेन तर्पणाय । अथवा वसोरिति वसुपतिमित्येतदपेक्षयैव । वसुपतिशब्दस्तु यद्यपि पशूनां पतिर्वसुपतिरित्येवं व्युत्पद्यते, तथाप्यत्र स्वामिनमाह । धनस्यैव स्वामिनम् । तद् यथा—प्रवीणशब्दः प्रकृष्टो वीणायामित्येवं व्युत्पद्यते । अथ च प्रवीणो व्याकरणे प्रवीणो वीणायामिति च प्रयोगदर्शनात् प्रकृष्टमात्रमाह । 'वीणायामेव प्रकृष्टम् । वसोर्वसुपतिं धनस्य स्वामिनम् इन्द्रमाह्वयाम । ऊतये पालनायास्मनः ॥ ९ ॥

वेङ्कट० वसोः वसुपतिम् इन्द्रम् स्तुतिभिः स्तुवन्तः ऋगर्हम् आह्वयामो वयम् गन्तारम् रक्षणाय ॥ ९ ॥

मुद्गल० वसोः वसुनोऽस्मदीयस्य धनस्य ऊतये रक्षार्थम् इन्द्रम् होम वयमाह्वयामः । किं कुर्वन्तः । गीर्भिः स्तुतिभिः गृणन्तः स्तुवन्तः । कीदृशमिन्द्रम् । वसुपतिम् धनपालकम् । ऋग्मियम् ऋचां[3] मातारम् । गन्तारम्[4] यागदेशे गमनशीलम् ॥ ९ ॥

सुतेसुते न्योकसे बृहद् बृहत एदरिः । इन्द्राय शूषमर्चति ॥ १० ॥

सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः । इन्द्राय । शूषम् । अर्चति ॥ १० ॥

स्कन्द० अभिषुते सोमे । न्योकसे ओको नियतवासस्थानम्, एतन्नियतं यस्य सोमे एव नान्यत्र । स न्योकाः । सर्वत्र चात्र बलविशेषणत्वात् षष्ठ्यर्थे चतुर्थी । न्योकसः नियतसोमाख्यस्थाननिवासस्य स्वभूतम् । बृहद् महत् । बृहते महते शरीरेण वीर्येण वा । 'आ इत् इति पदपूरणौ[5] । अरिः ईश्वरः । स्तुत्युच्चारणे समर्थ इत्यर्थः । इन्द्राय इन्द्रस्य । शूषम् बलम् । अर्चति स्तौति । सर्वः[1] स्तोता आत्मानमेव[7] परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्दिशति । अहं स्तौमीत्यर्थः । अथवा न्योकसे बृहते इन्द्रायेति स्वार्थ एव तादर्थ्ये चतुर्थी । सुतेसुत इत्यनेन[8] च सम्बध्यते । इन्द्रार्थमभिषुते सोमे महद् बलं स्तौति । कस्य । सामर्थ्यात्[9] सन्निधेश्चेन्द्रस्य ॥ १० ॥

वेङ्कट० सर्वेषु सुतेषु न्योकसे आत्मीयगृहतुल्यं कुर्वते महद् बलं महते इन्द्राय एव स्तोमानां प्रेरिता[10] स्तोता वदति ॥ १० ॥

मुद्गल० एदरिः सर्वोऽपि यजमानः इन्द्राय सुतेसुते इन्द्रार्थमभिषुते तत्तत्सोमे शूषम् बलम् अर्चति स्तौति । इन्द्रस्य पराक्रमं प्रशंसतीत्यर्थः । कीदृशं शूषम् । बृहत् प्रौढम् । कीदृशायेन्द्राय । न्योकसे नियतस्थानाय बृहते प्रौढाय ॥ १० ॥

इति प्रथमाष्टके प्रथमाध्याये अष्टादशो वर्गः ॥ 28-3-70

[१०]

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः । ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥ १ ॥

---

१. स यज्ञे वि[1] साम्ब. २. वीणाया वीणा° वि[1] साम्ब. ३. ऋचम् वि. ४. नास्ति वि. ५-५. एत् पाद° वि[3]; °ति पूर° कु. ६. नास्ति कु. ७. °मेवापरो° साम्ब वि[1]. ८. इति साम्ब वि[1]. ९. °र्थाल्कस्य साम्य. १०. प्रेरयिता भ ल साम्ब.

स्कन्द० गायतिरर्चतिकर्मा । स्तुवन्ति त्वा गायत्रिणः गायत्रं साम, उद्गातारः । न च त एव केवलाः । किन्तर्हि । अर्चन्ति स्तुवन्ति अर्कम् देवं त्वाम् अर्किणः मन्त्रोऽत्रार्क उच्यते । तद्वन्तः होता रोऽपि । ब्रह्माणः ब्रह्मा एक ऋत्विक् । तत्पुरुषास्तु ब्राह्मणाच्छंस्यादीनपेक्ष्येद बहुवचनम् । ब्रह्माणोऽपि त्वा हे शतक्रतो । बहुकर्मन्[1] बहुप्रज्ञ[1] वा । उत् वंशमिव येमिरे यथा कश्चिद् वंशमुद्यच्छेत्, एवमुद्यच्छन्ति उत्क्षिपन्ति । उच्छ्रयन्तीत्यर्थः । वीर्यवृद्धिश्चात्रोच्छ्रायोऽभिप्रेतः । स्तूयमाना हि देवता वीर्येण वर्धन्ते । सर्वैरिव स्वैः स्वैः स्तोत्रैस्त्वा स्तुवन्तीति समस्तार्थः ॥१॥

वेङ्कट० गायन्ति त्वाम् उद्गातारः । अर्चन्ति अर्चनीयं होतारः । इत्थमुभये ब्राह्मणाः त्वाम् शतक्रतो ! वंशमिव बाहुभिः[2] स्तोत्रशस्त्रैः उद्यच्छन्ति ॥ १ ॥

मुद्गल० 'गायन्ति' इति द्वादशर्चं तृतीयं सूक्तम् । मधुच्छन्दाः । अनुष्टुप् ।
हे शतक्रतो ! इन्द्र ! त्वा त्वाम् गायत्रिणः उद्गातारः गायन्ति स्तुवन्ति । अर्किणः अर्चनहेतुमन्त्रयुक्ता होतारः अर्कम् अर्चनीयमिन्द्रम् अर्चन्ति शस्त्रगतैर्मन्त्रैः प्रशंसन्ति । ब्रह्माणः ब्रह्मप्रभृतय इतरे ब्राह्मणाः त्वा त्वाम् उत् येमिरे उन्नतिं प्रापयन्ति । दृष्टान्तः । वंशमिव यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशम् उन्नतं कुर्वन्ति तद्वत् ॥ १ ॥

यत् सानोः सानुमारुहद् भूर्यस्पष्ट कर्त्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २ ॥

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥२॥

स्कन्द० [3]यत् अयम् सानोः सानुम् समुच्छ्रितात् उच्चाद् गिरिशिखरादन्यमुच्चतरं गिरिशिखरम् आरुहत् आरोहति । आरुह्य च भूरि बहु अस्पष्ट स्पश बन्धने । शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः । प्रतिबध्नाति । कर्त्वम् कर्म । 'कर्त्वम्' (निघ २,१) इति हि कर्मनाम । वृष्टिर्ह्यप्रतिरुद्धा । तदायत्तानि सर्वकर्माणि प्रतिबध्नाति । तत् इन्द्रः अर्थम् अर्तेर्गतिकर्मण एतद् रूपम् । गमनशीलं नश्वरमपि । चेतति जानाति । ज्ञात्वा च यूथेन समुदायसामान्यात् मरुद्गणोऽत्र यूथमुच्यते । सहयोगलक्षणा चात्र तृतीया । मरुद्गणेन सह । वृष्णिः वर्षिता । एजति गतिकर्मायम् । वधार्थं गच्छति । अथवा एजृ कम्पने इत्येतस्यान्तर्णीतण्यर्थस्यैतद् रूपम् । एजयति कम्पयति[4] । उदकशोधनार्थं धूनयतीत्यर्थः ॥२॥

वेङ्कट० यदाऽर्थलिप्सुः स्तोता सन् मनुष्यः गिरेः गिरिम् आरोहति, यदा वा भूरि कृष्यादिकं कर्म स्पृशति तदानीं तस्याभिलषितम् अर्थम् इन्द्रः जानाति । ज्ञात्वा च वसुसमूहेन मरुद्गणेन वा सह वर्षशीलः[5] तत्समीपमागच्छति ॥ २ ॥

मुद्गल० यत् यदा सानोः सानुम् आ अरुहत् यजमानः सोमवल्लीसमिदाद्याहरणाय एकस्मात्पर्वतभागादपरं पर्वतभागमारूढवान् तथा[1] भूरि प्रभूतम् कर्त्वम् कर्म सोमयागरूपम् अस्पष्ट स्पृष्टवान् । उपक्रान्तवानित्यर्थः । तत् तदानीम्[1] इन्द्रः अर्थम् यजमानस्य प्रयोजनम् चेतति जानाति । ज्ञात्वा च वृष्णि

---

१ नास्ति साम्ब त्रि[1]  २ बाहुभिः साम्ब ट कु  २ ३ यदयं सानु समुच्छ्रितप्रदेशं उच्चाद् गिरिशिखरात् अन्यदुच्चतरमारोहति । स्पश प्रतिबन्धने । कर्त्वं कर्म । वृष्टिर्हि अप्रतिरुद्धा । तदायत्तानि सर्वाणि कर्माणि । तानि बहु प्रतिबध्नाति । तदर्थमिन्द्रः ज्ञात्वा मरुद्भिः सह वर्षिता गच्छति । अर्थं गमनशीलं नश्वरम् इति स्मृता । अथवा एजृ कम्पने । पर्षे गितु त्रि[1] मकु । न पर० साम्ब  ४ कम्प० कु, ०शील त्रि[1] ल्प  ५ तत्र मूको  १ तदानीम् मूको

कामानां वर्षिता सन् यूथेन मरुद्गणेन सह एजति कम्पते। स्वस्थानाद्यज्ञभूमिमागन्तुमुद्युङ्क्ते इत्यर्थः ॥ २ ॥

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

युक्ष्व। हि। केशिना। हरी इति। वृषणा। कक्ष्यऽप्रा। अथ। नः। इन्द्र। सोमऽपाः। गिराम्। उपऽश्रुतिम्। चर ॥३॥

स्कन्द० 'युक्ष्व हि नियुङ्क्ष्व स्वरथे केशिना केशवन्तौ प्रलम्बकेसरौ हरी आत्मीयावश्वौ। वृषणा वृषु वृषु सेचने। रेतस्सेचनसमर्थौ, तरुणावित्यर्थः। कक्ष्यप्रा कक्ष्या रज्जुरश्वस्य यया पर्याणमुरसि बध्यते। प्रा पूरणे। कक्ष्यायाः पूरयितारौ, मांसपूर्णशरीरावित्यर्थः। अथ अनन्तरं च नः अस्माकं स्वभूतानां हे इन्द्र! सोमपाः! सोमानां पातः! गिराम् स्तुतीनाम् उपश्रुतिम्[1] श्रुतेः समीपम् चर गच्छ। यत्रास्मदीयाः स्तुतीः शृणोषि, तत्रागच्छेत्यर्थः ॥३॥

वेङ्कट० योजय प्रशस्तकेशौ अश्वौ तरुणौ मेदुरतया कक्ष्यायाः पूरयितारौ। अथ अस्माकम् इन्द्र! सोमस्य पातः! स्तुतीनाम् उपश्रवणम्[2] चर ॥ ३ ॥

मुद्गल० हे सोमपाः सोमपानयुक्त! इन्द्र! हरी त्वदीयावश्वौ युक्ष्व हि सर्वथा संयोजय। अथ अनन्तरम् नः अस्मदीयानाम् गिराम् स्तुतीनाम् उपश्रुतिम् समीपे श्रवणम् उद्दिश्य चर[3] तत्प्रदेशं गच्छ। कीदृशौ हरी। केशिना स्कन्धप्रदेशे लम्बमानकेशयुक्तौ वृषणा सेचनसमर्थौ युवानौ कक्ष्यप्रा अश्वस्योदरबन्धन-रज्जुः कक्ष्या तस्याः पूरकौ। पुष्टाङ्गावित्यर्थः ॥ ३ ॥

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव। ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ॥ ४ ॥

आ। इहि। स्तोमान्। अभि। स्वर। अभि। गृणीहि। आ। रुव। ब्रह्म। च। नः। वसो इति। सचा। इन्द्र। यज्ञम्। च। वर्धय ॥४॥

स्कन्द० एहि [4]आगच्छ। आगत्य च स्तोमान् अभि स्वर। स्वरतिः शब्दोपतापयोः[5]। इह तु सामर्थ्याद् गत्यर्थः। अस्मदीयाः स्तुतीरभिगच्छ। अथवा स्वरतिः शब्दार्थ एव। स्तोमानित्येतच्च एहीत्यनेन सम्बध्यते। एह्यस्मदीयान् स्तोमान् प्रति। आगत्य चाभिस्वर अभिशब्दयास्मान्[6]— 'आगच्छत स्तोतारः!, आगतोऽहं, स्तुत, किमतः परमाध्वे' इति। अभिस्वृत्य च अभि गृणीहि

---

१-१. युङ्क्ष्व नियोजय। प्रलम्बकेसरौ आत्मीयौ अश्वौ स्वरथेषु। वृषु सेचने। रेतस्सेचनसमर्थौ तरुणौ कक्ष्या रज्जुः यया अश्वोरसि पर्याणं बध्यते। तत्पूरयितारौ मांसपूर्णशरीरौ। अथास्माकमिन्द्र सोमानां पातः स्तुतीनां श्रुतेः समीपं चर। 'अव्ययं विभक्ति०' (पा २,१,६) इत्यादिसूत्रेण समासः। उपकुम्भवत्। यत्रस्थः अस्मत्स्तुतीः शृणोषि तत्रागच्छ वि' भ कु. २. उपश्रुतिम् साम्व'; "श्रवण' वि' लपं. ३. प्रदेशम् वि. ४-४. आख्यानबहुत्वे पूर्वं पूर्वं क्त्वार्थे प्रायो बहुत्र। स्व गतावन। न शब्दोपतापयोः। आगत्यास्मत्स्तुतीः अभिगच्छ। एत्य अस्मान् अभिशब्दय वि' भ कु.

[१]अभीत्यय प्रतीत्येतस्य स्थाने। प्रतिगृणीहि। आ रुव च शब्दम् च। किम्। सामर्थ्याच्छस्त्र चोच्चारयेत्यर्थ। हेतुकर्तृतया चोभयत्रापि इन्द्रस्य कर्तृत्वम्। प्रतिगृणन्तमध्वर्युं शसन्त च मा प्रयुङ्क्ष्वेत्यर्थ। एतत् कुर्वन् ब्रह्म च स्तुतिलक्षणम् न अस्माक स्वभूतम्। वसो। शतपथे वसिष्ठ इति वसुशब्दस्यातिशयितप्रत्ययान्तस्य 'यद्वै नु श्रेष्ठस्तेन वसिष्ठ' (माश ८,१,१,६) इति प्रशस्यतमवचनेन श्रेष्ठशब्दे नार्थविवरणदर्शनाद् वसुशब्द प्रशस्यनाम। प्रशस्य[१]। अथवा 'वसु' (निघ २,१०) इति धननाम। सामर्थ्याच्चान्तर्णीतमत्वर्थम्। धनवन्[१] सचा सह हे इन्द्र। यज्ञम् च वर्धय समापय। स्तुतियज्ञयोर्हि समाप्तिरेव वृद्धि[१] ॥ ४ ॥

वेङ्कट० आगच्छ स्तोमान् अस्मदीयान्। सशब्देन मुखेन पुन पुन प्रोत्साहय। 'आथा मोदैव' (आश्री ५,९,४) इति अभि गृणाहि। 'प्रतिगृणन्तम् अध्वर्युं शसन्त मा च नियुङ्क्ष्व'। 'आ च रुव श्लोकम्'। अस्माकम् इन्द्र। स्तोत्रम् च सह वर्धय वासयित ॥ ४ ॥

मुद्गल० हे वसो निवासकारणभूत[१] इन्द्र। एहि अस्मिन् कर्मण्यागच्छ। आगत्य च स्तोमान् उद्गातृप्रयुक्तानि स्तोत्राणि अभि स्वर अभिलक्ष्य प्रशंसारूप शब्द कुरु। तथा आध्वर्यवमभिलक्ष्य गृणाहि शब्द कुरु। तथा "होतृप्रयुक्तानि शस्त्राणि" आलक्ष्य रुव शब्द कुरु। परितोषेण सर्वानृत्विज प्रशंसेत्यर्थ। तत ऊर्ध्वम् न अस्माकम् ब्रह्म च अन्न च यज्ञम् च अनुष्ठीयमान कर्म च सचा सह। वर्धय साङ्गत्वसम्पादनेन यज्ञ वर्धयित्वा "तत्फलमपि च प्रवृद्ध कुरु" ॥ ४ ॥

उ॒क्थमिन्द्रा॑य॒ शंस्यं॒ वर्ध॑नं पुरुनि॒ष्षिधे॑। श॒क्रो यथा॑ सु॒तेषु॑ णो रा॒रण॑त् स॒ख्येषु॑ च ॥ ५ ॥

उ॒क्थम्। इन्द्रा॑य। शंस्य॑म्। वर्ध॑नम्। पु॒रु॒नि॒ऽसिधे॑। श॒क्रः। यथा॑। सु॒तेषु॑। नः॒। र॒रण॑त्। स॒ख्येषु॑। च॒ ॥ ५ ॥

स्कन्द० "उक्थम् इन्द्रस्यार्थाय शसनीयम्। कीदृशम्। वर्धनीयम्। कस्य। सामर्थ्यादिन्द्रस्य। स्तूयमाना हि देवता वर्धत वीर्येण। कीदृशायेन्द्राय। पुरुनिष्षिधे निरित्येष नीत्येतस्य स्थाने"। बहूना शत्रूणा निषेध निवारकाय। निष्कृत्य वा साधयित्रे स्ववशीकर्त्रे। 'कथ च पुन शसनीय। शक्र शक्त इन्द्र। यथा सुतेषु न अस्माकम् रारणत् रमेरिद छान्दस णत्वम्। रणिर्वा रमेरर्थ। अत्यन्त रमते। सख्येषु च सखित्वेषु चास्माभि सह। अवैगुण्यमनेन प्रकारेणोच्यते। अविगुणशासिनो हि सुतेषु सख्येषु च देवता रमते' ॥ ५ ॥

वेङ्कट० उक्थम् इन्द्राय शसनीय, इन्द्रस्य वर्धनम् अनेकेषा "शत्रूणा निषेद्धृ" यथा शक्र शक्त सोऽस्माक यज्ञेषु सख्येषु च अत्यन्त रमेत ॥ ५ ॥

---

१ १ अभि मती प्रतिशिर दारय। अध्वर्यूणा शत्रै शब्दय। स्तुतिलक्षण ब्रह्म च अस्माक हे धनवन् इन्द्र सह यज्ञ समापय। स्तुतियज्ञयोर्हि समाप्तिरेव वृद्धि। अथवा वसो वसिष्ठ प्रशस्य वि[१] अ कु २ २ नास्ति ए
१ ३ नास्ति भाग्य कु, भासस्तोमम् ए भासस्तोमम् भाग्य वि[१] एप, भासस्तोमं तु न वि[१], भासस्तोम भाग्य साग्व[११] ४ ४ प्रुटितम् मै[१] ५ ५ इन्द्रस्यार्थाय उक्थं शंसनीयम्। इन्द्रस्य वर्धनम् वि[१] अ कु
६ ६ यथा इन्द्र अस्मत्सुतेषु अत्यर्थ रमते। सखित्वेषु च अस्माभिस्सह सख्यभावेषु। सुतेषु सख्येषु च देवता रमते हि। रम छान्दस णत्वम्। अत्यन्त रणिता वि[१] अ कु ७ ७ णा निधिपे ए वि[१]; शत्रुनिषेधे वि[१] मूर्त, णां निरुषे साग्व[१], णां निषेधे साग्व[१] अ ८ सख्येषु वि[१]

मुद्गल० इन्द्राय इन्द्रार्थम् वर्धनम् वृद्धिसाधनम् उक्थम् शस्त्रम् शस्यम् अस्माभि शंसनीयम्। कीदृशायेन्द्राय। पुरुनिष्षिधे बहूना शत्रूणा निषेधकारिणे। शक इन्द्र न अस्मदीयेषु 'सुतेषु पुत्रेषु सख्येषु च सखित्वेष्वपि' यथा येन प्रकारेण रारणत् 'अतिशयेन शब्द कुर्यात् तथा शस्यमिति पूर्वत्रान्वय। अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थ ॥ ५ ॥

तमित् सखित्व ईमहे तं राये तं सुवीर्ये। स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥६॥

तम्। इत्। सखिऽत्वे। ईमहे। तम्। राये। तम्। सुऽवीर्ये।

स। शक्रः। उत। नः। शकत्। इन्द्रः। वसु। दयमानः ॥ ६ ॥

स्कन्द० [1]य उक्तगुण इन्द्र तम् इत् इति पदपूरण। सखित्वे द्वितीयार्थे सप्तमी। †सखित्वम् ईमहे याच्ञाकर्माऽयम्। याचामहे। सखा अस्माक भवेत्येतत् प्रार्थयामह इत्यर्थ। तम् एव राये इयमपि चतुर्थी द्वितीयार्थे। धनम्। सुवीर्य इत्ययमपि द्वितीयार्थे। शोभन वीर्यम्। स शक्र उत शब्दोऽप्यर्थे। स शब्दाच्च परो द्रष्टव्य। सोऽपि शक्र शक्त न अस्मभ्यम् शकत् 'शिशति तुञ्जति' (तु निघ ३,२०) इति‡ शकिर्दानकर्मा पठित। अथ तु शुद्धोऽपि सामर्थ्याद् दानकर्मा। धन‖ ददात्वित्यर्थ। अथवा शकि स्वार्थ एव। उतशब्दस्तु यस्मादर्थे। शकेश्च कर्मभूतेन धात्वन्तरेण नित्यसम्बन्धाद् योग्यस्य तस्याध्याहार। स शक्रो यस्मादस्मभ्य शक्नोति दातु तस्माद् याचामहे इति। यस्माद् दान समर्थ इत्यर्थ। क स.। उच्यते। इन्द्र। कदा ददातु शक्नोति वा दातुम्। उच्यते। वसु दयमान दयतिर्विभागकर्मा (तु धा ४,१७)। 'लक्षणहेत्वो क्रियाया' (पा ३,२,१२६) इति§ लक्षणे शानच्। एव चाय स्तोतृभ्यो धन विभजन्। यदा स्तोतृभ्यो धनविभाग तदा। तस्मादस्मभ्यमेतद् ददातु¶ इत्यर्थ[2] ॥ ६ ॥

वेङ्कट० तम् एव सखित्वे अपेक्षिते सखा[3] भव इति याचामहे। तम् एव धनार्थम्। तम् एव शोभनबलार्थम्। स शक्त इन्द्र धन प्रयच्छन् अस्मान् शक्तान् करोतु ॥ ६ ॥

मुद्गल० [4]सखित्वे निमित्तभूते सति तम् इत् तमेवेन्द्रम् ईमहे 'प्राप्तुम याचामहे'। तथा राय धनार्थम् तम् ईमहे। तथा सुवीर्ये शोभनसामर्थ्यनिमित्तम् तम् ईमहे। उत अपि च शक्र शक्तिमान् स इन्द्र न अस्मभ्यम् वसु धनम् दयमान प्रयच्छन् शकन् अस्मदीयरक्षणे शक्तोऽभूत् ॥ ६ ॥

इति प्रथमाष्टके प्रथमाध्याये एकोनविंशो वर्ग ॥

सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः। गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥ ७ ॥

सुऽनिवृतम्। सुनि ऽअजम्। इन्द्र। त्वाऽदातम्। इत्। यशः।

गवाम्। अप। व्रजम्। वृधि। कृणुष्व। राधः। अद्रिऽवः ॥ ७ ॥

---

१ १ नास्ति मै[1] २ °णत् यथा येन थति° मूको ३ ३ तमित् उक्तगुणमिन्द्रम्। सखित्व याचामहे। तमेव धन शोभन वीर्यञ्च। सोऽपि शक्र अस्मभ्यमदात् ददातु। अथवा शक्र शक्त। यस्मात् न दातु शक्नोति तस्मादीमहे। इन्द्र यत यदा वसु दयमान तदा तदा अस्मभ्यमेतद्दातु। दय विभागे। 'लक्षणहेत्वो क्रियाया' (पा ३,२,१२६) इति शानच्। स्तोतृभ्यो विभजन् वि[1] अ कु † नास्ति मूको ‡ इति धनम् मूको § °ति एवं चाय लक्षणे शानच् स्तो° मूको ¶ ददाति मूको ४ सखा स वि[1] ५ सखित्वेन मूको ६ ६ नास्ति वि

मुद्गल० हे इन्द्र ! ऋघायमाणम् शत्रुवधं कुर्वाणम् त्वा त्वाम् रोदसी उभे द्यावापृथिव्यावपि त्वदीयं महिमानम् नहि इन्वत । व्याप्तुं न समर्थे इत्यर्थः । तादृशस्त्वम् स्वर्वती स्वर्लोकयुक्ता अपः वृष्टिरूपा जेषः जय । प्रेरयेत्यर्थः । किं च वृष्टिप्रदानाद्रसोत्पत्तेरूर्ध्वम् अस्मभ्यम् क्षीरादिरसप्रदाः गाः सम् मृतुहि सम्यक् प्रेरय ॥ ८ ॥

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः । इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः ।
इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥ ९ ॥

स्कन्द० 'हे आश्रुत्कर्ण' श्रुधी हवम् आह्वानम् । श्रुत्वा च नू चित् दधिष्व 'नु' (निघ २,१५) इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । क्षिप्रं धारय मनसि स्थापय । श्रृण्वित्यर्थः । श्रवणार्थ एव वा सामर्थ्याद् दधाति । किम् । गिरः स्तुतीः लौकिकीर्याज्यानुवाक्यालक्षणा वा । न च गिर एव केवलाः । किन्तर्हि । हे इन्द्र ! स्तोमम् इमम् मम एव स्वभूतं शस्त्रलक्षणम् । श्रुत्वा च कृष्व कुरुष्व । युजः चित् समनसः † सन्निकृष्टतम । कः पुनरिन्द्रस्य सहाय ‡ । मरुतो वा सखित्वात् मरुद्युक्तस्य सहायतायाः अवश्यम्भावित्वात् । विष्णुर्वा । तस्यापि 'सखे विष्णो वितरम्' (ऋ ४,१८,११) इति इन्द्रस्य सखित्वदर्शनात् । मरुद्गणो॰ वा ॥९॥

वेङ्कट० आभिमुख्येन निवेदितस्य श्रवणपरकर्ण ! शृणु ह्वानम् । क्षिप्रमेव च॰ हृदये धारय मदीया गिरः । इन्द्र ! स्तोमम् च इमम् मदीयं सहायाद् अपि तव सन्निकृष्टं कुरु ॥ ९ ॥

मुद्गल० हे आश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृश ! इन्द्र ! हवम् अस्मदीयमाह्वानम् नु क्षिप्रम् श्रुधि शृणु । मे मम होतुः गिरः चित् स्तुतीरपि दधिष्व चित्ते धारय । किंच मम॰ मदीयम् इमम् स्तोमम् स्तोत्ररूपवाक्समूहम् युजः चित् स्वकीयसख्युरपि अन्तरम् कृष्व आसन्नं कुरु । यथा तस्य वचनं त्वं प्रियं मन्यसे तद्वदस्मदीयस्तुतावपि॰ प्रीतिं कुर्वित्यर्थः ॥ ९ ॥

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् । वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥१०॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ।
वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥१०॥

स्कन्द० 'हिशब्दो यस्मादर्थे । यस्माद् विद्म जानीमः त्वा वृषन्तमम् अतिशयेन वर्षितारम् । वाजेषु सङ्ग्रामेषु हवनश्रुतम् आर्तानामाह्वानस्य श्रोतारम् । प्रार्थना लक्ष्यते । यस्माच्छब्दश्रुतस्तस्माच्छब्दोऽध्याहर्तव्यः । तस्माद् वृषन्तमस्य अतिशयेन वर्षितुः तव स्वभूताम् हूमहे । ¶आह्वानस्याहूयमानप्रार्थनाविनाभावित्वा दाह्वानेनात्र प्रार्थना लक्ष्यते । प्रार्थनार्थ एव वा सामर्थ्याद् ह्वयतिः । प्रार्थयामहे । ऊतिम् पालनं सहस्रसातमाम् स्तोत्रसहस्राणामतिशयेन सम्भक्ताम् । यथा बहूनि स्तोत्रसहस्राणि पठितानीत्यर्थः॰ ॥१०॥

---

१ १ आभिमुख्येन श्रोतारौ कर्णौ यस्य स त्वं शृणु आह्वानम् । श्रुत्वा क्षिप्रं मत्स्तुतीः मनसि स्थापय । याज्यापुरोनुवाक्या गिरो वा । हे इन्द्र इमं शस्त्रलक्षणं स्तोमं श्रुत्वा कुरुष्व । युजः सहायात् । अन्तरं सन्निकृष्टतमम् । कुत्सो वा विष्णुर्वा मरुतो वा इन्द्रस्य सहायः वि॰ अ कु † सखन मूको ‡ ॰हाय वा सखित्वात् मूको २ नास्ति साम्ब कु ३ नास्ति वि ४ स्तुतीश्चापमे॰ ५ ५ यस्मा जानीमस्त्वामतिशयेन वर्षितारं सङ्ग्रामेषु आर्तानामाह्वानस्य श्रोतारम् । तस्माद् वृषन्तमस्यातिशयेन वर्षितुस्ते पालनं प्रार्थयामहे । स्तोत्रसहस्रैर्भक्तितमाम् वि॰ अ कु ¶ ॰हूयमानस्य प्राथ॰ साम्ब॰

वेङ्कट० जानीम. हि त्वाम् अतिशयेन वर्षितारं सङ्ग्रामेषु च योद्धॄणामाह्वानस्य श्रोतारम्[1]। अत तवातिशयेन 'सहस्रस्य दात्रीम्'[2] ऊतिम् ह्वयामहे अस्माकमियमस्तु इति ॥ १० ॥

मुद्गल० हे इन्द्र त्वा त्वाम् विद्म जानीम । कीदृशं त्वाम्। वृषन्तमम् कामानामतिशयेन वर्षितारम्। वाजेषु सङ्ग्रामेषु हवनश्रुतम् अस्मदीयस्याह्वानस्य श्रोतारम्। वृषन्तमस्य अतिशयेन कामानां वर्षितुस्तव ऊतिम् रक्षामस्मद्विषयामुद्दिश्य हूमहे त्वामाह्वयाम । कीदृशीमूतिम् । सहस्रसातमाम अतिशयेन धनसहस्राणां दात्रीम्। हि पूरण ॥१०॥

आ तू न॑ इन्द्र कौशिक मन्दसा॒नः सु॒तं पि॑ब । नव्य॒माय॒ुः प्र सू ति॑र कृ॒धी स॑हस्र॒सामृषि॑म् ॥११॥

आ । तु । न॒ । इ॒न्द्र॒ । कौ॒शि॒क॒ । म॒न्द॒सा॒न । सु॒तम् । पि॒ब॒ ।
नव्य॑म् । आयु॑ । प्र । सु । ति॒र॒ । कृ॒धि । स॒ह॒स्र॒ऽसाम् । ऋषि॑म् ॥११॥

स्कन्द० आ[1] इत्युपसर्गः पिब इत्याख्यातेन सम्बन्धयितव्य । तु इति पदपूरण । क्षिप्रार्थो वा। क्षिप्रम् न अस्माकं स्वभूतम्[1]। हे इन्द्र ! कौशिक ! कुशिकस्य पुत्र ! । अत्र चेतिहासमाचक्षते—इषीरथपुत्र कुशिको नाम राजा पुत्रमिन्द्रतुल्यं कामयमानो ब्रह्मचर्यं चचार। तस्य गाथी नामेन्द्र एव स्वयं पुत्रो जात इति। तदुक्तम्— पुत्रमिन्द्रसमं कुशिको ब्रह्मचर्यं चचार इच्छन्। तस्य स्वैपारशेर्गाथी पुन इन्द्र स्वयं जज्ञे' (बृ. ऋ. अनु २,३,१) इति। अथवा कुशिभिर्वेद स्तन द्रष्टा दोग्धा वा कौशिक । तथाहि चरकाध्वर्यव इतिहासमधीयते–'[चत्वारो वै पृश्ने स्तना आसंस्ततरिनभिदवभ्योऽदुहत्। कुशाभिरेकोऽनुनद्ध आसात् । तं वा इन्द्र एवापश्यत् । तेनेन्द्रायैवादुहत्। तद्वा अस्य कौशिकत्वम्†' (मै ४,५,७) इति । तस्य सम्बोधनम् हि कौशिक!। मन्दसान मन्दतिः स्तुत्यर्थो वा मोदनार्थो[2]वा। स्तूयमानो मोदमानो वा। सुतम् सोमम् आ पिब। आपीय च नव्यम् स्तुत्यम् अत्युत्कृष्टम् आयु अन्नम्। अथवा नवं नव्यम्। स्वार्थिको यत् प्रत्यय । आयुरपि जीवितमुच्यते। ‡अचिरप्रवृत्तमिदमस्माकं जीवितम्। प्र सु तिर प्रसुपूर्वस्तिरति ¶ सर्वत्र वृद्ध्यर्थः। सुष्ठु प्रवर्धय। कृधि कुरु च। माम् सहस्रसाम् धनसहस्राणां सम्भक्तारम्[1] ऋषिम् मधुच्छन्दोनामानम् ॥ ११ ॥

वेङ्कट० 'पुत्रमिन्द्रसममिच्छन् कुशिको ब्रह्मचर्यं चचार। तस्येन्द्र स्वयमेव पुत्रोऽभूत्। साऽस्य कौशिकता'।' 'स सुवर्णरजताभ्याम् कुशाभ्यां परिगृहीत आसीत् । साऽस्य कौशिकता' (तैना १,५,१०,२) 'इति ब्राह्मणम् वा†'।

---

१ स्तोतारम् वि[1] स्व २-२ °स्य दात्रीम् वि[1] [3] स्व, °स्य दात्रिम् कु साम्ब ३-३ हे इन्द्र [illegible] सोम पिब। कौशिकत्वे कथा— इषीरथसुतो राजा कुशिक कामयन् सुतम्। इन्द्रतुल्यं तदर्थत्वात् ब्रह्मचर्यं चचार च ॥ गाथीनामेन्द्र एवास्य पुत्रत्वं गतवान् किल । इति कौशिकत्वम् । अथवा कुशिभिर्वेदस्य द्रष्टा दाता वा कौशिक । तथाहि चरकाध्वर्यव । पृश्नेस्त्वारस्तनाश्चत्वार सा देवेभ्योऽदुहत् दिवि । एकोऽनुबद्ध कुशिभिर्न [illegible] । अथवा नवं जीवितं सुष्ठु प्रवर्धय। प्रतिरति वृद्धौ। कुरु धनसहस्राणां सम्भक्तारम् वि[1] अ कु † † चत्वार पृश्नेस्तना आसंस्तैर्देवेभ्योऽदुहत् कुशिभिरेकोऽनुबद्ध आसीत् तं वा इन्द्र एवापश्यत् तेनेन्द्रा[illegible] [illegible] वा अस्य कौशिकत्वम् साम्ब ‡ अचिरप्रवृत्तमिदं° साम्ब ¶ °प्रसुपूर्वस्तिरति सूक्तो ४ पु म भा. ऋ। ४९, ४-६ ५-५. इति वा ब्राह्मणम् वि[1] ए अ[illegible]. † नास्ति साम्ब°.

आभिमुख्येन क्षिप्रं पिब इन्द्र ! कौशिक ! अस्माकं प्रवृष्यन् सोमं नवतमम्[१] आयुः च सुष्ठु प्रवर्धय । कुरु च सहस्रधनस्य समकार मधुच्छन्दसमृषिम् ॥११॥

मुद्गल० हे इन्द्र ! तु क्षिप्रम् न अस्मान् प्रति आ गच्छेति शेष । हे कौशिक ! कुशिकस्य पुत्रेन्द्र ! मन्दसान हृष्टो भूत्वा सुतम अभिषुत सोमम् पिब । यद्यपि विश्वामित्र कुशिकस्य पुत्रस्तथापि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकस्य पुत्रत्वमविरुद्धम् । अनुक्रमणिकायाम्—'कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार । तस्येन्द्र एव गाथी[२] पुत्रो जज्ञे' (ऋ अनु ३, १) इति उक्तम्[३] । नव्यम् सर्वदेवस्तुत्य[४] कर्मानुष्ठानपरम् आयु जीवितम् प्र सू तिर प्रकर्षेण सुष्ठु वर्धय । ततो माम् सहस्रसाम् सहस्रसंख्याकलाभोपेतम् ऋषिम् अतीन्द्रियद्रष्टारम् कृधि कुरु ॥११॥

परिं त्वा गिर्वणो गिरं इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय ॥१२॥

परि । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः ।

वृद्धऽआयुम् । अनु । वृद्धयः । जुष्टाः । भवन्तु । जुष्टयः ॥१२॥

स्कन्द० 'परि इत्युपसर्गो भवन्तु[५] इत्याख्यातेन सम्बन्धयितव्य । हे गिर्वण ! स्तुतिभि सम्भजनीय ! स्तुतिभिर्वा सम्भक्त ! गिर इमा अस्मदीया परि भवन्तु परिपूर्वो भवति सर्वत्र परिग्रह । परिगृह्णन्तु । विश्वत सर्वत । कीदृशम् । वृद्धायुम् एतिर्गत्यर्थे । वृद्धान् शत्रून् वधाय ‡प्रतिगन्तारम् । कीदृश । अनु वृद्धय अनु इत्येष पदपूरण । सुशब्दस्य चार्थे । सुष्ठु वृद्धा । ताश्च तेऽ§ जुष्टा प्रिया भवन्तु जुष्टय प्रीणयित्र्य '॥ १२ ॥

वेङ्कट० 'गुरपकृत्तुगूतये' (ऋ १,४,१) इत्याद्या गिर त्वा गीर्भिर्वननीय ! सर्वत परि भवन्तु परितो भवन्तु । तथा 'वर्धिताम त्वाम् अनु[६] अस्माकम्' वृद्धय भवन्तु पर्याप्ताश्च भवन्तु अस्माक[७] श्रिय ॥१२॥

मुद्गल० हे गिर्वण ! अस्मदीयस्तुतिभागिन्द्र ! विश्वत सर्वेषु कर्मसु प्रयुज्यमाना इमा गिर अस्मदीय स्तुतय त्वा त्वाम् परि भवन्तु सर्वत प्राप्नुवन्तु । कीदृश्यो गिर । वृद्धायुम अनु प्रवृद्धेनायुष्यणो पेत त्वामनुसृत्य वृद्धय वर्धमाना । किंच एता गिर जुष्टा त्वया सेविता सत्य जुष्टय अस्माक प्रीतिहेतव भवन्तु ॥१२॥

इति प्रथमाष्टके प्रथमाध्याये विंशो वर्ग ॥

---

१ °तरम् साम्व' २ गाथी वि' ३ नास्ति मूको ४ 'देव° मूको ५-५ हे गिर्वण स्तुतिसंभक्त त्वामस्मदीया इमा गिर परिगृह्णन्तु सर्वत । वृद्धान् शत्रून् प्रतिगन्तारम् । अनु सुष्ठु । सुष्ठु वृद्धा । ता तव प्रिया भवन्तु प्रीणयित्र्य । जुषी प्रीतिसेवनयो वि' अ कु † भवत्याग्या' साम्व, भव ६° वि' ‡ मधायप्रति° वि', मधायाप्रति° साम्व § तज्जुष्टा वि, तज्जुष्टा साम्व ६-६ वर्धिते त्वाम् साम्व' कु, वर्धितावत्स्माकम् साम्व', वर्धिताम त्वाम° साम्व' ‖ नास्ति वि' ल्प ७ °कं पर्याप्ता साम्व' । ल

[ ११ ]

इन्द्रं॒ विश्वा॑ अवीवृधन् समु॒द्रव्य॑चसं॒ गिरः॑ । र॒थीत॑मं र॒थीनां॒ वाजा॑नां॒ सत्प॑तिं॒ पति॑म् ॥१॥

इन्द्र॑म् । विश्वा॑ । अ॒वी॒वृ॒ध॒न् । स॒मु॒द्रऽव्य॑चसम् । गिरः॑ ।
र॒थिऽत॑मम् । र॒थिना॑म् । वाजा॑नाम् । सत्ऽप॑तिम् । पति॑म् ॥ १ ॥

स्कन्द० 'जेता नामोत्तम सूक्त माधुच्छन्दस उक्तवान्'। इन्द्रम् विश्वा 'सर्वा अवीवृधन् वर्धितवत्य वर्धयन्तु वा। समुद्रव्यचसम् व्यचो व्याप्तिरुच्यते। 'न ते विव्यक' (ऋ ७,२१,६), 'रामा विव्याच' (ऋ ३,३६,८) इत्यादौ सर्वत्र व्याप्त्यर्थे। समुद्रस्येव व्याप्तिर्यस्य स समुद्रव्यचा त समुद्रव्यचसम्। सर्वव्यापिनमित्यर्थः। गिर स्तुतय। कीदृशम्। रथीतमम् रथ यो नयति, तत्रस्थो वा युध्यते, स रथी। अन्येषाम् रथानाम् सकाशादतिशयेन रथिनम्। वाजानाम् इति षष्ठी पतिम् इत्येतेन सम्बध्यते[२]। अन्नाना स्वामिन सता च पालयितारम् ॥ १ ॥

वेङ्कट० जेता माधुच्छन्दस[३]। इन्द्र विश्वा स्तोतॄणा 'गिर अवर्धयन्। अन्तरिक्षस्येव यस्य' व्याप्ति। अतिशयेन रथिनम्' रथानाम्', अन्नाना सता च पतिम् ॥ १ ॥

मुद्गल० 'इन्द्र "विश्वा' इत्यष्टर्चं चतुर्थं सूक्तम्"। मधुच्छन्दस पुत्रो जेतृनामक। अनुष्टुप्। इन्द्र। विश्वा सर्वा गिर अस्मदीया स्तुतय इन्द्रम् अवीवृधन्' वर्धितवत्य। कीदृशमिन्द्रम्। समुद्रव्यचसम् समुद्रवद् व्याप्नुवन्तम्। रथानाम् रथयुक्ताना योद्धॄणा मध्ये रथीतमम् अतिशयेन रथयुक्तम्। वाजानाम् अन्नानाम् पतिम् स्वामिनम् सत्पतिम् सता सन्मार्गवर्तिना पालकम् ॥१॥

स॒ख्ये त॑ इन्द्र वा॒जिनो॒ मा भे॑म शवसस्पते । त्वाम॒भि प्र णो॑नुमो॒ जेता॑रम॒प॑राजितम् ॥२॥

स॒ख्ये । ते॒ । इ॒न्द्र॒ । वा॒जिनः॑ । मा । भे॒म॒ । श॒व॒सः॒ । प॒ते॒ ।
त्वाम् । अ॒भि । प्र । नो॒नु॒मः॒ । जेता॑रम् । अप॑राऽजितम् ॥ २ ॥

स्कन्द० 'सख्ये इति सप्तमीनिर्देशाद् वर्तमाना इति वाक्यशेष। सख्ये तव वर्तमाना वय हे इन्द्र। वाजिन हविर्लक्षणेनान्नेन संयुक्ता। त्वा हविषा यजन्त इत्यर्थ। मा भेम त्वत्प्रसादात् कुतश्चिदपि मा भैष्म। हे शवसस्पते। बलस्य †स्वामिन' पालयित† वा। न च मुधैवाभय प्रार्थयामहे। किं तर्हि। त्वाम् अभि प्र णोनुम नु स्तुतौ। पौन पुन्ये चात्र यङो लुक्। प्रशब्द प्रकर्षे। प्रकर्षेण पुन पुनरभिष्टुम। कीदृशम्। जेतारम् शत्रूणाम् अपराजितम् च शत्रुभि' ॥ २ ॥

---

१-१ तस्य तु जेता नामोत्तमं सूक्तं मधुच्छन्दस उच्यते। अस्य मधुच्छन्दसो यदुत्तम सूक्तमिन्द्रं विश्वा अवीवृधन्निति। जेता नाम मधुच्छन्द पुत्रो दृष्टवान् मान्य वि' २-२ गिर अवीवृधन्नवर्धयन्, वर्धयन्तु वा। व्यच व्याप्तौ। समुद्रस्येव व्याप्ति यस्य तं सर्वव्यापिनम्। स्तुतय। सारथि योद्धा वा रथी। अन्येभ्योऽपरात्मानोऽतिशयेन रथी। अन्येषां रथिनां रथिनं वा वि' म मु ३ मधु' ए मं' ४-४ पुष्टिमन् वि' ५ नास्ति साम्य तु ६ नास्ति वि' त्वा ७-७ पुष्टिमम् मं'. ८ नास्ति वि मं' ९-९ हे इन्द्र तव सख्ये वर्तमाना वयं हविष्मन्त त्वा हविषा यजाम। त्वत्प्रसादात् कुतश्चिदपि मा भैष्म। बलस्य स्वामिन् पाल वा। न च मुधैव प्रार्थना। किन्तर्हि त्वा प्रकर्षेण पुन पुनरभिष्टुम। पौन पुन्ये च यङो लुक्। कीदृशं जेतारं शत्रुभिश्च वि' मं तु †† स्वामी पालयिता मूको

वेङ्कट० इन्द्र! 'त्वया सख्ये सति बलिनो वयं न कुतश्चित्' अबिभिम[2]। बलस्य पते! त्वाम् च प्रकर्षेण अभिष्टुमो जेतारम् अपराजितम् ॥ २ ॥

मुद्गल० हे शवसस्पते! बलस्य पालक! इन्द्र! ते तव सख्ये अनुग्रहप्रयुक्ते सखित्वे वर्तमाना वयम् वाजिनः अन्नवन्तो भूत्वा मा भेम शत्रुभ्यो भीतिं प्राप्ताः मा भूम। अतः त्वाम् अभयहेतुम् अभि प्र णोनुमः सर्वतः प्रकर्षेण स्तुमः। कीदृशं त्वाम्। जेतारम् युद्धेषु जयशीलम्। अपराजितम् क्वापि पराजयरहितम् ॥ २ ॥

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः। यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥३॥

पूर्वीः। इन्द्रस्य। रातयः। न। वि। दस्यन्ति। ऊतयः।
यदि। वाजस्य। गोऽमतः। स्तोतृऽभ्यः। मंहते। मघम् ॥ ३ ॥

स्कन्द० पूर्वीः इन्द्रस्य '[3]पूर्वकाले प्रवृत्ता.[3] चिरन्तन्यः। इन्द्रस्य रातयः दानानि [4]न विदस्यन्ति चोत्पयश्रुपेत्यस्य स्थाने। दस्यतिः क्षयार्थः। नोपक्षीयन्ते। ऊतयः पालनानि च। यदि शुद्धोऽप्ययं यदि. अपिसहितस्यार्थे द्रष्टव्यः। यद्यपि वाजस्य गोमतः द्वितीयार्थे षष्ठी। वाजं गोमदन्नं गोभिः सहितम्। स्तोतृभ्यः मंहते दानकर्माऽयं मंहतिः। ददाति मघम् धनं च। एतदुक्तं भवति। यद्यप्यन्येभ्योऽपि स्तोतृभ्योऽन्नं गां धनं चेन्द्रो ददाति। तथापि प्रभूतधनत्वाच्चैवास्य पूर्वदानानि पालनानि च †क्षीयन्ते। अत्यन्तप्रभूतधन इत्यर्थः[4] ॥ ३ ॥

वेङ्कट० '[5]बहूनि इन्द्रस्य[5] दानानि रक्षणानि च न क्षुभ्यन्त्युपर्युपरि[6] वर्धन्ते। यदि अयम् अन्नस्य गोयुक्तस्य स्तोतृभ्यः '[7]मंहनीयं सङ्घं[7] प्रयच्छति। तदानीं तेन दत्तानि धनानि तन्मुखानि रक्षणानि च न क्षुभ्यन्ति बहुत्वादिति ॥ ३ ॥

मुद्गल० इन्द्रस्य सम्बन्धिन्यः रातयः धनदानानि पूर्वीः अनादिकालसिद्धाः। अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः। एवं सति इदानीन्तनोऽपि यजमानः स्तोतृभ्यः ऋत्विग्भ्यः गोमतः गोसहितस्य वाजस्य अन्नस्य पर्याप्तम् मघम् धनम् यदि मंहते दक्षिणारूपेण ददाति तदानीम् ऊतयः बहुधनदानपूर्वकाणि इन्द्रस्य अस्मद्विषयाणि रक्षणानि न वि दस्यन्ति विशेषेण नोपक्षीयन्ते ॥ ३ ॥

पुरां भिन्दुर्युवा कविरमितौजा अजायत। इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥४॥

पुराम्। भिन्दुः। युवा। कविः। अमितऽओजाः। अजायत।
इन्द्रः। विश्वस्य। कर्मणः। धर्ता। वज्री। पुरुऽस्तुतः ॥ ४ ॥

---

१-१. नास्ति वि[1]. २. बिभेम मूको; बिभिमः स्कशोधः. ३-३. नास्ति वि[1] अ कु; कालप्रवृ° मूको; °वृत्तेः साम्ब[1]. ४-४. विः उरे। नोपक्षीयन्ते। पालनानि च। यद्यपि वाजमन्नं गोभिरगहितम्। अभि कम्। स्तोतृभ्यो धनं ददाति। मघं रयिः। मही दाने। अन्नधने अन्येभ्योऽपि दत्ता नोपक्षीयन्ते अस्य प्रभूतत्वात् वि[1] अ कु. †°यन्ते तान्यपि तत्क्षयोनि: अत्यन्त° मूको. ५-५. क्षुरितम् वि[1] अ; °इन्द्रस्य साम्ब[1]. ६. °न्त्युपरि व° साम्ब[1]. ७-७. महनीयस° अ; महनीयं स° साम्ब कु.

स्कन्द० 'पुराम् भिन्दु असुरपुराणां भेत्ता। युवा तरुण । कवि मेधावी। अमितौजा अपरिमितबल अजायत। जन्मन एव प्रभूतादृश इत्यर्थ । क । इन्द्र । कीदृश । विश्वस्य कर्मण धर्ता सर्वस्य कर्मणो धारयिता। यावद्धि किञ्चित् कर्मास्य |साधारणं तद् वृष्ट्यायत्तम्| । वृष्टिश्चेन्द्रायत्ता। अतो वृष्टिद्वारेण सर्वस्य कर्मणो धारयितेन्द्र । वज्री वज्रवान्। पुरुष्टुत बहुभि स्तुत[1] ॥ ४ ॥

वेङ्कट० पुराम् भेत्ता युवा क्रान्तकर्मा[3] अमितबल आसीत् इन्द्र विश्वस्य कर्मण धर्ता वज्री [4]बहुभि स्तुत[4] ॥ ४ ॥

मुद्गल० अयम् इन्द्र उच्यमानगुणयुक्त[5] अजायत सम्पन्न । कीदृशगुणक इति। तदुच्यते। पुराम् असुरपुराणाम्[5] भिन्दु भेत्ता युवा वलीपलितादिवार्धकरहित कवि मेधावी अमितौजा प्रभूतबल विश्वस्य कर्मण कृत्स्नस्य ज्योतिष्टोमादे धर्ता पोषक वज्री यजमानरक्षणार्थं सर्वदा वज्रयुक्त पुरुष्टुत बहुविधं तत्तत्कर्मणि स्तुत. ॥ ४ ॥

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् । त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥५॥

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ।
त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ ५ ॥

स्कन्द० [6]वल (निघ १,१०) इति मेघनाम । त्वम् मेघस्य गोमत उदकवत । अपाव अपावृतवान् अपावृणोषि वा[7] हे इन्द्र! अद्रिव [7] वज्रिन्[7] बिलम् उदकनिर्गमनच्छिद्रम् । किञ्च त्वा देवा अबिभ्युष । अत्रैतरेयिण इतिहासमाचक्षते—'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवादनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति। तथेति तं हनिष्यन्त आद्रवन्। सोऽवन्मा वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति तानभि प्राश्वसात्। तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्। मरुतो हैनं नाजहुः । प्रहर भगवो जहि वीरयस्वेत्येवैनमेता वाचं वदन्त उपातिष्ठन्त (ऐब्रा ३,२०) इति । एतदुच्यते। त्वा देवा मरुत । अबिभ्युष । प्रथमार्थे द्वितीयैषा। अबिभीवांस वृत्रश्वासादभीता तुज्यमानास क्षिप्रनामैतत् (त निघ २,१५)। त्वरमाणा आविषु अविरत्र गत्यर्थ । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्य । अनुगतवन्त[8] ॥ ५ ॥

वेङ्कट० त्वम् वलासुरस्य गृहीतपशो अपावृतवानसि वज्रिन्[9] बिलम्। 'इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तम पशुरासीत्' (तै २,१,५,१) इति ब्राह्मणम्। त्वाम् अग्रे गच्छन्त देवा अबिभीवांस[9] त्वरमाभिधानात् पणिभिर्हिंस्यमाना [10]तत्र जयार्थम्[10] आगता ॥ ५ ॥

---

१ १ असुरपुराणां भेत्ता पुरन्दर इत्युक्त । युवा तरुण । कविर्मेधावी । अपरिमितबल । जायमानो ईदृश । कइन्द्र इन्द्रियवद् । परमैश्वर्यवान् वा। सर्वस्य कर्मणो धारयिता। सर्वाणि कर्माणि वृष्ट्यायत्तान्येव । सा इन्द्रायत्ता। अत एव वज्री वज्रवान् बहुभि स्तुत वि' भ कु † † साधारणं वृष्ट्याक्रमम् मूको २ क्रान्त° वि' ल' भ' १-१ पुरुष्टुत साम' ४ °न गु° वि मं' ५ पुराणाम् वि मं' ६ ६ त्वं हे अद्रिव वलस्य मेघस्य गमा उदकान । समुन्नतो मेघस्य बिलमुदकविनिर्गमनद्वारमपावृणो । त्वि भा । त्वामिति । ऐतरेयब्राह्मणेनोक्तम— 'इन्द्रो वै वृत्रं हनिष्यन् (ऐब्रा ३,२०) इति मत्वाभिनाये । त्वां देवा अबिभीवांस । जवि शत । वृत्रश्वासादभीता गताः' ८ नास्ति वर्ष कु भाग' । ९ अबिभीवांस ल° १० १० तज्जयार्थं साम'; तान् जितार्थं भाग'; भजार्थं वि' मूं'

मुद्गल०. वलनामकः कश्चिदसुरः देवसंबन्धिनीर्गा अपहृत्य कस्मिंश्चिद् बिले गोपितवान्। तदानीमिन्द्रस्तद्बिलं स्वसैन्येन समावृत्य तस्माद्बिलाद् गाः निस्सारयामास। हे अद्रिवः! वज्रयुक्तेन्द्र! त्वम् गोमतः वलस्य गोभिर्युक्तस्य वलनामकस्यासुरस्य सम्बन्धि बिलम् अपावः स्वसैन्यमुखेन अपावृतवानसि। तदानीम् तुज्यमानासः बलेन हिंस्यमानाः देवाः अबिभ्युषः त्वदीयरक्षया बलादभीताः सन्तः त्वाम् आविषुः प्राप्तवन्तः ॥ ५ ॥

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन्। उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥६॥

तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् ।
उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ॥ ६ ॥

स्कन्द० [1]तव अहम् शूर! रातिभिः हेताविदं तृतीया। स्तोतृभ्यो यानि महान्ति दानानि तैर्हेतुभूतैः। तैरुत्साहित इत्यर्थः। अथवा प्रयोजनस्यात्र हेतुत्वेन विवक्षा। तव सोमदानैर्हेतुभूतैः। तुभ्यं सोमं दातुमित्यर्थः। प्रत्यायम् प्रत्यागमम् सिन्धुम् स्यन्दू प्रस्रवणे इत्यस्यैतद्रूपम्। स्यन्दितारं सोमम्। यथोक्तसमासौ यद् गमनं तदपेक्षोऽत्र प्रत्यागमनव्यपदेशः। धात्वर्थानुवादी वा प्रतिशब्दः आगममित्यर्थः। आवदन् आभिमुख्येन वदन्। किम्। सामर्थ्यात् स्तुतीः। न च केवलोऽहम्। किन्तर्हि। अन्येऽप्यृत्विज ऋषयो वा। उपातिष्ठन्त उपस्थितवन्तः त्वां स्तुतिभिः। गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः!। किञ्च विदुष्टे तस्य कारवः ते तस्येत्युभयत्र द्वितीयार्थे षष्ठी। तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। य उक्तगुणः। विदुः जानन्ति त्वां तं कारवः स्तोतृनामैतद् (तु. निघ २,१६)। अन्येऽपि स्तोतारः[1] ॥ ६ ॥

वेङ्कट० 'तव अहम् शूर! रातिभिः त्वत्तः अहं शूर! धनानि गृहीत्वा प्रतिगतवानस्मि। कुतस्त्वयेमानि धनानि लब्धानीति प्रगृह्य† तव धनानां स्यन्दनमाभिमुख्येन वदन् 'इन्द्रादिमानि‡ लब्धानि' इति माम् उपातिष्ठन्त अध्वगाः। गीर्भिर्वननीय! तव¶ तत् कर्म प्राज्ञा जानन्ति। तेनामस्माकं वर्धयातानीति'[2] ॥ ६ ॥

मुद्गल० हे शूर! इन्द्र! तव रातिभिः त्वदीयैर्धनदानैर्निमित्तभूतैः अहम् होता प्रत्यायम् त्वां पुनरागतोऽस्मि। पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन् कर्मणि प्रत्यागमनमित्युच्यते। किं कुर्वन्। सिन्धुम् स्यन्दमानं सोमम्। आवदन् अस्मिन् सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः। हे गिर्वणः! गीर्भिर्वननीयेन्द्र! कारवः कर्तारः ऋत्विग्यजमानाः उपातिष्ठन्त पुरा धनलाभार्थं त्वामुपस्थितवन्तः। उपस्थाय च तस्य तादृशस्यौदार्योपेतस्य[3] ते तव धनदानम् विदुः जानन्ति ॥ ६ ॥

---

१-१. हे शूर तव सोमप्रदानैः हेतुभूतैः प्रत्यागम स्यन्दितारं सोमममाभिमुख्येन स्तुतीर्वदन्। स्यन्दू आस्रवणे। हे इन्द्र! त्वं स्तोतृभ्यः प्रभूतं ददासि। तस्मादहं च सोमं स्तुतीश्चावदन् त्वा प्रत्यागच्छामि स्म। न च केवलोऽहमन्ये ऋत्विज ऋषयो वा स्तुतिभिरुपातिष्ठन्त। स्तुतिसंभक्तः!। किञ्च विदुः ते तस्य त्वा तम्। आपि वस्। अन्येऽपि स्तोतारः त त्वा विदुः। यस्त्वमेवमुक्तगुणः वि° अ कु. † सोमय° मूको. २-२. त्वत्तोऽहं शूर रातिभिः त्वत्तोऽहं शूर धनानि गृहीत्वा प्रत्यागतं स्यन्दितारं सोमं प्रति आभिमुख्येनावदन्। न केवलमहमन्येऽप्युपस्थितवन्तः ऋषयो गीर्भिर्वननीय! य एवम्भूतः तं त्वां विदुः स्तोतारः साम्ब[1]. † प्रगृह्यः साम्ब वि[1]. ‡ °त्विमान्द्राभिनानि वि[1]; साम्ब[11]. ¶ ते तस्य कु; ता तत् साम्ब[12]. ३. °स्यौदा° वि.

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः । विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥७॥

मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।
विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥ ७ ॥

स्कन्द० [1]'माया' (निघ. ३,९) इति प्रज्ञानाम । प्रज्ञाभिः । हे इन्द्र ! मायिनम् अतिसन्धान-प्रज्ञायुक्तम् । शुष्णम् शुष्णनामानमसुरम् । अवातिरः अवतिरतिर्वधकर्मा । हतवान् । यश्चेन्द्रः असि, विदुष्टे तस्य जानन्ति त्वाम् मेधिराः यज्ञवन्तः यज्ञकारिणः । कतमे । सामर्थ्यादस्मदीया ऋत्विजः पुत्रपौत्रादिका वा । पुरुज्ञात्वा भक्तया त्वन्माहात्म्यज्ञानाभियुक्तानां तेषाम् श्रवांसि अन्नानि उत्तिर तिरतिर्वृद्ध्यर्थः । ऊर्ध्वं वर्धय । उत्तरोत्तरवृद्ध्या वर्धयेत्यर्थः[1] ॥ ७ ॥

वेङ्कट० मायाभिः एव[2] इन्द्र ! त्वम् मायाविनं[3] शुष्णासुरं[4] व्यनाशयः । तव तत् कर्म प्राज्ञा जानन्ति । तेषाम् अस्माकं वर्धय अन्नानि ॥ ७ ॥

मुद्गल० हे इन्द्र ! त्वम् मायिनम् नानाविधकपटोपेतम् शुष्णम् भूतानां शोषणहेतुम् एतन्नामकमसुरम् मायाभिः तत्प्रतिकूलैः कपटविशेषैः अवातिरः हिंसितवानसि । मेधिराः मेधावन्तः तस्य तादृशस्य ते तव महिमानम् विदुः जानन्ति । तेषाम् जानतामनुष्ठातॄणाम् श्रवांसि अन्नानि उत्तिर वर्धय ॥ ७ ॥

इन्द्रमीशानमोजसाभि स्तोमा अनूषत । सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥८॥

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत ।
सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥ ८ ॥

स्कन्द० [5]इन्द्रम् ईशानम् सर्वस्य प्रभवन्तम् । केन हेतुना । ओजसा बलेन हेतुना । अभि स्तोमा अनूषत अस्मदीयाः स्तोमा अभिष्टुतवन्तः । यस्य इन्द्रस्य । किम् । उच्यते । सहस्रम् यस्य रातयः स्तोतृभ्यो दानानि । उत वा उतेत्यप्यर्थे । अपि वा सन्ति भूयसीः सहस्रादपि बहुतराः । यः स्तोतृभ्योऽत्यन्तं बहूनि दानानि ददातीत्यर्थः[5] ॥ ८ ॥

वेङ्कट० इन्द्रम् ईश्वरं बलेन सर्वस्य अस्मदीयाः स्तोमाः अभ्यस्तुवन् । सहस्रसंख्यायुक्तानि यस्य दानानि । अपि वा[6] विद्यन्ते भूयांसीति ॥ ८ ॥

मुद्गल० स्तोमाः स्तोतारः ऋत्विजः ओजसा बलेन ईशानम् जगतो नियामकम् इन्द्रम् अभ्यनूषत[7] सर्वत्र स्तुतवन्तः । यस्य इन्द्रस्य रातयः धनदानानि सहस्रम्[8] सहस्रसंख्योपेतानि सन्ति । उत वा अथवा भूयसीः बह्वाः ॥ ८ ॥

इति प्रथमाष्टके प्रथमाध्याये एकविंशो वर्गः ॥

इति प्रथमे मण्डले तृतीयोऽनुवाकः ॥

---

१-१. हे इन्द्र त्व प्रज्ञाभि. अतिसन्धानप्रज्ञायुक्तं शुष्णनामानमसुरं हतवान् । अवतिरतिः वधे । यश्चेन्द्रोऽसि तं त्वां यज्ञवन्तो विदुः । अस्मदीया ऋत्विजः पुत्रादयो वा । त्वन्माहात्म्यात् ज्ञानाभियुक्तानां तेषामन्नधनं-श्रवांसि: ऊर्ध्वं वर्धय । उत्तरोत्तरं वर्धय वि[1] अ तु. २. एव वि[2] अ[1]; नास्ति साम्ब[1]. ३. नास्ति सर्व. ४. शुष्णा॰ साम्ब[1] वि[1]; शुष्णनामानमसुरम् साम्ब[2]. ५-५. इन्द्रं सर्वस्य प्रभवन्तं बलेन हेतुनास्मदीयाः स्तोमाः अभिष्टुतवन्तः । यस्य बहु दानानि सहस्रादपि बहुतरा वा । यः स्तोतृभ्योऽत्यन्तमः वि[1] अ तु. ६. नास्ति साम्ब[2] तु अ[1]. ७. अनूषत वि. ८. नास्ति वि मै[1].

[ १२ ]

अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥१॥

अ॒ग्निम् । दू॒तम् । वृ॒णी॒म॒हे॒ । होता॑रम् । वि॒श्वऽवे॑दसम् । अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतु॑म् ॥ १ ॥

स्कन्द० ''अग्नि मेधातिथिः काण्वः' ( तु.ऋअ १,१२ ) । 'अग्नि दूतम्' इत्यादि मेधातिथिर्नाम कण्वपुत्रोऽपश्यत् । 'अग्नि दूतम् इत्याग्नेयम्'(तु.ऋअ १,१२) । 'अग्निं दूतम्' इत्येतत् सूक्तमग्निदेवतम् । सन्देशेन यः प्रेष्यते स दूत उच्यते । अग्निम् दूतम् देवान् प्रति सन्देशेन गन्तारम् वृणीमहे वयमभ्यर्थयामहे । न केवलं दूतमेव । किन्तर्हि । होतारम् च तेन ह्यधिष्ठितो मानुषो होता हौत्रं कर्तुं शक्नोति नानधिष्ठितः । क्रियाशब्दो वा होतृशब्दः । होतारं च देवानाम् । कीदृशम् । विश्ववेदसम् 'वेदः' (निघ २,१०) इति धननाम । सर्वधनं सर्वप्रज्ञं वा । कं होतारम् । अस्य प्रकृतस्य यज्ञस्य सुक्रतुम् सुकर्माणं सुप्रज्ञं वा[1] ॥ १ ॥

वेङ्कट० मेधातिथिः काण्वः[2] । अग्निम् दूतम् वृणीमहे होतारम् सर्वधनिनम् अस्य यज्ञस्य सुप्रज्ञम् ॥ १ ॥

मुद्गल० चतुर्थेऽनुवाके षट् सूक्तानि । तत्र 'अग्निम् दूतम्' इति द्वादशर्चं प्रथमं सूक्तम् । कण्वपुत्रो मेधातिथिः [3]ऋषिः । गायत्रम् । अग्निर्देवता[3] ॥

अग्निम् कीदृशम् । दूतम् देवदूतम् अस्मिन् कर्मणि वृणीमहे संभजामः । पुनः कीदृशम् । होतारम् देवानामाह्वातारम् विश्ववेदसम् सर्वधनोपेतम् अस्य प्रवर्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुम् शोभनकर्माणम् ॥ १ ॥

अ॒ग्निम॑ग्नि॒ हवी॑मभिः॒ सदा॑ हवन्त वि॒श्पति॑म् । ह॒व्य॒वाहं॑ पुरुप्रि॒यम् ॥ २ ॥

अ॒ग्निम्ऽअ॑ग्निम् । हवी॑मऽभिः । सदा॑ । ह॒व॒न्त॒ । वि॒श्पति॑म् । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽप्रि॒यम् ॥२॥

स्कन्द० [4]अग्निमग्निम् यावान् कश्चिदग्निः सर्वम् । हवीमभिः आह्वानकरणैर्मन्त्रैः सदा सर्वदा हवन्त आह्वयन्ति यष्टारः । विश्पतिम् मनुष्याणां स्वामिनम् हव्यवाहम् हविषां वोढारम् पुरुप्रियम् बहूनामिष्टम्[4] ॥ २ ॥

वेङ्कट० अग्निम् एव हाने.[5] सदा आह्वयन्ति[6] नराः विशां पतिं हविषां वोढारं बहूनां प्रियम् ॥ २ ॥

मुद्गल० अग्निमग्निम् आहवनीयादिभेदेन वीप्सा । तम् हवीमभिः आह्वानकरणैर्मन्त्रैः सदा हवन्त निरन्तरमनुष्ठातार आह्वयन्ति । कीदृशम् । विश्पतिम् विशां प्रजानां होत्रादीनां पालकम् हव्यवाहम् यजमानसमर्पितस्य हविषो देवान् प्रति वोढारम्, अत एव पुरुप्रियम् बहूनां प्रीत्यास्पदम् ॥ २ ॥

अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे । असि॒ होता॑ न॒ ईड्यः॑ ॥ ३ ॥

अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । ज॒ज्ञा॒नः । वृ॒क्तऽब॑र्हिषे । असि॑ । होता॑ । नः॒ । ईड्यः॑ ॥३॥

---

१-१. अग्नि दूतमित्याग्नेयम् । सन्देशकारी दूतः । अग्नि देवान् प्रति सन्देशेनानुगन्तारमर्थयामहे । अग्निनाऽधिष्ठितो मर्त्यो होता हौत्रं कर्तुं शक्नोति । एतदर्थं च देवानामाह्वातारं वा । विश्ववेदसं सर्वधनं सर्वप्रज्ञं वा । अस्य प्रकृतस्य यज्ञस्य सुकर्माणं सुप्रज्ञं वा । एतदर्थं होतारं वृणीमहे वि॰ भ कु. † नास्ति मूको. २. कण्वः वि॰ लभ॰. ३-३. नास्ति वि मै॰. ४-४. यावान् कश्चिदग्निः तं सर्वमाह्वानैः सर्वदा आह्वयन्ति यष्टारः नृणां स्वामिनं हविषां वोढारं बहूनामिष्टम् वि॰ भ कु. ५. अग्ने. वि॰ अ॰. ६. समर्पयन्ति साम्र॰.

वेङ्कट० कविम् अग्निम् उप स्तुहि सत्यधर्माणम् यज्ञे[1] द्युस्थानं[2] रक्षसां घातयितारम्[3] ॥ ७ ॥

मुद्गल० हे स्तोतृसङ्घ ! अध्वरे यज्ञे अग्निम् उप स्तुहि उपेत्य स्तुतिं कुरु । कीदृशम् । कविम् मेधाविनम् सत्यधर्माणम् सत्यवदनरूपेण धर्मेणोपेतम् देवम् द्योतमानम् अमीवचातनम् अमीवानां शत्रूणां घातकम् ॥ ७ ॥

यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व सप॒र्यति॑ । तस्य॑ स्म प्रावि॒ता भ॑व ॥ ८ ॥

यः । त्वाम् । अ॒ग्ने॒ । ह॒विःऽप॑तिः । दू॒तम् । दे॒व॒ । स॒प॒र्यति॑ । तस्य॑ । स्म॒ । प्र॒ऽअ॒वि॒ता । भ॒व॒ ॥ ८ ॥

स्कन्द० [4]यस्त्वाम् हे अग्ने ! हविष्पतिः हविषः स्वामी अस्मदादिर्यजमानः दूतम् हे देव ! सपर्यति परिचरति तस्य स्म प्राविता प्रकर्षेण रक्षिता भव[4] ॥ ८ ॥

वेङ्कट० यः त्वाम् अग्ने ! यजमानः दूतम् देव ! परिचरति, तस्य त्वं प्रकर्षेण रक्षकः भव । स्म इति पूरणम् ॥ ८ ॥

मुद्गल० हे अग्ने ! देव ! यः हविष्पतिः यजमानः देवदूतम् त्वाम् सपर्यति परिचरति तस्य यजमानस्य प्राविता भव स्म प्रकर्षस्य रक्षको भव ॥ ८ ॥

यो अ॒ग्निं दे॒ववी॑तये ह॒विष्मा॑ँ आ॒विवा॑सति । तस्मै॑ पावक मृळय ॥ ९ ॥

यः । अ॒ग्निम् । दे॒वऽवी॑तये । ह॒विष्मा॑न् । आ॒ऽविवा॑सति । तस्मै॑ । पा॒व॒क॒ । मृ॒ळ॒य॒ ॥ ९ ॥

स्कन्द० [5]यः भवन्तम् अग्निम् देववीतये वीतिर्गत्यर्थः अशनार्थो वा । देवान् प्रति गमनाय देवानां वा हविर्भक्षणाय हविष्मान् हविस्संयुक्तो यजमानः आविवासति विवासतिः परिचर्यायाम् (द्र निघ ३,५) आभिमुख्येन परिचरति । तस्मै द्वितीयार्थे चतुर्थ्येषा । तं हे पावक ! शोधयितः ! मृळय †सुखय[5] ॥ ९ ॥

वेङ्कट० यः अग्निम् यज्ञार्थम् हविष्मान् परिचरति तस्मै पावक ! सुखमुत्पादय ॥ ९ ॥

मुद्गल० हविष्मान् हविर्युक्तः यः यजमानः देववीतये देवानां हविर्भक्षणहेतुयागार्थम् अग्निम् आविवासति आङ् समीपे विशेषणागतस्य परिचर्यां करोति । हे पावक ! अग्ने ! तस्मै मृळय तं यजमानं सुखय ॥ ९ ॥

स नः॑ पावक दीदि॒वोऽग्ने॑ दे॒वाँ इ॒हा व॑ह । उप॑ य॒ज्ञं ह॒विश्च॑ नः ॥ १० ॥

सः । नः॒ । पा॒व॒क॒ । दी॒दि॒ऽवः॒ । अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । उप॑ । य॒ज्ञम् । ह॒विः । च॒ । नः॒ ॥ १० ॥

---

1 यज्ञेषु वि॰ अ॰ २ नास्ति वि॰. ३ °तारम् वि॰ अ॰ ४-४ हे अग्ने यस्त्वा हविषः स्वामी अस्मदादिर्यजमानः प्रेष्य भावे दौत्ये वा परिचरति तस्य प्रकर्षेण रक्षिता भव वि॰ अ॰ कु. ५-५ य अग्नि भवन्तम् । वीङ् भक्षणे गतौ च । देवानां हविर्भक्षणाय देवान् प्रति गमनाय वा । हविस्संयुक्तो यजमानः आभिमुख्येन परिचरति । तं हे शोधयितः सुखय । विवासतिः परिचर्यायाम् भृश सुखने वि॰ अ॰ कु. † वो मूको
‡ सुखम् सुखय सा° मै रामभ्ल्प्य मूको

स्कन्द० यं 'त्वामस्तौष्म'[1] [2]सः नः तादर्थ्ये एषा चतुर्थी । अस्माकमर्थे हे पावक ! दीदिवः ! दीप्तिमन् ! अग्ने ! देवान् इह आ वह । केह[1] । उच्यते । उप यज्ञम् हविः च यज्ञस्य हविषश्च समीपे नः अस्माकं स्वभूतस्य[2] ॥ १० ॥

वेङ्कट० सः अस्माकम् पावक ! दीप्त ! अग्ने ! देवान् इह आ वह । हविः च अस्माकं श्रृतम् यज्ञम्[3] उप प्राप्तम् ॥ १० ॥

[3]मुद्गल० हे दीदिवः ! दीप्यमान ! पावक ! शोधक ! अग्ने ! सः त्वम् नः अस्मदर्थम् इह देवयजनदेशे देवान् आ वह । ततः नः अस्मदीयम् यज्ञम् तत्रत्यम् हविश्च उप देवसमीपे प्रापयेति शेषः ॥ १० ॥

स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ॥ ११ ॥

सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा । रयिम् । वीरऽवतीम् । इषम् ॥ ११ ॥

स्कन्द० [4]सः नः अस्मदर्थम् स्तवानः स्तूयमानः अस्माभिः आ भर आहर आनय । केन स्तवानः गायत्रेण गायतेरर्चतिकर्मण एतद्रूपम् । स्तवेन नवीयसा नवतरेण अन्यैरकृतपूर्वेण । किमाहराणि । उच्यते । रयिम् धनम् वीरवतीम् पुत्रसंयुक्ताम् इषम् अन्नं च[4] ॥ ११ ॥

वेङ्कट० सः अस्मभ्यं स्तूयमानः गायत्रेण साम्ना नवतरेण रयिम् वीरयुक्तम् अन्नं च आहर ॥ ११ ॥

मुद्गल० हे अग्ने ! नवीयसा नवतरेण अद्य संपादितेन गायत्रेण[5] गायत्रीछन्दस्केनानेन सूक्तेन स्तवानः स्तूयमानः सः त्वम् नः अस्मदर्थम् रयिम् धनम् वीरवतीम् शूरपुत्रभृत्यपत्ययुक्ताम् इषम् अन्नञ्च आ भर संपादय ॥ ११ ॥

अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः ॥ १२ ॥

अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः । इमम् । स्तोमम् । जुषस्व । नः ॥१२॥

स्कन्द० [6]अग्ने ! शुक्रेण शुक्लवर्णेन शोचिषा ज्वालानामैतत् (तु. निघ १,१६) । ज्वलता । केन । सामर्थ्यादात्मना । विश्वाभिः सर्वाभिश्च देवहूतिभिः देवह्वानैः इमम् स्तोमम् जुषस्व सेवस्व नः अस्माकं स्वभूतम् । स्वयं च श्रृणु देवांश्च सर्वान् श्रावकानाहूय इत्यर्थः[6] ॥ १२ ॥

वेङ्कट० अग्ने ! ज्वलता तेजसा सर्वैश्च देवाह्वानैः शुक्रस्त्वम् इमम् स्तोमम् सेवस्व नः ॥ १२ ॥

---

१-१. नास्ति मूको. २-२. स त्वमस्मदर्थं । हे शोधयितः ! दीप्तिमन्नग्ने !। देवान्नः यज्ञहविषोः समीपे इहानय नः वि॑ अ कु. ३. नास्ति लपं. ४-४. अस्माभिः स्तूयमानः आहर । स्तवनेन नवतरेणान्यैरकृतपूर्वेण । धनं पुत्रवन्तमन्नञ्चानय नः वि॑ अ कु. ५. नास्ति वि. ६-६. अग्ने आत्मना शुक्लवर्णेन ज्वलतात्मना सर्वाभिर्देवाह्वानैः इमां स्तुतिं सेवस्व । अस्मत्स्वभूताम् । त्वं श्रुत्वा सर्वान् देवान् श्रावयित्वा आदय इत्यर्थः वि॑ अ कु.

मुद्गल० हे अग्ने ! शुक्रेण शोचिषा त्वदीयधवलवर्णदीप्त्या विश्वाभिः देवहूतिभिः 'त्वत्कृतसर्वदेवताह्वान-साधनस्तोत्रैश्च युक्तस्त्वम् नः अस्मदीयम् इमम् स्तोमम् स्तोत्रविशेषम् जुषस्व सेवस्व ॥ १२ ॥

इति प्रथमाष्टके प्रथमाध्याये त्रयोविंशो वर्गः ॥

[ १३ ]

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च ॥ १ ॥

सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ॥१॥

स्कन्द० '[1]सुसमिद्ध.' द्वादशर्चमाप्रीसूक्तम् । सर्वत्र चाप्रीसूक्ते यथाक्रममेकैकस्यामृचि आसां देवतानामेकैका देवता । इध्मः, तनूनपात्, नराशंस, इळः, बर्हिः, देवीर्द्वारः, उषासा नक्ता, दैव्या होतारा, तिस्रो देवी, त्वष्टा, वनस्पतिः, स्वाहाकृतय इति । इध्यतेऽसावितीध्मः समिन्धनसम्बद्धोऽग्निरुच्यते । सुसमिद्धः सुष्ठु दीप्तः नः अस्माकं स्वभूताय आ वह देवान् हे अग्ने ! हविष्मते यजमानाय । मा च वाक्षीरेव केवलम् हे होत[2] ! पावक ! यक्षि च यज च[3] ॥ १ ॥

वेङ्कट० आप्रीणामग्न्यादयो देवताः । समिदादीनां यज्ञाङ्गानामुक्तिसाम्यमिति । सुसमिद्धः त्वम् अग्ने ! अस्माकम् अस्मै[4] यजमानाय देवान् आ वह । होतः ! शोधयितः ! तान् यज च ॥ १ ॥

मुद्गल० 'सुसमिद्धः' इति द्वादशर्चं द्वितीयं सूक्तम् । काण्वो[5] मेधातिथिः ऋषिः[6] । गायत्रम् । इध्मोऽग्निः समिद्धोऽग्निर्वा तनूनपात् नराशंस इळो बर्हिर्देवीर्द्वार उषासा नक्ता दैव्यौ[7] होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यः त्वष्टा वनस्पतिः स्वाहाकृतिरिति क्रमेण प्रत्यृचं देवताः । आप्रीसूक्तम् ।

हे अग्ने ! सुसमिद्धः एतन्नामकस्त्वम् नः अस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थम् देवान् आ वह । हे पावक ! शोधक ! होतः ! होमनिष्पादकाग्ने ! यक्षि च यज च ॥ १ ॥

मधुमन्तं तनूनपाद् यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये ॥ २ ॥

मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥ २ ॥

स्कन्द० [8]मधुमन्तम् मधुस्वादैर्मृष्टैर्हविर्भिः तद्वन्तं हे तनूनपात् ! आपोऽत्र तन्व उच्यन्ते अन्तरिक्षे तत-त्वात् । तासां नपात् पौत्रः । कोऽसौ । अग्निः । कथम् । अद्भ्य ओषधिवनस्पतयो जायन्ते । ओष-धिवनस्पतिभ्य एष जायत इति तस्य सम्बोधनम् हे तनूनपात् ! यज्ञम् देवेषु सामीपिक-

1. सोऽग्निरत्र मूको. २-२. आप्रीगतानि दश । तेषामाद्यमिदम् । अग्निरेव देवतात्र सर्वत्र । शुनका-त्रिवसिष्ठवाध्र्यश्वदृष्टानां द्वितीया नाराशंसी । मेधातिथिदीर्घतमसोस्तृतीया । सा नैवान्येषाम् । इध्यतेऽसाविनीध्मः । समिन्धनसंबद्धः । सुसमिद्धः सुष्ठु दीप्तोऽग्नि. । हे अग्ने देवानस्मत्स्वभूताय आवह हविष्मते यजमानाय । केवलेनावाहनेनैव नालम् । हे होतः ! पावक ! यज च । होत्रं कुर्वित्यर्थः वि[1] अ कु. ३. नास्ति कु साम्ब[2]. ४. कण्वो मै[2]. ५. नास्ति वि मै[2]. ६. दैव्या वि मै[2]. ७-७. हे तनूनपात् । आपस्तन्वः अन्तरिक्षे विस्तृतत्वात् । तासां पौत्र । कस्मादिति । अद्भ्य ओषधिवनस्पतयो जायन्ते । तेभ्योऽग्निर्जायते । तस्मात्तनूनपादग्नि । हे तनूनपात् नः यज्ञं वि[1] अ कु.

[1]मिदमधिकरणम् । गङ्गायां गाव इति यथा । देवसमीपे अस्माकं स्वभूतम् कवे ! मेधाविन् ! अद्य कृणुहि कुरु । देवसमीपं नयेत्यर्थः । किमर्थम् । वीतये कामाय भक्षणाय वा । यज्ञं† कथं देवाः कामयेरन् हवींषि वा भक्षयेयुरित्येवमर्थम्[1] ॥ २ ॥

वेङ्कट० आज्यवन्तम् तनूनपात् ! यज्ञम् हविः देवेषु अस्माकम् कवे ! अद्य कृणु अशनाय ॥ २ ॥

मुद्गल० हे कवे ! मेधाविन् ! अग्ने ! तनूनपात् ! एतन्नामकस्त्वम् अद्य अस्मिन् दिने नः अस्मदीयम् मधुमन्तम् रसवन्तम् यज्ञम् हविः वीतये भक्षणार्थम् देवेषु कृणुहि कुरु, प्रापय इत्यर्थः ॥ २ ॥

नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ॥ ३ ॥

नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये । मधुऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥

स्कन्द० [2]नराशंसम् शंसिः स्तुत्यर्थः । नरैः प्रशस्यत इति नराशंसोऽग्निः । तं नराशंसम् । इह मनुष्यलोके । प्रियम् इष्टम् । मनुष्याणां प्रियमित्यर्थः । अस्मिन् यज्ञे उपह्वये मधुजिह्वम् मधुस्वादेषु हविष्षु जिह्वा यस्य स मधुजिह्वः । नित्यं मृष्टानां हविषां भक्षयितेत्यर्थः । अथवा 'जिह्वा' (निघ १,११) इति वाङ्नाम । मध्वी जिह्वा यस्य स मधुजिह्वः । होतृत्वाद्धयग्नेर्देवतानां स्तावकत्वादस्ति मधुवाक्तरम् । सुभगवचनमित्यर्थः । हविष्कृतम् हविषां कर्तारम्[2] ॥ ३ ॥

वेङ्कट० नरैः शंसनीयमग्निम् प्रियम् इह उपह्वये । अस्मिन् यज्ञे इति विशदवचनम् । मादयितृजिह्वं[3] हविषां कर्तारम् ॥ ३ ॥

मुद्गल० इह देवयजनदेशे अस्मिन् प्रवर्तमाने यज्ञे नराशंसम् एतन्नामकमग्निम् उप ह्वये आह्वयामि । कीदृशम् । प्रियम् देवानां प्रीतिहेतुम् । मधुजिह्वम् मधुरभाषिजिह्वोपेतम् । हविष्कृतम् हविषो निष्पादकम् ॥ ३ ॥

अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हितः ॥ ४ ॥

अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह । असि । होता । मनुःऽहितः ॥४॥

स्कन्द० [4]ईडेः स्तुतिकर्मण एतद् रूपम् । धातुपाठस्तुतिसम्बन्धोऽग्निः । हे अग्ने ! सुखतमे रथे 'सुखै रथेभिरूतये' ( ऋ ५,५,२ ) †'सुयुग्भिरश्वैः सुवृता रथेन' (ऋ ३,५८,३ ) इति तुल्यार्थेऽन्यत्र तृतीयानिदर्शनात् तृतीयार्थे सप्तम्येषा । सुखतमे रथे सुखतमेन रथेन देवान् ईळितः स्तुतः अस्माभिः आवह[4]

---

1-1. देवसमीपं नय । मधुमन्तं स्वादवन्तम् । देवेष्विति समीपार्थे । गङ्गायां घोष इतिवत् । मेधाविन् ! अद्य कुरु नय कामाय भक्षणाय वा । यज्ञं देवाः कथं कामयेरन् हवींषि वा भक्षयेयुरित्यर्थं तत्समीपकरणम् वि[1] अ कु. † वीतं यज्ञम् मूको. 2-2. नराशंसः नरैः शस्यत इति । तं नराशंसमिह नृलोके प्रियं नृणामिष्टमस्मिन्यज्ञे उपह्वये । स्वादेषु हविष्षु जिह्वा यस्य स नित्यं मृष्टानां हविषां भक्षयितारम् । जिह्वा वाग्वा । मध्वी जिह्वा यस्य । होतृत्वादग्निः देवतानां स्तावकः । तस्मान्मधुवाक्तमम् । हविषां कर्तारम् वि[1] अ कु. 3. मदयि° वि[1] लपं. 4-4. ईळुपाठस्तुतिसंबन्धः । हे अग्ने निरतिशयसुखे । टापि डिः, सुखतमेन रथेन देवान् अस्माभिः स्तुतः आवह वि[1] अ कु. † हविष्मैरश्वैः मूको.

[1]द्धि कारणम् । असि होता मनुर्हित मनुना प्रजापतिना निहित स्थापित । मनुष्यपर्यायो वा मनुशब्द । मनुष्येषु निहित । उपकारक इत्यर्थ [1] ॥ ४ ॥

वेङ्कट० अग्ने ! सुखतमे रथे स्थापयित्वा देवान् स्तुतस्त्वम् आ वह । असि त्वम्[2] होता [3]मनुष्यैर्युरो निहित[3] ॥ ४ ॥

मुद्गल० इद्शब्दाभिधेयपरत्वमत्र सूचयितुमीळित इति विशेषणम् । इद्शब्दाभिधेय ! हे अग्ने ! ईळित अस्माभि स्तुत सन् सुखतमे अतिशयेन सुखहेतौ कस्मिंश्चिद् रथे देवान् स्थापयित्वा कर्मभूमौ आ वह मनुर्हित मनुना मन्त्रेण हितोऽत्र स्थापितस्त्वम् होता देवानामाह्वाता असि ॥ ४ ॥

स्तृणीत बर्हिरानुषग् घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥ ५ ॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः । यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

स्कन्द० [4]स्तृणात इति भूते काले व्यत्ययेनाय लोट् । स्तृतवन्त, स्त बर्हि दर्भान् । आनुषक् आनुषगिति नामानुपूर्व्यस्य । आनुपूर्व्येण घृतपृष्ठम् घृत पृष्ठे यस्य स घृतपृष्ठ । बर्हिषो ह्युपरि हविर्लक्षण घृत साद्यते । अथवा 'घृतम्' (निघ १,१२) इत्युदकनाम । तेन स्पृष्टं घृतपृष्ठ प्रोक्षणीभि प्रोक्षितमित्यर्थ । हे मनीषिण ! मेधाविनोऽध्वर्यव ! यत्र बर्हिषि अमृतस्य अमृतसदृशस्यात्यन्तमृष्टस्य हविष चक्षणम् दर्शनं सान्निध्य सत. । यत्र सादित हविर्दृश्यत इत्यर्थ । अग्निर्वा अमरणधर्मत्वादमृत । तस्य यत्र दर्शनम् । सामीपिक त्विदमधिकरणम् । समीपेऽग्निर्दृश्यत इत्यर्थ [4] ॥ ५ ॥

वेङ्कट० स्तृणीत बर्हि अनुषक्तम्[5] उपरिस्थितघृत[6] प्राज्ञा ! यत्र अमृत हवि [7] दृश्यते बर्हिषि ॥ ५ ॥

मुद्गल० हे मनीषिण ! बुद्धिमन्त ऋत्विज ! बर्हि दर्भम् स्तृणीत वेदेरुपरि आच्छादयत । अत्रापि बर्हिर्नामकोऽग्नि सूच्यते । कीदृश बर्हिराम्नरणीयम् आनुषक् अनुक्रमण सतत परस्पर सबद्धम् घृतपृष्ठम् [8]घृतपूर्णाना स्रुचा बर्हिष्यासादितत्वात् घृत पृष्ठे उपरिभागे यस्य बर्हिषस्तद् घृतपृष्ठम्[8] । यत्र यस्मिन् बर्हिषि अमृतस्य अमृतसमानस्य घृतस्य चक्षणम् दर्शन भवति ॥ ५ ॥

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ॥ ६ ॥

वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः । अद्य । नूनम् । च । यष्टवे ॥ ६ ॥

---

1-1 यस्माच्च होतासि । मनुना प्रजापतिना निहित स्थापित । मनुष्येषु निहितो वा । [illegible] मनुष्य इति मनु वि' भ कु . २ नास्ति मास्व'. ३-३ मनुष्यपुरोहित मास्व'. ४-४ स्तृणन् दर्भान् । आनुषगिति नामानुपूर्व्यस्य । आनुपूर्व्येण । घृतपृष्ठम् । [illegible] बर्हिषो ह्युपरि हविर्लक्षण घृत साद्यते । तेन घृतपृष्ठम् । घृतपृष्ठं वा । प्रोक्षणीभिरद्भिरभिप्रोक्षितम् । घृतपृष्ठमेव घृतपृष्ठम् । हे मेधाविनोऽध्वर्यव ! यत्र बर्हिषि [illegible] अमृतसदृशस्य हविषो [illegible] । यत्र सादितं हवि दृश्यते । अग्निर्वा अमरणत्वा [illegible] । [illegible] । [illegible] वि' भ कु. ५ आनुष° वि' स्थं. ६ घृतम् वि' स्थं. ७ नास्ति मास्व'. ८-८ नास्ति वि मै'.

स्कन्द० विश्रयन्ताम् विवृता भवन्तु ऋतावृधः यज्ञस्य वर्धयित्र्यः द्वारः[1] यज्ञगृहद्वारो वा ज्वाला वा अग्नेः। ता हि[1] तस्य द्वारभूताः[2]देवीः दान्यः दीप्ता वा। असश्चतः सश्चतिः सङ्गार्थः। असज्यमानाः। अद्य नूनम् च नूनं शब्दोऽत्र समुच्चयार्थचशब्दश्रुतेः अद्य इत्येतेन च सहचरार्थस्य समुच्चयार्थस्य योग्यत्वात् पुराशब्दार्थे। अद्य च पुरा च। इदानीं पूर्वस्मिंश्च काल इत्यर्थः। यष्टवे यष्टुं यागार्थमित्यर्थः[3] ॥ ६ ॥

वेङ्कट० यज्ञगृहद्वारः विवृता भवन्तु यज्ञस्य [4]वर्धयित्र्यः असक्ताः[4] अद्य च श्वश्च यागाय[5]। नूनम् इति अनेकार्थम्[6] ॥ ६ ॥

मुद्गल० द्वारः यज्ञशालाद्वाराणि द्वाराभिमानिन्योऽग्निविशेषमूर्तयः वि श्रयन्ताम् कवाटोद्घाटनेन विश्रियन्ताम्। कीदृश्यः। ऋतावृधः ऋतस्य यज्ञस्य वर्धयित्र्यः देवीः द्योतमानाः असश्चतः असश्चन्त्यः, उद्घाटनेन हेतुना प्रवेष्टृपुरुषसङ्गरहिताः। किं प्रयोजनमिति। तदुच्यते[7]। अद्य अस्मिन् दिने नूनम् अवश्यम् यष्टवे यष्टुम्। चकारात् दिनान्तरेऽपीति ॥ ६ ॥

इति प्रथमाष्टके प्रथमाध्याये चतुर्विंशो वर्गः ॥

नक्तोषासा सुपेशसास्मिन् यज्ञ उप ह्वये। इदं नो बर्हिरासदे ॥ ७ ॥

नक्तोषसा। सुऽपेशसा। अस्मिन्। यज्ञे। उप। ह्वये। इदम्। नः। बर्हिः। आऽसदे ॥७॥

स्कन्द० "नक्ता' ( निघ १,७ ) इति रात्रिनाम। उषा आपररात्रिकं ज्योतिः। नक्ता चोषाश्च नक्तोषसा सुपेशसा 'पेशः' ( निघ ३,७ ) इति रूपनाम। सुरूपे अस्मिन् यज्ञे उपह्वये। किमर्थम्। इदम् नः बर्हिः इदं बर्हिः इति षष्ठ्यर्थे द्वितीया। अस्य अस्माकं स्वभूतस्य च बर्हिषः आसदे आसदनाय। अत्र बर्हिष्युपवेष्टुमित्यर्थः[8] ॥ ७ ॥

वेङ्कट० अहोरात्रे सुरूपे[8] अस्मिन् यज्ञे उपह्वये। तयोरासदनाय इदम् अस्माकम्[10] बर्हिः स्तीर्णम् ॥ ७ ॥

मुद्गल० नक्तशब्दः उषःशब्दश्च लौकिककालविशेषवाचिनौ[11]। इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते। नक्तोषासा नक्तोषोनामिके वह्निमूर्ती अस्मिन् प्रवर्तमाने यज्ञे यज्ञकर्मणि उपह्वये आह्वयामि। किमर्थम्। नः अस्मदीयम् इदम् वेद्यामास्तीर्णम् बर्हिः दर्भम् आसदे आसत्तुं प्राप्तुम्। कीदृश्यौ। सुपेशसा शोभनरूपयुक्ते ॥ ७ ॥

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी। यज्ञं नो यक्षतामिमम् ॥ ८ ॥

ता। सुऽजिह्वौ। उप। ह्वये। होतारा। दैव्या। कवी इति। यज्ञम्। नः। यक्षताम्। इमम् ॥८॥

---

१. स्तर्तो मध्ये देवताभिः वि[1] अ कु. २. नास्ति वि[1] अ कु. ३-३. दान्यः दीप्ता वा। असज्यमानाः। राश्च सङ्गे। नूनं चार्थे। समुच्चयद्वित्वात् अद्य इत्यस्य सहचरितत्वाच्च पुराशब्दः अध्याहार्यः। इदानीं च पूर्वस्मिंश्च काले यष्टुम् वि[1] अ कु. ४-४. °यित्रे अन्यासक्ता. वि[1] साम्ब[२-१]. ५. योगाय वि[1]. ६. °र्थम् देवाः वि[1,3] स्तर्प अ'. ७. वेङ्० नि. ८-८. नक्ता रात्रिः। उषा आपररात्रिकं ज्योतिः। ते नक्तोषसा। सुरूपे। 'रूपं वर्णो मतिः पेशः' इति अस्मिन् यज्ञे उपह्वये। अम् इति। न अस्य बर्हिषः आसदनाय। अत्र बर्हिषि उपवेष्टुम् वि[1] अ कु. ९. सरूपे साम्ब[1]. १०. अस्तस्माकं वि[1] स्तर्प. ११. लौकिकवि° वि.

स्कन्द० 'तच्छन्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः। यौ सर्वमनुष्यैर्नित्यमाहूयेते तौ सुजिह्वौ 'जिह्वा' (निघ १,११) इति वाङ्नाम। सुवाचौ शोभनजिह्वाख्यावयवौ वा उपह्वये होतारा दैव्या देवानां स्वभूतौ। कतमौ। इमं चाग्निमग्नुं च मध्यमम्। कीदृशौ। कवी मेधाविनौ। तौ चाहूतौ सन्तावागत्य यज्ञम् नः यक्षताम्[1]। होतृत्वेनावस्थाय यजतामिमम् ॥ ८ ॥

वेङ्कट०[1] अयञ्चाग्निरसौ च मध्यमः तौ शोभनवाचौ उपह्वये। दैव्यौ होतारौ कवी यज्ञम् नः यजताम् इमम् ॥ ८ ॥

मुद्गल० ता तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी उप ह्वये आह्वयामि। नः अस्मदीयम् इमम् यज्ञम् यक्षताम्, तावुभौ यजतामनुतिष्ठताम्। कीदृशौ। सुजिह्वा शोभनजिह्वोपेतौ प्रियवचनौ[2] होतारा होमनिष्पादकौ दैव्या देवसंबन्धिनौ। अत एवेमावग्नी दैव्यहोतृनामकौ कवी मेधाविनौ ॥ ८ ॥

इळा सर॑स्वती म॒ही ति॒स्रो दे॒वीर्म॑यो॒भुवः॑। ब॒र्हिः सी॑दन्त्व॒स्रिधः॑ ॥ ९ ॥

इळा॑। सर॑स्वती। म॒ही। ति॒स्रः। दे॒वीः। म॒यः॒ऽभुवः॑। ब॒र्हिः। सी॒द॒न्तु॒। अ॒स्रिधः॑ ॥ ९ ॥

स्कन्द० [3]महीशब्दोऽत्र महत्त्वगुणयोगाद् भारत्यां वर्तते। इळा सरस्वती मही च भारती एता. तिस्रः देवीः मयोभुवः 'मयः' (निघ ३,६) इति सुखनाम। भुविश्च सामर्थ्यादन्तर्णीतण्यर्थः। सुखस्य भावयित्र्य। बर्हिः अस्मदीयं सीदन्तु अस्रिधः सेधतिः क्षयार्थः। क्षयवर्जिताः[3] ॥ ९ ॥

वेङ्कट० इळा सरस्वती महती च भारती इति[4] तिस्र देव्यः सुखस्य भावयित्र्यः बर्हिः सीदन्तु अक्षयाः ॥ ९ ॥

मुद्गल० इळा सरस्वती मही महत्त्वगुणयुक्ता भारती। अन्येषु आप्रीसूक्तेषु सहशेष्विळा सरस्वती भारतीत्यां-म्नातत्वात्। इळादिशब्दाभिधेया वह्निमूर्तयः तिस्रः देवीः दीप्यमानाः बर्हिः वेद्यामास्तीर्णम् सीदन्तु प्राप्नुवन्तु। कीदृश्यः। मयोभुवः सुखोत्पादिकाः अस्रिधः शोषणरहिताः ॥ ९ ॥

इ॒ह त्वष्टा॑रमग्रि॒यं वि॒श्वरू॑पमु॒प ह्व॑ये। अ॒स्माक॑मस्तु॒ केव॑लः ॥ १० ॥

इ॒ह। त्वष्टा॑रम्। अ॒ग्रि॒यम्। वि॒श्वऽरू॑पम्। उप॑। ह्व॒ये॒। अ॒स्माक॑म्। अ॒स्तु॒। केव॑लः ॥ १० ॥

स्कन्द० [5]त्वष्टा नाम देवानां तक्षा अभियौ। 'निपेर्दैवनायामकारश्चोपधाया अनिट्त्वञ्च' (पावा ३,२,१३५) इति। इह यज्ञे त्वष्टारम् अग्रियम् अग्रशब्दः प्राधान्यवचनः। अस्मिन् भवमग्रियं प्रधानभूतमित्यर्थः। विश्वरूपम् 'विश्वम्' (निघ ३,१) इति बहुनाम। बहुरूपम्। अतिशयवन्महाभाग्ययोगादस्ति देवतानां बहुरूपत्वम्। उपह्वये उपहूतश्च सन् अस्माकम् एव केवलम् अस्तु। कः। सामर्थ्यात् स्तुत्यो यष्टव्यश्च[5] ॥ १० ॥

---

1-1. यौ सर्वैर्नृभिराहूयेते सुवाचौ शोभनजिह्वावयवौ वा। देवाना होतारौ पार्थिवमध्यमौ अग्नी मेधाविनौ। आहूतौ तौ आगत्यास्माकं यज्ञम् वि॰ भ कु. २. वचनौ वि. ३-३. इळा सर स्ती मही भारती अन्या महत्त्वात्। तिस्रः देवीः सुखस्य भावयित्र्यः बर्हिषि सीदन्तु क्षयवर्जिताः वि॰ भ कु. ४. नास्ति सात्र कु वि[??]. ५-५. त्वष्टा देवानां अभियौ। 'निपेरुपधाया अकारो देवनायामनिट्त्वञ्च'। इह यज्ञे त्वष्टारं मुख्यं बहुरूपम्। अतिशयवन्महाभाग्ययोगादस्ति देवानां बहुरूपत्वम्। उपह्वये। उपहूतः सन् अस्माकमेव केवलमस्तु। स्तुत्यो यष्टव्यश्च वि॰ भ कु.

वेङ्कट० इह त्वष्टारम् मुख्यं येन 'विश्वानि रूपाणि[1] विक्रियन्ते[2] तम् उपह्वये सः अस्माकम् अस्तु केवलः 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' (तै १,५,९,१-२) इति ब्राह्मणम् ॥ १० ॥

मुद्गल० त्वष्टारम् त्वष्टृनामकमग्निम् इह कर्मणि उपह्वये। कीदृशम्। अग्रियम् श्रेष्ठम् विश्वरूपम् बहुविधरूपोपेतम्। सः अस्माकम् केवलः असाधारणः अस्तु ॥ १० ॥

अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः । प्र दा॒तुर॑स्तु॒ चेत॑नम् ॥ ११ ॥

अव॑ । सृ॒ज । व॒न॒स्प॒ते॒ । देव॑ । दे॒वेभ्यः॑ । ह॒विः । प्र । दा॒तुः । अ॒स्तु॒ । चेत॑नम् ॥ ११ ॥

स्कन्द० [3]वनान्युदकानि वृक्षा वा तेषां पाता वनस्पतिः अग्नि । कथमुदकानां वृक्षाणां वा पाताऽग्नि । सति सामर्थ्ये तेषामदाहकत्वाद् हविर्नयनजन्यवृष्टिद्वारेण[†] वा । यूपो वा वनस्पतिविकारत्वात् (द्र. या ८,१७)। अवसृज अवपूर्वः सृजतिर्दाने। हे वनस्पते! देव! देवेभ्यः हविः इदमस्मदीयम्। प्र दातुः अस्तु प्रकर्षेणास्तु दातुर्यजमानस्य चेतनम् ज्ञानम्[3] ॥ ११ ॥

वेङ्कट० अवसृज वनस्पते! प्रयच्छ[4] देव! देवेभ्यः हविः प्रकर्षेण अस्तु[5] दातुः[6] यजमानस्य प्रज्ञापनं[7] देवेषु त्वया निवेदितस्य ॥ ११ ॥

मुद्गल० हे वनस्पते! एतन्नामकाग्ने! देव! हविर्भुग्भ्यः देवेभ्यः अस्मदीयम् हविः अवसृज समर्पय इत्यर्थः। प्र दातुः यजमानस्य चेतनम् परलोकविषयं[7] विज्ञानं त्वत्प्रसादात् अस्तु ॥ ११ ॥

स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे । तत्र॑ दे॒वाँ उप॑ ह्वये ॥ १२ ॥

स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न॒ । इन्द्रा॑य । यज्व॑नः । गृ॒हे । तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये॒ ॥ १२ ॥

स्कन्द० [8]स्वाहाकारसम्बन्धादुत्तमप्रयाजदेवताः स्वाहाकृतय उच्यन्ते। याश्च यत्र यक्ष्यन्ते तास्तत्रोत्तमप्रयाजस्य देवता। स्वाहाशब्दो होमप्रदाने वर्तते। सुहुतशब्दपर्यायो वा। यज्ञम् इति सप्तम्यर्थे द्वितीया। यक्ष्यमाणाभ्यो देवताभ्यो हविःप्रदानं सुहुतं वा हविः उत्तमप्रयाजाख्ये यज्ञे कृणोतन कुरुताध्वर्यवः[8]! । क। इन्द्राय यज्वनः गृहे [†]यक्ष्यमाणदेवतानां संस्कारार्थत्वादुत्तमस्य प्रयाजस्य, अनैन्द्रे च पशाविन्द्रस्यायक्ष्यमाणत्वात्[†] इन्द्रायेत्येष तादर्थ्यचतुर्थ्यन्तपरः यज्वनो गृह इत्येतेन सम्बध्यते। न पूर्वेण। इन्द्रार्थं यज्वः स्वभूते यज्ञगृहे[9]। तत्र अहमपि यक्ष्यमाणान् देवान् उपह्वये ॥ १२ ॥

---

१-१. विश्वरू॰ साम्व[1]. २. क्रिय॰ वि[1,2] क. ३-३. हे वनस्पते देव देवेभ्यो हविर्देहि। दातुर्नाम यजमानस्य प्रकर्षेणास्तु ज्ञानम् वि[1] अ कु. † हविर्नयनेति नयनज्य॰ मूको. ४. यच्छ साम्ब कु. ५. नास्ति साम्ब[2]. ६ प्रस्रवने साम्ब[2] अ. ७. ॰विषय॰ वि. ८-८. 'आग्नेयं पञ्चमे स्वाहामु स्वाहामुम्' (आश्व १,५,२४) इत्याश्वलायन। यादच यत्र यक्ष्यन्ते ता स्वाहाकृतय। स्वाहाशब्दः होमप्रदाने वा सुहुतशब्दपर्यायो वा। यज्ञे अम् कौ। यक्ष्यमाणाभ्यो देवताभ्यः होमप्रदानं सुहुतं वा हविः उत्तमप्रयाजाख्ये यज्ञे कुरुत अध्वर्यवः। क कुर्म। इन्द्रार्थं यज्वर्थेन॰ वि[1] अ कु. †-† ॰तानां संस्कारार्थं त्वदुत्तमस्य प्रयाजस्यानैन्द्रे च पशाविन्द्रस्य यक्ष्यमाणत्वात् मूको.

वेङ्कट० स्वाहा कृणुत हविः। इन्द्राय यजमानस्य गृहे तत्र अहम् देवान् उपह्वये इन्द्रपुरोगमानिति ॥ १२ ॥

मुद्गल० स्वाहाशब्दो हविःप्रदानवाची सन् घृतप्रधानकर्मविशेषं लक्षयति। तदग्निसंपादितम् यज्ञम् इन्द्राय इन्द्रतुष्ट्यर्थम् यज्वनः यजमानस्य गृहे ऋत्विजः कृणोतन कुरुत। तत्र यज्ञे देवान् उपह्वये ॥ १२ ॥

इति प्रथमाष्टके प्रथमाध्याये पञ्चविंशो वर्गः ॥

[ १४ ]

ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये। देवेभिर्याहि यक्षि च ॥ १ ॥

आ। एभिः। अग्ने। दुवः। गिरः। विश्वेभिः। सोमऽपीतये। देवेभिः। याहि। यक्षि। च ॥ १ ॥

स्कन्द० [1]"ऐभिरग्ने वैश्वदेवतम्"। ऐभिरित्येतद् बहुदैवतं सूक्तम्। आ इत्युपसर्गो याहि इत्याख्यातेन सम्बन्धयितव्यः। एभिः विश्वेभिः देवेभिः इति सहयोगलक्षणा तृतीया तानि समानाधिकरणानि। एतैः सर्वैर्देवैः सह अग्ने! दुवः गिरः परिचर्यां स्तुतीश्च प्रति सोमपीतये सोमपानार्थम् आ याहि। यक्षि च[1] यज चागतान् देवान् ॥ १ ॥

वेङ्कट० आ याहि एभिः सर्वैः[2] देवैः अस्माकं परिचर्यां स्तुतीश्च सोमपानाय। यज[3] च तान् देवान् ॥ १ ॥

मुद्गल० 'ऐभिरग्ने' इति द्वादशर्चं तृतीयं सूक्तम्। काण्वो[4] मेधातिथिः ऋषिः[5]। गायत्रं छन्दः[5]। वैश्वदेवम् ॥

हे अग्ने! एभिः अस्मिन् यज्ञे सम्भावितैः विश्वेभिः देवेभिः सर्वैर्देवैः सह सोमपीतये सोमपानोपेतयागार्थम् दुवः अस्मदीयां परिचर्याम् गिरः अस्मदीयाः स्तुतीश्च प्रति आ याहि आगच्छ। यक्षि आगत्य यज च ॥ १ ॥

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः। देवेभिरग्न आ गहि ॥ २ ॥

आ। त्वा। कण्वाः। अहूषत। गृणन्ति। विप्र। ते। धियः। देवेभिः। अग्ने। आ। गहि ॥ २ ॥

स्कन्द० [6]आ त्वा कण्वाः अहूषत आह्वयन्ति त्वां कण्वाः। 'कण्वः' (निघ ३, १५) इति मेधाविनाम। मेधाविनः ऋत्विजः। अथवा कण्वा इति मेधातिथिरात्मानं प्रति सम्बन्धेनाह। एकस्मिन्नेव चात्मनीदं बहुवचनं पुत्रपौत्रापेक्षया वा। मत्प्रभृतयः कण्वपुत्रा इत्यर्थः। गृणन्ति च हे विप्र! मेधाविन्! ते तव धियः कर्माणि प्रज्ञा वा। एतज्ज्ञात्वा देवेभिः देवैः सह अग्ने! आ गहि आगच्छ[6] ॥ २ ॥

वेङ्कट० आहूतवन्तः त्वाम् कण्वाः। उच्चारयन्ति च[7] मेधाविन्! तव कर्माणि। देवैः अग्ने[8]! आगच्छ ॥ २ ॥

---

1-1. इदं सूक्तं बहुदैवतम् हे अग्ने एभिः सर्वदेवैः परिचर्यां स्तुतीश्च प्रति सोमपानार्थमायाहि वि[1] अ कु. 2. सर्वैः साम्ब[1]. 3. नास्ति साम्ब[2]. 4. कण्वो° वि. 5-5. नास्ति वि मै[2]. 6-6. आह्वयन्ति त्वां कण्वपुत्रा मेधाविनः ऋत्विजो वा। आत्मनि गणेषु च जस् पुत्रपौत्रादय। हे मेधाविन्नग्ने तव कर्माणि प्रज्ञा वा गृणन्ति। स त्वं देवैरागच्छ वि[1] अ कु. † प्रतिज्ञा मूको. 7. नास्ति वि[1] साम्ब[1]. 8. नास्ति साम्ब[1].

मुद्गल० हे विप्र ! मेधाविन् ! अग्ने ! कण्वाः मेधाविनः ऋत्विजः त्वा त्वां यज्ञनिष्पादकम् आ अहूषत आह्वयन्ति । तथा ते धियः त्वदीयानि कर्माणि गृणन्ति कथयन्ति । ततो हे अग्ने ! देवेभिः देवैस्सह आ गहि आगच्छ ॥ २ ॥

**इ॒न्द्र॒वा॒यू बृह॒स्पतिं॑ मि॒त्राग्निं पू॒षणं॒ भग॑म् । आ॒दि॒त्यान् मारु॑तं ग॒णम् ॥ ३ ॥**

इ॒न्द्र॒वा॒यू इति॑ । बृह॒स्पति॑म् । मि॒त्रा । अ॒ग्निम् । पू॒षण॑म् । भग॑म् । आ॒दि॒त्यान् । मारु॑तम् । ग॒णम् ॥ ३ ॥

स्कन्द० [1]द्वितीयानिर्देशादत्र सोमपानार्थमाह्वयामि स्तौमि चेति वाक्यशेषः । इन्द्रवायू सोमपानार्थमाह्वयामि[1] स्तौमि वा । बृहस्पतिम् मित्रा एकवचनस्यायमाकारः । द्विवचननिर्देशाद्वा अन्यतरवचनेनापि मित्रशब्देन साहचर्यादिदं मित्रावरुणयोर्द्वयोरप्यभिधानं मित्रावरुणौ । अग्निम् पूषणम् भगम् आदित्यान् मारुतम् च गणम् अथवा तृतीयार्थेऽत्र द्वितीया । पूर्वयर्चैकवाक्यता । देवेभिरग्ने ! आगहि इन्द्रवाय्वाद्यैरिति[2] ॥ ३ ॥

वेङ्कट० एतान् देवान् अग्ने ! आवह । अपि वा कण्वा एतानप्याह्वयन्तेति[3] । मित्रा इति मित्रावरुणयोर्ग्रहणम् । अपि वा मित्रस्यैवेति ॥ ३ ॥

मुद्गल० इन्द्रादिदेवान् मारुतम् मरुतां देवानां सम्बन्धिनम् गणम् च हे अग्ने यक्षीति पदद्वयमनुवर्तते ॥ ३ ॥

**प्र वो॑ भ्रियन्त॒ इन्द॑वो मत्स॒रा मा॑दयि॒ष्णव॑: । द्र॒प्सा मध्व॑श्चमू॒षद॑: ॥ ४ ॥**

प्र । व॒: । भ्रि॒य॒न्ते॒ । इन्द॑वः । म॒त्स॒राः । मा॒द॒यि॒ष्णव॑: । द्र॒प्साः । मध्व॑: । च॒मू॒ऽसद॑: ॥ ४ ॥

स्कन्द० वः इति तादर्थ्ये चतुर्थी । [4]प्रकृतानां चेन्द्रवाय्वादीनां प्रतिनिर्देशः । युष्मत्कर्मार्थं प्र भ्रियन्ते प्रेत्येष समित्येतस्य स्थाने । संभ्रियन्ते । उपकल्प्यन्त इत्यर्थः[4] । अथवा प्रशब्दः स्वार्थ एव । भ्रियन्त इति हरतेर्भत्वं 'हृग्रहोर्भश्छन्दसि हस्य' ( पावा ८,२,३२ ) इति । प्रभ्रियन्ते आहवनीयं प्रति प्राप्यन्त इत्यर्थः । के । इन्दवः । कीदृशाः । मत्सराः मन्दतेस्तृप्तिकर्मण एतद्रूपम् । तृप्तिकराः । मादयिष्णवः मदो हर्षग्लेपनयोः हर्षयितारः । द्रप्साः रसोऽत्र द्रप्स उच्यते । रसरूपाः । अन्तर्णीतमत्वर्थो वा सामर्थ्याद् द्रप्सशब्दः । रसवन्त इत्यर्थः । अथवा यद् द्रवं नातिकठिनं तद् द्रप्स उच्यते । नात्यल्पाः बहला इत्यर्थः । मध्वः मधुस्वादाः मृष्टाः । चमूषदः चर्म चमूस्तस्मिन् सीदन्ति[5] ॥ ४ ॥

वेङ्कट० हविर्धानाद्[6] युष्मभ्यम् प्र भ्रियन्ते इन्द्रादिभ्यः इन्दवः इन्दुरिन्धतेर्दीप्तिकर्मण (द्र० या १०,४१) इत्युक्तम् । मत्सराः सोमा भवन्ति 'मन्दतेस्तृप्तिकर्मणः' (या २,५) । तेषां विशेषणं मादयिष्णव इति । द्रप्साः मधुनः चमससादिन इत्यौपयिकमिति[1] ॥ ४ ॥

---

1-1. इन्द्रवायू । अपि रूपम् मित्रा इति । आप्लवात् वरणाद्वा गृह्यते । नित्याद्वैतं ... । अन्यदा ऋचोक्तान्देवान् सोमपानार्थमाह्वयामि स्तौमि वा वि[1] अ पु. 2. °प्याभूय° वि[1] दृ, नास्ति वि[2]. 3. वायूनाम् मै°. 4-4. इन्द्रवाय्वादय. पूर्वया ऋचा उक्ता । युष्मदर्थं संभ्रियन्ते ... । ... । प्रभ्रियन्ते आहवनीयं प्रति प्राप्यन्ते । 'हृग्रहोर्भ' इति मतम् । मदो तृप्तौ हर्षग्लेपनयोरत । ... । द्रप्सा. रसरूपा रसवन्तो वा । यद् द्रवं नातिकठिनं तादृशा वा । ... वि[1] अ पु. 5. °सीदन्ति° कु, °न्ति वि[1]. 6. °धनि° साम

मुद्गल० हे इन्द्रादिदेवा ! व युष्मदर्थम् इन्दव सोमा प्र भ्रियन्ते प्रकर्षेण सपाद्यन्ते । कीदृशा । मत्सरा तृप्तिकरा । मादयिष्णव हर्षहेतव । द्रप्सा बिन्दुरूपा । मध्व मधुरा । चमूषद चमूषु चमसादिपात्रेषु अवस्थिता ॥ ४ ॥

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ॥ ५ ॥

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः ॥ ५ ॥

स्कन्द० [1]ईळते स्तुवन्ति त्वाम् अग्निम् । अवस्यव अवनमात्मन तर्पण वा सोमेन अभीप्सन्तस्त्वामा । कण्वास मेधाविन ऋत्विज कण्वपुत्रा वा महर्षय वृक्तबर्हिष स्तीर्णबर्हिष हविष्मन्त उपकल्पितहविष्का अरङ्कृत पर्याप्तकारिण[1] ॥ ५ ॥

वेङ्कट० स्तुवन्ति त्वाम् अग्ने ! पालनमिच्छन्त कण्वा स्तीर्णबर्हिष हविष्मन्त पर्याप्तकारिण ॥ ५ ॥

मुद्गल० हे अग्ने ! त्वाम् ईळत ऋत्विज स्तुवन्ति । कीदृशा । अवस्यव अवन रक्षण तदनुर देवानिच्छन्त । कण्वास मेधाविन वृक्तबर्हिष आस्तरणार्थं छिन्नदर्भा हविष्मन्त हविर्युक्ता अरङ्कृत अलङ्कर्तार ॥ ५ ॥

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये ॥ ६ ॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः । आ । देवान् । सोमऽपीतये ॥ ६ ॥

स्कन्द० घृतपृष्ठा घृ क्षरणदीप्त्यो [2]घृत दीप्त पृष्ठ येषा ते घृतपृष्ठा । बलवतो ह्यश्वस्य दीप्तिमद् पृष्ठ भवति । मनोयुज मनसा ध्यातमात्रा ये स्वयमेव युज्यन्ते ते मनोयुज । ये त्वा वहन्ति वह्नय अश्वा । वह्नि [1] (निघ १ १४) इत्यश्वनाम । आ देवान् यच्छन्दश्रुतेस्तच्छन्दोऽत्राध्याहर्तव्य । आ देवानिति चोपसर्गात् कर्मश्रुतेश्च योग्य क्रियापदमध्याहर्तव्यम् । तैरावह देवान् सोमपीतये[2] ॥ ६ ॥

वेङ्कट० अग्ने![3] पानायाश्वपृष्ठे घृतमास्ते । मनसा युज्यमाना ये त्वाम् वहन्ति अश्वास्तै आवह देवान् सोमपानाय ॥ ६ ॥

मुद्गल० हे अग्ने ! त्वा त्वाम् ये अश्वा रथेन वहन्ति । कीदृशा । घृतपृष्ठा पुष्टाङ्गत्वेन दीप्तपृष्ठा मनोयुज मन सकल्पमात्रेण रथे[4] युज्यमाना वह्नय वोढार तैरश्वै सोमपीतय सोमपानहेतुयागार्थम् देवान् आ वहेति शेष ॥ ६ ॥

इति प्रथमाष्टके प्रथमाध्याये षड्विंशो वर्ग ॥

तान् यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ॥ ७ ॥

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥ ७ ॥

---

१ १ इळते त्वामग्ने सोमेन आत्मपालनतर्पणकामा । अग्नेवा । कण्वा व्याख्याता । स्तीर्णबर्हिष उपकल्पित् हविष्का पर्याप्तकारिण वि[1] अ कु † अग्ने स्तोतारा वि[1] २ २ दीप्तपृष्ठा । बलवतामश्वाना दीप्तिमत् पृष्ठ भवति हि । मनसा ध्यातमात्रा ये स्वयं युज्यन्ते ते त्वा वहन्ति अश्वा । दधिक्रा वह्निराधनो इति अश्वनाम । तैरावह देवान् सोमपानाय वि[1] अ कु ३ अग्ने साग्ने ए ४ रथेन वि[1]

स्कन्द० [1]तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । [ये देवा आवाहिताः] अस्माभिः तान् यजत्रान् यष्टव्यान् ऋतावृधः यज्ञस्योदकस्य सत्यस्य वा वर्धयितॄन् । हविषा हि स्तुत्या च देवता वर्धन्ते । हे अग्ने ! पत्नीवतः कृधि पत्नीसंयुक्तान् कुरु । पत्नीरप्येषामावहेरित्यर्थः । ओष्ठ च मध्वः षष्ठीनिर्देशादत्रैकदेशमिति शेषः‡ । द्वितीयार्थे वा षष्ठी । मधुस्वादस्यैकदेशं स्वांशलक्षणं मधुस्वादं वा सोमं हे सुजिह्व ! सुवाक् ! शोभनजिह्वाख्यावयवो वा पायय[1] ॥ ७ ॥

वेङ्कट० तान् यष्टव्यान् यज्ञस्य वर्धयितॄन् अग्ने ! पत्नीवतः च कुरु । कृत्वा च सोमं सुज्वाल ! पायय ॥ ७ ॥

मुद्गल० हे अग्ने ! तान् च[2] इन्द्रादीन् देवान् यजत्रान् यजनीयान् ऋतावृधः यज्ञस्य वर्धकान् पत्नीवतः पत्नीयुक्तान् कृधि कुरु । हे सुजिह्व ! शोभनजिह्वोपेत ! मध्वः मधुरस्य सोमस्य[3] भागं देवान् पायय ॥७॥

ये यज॑त्रा॒ य ईड्या॒स्ते ते॑ पिबन्तु जि॒ह्वया॑ । मधो॑रग्ने॒ वष॑ट्कृति ॥ ८ ॥

ये । यज॑त्राः । ये । ईड्याः॑ । ते । ते॒ । पि॒बन्तु॒ । जि॒ह्वया॑ । मधोः॑ । अग्ने॒ । वष॑ट्ऽकृति ॥ ८ ॥

स्कन्द० ये यष्टव्याः ये [4]च ईड्याः स्तुत्या देवाः ते, ते तव स्वभूतया जिह्वया पिबन्तु । 'अग्निमुखा हि देवाः' (द्र. माश ७,१,२,४) । ते अग्निनैव जिह्वया पिबन्ति न स्वया । वाङ्नाम वा जिह्वाशब्दः हेतौ च तृतीया । तव वाचा हेतुना स्तूयमाना इत्यर्थः । किं पिबन्तु । उच्यते । मधोः सोमस्यैकदेशं स्वांशलक्षणं मधु वा, सोमं वा हे अग्ने ! वषट्कृति वषट्कारकाले[4] ॥ ८ ॥

वेङ्कट० ये यष्टव्याः [5]ये च ईड्याः[5] 'मनुष्या वा ईड्याः पितरो नमस्या देवा यज्ञियाः' ( तै २,५,९,६ ) इति ब्राह्मणम् । ते तव जिह्वया सोमस्य वषट्कृतं हुतम् पिबन्तु ॥ ८ ॥

मुद्गल० ये देवाः यजत्राः यष्टव्याः तथा ये देवाः ईड्याः स्तुत्याः ते सर्वेऽपि वषट्कृति वषट्कारकाले हे अग्ने ! ते त्वदीयया जिह्वया मधोः मधुरस्य सोमस्य भागम् पिबन्तु ॥ ८ ॥

आ॒कीं सूर्य॑स्य रोच॒नाद् विश्वा॑न्दे॒वाँ उ॑ष॒र्बुधः॑ । विप्रो॒ होते॒ह व॑क्षति ॥ ९ ॥

आ॒कीम् । सूर्य॑स्य । रो॒च॒नात् । विश्वा॑न् । दे॒वान् । उ॒षः॒ऽबुधः॑ । विप्रः॑ । होता॑ । इ॒ह । व॒क्ष॒ति॒ ॥ ९ ॥

स्कन्द० [6]'आकीम्' इति निपात आदर्थे । वक्षति, इत्याख्यातेन सम्बन्धयितव्यः । सूर्यसम्बन्धिनो[6]

---

१-१. यानावह तान्यष्टव्यान् यज्ञोदकस्य वर्धयितॄन् हे अग्ने ! । [illegible] कुरुष्व । एषां पत्नीरप्यावह । स्वादे सोमे पायय । हे सुवाक् ! सुपेन ! वा । मधोरेकदेशो वा वि[1] भ कु. †-† यत् देवानावाहितो अ[°] मूको. ‡ "त्यैकदेशमि" मूको. २. नास्ति मै[1]. ३. °मभागम् वि. ४-४. स्तुत्याः ते तव जिह्वया पिबन्तु । अग्निर्वै देवानां मुखम् ( शंबा ७,१६ ) । ते अग्निनैव जिह्वया पिबन्ति नान्यथा । जिह्वा वाग्वा । तया पिबन्तु स्तुते. । मधो. सोमैकदेशं वा स्वादं सोमं वा अग्ने ! वषट्कारकाले वि[1] भ कु. ५-५. येति च स्तोतव्या साम्ब[1]; येति चे[°] साम्ब[2] अ[1]; ये चेड्या साम्ब[3]; ये नेडय साम्ब. ६-६. आकि॰ आदर्थेऽयं निपातः । सूर्यसम्बन्धिन॰ वि[1] भ कु.

रोचनात् दीप्तात् द्युलोकादादित्यमण्डलाद् वा विश्वान् देवान् [1]उषर्बुधः उषःकाले यागगमनार्थं ये बुध्यन्ते त उषर्बुधः तान् । विप्रः मेधावी होता वा अग्निः इह यज्ञे आवक्षति। लोडर्थेऽयं पञ्चमो लकारः । आवहतु[1] ॥ ९ ॥

वेङ्कट० [2]सूर्यस्य दिवः आयद्दरवद्भिः सर्वान् देवान् प्रातः प्रबुद्धान् मेधावी अत्र ॥ ९ ॥

मुद्गल० विप्रः मेधावी होता होमनिष्पादकोऽग्निः उषर्बुधः उषःकाले यागगमनाय प्रबुध्यमानान् विश्वान् देवान् सूर्यस्य संबन्धिनः [3]रोचनात् स्वर्गलोकात्[3] इह कर्मणि आकीम् आ वक्षति आवहतु ॥ ९ ॥

विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥ १० ॥

विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना । पिब । मित्रस्य । धामऽभिः ॥ १० ॥

स्कन्द० [4]विश्वेभिः सर्वैः सह सोम्यम् सोममयम् मधु हे अग्ने ! पिब । सोमरसोऽत्र †द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च मधूच्यते। इन्द्रेण वायुना मित्रस्य च धामभिः धामशब्दस्तेजोवचनः‡ । अथवा 'धामानि त्रयाणि भवन्ति, स्थानानि नामानि जन्मानि' ( या ९,२८ ) इति । धामभिश्चात्र तत्सम्बद्धो मित्र एव लक्ष्यते । मित्रस्य यानि तेजांसि स्थानानि नामानि जन्मानि वा तैः सम्बद्धेनैव मित्रेणैव सहेत्यर्थः[4] ॥ १० ॥

वेङ्कट० अग्ने ! विश्वैर्देवैः सह सोममयम् मधु पिब इन्द्रवायुभ्याम् मित्रस्य[5] च सर्वैस्तेजोभिः । देवानां बहूनि [6]धामानि भवन्ति । यैस्तत्र सन्निधानं [7]कुर्वन्तीति वक्ष्यामः ॥ १० ॥

मुद्गल० हे अग्ने ! त्वम् विश्वेभिः सर्वैः पूषभगादिभिर्देवैः इन्द्रेण वायुना मित्रस्य सम्बन्धिभिः धामभिः तेजोभिः मूर्तिविशेषरूपैश्च सह सोम्यम् सोमसम्बन्धि मधु मधुरं भागम् पिब ॥ १० ॥

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ॥ ११ ॥

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमम् । नः । अध्वरम् । यज ॥ ११ ॥

स्कन्द० [8]सेममिति तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यस्त्वम् होता मनुर्हितः मनुना प्रजापतिना निहितः । मनुष्येषु वा निहितः । मनुष्येभ्यो वा निहितः । हे अग्ने ! यज्ञेषु सीदसि होतृत्वं कर्तुं यज्ञेषु सीदसीत्यर्थः । सः इमम् नः अध्वरम् यज्ञं होतृत्वेन निषद्य यज[8] ॥ ११ ॥

---

१-१. उषःकाले बोध्यन्ते ये यागगमनार्थं तान् मेधावी होता इह यज्ञे आवहतु । लोडि लेट् वि[1] अ कु. २. नास्ति वि[1] ख, मर्षदि° साम्य[2]; मर्षादि साम्य[1] वि[1] अ[1]. ३-३. °नान् स्वर्गलोकात् वि. ४-४. विश्वेभिः सर्वैस्सह सोममय मधु । सोमरसोऽत्र द्रवत्वात् गृह्यताम मधु । तदिह अग्ने ! इन्द्रवायुमित्रैः । धाम तेज स्थाननामजन्मानि वा । मौर्गुक्तेन इत्यर्थः वि[1] अ कु. † °न्यान्मृष्टत्व° वि[1]. ‡ °स्तेजोवाच्यो वि[1]. °वचनो वा साम्य. ५ इन्द्रस्य अ[1] साम्य[1] वि[1]. ६. नामानि ल अ[1] वि[1]. ७. कुर्वन्ति इति अ[1]. ८-८. यस्त्वं होता प्रजापतिनिहितः नृषु वा हितः नृभ्यो वा हितः कर्तुं यज्ञेषु निषीदसि स त्वमस्माकमिममध्वरं यज वि[1] अ कु.

वेङ्कट० त्वम् होता मनुष्यैर्निहितः अग्ने ! यज्ञेषु सीदसि । सः त्वम् अस्माकम् इमम् यज्ञम् यज ॥ ११ ॥

मुद्गल० हे अग्ने ! मनुर्हितः मनुषा होत्रादिरूपेण मनुष्येण हितः सम्पादितः होता होमनिष्पादकः यः त्वम् यज्ञेषु सीदसि तिष्ठसि । सः त्वम् नः अस्मदीयम् इमम् अध्वरम् यज्ञम् यज निष्पादय ॥ ११ ॥

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह ॥ १२ ॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥ १२ ॥

स्कन्द० [1]हि इति पदपूरणः । युक्ष्व अरुषीः रोचतेर्वा रुशतेर्वाङ्पूर्वस्य अरुषशब्दो दीप्तवचनः । बलवत्त्वाद् दीप्ताः । अथवा 'अरुषत्यार्षति' ( निघ २,१४ ) इति गतिकर्मसु पाठादरुषशब्दो गन्तृवचनः गन्त्रीः । †क युङ्क्ष्व† । उच्यते । रथे रथे । हरितः हरितवर्णाः । हे देव ! अग्ने ! 'रोहितः' ( निघ १,१५ ) आदिष्टोपयोजनमेतदग्नेरश्वानां नामधेयम् । आत्मीया वडवाः । युक्त्वा च ताभिः देवान् इह आवह[1] ॥ १२ ॥

वेङ्कट० योजय आरोचमानाः[2] रोहितवर्णाः अश्वाः स्वरथे । योजयित्वा च ताभिः इह देवान् आवह । आग्नेयं सूक्तम् । अन्ये निपातभाज इति[3] वैश्वदेवं भवति (द्र. बृदे ३,१३) ॥ १२ ॥

मुद्गल० हे देव ! अग्ने ! रोहितः[4] रोहिच्छब्दाभिधेयास्त्वदीयवडवाः रथे[5] युक्ष्व योजय । [6]हि शब्दः पादपूरणः[6] । कीदृशीः । अरुषीः गतिमतीः हरितः हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः ताभिः[7] वडवाभिः इह अस्मिन् कर्मणि देवान् आवह ॥ १२ ॥

इति प्रथमाष्टके प्रथमाध्याये सप्तविंशो वर्गः ॥

[१५]

इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ॥ १ ॥

इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इन्दवः । मत्सरासः । तत्ऽओकसः ॥१॥

स्कन्द० "[8]ऋतुदेवतम्†' । सर्वत्र षड्दैवता । वक्ष्यमाणा ऋतुसहिता देवताः, देवता न केवला । तत्राद्या तावदैन्द्री । हे इन्द्र ! सोमम् पिब ऋतुना पीयमानाश्च आ त्वा विशन्तु त्वामाविशन्तु त्वदुदरे प्रविशन्त्वित्यर्थः । के । इन्दवः सोमाः । कीदृशाः । मत्सरासः तृप्तिकराः तदोकसः तन्निवासाः सर्वदा त्वदुदरस्थायिन इत्यर्थः[8] ॥ १ ॥

---

१-१. युक्ष्वा रुश दीप्तौ रुच च । तयोरेकतरस्माङ्पूर्वस्यारुषीः । अग्नेर्वडवाः रोहिन्नाम्न्यः बलदीप्ता गम्भीर्वा । अरुषनि आर्यनीति । स्वरथे योजय हरिद्वर्णाः । ताभिर्देवान् यज्ञे आवह त्रि[1] अ कु. †-† लयुञ्जानि मूको; स्व युञ्जानाः साश्व. २. रोचमानाः साश्व कु. ३. इत्यानि रु वि[1-1]. ४. नास्ति वि मै[1]. ५. रथेषु त्रि. ६-६. हिः पूरणः मै[1,2]. ७. नास्ति वि. ८-८. ऋतुदैवतम् । आद्यैन्द्री च । हे इन्द्र ऋतुना सह सोमं पिब । पीयमानाः त्वदुदरमाविशन्तु सोमाः तृप्तिकराः तन्निवासाः त्वदुदरगृहाः त्रि[1] अ कु. † °देवता मूको.

वेङ्कट० ऋतव्य सूक्तम् (द्र बृद ३,१४)। इन्द्र ! त्वम् ऋतुना सह 'पिब सोमम्'। आख्यातानुदात्तत्वे कारणमुक्तम्। आ विशन्तु त्वा दीप्ता सोमा उदकनिलयास्त्विन्द्र तिष्ठन्त ॥ १ ॥

मुद्गल० 'इन्द्र सोमम्' इति द्वादशर्चं चतुर्थं सूक्तम्। मेधातिथि ऋषि गायत्रम्। यद्यप्येतत्सूक्तम् ऋतुदेवताकं तथापि प्रत्यृचम् इन्द्रादिदेवतान्तराणि मिलितानि। तथा च अनुक्रम्यते। इन्द्र सोमम् द्वादशैन्द्री मारुती त्वाष्ट्राग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवता सर्वत्र (ऋ अनु १,१५) इति ॥

हे इन्द्र ! ऋतुना सह सोमम् पिब। इन्दव पीयमाना सोमा त्वा त्वाम् आ विशन्तु। कीदृशा। मत्सरास तृप्तिकरा तदोकस तन्निवासा। सर्वदा त्वदुदरस्थायिन इत्यर्थ ॥ १ ॥

मर्रुतः पिबर्त ऋतुना पोत्राद् यज्ञं पुनीतन। यूयं हि ष्ठा सुदानवः ॥ २ ॥

मर्रुत । पिबर्त । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानव ॥२॥

स्कन्द० "ऋतु मारुती"। ऋग द्वितीया मरुद्देवता। हे मरुत ! पिबत ऋतुना सह। किम्। सामर्थ्यात् सोमम्। कुत। पोत्रात् पोतु स्वभूतात् पात्रात्। पीत्वा यज्ञम् अस्मदीयम् पुनीतन शोधयत व्यपगतदोष कुरुतेत्यर्थ। कस्मात्। यूयम् हि ष्ठ सुदानव हिशब्दो यस्मादर्थे। दानुशब्दो दानवचनो दातृवचनो वा। यस्माद् यूय शोभनदाना शोभना वा दातार। तत्र च सम्बोधनासम्भवात् सुदानव इत्यर्थातिरिक्त एव प्रातिपदिकार्थे प्रत्यये नाऽऽमन्त्रितप्रथमा। कथम्। प्रतिपाद्यार्थप्रत्यभिमुखीकरण हि सम्बोधनमुच्यते। तद्यत्र तदर्थं प्रसिद्धोऽर्थान्तर† च प्रतिपाद्य तत्र सम्भवति। यथा अत्रैव‡ मरुता मरुत्वम्। यथा वा लोके राजन् ! इद च कुरु इति। यत्र तु तदर्थ एव स्वार्थं वा प्रतिपाद्यत 'राजा भव। यस्माद् राजाऽसि अतो बुध्यस्व'। 'त्व हि रक्षथा असि' इति न तत्र सबोधनस्य सम्भव। आमन्त्रितविभक्तिश्रुतिसामर्थ्याद् यूय हि इत्यनेन सुदानव इत्यस्य¶ सम्बन्धासम्भवात् सोमस्य पातारो यज्ञस्य पवितार इति वाक्यशेष। यस्माद् यूय सोमस्य पातारो यज्ञस्य पवितार स्थ हे सुदानव ! तस्मात् पिबत सोम यज्ञ च पुनीतनेति[1] ॥ २ ॥

वेङ्कट० मरुत[4] ! पिबत ऋतुना सह पोतु मदीयमान सोमम्[4]। यज्ञम् च[5] शोधयत। यूयम् हि भवथ सुदाना[6] ॥ २ ॥

मुद्गल० हे मरुत ! ऋतुना सह पोत्रात् पोतृनामकस्य ऋत्विज पात्रात् सोमम् पिबत। ततोऽस्मदीयम् यज्ञम् पुनीतन शोधयत। हे सुदानव ! शोभनदातारो मरुत ! हि यस्मात् यूयम् स्थ युष्माकं साधयितृत्व प्रसिद्धं तस्मात् शोधयतेत्यर्थ ॥ २ ॥

---

१ १ सर्व पिब सास्व॰। २ °तानुना° मूको। ३ ३ हे मरुत ! ऋतुना सोमं पिबत ! पोतु पात्रात् अस्मत्। पोत्रात्स्मार्के यज्ञं पुनीत। हि यस्मात् यूयं शोभनदाना शोभना वा दातार स्थ। अन्यथा शान्यथाऽगता। यत्पूर्व सोमस्य पातार यज्ञस्य पवितार स्थ हे सुदानव तस्मात् पिबत सोमं यज्ञं पुनीत च वि॰ अ उ † र्थान्तरमर्थ वि॰, °र्थान्तरं प्रति॰ मास्व ‡ तथैव वि॰, अत्र चैव सास्व ४ नास्ति वि॰ १ हर्ष ५ नास्ति सास्व॰ ६ नास्ति कु सास्व ¶ इत्यर्थ॰ मूको ७ सुमना सास्व॰,

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ॥ ३ ॥

अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना । त्वम् । हि । रत्नऽधाः । असि ॥३॥

स्कन्द० [1]"तथा त्वाष्ट्री'। तृतीया ऋक् त्वष्टृदेवता। अभि गृणीहि अहो शोभन इत्येवमभिष्टुहि। कम्। यज्ञम् अस्माकम्। अथवा यज्ञम् इति सप्तम्यर्थे द्वितीया। †होतृकर्तृत्वेन अभिष्टुहि यज्ञे अस्माकम्। अस्मान् स्तुवतो यज्ञे प्रयुङ्क्ष्वेत्यर्थः। हे ग्नावः! 'ग्नाः' (या ३,२१) इति स्त्रीनाम। पत्नीभिः स्त्रीभिः तद्वन्! नेष्टः! देवसत्रे किल त्वष्टा नेष्टाऽऽसीत्। तदपेक्षमिदं नेष्टरिति त्वष्टुः सम्बोधनम्। पिब च ऋतुना सह सोमम्। कस्मात्। त्वम् हि रत्नधाः धनानां दाता असि। यस्मात् पीत्वा च धनमस्मभ्यं दाताऽसीत्यर्थः[1] ॥ ३ ॥

वेङ्कट० कुर्वित्यनुज्ञाऽभिगरणम्[2]। अनुमन्यस्व अस्माकम् यज्ञम् देव पत्नीवन्[3]! नेष्टः! पिब च[4] सोमम् ऋतुना। त्वम् असि रत्नानां दाता। त्वष्टा नेष्टोक्त इति ॥ ३ ॥

मुद्गल० ग्नाशब्दः स्त्रीवाची। ग्ना अस्य सन्तीति ग्नावान्। नेष्टृशब्दोऽत्र त्वष्टारं देवमाह। कस्मिंश्चिद् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृतत्वात्। हे ग्नावः पत्नीयुक्त! नेष्टः! त्वष्टः! नः अस्मदीयम् यज्ञम् अभि गृणीहि अभितो देवानां समीपे स्तुहि। ऋतुना सह त्वं सोमम् पिब। हि यस्मात् त्वम् रत्नधाः असि रत्नानां दाता भवसि। तस्मात् सोमं पातुमर्हसीत्यर्थः ॥ ३ ॥

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ॥ ४ ॥

अग्ने । देवान् । इह । आ । वह । सादय । योनिषु । त्रिषु । परि । भूष । पिब । ऋतुना ॥ ४ ॥

स्कन्द० [5]'आग्नेयी'। चतुर्थी ऋगग्निदेवता। हे अग्ने! देवान् इह आवह। आहूय च सादय उपवेशय योनिषु स्थानेषु त्रिषु सवनाख्येषु। सादयित्वा च परिभूष। परिपूर्वो भूषतिः† परिग्रहे। यथा यागार्थं परिग्रहीतव्यं तथा परिगृहाण यजेत्यर्थः। अथवा भूष अलङ्कार इत्यस्यैतद्रूपम्। परिभूष स्वमण्डलदेवान्। स्वयमपि च पिब ऋतुना सह सोमम्[5] ॥ ४ ॥

वेङ्कट० अग्ने! देवान् इह आवह। सादय च सवनाख्येषु त्रिषु स्थानेषु। अलङ्कुरु च यज्ञम्। पिब च सोमम् ऋतुना ॥ ४ ॥

मुद्गल० हे अग्ने! देवान् इह अस्मिन् कर्मणि आवह। ततः योनिषु स्थानेषु त्रिषु सवनेषु सादय देवान् उपवेशय। ततस्तान् परिभूष अलङ्कुरु। ऋतुना सह त्वं सोमम् पिब ॥ ४ ॥

---

१-१. त्वाष्ट्री चेयम्। देवसत्रे त्वष्टा नेष्टा आसीत् किल। तदपेक्षं त्वष्टुर्नेष्टरिति सम्बोधनम्। हे नेष्टः! अस्माक यज्ञमभिगृणीहि। अहो शोभन इति। अथवा द्वौ अम्। यज्ञे अस्माकं होतृकर्तृत्वेनाभिष्टुहि इति स्तुवतः अस्मान् यज्ञे प्रयुङ्क्ष्व। हे ग्नावः। स्त्रियो योषा योषणा ग्नाः। पत्नीयुक्त! नेष्टः! ऋतुना सह सोम पिब। त्वं धनानां दाता असि। यस्मात् पीत्वा च धनमस्मभ्यं देहि वि[1] अ कु. † ''तुकर्तृ॰ साम्ब वि[2]. २. ॰भिगिर॰ साम्ब[1] कु. ३. देव! पत्नी॰ साम्ब कु. ४. च मे साम्ब[1]. ५-५. आग्नेयी चेयम्। हे अग्ने दातृन् दीप्तान् वा यज्ञे आनय। उपवेशय च। योनिस्थानेषु त्रिषु सवनेषु। परिगृहाण च। यथायोग्य यज च। भूष अलङ्कारे। परिभूष्य मण्डय देवान्। स्वयमपि चालंकुरु। ऋतुना सह सोमं पिब च वि[1] अ कु. † नास्ति मूको.

ब्राह्मणादिन्द्र राधसः पिबा सोमंमृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥ ५ ॥

ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु । तव । इत् । हि । सख्यम् । अस्तृतम् ॥५॥

स्कन्द० "ऐन्द्रयेष पञ्चमी" । पञ्चमी ऋगिन्द्रदेवता । ब्रह्मन्शब्दोऽत्र ब्राह्मणाच्छंसिनि वर्तते । तस्य स्वभूतात् ब्राह्मणात् हे इन्द्र ! राधसः धनात् पात्राख्यात् पिब सोमम् ऋतून् अनु ऋतूनां पश्चात् । ऋतुभिः पीत इत्यर्थः । तव इत् हि इच्छब्दः पादपूरणः । यस्मात् तव सख्यम् अस्तृतम् अहिंसितम्, न कश्चिद्धिंसितुं शक्नोति, स्थिरसख्योऽसीत्यर्थः । तस्मात् [हि इन्द्र त्व सोमं पिब।][1] ॥ ५ ॥

वेङ्कट० ब्राह्मणाच्छंसिनः सोमम् इन्द्र ! पिब सह ऋतुभिः । तव हि[2] सख्यम् ऋतुभिर्न विच्छिद्यते[3] ॥ ५ ॥

मुद्गल० हे इन्द्र ! ब्राह्मणात् ब्राह्मणाच्छंसिसंबद्धात् राधसः धनभूतात् पात्रात् सोमम् पिब । किं कृत्वा । ऋतून् अनु ऋतुदेवान् अनुसृत्य । ऋतवोऽपि पिबन्तु इत्यर्थः । हि यस्मात् तवेत् तव सख्यम् अस्तृतम् ऋतूनामविच्छिन्नम् । तस्मादृतुभिः सह पानं युक्तम् ॥ ५ ॥

युवं दक्षं धृतव्रता मित्रावरुणा दूळभम् । ऋतुना यज्ञमाशाथे ॥ ६ ॥

युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् । ऋतुना । यज्ञम् । आशाथे इति ॥६॥

स्कन्द० [4]"मित्रावरुणयोः षष्ठी" । षष्ठी ऋद्मित्रावरुणदेवता । युवम् इति षष्ठ्यर्थे प्रथमा । युवयोः दक्षम् बलम् धृतव्रत ! मित्रावरुण ! उभयत्र द्विवचनादेशाकारस्य छान्दसं सांहितं ह्रस्वत्वम् । 'व्रतम्' ( निघ २,१७ ) इति कर्मनाम । धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ सर्वकर्मणां हेतुभूतौ स्वकर्मणां वा नित्यमनुप्रदातारौ इत्यर्थः । मित्रावरुणौ † दूळभम् दभ्नोतेर्वधकर्मण एतद्रूपम् । दुर्हणम् युवयोर्बलं न कश्चिदपि जेतुं शक्नोतीत्यर्थः । यावीदृशौ स्थः तावृतुना सह यज्ञम् आशाथे । लोडर्थेऽयं लिट् । अश्नुवाथां व्याप्नुतम् । यज्ञे सोमम् पिबतमित्यर्थः.[4] ॥ ६ ॥

वेङ्कट० युवां प्रवृद्धम् धृतकर्माणौ मित्रावरुणौ शत्रुभिर्हिंसितुमशक्यम्[5] यज्ञम् ऋतुना सह व्यानशाथे[6] ॥६॥

मुद्गल० हे धृतव्रता स्वीकृतकर्माणौ मित्रावरुणा मित्रावरुणौ ! युवम् उभौ युवाम् ऋतुना सह अस्मदीयम् यज्ञम् आशाथे[7] व्याप्नुथ. । कीदृशं यज्ञम् । दक्षम् प्रवृद्धम् दूळभम् दुर्दभम् शत्रुभिर्दम्भुमशक्यमित्यर्थः[8] (?) ॥ ६ ॥

इति प्रथमाष्टके प्रथमाध्याये अष्टाविंशो वर्गः ॥

---

१-१. ऐन्द्री चेयम् । ब्रह्मन्शब्दो ब्राह्मणाच्छंसिनि । स ऐन्द्र. । हे इन्द्र तदीयात् धनात् पात्राद्वा चमसात् । राधोऽन्नं ऋतुनऋतूनिति इति । पिब सोममृतूना पश्चात् । तैः पीते यस्मात्तव सखित्व अहिंसितमन्यैः केश्चिदपि स्थिरसख्य॰ वि[1] अ कु. †-† त्रुटित. स्यात् (?) २. नास्ति सा[1]. ३. छिद्यते सा[1]. ४-४. मैत्रावरुणी चेयम् । युवमिति (वै॰ वि[1] अ) षष्ठ्याम् । युवयोर्बल धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ । ब्रह्म वीर्य ऋतुर्व्रतम् । ओ॰ई आत् । साहित ह्रस्वत्व सर्वकर्महेतू स्वकर्त्रौ च । मित्रावरुणौ । दम्भु दम्भे । दुर्हणम् ( धम् कु ) 'दूणाशं सख्यं तव' ( ऋग्वे ५,५५ ) इति दीर्घत्वम् । युवयोर्दक्षं न कश्चिदपि जयति । यावीदृशौ स्थ॰ । तौ युवामृतुना सह यज्ञं व्याप्नुथ. । लोटि लिट् । यज्ञे सोमं पिबतम् वि[1] अ कु. † °वरुण मूको. ५. °भिरभिर्हिंसि° सा[2]; °भिरहिंसितुम्अश° वि[1]; °भिरहिंसितु° वि[1] ग्रन्थ; °भिरहिंसितस्य अ[1]. ६. आशाथे कु. ७. नास्ति वि. ८. ग. वेद १,१६०८ ।

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥ ७ ॥

द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवम् । ईळते ॥ ७ ॥

स्कन्द० [1]"चतस्रो द्रविणोदसः"। सप्तम्याद्याश्चतस्र ऋचः द्रविणोदसः। ईळत इत्यस्य स्तुत्यपेक्षत्वाद् देवतानां च स्तुत्यत्वात् द्रविणोद.शब्दस्य च देवतावचनत्वात्। द्रविणोदाः† द्वितीयार्थे प्रथमा। द्रविणोदसम्। द्रविणसः† 'द्रविणम्' ( निघ २,१० ) इति धननाम । एतदिच्छन्ति द्रविणस्यन्तीति क्यचि सुगागमः। 'द्रविणस्युर्विपन्यया' (ऋ ६,१६,२४ ) इति यथा। द्रविणस्यते. छान्दसत्वात् क्विप्। क्विपि चाद्युदात्तत्वम्। द्रविणसाधनकामा इत्यर्थः। ग्रावहस्तासः गृहीताभिषवग्रावाण ऋत्विज.। अध्वरे यज्ञेषु अध्वरशब्दोऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दः, न यज्ञनाम । व्यत्ययेन चैकवचनम्। साद्गुण्याद् रक्षआदिभिरहिंसितेषु यज्ञेषु । अथवा अध्वरशब्दः समस्तज्योतिष्टोमादिवचनः। यज्ञशब्दस्तदवयवभूताभ्यासविशेषवचनः । ज्योतिष्टोमादावध्वरे येऽभ्यासविशेषाख्या यज्ञास्तेषु। देवम् दातारं दीप्तं वा। ईळते स्तुवन्ति[1] ॥ ७ ॥

वेङ्कट० द्रविणोदाः द्रविणसः धनस्य दाता भवति। तम्[2] ग्रावहस्तासः यज्ञेषु देवम् स्तुवन्ति। 'यज्ञेषु अध्वरे' [3]इत्यनयोरर्थभेदात् सङ्गतिः। [4]यास्काचार्यस्त्वाह—'द्रविणोदा [5]यस्त्वम्। द्रविणस इति द्रविणसादिन इति वा। द्रविणसानिन इति वा। द्रविणसस्तस्मात्[5] पिबत्विति वा। यज्ञेषु देवमीळते। याचन्ति स्तुवन्ति वर्धयन्ति[6] पूजयन्ति वा' ( या ८,२ ) इति ॥ ७ ॥

मुद्गल० अध्वरे अग्निष्टोमे यज्ञे यज्ञेषु उक्थ्यादिषु च देवम् अग्निम् ईळते ऋत्विजः स्तुवन्ति। कीदृशा ऋत्विजः। द्रविणसः धनार्थिनः ग्रावहस्तासः अभिषवसाधनपाषाणधारिणः। कीदृशं देवम्। द्रविणोदाः धनप्रदम् ॥ ७ ॥

द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥ ८ ॥

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे । देवेषु । ता । वनामहे ॥ ८ ॥

स्कन्द० [7]द्रविणोदाः ददातु अस्मभ्यम् वसूनि यानि शृण्विरे लडर्थेऽयं लिट् कर्मणि च। श्रूयन्ते। उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकप्रकाशानि भवन्तीत्यर्थः। वयमपि देवेषु। संप्रदानस्येयमधिकरणत्वेन विवक्षा । 'सममब्राह्मणे दानम्' ( मनु ७,८५ ) इति यथा। देवेभ्यः तानि[7]

१-१. द्रविणोदाः चतस्रः। अस्य यामि सुः। द्रविणोदसम्। धनकामाः। इन्द्रियं द्रविणं स्वात्रम् इति धनम्। तदिच्छन्ति। सुप आत्मनः क्यच् ( पा ३,१,८ ) तेषां द्रविणमिच्छन्ति। क्यचि सुक् छान्दसः क्विप् च। क्विपि चाद्युदात्तत्वम्। गृहीताभिषवग्रावाण ऋत्विजः। रक्षआदिभिरहिंसितेषु। ध्वर हिंसायाम्। यज्ञेषु। अध्वरशब्दस्समस्तज्योतिष्टोमादिवचनः। यज्ञश्च तदवयवभूताभ्यासविशेषवचनः। ज्योतिष्टोमादावध्वरे ये अभ्यासविशेषाख्या यज्ञा. तेषु दातारं दीप्तं वा स्तुवन्ति वि[1] अ कु. † तु. वैप १,१६७६ j,k,l. २. नास्ति वि[1] लपं. ३. °त्यर्थे° ल वि[1]. ४. यास्कस्त्वा° साम्ब कु वि[2]. ५-५. °स्त्व द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्त° कु, °स्त्व द्रविणोदसा° साम्ब[1] अ[2]. ६. नास्ति वि[1] लपं. ७-७. धनानि यानि श्रूयन्ते। लटि लिट्। कर्मणि कर्तृत्वं च। उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकश्रुति. तद्देवेषु। देवेभ्यस्तानि दत्तानि कृत्वा दद्ये वयमपि। भ्यसि सुप्। देवनिमित्तं तानि वि[1] अ कु

'हवीरूपाणि कृत्वा वनामहे'[1]। 'वनतिरत्र सामर्थ्याद् दानार्थः। 'वस्वा नो वार्या पुरु' (ऋ ८, २३,२७) इति यथा। दद्म इत्यर्थः। अथवा वनिर्हि सम्भक्त्यर्थ एव। देवेष्विति 'निमित्तात् कर्मसंयोगे' (पावा २,३,३६,६) 'इत्येव सप्तमी। 'चर्मणि द्वीपिनं हन्ति' (पाम २, ३,३६) इति यथा। देवार्थं सभजामहे देवान् यष्टुं परिगृह्णीम इत्यर्थः[1] ॥ ८ ॥

वेङ्कट० द्रविणोदा ददातु अस्मभ्यम् वसूनि [4]धनानि गवादीनि[4]। यानि विश्रुतानि। तानि वयम् देवेषु स्थितानि द्रविणोदस याचामहे। स ततः आदाय नः ददातु ॥ ८ ॥

मुद्गल० द्रविणोदा देव न अस्मभ्यम् वसूनि धनानि ददातु यानि धनानि[5] शृण्विरे हविरुपयुक्तत्वेन, श्रूयन्ते तानि धनानि देवेषु निमित्तभूतेषु वनामहे सभजाम। धनैर्देवान् यष्टुं तानि स्वीकुर्म इत्यर्थः ॥ ८ ॥

द्र॒वि॒णो॒दाः पि॑पीषति जु॒होत॒ प्र च॑ तिष्ठत। ने॒ष्ट्राद्ऋ॒तुभि॑रिष्यत ॥ ९ ॥

द्र॒वि॒णः॒ऽदाः। पि॒पी॒ष॒ति॒। जु॒होत॑। प्र। च॒। ति॒ष्ठ॒त॒। ने॒ष्ट्रात्। ऋ॒तुऽभिः॑। इ॒ष्य॒त॒ ॥ ९ ॥

स्कन्द० [6]द्रविणोदाः पिपीषति पिबतेश्छान्दसत्वादीत्वं, पिपासति पातुमिच्छति सोमम्। एतद् ज्ञात्वा जुहोत अध्वर्यव ! । प्र च तिष्ठत प्रतिष्ठध्वं च सोमं हुत्वा चाहवनीयदेशात् सद प्रति गच्छतेत्यर्थः। कुतः पिपासति। उच्यते। नेष्ट्रात् नेष्टुः स्वभूतात् पात्रात्। न च केवल। किन्तर्हि। ऋतुभिः ऋतुभिः सह इष्यत। इषु गतौ। गच्छत। मा विलम्बध्वमित्यर्थः[6] ॥ ९ ॥

वेङ्कट० द्रविणोदा सोमं पातुमिच्छति। ततः जुहोत अध्वर्यव !। हविर्धानात् प्र तिष्ठत च नेष्टुः स्वभूताच्चमसात् ऋतुभिः सह यष्टुमिच्छत ॥ ९ ॥

मुद्गल० द्रविणोदा देव ऋतुभि सह नेष्ट्रात् नेष्टृसबन्धिपात्रात् पिपीपति सोमं पातुमिच्छति। ततो हे ऋत्विज ! इष्यत होमस्थाने गच्छत। गत्वा च जुहोत होमं कुरुत। हुत्वा प्रतिष्ठत च होमस्थानात् स्थानान्तरं प्रति प्रस्थानमपि कुरुत ॥ ९ ॥

यत् त्वा॑ तु॒रीय॑मृ॒तुभि॒र्द्रवि॑णोदो॒ यजा॑महे। अध॑ स्मा नो द॒दिर्भ॑व ॥ १० ॥

यत्। त्वा॒। तु॒रीय॑म्। ऋ॒तुऽभिः॑। द्रवि॑णः॒ऽदः॒। यजा॑महे। अध॑। स्म॒। नः॒। द॒दिः। भ॒व॒ ॥ १० ॥

स्कन्द० 'यत् इति निपातो यस्मादर्थे। यस्मात् त्वाम्। तुरीयम्† क्रियाविशेषणमेतत्। पूर्वद्रविणोदोदेवतात्रयापेक्षश्चात्र तुरीयव्यपदेशः। चतुर्थमिदम्। ऋतुभिः सह हे द्रविणोदः यजामहे। अध स्म अधेति तस्मादर्थे। स्मशब्दस्तु पदपूरण। तस्मात् नः अस्मभ्यम् ददिः दाता धनानि भव त्वम्[8] ॥ १० ॥

---

१-१ सभजाम इति वा वि° अ मु. २-२ नास्ति वि° अ २-३ इति सप्तमी। चर्मणि द्वीपिनम् इव। देवान् यष्टुम् वि° अ कु ४ नास्ति वि° साम्ब कु अ° ५ धनानि साम्ब° ६. नास्ति वि मे° ६-६ [illegible] । [illegible] (पा ६,४,१६) इति छान्दसम् ईत्वम्। सोमम्। एतत् ज्ञात्वा जुहोत [illegible]। प्रतिष्ठध्वं च। सोमं हुत्वा आहवनीयदेशात् सद प्रति गच्छत। कुत पिपासति। नेष्टुः [illegible]। ऋतुभि सह गच्छत। इषु गतौ। मा विलम्बध्वम् वि° अ कु ८-८ यस्मात् तुरीयमृतुभिः चतुर्थम्। [illegible] तुरीयम्। पूर्व द्रविणोदसि द्रविणोदस। तुरीयतया त द्रविणोदः त्वा यजामहे। तस्मात् [illegible] भव। [illegible] अध इति वि° अ कु † तुरीयं यजामहे यदि [illegible] मूको

वेङ्कट० यदा त्वां चतुर्थमपि ऋतुभिः सह द्रविणोदः ! यजामहे । [1]अथ त्वम् अस्माकम् भव दाता । स्म इति स्फुटीकरणार्थः[2] ॥ १० ॥

मुद्गल० हे द्रविणोदः देव ! यत् यस्मात् कारणात् ऋतुभिः सह त्वा त्वाम् यजामहे । अथ इत्ययं निपातः तच्छब्दार्थः । तस्मात् कारणात् नः अस्मभ्यम् ददिः धनस्य दाता भव स्म भवद्यम् भव । तुरीयम् चतुर्णां पूरणम् ॥ १० ॥

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥ ११ ॥

अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी । शुचिऽव्रता । ऋतुना । यज्ञऽवाहसा ॥ ११ ॥

स्कन्द० [3]"आश्विन्येवादशी ज्ञेया' । एकादश्यृगश्विनीदेवता ज्ञातव्या । अश्विना पिबतम् मधु सोमाख्यम् । दीद्यग्नी दीव्यतेर्द्योतनार्थस्य दीदिः अत्यर्थदीप्तः । दीदिरग्निः ययोः सम्बन्धी तौ दीद्यग्नी । केन सम्बन्धेन सम्बन्धी । जन्यतया[3] । कुत एतत् । 'शुचम् शका मायाविना' (ऋ १०,२४,४) इत्यश्विनोररणिमन्थनदर्शनाद् दीप्तस्याग्नेर्जनयितारौ [4]पितराविरयर्थः । शुचिव्रता शुद्धकर्माणौ । मा च केवलावेव पिबतम् । किन्तर्हि । ऋतुना सह । हे यज्ञवाहसा ! अन्तं यज्ञस्य प्रापयितारौ †समापयितारावित्यर्थः[4] ॥ ११ ॥

वेङ्कट० अश्विनौ पिबतम् सोमम् [5]अरण्योर्दीप्तस्य अग्नेर्जनयितारौ शुचिकर्माणौ ऋतुना सह यज्ञस्य वोढारौ ॥ ११ ॥

मुद्गल० हे अश्विना अश्विनौ ! मधु माधुर्योपेतं सोमम् पिबतम् । कीदृशौ । दीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ शुचिव्रता शुद्धकर्माणौ ऋतुना ऋतुदेवतया सह यज्ञवाहसा यज्ञस्य निर्वाहकौ ॥ ११ ॥

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज ॥ १२ ॥

गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि । देवान् । देवऽयते । यज ॥ १२ ॥

स्कन्द० [6]"आग्नेयी चैव द्वादशी' ‡ । द्वादश्यृगग्निदेवता । गार्हपत्येन इति हेतौ तृतीया । गृहपतित्वेन हेतुना । हे सन्त्य ! षणु दाने इत्यस्यैतद् रूपम् । दातः अग्ने ! ऋतुना सह यज्ञनीः यज्ञस्य देवान् प्रति प्रापयिता असि । अतो ब्रवीमि, देवान् देवयते देवान् कामयमानस्य ममार्थाय यज[6] ॥ १२ ॥

वेङ्कट० कथमहं गृहपतिः स्यामिति[7], सन्त्य[8] ! सनोतेर्दानकर्मणः, सतां वा हित[9] ! ऋतुना सह यज्ञस्य नेता असि । स[10] देवान् यज[11] यजमानाय ॥ १२ ॥

---

१. अथ कु साम्व[२,३]. २. °करार्थः वि[१] लपं ३-३. आश्विन्येकादशी च । अश्विनौ पिबत स्वादु सोमम् । दिव दीप्तौ । अत्यर्थदीप्ताग्निमन्तश्विनौ वि[१] अ कु. † समापयिता° मूको. ४-४. शुद्धकर्माणौ ऋतुना सह पानम् । हे यज्ञस्य अन्तं प्रापयितारौ वि[१] अ कु. ५. अर्यम्णो दीप्त° साम्व[१]; °रण्ये दीप्त° साम्व[२]; आरण्यो दीप्त° वि[१] लपं; अर्यम्णो दीप्त° वि[२] अ[१]. ६-६. आग्नेयी चासौ । गृहपतित्वेन हेतुना हे दातः । षणु दाने । अग्ने ऋतुना यज्ञस्य देवान् प्रति प्रापयिता असि । अतो ब्रवीमि, देवान् कामयमानस्य ममार्थाय यज वि[१] अ कु. ‡ आग्नेयी तु द्वादशी मूको. ७. स्वामीति साम्व[२]. ८. सत्य वि[१,१] लपं. ९. हितः वि[१,१] लपं. १०. नास्ति साम्व[२]. ११. नास्ति वि[१,२] लपं.

मुद्गल० हे अग्ने ! फलप्रदाभिदेव ! गार्हपत्येन गृहपतिसम्बन्धिना रूपेण युक्त सन् ऋतुना ऋतुदेवेन सह यज्ञनी यज्ञस्य निर्वाहक असि। तस्मात् त्वम् देवयते देवविषयकामनायुक्ताय यजमानाय देवान् यज ॥ १२ ॥

इति प्रथमाष्टके प्रथमाध्याये एकोनत्रिंशो वर्ग ॥

[१६]

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥ १ ॥

आ । त्वा । वहन्तु । हरय । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षस ॥ १ ॥

स्कन्द० [1]'ऐन्द्रं त्वनन्तर सूक्तम्'। ऐन्द्रमेवतदनन्तर सूक्तम्। आ वहन्तु त्वाम् हरय अश्वा । कीदृशम्। वृषणम् वर्षितारम्। किमर्थम् । सोमपीतये। हे इन्द्र ! त्वा षष्ठ्यर्थे द्वितीया। तव स्वभूता। कीदृश । सूरचक्षस सूर आदित्य, चक्षो दर्शनम्। सूरस्येव चक्षो येषा ते सूरचक्षस। बलवत्त्वादादित्यवद् दासिमन्त इत्यर्थ । सूर्यदर्शिनो वा सूरचक्षस[2] ॥ १ ॥

वेङ्कट० आ वहन्तु त्वाम् अश्वा वर्षितार सोमपानाय इन्द्र ! त्वा [4]सुवीर्यदर्शना दूरेऽपि पश्यन्त[3]। त्वाशब्दाऽऽवृत्तिरर्थभेदात् ॥ १ ॥

मुद्गल० 'आ त्वा वहन्तु' इति नवर्चं पञ्चम सूक्तम्। मेधातिथि ऋषि [6]। गायत्रम्। इन्द्रो देवता। हे इन्द्र ! वृषणम् कामाना वर्षितारम् त्वा त्वाम् सोमपीतये सोमपानार्थम् हरय त्वदीया अश्वा आ वहन्तु अस्मिन् कर्मणि आनयन्तु। तथा च सूरचक्षस सूर्यसमानप्रकाशयुक्ता ऋत्विज त्वा त्वा मन्त्रै प्रकाशयन्त्विति शेष ॥ १ ॥

इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥ २ ॥

इमा । धाना । घृतऽस्नुव । हरी इति । इह । उप । वक्षत । इन्द्रम् । सुखऽतमे । रथे ॥ २ ॥

स्कन्द० [7]द्वितीयाश्रुतरत्र तयोस्य कर्मप्रवचनीय प्रतिशब्दोऽध्याहार्य । इमा धाना घृतस्नुव घृतस्रवणे। अथवाक्षरणोपस्तरणाभिघारणैर्घृतस्राविणी प्रति। यज्ञे हि हर्यो ऋजीष भागो धानाश्च। अत इद तद्भागेन धानादिभिर्हर्यो प्रोत्साहनार्थं न देशोपलक्षणम्। हरी इन्द्राश्वौ इह कर्मणि उप वक्षत उपेति आ इत्यतस्य स्थाने। लोडर्थे च पञ्चमो लकार । आवहताम्। कम्। इन्द्रम्। सुखतमे रथे सप्तमीनिर्देशात् स्थितमिति वाक्यशेष । तृतीयार्थे वा सप्तमी, सुखतमेन रथेन[7] ॥ २ ॥

---

१ °कामना त्रि २ नास्ति वि ३-३ हे इन्द्र ! आवहन्तु त्वामश्वा वर्षितार सोमपानाथम् । त्वा तव स्वभूता सूर्यस्येव चक्षु येषा ते ऐन्द्रा अश्वा बलवत्त्वात् सूर्यवद्दीप्तिमन्त अदृश्यास्तेजोभि । सूर्यदर्शिनो वा वि' म कु ४ सुवीर्य° साम्ब' कु, सवीर्य° ए, सुवीर्यन्दर्शनाद् वि' साम्ब' वि' म' साम्ब' । ६ नास्ति त्रि मे' ५ पश्यन वि' एप, °श्यन ७-७ यवस्य तण्डुल धाना तत्पूर्णात् करम्भयान्(?)। मांडिवयन परिवापमधिश्रित्य 'धारे दधि शिरिव धाना' (त्रि') । पयस्या सैव चामिक्षा तज्जल वर्णितमम् ॥ इमा ... प्रतिद् आहरेत् । घृतस्राविणी ... क्षरणोपस्तरणाभिघारणैं घृतस्नुव इमा धाना प्रति। यो हि हर्यो ऋजीषं भागो धानाश्च । अत इद तद्भागेन धानाभि हर्यो प्रोत्साहनार्थं न देशोपलक्षणम् । इन्द्राश्वौ इह ... आवहताम् । उप आहि । लेट् ... । निर्दिष्टसुखे रथे स्थितमिदम् । तेनेति वा । दाने हि त्रि' म कु

वेङ्कट० इन्द्राश्वयोर्भागधेयभूताः[1] इमाः धानाः उपस्तरणाभिघारणाभ्यां[2] घृतस्राविण्यः । तदर्थमश्वौ इन्द्रम् इह सुखतमे रथे स्थापयित्वा उप वक्षतः ॥ २ ॥

मुद्गल० हरी [3]इन्द्रस्य रथस्य[3] वोढारौ अश्वौ इमाः यागार्थं वेद्यामासादितत्वेन पुरोवर्तिनीः धानाः भ्रष्टयव-तण्डुलादीनुद्दिश्य सुखतमे रथे इन्द्रमवस्थाप्य इह अस्मिन् कर्मणि उप वक्षतः वेदिसमीपे वहताम् । कीदृशीः धानाः । घृतस्नुवः घृतं स्नुवन्तीति घृतस्नुवः अलङ्करणोपस्तरणाभिघारणेन घृतस्राविणीः ॥ २ ॥

इन्द्रं॑ प्रा॒तर्ह॑वामह॒ इन्द्रं॑ प्रय॒त्य॑ध्व॒रे । इन्द्र॒ं सोम॑स्य पी॒तये॑ ॥ ३ ॥

इन्द्र॑म् । प्रा॒तः । ह॒वा॒म॒हे॒ । इन्द्र॑म् । प्र॒ऽय॒ति । अ॒ध्व॒रे । इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ॥ ३ ॥

स्कन्द० [3]प्रातः प्रक्रमकाले हवामहे इन्द्रम् एव प्रयति प्रवृत्ते अध्वरे यज्ञे । कीदृशम् इन्द्रम् । इदि परमैश्वर्ये । सुष्ठु ईश्वरम् । पुनरिन्द्रशब्दश्रुतिसामर्थ्यात् समाप्यमान इति वाक्यशेषः । इन्द्रम् एव समाप्यमाने यज्ञे । किमर्थम् । सोमस्य पीतये[3] ॥ ३ ॥

वेङ्कट० इन्द्रम् प्रातः[4] प्रवर्तमाने च[5] यज्ञे सोमपानार्थम् हवामहे । पुनः इन्द्रम् इति पूरणम् ॥ ३ ॥

मुद्गल० प्रातः कर्मारम्भे प्रातःसवने इन्द्रम् हवामहे आह्वयामः । तथैव अध्वरे सोमयागे प्रयति प्रगच्छति प्रारब्धे प्रवर्तमाने सति माध्यन्दिने सवने तम् इन्द्रम् हवामहे । तथा यज्ञसमाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थम् इन्द्रम् हवामहे ॥ ३ ॥

उप॑ नः सु॒तमा ग॑हि॒ हरि॑भिरिन्द्र के॒शिभि॑ः । सु॒ते हि त्वा॒ हवा॑महे ॥ ४ ॥

उप॑ । नः॒ । सु॒तम् । आ । ग॒हि॒ । हरि॑ऽभिः । इ॒न्द्र॒ । के॒शिऽभि॑ः । सु॒ते । हि । त्वा॒ । हवा॑महे ॥ ४ ॥

स्कन्द० [6]नः अस्माकं स्वभूतम् सुतम् सोमम् उप आगहि उपागच्छ हरिभिः हे इन्द्र ! केशिभिः केशवद्भिः प्रलम्बकेसरैः । कस्मात् । सुते हि यस्माद् अभिषुते सोमे त्वां वयम् हवामहे । यन्त्वा-रमाह्वयामः[6] ॥ ४ ॥

वेङ्कट० उत्तरा निगदसिद्धा ॥ ४ ॥

मुद्गल० हे इन्द्र ! केशिभिः केसरयुक्तैः हरिभिः अश्वैः त्वम् नः अस्मदीयम् सुतम् अभिषुतं सोमं प्रति उप समीपे आ गहि आगच्छ । सुते अभिषुते सोमे निमित्तभूते सति हि यस्मात् कारणात् त्वा हवामहे त्वामाह्वयामः तस्मादागच्छेति सर्वत्रान्वयः ॥ ४ ॥

सेमं नः॒ स्तोम॒मा ग॒ह्युपे॒दं सव॑नं सु॒तम् । गौ॒रो न तृ॑षि॒तः पि॑ब ॥ ५ ॥

सः । इ॒मम् । न॒ः । स्तोम॑म् । आ । ग॒हि॒ । उप॑ । इ॒दम् । सव॑नम् । सु॒तम् । गौ॒रः । न । तृ॒षि॒तः । पि॒ब ॥ ५ ॥

---

१. 'भागधेयेन भूताः अ[1]. २. °रणाभ्या वि लपं. ३. इन्द्ररथस्य मै[1]. ३-३. इन्द्रं प्रातः प्रक्रमकाले प्रयति प्रवृत्ते समाप्यमाने च इति । इन्द्रशब्दाभिलाष यज्ञादिमध्यान्तेषु इन्द्र हवामहे सोमपानार्थम् । इदि परमैश्वर्ये । इन्द्र परमेश्वरं वा वि[1] अ कु. ४. प्रातः प्रवर्त° साम्व[2]. ५. नास्ति साम्व कु अ[1]. ६-६. अस्मत्समीपं हरि-भिरुपागच्छ । केशवद्भिः प्रलम्बकेसरैः । यस्मादभिषुते सोमे त्वां वयं हवामहे वि[1] अ कु.

स्कन्द० [1]स इमम् न अस्माकं स्वभूतम् स्तोमम् उपा गहि उपागच्छ इदम् सवनम् 'सवनम्' (निघ ३,१७) इति यज्ञनाम। इम च यज्ञम्, सुतम् अभिषुत च सोमम्। अथवेद सवनमिति सप्तम्यर्थे प्रथमा। अस्मिन् यज्ञे स्तोम सुत च सोममुपागच्छ। उपागत्य च गौर न तृषित गौर इत्युत्तरपदलोपो द्रष्टव्य भीमसेनो भीम इति यथा। गौरमृग इव। यथा गौर सरस्तृषित उदक पिबेद तद्वत् पिब सोमम्[1] ॥ ५ ॥

वेङ्कट० स त्वम् इमम् अस्माकम् स्तोमम् आगच्छ। आगत्य च इमम् सुतम् सोमम् तृषित गौरमृग इव उदकम्[2] उप पिब ॥ ५ ॥

मुद्गल० हे इन्द्र स त्वम् न अस्मदीयम् इमम् स्तोमम् स्तुति प्रति आगहि आगच्छ। आगमने हेतुरुच्यते। उप देवयजनसमीपे सुतम् अभिषुत सोमयुक्तम् इदम् इदानीम् अनुष्ठीयमानम् सवनम् प्रात सवनादि रूप कर्म वर्तते। तस्मात् गौर न गौरमृग इव तृषित सन्[3] इम सोमम् पिब ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये त्रिंशो वर्ग ॥

इमे सोमास इन्दवः सुतासो अधि बर्हिषि। ताँ इन्द्र सहसे पिब ॥ ६ ॥

इमे। सोमास। इन्दव। सुतास। अधि। बर्हिषि। तान्। इन्द्र। सहसे। पिब ॥ ६ ॥

स्कन्द० [4]इमे सोमास इन्दव इन्धेर्दीप्तिकर्मण एतद्रूपम्। स्वया दीप्त्या दीप्ता सुतास अधि बर्हिषि बर्हिष उपरि। तान् हे इन्द्र! सहसे बलनामैतत् (द्र निघ २,९)। तादर्थ्ये चतुर्थी। आत्मनो बलार्थम् पिब[4] ॥ ६ ॥

वेङ्कट० इमे सोमा दीप्ता [5]सुता बर्हिषि अध्यासते। तान् इन्द्र! बलाय पिब ॥ ६ ॥

मुद्गल० इन्दव क्लेदनयुक्ता इमे[1] वेद्यामवस्थिता सोमास सोमा बर्हिषि यज्ञे अधि आधिक्येन सुतास अभिषुता। हे इन्द्र! सहसे बलार्थम् तान् सोमान् पिब ॥ ६ ॥

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः। अथा सोमं सुतं पिब ॥ ७ ॥

अयम्। ते। स्तोम। अग्रिय। हृदिऽस्पृक्। अस्तु। शम्ऽतम। अथ। सोमम्। सुतम्। पिब ॥ ७ ॥

स्कन्द० [6]अयम् तवासत्कृत स्तोम अग्रिय प्रधानभूत हृदिस्पृक अस्तु हृदयस्य स्प्रष्टाऽस्तु। तुभ्य रोचतामित्यर्थ। लोकेऽपि हि यद् रोचते तद् हृदय स्पृशतीत्युच्यते। अथवा [7]हृदयस्पर्शेना ऽवधारणमुच्यते। चित्तेन त्वयाऽवधार्यतामित्यर्थ। कीदृश। शतम सुखतम। अथ अनन्तर च सुतम् सोमम् पिब[6] ॥ ७ ॥

---

१-१. स त्वमस्मत्स्तोममागत्य इमं यज्ञं सोमं चोपगच्छ। डौ वा अम्। सवने अस्मिन् यज्ञे अस्मत्स्तुतिमुपागहि। सवे चाभिषुतम। गौर इति गौरसरवाची। 'टाजादावूर्ध्वं द्वितीयादच' (पा ५,३,८३) 'अजिनान्तस्योत्तरपदलोपश्च' (पा ५,३,८२) 'अनजादौ च विभाषा' इत्युत्तरपदलोप। भीम इव। यथा उदकं तृषित गौरमृग इव। तृषित पिब वि[1] म कु. २. नास्ति वि[1]. ३. नास्ति वि. ४-४. इमे सोमा दीप्ता। इन्धी दीप्तौ। स्वया दीप्त्या दीप्ता सुता बर्हिषि ... हे इन्द्र! तानात्मबलार्थ पिब वि[1] म कु. ५. सद वि[1] एप. ६-६. अयं तव स्तोम प्रधानभूत सद्धृदयस्य स्प्रष्टा अस्तु। लोके हि यद्रोचते तद्धृदयं स्पृशति इति न्याय। तव रोचनम्। ... चित्तेनावधार्यताम् इति वा। सुखतम अनन्तरं सोममभिषुत पिब वि[1] म कु. ७. 'स्पर्शेन चावधारणं लक्ष्यते मूको'

वेङ्कट० [1]अयम् तव स्तोमः सुपथः हृदिस्पृक् अस्तु सुखतमः। अथ सोमम्[2] सुतम् पिब ॥ ७ ॥

मुद्गल० हे इन्द्र ! अयम् अस्माभिः क्रियमाणः स्तोमः स्तोत्रविशेषः अग्रियः श्रेष्ठः सन् ते तव हृदिस्पृक् मनस्यङ्गीकृतः शंतमः सुखतमः अस्तु । अथ स्तुतेरनन्तरं सुतम् अभिषुतम् सोमम् पिब ॥ ७ ॥

विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥ ८ ॥

विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति । वृत्रहा । सोमऽपीतये ॥ ८ ॥

स्कन्द० [3]"सवनम्' (निघ ३,१७) इति यज्ञनाम । विश्वम् सवनम् इति चोभयत्र सप्तम्यर्थे प्रथमा । इत् शब्दः पदपूरणः । सर्वस्मिन् यज्ञे । सुतम् सोमं प्रति इन्द्रः गच्छति वृत्रहा । किमर्थम् । मदाय सोमपीतये मदार्थं यत् सोमपानं तदर्थम् । अथवा मदायेत्येतत् सुतमित्यनेन सम्बध्यते । मदार्थमभिषुतोऽयं सोमस्तस्यार्थं इति[3] ॥ ८ ॥

वेङ्कट० विश्वम् एव सुतम् सोमम् इन्द्रः मदार्थम् गच्छति[4] शत्रुहा सोमपानार्थम् । पानेन मदो भवति ॥८॥

मुद्गल० वृत्रहा शत्रुहा इन्द्रः सोमपीतये सोमपानाय मदाय तत्पानजन्यहर्षाय च विश्वम् इत् सर्वमपि सुतम् अभिषुतसोमयुक्तम् सवनम् प्रातःसवनादिरूपं कर्म गच्छति ॥ ८ ॥

सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥ ९ ॥

सः । इमम् । नः । कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतो इति शतऽक्रतो । स्तवाम । त्वा । सुऽआध्यः ॥ ९ ॥

स्कन्द० [5]सः त्वम् इमम् नः कामम् इच्छाम् आपृण पृण प्रीणने । आप्रीणय तर्पय पूरयेत्यर्थः । केन । गोभिः अश्वैः च । हे शतक्रतो ! बहुकर्मन् ! बहुप्रज्ञ ! वा स्तवाम त्वा । सेमं न इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यं त्वां स्तुवन्तो वयम् स्वाध्यः, आध्यानम् आधीः प्रार्थना, शोभनप्रार्थनाः[5] ॥ ९ ॥

वेङ्कट० सः त्वं गवादिभिः इमम् अस्माकम् कामम् आपूरय । शतकर्मन्[6] ! । स्तवाम त्वा सुकर्माणः[7] ॥९॥

मुद्गल० हे शतक्रतो ! सः त्वम् नः अस्मदीयम् इमम् कामम् काम्यमानं फलम् गोभिः अश्वैः च सह आ पृण सर्वतः पूरय । वयमपि स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः सन्तः[8] त्वा त्वाम् स्तवाम ॥ ९ ॥

इति प्रथमाष्टके प्रथमाध्याये एकत्रिंशो वर्गः ॥

---

१. नास्ति वि[1]. २. नास्ति लपं. ३-३. विश्वम् । अम् दौ । सर्वस्मिन् यज्ञे । सुतं सोमं प्रति इन्द्रो गच्छति । मदाय मदार्थमभिषुतं प्रति गच्छति इति वा । शत्रुहा सोमपानाय वि[1] अ मु. ४. गच्छति साम्ब[1]. ५-५. स त्वमस्मत्कामं पूरय प्रीणय गोभिरश्वैश्च बहुकर्मन् ! । यं त्वां वयं शोभनप्रार्थना स्तुमः । सु आध्यानं स्वाधीः । इन्द्रः अस्मत्कामं पूरयेदिति प्रार्थना वि[1] अ मु. ६. शतक्रतो[1] वि[1] अ[1]. ७. सुकर्माणः साम्ब[1] मु. ८. नास्ति वि.

[ १७ ]

इन्द्रावरु॑णयोर॒हं स॒म्राजो॒रव॒ आ वृ॑णे । ता नो॑ मृळात ई॒दृशे॑ ॥ १ ॥

इ॒न्द्रावरु॑णयोः । अ॒हम् । स॒म्ऽराजोः॑ । अवः॑ । आ । वृ॒णे॒ । ता । नः॒ । मृ॒ळा॒तः॒ । ई॒दृशे॑ ॥ १ ॥

स्कन्द० [1]'ऐन्द्रावरुणमुत्तरम्' । उत्तरं सूक्तमैन्द्रावरुणम् । इन्द्रावरुणयोः अहम् सम्राजोः सम्यग्दीप्तयोः स्वभूतम् अवः पालनम् आवृणे प्रार्थये । एतज् ज्ञात्वा ता तौ नः अस्मान् मृळातः । मृड सुखने । लोडर्थे च पञ्चमो लकारः । अवःसंपादनेन सुखयतः । ईदृशे प्रार्थनाविशेषे वर्तमानानिति शेषः[1] ॥ १ ॥

वेङ्कट० इन्द्रावरुणयोः अहम् सर्वेषामीश्वरयोः पालनम् आवृणे । तौ मृळयेताम् अस्मान् ईदृशे स्तोत्रे । [2]यद्वा ईदृशेनावसेति ॥ १ ॥

मुद्गल० 'इन्द्रावरुणयोः' इति नवर्चं षष्ठं सूक्तम् । मेधातिथिः ऋषिः[3] । गायत्रम् । इन्द्रावरुणौ देवते[4] । [5]'युवाकु हि' इत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते[5] ॥

अहम् अनुष्ठाता सम्राजोः समीचीनराज्योपेतयोः इन्द्रावरुणयोः देवयोः संबन्धि अवः रक्षणम् आ वृणे सर्वतः प्रार्थये । ता तौ देवौ ईदृशे एवंविधे अस्मदीयवरणे निमित्तभूते सति मृळातः नः अस्मान् सुखयत ॥ १ ॥

गन्ता॑रा॒ हि स्थोऽव॑से॒ हवं॒ विप्र॑स्य॒ माव॑तः । ध॒र्तारा॑ चर्षणी॒नाम् ॥ २ ॥

गन्ता॑रा । हि । स्थः । अव॑से । हव॑म् । विप्र॑स्य । माऽव॑तः । ध॒र्तारा॑ । च॒र्ष॒णी॒नाम् ॥ २ ॥

स्कन्द० [6]हि इति पदपूरणः । गन्तारा गमनशीलौ युवाम् स्थः अवसे पालनाय हवम् आह्वानम् विप्रस्य मेधाविनः मावतः मत्सदृशस्य । धर्तारा धारयितारौ च तैस्तैरुपकारैः चर्षणीनाम् मनुष्याणाम्[6] ॥ २ ॥

वेङ्कट० गन्तारौ हि भवथः[7] रक्षणार्थम् आह्वानं मेधाविनः मत्सदृशस्य धारकौ मनुष्याणाम् । तौ मयि [8]चागच्छतम् ॥ २ ॥

मुद्गल० हे इन्द्रावरुणौ ! अवसे अवितुम् अनुष्ठातारं रक्षितुम् मावतः मद्विधस्य विप्रस्य ब्राह्मणर्त्विजः हवम् आह्वानम् गन्तारा गन्तारौ स्थः हि प्राप्तिशीलौ भवथः खलु । कीदृशौ । चर्षणीनाम् मनुष्याणाम् धर्तारा धर्तारौ योगक्षेमसम्पादनेन धारयितारौ ॥ २ ॥

अ॒नु॒का॒मं त॑र्पयेथा॒मिन्द्रा॑वरुणा रा॒य आ । ता वां॒ नेदि॑ष्ठमीमहे ॥ ३ ॥

अ॒नु॒ऽका॒मम् । त॒र्प॒ये॒था॒म् । इन्द्रा॑वरुणा । रा॒यः । आ । ता । वा॒म् । नेदि॑ष्ठम् । ई॒म॒हे॒ ॥ ३ ॥

---

१-१. इन्द्रावरुणयोरहं सम्यग्दीप्तयोः पालनं प्रार्थये । एतज् ज्ञात्वा तौ नः सुखयतः । अवःसंपादनेन । मृड सुखने । लेटि लेट् । ईदृशे प्रार्थनाविशेषे वर्तमानान् वि[1] अ कु. २. नास्ति ल वि[1]. ३. नास्ति वि. ४. नास्ति वि मै[1]. ५-५. "इति द्वे वाक्ये वैतौ वि मै[2]. ६-६. गन्तारा गमनशीलौ युवा स्थः । पालनायाह्वानं मेधाविनो मत्सदृशस्य धारयितारौ तैस्तैरुपकारैः नृणाम् वि[1] अ कु. ७. भवौ अ[1] वि[1]. ८. वाग° अ[1] वि[1].

स्कन्द० [1]अन्विति पश्चादर्थे । सोमस्य च पश्चात् अनुकामम् कामयित्वा तत्पानानन्तरमित्यर्थः । अथवा अनुशब्दो वीप्सायां कर्मप्रवचनीयः । कामं काममनु अनुकामं, यदा यदा वयं कामयामहे तदा तदेत्यर्थः । तर्पयेथाम् अस्मान् हे इन्द्रावरुणा ! द्विवचनादेशाकारस्येदं सांहितं ह्रस्वत्वम् । इन्द्रावरुणौ ! । केन । रायः तृतीयार्थे वा षष्ठीयम् । षष्ठीश्रुतेर्वैकदेशेनेति शेषः । धनेन धनस्य वाऽऽत्मीयस्यैकदेशेन । आकारस्तु पदपूरणः । ता रायो धनेन तर्पणं प्रार्थितवन्तो वयं तौ वाम् युवाम् नेदिष्ठम् इष्टत्वाद् यत् सन्निकृष्टं युवयोर्धनं तद् ईमहे याचामहे । न यत् किञ्चित्[1] ॥ ३ ॥

वेङ्कट० कामानन्तरमस्मान् धनेन [2]आ तर्पयेथाम् इन्द्रावरुणौ[2] ! । तौ वाम् वयं युवयोरन्तिकतमं धनं याचामहे ॥ ३ ॥

मुद्गल० हे इन्द्रावरुणा इन्द्रावरुणौ ! अनुकामम् अस्मदीयाभिलाषमनु रायः धनस्य प्रदानेन आ तर्पयेथाम् सर्वतोऽस्मान् तृप्तान् कुरुतम् । यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः । ता वाम् तादृशौ युवाम् नेदिष्ठम् अतिशयेन सामीप्यं यथा भवति तथा ईमहे याचामहे । कालविलम्बमन्तरेण धनं दातव्यमित्यर्थः ॥ ३ ॥

युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ॥ ४ ॥

युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम । वाजऽदाव्नाम् ॥ ४ ॥

स्कन्द० [4]हिशब्दो यस्मादर्थे । यस्माद् युवाकु युवां कामयत इति युवाकु, युष्मत्पानकाममित्यर्थः । अथवा यु मिश्रणे । मिश्रितं वसतीवर्यैकधनाभिरद्भिः श्रयणैर्वा । किं पुनस्तत् । सामर्थ्यात् सोमलक्षणं हविः । कस्य । शचीनाम् 'शची' (निघ २,१) इति कर्मनाम । सामर्थ्याद् वाऽत्रान्तर्णीतमत्वर्थम् । यागकर्मवतामस्माकं स्वभूतम् । न च सोमलक्षणमेव हविः केवलम् । किं तर्हि । युवाकु युष्मत्कामं युष्मद्गुणमिश्रं वा युष्मत्सर्वगुणसङ्कीर्तनरूपमित्यर्थः । किं तद् । सामर्थ्यात् स्तुतिलक्षणं वचनम् । सुमतीनाम् मतिः स्तुतिः मन्यतेरर्चतिकर्मत्वात् । सुस्तुतीनामस्माकं स्वभूतम् । अथवा द्वावपि युवाकुशब्दौ सोमविषयावेव । मिश्रणार्थ एकः, युष्मत्पानकाममित्येवमर्थोऽपरः । अथवा एवमन्यथाऽस्यार्धर्चस्य अर्थयोजना । युवाकु इति बहुवचनस्य स्थाने एकवचनम् शचीनां सुमतीनामित्यपि तृतीयार्थे षष्ठी । यस्माद् युष्मत्कामाः कर्मभिः शोभनाभिश्च स्तुतिभिः वयम् । यस्मादिति वचनात् तस्माच्छब्दोऽध्याहार्यः । भूयाम वाजदाव्नाम्[4]

---

१-१. अनुकामं कामनानन्तरमेव अस्मान् तर्पयेथाम् । अनुर्वीप्सायां वा कर्मप्रवचनीयः । कामं काममनु । यदा यदा वयं कामयामहे तदा तदा तर्पयेथाम् । धनेन तस्यैकदेशेन वा । इस् शर्थः । युष्मद्धनतर्पणप्रार्थनावन्तो वयम् । तौ युवामिष्टत्वादस्मत्सन्निकृष्टतमं धनं तथाचामहे । अन्तिकबाढयोर्नेदसाधौ (पा ५,३,६३) अतिशायने तमबिष्ठनौ (पा ५,३,५५) इति नेदिष्ठम् वि॰ अ कु. २. नास्ति,साम्ब कु वि॰ स्पं. ३. मित्रवरुणौ वि॰. ४-४. यागकर्मवतामस्माकं सोमलक्षणं हविः युष्मत्काम यस्मात् । 'बहुवीर्योऽस्मि शची' इति कर्मनाम । अन्तर्णीतमतुप् च । युष्मत्काम युवाकु । कमेः द्रु । यु मिश्रणार्थे वा । वसतीवर्येकधनाभिरद्भिः श्रयणैर्वा युक्त हविः । सुमतीनाम् अस्मत्स्तुतिवचन च युवाकु । युष्मत्सर्वगुणसङ्कीर्तनरूपम् अस्मत्स्तुतिवचन युष्मत्कामम् । मन अर्चायाम् । द्वावपि युवाकुशब्दौ सोमविषयावेव । वसतीवर्यादिमिश्रणार्थ एकः । युष्मत्पानकामार्थः अपरः । अथवा अन्यथा अस्य अर्धर्चस्य अर्थयोजना । जसि सुः । सुपि नत् । भिसि आम् । वय कर्मभिः शोभनाभिः स्तुतिभिश्च वि॰ अ कु.

[1]भाविऽयं वनिर्द्रष्टव्यः । अन्नदानानाम् । षष्ठीश्रुतेर्लब्धारः कर्तारो वेति वाक्यशेषः[1] ॥ ४ ॥

वेङ्कट० युष्मत्कामः हि पुरुषः प्रज्ञानां[2] भाजनं भवति युवाकु सुमतीनाम् च । वयं च युवाकवौ[3] युवयोरन्नस्य दातॄणां कर्मणां[4] भाजनं भवाम, भूयास्म वेति ॥ ४ ॥

मुद्गल० हि यस्मात् कारणात् शचीनाम् अस्मदीयकर्मणां संबन्धि सोमरूपं हविः युवाकु वसतीवर्यैकधनाख्यैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितम् । तथा सुमतीनाम् शोभनबुद्धियुक्तानाम् ऋत्विजां स्तुतियुक्तं वचनमपि युवाकु नानाविधैः स्तुत्यगुणैः मिश्रितम् । तस्मात् कारणात् हे इन्द्रावरुणौ ! तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादात् वयम् वाजदाव्नाम् अन्नप्रदानां पुरुषाणां मध्ये मुख्याः भूयास्म भवेम ॥ ४ ॥

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥

इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् । क्रतुः । भवति । उक्थ्यः ॥ ५ ॥

स्कन्द० [5]इन्द्रः सहस्रदाव्नाम् सहस्रसंख्याकदानानाम्, वरुणः च‡ शंस्यानाम् स्तुत्यानामत्यन्तोत्कृष्टानाम् क्रतुः कर्ता भवति । स्तोतृभ्यः प्रभूतानि धनानि ददातीत्यर्थः । कीदृशः । उक्थ्यः प्रशस्यनामैतत् ( द्र. निघ ३,८ ) वक्तव्ये† प्रशस्यः§[5] ॥ ५ ॥

वेङ्कट० इन्द्रः [6]सहस्रस्य दातॄणामपि[6] कर्मणां कर्ता भवति, वरुणः च प्रशंसनीयानां प्रशस्यः । अपि वा स्तोतॄन् सहस्रदाव्नः प्रशस्यांश्च करोति ॥ ५ ॥

मुद्गल० अयम् इन्द्रः सहस्रदाव्नाम् सहस्रसंख्याकधनप्रदानां मध्ये क्रतुः धनदानस्य कर्ता भवति । प्रभूतं ददातीत्यर्थः । तथा वरुणः शंस्यानाम् स्तुत्यानां मध्ये उक्थ्यः स्तुत्यो भवति । अतिशयेन स्तुत्य इत्यर्थः ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः ॥

तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ॥ ६ ॥

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि । स्यात् । उत । प्रऽरेचनम् ॥६॥

स्कन्द० [7]इत् इति पदपूरणः । तयोः इन्द्रावरुणयोः अवसा 'हेतौ' ( पा २,३,२३ ) इति तृतीया । तर्पणेन पालनेन वा हेतुना । ताभ्यां तर्प्यमाणाः पाल्यमाना वेत्यर्थः । सनेम संभजेमहि । किम् । सामर्थ्याद्[7]

---

१-१. युष्मत्कामा यस्मात् तस्मादन्नदानानां लब्धारः कर्तारो भवेम । 'भाविऽयं वनिः वि[1] अ कु. २. यज्ञानां साम्ब[1] पु अ[1]. ३. नास्ति साम्ब कु; युवाकवयोः वि[1]. ४. नास्ति साम्ब[1]. ५-५. इन्द्रः सहस्रसङ्ख्याकदानानां वरुणश्च स्तुत्यानामत्यन्तोत्कृष्टानां कर्ता भवति । वक्तव्यप्रशस्यः वि[1] अ कु. ‡ नास्ति मूको. § °नाम वृत्तुक्य. प्रशस्यः इति उक्थ्यः प्रशस्यः वि[1] अ. † नास्ति मूको. ६-६. सहस्रदा° साम्ब[1]. ७-७. तयोस्तर्पणेन पालनेन वा हेतुना धनं संभजेमहि च वि[1] अ कु.

[1]धनम् । नि धीमहि च उपभोगातिरिक्तं च निखाय स्थापयेमेत्यर्थः । स्यात् उत प्ररेचनम् उतेत्यप्यर्थे । प्रकर्षेण यदतिरिच्यते तत् प्ररेचनम् । उपभोगान्निधानाच्चातिरिक्तमपि स्यादित्यर्थः[1] ॥६॥

वेङ्कट० इन्द्रावरुणयोः एव रक्षणेन वयम् धनं भजेमहि नि धीमहि च । उपयुक्तादतिरिक्तं [2]निहितादतिरिक्तम् अपि अस्तु ॥ ६ ॥

मुद्गल० तयोरित् पूर्वोक्तयोरिन्द्रावरुणयोरेव अवसा रक्षणेन वयम् अनुष्ठातारः सनेम संभजेम धनमिति शेषः । नि धीमहि च प्राप्ते धने यावदपेक्षितं तावद् भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयामश्च । उत अपि च प्ररेचनम् भुक्तात् निहिताच्च प्रकर्षेणाधिकं धनम् स्यात् संपद्यताम्[3] ॥ ६ ॥

इन्द्रा॑वरुण वाम॒हं हु॑वे चि॒त्राय॒ राध॑से । अ॒स्मान्त्सु जि॒ग्युष॑स्कृतम् ॥ ७ ॥

इन्द्रा॑वरुणा । वा॒म् । अ॒हम् । हु॒वे । चि॒त्राय॑ । राध॑से । अ॒स्मान् । सु । जि॒ग्युष॑ः । कृ॒तम् ॥७॥

स्कन्द० [4]हे इन्द्रावरुणौ ! वाम् अहम् हुवे । किमर्थम् । चित्राय राधसे चित्रस्य धनस्यार्थाय । चित्रं धनं मह्यं दत्तमित्यर्थः । किञ्च अस्मान् सु जिग्युषः सुष्ठु जितवतः शत्रून् कृतम् कुरुतम् । अस्मच्छत्रूनप्यस्माभिर्जापयतमित्यर्थः[4] ॥ ७ ॥

वेङ्कट० इन्द्रावरुणौ ! वाम् अहम् हुवे चित्राय धनाय । तौ अस्मान् शत्रून् जितवतः सुष्ठु कुरुतम् ॥७॥

मुद्गल० [5]इन्द्रावरुणा हे इन्द्रावरुणौ ! वाम् युवाम् अहम् हुवे आह्वयामि । किमर्थम् । चित्राय मणिमुक्तादिरूपेण विविधाय राधसे धनाय । तत आहूतौ युवाम् अस्मान् अनुष्ठातॄन् सु जिग्युषः शत्रुविषये सुष्ठु [6]जययुक्तान् कृतम् कुरुतम् ॥ ७ ॥

इन्द्रा॑वरुण॒ नू नु वां॒ सिषा॑सन्तीषु धी॒ष्वा । अ॒स्मभ्यं॒ शर्म॑ यच्छतम् ॥ ८ ॥

इन्द्रा॑वरुणा । नु । नु । वा॒म् । सिसा॑सन्तीषु । धी॒षु । आ । अ॒स्मभ्य॑म् । शर्म॑ । य॒च्छ॒त॒म् ॥८॥

स्कन्द० [7]नु-शब्दयोर्द्वयोरेकः क्षिप्रनाम । पदपूरणोऽपरः । हे इन्द्रावरुणौ ! क्षिप्रम् वाम् युवाम् सिसासन्तीषु संभक्तुकामासु धीषु आ आकारः पदपूरणः, कर्मसु । सप्तमीनिर्देशाद् वर्तमानेभ्य इति वाक्यशेषः । युष्मद्देवत्यानि कर्माण्यनुतिष्ठद्भ्य इत्यर्थः । केभ्यः । अस्मभ्यम् शर्म गृहं सुखं वा यच्छतम् दत्तम्[7] ॥ ८ ॥

---

१-१. उपभोगातिरिक्तं च निखाय स्थापयामः । प्रकर्षेण यदतिरिच्यते तद् प्ररेचनम् । उपभोगान्निधानाच्चातिरिक्तमपि स्याद् वि[1] अ कु. २. निहितादति° वि[1]. ३. संपद्यताम् वि अ[1]. ४-४. इन्द्रावरुणौ वामहं हुवे । पूजनीयं राधः मह्यं दत्तम् । अस्मान् सुष्ठु जितवतः (जेतिवन्तः वि[1] अ) कुरुतम् । अस्मच्छत्रूनपि अस्माभिः जापयतं (जापयन्तं वि[1] अ) वि[1] अ कु. ५. नास्ति वि. ६. युक्ता° वि. ७-७. नु क्षिप्रम् । हे इन्द्रावरुणौ क्षिप्रं युवां संभक्तुमिच्छत्सु कर्मसु वर्तमानेभ्योऽस्मभ्यं सुखं गृहं वा दत्तम् । 'जेतिरर्थं (?) धीः कर्म' इति कर्माणि । युष्मद्देवत्यानि कर्माणि अनुतिष्ठतः नः शर्म दत्तम् वि[1] अ कु.

वेङ्कट० इन्द्रावरुणौ ! क्षिप्रम् वाम् संभक्तुमिच्छत्सु ध्यातृषु स्तोतृषु अस्मभ्यम् सुखम् प्रयच्छतम्। एकौ नु:[1] पूरणः ॥ ८ ॥

मुद्गल० [2]इन्द्रावरुणा हे इन्द्रावरुणौ ! धीषु अस्मदीयबुद्धिषु वाम् युवाम् सिषासन्तीषु सनितुं संभक्तुं सम्यक् सेवितुमिच्छन्तीषु तदानीम् आ समन्तात् अस्मभ्यम् शर्म सुखम् नू नु अतिशयेन क्षिप्रम् [3]यच्छतम् दत्तम् ॥ ८ ॥

प्र वा॑मश्नोतु सुष्टु॒तिरिन्द्रा॑वरुण॒ यां हु॒वे याम्॑ऋधाथे॑ स॒धस्तु॑तिम् ॥ ९ ॥

प्र । वा॒म् । अ॒श्नो॒तु॒ । सु॒ऽस्तु॒तिः । इन्द्रा॑वरुणा । याम् । हु॒वे । याम् । ऋ॒धाथे॒ इति॑ । स॒धऽस्तु॑तिम् ॥ ९ ॥

स्कन्द० [4]प्र वाम् अश्नोतु प्रकर्षेण युवां व्याप्नोतु । सुष्टुतिः शोभना स्तुतिः । हे इन्द्रावरुणौ ! याम् हुवे यामिति द्वितीयानिर्देशात् प्रतीति वाक्यशेषः । तृतीयार्थे वा द्वितीया । यां प्रति यया वा युवामाह्वयामि । याम् च ऋधाथे वर्धयथः । यो यो निजस्तुतेः फलं साधयति स तां पुनःपुनः कारयति वर्धयति । कीदृशाम् । सधस्तुतिम् सहहूतयोर्युवयोः स्तुतिम् । अथवा सधस्तुतिमिति तृतीयार्थे द्वितीया । यया सहस्तुत्या वर्धेथे इत्यर्थः । स्तूयमाना हि देवता वीर्येण वर्धन्ते[4] ॥ ९ ॥

वेङ्कट० प्र अश्नोतु[5] वाम्[6] सुष्टुतिः इन्द्रावरुणौ ! याम् स्तुतिं प्रति वाम् अहम् हुवे । याम् च युवाम् वर्धयथ, सहहूताम्[7] ॥ ९ ॥

मुद्गल० इन्द्रावरुणा हे इन्द्रावरुणौ ! याम् अस्मत्कर्तृकां शोभनस्तुतिं प्रति हुवे युवामुभौ आह्वयामि । किञ्च सधस्तुतिम् युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियायाः सुष्टुतिम् [8]प्र प्रतिलभ्य ऋधाथे युवां वर्धेथे । तादृशी सुष्टुतिः शोभनस्तुतिहेतुभूत ऋक्समूहः वाम् अश्नोतु युवां व्याप्नोतु ॥ ९ ॥

इति प्रथमाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः ॥

इति प्रथमे मण्डले चतुर्थोऽनुवाकः ॥

[ १८ ]

सो॒मानं॒ स्वर॑णं कृणु॒हि ब्र॑ह्मणस्पते । क॒क्षीव॑न्तं॒ य औ॑शि॒जः ॥ १ ॥

सो॒मान॑म् । स्वर॑णम् । कृ॒णु॒हि । ब्र॒ह्म॒णः॒ । प॒ते॒ । क॒क्षीव॑न्तम् । यः । औ॒शि॒जः ॥ १ ॥

---

१. नु वि॰ ह्रे. २. नास्ति वि. ३. प्रय॰ मूको. ४-४. प्रकर्षेण युवां व्याप्नोतु शोभना स्तुतिः । हे इन्द्रावरुणौ यः प्रति आह्वयामि । यया वा । ऋधे अन् । यां स्तुतिं फलसिद्धया वर्धयथः । सहभूतयोः युवयोः स्तुतिम् । सम्य मत्वः । 'सध मादस्थयोश्छन्दसि' ( पा ६,३,९६ ) इति । सधस्तुतिं सहस्तुतिं कुर्वन् फलस्यातिसिद्धया पुनःपुनरभ्येव करोति । ऋधे वा अन् । यया सहस्तुत्या वर्धेते ( वर्धेथे भ. ) वि॰ भ कु. ५. प्राश्नोतु साम्ब कु भ॰. ६. स्तम वि॰ भ॰. ७. सहभूताम् साम्ब वि॰ भु. ८. 'सुतिरश्नोतु' मूको.

4.5644

स्कन्द० [१]'सोमानमिति गायत्रा याः पञ्च ता ब्रह्मणस्पतेः'। सोमानमित्याद्यौ याः पञ्चर्चस्ता ब्रह्मणस्पतिदेवताः । सोमानम् षुञ् अभिषवे । अभिषोतारम् । कस्य । सामर्थ्यात् सोमस्य† । स्वरणम् स्वृ शब्दोपतापयोः । शब्दयितारम् । कस्य । सामर्थ्यात् स्तुतीनाम् अर्थयितारं च । यष्टारं स्तोतारं चेत्यर्थः । कृणुहि कुरु मां धनप्रदानेन । अथवा सर्वत्र यः शब्द्यते स स्वरणः प्रकाश इत्यर्थः । अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु हे ब्रह्मणः पते ! । कमिव । उच्यते । कक्षीवन्तम् लुप्तोपममेतद् द्रष्टव्यम् । कक्षीवन्तमिव ऋषिम् । कतमोऽयं कक्षीवान् । उच्यते । यः औशिजः उशिक्पुत्रः[१] ॥ १ ॥

वेङ्कट० सोतारं[२] प्रकाशनवन्तं[३] कुरु माम् ब्रह्मणस्पते ! कक्षीवन्तम् । [४]यथा कृतवानसि । यः कक्षीवानुशिक्प्रसूतः । स्वरतिः शब्दकर्मेति ॥ १ ॥

मुद्गल० पञ्चमे अनुवाके षट् सूक्तानि । तत्र 'सोमानम्' इति नवर्चं प्रथमं सूक्तम् । मेधातिथिः[५] । गायत्रम् । आद्यास्तिस्रो ब्राह्मणस्पत्याः । चतुर्थी 'ब्रह्मणस्पतीन्द्रसोमा इति त्रिदेवताका[६] । पञ्चमी दक्षिणा ब्रह्मणस्पतिश्च इन्द्रश्च सोमश्चेति चतुर्देवताका[७] नाराशंसी वा ॥

हे ब्रह्मणस्पते एतन्नामकदेव ! सोमानम् अभिषवस्य कर्तारं मामनुष्ठातारम् स्वरणम् देवेषु प्रकाशनवन्तम्[८] कृणुहि कुरु । दृष्टान्तः । कक्षीवन्तम् एतन्नामकम् ऋषिम् । इवेत्यस्याध्याहारः । कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः । कक्षीवान् ऋषिः औशिजः उशिक्पुत्रः । तमिवेति पूर्वत्र योजना ॥ १ ॥

## यो रे॒वान् यो अ॑मीव॒हा व॑सु॒वित् पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥ २ ॥

यः । रे॒वान् । यः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सः । नः॒ । सि॒स॒क्तु॒ । यः । तु॒रः ॥ २ ॥

स्कन्द० [९]'यः ब्रह्मणस्पतिः रेवान् धनवान् यः च अमीवहा हिंसितॄणां हन्ता वसुवित् विदिर्लाभे । अपूर्वाणामपि धनानां लब्धा । अथवा विन्दतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः । पुष्टिवर्धनः सर्वप्रकारायाः पुष्टेर्वर्धयिता सः नः सिषक्तु सेवताम्, यः तुरः त्वरिता क्षिप्रकारीत्यर्थः । अथवा यो रेवानित्यादिभिः पुत्रः† प्रतिनिर्दिश्यते । ब्रह्मणस्पतिप्रसादाद् धनवत्त्वादिगुणः पुत्रोऽस्मान् सचताम् । अस्माकं जायतामित्यर्थः[९] ॥ २ ॥

---

१-१. षुञ् अभिषवे । अन्येभ्योऽपि दृश्यन्ते (पा ३,२,७५) इति मनिन् । अभिषोतारं सोमस्य । स्वृ शब्दोपतापयोः । चलनशब्दार्थादकर्मकाद्युच् (पा ३,२,१४८) शब्दयितारं स्तुतीनां यष्टारं स्तोतारं च कुरु मा धनप्रदानेन । सर्वत्र यः शब्दयते स वा स्वरणः प्रकाशः । सोमाभिषोतारं मा देवमनुष्येषु प्रकाशं कुरु ब्रह्मणस्पते । कक्षीवन्तमृषिमिव । यः उशिक्पुत्रः तमिव । लुप्तोपमा वि[१] अ कु. † सोमस्य नः मूको. २. सोमानं साम्ब कु. ३. प्रकाशवन्तं साम्ब कु. ४. यस्तथा मूको. ५. °थिर्ऋषिः मै[१]. ६-६. °स्पतिदेवताकाः मै[१]. ७. °मश्चेति त्रिस्रोदेव° मै[१]; °तिरिन्द्रसोमौदे° वि मै[१]. ८. °शवन्तं वि. ९-९. यो धनवान् यश्च हिंसितॄणां हन्ता अपूर्वाणामपि धनानां लब्धा लम्भयिता वा अन्तर्णीतण्यर्थत्वात् । स्तोतृभ्यो दाता । सर्वप्रकारायाः पुष्टेर्वर्धयिता । य एवंभूतः सः नः सेवतां (त्वम् (?) एवंगुणः पुत्रो मम जायता स नः सेवता च । यः क्षिप्रकारी । तुरास्त्वरैव तूर्णयाः (?) कु) (च । यः क्षिप्रकारी तुरास्त्वरैव तूर्णया (?) इति वि[१] अ.) वि[१] अ कु. † पुत्र मूको.

वेङ्कट० यः धनवान् यः च रक्षसां हन्ता धनं लम्भयति, पुष्टेर्वर्धयिता सः भजताम् अस्मान्। यः सर्वत्र त्वरते कर्मस्विति ॥ २ ॥

मुद्गल० यः ब्रह्मणस्पतिः रेवान् धनवान् यः च अमीवहा रोगाणां हन्ता वसुवित् धनस्य लब्धा पुष्टिवर्धनः पुष्टेर्वर्धयिता यः च तुरः त्वरोपेतः शीघ्रफलप्रदः सः ब्रह्मणस्पतिः नः अस्मान् सिषक्तु सेवताम्। परिगृह्य अनुगृह्णात्वित्यर्थः ॥ २ ॥

मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३ ॥

मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य । रक्ष । नः । ब्रह्मणः । पते ॥ ३ ॥

स्कन्द० [1]मा शब्दः प्रणक् इत्येतेन सम्बन्धयितव्यः । नः अस्मान्[*] शंसः शंसनम् आशंसा विनाशाभिलाषः । अररुषः देवेभ्यो हविषामदातुरयष्टुः स्वभूतः । यो हि न यजते स यष्टॄन् विनश्यन्त्वित्येवमाशंसति । सोऽस्य शंसः । धूर्वतेर्वधकर्मणः धूर्तिः हिंसा हिंसिता वा । स च मा प्रणक् प्रपूर्वस्य नशेर्व्याप्तिकर्मण एतद्रूपम् । मा प्रणशत् मा प्रापदित्यर्थः । अथवाऽनवग्रहैकपदत्वात् पृचेः सम्पर्कार्थस्येदं रूपम्, न प्रपूर्वस्य नशेः । न इति च तृतीयार्थे द्वितीया । माऽस्माभिः प्रणक् सम्पर्चीत् । माऽस्मान् मापदित्यर्थः । क. । शंसः[‡] धूर्तिश्च । कस्य । अररुषः । मर्त्यस्य मनुष्यस्य[1] । रक्ष त्वम् नः हे ब्रह्मणस्पते ॥ ३ ॥

वेङ्कट० मा अस्मान् अदातुः मर्त्यस्य कदर्यस्य शंसः न दातुं युष्मभ्यमिच्छामीति वादः, हिंसकः प्राप्नोतु धनाभावात् । तथा अस्मान्[२] त्वम् रक्ष ॥ ३ ॥

मुद्गल० अररुषः मर्त्यस्य उपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य धूर्तिः हिंसकः शंसः शंसनम् । अधिक्षेप इत्यर्थः । तादृशो वाग्विक्षेपः नः अस्मान् मा प्रणक् मा सम्पृणक्तु । शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान् मा प्राप्नोत्वित्यर्थः । तदर्थं हे ब्रह्मणस्पते । नः अस्मान् रक्ष पालय ॥ ३ ॥

स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥ ४ ॥

सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः । सोमः । हिनोति । मर्त्यम् ॥ ४ ॥

स्कन्द० 'चतुर्थ्यां सोम इन्द्रश्च' । [1]चतुर्थ्यामस्यामृचि सोम इन्द्रश्च देवता । न केवलो ब्रह्मणस्पतिः । घ इति पदपूरणः एवार्थे वा । सः एव वीरः विक्रान्तः न रिष्यति । न हिंस्यते केनचित् । यम् इन्द्रः ब्रह्मणः पतिः सोमः च हिनोति । हि गतौ वृद्धौ च । गच्छति वर्धयति वा मर्त्यम् मनुष्यम्[1] ॥ ४ ॥

---

1-1. मम्नकमात्रम् । देवेभ्यो हविषामदातु । यो हि न यजेते स यष्टॄन् विनश्यतु (?) इत्येवमाशंसनी । सेऽस्य धूर्तिः धूर्वतिर्हिंसनम् । हिंसा हिंसिता वा । स च मा प्रापदत् । नश व्याप्तौ । अतो अस्मान् मा प्रापदित्यर्थः । अनाग्रहात् सम्पर्कार्थो वा । [illegible] । सेऽस्माभिर्मा सम्पर्चीत् । मऽस्मान् मापदित्यर्थः । कस्य अररुषः । [illegible] [illegible] । मर्त्यस्य वि[°] भ कु. † अस्माकं मूको. ‡ शंसः अररुषः धू° मूको. २. नास्ति [illegible] 1-1. स मर्त्यमिन्द्रो ब्रह्मणस्पतिः सोमश्च हिनोति । हि गतिवृद्ध्योः । गच्छन्ति वर्धयन्ति वा । स एव विक्रान्तः न हिंस्यते वि[°] भ कु.

वेङ्कट० यम् एते युद्धे प्रेरयन्ति, सः खलु न विनश्यति वीरः ॥ ४ ॥

मुद्गल० इन्द्रः देवः यम् मर्त्यम् यक्ष्यमाणम् हिनोति प्राप्नोति। तथा ब्रह्मणः पतिः देवः हिनोति। तथा सोमः हिनोति। सः[1] च स एव यजमानः वीरः वीर्ययुक्तः सन् न रिष्यति न विनश्यति ॥ ४ ॥

त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम्। दक्षिणा पात्वंहसः ॥ ५ ॥

त्वम्। तम्। ब्रह्मणः। पते। सोमः। इन्द्रः। च। मर्त्यम्। दक्षिणा। पातु। अंहसः ॥ ५ ॥

स्कन्द० 'पञ्चम्या दक्षिणाधिका'। [1]पञ्चम्यामस्यामृचि पूर्वाभ्यस्तिसृभ्यो दक्षिणाऽधिका। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यः स्तौति यजते च त्वम् तम् हे ब्रह्मणः पते! सोमः इन्द्रः च मर्त्यम् मनुष्यम् दक्षिणा च पातु रक्षतु अंहसः पापात्[2] ॥ ५ ॥

वेङ्कट० [3]त्वम् तम्[3] ब्रह्मणः पते! सोमः इन्द्रः च मर्त्यम् [4]यज्ञस्य पत्नी दक्षिणा[4] च रक्षतु। [5]दारिद्र्याद्वा-इन्तुर्वा [6]रक्षसः ॥ ५ ॥

मुद्गल० हे ब्रह्मणः पते। त्वम् मर्त्यम् तम् अनुष्ठातारं मनुष्यम् अंहसः पापात् पाहीति शेषः। तथा सोमः पातु। इन्द्रः च पातु। दक्षिणाख्या देवता च पातु ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये चतुस्त्रिंशो वर्गः ॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषम् ॥ ६ ॥

सदसः। पतिम्। अद्भुतम्। प्रियम्। इन्द्रस्य। काम्यम्। सनिम्। मेधाम्। अयासिषम् ॥ ६ ॥

स्कन्द० 'चतस्रः सादसस्पत्या'। सदः प्रसिद्धं यज्ञगृहं [7]तस्याधिपतिः सदसस्पतिः। कोऽसौ। अग्निः। कुत एतत्। अग्नेः सर्वयज्ञाधिपतित्वात्। आसु चर्क्षु यज्ञसाधनहविष्कृतिसमर्थनाद्यग्निकर्मदर्शनाद् तद्देवत्याश्चतस्रश्चर्चः। सदसः पतिम् अग्निम् अद्भुतम् महन्नामैतत् (तु. निघ ३,३)। महान्तम्। प्रियम् इन्द्रस्य तदायत्तत्वाद्धि यज्ञानां सोमपानार्थिनः इन्द्रस्य प्रियः सदसस्पतिः। काम्यम् प्रार्थयितव्यं सर्वस्तोत्राणाम्। सनिम् षणु दाने। धनदानम्। मेधाम् प्रज्ञां च अयासिषम्। 'ईमहे, यामि' (निघ ३, १९ [=याचामि या २,१]) इति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा। याचे[7] ॥ ६ ॥

वेङ्कट० 'सदसस्पतिम् महान्तं सखायम्[9]' इन्द्रस्य कमनीयं धनं प्रज्ञां च अयाचिषम् ॥ ६ ॥

मुद्गल० मेधाम् लब्धुम् सदसः पतिम् एतन्नामकं देवम् अयासिषम् प्राप्तवानस्मि। कीदृशम्। अद्भुतम् आश्चर्यकरम् इन्द्रस्य प्रियम् सोमपाने सहचारित्वात् काम्यम् कमनीयम् सनिम् धनस्य दातारम् ॥ ६ ॥

---

१. नास्ति वि मै[2]. २-२. यः स्तौति यजते च हे ब्रह्मणस्पते त्वं तं मर्त्यं रक्षतु पापात् सोमः इन्द्रः दक्षिणा च वि[1] अ कु. ३-३. तं त्वम् वि[1]. ४-४. दक्षिणा यज्ञस्य पत्नी साम्ब[1] अ[1]. ५. दरिद्र्याद्हसो वा साम्ब[2]. ६. रक्ष रक्षः साम्ब[1]. ७-७. तस्य पतिरग्निः। सर्वयज्ञाधिपतित्वादस्य। तं सदसस्पतिमग्निं महान्तम् 'यहोऽमात्योऽद्भुतो मह.' इति। यज्ञमग्न्यावचम्। सोमपानार्थिन इन्द्रस्य तत्सम्पादनात् प्रियम्। प्रार्थयितव्यं च सर्वस्तोत्राणाम्। सनिं धनदानं प्रज्ञां च ईमहे याचामि। या याच्ञायाम् वि[1] अ कु. ८. नास्ति वि[1]. ९. सहायम् वि[1].

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । स धीनां योगमिन्वति ॥ ७ ॥

यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन । सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥

स्कन्द० [1]यस्मात् ऋते येन सदसस्पतिना विना न सिध्यति यज्ञः । कस्य । विपश्चितः चन 'विपश्चित्' ( निघ ३,१५ ) इति मेधाविनाम । चनशब्दोऽप्यर्थे । मेधाविनोऽपि यजमानस्य । सः धीनाम् 'धी' ( निघ २,१ ) इति कर्मनाम । सहयोगलक्षणतृतीयार्थे षष्ठी । यागकर्मभिः सह । योगम् सम्बन्धम् । इन्वति व्याप्तिकर्मायम् । प्राप्नोति । यागकर्मभिः सम्बध्यते[1] । सर्वयागकर्माणि करोतीत्यर्थः ॥ ७ ॥

वेङ्कट० यं विना न सिध्यति यज्ञः विदुषः अपि, सः कर्मणा योगम् व्याप्नोति[1] ॥ ७ ॥

मुद्गल० यज्ञः क्रियमनुष्ठातव्यः विपश्चितः चन विदुषोऽपि[1] यजमानस्य यस्मात् सदसस्पतिदेवात् ऋते न सिध्यति सः अथ सदसस्पतिर्देवः धीनाम् मनोऽनुष्ठानविषयाणाम् योगम् सम्बन्धम् इन्वति व्याप्नोति । यजमानमनुगृह्य तदीयं यज्ञं निष्पादयन्तीत्यर्थः ॥ ७ ॥

आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होत्रा देवेषु गच्छति ॥ ८ ॥

आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् । होत्रा । देवेषु । गच्छति ॥ ८ ॥

स्कन्द० [2]आत् इति निपातोऽथशब्दपर्याय आनन्तर्ये । कर्मभिः संयुज्यानन्तरम् । ऋध्नोति ऋधु वृद्धौ । सामर्थ्याद्यन्तर्णीतण्यर्थः । वर्धयति हविष्कृतिम् हविष्क्रियाम् । हवींषि सारतो वृद्धानि करोतीत्यर्थः । प्राञ्चम् कृणोति प्रकर्षगामिनं देवान् प्रति करोति अध्वरम् । 'होत्रा' (निघ १,११) इति वाङ्नाम । तृतीयार्थे चात्र प्रथमा । होत्रया च स्तुतिलक्षणया च वाचा देवेषु[3] देवान् प्रति गच्छति देवांश्च स्तौतीत्यर्थः ॥ ८ ॥

वेङ्कट० गमनानन्तरमेव समर्धयति[4] हविष्करणम् । प्राञ्चम् कृणोति यज्ञम् । वाचा च देवेषु गच्छति ॥ ८ ॥

मुद्गल० आत् अनन्तरमेव हविष्कृतिम् हविःसम्पादनयुक्तं यजमानम् ऋध्नोति सदसस्पतिर्देवो वर्धयति । हविर्दानानन्तरमेव[5] फलं प्रयच्छतीत्यर्थः । तथाविधफलसिद्धये अध्वरम् यजमानेनानुष्ठीयमानं यज्ञम् प्राञ्चम् प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तम् कृणोति करोति । होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुम् देवेषु गच्छति ॥ ८ ॥

नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ॥ ९ ॥

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् । दिवः । न । सद्मऽमखसम् ॥ ९ ॥

---

१ १. यस्मात् सदसस्पतिना अग्निना विना यज्ञो न सिध्यति मेधाविनोऽपि यजमानस्य । चन अपि । धीनाम् धियाम् । ... कर्मभिः ... व्याप्नोति इति ... वि° अ कु. २. प्राप्नोति वि° ... ३. विदुषोऽपि वि. ४-४. अथ कर्मभिः ... वर्धयति हविष्क्रियाम् । हवींषि सारतो वृद्धानि करोति । देवान् प्रति प्रकर्षगामिनं करोति यज्ञम् । होत्रा इति वाङ्नाम । तृतीया ... । होत्रया च स्तुत्या वि° अ कु. ५. समर्धयति कु. ६. हविर्दाना° मै°.

स्कन्द० [1]नराशंसम् शंस स्तुतौ । नरैः शस्यत इति नराशंसः प्रकृतः सदसस्पतिरेव । देवतान्तरं वा[1] । तथाह्याह —

'उक्ता याः सादसस्पत्याश्चतस्रः सदसस्पतिः । तासामन्त्या ऋगेका सा नाराशंसी प्रकीर्तिता'[2] ॥

[3]इति । तं नराशंसम् सुधृष्टमम् सुष्ठु प्रगल्भतमम् अद्रम् अपश्यम् । सप्रथस्तमम् सप्रथाः पृथुः अतिशयेन सप्रथसं सप्रथस्तमम् । कमिव । दिवः न द्युलोकस्येव सम्बन्धिनम् सद्ममखसम् सद्म सदनमादित्यमण्डलं, तन्मखः महद् यस्य स सद्ममखाः आदित्यः । मखशब्दो हि 'रेजते अग्ने पृथिवी मखेभ्यः' ( ऋ ६,६६,९ ) इत्यादिप्रयोगदर्शनादपठितमपि महन्नाम । सकारस्तु तस्यैव छान्दस उपजनः । पर्यायान्तरं वा सकारान्तम् । तं सद्ममखसम् । आदित्यमिवेत्यर्थः[3] ॥ ९ ॥

वेङ्कट० नरैः शंसनीयम् अतिशयेन धृष्टं पश्यामि सर्वतः पृथुतमं द्युलोकस्य सम्बन्धिनम् इव सूर्यं महनीयसदनमिति ॥ ९ ॥

मुद्गल० नराशंसम् एतन्नामकं देवविशेषं सदसस्पतिं वा अपश्यम् शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशम् । सुधृष्टमम् अत्याधिक्येन धार्ष्ट्ययुक्तम् सप्रथस्तमम् अतिशयेन प्रख्यातम् सद्ममखसम्' प्राप्ततेजस्कम् । तत्र दृष्टान्तः । दिवः न द्युलोकानिव । आदित्यचन्द्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनः तद्वदयं नराशंसस्तेजस्वीत्यर्थः ॥ ९ ॥

इति प्रथमाष्टके प्रथमाध्याये पञ्चत्रिंशो वर्गः ॥

## [ १९ ]

प्रति॒ त्यं चारु॑मध्व॒रं गो॑पी॒थाय॒ प्र हू॑यसे । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ १ ॥

प्रति॑ । त्यम् । चारु॑म् । अ॒ध्व॒रम् । गो॒ऽपी॒थाय॑ । प्र । हू॒य॒से॒ । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ १ ॥

स्कन्द० 'आग्निमारुतमुत्तमम्' । [4]'अध्यायश्रोत्तमं सूक्तमाग्निमारुतम् । प्रतिशब्दो लक्षणे कर्मप्रवचनीयः । त्यच्छब्दस्तच्छब्दपर्यायः । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । योऽयमस्माभिः प्रकल्पितः तम् प्रति । कीदृशम् । चारुम् शोभनम् । अध्वरम् यज्ञम् । गोपीथाय सोमोऽत्र गौरुच्यते, सोमपानाय । प्र हूयसे प्रकर्षेणाहूयसे । एतज्ज्ञात्वा[5] मरुद्भिः सह अग्ने ! आ गहि ॥ १ ॥

[6]वेङ्कट० प्रति चारुम् अध्वरम् सोमपानाय आ हूयसे[6], अग्ने ! मरुद्भिः सह [7]आगच्छ ॥ १ ॥

---

१-१. नराशंसमग्निमेव प्रकृतम् । नृभिः शस्यत इति । अन्या वा देवता वि॰ अ कु. २. नराशंसः साम्ब. ३-३. नराशंसं सुष्ठु प्रगल्भतमम् अद्रमपश्यम् । अतिशयेन सर्वतः पृथुम् द्युलोकस्येव सम्बन्धिनमादित्यम् । सद्म सदनम् आदित्यमण्डलम् । तद् (तं अ वि॰) मखं महत् यस्य स सद्ममखाः आदित्यः तमिव वि॰ अ कु. ४. नास्ति वि. ५-५. त्यत् तदर्थे । योऽयम् अस्माभिः प्रकल्पितः तं यज्ञं प्रति । लक्षणे कर्मप्रवचनीयः प्रतिः । शोभनम् । गौरन्धः सवनं मदः इति सोमनाम । सोमपानाय प्रकर्षेणाहूयसे । तस्मात् वि॰ अ कु. ६. ॰अग्ने सः साम्ब॰[3]. ७. गच्छ वि॰ लर्प.

मुद्गल० 'प्रति त्यम्' इति नवर्चं द्वितीयं सूक्तम् । मेधातिथि[१] । गायत्रम् । आग्निमारुतम् ॥

हे अग्ने ! यो यज्ञ चारु अङ्गवैकल्यरहित त्यम् त तथाविधम् चारुम् अध्वरम् प्रतिलक्ष्य गोपीथाय सोमपानाय प्र हूयसे प्रकर्षेण त्व हूयसे । तस्मात् अस्मिन्नध्वरे त्वम् मरुद्भि देवविशेषै सह आ गहि आगच्छ ॥ १ ॥

नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥ २ ॥

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ २ ॥

स्कन्द० [२]न देव न अपि मर्त्य मह महत तव सकाशात् । टार्थेऽम् । कर्मणा प्रज्ञया वोत्कृष्ट त्वत्त श्रेष्ठो देवमनुष्येष्वपि न कश्चित् । तस्मात् मरुद्भि अग्ने ! आ गहि[३] ॥ २ ॥

वेङ्कट० नहि देव [३]मर्त्य वा महत तव[४] कर्म तरति ॥ २ ॥

मुद्गल० हे अग्ने ! मह महत तव सम्बन्धिनम् क्रतुम् कर्मविशेषम् उल्लङ्घ्य पर नहि उत्कृष्ट देव न भवति । तथा मर्त्य मनुष्यश्च पर न भवति । ये मनुष्या त्वदीय क्रतुमनुतिष्ठन्ति ये च देवा त्वदीय क्रतौ इज्यन्ते ते पूर्वोत्कृष्टा इत्यर्थ । मरुद्भि इत्यादि पूर्ववत् ॥ २ ॥

ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥ ३ ॥

ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ३ ॥

स्कन्द० [४]रज शब्दो लोकवचन उदकवचनो वा । मह रजस इति चोभयत्र द्वितीयार्थे षष्ठी । य महद् रज लोकमन्तरिक्षाख्यम् उदक वा मघम् विदु जानन्ति विश्व सर्वे देवास दीप्ता दातारो वा अद्रुह अद्रोग्धव्या अद्रोग्धारो वा स्तोतॄणा यष्टॄणा च । यच्छब्दश्रुतेस्तच्छब्दो ऽध्याहर्तव्य[४] । तै मरुद्भि अग्ने ! आ गहि ॥ ३ ॥

वेङ्कट० य मरुत महान्त [५]लोकमन्तरिक्ष जानन्ति[५] व्याप्ता देवा द्रोहरहिता ॥ ३ ॥

मुद्गल० हे अग्ने ! ये मरुत मह रजस महत उदकस्य वर्षणप्रकारम् विदु । कीदृशा मरुत । विश्वे सर्वे सप्तविधगणोपेता । देवास द्योतमाना । अद्रुह द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । मरुद्भि इत्यादि पूर्ववत् ॥ ३ ॥

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥ ४ ॥

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ४ ॥

---

१ 'त्रिकि मे'. २ २ नास्ति मास्व' ३. ३ ३ न म[illegible] यतय एप ४ ४ ये मरुत [illegible] मे रज्जू का विदु । 'क्मे मन्तिनमो रज शनि नो । [illegible] दोर रज' । भवि [illegible]। [illegible] अद्रुग्धा अद्रुग्धारा वा स्तोतृयष्टृणां ये त्रि' मकु ५ ५ लोक जान' सास्र', 'नहि' प [illegible] मास्र' ६ '६ न नास्ति मास्र'

स्कन्द० 'ये उग्रा अन्येनासप्रसह्या शूरा अर्कम् देवम् । कतमम् इमम् । इन्द्रम् । कुत एतत् । आर्चन्न मरुत सस्मिन्वानो ( ऋ १,५२,१५ ) इति इन्द्रस्य मरुत्स्तुतिसम्बन्धदर्शनात् । आनृचु अर्चते स्तुतिकर्मण एतद्रूपम् । वृत्रघ्न तं 'प्रहर भगवो जहि वीरयस्व' ( ऐब्रा ३,२० ) इत्येवमादिभिर्वचनै स्तुतवन्त । अत्र चेतिहास 'स्था देवा अविभ्युष' ( ऋ १,११,५ ) इत्यत्र निदर्शित । अथवा सवादसूक्तेषु 'कया शुभा' ( ऋ १,१६५,१ ) इत्यादिषु या स्तुति तामभिप्रेत्यैतदुच्यते—य उग्रा अर्कमिन्द्र स्तुवन्तीति । कीदृशा । अनाधृष्टास अनाधर्षिता अनभिभूतपूर्वा ओजसा परबलेन'। तै मरुद्भि इत्यादि पूर्ववत् ॥ ४ ॥

वेङ्कट० ये उद्गूर्णा[२] अर्चनीयमिन्द्रम् अस्तुवन् बलेन अन्यैरनभिभूता ॥ ४ ॥

मुद्गल० ये मरुत उग्रा तीव्रा सन्त अर्कम् उदकम् आनृचु अर्चितवन्त । वर्षणेन सम्पादितवन्त इत्यर्थ । [३]कीदृशा मरुत । ओजसा बलेन अनाधृष्टास अतिरस्कृता । सर्वेभ्योऽपि प्रबला इत्यर्थ[३] । मरुद्भि इत्यादि पूर्ववत् ॥ ४ ॥

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥ ५ ॥

ये । शुभ्रा । घोरऽवर्पस । सुऽक्षत्रास । रिशादस । मरुत्ऽभि । अग्ने । आ । गहि ॥५॥

स्कन्द० 'ये शुभ्रा शोभना घोरवर्पस 'वर्प' ( निघ ३,७ ) इति रूपनाम । घोररूपाश्च । द्वयोश्चानयो परस्परविरोधित्वात् कालभेदेन योजना । शोभना क्रीडाकाले । घोररूपा सङ्ग्रामकाले । सुक्षत्रास सुधन्वान सुबला वा । रिशादस क्षेप्तारो हिंसितॄणा प्रतिहिंसितार इत्यर्थ[४] । तै मरुद्भि इत्यादि पूर्ववत् ॥ ५ ॥

वेङ्कट० ये अलङ्करणे शोभमाना घोररूपा सुबला रिशतामसितार[५] ॥ ५ ॥

मुद्गल० ये मरुत शुभ्रा शुभ्रत्वादिगुणोपेता शोभना घोरवर्पस उग्ररूपधरा सुक्षत्रास शोभनधनोपेता रिशादस हिंसकाना भक्षका । मरुद्भि इत्यादि पूर्ववत् ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये षट्त्रिंशो वर्ग ॥

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥ ६ ॥

ये । नाकस्य । अधि । रोचने । दिवि । देवास । आसते । मरुत्ऽभि । अग्ने । आ । गहि ॥६॥

स्कन्द० 'नाक इत्यादित्यनाम ( द्र या २,१४ ) । ये नाकस्य अधि उपरि रोचने दीप्ते दिवि 'अथापि तास्तिन द्युस्थानिगमा भवन्ति' ( या २,५ ) इत्येव दिवोऽवयवो-द्युशब्देनोच्यते । दिव दिव एकदेशे स्थाने सप्तमे वायुस्कन्धे देवाम आसते । तै मरुद्भि इत्यादि पूर्ववत्' ॥ ६ ॥

---

१-१ ये अन्येन असह्या शूरा अर्क देवमिन्द्रम् । 'आर्चन्नत्र मरुत' इति इन्द्रस्य मरुत्स्तुतिसम्बन्धदर्शनात् । 'प्रहर भगवो जहि वीरयस्व' इत्येवमादिभि अस्तुवन् । 'स्था देवा अविभ्युष' इत्यत्रोक्त तत् । अथवा संवादसूक्तस्तुतिभिर्वा । 'कया शुभा' इत्यादिषु । अनाधर्षिता अनभिभूतपूर्वा परबलेन वि[?] भ कु २ उद्गीर्णा साम्य' ३-३ नास्ति वि मौ' ४-४ शोभना परस्पर क्रीडासु सङ्ग्रामेषु च । स्वं धनो मति अन्योऽत्र शत्र एवम् । सुरूपा सुधन्वानो वा । रिशतामसितार । रिश हिंसायाम् वि[?] भ कु ५ 'अदितार कु ६-६. ये आदित्यस्योपरि दीप्ते दिवि एकदेशे स्थाने सप्तमे वायुस्कन्धे देवा अधि वसन्ति तैमरुद्भि । मूर्धो मृधाजयो नाक इति । अधि उपरि वि[?] भ कु

वेङ्कट० ये[1] आदित्यस्य रोचने दिवि देवा वसन्ति ॥ ६ ॥

मुद्गल० ये मरुत नाकस्य अधि दु खरहितस्य सूर्यस्योपरि दिवि द्युलोके रोचने दीप्यमाने ये देवास स्वयमपि दीप्यमाना आसते मरुद्भि इत्यादि पूर्ववत् ॥ ६ ॥

य ई॒ङ्खय॑न्ति॒ पर्व॑तान् ति॒रः स॑मु॒द्रम॑र्ण॒वम् । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ ७ ॥

ये । ई॒ङ्खय॑न्ति । पर्व॑तान् । ति॒रः । स॒मु॒द्रम् । अ॒र्ण॒वम् । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥७॥

स्कन्द० [2]ये ईङ्खयन्ति ईङ्खतिर्गतिकर्मा ( द्र निघ २,१४ )। गमयन्ति क्षिपन्तीत्यर्थ । किम् । पर्वतान् शैलान् । 'तिर सत' ( निघ ३,२९ ) इति प्राप्तस्य नामनी । प्राप्ता सन्त. । क प्रति क्षिपन्ति । उच्यते । समुद्रम् द्वितीयाश्रुते कर्मप्रवचनीयप्रतिशब्दाध्याहार । पार्थिव समुद्र प्रति । कीदृशम् । अर्णवम् उदकवन्तम् । पर्वतक्षेपणेन चात्र बलवत्ता प्रतिपाद्यते । एतदुक्तं भवति—ये महाबला प्राप्ता सन्त पर्वतानपि समुद्र क्षेप्तु समर्था इति । अथवा पर्वतशब्दो मेघनाम ( द्र निघ १,१० )। पार्थिवेन च समुद्रेण पृथिव्येव लक्ष्यते । ये गमयन्ति मेघान् वर्षाय पृथिवीम् । वर्षयन्तीत्यर्थ । मेघान् प्रति प्राप्ता सन्त । तै मरुद्भि इत्यादि पूर्ववत्[2] ॥ ७ ॥

वेङ्कट० ये चालयन्ति पर्वतान् तिरस्कुर्वन्ति[3] च उदकवन्तम्[4] समुद्रम् ॥ ७ ॥

मुद्गल० ये मरुत पर्वतान् मेघान् ईङ्खयन्ति चालयन्ति तथा अर्णवम् उदकयुक्तम् समुद्रम् तिर कुर्वन्तीति शेष । निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालन तिरस्कार । मरुद्भि इत्यादिपूर्ववत् ॥७॥

आ ये त॒न्वन्ति॑ र॒श्मिभि॑स्ति॒रः स॑मु॒द्रमोज॑सा । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ ८ ॥

आ । ये । त॒न्वन्ति॑ । र॒श्मिऽभिः॑ । ति॒रः । स॒मु॒द्रम् । ओज॑सा । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥

स्कन्द० [4]आतानो नाम व्याप्ति । ये आ तन्वन्ति व्याप्नुवन्ति रश्मिभि स्वतेजोभि । रश्मिभि तिर प्राप्ता पार्थिवमन्तरिक्ष वा । समुद्रशब्दो ह्यन्तरिक्षनामाऽपि ( द्र निघ १,३ )। न च केवलै स्वतेजोभि । किन्तर्हि । ओजसा बलेन च । तै मरुद्भि इत्यादि पूर्ववत्[4] ॥ ८ ॥

वेङ्कट० ये रश्मिसदृशै[1] प्रत्यक्षमारुतैरुदक बलेन समुद्रम् तिरः आ तन्वन्ति ॥ ८ ॥

मुद्गल० ये मरुत रश्मिभि सूर्यकिरणै सह आ तन्वन्ति आप्नुवन्ति आकाशमिति शेष । किञ्च ओजसा स्वकीयेन बलेन समुद्रम् तिर कुर्वन्ति । मरुद्भि इत्यादि पूर्ववत् ॥ ८ ॥

---

१ नास्ति वि[1]   २-२ ये गमयन्ति शैलान् प्राप्ता समुद्रं प्रति उदकवन्तम् । ईङ्ख गतौ । तिर सत इति प्राप्तनामनी । ये महाबलत्वात् समुद्रे पर्वतक्षेपणसमर्था । अथवा पर्वतान् मेघान् पृथिवीं प्रति क्षिपन्ति वर्षार्थम् । समुद्र पार्थिवो हि । तस्मात् पृथिव्येव लक्ष्यते । तैर्मरुद्भि वि[1] अ कु   ३ पश्यन्ति [illegible] कु   ४ उदक तम सामर्थ्य वि[1] एप   ५-५ ये आतन्वन्ति स्वतेजोभि प्राप्ता अन्तरिक्ष पार्थिवं वा । स्वबलेन च व्याप्नुवन्ति । तैर्मरुद्भि वि[1] अ कु   ६ रश्मिसदृश वि[1] एप

अभि त्वां पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥ ९ ॥

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु । मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥

स्कन्द० 'अभिशब्दोऽत्र 'अभिरभागे' (पा १,४,९१) इति लक्षणे कर्मप्रवचनीयः । त्वां प्रति । पूर्वपीतये पूर्वकालप्रवृत्ताय पानाय सृजामि । शुद्धोऽप्यत्र सृजतिः सोपसर्गार्थे द्रष्टव्यः । उत्सृजामि । अनादिकालप्रवृत्तं यत् पानं तदर्थं तुभ्यं ददामीत्यर्थः । किम् । सोम्यम् सोममयम् मधु । द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च सोमरसोऽत्र मधूच्यते । एतज्ज्ञात्वा मरुद्भिः अग्ने आगहि[1] ॥ ९ ॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ
ऋग्वेदभाष्ये प्रथमोऽध्यायः ॥

वेङ्कट० अभि सृजामि त्वा पूर्वपानाय सोममयम् मधु । सः[2] अग्ने ! मरुद्भिः [3]सह [4]आगच्छेति ॥ ९ ॥

ऋक्संहितायाः प्रथममध्यायं व्याकरोदिति ।
कुशिकानां कुले जातो माधवः सुन्दरीसुतः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके प्रथमोऽध्यायः ॥

मुद्गल० हे अग्ने ! पूर्वपीतये पूर्वकाले प्रवृत्ताय पानाय त्वा त्वां प्रति [5]सोम्यम् मधु[5] सोमसंबन्धिनं मधुरसम् अभि सृजामि सर्वतः सम्पादयामि । मरुद्भिः इत्यादि पूर्ववत् ॥

—※—

इति प्रथमाष्टके प्रथमाध्याये सप्तत्रिंशो वर्गः ॥
इति ऋग्भाष्ये प्रथमोऽध्यायः समाप्तः ॥

---

१-१. अभिरभागे । त्वां प्रति पूर्वकालप्रवृत्ताय पानाय उत्सृजामि ददामि । अनादिकालप्रवृत्तं यत् पानं तदर्थम् । सोममयं मधु । द्रवत्वसामान्यात् मृष्टत्वाच्च सोमरसो मधु इत्युच्यते । तस्मात् ... वि[1] मू कु. २. नास्ति सायणे. ३. मरुद्भिः वि[1]. ४. गच्छेति वि[1]. ५-५. नास्ति ...

## [ २० ]

**अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥ १ ॥**

अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ॥ १ ॥

स्कन्द० 'आर्भवं प्रथमं सूक्तम्' । [1]ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा रथकारा बभूवुः । ते[1] अतिशयवद्भिः कर्मभिर्देवत्वमीयुः । तेऽत्र साहचर्यादन्यतमवचनेनापि [2]ऋभुशब्देन सर्वेऽभिधीयन्ते । [3]आदेवत द्वितीयस्य प्रथमं सूक्तम् 'अयं देवाय' इत्येतत् ।

जन्मन इति मनिरयं कर्तरि सामर्थ्याच्चात्र भूते काले द्रष्टव्यः । देवाय जन्मने इति चोभयत्र बहुवचनस्य स्थाने एकवचनम् । देवेभ्यो जातेभ्यः । ये ऋभवो मनुष्याः सन्तो देवा जाताः तदर्थमित्यर्थः । स्तोमः स्तुतिः विप्रेभिः मेधाविभिरस्माभिः आसया आसाशब्दोऽत्र सामर्थ्याद् ऋग्वचनः । ऋग्लक्षणया वाचा । आसा उपासना वा परिचर्या । आसया हेतुना । प्रयोजनस्य चेयं हेतुत्वेन विवक्षा । परिचर्यार्थमित्यर्थः । अकारि कृतः । कीदृशः । रत्नधातमः अतिशयेन धनानां दाता । येन स्तुता ऋभवोऽतिशयेन धनं दास्यन्तीत्यर्थः[3] ॥ १ ॥

वेङ्कट० 'अयं देवाय जन्मने' [4]माधवो व्याचिकीर्षति[4] ।
तत्रामन्त्रितशब्दानामादौ वृत्तिः [5]प्रदर्श्यते ॥ १ ॥
सामन्त्रितादुदात्तत्वमुच्चैरामन्त्रणे भवेत् ।
नीचैरामन्त्रणे कार्ये पदं सर्वं निहन्यते ॥ २ ॥
अर्थस्वभावाद्वाक्यस्य मध्यस्य [6]तन्निहन्यते ।
'अक्षेत्रं मित्रावरुणौ'[7] 'कती नो मित्रावरुणा'[8] ॥ ३ ॥
अर्थस्वभावादुच्चैस्त्वं क्वचिन्मध्येऽपि दृश्यते ।
तथैव नीचैस्त्वमपि तत्रोदाहरणे[9] शृणु ॥ ४ ॥
अद्ययस्तुनमन्धाय सा वृकी[10] इति वक्ष्यति ।
'नैरति'[10] तत्राद्युदात्तमेव हि परिदेवनम् ॥ ५ ॥
'इन्द्राग्नी द्यावापृथिवी'[11] यत्तुल्यस्मिन् निहन्यते ।
बहुष्वामन्त्रितेष्वन्तर् ओषधीः[11] इति यत्पदम् ॥ ६ ॥

---

1-1. ऋभुर्विभ्वा च वाजश्च त्रयः पुत्राः सुधन्वनः ते रथकारा बभूवु वि[1] अ कु. २. नास्ति वि[1] अ कु ३-३. जन्मने इति भूते मनि । के भ्यांम । देवेभ्यो जातेभ्य ये ऋभवो मनुष्याः सन्त कर्मकौशलात् देवा जातास्तेभ्य । स्तुति मेधाविभिरस्माभि ऋग्लक्षणया वाचा । उपासन्या मनसा (?) इति । आसा वाचि । आस्य उपासना वा । स्तुतिरतिशयेनैतो अकारि । धनानामतिशयेन दाता । ये नो धनानि दास्यन्ति आगच्छ वि[1] अ कु ४-४. व्याचिकीर्षति माधवः वैकुल ५. प्रदर्श्यते वि[1]' रुप अ[1]. ६. निह° वि[1] रुप ७. ऋ १,१,८ ८. ऋ १,२,९ ९. °रणे वैकल्प १०. तु. ऋ १,११०,१८. ११ तै १,२,१,२०

'अग्ने पावक रोचिषा'[1] 'घृताहवन दीदिव'[2] ।
'ग्रावो नेष्ट पिब ऋतुना'[3] 'सखाय स्तोमवाहस'[4] ॥ ७ ॥
'विश्वे देवासो मनुषो'[5] 'विश्वे यजत्रा'[6] 'त आदित्या'[7] ।
सर्वत्रार्थस्त्वमायोऽयमूह्य प्राज्ञैरिति स्थिति ॥ ८ ॥
नामन्त्रित कारकवद् वाक्यार्थेनान्वित भवेत् ।
'युव नरो सुवाम्णे'[8] 'पेशो मर्या अपेशसे'[9] ॥ ९ ॥
ये इमे तत्रोदाहरणे स्पष्टे सर्वं च तादृशम् ।
अविद्यमानवत्त्वे च एष हेतुरिति स्थिति ॥ इति[10] ॥ १० ॥

मेधातिथि । अयम् स्तोम मनुष्यत्वमपहाय देवभूताय ऋभूणा गणाय मेधाविभिरस्माभि आस्येन अतिशयेन रत्नप्रदाता[11] क्रियते ॥ १ ॥

मुद्गल० 'अय देवाय' इत्यष्टर्चं तृतीय सूक्तम् । [12]मेधातिथि । गायत्रम् । आर्भवम्[12] ।
सद्धजन्मने जायमाना य ऋभवो मनुष्या तपसा देवत्व प्राप्ता । तद्रूपाय देवाय तत्प्रीत्यर्थम् अयम् स्तोम स्तोत्रविशेष विप्रेभि मेधाविभि ऋत्विग्भि आसया स्वकीयेनास्येन अकारि निष्पादित । कीदृश स्तोम । रत्नधातम अतिशयेन रमणीयमणिमुक्तादिधनप्रद स्तोत्रेण तुष्टा ऋभवो धन प्रयच्छन्तीत्यर्थ ॥ १ ॥

य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥ २ ॥

ये । इन्द्राय । वच ऽयुजा । ततक्षु । मनसा । हरी इति । शमीभि । यज्ञम् । आशत ॥ २ ॥

स्कन्द० [13]ऋभव किं कृतवन्त । ये ऋभव इन्द्राय वचोयुजा वचनमात्रयोगिनौ ततक्षु तक्षति करोतिकर्मा । कृतवन्त । केन । मनसा ध्यानमात्रेणैव । कौ । हरी । ये च शमीभि । एकचमसचतुष्टयकरणादिभि यज्ञम् आशत प्राप्ता[13] । यज्ञियत्वं प्राप्ता इत्यर्थ. । तद्वक्ष्यति 'एक चमस चतुर कृणोतन' (ऋ १,१६१,२) इति ॥ २ ॥

वेङ्कट० ये इन्द्रार्थं[14] वचनमात्रेण रथे[15] युज्यमानौ कृतवन्तो[16] बुद्धिमत्तया[17] अश्वौ ते शिल्पकर्मभिर्देव प्रीणनै यज्ञिय भाग प्राप्तवन्त ॥ २ ॥

मुद्गल० ये ऋभव इन्द्राय इन्द्रप्रीत्यर्थम् वचोयुजा ताडनादिक विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ हरी एतन्नामकावश्वौ मनसा ततक्षु सम्पादितवन्त. । ऋभूणा सत्यसङ्कल्पत्वात् तत्सङ्कल्पमात्रेण इन्द्रस्याश्वौ सम्पन्नावित्यर्थ । ते ऋभवः शमीभि महच्चमसादिनिष्पादनरूपै कर्मभि यज्ञम् अस्मदीयम् आशत व्याप्तवन्त ॥ २ ॥

---

१ ऋ ५,२६,१ २ ऋ १,१२,५ ३ ऋ १,१५,३ ४ ऋ १,-,१ ५ ऋ १०, ६३,६ ६ ऋ १०,६३,११ ७ ऋ १०,६३,७ ८ ऋ ८,२६,२, 'युव नरा स्तुवते' ऋ १, ११६,५,११७,७ वेंकम ९ ऋ १,६,२ १० नास्ति साम्ब वेंकम ११. रत्नदाता साम्ब, कु १२-१२ नास्ति कोपि । गायत्री छन्द । ऋभुदेवताकम् मै' १३-१३ ये इन्द्रार्थं वचनमात्रयोगिनावश्वौ ध्यानमात्रेण चक्रु । तक्ष करणे । एकचमसेन चतुरश्चमसान् कृत्वा शमित दैवत्वमाप्नुवन् नि' म कु १४ इन्द्राय अ' १५ रथेन वि'. १६ कृतवन्तौ अ' वि'' ल १७ बुद्धिमहत्तया वि' ल, साम्ब कु

तक्ष॒न्नास॑त्याभ्यां॒ परि॑ज्मानं सु॒खं रथ॑म् । तक्ष॑न् धे॒नुं स॑ब॒र्दुघा॑म् ॥ ३ ॥

तक्ष॑न् । नास॑त्याभ्याम् । परि॑ऽज्मानम् । सु॒ऽखम् । रथ॑म् । तक्ष॑न् । धे॒नुम् । स॒ब॒ऽदुघा॑म् ॥ ३ ॥

स्कन्द० [1]ये च तक्षन् कृतवन्त । नासत्याभ्याम् अश्विनोरेको नासत्यनामा, दस्रनामाऽपर । साहचर्याच्चेदमन्यतरशब्देनाप्युभयोरभिधानम् । अश्विनोरर्थाय । परिज्मानम् अजे गत्यर्थस्येद रूपम् । सर्वलोकगामिन सुखम् रथम् । ये च तक्षन् धेनुम् । कीदृशम् । सबर्दुघाम् सबरिरमृतस्याख्या । अमृतस्य दोग्ध्रीम् । कस्मै पुनरकुर्वन् । बृहस्पतये । कुत एतत् । 'बृहस्पतिर्विश्वरूपामुपाजत' (ऋ १,१६१,६) इत्यत्र बृहस्पतेर्विश्वरूपया सम्बन्धदर्शनात्[2] । विश्वरूपाव्यपदेशस्य च 'रथ ये चक्रु सुवृत नरेष्ठा ये धेनु विश्वजुव विश्वरूपाम्' (ऋ ४,३३,८) इत्यत्र धेन्वा दृष्टत्वात्[3] ॥ ३ ॥

वेङ्कट० अकुर्वन् अश्विभ्याम् परितो गन्तारम् शोभनाश्वद्वार [3]रथम् [4]तक्षन् धेनुम् च बृहस्पतयेऽमृतस्य दोग्ध्रीम् ॥ ३ ॥

मुद्गल० नासत्याभ्याम् अश्विदेवप्रीत्यर्थम् रथम् तक्षन् ऋभवो देवा कञ्चिद् रथमतक्षन् । तक्षणेन सम्पादितवन्त । कीदृशम् । परिज्मानम् परितो गन्तारम् सुखम् उपरि उपवेशने सुखकरम् । किञ्च धेनुम् काञ्चिद् गाम् । तक्षतिधातुरत्र सम्पादनवाची । तक्षन् सम्पादितवन्त । कीदृशीं धेनुम् । सबर्दुघाम् सबर क्षीरस्य दोग्ध्रीम् ॥ ३ ॥

यु॒वा॑ना पि॒तरा॒ पुन॑ः स॒त्यम॑न्त्रा ऋजू॒यव॑ः । ऋ॒भवो॑ वि॒ष्ट्य॑क्रत ॥ ४ ॥

यु॒वा॑ना । पि॒तरा॑ । पुन॒रिति॑ । स॒त्यऽम॑न्त्राः । ऋ॒जु॒ऽयव॑ः । ऋ॒भव॑ः । वि॒ष्टी । अ॒क्र॒त॒ ॥ ४ ॥

स्कन्द० [5]ये च पितरा आत्मीयौ पितरौ । युवाना पुन वृद्धभूतौ सन्तौ पुनस्तरुणौ । सत्यमन्त्रा मन्त्रण मन्त्र वचन सत्यवचना ऋजूयव ऋजुकामा ऋभव । विष्टा 'विष्ट्वी' (निघ २,१) इति कर्मनाम । तस्याऽय छान्दसो वकारलोप । तृतीयान्त चेदमत्र द्रष्टव्यम् । कर्मणा अकृत कृतवन्त [6] ॥ ४ ॥

वेङ्कट० वृद्धावात्मीयौ पितरौ[1] पुन तरुणौ अकुर्वन् । मन्त्रैरच्यमान सर्वम् एव[2] सत्य येषा न माघम् । ऋभव ऋजुकामा[6] विष्ट्य तक्षणकर्मा विष्टि ॥ ४ ॥

मुद्गल० ऋभव एतन्नामका देवा पितरा स्वकीयौ मातापितरौ पूर्वं वृद्धावपि पुन[6] युवाना तरुणौ अक्रत कृतवन्त । कीदृशा । सत्यमन्त्रा अवितथमन्त्रसामर्थ्योपेता गुरुश्रवणाद्यनुष्ठानेन

---

१ १ ये च अश्वयाय गन्तौ गामिन सु रथम् अकुर्वन् । परि गत्वरिमन् । अत्र गतौ । ये च बृहस्पतये अमृतस्य दोग्ध्रीं धेनुमकुर्वन् । पय धृतं सुख पक्वम् । 'बृहस्पतिर्विश्वरूपाम्' इत्यत्र तस्य तत्सम्बन्धात् वि[1] अ कु २ दृष्टत्वात् वि[1] अ कु ३ नास्ति स्प ४ अतक्षन् कु ५ ५ ये च युवानौ आत्मीयौ पितरौ पुन अकुर्वन् ऋजुकामा ऋभवः कर्मणा अकुर्वन् कर्म । विष्ट्वी इति वकारलोप छान्दस । तथैव सु वि[1] अ कु † सत्य मन्त्रम्[1], *भवा क मूको ६ पितरा वि[1] स्प ७ नास्ति साम्ब कु ८ ऋजुकामा वि[1] स्प ९ नास्ति वि मं[1].

सिद्धमन्त्रत्वात् जीर्णयोः पित्रोः युवत्वं सम्पादयितुं समर्था इत्यर्थः । ऋजूयवः ऋजुतामात्मन[1] इच्छन्तः छलेन रहिता इत्यर्थः । अत एवैतेषामनुष्ठिता मन्त्राः सिध्यन्ति । विष्टी विष्टयः व्याप्तियुक्ताः ॥ ४ ॥

## सं वो मदासो अग्मतेन्द्रेण च मरुत्वता । आदित्येभिश्च राजभिः ॥ ५ ॥

सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता । आदित्येभिः । च । राजऽभिः ॥ ५ ॥

स्कन्द० [2]व. इति प्रकृतानामृभूणाम् । मदासः सम् अग्मत सङ्गच्छन्ते । मदद्वारेण चेयं तद्वतामृभूणामेव सङ्गतिरुच्यते । यूयं सोमेन मत्ताः सङ्गच्छध्वमित्यर्थः । केन सह इन्द्रेण मरुत्वता सह आदित्येभिश्च राजभिः दीप्तैः[2] ॥ ५ ॥

वेङ्कट० सङ्गताः युष्माकं सोमास्तृतीये सवने मरुत्वता इन्द्रेण [3]अन्यैश्च आदित्यैः राजभिः ॥ ५ ॥

मुद्गल० हे ऋभवः ! वः युष्माकं सम्बन्धिनः मदासः मदहेतवः सोमाः इन्द्रेण च आदित्येभिः आदित्यैः च सम् अग्मत सङ्गताः । ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति । कीदृशेनेन्द्रेण । मरुत्वता मरुद्भिर्युक्तेन । कीदृशैरादित्येभिः राजभिः दीप्यमानैः ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये प्रथमो वर्गः ॥

## उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥ ६ ॥

उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् । अकर्त । चतुरः । पुनरिति ॥ ६ ॥

स्कन्द० उत [4]अपि च[4] [5]त्यम् चमसम् नवम् अजीर्णम् त्वष्टुः देवस्य स्वभूतम् निष्कृतम् निरित्येव समित्यैतस्य स्थाने । संस्कृतं[5] परिनिष्ठितं सन्तमित्यर्थः । 'एकं चमसं चतुरः कृणोतन' (ऋ १,१६१,२) इति देवसंदेशेनाग्नेः [6]वचनात् अकर्त[6] कृतवन्तः स्थ चतुरः चमसान् पुनः ॥ ६ ॥

वेङ्कट० अपि च [7]तम् नवम् चमसम् त्वष्ट्रा देवेन संस्कृतमेकं सन्तं† पुनः चतुरः चमसान् कृतवन्तः स्थ‡[7] ॥ ६ ॥

मुद्गल० उत अपि च त्वष्टुः एतन्नामकस्य देवस्य सम्बन्धी[8] तक्षणव्यापारः नवम् नूतनम् त्यम् तम् चमसम् सोमधारणे क्षमं काष्ठपात्रविशेषं निष्कृतम् निःशेषेण सम्पादितमकरोदिति शेषः । तक्षणव्यापारकुशलस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं तमेकं चमसं पुनरपि चतुरः अकर्त चतुर्धा विभक्तांश्चमसान् कृतवन्तः ॥ ६ ॥

## ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते । एकमेकं सुशस्तिभिः ॥ ७ ॥

ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते । एकम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥

---

१. °त्नता वि. २-२. युष्माकं मदा. संगच्छन्ते । सोममत्ता यूयं संगच्छध्वमित्यर्थः । तैर्मरुद्भिस्तैन इन्द्रेण आदित्यैः दीप्तैश्च वि[1] अ कु. ३. नास्ति ल वि[2]. ४-४. नास्ति साम्ब. ५-५. तं चमसं अजीर्णं त्वष्टुर्देवस्य संस्कृतम् निः समि वि[2] अ कु. ६-६. वाना वि[1] अ कु. ७-७. नास्ति अ[1]. † तम् साम्ब[2]. ‡ °वन्तः वि[1,2] ल. ८. °न्धि वि मै[2].

स्कन्द० य ईदृशा स्थ ते न अस्माकं स्वभूताय रत्नानि धत्तन दत्त । सा च सकृदेव । किं तर्हि । त्रि । आकारस्तु पदपूरण । कियन्ति । साप्तानि स्वार्थिकोऽत्र तद्धित । सप्तैव साप्तानि । वर्गे वा तद्धित[1] । 'पञ्चद्दशतौ वर्गे वा' (पा ५,१,६०) 'सप्तनोऽञ् छन्दसि' (पा ५,१,६१) [2]इति छान्दसत्वादाद्युदात्तत्वम् । सप्तवर्गाणि साप्तानि । कतमानि[2] ।

'छत्र रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्त रत्नानि पूर्वेषा चक्रवर्तिनाम् ॥' (बृदे ५,१२३) [3]इति पुराण श्रुतत्वात् छत्रादीनि । अथवा रत्नम् (निघ २,२०) इति धननाम । सुवर्णरजतमाणिक्यमौक्तिकप्रभृतीनि सप्त धनानीति । त्रिरिति कृत्वोर्थीयश्रुते. आ इति चोपसर्गाद् योग्यत्रिशब्दाध्याहार । त्रिरावृत्तानि सप्त एकविंशतिसुवर्णादिधनप्रकार दत्तेत्यर्थ । कस्मै । सुन्वते यजमानाय । कीदृशानि रत्नानि । उच्यते । एकमेकम् इति । निर्धार्यमाणश्रुतेर्निर्धारणसम्बन्धो येषामिति शब्दोऽत्राध्याहर्तव्य । सुशस्तिभि इति तृतीयाश्रुतेर्युक्तशब्दश्च । येषामेकैक सुशस्तिभि शोभनाभि प्रशसाभिर्युक्तम् अत्यन्तोत्कृष्टमित्यर्थ[3] ॥ ७ ॥

वेङ्कट० ते अस्माकम् रत्नानि आ धत्तन त्रि आवृत्तानि सप्तसख्यान्येकविंशतिम सुन्वते [4]यजमानाय एकमेकम् स्तुतिभि 'चतुर्दशौषधय सप्त ग्राम्या पशवस्तान्येकविंशति' इत्याहु[4] ॥ ७ ॥

मुद्गल० पूर्वासु ऋक्षु ये प्रतिपादिता ऋभव ते यूयम् सुशस्तिभि शोभनैरस्मदीयशसनैर्युक्ता सन्त न अस्माक सन्निधने सुन्वते सोमाभिषव कुर्वते यजमानाय रत्नानि रमणीयानि सुवर्णमणिमुक्तादीनि धनानि एकमेकम् क्रमेण प्रत्येकम् धत्तन प्रयच्छत । सुवर्णादीना मध्य प्रतिद्रव्य यावदपेक्षित तावदिति विवक्षया एकमेकमित्युक्तम् । कीदृशानि रत्नानि । त्रि आ त्रिवारमावृत्तानि उत्तमानि मध्यमान्यधमानि चेत्येव रत्नाना त्रिरावृत्ति । किंच साप्तानि सप्तसख्याकानि ॥७॥

अधारयन्त वह्नयोऽभजन्त सुकृत्यया । भागं देवेषु यज्ञियम् ॥ ८ ॥

अधारयन्त । वह्नय । अभजन्त । सुऽकृत्यया । भागम् । देवेषु । यज्ञियम् ॥ ८ ॥

स्कन्द० [5]अधारयन्त धारण स्थिरीकरण कालान्तरेणात्मन स्थिरीकृतवन्त । वह्नय वोढार सर्वकर्मणामृभव अभजन्त सेवितवन्त[5] । इदानीं सेवन्त कालान्तरे च स्थिरीकृतवन्त इत्यर्थ । [6]केन । सुकृत्यया एकचमसचतुष्टकरणादिकया शोभनया क्रियया । किम् । भागम् । क । देवेषु निर्धारणे चेय सप्तमी । देवाना मध्ये । यज्ञियम् यज्ञार्हं हविर्भागमित्यर्थ । अथवा वह्नयोऽत्र हविषा वोढार ऋत्विज । शोभनया सस्कारक्रियया शोभनै सस्कारै सस्कृतवन्त[6]

1-1 ते अस्माक मनानि रत्नानि दत्त । सा सकृदेव वि॰ अ कु । 2-2 इति सप्ताद्युदात्तत्वम् । ष छान्दसम् वि॰ अ कु । 3-3 अथवा रत्नं धनम् । सुवर्णरजतमाणिक्यमौक्तिकादीनि विशिष्टानि । एकविंशतिसुवर्णादिधनप्रकार इत्यर्थ । त्रिरित्यत्र 'द्विस्त्रिश्चतुरिति कृत्वोर्थे' (पा ८,३,४३) माङ्गा योग्या प्रत्यैत्ना । सुन्वते [4]यजमानाय । येषामेकैक प्रशस्य विशुष्टम । निर्धारणम् आनयन्ति स्तोमेष्विति । अत्यन्तोत्कृष्टमित्यर्थ वि॰ अ कु । 4-4 नास्ति वि॰ स्प † मन्यन्ते वि॰ स । 5-5 कालान्तरेणात्मन स्थिरीकृतवन्त । वोढार सर्वकर्मणाम् ऋभव सेवितवन्त वि॰ अ कु । 6-6 एकचमसचतुष्टयकरणादिकया क्रियया शोभनया । अत्र देवाना मध्ये हविर्भागम् वहन्त हविर्भिर कर्मभिर्वा वि॰ अ कु

[1]आ च प्रदानकालाद् धारितवन्त इत्यर्थः । भागं देवेषु षष्ठ्यर्थे सप्तमीयम् । हविर्भागं देवानामृभूणां यज्ञार्हम्[1] ॥ ८ ॥

वेङ्कट० [2]अधारयन्त †मनुष्यत्वेऽपि न मृताः† वोढारः । तथैकचमसचतुष्टयकरणादिकया शोभनया क्रियया देवेषु[2] यज्ञियम् भागम् अभजन्त ॥ ८ ॥

मुद्गल० वह्नयः चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः ऋभवः अधारयन्त पूर्वं मनुष्यत्वेन मरणयोग्या अपि अमृतत्वलाभेन प्राणान् धारितवन्तः । किञ्चैते सुकृत्यया यज्ञसाधनद्रव्यसम्पादन-रूपेण शोभनव्यापारेण देवेषु मध्ये स्थिताः यज्ञियम् यज्ञार्हम् भागम् हविर्लक्षणम् अभजन्त सेवितवन्तः ॥ ८ ॥

इति प्रथमाष्टके द्वितीयाध्याये द्वितीयो वर्गः ॥

## [ २१ ]

इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा ॥ १ ॥

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि । ता । सोमम् । सोमऽपातमा ॥१॥

स्कन्द० 'ततोऽनन्तरमैन्द्राग्नम्' । [3]आर्भवादनन्तरं सूक्तमैन्द्राग्नम् । इह यज्ञे इन्द्राग्नी अहम् उप ह्वये । इत् शब्दो यस्मादर्थे । तयोः स्तोमम् उश्मसि सर्वे वयं कामयामहे । कर्तुमित्थमिति वाक्यशेषः । एतज्ज्ञात्वा आगत्य ता तौ सोमम् द्वितीयानिर्देशात् पिबेतामिति वाक्यशेषः । सोमपातमा अतिशयेन सोमानां पातारौ[3] इति ॥ १ ॥

वेङ्कट० इह इन्द्राग्नी उप ह्वये तयोः एव स्तोमम् च कामयामहे । तौ हि सोमम् अतिशयेन पातारौ । विरम्याभिधानादेकवचनबहुवचनयोः सङ्गतिः ॥ १ ॥

मुद्गल० 'इन्द्राग्नी' इति षड्चं चतुर्थं सूक्तम् । [4]मेधातिथिः । गायत्रम् । ऐन्द्राग्नम्[4] ।

इह अस्मिन् कर्मणि इन्द्राग्नी देवौ उप ह्वये आह्वयामि । तयोः इत् इन्द्राग्न्योरेव स्तोमम् स्तोत्रम् उश्मसि कामयामहे । सोमपातमा अतिशयेन सोमं पातुं क्षमौ तौ देवौ सोमम् पिबतामिति शेषः ॥ १ ॥

ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुम्भत । नरः । ता । गायत्रेषु । गायत ॥ २ ॥

स्कन्द० ता[5] तौ प्रकृतौ यज्ञेषु [6]प्र शंसत ऋग्लक्षणाभिः शस्त्रस्तुतिभिः प्रकर्षेण स्तुत । तौ कौ । इन्द्राग्नी । शुम्भत शुम्भ शोभार्थे । शोभध्वम् हे नरः ! मनुष्याः ! ऋत्विजः ! । ऋत्विजो[6]

1-1. आ प्रदानाद् अधारयन् । शोभनं संस्कृतं हविर्भागम् ऋभूणां देवानाम् यज्ञार्हम् । आमि सुप् वि[1] अ कु. 2-2. नास्ति वि[1] हर्प. †-† °त्वेन ह; °त्वेऽपि न मृता साम्ब कु. 3-3. इह यज्ञे इन्द्राग्नी उपह्वये । इत् यस्मात् तयोः स्तुतिं कामयामहे । कर्तुमित्थं तौ सोमं पिबेताम् अतिशयेन सोमस्य पातारौ वि[1] अ कु. 4-4. °थिर्भेधिः । गायत्री छन्दः । इन्द्राग्नी देवते मं[1]. 5. नास्ति वि[1] अ कु. 6-6. प्रकर्षेण ऋग्लक्षणाभिः शस्त्रस्तुतिभिः स्तुतौ (!) इन्द्राग्नी । शोभध्वं मनुष्या ऋत्विजः वि[1] अ कु.

'मृत्विक्त्वादेव देवता स्तुवन्त' शोभन्ते न तूष्णीमासीना । अथवा 'दाता राधांसि शुम्भति' (ऋ १,२२,८) 'इति प्रयोगदर्शनाच्छुम्भतिर्दानार्थः'। दत्त च ताभ्यां सोममित्यर्थः । तौ एव गायत्रेषु गीयन्त 'इति गायत्राणि सामानि । तृतीयार्थे चेयं सप्तमी । सामभि स्तोत्रलक्षणै गायत स्तुत' ॥ २ ॥

वेङ्कट० तौ[४] यज्ञेषु प्र शसत इन्द्राग्नी अलङ्कुरुत च स्तोत्रै । तावेव गायत्रसामसु च गायत नरा[५] ॥ २ ॥

मुद्गल० हे नर ! मनुष्या ऋत्विज ! ता तौ इन्द्राग्नी यज्ञेषु अनुष्ठीयमानेषु कर्मसु प्र शसत शस्त्रै । तथा शुम्भत नानाविधैरलङ्कारै शोभितौ कुरुत । तथा ता तौ इन्द्राग्नी गायत्रेषु गायत्री छन्दस्केषु मन्त्रेषु सामरूपेण गायत ॥ २ ॥

## ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतये ॥ ३ ॥

ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नी इति । ता । हवामहे । सोमऽपा । सोमऽपीतये ॥ ३ ॥

स्कन्द० मित्रस्य[६] मित्रो देवतामात्रोपलक्षणार्थ । तौ "देवतानाम् प्रशस्तये होतृत्वादभिरागतो देवता स्तोष्यतीत्येवमर्थम् इन्द्राग्नी हवामहे । पुनस्तच्छब्दश्रुतेर्मित्रस्य प्रशस्तये सोमपा सोमपौ सोमपीतये सोमपानार्थमपि हवामहे" ॥ ३ ॥

वेङ्कट० तौ[८] मित्रस्य प्रशस्तये तयोरितरेतरविषया मैत्रीं स्तोतुम् इन्द्राग्नी तौ[९] हवामहे । सोमपानशीलौ सोमपानाय च ॥ ३ ॥

मुद्गल० मित्रस्य[१०] स्नेहविषयस्य ममानुष्ठातु प्रशस्तये ता तौ इन्द्राग्नी सम्पद्येतामिति शेष । सोमपा[११] सोमपानक्षमौ ता तौ इन्द्राग्नी सोमपीतये सोमपानार्थम् हवामहे आह्वयाम ॥ ३ ॥

## उग्रा सन्ता हवामह उपेदं सवनं सुतम् । इन्द्राग्नी एह गच्छताम् ॥ ४ ॥

उग्रा । सन्ता । हवामहे । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । आ । इह । गच्छताम् ॥ ४ ॥

स्कन्द० [१२]"उग्रा उग्रौ क्रूरौ शत्रूणामुपरि । सन्ता सच्छब्द प्रशसावचन । सत्पुरुष सद्रूप सदश्व इति यथा । प्रशस्तौ हवामहे । उप इदम् सवनम् सुतम् । उपशब्दोऽत्र प्रतिशब्दस्यार्थे । 'सवनम्' (निघ ३,१७) इति यज्ञनाम । यज्ञ सुत च सोम प्रति । अथवा सवनशब्द सूयत[१३]

---

१-१ कर्मिकत्वेन ते अस्तुवन् वि[१] अ कु २-२ इत्यत्र शानार्थत्वात् अत्राप्येवं वा वि[१] अ कु ३-३ शुम्भि वा शुप् । गायत्राणि सामानि गायत । सिमि वा शुप् । सामभि स्तोत्ररूपैः स्तुत वि[१] अ कु ४ ता वि[१] लप ५. नर वि[१] लप साम्ब कु ६ नास्ति वि[१] अ कु ७-७ देवाना प्रशस्तये होतृत्वान्निरागतो देवान् स्तोष्यतीत्येवमर्थम् । इन्द्राग्नी हवामहे । तौ सोमपौ सोमपानार्थं च हवामहे । उभयवाचया इदम् वि[१] अ कु ८ तेन्द्र ल म[१]; नाऽस्ति इति ल मोप । ९ [illegible] वि[१] ल १० नास्ति वि ११ नास्ति मू[१] १२-१२ उग्रौ शत्रूणामुपरि सन्तौ । सन्ति प्रशस्तायाम प्रशस्तौ । उप समस्तवचनीय प्रती । इम सवनमभिषुत सवनं प्रति च । सवन वि[१] अ कु

[1]तद्धिति सवनं सोमलक्षणं हविराह, स यज्ञनाम । इदं सोमलक्षणमभिषुतं हविः प्रति । एतज्ज्ञात्वा इन्द्राग्नी आ इह गच्छताम् । उप इदम् सवनम् सुतम् इत्येतत् पदचतुष्टयम् 'सेमं नः स्तोममागहि' (ऋ १,१६,५) इत्यत्र पठितम् । इह पुनः पदकाले पठ्यतेऽर्थभेदात् । कथमर्थभेदः । 'सेमं नः स्तोममागहि' इत्यत्र क्रियापदानन्तर्यात् स्तोमं सुतमिति चानयोः उपागमनकर्मण्येव सम्भवादुपशब्द उपसर्गः स्वार्थवृत्तिः । म कर्मप्रवचनीयप्रतिशब्दार्थे । इदं सवनमित्यपि स्तोमं सुतमित्येतयोर्विशेषणार्थाधिकरणसप्तम्यर्थे प्रथमा । अस्मिन् यज्ञे स्तोमं सुतं च सोममुपागच्छेत्यर्थः । इह पुनः इन्द्राग्नी एह गच्छताम् इति क्रियाशब्दस्य व्यवहितत्वात् सुतमित्यस्य कर्मणो हवामह इति पूर्वेणेन्द्राग्निकर्मकेणाह्वानेनासम्बन्धादागच्छतामित्यनेन सम्बन्धे इहशब्दस्य इदं सवनमितीदंशब्देन सप्तम्यर्थप्रवृत्तेन †पौनरुक्त्यप्रसङ्गादुपशब्दः प्रत्यर्थे । कर्मप्रवचनीययोगलक्षणा च द्वितीया† । इमं यज्ञं सुतं च सोमं प्रति सोमलक्षणं वा अभिषुतं हविः प्रति हवामहे इति । अथ तु तत्रापीदं सवनमित्युपागमनकर्मणि द्वितीया व्याख्यायते स्तोममिमं च यज्ञं सुतं च सोमम् उपागच्छेति‡ । ततोऽस्य पदत्रयस्य पुनरिहाध्ययने पदकाराभिप्रायः पर्येष्यः[1] ॥ ४ ॥

वेङ्कट० उग्रौ[2] भवन्तौ हवामहे इमम् सुतम् सोमम् उप प्रति[3] । तौ इन्द्राग्नी इह आ गच्छताम् ॥ ४ ॥

मुद्गल० सुतम् अभिषवोपेतम् इदम् अनुष्ठीयमानम् सवनम् प्रातःसवनादिरूपं कर्म उप सामीप्येन प्राप्तुम् उग्रा सन्ता वैरिवधादिषु क्रूरौ सन्तौ देवौ[4] हवामहे आह्वयामः । इन्द्राग्नी देवौ इह कर्मणि आ गच्छताम् ॥ ४ ॥

ता म॒हान्ता॒ सद॒स्पती॒ इन्द्रा॑ग्नी॒ रक्ष॑ उब्जतम् । अप्र॑जाः सन्त्व॒त्रिण॑ः ॥ ५ ॥

ता । म॒हान्ता॑ । सद॒स्पती॒ इति॑ । इन्द्रा॑ग्नी॒ इति॑ । रक्ष॑ः । उ॒ब्ज॒तम् । अप्र॑जाः । स॒न्तु॒ । अ॒त्रिण॑ः ॥ ५ ॥

स्कन्द० [5]तच्छब्दश्रुतेर्मध्यमपुरुषयोगाच्च मन्त्रस्य प्रत्यक्षकृतत्वात् महान्ता सदस्पती इत्यनयोश्चामन्त्रितयोस्तत्सम्बन्धी यच्छब्दोऽध्याहार्यः । यौ युवां महान्तौ सदस्पती सदः प्रसिद्धं यज्ञगृहं तस्य स्वामिनौ तौ हे इन्द्राग्नी ! रक्ष उब्जतम् उब्जतिरत्र सामर्थ्याद् वधार्थः न्यग्भावार्थो वा । रक्षांसि हतम् । न्यग्भूतानि नाऽस्माकं कुरुतम् । अप्रजाः प्रजावर्जिताश्च सन्तु अत्रिणः अद भक्षणे । भक्षयितारो हिंसितारोऽस्माकम्[5] ॥ ५ ॥

वेङ्कट० तौ महान्तावित्येतावान् परोक्षम्[6] । सदसस्पती[7] इन्द्राग्नी रक्षः हतम् । अस्मादुर्भूताः भवन्तु अदनशीला राक्षसाः अप्रजाता वा[8] ॥ ५ ॥

---

१-१. सदिति सोमलक्षण हविः । तत्पतीति वा । कस्मात् । अतीतपदचतुष्टयं पुनरपि पठ्यते । अर्थभेदात् । स्वार्थ एवोपसर्गः । अत्र पुनः प्रत्यर्थे । इदं सवनमिति च सप्तम्यर्थे तत्र । द्वितीयार्थे अत्र । इह पुनः इन्द्राग्नी एह गच्छतामिति क्रियापदस्य व्यवहितत्वाच्च । पदकाराभिप्रायः पर्येष्यः वि[1] अ कु. †-† "पशब्दः कर्मप्रवचनीययोगलक्षणार्थद्वितीया साम्ब. ‡ गच्छेति मूको. २. उग्रा वि[2]. ३. समीपे कु साम्ब[1,1]; प्रति समीपे ल साम्ब[1]. ४. देवते वि. ५-५. यौ युवा महान्तौ सदसस्पती तौ हे इन्द्राग्नी रक्षांसि हतम् । असमन्यग्भूतानि कुरुतमिति वा । उब्ज न्यग्भावे हनने च । प्रजावर्जिताश्च सन्तु भक्षयितारः । अद भक्षणे । त्रिविध । अस्मद्धिंसितारः सन्तविति दिग्रासम्यु वि[2] अ कु. ६. परोक्षः कु. ७. सदस्पती साम्ब कु. ८. नास्ति साम्ब[1,2].

मुद्गल० ता तौ इन्द्राग्नी रक्षः राक्षसजातिम् उब्जतम् ऋजु कुरुतम्। क्रौर्यं परित्याजयतमित्यर्थः। कीदृशौ। महान्ता महान्तौ गुणैरधिकौ सदस्पती सभापालकौ। तयोः प्रसादात् अत्रिणः भक्षका राक्षसाः अप्रजाः अनुत्पन्नाः सन्तु ॥ ५ ॥

तेन॑ स॒त्येन॑ जागृत॒मधि॑ प्रचे॒तुने॑ प॒दे। इन्द्रा॑ग्नी॒ शर्म॑ यच्छतम् ॥ ६ ॥

तेन॑। स॒त्येन॑। जा॒गृ॒त॒म्। अधि॑। प्र॒ऽचे॒तुने॑। प॒दे। इन्द्रा॑ग्नी॒ इति॑। शर्म॑। य॒च्छ॒त॒म् ॥ ६ ॥

स्कन्द० [1]तेन तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। येनान्येषामपि स्तोतॄणां यष्टॄणां च जागृथः तेन सत्येन अविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि जागृतम् जागरणमप्रमादः सर्वार्थेऽप्यप्रमत्तौ भवतम्। किञ्च अधि उपरि सर्वस्य प्रचेतुने पदे प्रकर्षेण यच्चेतयति ज्ञापयति प्रकाशयते वा तत् प्रचेतुनम्। प्रचेतुने पदे मम जागृतम् अप्रमत्तौ भवतम्। मां प्रचेतुनं पदं प्रापयतमित्यर्थः। †हे इन्द्राग्नी स्थानं गृहं वा दत्तम्।†[1] ॥ ६ ॥

वेङ्कट० यत् पदं ज्योतिषा[2] मनुष्यान्[3] प्रज्ञापयति तस्मिन् त्वदीये आधिपत्ये यथापूर्वम् तेन सत्येन जागरणं कुरुतम् इन्द्राग्नी! सुखं च यच्छतम् ॥ ६ ॥

मुद्गल० हे इन्द्राग्नी सत्येन [4]अवश्यफलप्रदानादवितथेन तेन अस्माभिरनुष्ठितकर्मणा प्रचेतुने प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थानेषु अधि जागृतम् आधिक्येन सावधानौ भवतम्। ततोऽस्मभ्यम् शर्म यच्छतम् सुखं दत्तम् ॥ ६ ॥

इति प्रथमाष्टके द्वितीयाध्याये तृतीयो वर्गः ॥

[ २२ ]

प्रा॒त॒र्युजा॒ वि बो॑धया॒श्विना॒वेह ग॑च्छताम्। अ॒स्य सोम॑स्य पी॒तये॑ ॥ १ ॥

प्रा॒तः॒ऽयुजा॑। वि। बो॒ध॒य॒। अ॒श्विनौ॑। आ। इ॒ह। ग॒च्छ॒ता॒म्। अ॒स्य। सोम॑स्य। पी॒तये॑ ॥१॥

स्कन्द० 'तृतीयस्यादिराश्विन'। [5]तृतीयस्य सूक्तस्यादि प्राक् 'हिरण्यपाणिमूतये' (ऋ १,२२,५) इत्यश्विदैवतम्। प्रातर्यावश्विनौ ग्रहयागेन युज्येते तौ प्रातर्युजौ अमुष्य यजमानस्य यज्ञे गन्तव्यमित्येतद् वि बोधय। आत्मन एवायमन्तरात्मनः प्रैषणादभेदो होतृत्वात्। विबोधितौ चाश्विनौ आ इह गच्छताम्। किमर्थम्[6]। अस्य आश्विनग्रहाग्रस्य सोमस्य पीतये[5] ॥ १ ॥

---

१-१. येन अन्येषामपि स्तोतॄणां जागृथः तेन अविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि जागृतम्। सर्वार्थेऽप्रमत्तौ भवतम्। सर्वस्मिन् उपरि प्रकाशनस्वभावादित्यमण्डलमध्ये स्वर्गाख्ये वा स्थाने। हे इन्द्राग्नी स्थानं गृहं वा दत्तम्। मम प्रज्ञापनस्वभावस्थाने अप्रमत्तौ भवतम् इति वा वि॰ अ कु. †-† नास्ति साम्ब. २. ॰तिषा साम्ब॰. ३. मनुष्यान् कु साम्ब. ४. ॰वश्य फ॰ मै॰. ५-५. प्रातः यौ अश्विनौ ग्रहयागेन युज्येते तौ विबोधयेति अन्तरात्मनो प्रैषः। अग्नि वा होतृत्वात्। अस्य यजमानस्य यज्ञे गन्तव्यमिति ज्ञापय। विबोधितौ च अश्विनौ इह यज्ञे आगच्छताम् वि॰ अ कु. ६. पानाय वि॰ अ कु.

वेङ्कट० प्रातर्गमनायोद्युक्तौ अश्विनौ स्तोतः ! वि बोधय । तौ इह आ गच्छताम् अमुं[1] सोमं पातुम् ॥ १ ॥

मुद्गल० 'प्रातर्युजा' इति एकविंशर्चं पञ्चमं सूक्तम् । [२]मेधातिथिः । गायत्रम्[२] । आद्याश्चतस्र ऋचः अश्विदेवताकाः । पञ्चम्याद्याः चतस्रः साविश्य.[३] । नवमीदशम्यावाग्नेय्यौ । एकादशी देवसम्बन्धि-देवताका । द्वादशी इन्द्राणीवरुणान्यग्नायीदेवताका । त्रयोदशीचतुर्दश्यौ द्यावापृथिवीये । पञ्चदशी पृथिवीदेवताका । षोडश्याद्या विष्णुदेवताकाः षोडशी कृत्स्नदेवत्या वा ॥

होता ब्रूते । हे अध्वर्यो ! प्रातर्युजा प्रातःसवनग्रहेण संयुक्तौ अश्विनौ देवौ वि बोधय विशेषेण प्रबुद्धौ कुरु । अश्विनौ प्रबुद्धौ तावश्विनौ देवौ अस्य अभिषवसंस्कारयुक्तस्य सोमस्य पीतये पानाय इह कर्मणि आ गच्छताम् ॥ १ ॥

या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥ २ ॥

या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा । अश्विना । ता । हवामहे ॥ २ ॥

स्कन्द० [४]या सुरथा यौ सुरथौ रथीतमा सारथिरत्र रथ्युच्यते । अतिशयेन सारथी च† । उभा देवा दिविस्पृशा दिवि स्प्रष्टारौ । गन्तारावित्यर्थः । अश्विना ता हवामहे[४] ॥ २ ॥

वेङ्कट० यौ[५] सुरथौ अतिशयेन रथस्य नेतारौ भवत, उभौ द्युस्थानौ अश्विनौ तौ हवामहे ॥ २ ॥

मुद्गल० या उभा उभौ अश्विना देवा[६] अश्विनौ देवौ सुरथा शोभनरथयुक्तौ रथीतमा रथिनां मध्ये अतिशयेन रथिनौ दिविस्पृशा द्युलोकनिवासिनौ ता हवामहे तादृशावश्विनौ आह्वयामहे ॥ २ ॥

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ ३ ॥

या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ॥ ३ ॥

स्कन्द० या वाम् [७]युवयोः कशा अश्वो यया तोद्यते सा कशोच्यते । कीदृशी । मधुमती 'मधु' (निघ १,१२) इति उदकनाम । तद्वती । वृष्टिकारिणीत्यर्थः । हे अश्विना ! सूनृतावती सूनृता वाक् तद्वती च । शब्दकारिणीत्यर्थः । तया मदीयम् यज्ञम् मिमिक्षतम् म्यक्षतेर्गतिकर्मण एतद् रूपम् । गच्छतम् । अथवा 'कशा' (निघ १,११) इति वाङ्नाम । या युवयोर्गर्जितलक्षणा वाक् उदकवती सूनृतावती च । 'सूनृता' ( निघ २,७ ) इत्यन्ननाम । सस्यलक्षणेनान्नेन जनयितव्येन तद्वती । सस्यानां† जनयित्री इत्यर्थः । अथवा सूनृतं प्रियमुच्यते तद्वती । श्रवणसुखेत्यर्थः । तया यज्ञं मिमिक्षतम् । मिह सेचने । उदकेन सिञ्चतं वर्षतमित्यर्थः[७] ॥ ३ ॥

वेङ्कट० या [८]युवयोः अश्वाजनी[८] मधु क्षरन्ती शब्दवती तया अस्माकम् [९]यज्ञम् सिञ्चतम्[१०] ॥ ३ ॥

---

१. नास्ति लपं. २-२. 'थिर्ऋषिः । गायत्री छन्द. मै[१], नास्ति मै[२]. ३. सवितृदेवताका मै[१]. ४-४. यौ सुरथौ अतिशयेन सारथी च उभौ देवौ दिवि गन्तारौ तावश्विनौ हवामहे वि[१] अ कु. † नास्ति मूको. ५. या वि[१]. ६. नास्ति मूको. ७-७. 'अश्वाजनी कशा चोदः' इति तोदननाम । युवयोः तोत्री उदकवती शब्दकारिणी च गर्जिता च तया अस्मान् गच्छतम् । म्यक्ष गतौ । कशा वाग्वा । या वा वाक् गर्जितलक्षणा जलवती च । सूनृता अन्नम् । अस्मिन् पक्षे । न वाक् । सस्याना जनयित्री सूनृत प्रियं वा । श्रवणसुखा यज्ञ सिञ्चाम् । मिह सेचने । वर्षतम् वि[१] अ कु. † सस्याना मूको. ८. युवयो. वि[१]. ९. 'जनि साम्यल अ[१]; 'जनि वि[१] लपं. १०-१०. नास्ति वि[१] लपं.

मुद्गल० हे अश्विना अश्विनौ ! वाम् युवयो सम्बन्धिनी या कशा अश्वताडनी विद्यते तया सह्रागत्यास्म दीयम् यज्ञम् मिमिक्षतम् सोमरसेन सेक्तुमिच्छतम् । कशयाऽश्व दृढ ताडयित्वा सहसा समागत्य भवद्भिरपि सोमाहुति निष्पादयितुमुद्युक्तौ भवतमित्यर्थ । कीदृशी कशा । मधुमती धर्मोदकवती । अश्वस्य शीघ्रगत्या यत् स्वेदोदक स्रवति तेनेय कशा क्लिन्नेत्यर्थ । सूनृतावती प्रियसत्यवाग्युता । तीक्ष्ण कशाताडनेन यो ध्वनिर्निष्पद्यते[1] ताडनवेलायाम् अश्वारूढेन च य आक्रोश क्रियते तदुभय शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम् ॥ ३ ॥

नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥ ४ ॥

नहि । वाम् । अस्ति । दूरके । यत्र । रथेन । गच्छथ । अश्विना । सोमिनः । गृहम् ॥ ४ ॥

स्कन्द० [2]नहि वाम् युवयो अस्ति दूरके दूरे नाम अस्ति यत्र रथेन गच्छथ । यद्यपि दूरे तदपि रथेन शीघ्र मत्र गच्छथ इत्यर्थ । किं तत् । उच्यते । अश्विना सोमिन सोमवतो यष्टु स्वभूतम् गृहम्[3] ॥ ४ ॥

वेङ्कट० नहि युवयो अस्ति दूरे किञ्चिद् गृहम् यत्र युवाम् रथेन गच्छथ । अश्विनौ ! यजमानस्य गृहम् रथेन शीघ्र गच्छतोर्न[1] दूरे भवतीति ॥ ४ ॥

मुद्गल० अश्विना ! हे अश्विनौ ! युवाम् सोमिन सोमवतो यजमानस्य गृहम् प्रति रथेन गच्छथ । स मार्ग वाम् युवयो दूरके दूरदेशे नहि अस्ति न वर्तते खलु । यद्वा यत्र[4] यस्मिन् गृहे गच्छथ तद् गृह दूरे न भवति ॥ ४ ॥

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥ ५ ॥

हिरण्यऽपाणिम् । ऊतये । सवितारम् । उप । ह्वये । सः । चेत्ता । देवता । पदम् ॥ ५ ॥

स्कन्द० [5]"हिरण्यपाणिम् सावित्री तिस्रश्चान्यत उत्तरा" । हिरण्यपाणिमितीय पराश्च तिस्र सावित्र्य । हिरण्मयौ पाणी यस्य स हिरण्यपाणि । अत्र शाट्यायना इतिहासमाह्मणमधीयते—"अथ यत्र ह तद्वा यज्ञमनन्वन सवित्रे प्राशित्र परिजहुस्तत्तस्य पाणी प्रचिच्छेद । तस्मै हिरण्मयौ प्रत्यदधुस्तस्माद्धिरण्यपाणि" ( कौषी ६,१३ ) इति । हिरण्यपाणिम् ऊतये तर्पणाय सवितारम् उप ह्वये । किं कारणम् । उच्यते । यस्मात् स चेत्ता चिती संज्ञाने । सम्यक् ज्ञाता । नान्य कश्चिद् देवता षष्ठ्यर्थे प्रथमैषा । देवताना पदम् स्थानम् । अथवा स चेत्ता स एव देवता स एव पद स्थानमाश्रयो वसूनामिति[6] ॥ ५ ॥

वेङ्कट० 'प्राशित्र सवितु पाणी प्रचिच्छेद तस्मै द्वा हिरण्मयौ पाणी प्रत्यदधु ' इति शाट्यायनब्राह्मणम्[1]।

---

1 ध्वनिर्नि वि २ २ नहि वां दूरमस्ति दूरेऽपि यत्र रथेन गच्छथ रथवेगात् शीघ्रमेव गच्छथ अश्विनौ सोमिनो यष्टुर्गृहम् वि' अ दु ३ गच्छतो न वि' लर्प ४ नास्ति मूको ५ ५ पराश्चाय सवित्र्य । हिरण्मयौ [illegible] तस्माद् हिरण्यपाणिरिति स्तुत ( कौषी ६,१३ गोब्रा २,१,७ ) इति । तं हिरण्यपाणिं सवितार [illegible] वा ह्वये । तस्मात् स चेता । चिती संज्ञाने । देवतानां स्थानम् । आश्रि मु । अथवा स एव चेता [illegible] वसूनाम् वि' अ दु ६ शाट्याय० दु

सवितारम् ऊतये उप ह्वये । सः देवता प्रकाशं कुर्वन् पदम् प्रातरेव चेतयति [1]पदनिधानयोग्यदेशं प्रकाशयति ॥ ५ ॥

मुद्गल० ऊतये अस्मद्रक्षणार्थम्[2] सवितारम् देवम् उप ह्वये आह्वयामि । सः च सविता देवः एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा पदम् यजमानेन प्राप्यं स्थानम् चेता ज्ञापयिता भवति । कीदृशं सवितारम् । हिरण्यपाणिम् यजमानाय दातुं हस्ते सुवर्णधारिणम् ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये चतुर्थो वर्गः ॥

## अपां नपातमवसे सवितारमुप स्तुहि । तस्य व्रतान्युश्मसि ॥ ६ ॥

अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि । तस्य । व्रतानि । उश्मसि ॥ ६ ॥

स्कन्द० [1]नपाच्छब्दोऽपत्यनाम । इह सामर्थ्यात् पुत्रे वर्तते न पौत्रे । अपां पुत्रम् इत्यर्थः । कुत एतत् । सवितुरुदयो जन्म । तत् साक्षादद्भ्यः[3] । 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' ( ऐब्रा ४,२० ) इति श्रुतेः । अथवा अद्भ्यो [4]वैद्युतोऽग्निः जायते अग्नेः सविता । 'अग्नेर्वा आदित्यो जायते' इति श्रुतेः[4] । अथवा 'आपो वा इदमग्र आसन्' इति श्रुतेः अद्भ्यः प्रजापतिरजायत । प्रजापतेः सविता । [5]तेनायमपां पौत्र एव । तम् अपाम् नपातम् पौत्रम् अवसे तर्पणाय पालनाय वा सवितारम् उप स्तुहि आत्मन एवायमन्तरात्मनः प्रैषः । किं कारणम् । तस्य व्रतानि कर्माणि यागाख्यानि उश्मसि सर्वे वयं कामयामहे । कर्तुम् इति वाक्यशेषः । यस्मात् तं यष्टुमिच्छाम इत्यर्थः[5] ॥ ६ ॥

वेङ्कट० योऽद्भ्यः प्रातरेवोदेति[6] तम् सवितारम् उप स्तुहि । तस्य कर्माणि श्रोतुं कामयामहे ॥ ६ ॥

मुद्गल० अत्र होता सामगम् ऋत्विजं ब्रूते । अवसे अस्मान् रक्षितुम् सवितारम् उप स्तुहि । तस्य सवितुः सम्बन्धीनि व्रतानि कर्माणि सोमयागादिरूपाणि उश्मसि कामयामहे । कीदृशं सवितारम् । अपाम् नपातम् जलस्य न पालकम् । सन्तापेन शोषकमित्यर्थः ॥ ६ ॥

## विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ॥ ७ ॥

विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः । सवितारम् । नृऽचक्षसम् ॥ ७ ॥

स्कन्द० [7]यस्मै यावद् योग्यं तस्मै तावतः प्रदातारं तं विभक्तारम् हवामहे । वसोः चित्रस्य[7]

---

१. पदं नि° सर्प. २. °द्रक्षार्थम् मै°. ३-३. अपां पुत्रम् । सवितुरुदयो हि जन्म । तच्च साक्षादद्भ्य: वि° अ कु. ४-४. वैद्युतोऽग्निः अग्नेर्वा आदित्यो जायते इति पौत्रम् वि° अ कु ५-५. तेन वा अपां पौत्रं तर्पणपालनाभ्यां सवितारमुपस्तुहि । इति आत्मा अन्तरात्मानं प्रेष्यति । तस्य यागाख्यानि कर्माणि सर्वे वयं कामयामहे कर्तुम् वि° अ कु. ६. प्रातरुदे° सास्त्र कु वि°° लर्य. ७-७. विभक्तारं यस्य यावद्योग्यं तावतस्य प्रदातारं हवामहे वि° अ कु.

[१]राधस राध साध समिद्धौ। सर्वार्थसिद्धिकरस्य । सवितारम् नृचक्षसम् मनुष्यान् द्रष्टारम् मनुष्याणां शुभाशुभानां कर्मणां प्रत्यवेक्षितारम् इत्यर्थः[१] ॥ ७ ॥

वेङ्कट० वामस्येति पूज्यस्य धनस्य दातारम् ह्वयामहे सवितारम् मनुष्याणां द्रष्टारम् ॥ ७ ॥

मुद्गल० वसो निवासहेतो चित्रस्य सुवर्णरजतादिरूपेण बहुविधस्य राधस धनस्य विभक्तारम् अस्य यजमानस्य एतावद्धनदानमुचितमिति विभागकारिणम् नृचक्षसम् मनुष्याणां प्रकाशकारिणम् सवितारम् ह्वयामहे ॥ ७ ॥

सखा॑य॒ आ नि षी॑दत सवि॒ता स्तोम्यो॒ नु नः॑ । दा॒ता राधां॑सि शुम्भति ॥८॥

सखा॑य । आ । नि । सी॒द॒त॒ । स॒वि॒ता । स्तोम्यः॑ । नु । नः॒ । दाता॑ । राधां॑सि । शु॒म्भ॒ति॒ ॥८॥

स्कन्द० हे सखाय ! अध्वर्यव ! आ नि षीदत [२]आ इत्यर्वागर्थे । अर्वाक् मत्समीपे प्रविश्य दानार्थं निषीदत । किं कारणम् । यस्मात् सविता स्तोम्य स्तोमार्हः स्तोतव्य । नु क्षिप्रम् नः अस्माकम् । किं कारणम् । यस्माद् दाता सविता राधांसि शुम्भति । दानार्थोऽस्य सामर्थ्यात् । किं हि दाता राधसामन्यत् कुर्यात् अन्यतो दानात् । ददाति स्तोतृभ्य इत्यर्थः । अथवा दाता यजमान । राधांसि सोमलक्षणानि धनानि । शुम्भतिस्तु शोभनार्थ एव । सामर्थ्यात् त्वन्तर्णीतण्यर्थः । लट् च भूते काले । यस्माद् यजमान सोमाजभिषवादिभि संस्कारैः शोभितवान् सस्कृतवानित्यर्थः[२] ॥ ८ ॥

वेङ्कट० अस्तोतृप्रभृतय ! आगत्य उपविशत । सविता अस्माकं स्तोतव्य क्षिप्रम् । अन्नानाम् दाता यजमान एव स्तुतिभिरलङ्करोति हविर्भिर्वेति ॥ ८ ॥

मुद्गल० हे सखाय ! [३]सखिभूता ऋत्विज ! आ नि षीदत सर्वत उपविशत । नः अस्माकम् सविता नु क्षिप्रम् स्तोम्य स्तुतियोग्य । राधांसि धनानि दाता प्रदातुम् उद्युक्त एष सविता शुम्भति शोभते ॥ ८ ॥

अग्ने॒ पत्नी॑रि॒हा व॑ह दे॒वाना॑मुश॒तीरुप॑ । त्वष्टा॑रं॒ सोम॑पीतये ॥ ९ ॥

अग्ने॑ । पत्नीः॑ । इ॒ह । आ । व॒ह॒ । दे॒वाना॑म् । उ॒श॒तीः । उप॑ । त्वष्टा॑रम् । सोम॑ऽपीतये ॥ ९ ॥

स्कन्द० 'एकाउग्ने' (बृद ३,९२)। [४]एका ऋगाग्नेयी । हे अग्ने ! पत्नी इह कर्मणि उप आ वह । कस्य पत्नी । देवानाम् । उशती कामयमाना सामर्थ्याद् देवान् वा यजमानं वा[४] । त्वष्टारम् च ।

---

१-१. धनस्य भजनीयस्य सिद्धिकरस्य । सवितारं मनुष्याणां द्रष्टारं शुभाशुभानां कर्मणां प्रत्यवेक्षितारम् वि॰ अ कु॰।
२-२. आ अर्वागर्थे । मत्समीपं दानार्थं निषीदत । यस्मात् सविता स्तोतव्य क्षिप्रमस्माकम् । यस्मात् दाता सविता धनानि स्पृशति । अथवा दाता यजमान सोमलक्षणानि धनानि संस्कारैः शोभितवान् । अन्तर्णीतण्यर्थश्च भूते लट् वि॰ अ कु॰। ३. सर्वा॰ वि॰। ४-४. हे अग्ने देवानामुशती पत्नी इह समानय । देवान् यजमानं वा । उप सामीप्ये वि॰ अ कु॰।

[1]किमर्थम् । सोमपीतये । आवोढुरग्नेरेवात्र प्राधान्यं न देवपत्नीनां त्वष्टुश्च । तस्माद् आग्नेयत्वम्[1] ॥ ९ ॥

वेङ्कट० अग्ने ! देवपत्नीः इह उप आ वह कामयमाना । त्वष्टारम् च सोमपानार्थम् ॥ ९ ॥

मुद्गल० हे अग्ने ! उशती कामयमाना देवानाम् पत्नीः इन्द्राण्याद्याः इह देवयजने देशे आ वह । तथा त्वष्टारम् देवम् सोमपीतये सोमपानार्थम् उप समीपे आवह ॥ ९ ॥

आ ग्ना अ॑ग्न इ॒हाव॑से॒ होत्रां॑ यविष्ठ॒ भार॑तीम् । वरू॑त्रीं धि॒षणां॑ वह ॥ १० ॥

आ । ग्नाः । अ॒ग्ने॒ । इ॒ह । अव॑से । होत्रा॑म् । य॒वि॒ष्ठ॒ । भार॑तीम् । वरू॑त्रीम् । धि॒षणा॑म् । व॒ह॒ ॥ १० ॥

स्कन्द० 'द्वे तु देवीनाम्' ( बृद ३.९२ )। [2]द्वे एते ऋचौ देवीनाम् । आ इत्युपसर्गोऽन्त्येन वह इत्येतेन सम्बन्धयितव्य । 'ग्ना' (निघ १,११) इति स्त्रीनाम । हे अग्ने ! स्त्रिय आवह । इह कर्मणि अवसे पालनाय तर्पणाय वा । कतमाम् । होत्राम्[2] हूयतेऽसाविति होत्राऽग्नेर्दीप्ति पत्नी वा [3]ताम् । हे यविष्ठ ! युवतम ! भारतीम् भरत आदित्य तस्य भा पत्नी वा भारती तां च । वरूत्रीम् धिषणाम् 'धिषणा' ( निघ १,११ ) इति वाङ्नाम । वरणीयां च वाचम् आवह[3] ॥ १० ॥

वेङ्कट० आ वह इह अग्ने ! देवपत्नीः रक्षणाय होत्राम् । युवतम ! आदित्यस्य पत्नीं वरणीयां सरस्वतीं च ॥ १० ॥

मुद्गल० हे अग्ने ! अवसे अस्मानवितुम् ग्नाः देवपत्नीः इह आ वह । तथा हे यविष्ठ ! युवतमाग्ने ! होत्राम् होमनिष्पादिकाम् अग्निपत्नीम् भारतीम् भरतनामकस्यादित्यस्य पत्नीम् वरूत्रीम् वरणीयाम् धिषणाम् [4]वाग्देवीं चावह ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये पञ्चमो वर्गः ॥

अ॒भि नो॑ दे॒वीरव॑सा म॒हः शर्म॑णा नृ॒पत्नीः॑ । अच्छि॑न्नपत्राः सचन्ताम् ॥ ११ ॥

अ॒भि । नः॒ । दे॒वीः । अव॑सा । म॒हः । शर्म॑णा । नृ॒ऽपत्नीः॑ । अच्छि॑न्नऽपत्राः । स॒च॒न्ता॒म् ॥ ११ ॥

स्कन्द० [5]अभीत्युपसर्गोऽन्त्येन सचन्तामित्याख्यातेन सम्बन्धयितव्य । नः अस्मान् देवाः होत्रा भारतीधिषणा देव्यः अवसा पालनेन तर्पणेन वा महः तृतीयार्थे षष्ठ्येषा । महता शर्मणा गृहेण सुखेन वा । नृपत्नीः नरो देवता तदाकारत्वात् तेषां पत्न्यः । होत्राऽग्नेः पत्नी,[4]

---

१ १ सोमपानार्थं वोढुरग्नेरेवात्र प्राधान्यं न देवपत्नीनां त्वष्टुश्च । तस्मादाग्नेयत्वमृचः वि[1] अ कु २ २ हे अग्ने स्त्रिय आवह । स्त्रियो ग्ना याचणा ग्ना इति । इह कर्मणि तर्पणपालनाथम् वि[1] अ कु ३ ३ ता च हे युवतम । नक्षत्रा भरतो ज्योतिरादित्य तस्य भा पत्नी वा भारती ता च वरणीया च वाचम् । धिषणेति वाक् । एना आवह वि[1] अ कु ४ नास्ति मै[1] ५ ५ अभिसचन्ताम् अस्मान् होत्रा भारती धिषणा देव्य तर्पणपालनाभ्यां महता गृहेण सुखेन वा । दार्थे षष्ठ्य । महता । नरो देवा । तदाकारत्वात् । अग्न्यादित्ययज्ञानां पत्न्यो होत्राभारतीवाच वि[1] अ क

[1]भारत्यादित्यस्य पत्नी, वाग् यज्ञस्य पत्नी । अथवा मनुष्याणां पालयित्र्यो नृपत्नीः[1] । अच्छिन्नपत्राः [2]छिन्नं श्रान्तम् । पतत्यनेनेति पत्रं वाहनम्[2] । अश्रान्तवाहनाः अभि सचन्ताम् अभिसेवन्ताम् । [3]अथो महच्छर्म चास्माकं कुर्वन्तु इत्यर्थः । 'सचन्यृच्छति' ( निघ २,१४ ) इति गतिकर्मसु पाठात् सचतिरत्र गत्यर्थः । अवसा महता च शर्मणा अभिगच्छन्त्वस्मान् । अथो महच्छर्मास्मानभिगच्छतित्यर्थः[3] ॥ ११ ॥

वेङ्कट० अभि सचन्ताम् अस्मान् देव्यः रक्षणेन महता च सुखेन सह[4] देवानां पत्न्यः अच्छिन्नपतनाः[4] ॥११॥

मुद्गल० देवीः देव्यः देवपत्न्यः अवसा रक्षणेन महः महता शर्मणा सुखेन च सह नः अस्मान् अभि सचन्ताम् आभिमुख्येन सेवन्ताम् । कीदृश्यो देव्यः । नृपत्नीः मनुष्याणां पालयित्र्यः अच्छिन्नपत्राः अच्छिन्नपक्षाः । नहि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचित् छिद्यन्ते ॥ ११ ॥

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥ १२ ॥

इह । इन्द्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये । अग्नायीम् । सोमऽपीतये ॥ १२ ॥

स्कन्द० [5]"द्वादश्याम् †तिस्र ईरिताः† । इन्द्राणी वरुणानी चाग्नायी ताश्च पृथक् स्तुताः" ( बृदे ३,९२ ) । सूक्तस्य द्वादश्यामस्यामृचि तिस्रः स्त्रियो देवताः । कतमाः । इन्द्राणी वरुणानी चाग्नायी च । ताश्च पृथक् स्तुताः न सह । इह कर्मणि इन्द्राणीम् इन्द्रस्य पत्नीम् उप ह्वये । वरुणानीम् वरुणस्य पत्नीम् । किमर्थम् । स्वस्तये अविनाशायात्मनः । अग्नायीम् अग्नेश्च पत्नीम् । न च स्वस्तये एव केवलायै । किन्तर्हि । सोमपीतये च[6] । अस्मान् रक्षिष्यन्ति सोमं पास्यन्ति इत्येवमर्थम् इत्यर्थः ॥ १२ ॥

वेङ्कट० उत्तरा निगदसिद्धेति ॥ १२ ॥

मुद्गल० इह अस्मिन् कर्मणि स्वस्तये अस्माकम् अविनाशाय सोमपीतये सोमपानाय च इन्द्राणीम् वरुणानीम् अग्नायीम् इन्द्रवरुणाग्नीनां पत्नीः उप ह्वये आह्वयामि ॥ १२ ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ १३ ॥

मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरीमऽभिः ॥ १३ ॥

स्कन्द० 'द्यावापृथिव्यौ द्वे अचौ' ( द्र. बृदे ३,९३ ) । [7]द्वे एते ऋचौ द्यावापृथिवीदेवते । मही द्यौः पृथिवी च नः इमम् यज्ञं मिमिक्षताम् । म्यक्षतेर्गतिकर्मण एतद्रूपम् । गच्छताम् । गत्वा च पिपृताम् । पॄ पालनपूरणयोः इत्यस्यैतत् छान्दसं रूपम् । पूरयतां तर्पयताम् इत्यर्थः । नः अस्मान् भरीमभिः[7] भरणसमर्थैरन्नैः रसैश्च ॥ १३ ॥

---

1-1. नास्ति वि[1] भ कु. 2-2 नास्ति साम्र. 3-3. अवदन महच्छर्म चास्माकं कुर्वन्तु । पत्र इतावरौ गनौ च । अवसा च महता शर्मणा चाभिगच्छन्तु अस्मान् वि[1] भ कु. 4. नास्ति साम्र[1]२ कु. 5. [?]नः साम्र कु भ[१]. 6-6. द्वादश्या तिस्र इन्द्राणीवरुणान्यग्नाय्यः पृथक् स्तुताः । इह कर्मणि इन्द्रवरुणाग्नीनां पत्नीराह्वये अविनाशायात्मनः सोमपानाय च । आगताः वि[1] भ कु. †-† देवपत्न्यः पृदे; [?]त्रिय: साम्र[1]१. 7-7. महत्यौ द्यावापृथिव्यौ अस्माकं यज्ञं गच्छेताम् । म्यक्ष गतौ । पॄ पालनपूरणयोः । छान्दसं रूपं च । पूरयतां तर्पयताम् अस्मान् वि[1] भ कु.

वेङ्कट० महत्यौ द्यावापृथिव्यौ अस्माकम् इमम् यज्ञम् आगच्छताम्[1] । पालयेताम्[2] च अस्मान् भरणैः ॥ १३ ॥

मुद्गल० मही महती द्यौः द्युलोकदेवता 'पृथिवी भूमिदेवता' च नः अस्मदीयम् इमम् यज्ञम् मिमिक्षताम् स्वकीयसारभूतेन रसेन मिमिक्षताम् सेक्तुमिच्छताम् । तथा भरीमभिः भरणैः पोषणैः नः अस्मान् पिपृताम् उभे देव्यौ पूरयताम् ॥ १३ ॥

तयोरिद् घृतवत् पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ १४ ॥

तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः । गन्धर्वस्य । ध्रुवे । पदे ॥ १४ ॥

स्कन्द० [3]तयोः द्यावापृथिव्योः स्वभूतं घृतवत् घृ क्षरणदीप्त्योः । क्षरणं घृतं तद्वत् । पयः उदकं विप्राः सर्वत्र विविधं प्राप्ताः मेधाविनो वा आदित्यरश्मयः रिहन्ति आस्वादयन्ति धीतिभिः कर्मभिर्गमनाख्यैः । गत्वेत्यर्थः । क्व । गन्धर्वस्य ध्रुवे पदे सुषुम्ना नाम सूर्यरश्मिः साऽत्र गौः उच्यते, तां धारयतीति गन्धर्वश्चन्द्रमाः । तद्वक्ष्यति—'अत्राह गोरमन्वत' ( ऋ १,८४,१५ ) इति । तस्य गन्धर्वस्य ध्रुवे पदे स्थाने चन्द्रमण्डलाख्ये[3] । [4]या ह्येताः पूर्वपक्षे कलाख्याः चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । सोमोत्पत्त्याम् 'प्रथमा पिबते वह्निः' इत्याद्युक्तत्वात् । तदेतदिहोच्यते । अन्यथा वा योजना । तयोरुपस्तरणाभिघारणभूतेन तद्विलक्षणं पयः त एव मेधाविन ऋत्विजः स्तुवन्ति स्तुतिकर्मभिः । रिह स्तुतौ[5] 'सप्तम्यर्थे वा तृतीया । धीतिषु यागकर्मसु । क्व । गन्धर्वस्य ध्रुवे पदे । यज्ञो गन्धर्वः गोर्वाचो धारयितृत्वात् तस्य ध्रुवं पदं वेदिस्तत्र[6] ॥ १४ ॥

वेङ्कट० तयोः एव क्षरणवत् पयः सारं मेधाविनः लिहन्ति[7] कर्मभिः आदित्यस्य ध्रुवे स्थानेऽवस्थितम् ॥ १४ ॥

मुद्गल० ध्रुवे पदे ध्रुवं पदम् अन्तरिक्षम् । तेनान्तरिक्षेणोपलक्षित आकाशे वर्तमानयोः तयोः इत् द्यावापृथिव्योरेव सम्बन्धि पयः जलम् घृतवत् घृतसदृशम् विप्राः मेधाविनः प्राणिनः धीतिभिः कर्मभिः रिहन्ति लिहन्ति[8] ॥ १४ ॥

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १५ ॥

स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥ १५ ॥

---

१. आगच्छेताम् ल साम्ब[1]. २. पालयेताम् मूको. ३-३. नास्ति वि. ४-४. द्यावापृथिव्योः क्षरणवदुदकं सर्वत्र विविधं प्राप्ताः मेधाविनो वा आदित्यरश्मयो वास्वादयन्ति कर्मभिर्गमनाख्यैः । घृ क्षरणदीप्त्योः । रिह आस्वादने । गत्वा चन्द्रमसो नित्ये स्थाने । सुषुम्ना सूर्यरश्मिः । सात्र गौः । तां धारयतीति गन्धर्वश्चन्द्रमाः । 'अत्राह गोरमन्वत' इति । चन्द्रमण्डलाख्ये गत्वा आस्वादयन्ति वि[1] अ कु. ५-५. त्रुटितम् साम्ब. ६-६. सुपि वा भिम् । यागकर्मसु यज्ञस्य वेद्याम् । यज्ञो गन्धर्वः । गौर्वाक् । तस्या धारयिता वि[1] अ कु. ७. विहन्ति ल; वहन्ति साम्ब कु अ[1]. ८. नास्ति वि.

स्कन्द० "स्योनापृथिवि भवा" ( तु बृदे ३,९३ )। स्योना आदिर्यस्या सा ऋक् पार्थिवी पृथिवी देवता। 'स्योनम्' (निघ ३,६) इति सुखनाम। सुखा हे पृथिवि! भव अनृक्षरा ऋक्षर कण्टक तद्वर्जिता। निवेशनी सन्निवेशनयोग्या। यच्छ देहि च नः शर्म गृहं सुखं वा सप्रथः सर्वतः पृथु[१] ॥१५॥

वेङ्कट० सुखा पृथिवि! भव कण्टकवर्जिता निवेशनी। 'ऋक्षरं कण्टकं ऋच्छते' (या ९,३२)। यच्छ च अस्मभ्यं सर्वतः पृथु गृहम् ॥ १५ ॥

मुद्गल० हे पृथिवि! स्योना स्योनत्वादिगुणयुक्ता[२] भव[३]। स्योनशब्दो निर्मीर्णवाची। अनृक्षरा कण्टकरहिता निवशना निवेशस्थानभूता। सप्रथः विस्तारयुक्तम् शर्म शरणम् नः अस्मभ्यम् यच्छ हे पृथिवि! देहि ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये षष्ठो वर्गः ॥

अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विचक्र॒मे। पृ॒थि॒व्याः स॒प्त धाम॑भिः ॥ १६ ॥

अतः॑। दे॒वाः। अ॒व॒न्तु॒। नः॒। यतः॑। विष्णुः॑। वि॒ऽच॒क्र॒मे। पृ॒थि॒व्याः। स॒प्त। धाम॑ऽभिः ॥१६॥

स्कन्द० 'अतो देवा इति देवा' ( तु बृदे ३,९३ )। [४]अतो देवा इतीयमृक् देवदेवत्या। अतः देवा अवन्तु नः यतः विष्णुः विचक्रमे विक्रान्तवान्। कुतः। पृथिव्याः अवयवभूतेभ्यः सप्त धामभिः पञ्चम्यर्थे एते प्रथमातृतीये। सप्तभ्यः स्थानेभ्यो द्वीपाख्येभ्यः। सर्वतः उपनाय मानाभावदमसाकम् अपनयन्निरदर्थं। केचित्तु पृथिव्या इति पञ्चमी व्याचक्षते। सप्तेति च तृतीयार्थे प्रथमा। यतः पृथिवीतो विचक्रमे सप्तभिः धामभिः छन्दोभिर्वायुस्कन्धैर्वा, अतः अवन्तु[५] ॥ १६ ॥

वेङ्कट० अस्मात् स्थानात् अस्मान् देवा रक्षन्तु। [६]ततो योऽनर्थः उत्पद्यते तस्मादवनम्[७]। यतः विष्णुः विचक्रमे यत्र "विक्रमम् अकृत" पृथिव्याः सप्तभिः छन्दोभिः। पृथिवीमुपक्रम्य त्रीन् लोकान् विचक्रमे, त्रिभ्योऽपि लोकेभ्यो नास्मान् भयमुपगच्छत्विति ॥ १६ ॥

मुद्गल० विष्णुः परमेश्वरः सप्त धामभिः गायत्र्यादिभिः छन्दोभिः साधनभूतैः यतः पृथिव्याः यस्मात् भूप्रदेशात् विचक्रमे विशेषेण क्रमं कृतवान्। अतः पृथिव्याः सकाशात् देवाः द्योतनशीलाः नः अस्मान् अवन्तु रक्षन्तु ॥ १६ ॥

---

१ १ "स्योना पार्थिवा। शर्म शरणम् ( स्यात् स्थानमन्तरं वि[१] अ ) इति मुके। हे पृथिवि! सुखा भव। कण्टकवर्जिता निवेशनयोग्या च। देहि अस्मभ्यं सुखं गृहं वा सर्वतः पृथु। ऋक्षरं कण्टकम् वि[१] अ कु २ शोभन° वि ३ नास्ति मं[१] ४ ४ अतो देवा अस्मानवन्तु यतो विष्णुर्विक्रान्तवान्। भूम्या अवयवभूतेभ्यः सप्तभ्यः स्थानेभ्यः द्वीपाख्येभ्यः। पञ्चम्या जराभिमी। धाम स्थानम्। सर्वतः उपनायमाना असदादन अपनयन्नित्यर्थः। केचित्तु पृथिव्या इति व्याचक्षते। सप्तेति जस इति च। यस्या पृथिव्या विचक्रमे सप्तभिः छन्दोभिः वायुस्कन्धैर्वा अतः अवन्तु। पञ्चम्यास्मिन्। धाम छन्दः वि[१] अ कु ५ ५ ततोऽनर्थ वि[१] एप ६ तस्यावन° ए ७-७ विक्रमकृतं ए, विक्रम कृत अ[१] साय[१] कु

इदं विष्णुर्वि चंक्रमे त्रेधा नि दंधे पदम् । समूळ्हमस्य पांसुरे ॥ १७ ॥

इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् । सम्ऽऊळ्हम् । अस्य । पांसुरे ॥१७॥

स्कन्द० "सूक्तशेषस्तु वैष्णव" (तु. बृदे ३,९३)। सूक्तशेषा पञ्चर्चं, ता विष्णुदेवता । विष्णुश्च भगवान् वासुदेव । इदम् इति सर्वस्य प्रतिनिर्देश । सर्वम् इद विष्णु बलिबन्धनकाले वि चक्रमे विक्रान्तवान् । केन प्रकारेण । त्रेधा स्थानभेदेन त्रिप्रकार निहितवान् । पदम् आत्मीयम् । त्रिषु स्थानेषु पद कृतवान् इत्यर्थ । पृथिव्यामन्तरिक्षे दिवीत्येके । समारोहणे विष्णुपदे गयशिरसीत्यन्ये । तच्च त्रिविधम् अपि समूह्ळम् वह प्रापणे इत्येतस्यैतद्रूपम् । सम्यक् दृढ प्रापितम् । सम्यक् प्रविष्ठापितम् इत्यर्थ । अस्य स्वभूतम् । कथम् । पांसुरे पासवो यस्मिन् सन्ति स पासुर । रो मत्वर्थीय । लुप्तोपम चेद द्रष्टव्यम् । पासुर इव । यथा पासुमति देशे प्रतिष्ठापितमित्यर्थ । अस्य स्वभूत वा भवेत् तद्वदित्यर्थ । अथवा पासुशब्द पृथिवीमाह समारोहण वा तद्वत् । पद विष्णो. तत् समूढम् । विष्णुरादित्यो वा इद सर्वमहरहर्विचक्रमे । त्रेधा उदयगिरौ नभोमध्ये चास्तगिरौ च त्रिविध सम्यक् प्रतिष्ठापितमस्य पद पासुरूपदेशे इति । केचित्तु सपूर्वस्य गुहे रूपमिति समूढ छन्न नां दृश्यते इत्यर्थ । अथवा त्रेधा निदधे पदम् अग्न्यात्मना पृथिव्या वैद्युतात्मनान्तरिक्षे आदित्यात्मना दिवि । एकमेवेद ज्योतिस्त्रेधा विभक्तमिति एतत् वक्ष्यति—'तमू अकृण्वन् त्रेधा भुवे कम्' (ऋ १०,८८,१०) इति । तत्र यदन्तरिक्षे वैद्युतात्मकमस्य पद तत् समूळ्ह छन्न न दृश्यत इत्यर्थ[1] ॥ १७ ॥

वेङ्कट० इदम् त्रैलोक्यम् विष्णु वि चक्रमे । विक्रममाणश्च त्रेधा निहितवान् पदम् । तत्र यास्क - 'पृथिव्यामन्तरिक्षे दिवीति शाकपूणि । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभ' (या १२,१९) इति[2] । सङ्गतम्[3] अस्य पासुले पदे त्रैलोक्यम् ॥ १७ ॥

मुद्गल० यदा विष्णु परमेश्वर वि चक्रमे विशेषेण क्रम कृतवान् तदा त्रेधा त्रिभि प्रकारै पदम् नि दधे स्वकीय पाद प्रक्षिप्तवान् । अस्य विष्णो पांसुरे धूलियुक्ते पादस्थाने समूळ्हम् इदम् सर्वं जगत् सम्यगन्तर्भूतम् ॥ १७ ॥

---

१ १ विष्णुस्तु भगवानसङ्गता वासुदेव । स वामनच्छद्मना महाबलि बबन्ध । तत्काले प्रपञ्च विक्रान्त त्रिस्थानभेदेन निहितवान् पदम् । आत्मीय पद त्रिषु स्थानेषु कृतवान् । भुवि ख दिवि चत्यके । समारोहणे विष्णुपद गयशिरसि इत्यन्ये । निर्गुणस्य परब्रह्मणो गुणवर्णने विभ्रमन्ति लोका । न तच्चिन्त्यम् । तच्च त्रिविधम् । सम्यक् गूढ सम्यक् प्रतिष्ठापितम् अस्य विष्णो पद पासुमतीव । पासवो यस्मिन् सन्तीति मतुपि रप्रत्यय लुप्तोपम च । यथा पासुमति देश सुप्रतिष्ठापित तद्वत् अस्य स्वाय वा । पासु पृथिवी वा समारोहण वा । तत्र यत् पद विष्णोसद्धर्तु ततासूढग् । विष्णुरादित्यो वा । इद सर्वम् अहरहर्विचक्रमे । त्रेधा उदयगिरौ नभोमध्य च अस्तगिरौ च त्रिविध सम्यक् प्रतिष्ठापितम् अस्य पद पासुरूपदेशे इति । कश्चित्तु सम्पूर्वस्य गुहे रूपमिति । समूढ छन्न न दृश्यते । विष्णुरेवादित्यरूपेण लोकान् प्रकाशयति तस्य त्रैविध्यम् यथा वा । अग्निवैद्युतादित्यनाम्ना भुवि ख दिवि । एकमवेद ज्योतिस्त्रेधा विभक्तमिति मूर्धन्वान् वक्ष्यति तद् 'तमू अकृण्वन् त्रेधा' इति । तत्र यद् खे वैद्युतस्य पद तद् छन्न नित्य न दृश्यते वि[1] श कु [illegible] समूढ नास्ति साम्ब.
२. नास्ति साम्ब[1,2] कु ३ समूहलम् साम्ब[2] अ[1]

[ २३ ]

ती॒व्राः सोमा॑स॒ आ ग॑ह्या॒शीर्व॑न्तः सु॒ता इ॒मे । वायो॒ तान् प्रस्थि॑तान् पिब ॥ १ ॥

ती॒व्राः । सोमा॑सः । आ । ग॒हि॒ । आ॒शीःऽव॑न्तः । सु॒ताः । इ॒मे । वायो॒ इति॑ । तान् । प्रऽस्थि॑तान् । पि॒ब ॥ १ ॥

स्कन्द० ¹"तीव्रा सोमासो वायव्या" ( तु बृदे ३,९४ ) । 'तीव्रा सोमास' इतीयमृग् वायुदेवत्या । तीव्रा तीव्रशब्दस्तिक्तवचन । तिक्तरसा कटुरसा वा । सोमास आशीर्वन्त सोममिश्र दधि आशी तद्वन्त । सुता इमे । एतज्ज्ञात्वा आ गहि । आगत्य च हे वायो ! तान् प्रस्थितान् प्रस्थितसञ्ज्ञकान् सोमान् पिब¹ ॥ १ ॥

वेङ्कट० ²मदोत्पादनसमर्था सोमा । आगच्छ[ । आशिरेण युक्ता' इमे सुता सोमा । वायो ! तान् प्रस्थितान् पिब² ॥ १ ॥

मुद्गल० 'तीव्रा' इति चतुर्विंशत्यृच षष्ठ सूक्तम् । मेधातिथि ऋषि । 'अप्स्वन्त' इत्येषा पुर उष्णिक् । 'अप्सु मे सोम' इत्येषाऽनुष्टुप् । 'इदमाप' इत्याद्यास्तिस्रोऽनुष्टुभ । 'आप पृणीत' इत्येषा प्रतिष्ठागायत्री । शिष्टा अष्टादश गायत्र्य । आद्या वायुदेवताका । द्वितीय तृतीयके इन्द्रवायुदेवत्ताके । ³चतुर्थ्याद्यस्तिस्रो मित्रावरुणदेवत्या' । सप्तम्याद्यास्तिस्रो³ मरुद्गणविशिष्टेन्द्रदेवत्या । ⁴दशमी एकादशी द्वादशी च वैश्वदेव्य । त्रयोदशी चतुर्दशी पञ्चदशी च पूषदेवत्या⁴ । षोडश्याद्या सार्धद्वाविंशत्यन्ता अब्देवताका । 'पयस्वानग्न' इत्यर्धर्चयुक्ता चतुर्विंशी अग्निदेवताका ।

हे वायो ! इमे सोमास ऐन्द्रवायवग्रहादिरूपा सोमा सुता अभिषुता । ते च तीव्रा प्रभूतरसत्वात् तर्पयितु समर्था आशीर्वन्त आशीर्युक्ता । अतस्त्वम् आ गहि अस्मिन् कर्मण्यागच्छ । प्रस्थितान् उत्तरवेदिं प्रति आनीतान् तान् सोमान् पिब ॥ १ ॥

उ॒भा दे॒वा दि॑वि॒स्पृशे॑न्द्रवा॒यू ह॑वामहे । अ॒स्य सोम॑स्य पी॒तये॑ ॥ २ ॥

उ॒भा । दे॒वा । दि॒वि॒ऽस्पृशा॑ । इ॒न्द्र॒वा॒यू इति॑ । ह॒वा॒म॒हे॒ । अ॒स्य । सोम॑स्य । पी॒तये॑ ॥ २ ॥

स्कन्द० 'द्वचोऽन्त्यमैन्द्रवायव' ( तु बृदे ३,९४ ) । ⁵"तीव्रा सोमास' इत्यतोऽन्य समनन्तर त्र्य द्वृच इन्द्रवायुदेवत । उभौ देवौ दिविस्पृशा दिविस्पृशौ । द्युलोक गन्तारौ इत्यर्थ । इन्द्रवायू हवामहे । त्रिमर्थम् । अस्य सोमस्य पीतये⁵ ॥ २ ॥

1-1. वायव्या । तीव्रं तिक्तरसं कटुरसं वा । रसा स्वादुभ्याम्नादयुनिसवशायका । कटुरसा तिक्तरसा वा सोमा । सोममिश्रं दध्याशी तद्वन्त । सुता इमे । तदागहि । वायो तान् प्रस्थितसञ्ज्ञकानेतान् पिब वि¹ अ पु
2-2 नास्ति वि² मूको † आगच्छ मातृ मु 3-3 चतुर्थी पञ्चमी षष्ठी च मित्रावरुणदेवत्य । सप्तमी अष्टमी नवमी च मं¹, भित्रावरुण° वि 4-4 नास्ति मू¹ 5-5 स्पृष्ट मनी । उभौ देवौ गन्तारौ वा द्युलोक गन्तारौ इन्द्रवायू अस्य सोमस्य पानाय हवामहे वि¹ अ पु

वेङ्कट० [1]उभौ देवौ द्युस्थानौ† इमौ ह्वयामहे सोमपानायेति[1] ॥ २ ॥

मुद्गल० दिविस्पृशा द्युलोकवर्तिनौ उभा देवा द्वौ देवौ इन्द्रवायू हवामहे आह्वयामः । किमर्थम् । अस्य सोमस्य पीतये ॥ २ ॥

इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये । सहस्राक्षा धियस्पती ॥ ३ ॥

इन्द्रवायू इति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये । सहस्रऽअक्षा । धियः । पती इति ॥ ३ ॥

स्कन्द० [2]इन्द्रवायू मनोजुवा जुवतिर्गतिकर्मा । मनोवच्छीघ्रगामिनौ । विप्राः मेधाविनो यष्टारः स्तोतारश्च हवन्ते ऊतये सोमेन तर्पणाय पालनाय वा । सहस्राक्षा सहस्रमक्ष्णां ययोस्तौ सहस्राक्षौ । केवलस्यापि चेन्द्रस्य सहस्राक्षत्वे साहचर्यादुभयोरिन्द्रवाय्वोः सहस्राक्षत्वव्यपदेशः । धियः पती[2] कर्मणः प्रज्ञाया वा पालयितारौ स्वामिनौ वा[3] ॥ ३ ॥

वेङ्कट० 'इन्द्रवायू‡ मनोवेगौ मेधाविनः[1] हवन्ते रक्षणाय अनेकदर्शनौ कर्मपती ॥ ३ ॥

मुद्गल० विप्राः मेधाविनः ऋत्विग्यजमानाः ऊतये रक्षणार्थम् इन्द्रवायू हवन्ते आह्वयन्ति । कीदृशौ । मनोजुवा मन इव वेगयुक्तौ सहस्राक्षा सहस्रनयनयुक्तौ । यद्यपि इन्द्र एव सहस्राक्षः तथापि छत्रिन्यायेन वायुरपि तथोच्यते । धियः पती कर्मणः पालकौ ॥ ३ ॥

मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ॥ ४ ॥

मित्रम् । वयम् । हवामहे । वरुणम् । सोमऽपीतये । जज्ञाना । पूतऽदक्षसा ॥ ४ ॥

स्कन्द० 'तृचो मित्रावरुणाभ्याम्' ( द्र. बृदे ३,९४ ) । [4]तृचोऽयं मित्रावरुणदेवतः । मित्रम् वयम् हवामहे वरुणम् च । किमर्थम् । सोमपीतये । कीदृशौ । जज्ञाना जायमानावेव पूतदक्षसा शुद्धबलौ[4] ॥ ४ ॥

वेङ्कट० वयम्‡ मित्रावरुणौ प्राज्ञौ शुद्धबलौ सोमपानाय हवामहे इति ॥ ४ ॥

मुद्गल० वयम् अनुष्ठातारः सोमपीतये सोमपानार्थम् मित्रम् वरुणम् चोभौ हवामहे आह्वयामः । कीदृशौ उभौ । जज्ञाना कर्मदेशे प्रादुर्भवन्तौ पूतदक्षसा शुद्धबलौ ॥ ४ ॥

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥ ५ ॥

ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पती इति । ता । मित्रावरुणा । हुवे ॥ ५ ॥

---

१-१. नास्ति वि[1] लपं. † द्युस्थौ वि[2] साम्ब[1]. २-२. तौ मनोवत् शीघ्रगामिनौ मेधाविनो यष्टारः स्तोतारश्च हवन्ते । सोमेन तर्पणाय पालनाय वा । इन्द्र एव सहस्राक्षः । वाय्वन्यतरस्यापि साहचर्यात् तौ सहस्राक्षौ वि[1] अ कु. ३. नास्ति साम्ब. ‡ नास्ति साम्ब कु. ४-४. मित्र वरुणं च वयं हवामहे सोमपानाय जायमानावेव शुद्धबलौ वि[1] अ कु.

स्कन्द० ऋतेन उदकेन यज्ञेन वा यौ [1]ऋतावृधौ यज्ञस्योदकस्य वा वर्धयितारौ ऋतस्य यज्ञस्योदकस्य वा ज्योतिषः पती[1]। अथवा ऋतस्य ज्योतिष इति समानाधिकरणे। [2]'ऋ गतौ'[2]। सर्वत्र गतस्य रश्म्याख्यस्य ज्योतिषः पती। तौ मित्रावरुणौ हुवे ॥ ५ ॥

वेङ्कट० सत्येन यौ सत्यस्य वर्धयितारौ सत्यस्य ज्योतिषः पती तौ मित्रावरुणौ हुवे ॥ ५ ॥

मुद्गल० यौ मित्रावरुणौ ऋतेन सत्यवचनेन यजमानानुग्रहकारिणा ऋतावृधौ ऋतमवश्यभावितया सत्यं[3] कर्मफलं तस्य वर्धकौ। ऋतस्य सत्यस्य प्रशस्तस्य ज्योतिषः प्रकाशस्य पती पालकौ ता मित्रावरुणा तथाविधौ मित्रावरुणौ हुवे आह्वयामि ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये अष्टमो वर्गः ॥

## वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः ॥ ६ ॥

वरुणः। प्रऽअविता। भुवत्। मित्रः। विश्वाभिः। ऊतिऽभिः। करताम्। नः। सुऽराधसः ॥ ६ ॥

स्कन्द० [4]वरुणः प्राविता प्रकर्षेण रक्षिताऽस्माकम् भुवत् भवतु। मित्रः च विश्वाभिः ऊतिभिः सर्वैः पालनैः करताम् कुरुतां च नः अस्मान् सुराधसः सुधनान्[4] ॥ ६ ॥

वेङ्कट० वरुणः प्रकर्षेण रक्षकः भवतु मित्रः च विश्वैः पालनैः[5]। तौ अस्मान् कुरुतां च स्वन्नान्[6] ॥ ६ ॥

मुद्गल० अयम् वरुणः अस्माकम् प्राविता भुवत् प्रकर्षेण रक्षको भवतु। मित्रः च विश्वाभिः ऊतिभिः सर्वाभिः रक्षाभिः प्राविता भुवत्। तावुभावपि नः अस्मान् सुराधसः प्रभूतधनयुक्तान् करताम् कुरुताम् ॥ ६ ॥

## मरुत्वन्तं हवामह इन्द्रमा सोमपीतये। सजूर्गणेन तृम्पतु ॥ ७ ॥

मरुत्वन्तम्। हवामहे। इन्द्रम्। आ। सोमऽपीतये। सऽजूः। गणेन। तृम्पतु ॥ ७ ॥

स्कन्द० 'तमिन्द्राय मरुत्वते' (ऋ० ३,५४)। [7]यथैव मित्रावरुणाभ्यां तृच तथैवेन्द्रायाऽपि मरुत्वते तृच एव। मरुत्वन्तम् मरुद्भिः सहितम् हवामहे इन्द्रम्। आकारस्तु पदपूरणो वा हवामहे इत्यास्यातेन वा सम्बन्धयितव्यः। अर्वाचि वा अर्वाग्घवामहे इति। किमर्थम्। सोमपीतये। एतच्छाख्या सजूः जुषी प्रीतिसेवनयोः। सम्प्रीयमाणः गणेन मरुद्गणेन सह तृम्पतु तृप्यतु[7] ॥ ७ ॥

---

१-१. ऋतस्य यज्ञस्य वा वर्धयितारौ। तयोश्च तेजसश्च पती वि॰ भ॰ कु. २-२. नास्ति मा॰ १ मरुत्वन्तम् वि॰ मै. ४. वरुणो मित्रश्च अस्माकं प्रकर्षेण रक्षिता भवतु। सर्वैः पालनैः कुरुताम् अस्मान् सुधनान् वि॰ भ॰ कु. ५. पालनैः म॰ स्माकम्॰ भ॰ वि॰. ६. स्वश्वौ स॰ वि॰. ७-७ नास्ति वि॰ ... हवामहे। आ अस्मिन् वा अर्वाङ् हवामहे। मैत्रीयमाणो मरुद्गणेन तृप्यतु। जुषी प्रीतिसेवनयोः वि॰ भ॰ कु.

वेङ्कट० मरुद्भिः सहितम् इन्द्रम् आ ह्वयामहे सोमपानाय । सः[१] मरुद्गणेन सहितः सोमेन तृप्यतु ॥ ७ ॥

मुद्गल० मरुत्वन्तम् मरुद्भिर्युक्तम् इन्द्रम् सोमपीतये सोमपानाय आ हवामहे आह्वयामः । स चेन्द्रः गणेन मरुत्समूहेन सजूः सह तृम्पतु तृप्तो भवतु ॥ ७ ॥

इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ ८ ॥

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवम् ॥ ८ ॥

स्कन्द० [२]ज्येष्ठशब्दः प्रधानवचनः । इन्द्रः प्रधानभूतो येषां त इन्द्रज्येष्ठाः । हे इन्द्रज्येष्ठाः मरुद्गणाः ! सप्तसप्तका मरुतां गणाः, तदपेक्षमेतद्बहुवचनम् । देवासः पूषरातयः विश्वे सर्वे मम श्रुत शृणुत हवम् आह्वानम्[२] ॥ ८ ॥

वेङ्कट० इन्द्रनेतृकाः पूषदातिकाः[३] मरुतः देवाः । ते सर्वे मम शृणुत ह्वानम्[४] ॥ ८ ॥

मुद्गल० हे देवासः ! इन्द्रमरुद्रूपाः विश्वे सर्वे यूयम् मम हवम् आह्वानम् श्रुत शृणुत । कीदृशाः । इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः मरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्यो देवो रातिर्दाता येषाम् इन्द्रमरुतां ते ॥ ८ ॥

हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ॥ ९ ॥

हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा । मा । नः । दुःऽशंसः । ईशत ॥ ९ ॥

स्कन्द० [५]हत वृत्रम् असुरमस्मच्छत्रुं वा हे सुदानवः ! शोभनदाना मरुतः ! इन्द्रेण सहयोगलक्षणैषा तृतीया । इन्द्रेण सह । कीदृशेन । सहसा बलनामैतत् (द्र. निघ २,९) । सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवता युजा सहायेन । मा च नः अस्माकं युष्मत्प्रसादेन दुःशंसः दुराशंसः क्रूराभिप्रायः ईशत †ईशो भवेत्†[५] ॥ ९ ॥

वेङ्कट० हत वृत्रासुरं सुदानाः ! इन्द्रेण सहायेन बलवता सह । मा अस्माकं दुर्वचनो वृत्रः ईशिष्ट ॥ ९ ॥

मुद्गल० हे सुदानवः ! शोभनदानयुक्ता मरुद्गणाः ! सहसा बलवता युजा योग्येन इन्द्रेण सह वृत्रम् शत्रुम् हत नाशयत । दुःशंसः दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रः नः अस्मान् प्रति मा ईशत समर्थो मा भूत् ॥ ९ ॥

विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥ १० ॥

विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥ १० ॥

---

१. नास्ति साम्ब कु वि[२]. २-२. हे इन्द्रप्रधाना मरुद्गणाः सप्तसप्तकाः देवाः पूषरातयः सर्वे मे शृणुत आह्वानम् वि[१] अ कु. ३. पूषरातिकाः क शोध°. ४. आह्वानम् साम्ब कु. ५-५. हत असुरं मेघमस्मच्छत्रुं वा शोभनदानाः मरुत इन्द्रेण बलवता सहायेन । माऽस्माकं युष्मत्प्रसादेन क्रूराभिप्राय ईशान । सहः अन्तर्णीतमत्वर्थम् । तद्वान् । युक् सहायः । दुराशंसः पुरुषः मा अस्मदीशो भवेत् वि[१] अ कु. †-† नास्ति साम्ब[१,२].

स्कन्द० 'तृचो विशेषा देवानाम्' ( बृदे ३,५५ ) । अत्र चाद्य पादो विश्वलिङ्ग शिष्ट मारुतम्। वक्ष्यति हि—

'बहुशस्तु वैश्वदेवेषु सन्त्यृच पादार्धर्चा द्वैपदास्तैवदाश्च ।

द्विप्रधाना अपि चैकप्रधाना बहुप्रधाना अपि वैश्वदेवे'[1] ॥ ( बृदे ४,८ ) इति ।

विश्वान् देवान् हवामहे एतावदेक वाक्यम्, पर तु वाक्यान्तरम् । मरुता [2]विश्वैर्देवै सह विशेषणविशेष्यभावस्य समुच्चयस्य चासम्भवात् साकाङ्क्षत्वाच्च परस्मिन् वाक्ये हवामहे इति पूर्वाद् वाक्यात् क्रियापदमनुषक्तव्यम् । मरुत हवामहे । किमर्थम् । सोमपीतये। उग्रा हि हिशब्दो यस्मादर्थे । यस्मादुग्रा अप्रसह्या शत्रुभि । पृश्निमातर पृश्निरिति द्युनाम। द्यौर्माता येषा मरुता ते पृश्निमातर । दिव पुत्रा इत्यर्थ [3] ॥ १० ॥

वेङ्कट० वैश्वदेवसूच उक्त । मरुत्सु च विश्वशब्दो दृश्यते । विश्वान् देवान् मरुत [4] च सोमपानाय हवामहे । उद्गूर्णा हि पृश्निमातर '[5]पृश्नियै वै[6] पयसो मरुतो जाता ' ( तै २,२,११,४ ) इति ब्राह्मणम् ॥ १० ॥

मुद्गल० मरुत मरुत्संज्ञकान् विश्वान् सर्वान् देवान् सोमपीतये हवामहे सोमपानार्थम् आह्वयामहे। ते[7] च मरुत उग्रा शत्रुभिरसह्यबला पृश्निमातर पृश्नेर्नानावर्णयुक्ताया भूमे पुत्रा । हिशब्द प्रसिद्धार्थे ॥ १० ॥

इति प्रथमाष्टके द्वितीयाऽध्याये नवमो वर्ग ॥

## जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥ ११ ॥

जयताम्ऽइव । तन्यतु । मरुताम् । एति । धृष्णुऽया । यत् । शुभम् । याथन । नर ॥ ११ ॥

स्कन्द० [8]राज्ञा सङ्ग्रामम् जयताम् इव तन्यतु गर्जितशब्दो युष्माकम् मरुताम् स्वभूत एति गच्छति श्रोत्रदेशम् । श्रूयत इत्यर्थ । कीदृश । धृष्णुया प्रथमैकवचनस्याय याजादेश । धृष्णु अभिभविता । महान् गम्भीरश्चेत्यर्थ । कदा । उच्यते । यत् यदा शुभम् उदकनामैतत् (द्र निघ १,२) । मेघस्थमुदकं प्रति याथन गच्छथ । अथवा शुभशब्द शोभनपर्याय क्रियाविशेषणम् । यदा शोभन गच्छथ हे नर । मनुष्याकृतय [9] ॥ ११ ॥

---

1 देवा बृदे 2 2 विशेषा च विशेषणविशेष्यत्वं न विद्यते । न समुच्चयश्च । तस्मात् साकाङ्क्षत्वात् पूर्वस्माद्वाक्यादयाहार्य मरुतो हवामहे इति वक्तव्यम् । सोमपानाय । यस्मादुग्रगणाम् अप्रसह्या । दिव पुत्रा मरुत पृश्निर्द्यौ माता येषा ते पृश्निमातरो मरुत वि[1] अ कु 3 नास्ति साम्य तु 4 4 पृश्निर्वै पय साम्य कु, पृश्नि अ[1] 5 के वि 8-8. मरुतां गर्जितशब्द संग्राम जयतां राज्ञा तन्यतु गर्जितशब्द इव श्रोत्रदेशम् एति । धृष्णु सौत्र । 'सुपाम्' (पा ७,१,३९) इति सूत्र । तार्ष्टीम्यादिषु क्नुप्रत्यय (पा ३,२,१३६-१४०) । धृष्णुरभिभविता महान् गम्भीरश्च । यदा मेघस्थमुदकं प्रति गच्छथ तदा तन्यतु शुभ शोभनं वा । यदा शोभनं गच्छथ (?) । हे मनुष्याकार वि[1] अ कु

वेङ्कट० सैनिकानामिव शब्दः मरुताम् शब्दः[1] गच्छति धृष्णुः[2] यदा[3] यूयं कल्याणं गच्छथ[4] नेतारः ! ॥ ११ ॥

मुद्गल० मरुताम् देवानाम् तन्यतुः शब्दः धृष्णुया धार्ष्ट्ययुक्तः सन् एति गच्छति । केषामिव । जयताम् विजययुक्तानां शूराणां भटानाम् इव । हे नरः ! नेतारो मरुतः ! यूयम् यत् यदा शुभम् देवयजनम् याथन प्राप्नुथ तदा युष्मदीयः[5] शब्दो गच्छतीति पूर्वत्रान्वयः ॥ ११ ॥

हस्काराद् विद्युतस्पर्यतो जाता अवन्तु नः । मरुतो मृळयन्तु नः ॥ १२ ॥

हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवन्तु । नः । मरुतः । मृळयन्तु । नः ॥ १२ ॥

स्कन्द० [6]आर्तस्य पुंसः हशब्दोच्चारणं हस्कारः । तस्माद् हस्कारात् । विद्युतः पर्यतः परिशब्द उपरिभावे । विद्युत उपर्यस्या जाताः जन्मात्र व्यवस्थानमभिप्रेतम् । व्यवस्थिताः विद्युतमधिष्ठायेत्यर्थः । अवन्तु वृष्टिप्रदानेन पालयन्तु नः अस्मान् । यथा विषादनिमित्तार्तिप्रतिपत्त्यर्थं हशब्दं नोच्चारयामः तथा कुर्वन्तु इत्यर्थः । के । मरुतः मृळयन्तु च नः अस्मान्[6] ॥ १२ ॥

वेङ्कट० अस्मादन्तरिक्षात् जाताः मरुतः विद्योतनानन्तरं [7]वृष्टप्रभावजनितात् हस्कारात्[7] अस्मान् रक्षन्तु । मरुतः सुखयन्तु अस्मानिति ॥ १२ ॥

मुद्गल० हस्कारात् दीप्तिकरात् विद्युतः [8]विशेषेण दीप्यमानात्[8] अतः अन्तरिक्षात् परि जाताः सर्वत उत्पन्नाः मरुतः नः अस्मान् [9]अवन्तु रक्षन्तु । तथाविधा मरुतः नः अस्मान्[9] मृळयन्तु सुखयन्तु ॥१२॥

आ पूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् ॥ १३ ॥

आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः । आ । अज । नष्टम् । यथा । पशुम् ॥ १३ ॥

स्कन्द० 'पूष्ण आघृणये तृचः' ( बृदे ३,९५ ) । [10]पूष्ण आघृणिगुणकाय तृचः । आ इत्युपसर्गः अज इत्याख्यातेन सम्बन्धयितव्यः । हे पूषन् ! चित्रबर्हिषम् विचित्रं पूज्यं वा बर्हिर्यस्य स चित्रबर्हिः सोमः तं चित्रबर्हिषम् । आघृणे ! घृ क्षरणदीप्त्योः । क्षरिता घृणिः दध्नः पूर्णो दृतिः स कक्षे रथे वा यस्य स आघृणिः पूषा[10] । वक्ष्यति हि—'दृतेरिव तेऽवृकमस्तु

---

1. नास्ति साम्ब[1,2] कु. 2. धृष्णुयः वि[1]. 3. यथा छ वि[1,2]. 4. गच्छथ साम्ब कु. 5. त्वदीयः मूको. 6-6. यदा दुर्भिक्षार्तस्य पुंसः आर्तिप्रतिपत्त्यर्थं हशब्दोच्चारणम् । स हस्कारः । तदा विद्युतः परि विद्युतो जाताः जन्म अत्र व्यवस्थाने । विद्युतमधिष्ठाय वृष्टिप्रदानेन दुर्भिक्षात् दूरीकृत्य अस्मानवन्तु । यथा च वय हस्कारं त्यक्त्वा प्रमोदलक्षणाह्लादशब्दमुच्चारयामः तथा कुर्वन्तु । के । मरुतः । सुखयन्तु च अस्मान् वि[1] अ कु. 7-7. °जनितान्धकारात् साम्ब[1]. 8-8. विशेषदीप्तिमा° मूको. 9-9. नास्ति वि मै[2]. 10-10. हे पूषन् आघृणे । घृ क्षरणदीप्त्योः । क्षरिता घृणिः । दध्ना पूर्णो दृतिः । सा कक्षे रथे वा यस्य स आघृणिः वि[1] अ कु.

सत्यम्' ( ऋ ६,४८,१८ ) इति । तस्य सम्बोधनम् । 'अथवा दीप्तिर्घृणि सा आगता यस्य स आघृणि उपजातदीप्तिः । हे आघृणे ! धरुणम् धारयितारम् दिवः तात्स्थ्यात् ताच्छब्द्यम् मञ्चा क्रोशन्तीति यथा । द्युनिवासिनां देवानाम् । सोमलक्षणेनान्नेन देवा धार्यन्ते । अथवा 'धरुणम्' (निघ १,११ ) इत्युदकनाम । चित्रबर्हिषं च सोममुदकं दिवः आ आ अज अजिरत्र सामर्थ्याद्गत्यर्थं । उपसर्गाभ्यासाच्च तत्सम्बन्धिनः क्रियापदस्याभ्यासः । आज आज । अस्मदर्थं पुनः पुनरागमयेत्यर्थः । कथम् । नष्टम् यथा पशुम् यथा प्रनष्टं पशुमज गां वा त्वमेव गमयसि पशूनां रक्षितृत्वात्, लौकिको वा पशुपालः तद्वत्' ॥ १३ ॥

वेङ्कट० आनय पूषन् ! सोमं पणिभिरपहृतम्' आगतदीप्ते' ! धारक द्युलोकस्य । यथा' नष्टम् पशुम् त्वमानयसि ॥ १३ ॥

मुद्गल० हे पूषन् ! चित्रबर्हिषम् विचित्रैर्दर्भैर्युक्तम् धरुणम् यागस्य धारकं सोमम् दिवः आ द्युलोकादाहरेति शेषः । पूषा विशेष्यते । आघृणे ! आगतदीप्तियुक्त ! । तत्र दृष्टान्तः । हे अज ! गमनशील ! यथा लोके नष्टम् पशुम् महारण्यादान्वीक्ष्य कश्चिदाहरति तद्वत् ॥ १३ ॥

## पूषा राजा॑नमाघृ॑णि॒रप॑गूळ्हं॒ गुहा॑ हि॒तम् । अवि॑न्दच्चि॒त्रब॑र्हिषम् ॥ १४ ॥

पूषा । राजा॑नम् । आघृ॑णिः । अप॑ऽगूळ्हम् । गुहा॑ । हि॒तम् । अवि॑न्दत् । चि॒त्रऽब॑र्हिषम् ॥ १४ ॥

स्कन्द० अत्रेतिहासमाचक्षते'—'असुराः सोमं राजानं दीयमानमभेहेत्वात् अपहृत्य गुहायां न्यदधुः । तं पर्येषमाणा अन्ये देवा नाविन्दन् । पूषा त्वविन्दत् । स तं गृहीत्वा दिवमानयत्' इति । 'तदेतदिहोच्यते—पूषा राजानम् आघृणिः अपगूळ्हम् निगूढम् आच्छादितम् गुहा गुहायाम् हितम् निहितमसुरैः अविन्दत् लब्धवान् चित्रबर्हिषम्' ॥ १४ ॥

वेङ्कट० पूषा सोमम् आघृणिः असुरैः अपगूळ्हम्' गुहायां निहितम् अविन्दत् । यस्मै 'चित्रं बर्हिः' स्तीर्यते ॥ १४ ॥

मुद्गल० आघृणिः पूषा राजानम् सोमम् अविन्दत् अलभत । कीदृशम् । अपगूळ्हम् अपावृतम् गुहा हितम् गुहासदृशे दुर्गमे द्युलोके स्थितम् तथा चित्रबर्हिषम् ॥ १४ ॥

## उ॒तो स मह्य॒मिन्दु॑भि॒ः षड् यु॒क्ताँ अ॑नु॒सेषि॑धत् । गोभि॒र्यवं॒ न च॑र्कृषत् ॥ १५ ॥

उ॒तो इति॑ । सः । मह्य॑म् । इन्दु॑ऽभिः । षट् । यु॒क्तान् । अ॒नु॒ऽसेसि॑धत् । गोभिः॑ । यव॑म् । न । च॒र्कृ॒षत् ॥ १५ ॥

१ १. दीप्तिर्वा घृणि । सा आगता यस्य स वा । उपजातदीप्ति । चित्र विचित्र पूज्यं वा बर्हिः यस्य सोमस्य तं चित्रबर्हिषम् दिवः मञ्चा क्रोशन्तीव तात्स्थ्यात् ताच्छब्द्यम् । द्युनिवासिना देवाना धारयितारम् । आज आज । आजो क्रियायाः अभ्यावृत्तिरिति यावत्, क्रियाया अपि क्रियाम् । धरुणमुदकं वा । चित्रबर्हिषं च सोममुदकं च द्युलोकात् पुनः पुनः अस्मदर्थमागमय । अजिरत्र अ गतिक्षेपणयो । यथा नष्टम् अजं गां वा त्वमेवागमयसि पशूनां रक्षितृत्वात् । लौकिकः पशुपालो वा तद्वत् वि' मु कु. १ कम् सा॰क'. २ पणिभिरप॰ सा॰क', २ मं' वि'. ३. आगता॰ सा॰म' वि'. ४ नास्ति वि'. ५ नास्ति मं'. ६ अत्रेतिहास वि' म कु. ७-७ नास्त्यामुष्यते । पूषा राजानमाघृणिरपगूळ्हं गुहायां देवेभ्यः । निहितम् असुरैः लब्धवान् । विचित्रब्रह्मबर्हिषम् वि' म कु. ८ अपगूढं मं'. ९ निहितं वि'. चित्रबर्हि गाम्ब्र तु चित्रबर्हि मं'.

स्कन्द० [1]'उतो इत्युतशब्दस्योना सहैकादेशः । उत उ । उ इत्युञ् चायं नाम्ना वा सह कृतैकादेशः'[1] — 'एषो उषाः' ( ऋ १,४६,१ ), 'सो चिन्नु' ( ऋ १,१९१,११ ), 'चत्तो इतः' ( ऋ १०,१५५,२ ) इति यथा । आख्यातेन वा सह—'जनिष्टो अपः' ( ऋ १०,९५,१० ) [2]इति यथा । उपसर्गेण वा सह—'प्रो आरत' ( ऋ १,३९,५ ), 'उपो रथेषु' ( ऋ १,३९,६ ), 'अपो सु म्यक्ष' ( ऋ २,२८,६ ) इति यथा । निपातेन वा सह—'अथो वयम्' ( ऋ १,१६४,४० ), 'नो वयम्' ( ऋ १,१९१,१० ), 'उतो न्वस्य' ( ऋ ८,७२,६ ), 'मो ष्वन्यन' ( ऋ ७,१९,५ ) इति यथा । स सर्वः पदपूरणः अपृथगर्थत्वाच्च कृतैकादेशः । उञ् पदकारेण पूर्वेण पदेनैकी-कृत्यैव पठितः[2] । इतिकरणोपादानात्तु प्रगृह्यतां दर्शयता दर्शितो बोद्धव्यः इति । सः पूषा महाम् [3]मदर्थम् इन्दुभिः द्वितीयार्थे तृतीयैषा । इन्दून् सोमान् षट् युक्तान् [†]षड्ऋतून् युक्तान् संवत्सरगमने नियुक्तान्[†] । संवत्सरस्य गमयितॄनित्यर्थः । अथवा युक्तान् यान् यान् यो यादृशः साधयितव्यः तं तादृशमेव अनुसेषिधत् शवन्तमेतत् नाख्यातम् अननुदात्तत्वात् । आनुपूर्व्येण साधयन् । गोभिः यवम् न गोशब्दोऽत्र बलीवर्देषु वर्तते । यवशब्दो धान्य-मात्रोपलक्षणार्थः । यथा कश्चित् कर्षको बलीवर्दैर्यवादिधान्यं कुर्यात् तद्वत् । चर्कृषत् करोतेर्यङ्लुगन्तस्येदं रूपं न कृषतेः । पुनःपुनः करोतु सोमयागान् इत्यर्थः[3] ॥ १५ ॥

वेङ्कट० अपि च सः पूषा महाम् पणिभ्य आहृतैः[4] इन्दुभिः षट् ऋतून् यथापूर्वम् युक्तान्[5] अनुक्रमेण रुन्धन् यथा यवान् भूम्यामुप्तान् प्ररोहार्थं षड्गवादिना हलेन कृषन्ति तद्वदनुक्रमेण पुनःपुनर्ऋतून् प्रवर्तयत्वमरणायेति[6] ॥ १५ ॥

मुद्गल० उतो अपि च सः पूषा मह्यम् यजमानाय इन्दुभिः यागहेतुभिः सोमैः युक्तान् षट् [7]वसन्तादीन् ऋतून्[7] अनुसेषिधत् अनुक्रमेण पुनःपुनर्नयन् वर्तत इति शेषः । दृष्टान्तः । गोभिः बलीवर्दैः यवम्[8] न चर्कृषत् यथा यवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनः कृषति तद्वत् ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये दशमो वर्गः ॥

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥ १६ ॥

अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् । पृञ्चतीः । मधुना । पयः ॥ १६ ॥

---

१-१. उतशब्दस्योना सह एकादेशः उतो इति । उञ्द्वयं आनात् सहकृतैकादेशः वि[१] अ कु साम्ब[१]. २-२. उपसर्गेण प्रो अपो ओ उपो । निपातेन अथो नो उतो मो इति । सर्वः पादपूरणः अपृथगर्थत्वाच्च । कृतैकादेशः उञ् पदकारेण एकीकृत्यैव पठितः वि[१] अ कु. ३-३. इन्दून् रसान् भिन्न् । सोमान् षड्ऋतून् युक्तान् संवत्सरगमने नियुक्तान् । तस्य गमयितॄन् । अथवा युक्तान् यान् यान् यो यादृशः साधयितव्यः तं तादृशमेवानुपूर्व्येण साधयन् शवन्तमेतत् नाख्यातम् अननुदात्तत्वात् । गोभिः गोशब्दः अत्र बलीवर्देषु वर्तते । यवशब्दः धान्यमात्रो-पलक्षणार्थः । यथा कश्चित्कर्षकः बलीवर्दैः यवादिधान्यं कुर्यात् तत्पुनःपुनः करोतु । करोतेर्यङ्लुगन्तः न कृषतेः । सोमयागान् उपनयतु स महामिन्दून् ऋतूनिव अनुसाधयन् वि[१] अ कु. †-† नास्ति साम्ब. ४. आहुतैरि° साम्ब वि[१] अ[१]. ५. युक्तम् वि[१] अ[१]. ६. °वर्तयत्वम° ल वि[१,२]. ७-७. °न्तावृ° मै[१]. ८. नास्ति वि.

स्कन्द० 'अर्वाष्टमा अपा ज्ञेया' (बृदे ३,९७)। [1]'अर्धाष्टमा ऋच अब्देवत्या ज्ञेया । अम्बि शब्दोऽम्बापर्याय । अम्बा मातृभूता आप यन्ति यज्ञ प्रति गच्छन्ति नियतै अध्वभि मार्गै । जामय भगिनीस्थानीयाश्च अध्वरीयताम् यज्ञकामानाम् पृञ्चती सम्पर्चयन्त्य स्वावयवभूतेन मधुना 'मधु (निघ १,१२) इत्युदकनाम । पयसीवर्थैकधनाख्येनोदकेन पय सोमलक्षणमुदकम्[1] ॥ १६ ॥

वेङ्कट० अत्र शाट्यायनकम् । तस्यैव श्लोक —

न ता अन्य प्रतरति नैना[2] विष्णातुमर्हति । वहन्त्यस्मै सर्वास्ता[3] मधु क्षीर घृत दधि ॥

'षट्सहस्राण्यम्बय इति । [4]'इमा ह वैता अम्बयो नामेत्यादि' (छ ब्रा ९८,२)।

ता[4] अम्बय मार्गै[5] गच्छन्ति यज्ञमिच्छता जामिस्थानीया मधुरेण रसेन प्रत्यक्षमुदक सम्पृञ्चत्य ॥ १६ ॥

मुद्गल० अध्वरीयताम् अध्वरम् आत्मन इच्छतामस्माकम् अम्बय मातृस्थानीया आप[6] अध्वभि देवयजनमार्गै यन्ति गच्छन्ति । कीदृश्य आप । जामय हितकारिण्य बन्धव तथा मधुना माधुर्यरसेन युक्तम् पय पृञ्चती गवादिषु योजयन्त्य ॥ १६ ॥

अ॒मूर्या उप॒ सूर्ये॒ याभि॑र्वा॒ सूर्यः॑ स॒ह । ता नो॑ हिन्वन्त्वध्व॒रम् ॥ १७ ॥

अ॒मूः । याः । उप॑ । सूर्ये॑ । याभिः॑ । वा॒ । सूर्यः॑ । स॒ह । ताः । नः॒ । हि॒न्व॒न्तु॒ । अ॒ध्व॒रम् ॥ १७ ॥

स्कन्द० [7]अमू इमा या आप उप सूर्ये सूर्यसमीपे । याभि वा वाशब्द समुच्चये । याभिश्च सूर्य सह याश्च सूर्येणैकस्थाना । आदित्यमण्डलस्था इत्यर्थ । ता न हिन्वन्तु हि गतौ वृद्धौ च । गच्छन्तु वर्धयन्तु वा अध्वरम्[7] ॥ १७ ॥

वेङ्कट० अमू या 'उप भवन्ति' सूर्य । याभि वा सूर्य सह भवति । ता अस्माक यज्ञ गच्छन्तु ॥ १७ ॥

मुद्गल० अमू एता सूर्य उप समीपे या अवस्थिता आप । वा अथवा सूर्य याभि अद्भि सह वर्तते पूर्वत्र अपा प्राधान्यम् उत्तरत्र सूर्यस्येति विशेष । ता तादृश्य आप न अस्मदीयम् अध्वरम् यागम् हिन्वन्तु प्रीणयन्तु ॥ १७ ॥

अ॒पो दे॒वीरुप॑ ह्वये॒ यत्र॒ गावः॒ पिब॑न्ति नः । सिन्धु॑भ्यः॒ कर्त्वं॑ ह॒विः ॥ १८ ॥

अ॒पः । दे॒वीः । उप॑ । ह्व॒ये॒ । यत्र॑ । गावः॑ । पिब॑न्ति । नः॒ । सिन्धु॑ऽभ्यः । कर्त्व॑म् । ह॒विः ॥ १८ ॥

---

1-1 मन्विरत्था मातृभूता आप प्रतिगच्छन्ति यज्ञं नियतैर्मार्गैः । अध्वरीयता जामय यज्ञकामाना भगिनी स्थानीयाश्च मार्गमाय वस्त्रावर्धैकधनाख्येन मधुना उदकेन सोमलक्षणमुदकम् वि[1] अ मु २ नैना मु नैनं साम्ब[3], ३ सर्वा साम्ब ४-४ इमाह वैता अम्बयोनामेत्यादिका साम्ब, [5]नामेत्यादिना साम्ब[1] मु अ[1] ५ मार्ग साम्ब मु ६ आप ता आप अ[1] ७-७ अमू न अध्वरं हिन्वन्तु । या सूर्यसमीपे याभिश्च सूर्यः । सूर्येणैकस्था आदित्यमण्डलस्था । ता अस्माकं यज्ञं गच्छन्तु वर्धयन्तु वा । हि गतौ वृद्धौ च वि[1] अ मु ९८. उक्तानि साम्ब[1] वि[1] अ[1] ९ नास्ति एर

स्कन्द० अपः देवीः अहम् उप ह्वये । [1]यत्र द्वितीयार्थे सप्तम्येषा । याः गावः पिबन्ति नः । किं कारणम् । यस्मात् सिन्धुभ्यः स्यन्दू प्रस्रवणे इत्यस्यैतद्रूपम् । तादर्थ्ये चतुर्थी । स्यन्दित्रीणामपामर्थाय । कर्त्वम् कृत्यार्थेऽयं त्वप्रत्ययः । सर्वेण कर्तव्यम् हविः । अथवा सिन्धुभ्य इति पञ्चमी । तच्छब्देऽध्याहृत्य वाक्यशेषः । यस्मात् स्यन्दित्रीभ्यः वसतीवर्यैकधनालक्षणम् एकदेशमादाय कर्तव्यं सोमलक्षणं हविः[1] ॥ १८ ॥

वेङ्कट० अपः देवीः उप ह्वये । यासु गावः पिबन्ति अस्माकम् । ताभ्यो हि कर्तव्यमस्माभिः हविः ॥ १८ ॥

मुद्गल० नः अस्मदीयाः गावः यत्र यासु अप्सु पिबन्ति पानं कुर्वन्ति ताः अपः देवीः उप ह्वये आह्वयामि । सिन्धुभ्यः स्यन्दनशीलाभ्यः अद्भ्यः देवताभ्यः हविः कर्त्वम् अस्माभिः कर्तव्यम् ॥ १८॥

अप्स्व१॒॑न्तर॒मृत॑म॒प्सु भे॑ष॒जम॒पामु॒त प्रश॑स्तये । देवा॒ भव॑त वा॒जिनः॑ ॥ १९ ॥

अ॒प्ऽसु । अ॒न्तः । अ॒मृत॑म् । अ॒प्ऽसु । भे॒ष॒जम् । अ॒पाम् । उ॒त । प्रऽश॑स्तये । देवाः॑ । भव॑त । वा॒जिनः॑ ॥ १९॥

स्कन्द० अप्सु[2] अपां मध्ये अमृतम् अप्सु एव भेषजम् [3]'भेषजम्' ( निघ ३,६ ) इति सुखनाम । व्याधेर्वाऽपनोदकं भेषजमुच्यते । एतज्ज्ञात्वा अपाम् उत प्रशस्तये उतशब्दः पदपूरणः एवार्थे वा । अपामेव प्रशंसनाय स्तुतये । हे देवाः ! हविषो दातार ऋत्विजः ! भवत यूयम् वाजिनः अन्नेन तद्वन्तः । अपः स्तोतुं हविरपकल्पयतेत्यर्थः[3] ॥ १९ ॥

वेङ्कट० अपाम् अन्तः अमृतम् । 'अमृतं वा आपस्तस्माद्द्भिरवतान्तमभिषिञ्चन्ति (तै ५,६,२,१-२) इति ब्राह्मणम् । अप्सु एव भेषजम् विविधौषधिषु[4] प्रादुर्भूतम् । अपाम् स्तोत्राय इन्द्रियाणि ! बलयुक्तानि भवत[5] ॥ १९ ॥

मुद्गल० अप्सु जलेषु अन्तः मध्ये अमृतम् पीयूषं वर्तते । तस्य अविकारत्वात् । तथैव अप्सु भेषजम् औषधं वर्तते । क्षुद्रोगनिवर्तकस्य अन्नस्य अप्कार्यत्वात् । उत अपि च तादृशीनाम् अपाम् देवतानाम् प्रशस्तये प्रशंसार्थं हे देवाः ! ऋत्विगादयः ब्राह्मणाः ! वाजिनः वेगवन्तः भवत । शीघ्रं स्तुतिं कुरुतेत्यर्थः ॥ १९ ॥

अ॒प्सु मे॒ सोमो॑ अब्रवीद॒न्तर्विश्वा॑नि भेष॒जा । अ॒ग्निं च॑ वि॒श्वश॑म्भुव॒माप॑श्च वि॒श्वभे॑षजीः ॥२०॥

अ॒प्ऽसु । मे॒ । सोमः॑ । अ॒ब्र॒वी॒त् । अ॒न्तः । विश्वा॑नि । भे॒ष॒जा ।

अ॒ग्निम् । च॒ । वि॒श्वऽश॑म्भुवम् । आपः॑ । च॒ । वि॒श्वऽभे॑षजीः ॥ २० ॥

---

१-१. याः गावः पिबन्ति नः । या आपः । तासि त्रत् । स्यन्दन्तीभ्यः अद्भ्यः कर्तव्यं हविः । तासाम् अर्थाय । कृत्यार्थे । पञ्चमी ल्यप् वा । स्यन्दन्तीभ्यः वसतीवर्यैकधनाभ्यः एकदेशमादाय कर्तव्यं सोमलक्षण हविः वि[1] अ कु. २. नास्ति साम्ब. ३-३. व्याध्यपनयकं सुखम् । तद् ज्ञात्वा तासामपामेव प्रशंसनाय हे देवाः यूयं हविर्लक्षणान्नेन तद्वन्तो भवत । अपः स्तोतुं हविरपकल्पयत 'वाजो यर्चेः सु आत्मन्' इत्यन्नम् । भेषजं व्याध्यपनोदकत्वात् सुखमपठितमपि वि[1] अ कु. ४. °षधीषु वि[1] साम्ब कु. ५. भवन्ति ल; भवतः वि[2] लपं.

स्कन्द० अप्सु[1] [2]अपां मध्ये सर्वाणि भेषजानीति मह्यम् सोमः कथितवान्[2] । [3]न च भेषजान्येव केवलानि। किन्तर्हि । अग्निम् च वैद्युताख्यम् । कीदृशम् । विश्वशम्भुवम् भवतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । सर्वप्राणिनां सुखस्य भावयितारम् उत्पादयितारम् । आपः च विश्वभेषजी[3] स्वयमप्याप सर्वस्य भेषजभूताः ॥ २० ॥

वेङ्कट० ओषधीशः सोमः अपाम् अन्तः विश्वानि भेषजानि सन्तीति माम्[4] अब्रवीत्, अग्निम् च सर्वस्य सुखस्य भावयितारम् अप्सु स्थितम् । स्वरूपेण चोदकानि विश्वभेषजानि उवाच ॥ २० ॥

मुद्गल० अप्सु जलेषु अन्तः मध्ये विश्वानि भेषजा सर्वाण्यौषधानि सन्तीति मे मह्यं मन्त्रदर्शिने मुनये सोमः देवः अब्रवीत् । [5]तथा विश्वशंभुवम् सर्वस्य जगतः सुखकरम् एतन्नामकम् अग्निम् च अप्सु वर्तमानं सोमोऽब्रवीत्[5] । आपः च विश्वभेषजीः ॥ २० ॥

इति प्रथमाष्टके द्वितीयाध्याये एकादशो वर्गः ॥

आपः॑ पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒ ३ मम॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ २१ ॥

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ २१ ॥

स्कन्द० [6]हे आपः ! पृणीत पृ पालनपूरणयोः । पालयतात्मान्तर्गतम् भेषजम् । कीदृशम् । वरूथम् वरणीयम् । किमर्थम् । तन्वे तादर्थ्ये एषा चतुर्थी । शरीरस्यार्थाय । कस्य । मम मच्छरीरं भेषजयितुमित्यर्थः । अथवा सम्प्रदानचतुर्थीश्रुतेर्दानार्थ एव पृणातिः 'पृणीयादिन्नाधमानाय' (ऋ १०,११७,५) इति यथा । दत्त भेषजं शरीराय मे । न च केवलम् । किन्तर्हि । ज्योक् च सूर्यम् दृशे ज्योगिति निपातश्चिरवचनः । चिरं सूर्यं द्रष्टुं पृणीत । किम् । सामर्थ्याच्चक्षुः । तेन हि सूर्यश्चिरं दृश्यते । अथवा सूर्यमिति पृणातेरेव कर्म न दृशेः । सूर्यं च पृणीत चिरं द्रष्टुमिति[6] । एतदुक्तं भवति—शरीरभेषजं च मे दत्त । अविकलेन्द्रियतां च चिरं सूर्यस्य सन्दर्शनायेति ॥ २१ ॥

वेङ्कट० आपः ! प्रयच्छत भेषजम् उपद्रवाणाम् [7]वारकम् रक्षाभूतम् मम शरीरस्य[7] । चिरं च सूर्यम् मां द्रष्टुं[8] कुरुत ॥ २१ ॥

मुद्गल० हे आपः ! मम तन्वे शरीरार्थम् वरूथम्[9] रोगनिवारकम् भेषजम् औषधम् पृणीत पूरयत । किञ्च ज्योक् च चिरम् सूर्यम् दृशे द्रष्टुं नीरोगा वयं शक्ता भवामेति शेषः ॥ २१ ॥

---

१. नास्ति माश्र. २-२. अप्सु मे सोमः अब्रवीत् कथितवान् साश्र[1]. ३-३. अन्तर्विश्वानि भेषजा न न मे साश्र[1]?, वैद्युताग्न्यन्तरपि च सर्वप्राणिना सुखस्य भावयितारं विशेषाद्युत्पादयितारम् । मन्त्रणीतण्यर्थो भूः वि[1] अ ड़ ४. मम ऌ वि[1?], ५-५. नास्ति वि मै[1]. ६-६. आपः पाल्यत आत्मान्तर्गतं भेषजं वरणीयं शरीरार्थं मच्छरीरं भेषजयितुम् । पृ पालनपूरणयोः । पृण दाने । हे आपः मम तन्वे वरणीयं भेषजं दत्तेति वा । 'पृणीयादिन्नाधमानाय' इत्यत्र दानार्थः पृणातिः । ज्योक् चिरं सूर्यं द्रष्टुं चक्षुर्दत्त । तुमर्थे 'दृशे विख्ये च' (पा ३,४,११) इति । चक्षुर्ग्रहणम् सूर्यं चिरं द्रष्टुम् । चिरं द्रष्टुं सूर्यं पृणीत इति वा । चक्षुःसामर्थ्यं सूर्यः । तस्मात् चक्षुरेवात्र लभ्यं वि[1] अ ड़. ७-७. शरीरस्य च रक्षाभूतम् माश्र ड़ अ[1]. ८. द्रष्टुम् साश्र[1]. ९. नास्ति मूको.

इदमापः प्र वहत यत् किं च दुरितं मयि । यद् वाहमभिदुद्रोह यद् वा शेप उतानृतम् ॥२२॥

इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि ।

यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतम् ॥ २२ ॥

स्कन्द० [1]हे आपः ! प्र वहत प्रकर्षेण अन्यत्र प्रापयत । अपनयतेत्यर्थः । किम् । यत् किम् च दुरितम् कायिकम् मयि । यत् वा अहम् अभिदुद्रोह अद्रोग्धव्यान् मनसा द्रुग्धवान् । यच्च मानसमित्यर्थः । यत् वा शेपे शप आक्रोशे । आक्रुष्टवानहम् । यच्च वाचिकमित्यर्थः । उत अनृतम् असत्यजनितम् । यच्चानृतवचननिमित्तमित्यर्थः[1] ॥ २२ ॥

वेङ्कट० इदम् पापम्[2] आपः । अपनयत यत् किम् च मयि अस्ति । यत् वा अहम् [3]अद्रोग्धव्यान् पित्रादीन्[3] अभिदुद्रोह । यत् वा शप्तवानस्मि अनृतम्[4] । अनृतेऽर्थे शपथं कृतवानित्यर्थः ॥ २२ ॥

मुद्गल० हे आपः ! मयि यजमाने यत् किम् च दुरितम् अज्ञानात् निष्पन्नम्, वा अथवा अहम् यजमानः अभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि वा अथवा शेपे साधुजनं शप्तवानस्मीति यत् अस्ति उत अपि च अनृतम् उक्तवानिति यत् अस्ति तत् इदम् सर्वम् अपराधजातम् प्र वहत मत्तोऽपनीय प्रवाहेण अन्यतो नयत ॥ २२ ॥

आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥

आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि ।

पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज । वर्चसा ॥ २३ ॥

स्कन्द० [5]आपः इति द्वितीयार्थे प्रथमा । अपः अद्य अनु अचारिषम् चरतिर्गत्यर्थः । गतवानहम्[5] । यदपां माहात्म्यं तत् प्रकाशितम् इत्यर्थः । अतः[6] 'या या देवता निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति' ( या १३,१३ ) इति स्मरणात् ताद्भाव्यप्रतिपत्तेः अपाम् रसेन सम् अगस्महि सङ्गता वयम् । 'अध्यर्धान्त्याग्निदेवता' ( बृदे ३,९७ )। [7]सूक्तस्य ऋचेर्वा अन्त्या अध्यर्धाग्निदेवता । पयस्वान् हविर्लक्षणेनान्नेन तद्वान् । मयोपकल्पितहविष्कः सन्नित्यर्थः । अथवा यन्मह्यं दास्यतेऽन्नं तद्वान् । तद् गृहीत्वेत्यर्थः । हे अग्ने ! आ गहि आगच्छ । आगत्य च योऽहं तुभ्यं हविषो दाता स्तोता वा तम् मा माम् सम् सृज सम्बन्धय वर्चसा दीप्त्यान्नेन वा[7] । वर्चो मह्यं देहीत्यर्थः ॥ २३ ॥

---

१-१. आपः प्रकर्षेण अपनयत । यत् किंच कायिकं दुरितं मयि तदपनयत अन्यत्र कुत्रचित् । यच्चाहमद्रोग्धव्यं मनसा द्रुग्धवान् तन्मानसं पापं च । यच्चाक्रुष्टवान् वाचिकमप्यनृतमपनयत । आपो मदीयमनृतवचनजनितं च वि[1] अ कु.
[1] अद्रोग्धव्य मूको. २. दुरितम् वि[2]. ३-३. अद्रोग्धव्येभ्यः पित्रादिभ्यः मूको. ४. नास्ति कु.
५-५. आपः । रामि जम् । अप. अद्याहम् आगतवान् वि[1] अ कु ६. नास्ति साम्र. ७-७. सूक्तस्य च ऋचेश्च अध्यर्धा गन्त्या अग्निदेवता । पयस्वान् हविषान्न् । मया उपकल्पितहविष्कः सन् इति वा । मह्य दातुमिति वा । हे अग्ने आगच्छ । योऽहं हविर्दाता स्तोता वा । तं मा दीप्त्या अन्नेन वा सम्बन्धय वि[1] अ कु.

वेङ्कट० उदकानि अद्य अन्वचारिषम् अपाम् रसेन च[२] सङ्गता । उक्ता[३] एकवचनबहुवचनयो सङ्गति । रसवान् अग्ने ! मत्समीपम्[३] आगच्छ । तम् मा त्वम् वर्चसा सम् सृज अप्सु स्थित[४] ! इति ॥ २३ ॥

मुद्गल० अद्य अस्मिन् दिने अवभृथार्थम् आप अन्वचारिषम् जलानि अनुप्रविष्टोऽस्मि । प्रविश्य च रसेन जलसारेण सम् अगस्महि सङ्गता स्म । हे अग्ने ! पयस्वान् जले वर्तमानत्वेन पयोयुक्तत्वम् आ गहि अस्मिन् कर्मणि आगच्छ । तम् मा तादृश स्नात माम् वर्चसा तेजसा सम् सृज सयोजय ॥ २३ ॥

सं माग्ने वर्चसा सृज सं प्रजया समायुषा । विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्यु । मे । अस्य । देवा । इन्द्र । विद्यात् । सह । ऋषिऽभि ॥ २४ ॥

स्कन्द० [१]सम् इत्युपसर्ग सृज इत्याख्यातेन सम्बन्धयितव्य । मा हे अग्ने ! वर्चसा सम् सृज । प्रजया सम् सृज । आयुषा जीवितमायुरुच्यते । भवत्प्रसादाद् देवा विद्यु जानीयु । ज्ञानेन चास्य कार्य लक्ष्यते । कुर्यु इत्यर्थ । लोकेऽपि हि यो ह्यर्थनया कारयितुमिष्यते स उच्यते इद जानीहीति । कस्य विद्यु । मे मम । किम् । अस्य स माग्ने वर्चसा सृज' इत्येवमादे कामस्यायमन्वादेश । अनुक्तत्वात् द्वितीयार्थे चात्र षष्ठी । एत कामम् । के देवा । मरुता दय । न च केवला । किन्तर्हि । इन्द्र अपि विद्यात् सह ऋषिभि देवसामान्येऽन्तर्भूतस्यापीन्द्र स्यात्र पृथगुपादान प्राधान्यख्यापनार्थम् । 'ब्राह्मणा आयाता उपाध्यायदेवदत्तोऽप्यायात' इति यथा । तथा भगवतोऽग्ने प्रसादाद् विद्यु देवा इन्द्रश्चेत्येवमग्ने प्राधान्यादाग्नेयत्वस्याविरोध । केचित्तु देवानामिन्द्रस्य च स्वप्राधान्याद् वैश्वदेवीमैन्द्रीमेतामृच मन्यन्ते । एव ह्याह—'स मेति तिस्रो वैश्वदेवी प्राजापत्याऽऽग्नेयी च' इति[६] ॥ २४ ॥

वेङ्कट० सम् सृज माम् अग्ने ! वर्च प्रभृतिभि[६] । तम् माम् देवादयश्च जानीयु ॥ २४ ॥

मुद्गल० हे अग्ने ! सम् वर्चसा सम् प्रजया सम् आयुषा मा सृज वर्च प्रजाऽऽयुर्भि मा सयोजय । देवा सोमपातार अस्य मे यजमानस्य विद्यु अनुष्ठान जानीयु । किञ्च इन्द्र च सह ऋषिभि ऋषिगणै सह ममानुष्ठानम् विद्यात् जानीयात् ॥ २४ ॥

इति प्रथमाष्टके द्वितीयाध्याये द्वादशो वर्ग ॥

इति प्रथमे मण्डले पञ्चमोऽनुवाक ॥

---

१ नास्ति वि॰ स्प॰ २ ऋ १,२१,१ द्र॰ ३ समागम् वि॰ ४ स्थितवा कु साम्ब॰ ५-५ हे अग्ने प्रजया आयुषा वर्चसा च संयुज । सगो बहुलार्थ सम्बेरति । दाप्याप्तन वा सम्बन्धय । पुत्रेण च सम्बन्धय । जीवितेन च सम्बन्धय । त्वत्प्रसादात् जीवाम च । आनीयुर्मम एत कामं देवा मरुतादय । इन्द्रश्च विद्यात् । कस्यचन विदु । ज्ञानेन चास्य करणं लक्ष्यते । कुर्यात् । मम एत प्रजायुष इत्यर्थ । लोके हि य प्रार्थनया कारयितुमिष्यते स उच्यते इदं जानीहि इति । आदेश शब्दो तन्मात्रेण कामालाभ । अपि ह्यस च । देवान्तर्भूतस्येन्द्रस्य पृथक्त्वं प्राधान्यात् । भगवतो प्र प्रसादात् विदुरित्यग्नेरविरोध । सं मेति तिस्रो वैश्वदेवी प्राजापत्याऽऽग्नेयी चेत्येके वि॰ अ॰ कु॰ ६ वचस प्र॰ वि॰ अ॰

[ २४ ]

कस्य॑ नू॒नं क॑त॒मस्या॒मृता॑ना॒ं मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ ।
को नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात् पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥ १ ॥

कस्य॑ । नू॒नम् । क॒त॒मस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ ।
कः । नः॒ । म॒ह्यै । अदि॑तये । पुनः॑ । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् । च॒ ॥ १ ॥

स्कन्द० 'कस्य नूनम् शुनःशेप आजीगर्तिः' । "कस्य नूनम्' इत्यादि शुनःशेपो नामाजीगर्तपुत्रोऽपश्यत् । 'कस्य नूनम् तु वारुण्याद्या' ( बृहद्दे ३,९८ )। 'कस्य नूनम्' इतीयमृषेः सूक्तस्याद्या कायिका प्रजापतिदेवत्या । अत्र ब्राह्मणपठितमितिहासं संक्षिप्याचक्षते — 'हरिश्चन्द्रो नाम राजा अपुत्रः पुत्रार्थी नारदोपदेशाद् वरुणम् राजानम् उपससार । पुत्रो मे जायताम् तेन त्वा यक्ष्य इति । स रोहितं नाम पुत्रं प्राप । प्राप्तसन्नाहं पितोवाच । अयं वरुणस्त्वामनेनौपयाजिकेन मह्यमदात् । हन्त ! त्वयाऽहमिमं यजा इति । स नेत्युक्त्वा धनुरादायारण्यं जगाम । अथ प्रतिज्ञातयागाकरणाद्धरिश्चन्द्रं वरुणो जग्राह । तस्य वरुणगृहीतस्य जलोदरं बभूव । तद् रोहितः शुश्राव । सोऽरण्यात् पितुः समीपमाजिगमिषन् अजीगर्तनामानं बुभुक्षापरीतं ददर्श । तस्यर्षेः त्रयः पुत्रा बभूवुः । ज्येष्ठकनिष्ठौ शुनःपुच्छशुनोलाङ्गूलौ मन्त्रदृशौ । शुनःशेपस्तु मध्यमः अमन्त्रदृक् । तमजीगर्तं रोहित उवाच । अहं ते शतं गवां ददामि । अहमेषामेकेनात्मानं निष्क्रीणा इति । स बुभुक्षापरीतत्वाच्छोकाद्वात्मप्रादुर्भावं शुनःशेपमन्यं मन्यमानः शुनःशेपं विचिक्रिये । एवं हि पौराणिकाः स्मरन्ति—

'परितोषाद् भयाच्छोकात् सुखदुःखाच्च पञ्चधा । ऋषीणां तारकान्येन लक्षणेन यदृच्छया ॥
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह' । इति ।

तं क्रीतमादाय पितृसकाशं गत्वा रोहितः पितरमुवाच । अनेनाहमात्मानं निष्क्रीणा इति । अथैनमादाय हरिश्चन्द्रो वरुणमुवाच । अनेन त्वा यजा इति । तथेति वरुणः प्रतिपेदे । तस्मिन् यज्ञे विश्वामित्रजमदग्निवसिष्ठायास्याः होताऽध्वर्युर्ब्रह्मोद्गाता बभूवुः । यूपे शुनःशेपस्य नियोक्ता विशसिता च न कश्चित् भवितुमियेष । अथ अजीगर्त उवाच — तेन शतेन गवामहमेवैनं नियुञ्जे विशसामि चेति । तथेति प्रतिपन्ने नियुज्य विशसितुमसिं निशयन् शुनःशेपमुपजगाम । अथ शुनःशेपो मेने माममानुषमिवेमे विशसिष्यन्ति । हन्ताहं देवता उपधावामीति । स प्रजापतिमेव प्रथमं देवतानामुपससार— 'कस्य नूनं कतमस्यामृतानाम्' इत्येतयर्चेति । कस्य प्रजापतेः नूनम् इति पदपूरणः । कीदृशस्य । कतमस्य सर्वप्राणिनां सुखतमस्य । च । अमृतानाम् निर्धारणे एषा षष्ठी । देवानां मध्ये । मनामहे यद्यप्ययं'

---

१-१ 'कस्य नूनं तु वारुण्याद्या' । कः प्रजापतिः । ब्राह्मणेनोक्तमपि इतिहासं संक्षिप्याचक्षते — हरिश्चन्द्रो नारदोपदेशात् वरुणमनुसृत्य पुत्रं लब्ध्वा तत्स्नेहात् तं पशुत्वयस्कं तत्तत्प्रतिबन्धवाचा कालं यापयन् रोगार्तो बभूव । तदा अस्य पुत्रः अजीगर्तं याचयित्वा शुनःशेपमानाय्य वरुणमयाजयत । शुनःशेपस्तु आत्मानं नियोक्ष्यमाणं विशसिष्यमाणं च दृष्ट्वा देवता उपधावामि इति मन्यमानः 'कस्य नूनम्' इति अनुवाकमपश्यत् इति । कस्य प्रजापतेः सर्वप्राणिनां सुखतमस्य । श्रुधी हवम् के जनुर्भवम् इति सुगम् । देवानां मध्ये । देवा यजत्रा अमृता इति । निर्धारणे भाम् । शोभनं देवस्य नाम स्तुमः वि॰ अ कु.

**स्कन्द०** 'तं प्रजापतिरुवाच अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति । सोऽग्निमुपससार अग्निर्वयं प्रथमस्यामृतानामित्येतयर्चा' (ऐब्रा ७,१६)।[1] 'आग्नेय्यृक्' (तु. बृदे ३,९८)। अग्निदेवतेयमृक्। अग्नेः वयम् प्रथमस्य उत्कृष्टस्य अमृतानाम् मध्ये। मनामहे इत्याद्युक्तम्। अत्र च तुल्यार्थत्वात् पुनरध्ययने पदकाराभिप्रायः पर्येष्यः ॥ २ ॥

**वेङ्कट०** (१,२४,१ व्याख्या द्र.)

**मुद्गल०** इत्थं प्रथमयर्चा[2] विचिकित्साद्वारा प्रजापतिं स्तुत्वा प्रजापतेः सकाशात् तं देवमग्निं निश्चित्य अनया तुष्टाव। पूर्ववत् योजना। दात् ददातु, दृशेयम् पश्यानि इत्येतमाशीःपरत्वेन पदद्वयं योज्यम् ॥ २ ॥

**अ॒भि त्वा॑ देव सवित॒रीशा॑नं॒ वार्या॑णाम्। सदा॑वन् भा॒गमी॑महे ॥ ३ ॥**

अ॒भि। त्वा॒। दे॒व॒। स॒वि॒तः॒। ईशा॑नम्। वार्या॑णाम्। सदा॑। अ॒व॒न्। भा॒गम्। ई॒म॒हे॒ ॥ ३ ॥

**स्कन्द०** 'तमग्निरुवाच सविता वै प्रसवानामीशे। तमेवोपधावेति। स सवितारमुपससार अभि त्वा देव सवितः इति तृचेन' (ऐब्रा ७,१६)।[3] 'सवितुस्तृच.' (बृदे ३,९८)। सावित्रोऽयं तृचः। अभि इत्युपसर्गोऽन्त्येन ईमहे इत्याख्यातेन सम्बन्धयितव्यः। त्वा त्वां हे देव! सवितः! ईशानम् ईश्वरम् वार्याणाम् वरणीयानाम्। हे सदावन्! मरणादिभ्यः प्राणिनां सर्वदा रक्षितः! भागम् अंशम् ईमहे अभियाचामहे। कस्य भागम्। सामर्थ्यादायुषः। आयुर्वचन एव वा भागशब्दः। तद्धि सर्वप्राणिनो भजन्ते[3] ॥ ३ ॥

**वेङ्कट०** अभि याचामहे देव! सवितः! त्वां धनानाम् ईश्वरं नरपशोरात्मीयम्[4] भागम् सदा रक्षितः! ॥ ३ ॥

**मुद्गल०** अथ अग्निना प्रेरितः सन् सवितारम् 'अभि त्वा' इति तृचेन प्रार्थयते। हे सदावन्! सर्वदा रक्षक! हे सवितः देव! वार्याणाम् वरणीयानां धनानाम् ईशानम् स्वामिनम् त्वा त्वां प्रति भागम् भजनीयं धनम् अभि सर्वतः ईमहे याचामहे ॥ ३ ॥

**यश्चि॒द्धि त॑ इ॒त्था भगः॑ शशमा॒नः पु॒रा नि॒दः। अ॒द्वे॒षो हस्त॑यो॒र्द॒धे ॥ ४ ॥**

यः। चि॒त्। हि। ते॒। इ॒त्था। भगः॑। श॒श॒मा॒नः। पु॒रा। नि॒दः। अ॒द्वे॒षः। हस्त॑योः। द॒धे ॥४॥

---

१-१. इति वाक्येनोक्तः सोऽग्निमुपससार अग्निर्वयमिति। प्रथमस्योत्कृष्टस्यामृतानाम् वि[1] अ कु. २. प्रथमर्चा वि. ३-३. इति वाक्येन स सवितारमुपससार अभि इति तृचेन। अभि त्वा सवितुः तृचः। हे देव सवितः त्वा वरणीयानामीश्वरम् आयुरादीनां हे सदावन् मरणादिभ्यः सर्वदा प्राणिना रक्षितः अंशमभियाचामहे। आयुषो भागम्। तद्धि सर्वप्राणिनो भजन्त इति। आयुर्वा तदंशो वा ईमहे वि[1] अ कु. ४. "पशोरात्मी" साम्ब[1].

स्कन्द० 'य कतमो भाग । उच्यते—'मश्चिद्धि'[1] इति। यच्छब्दो हस्तयोर्दधे इत्यारयातन सम्बन्धयितव्य । चिद्धिशब्दौ पदपूरणौ । य हस्तयो दधे निहित । कस्य । ते तव। यस्त्वदायत्त इत्यर्थ । कीदृश । इ था सत्यनामैतद् ( तु निघ ३,१० )। सत्य विसवादवर्जित । भग मननीय शशमान अर्चतिकर्माऽयम् ( तु निघ ३,१४ ) व्यत्ययन चात्र कर्मणि कतृप्रत्यय । स्तुत्य इत्यर्थ । अद्वष अविद्यमानो द्वेषो यस्मिन् सोऽद्वेष । नहि कश्चिद् आयुस्तद्वश वा द्वेष्टि[1]। कदा पुनरायुर्भागमायुरेव [2]चा अभियाचामहे[2]। उच्यते। पुरा निद अत्यन्तनिन्दितात् तिर्यक्पशुसदृशान्मरणात् पुरा । यावत् तिर्यक्पशुवदत्यन्तकुत्सित विशस्यमाना न म्रियामह इत्यर्थ । [3]अथवा निन्दतिरत्र सामर्थ्याद् विशसनार्थ[3]। पुरा विशसनात् विशसितुर्वा यावन्न विशस्यामह इत्यर्थ । [4]अथवा एवमन्यथास्या ऋच पूर्वानपेक्षैवार्थयोजना । इत्थाशब्दोऽमुत्रेत्यस्यार्थ । 'भग' ( निघ २,१० ) इति धननामाऽयम्। य त इत्था भग अमुत्र स्वर्गे धनम् । यच्छब्दश्रुत स्तच्छब्दोऽध्याहार्य । तत् शशमान स्तुवन् अह पुरा निद मन्निन्दितु पूर्वम् अद्वेष द्वेषवर्जित आत्मन हस्तयो दधे धारयेयम्। मह्य दद्या इत्यर्थ[4]। यद्वृत्तेनासम्बन्धाच्छान्दसत्वान्निघाताभाव इति व्याख्येयम् ॥ ४ ॥

वेङ्कट० य एवविध भग सर्वै एव स्तूयमान द्वेषवर्जित निन्दितुर्मनुष्यात्[5] पूर्वमेव स्तोतुर्हस्तयो इत्थम् निदधे[6]। उत्तरत्र सम्बन्ध ॥ ४ ॥

मुद्गल० हे सवित [7]य भग भजनीयो धनविशेष ते तव हस्तयो दधे धृतोऽभूत्[7]। त धनविशेषम् ईमहे इति पूर्वेणान्वय[8]। निद पूजार्थे। हि प्रसिद्धौ । धनस्य पूज्यत्व सर्वत्र प्रसिद्धम् । इथा शशमान अनन प्रकारेण स्तूयमान । स्वकीये धन वैरिभि अपहृते सति वैरिगृहीत धन सर्वो लोको निन्दति द्वेष्टि च अतो धन स्तुतिर्न नियतत्वाशङ्क्याह—निद पुरा अद्वेष निन्दाया पूर्व स्वकीयत्वन व्यवस्थित सति तदानी द्वेषरहित । तस्मात् स्वकीयत्वाभिप्रायण स्तूयमान त्वमुक्तमित्यर्थं ॥ ४ ॥

भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥ ५ ॥

भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा । मूर्धानम् । राय । आऽरभे ॥ ५ ॥

स्कन्द० भगभक्तस्य[9] भगो देव तेनापि सेवितस्य भजनीयेन [10]वा हविषा स्तोत्रेण वा सर्व मनुष्यै सेवितस्य। तव स्वभूता वयम् उत् अशेम अतोऽप्यूर्ध्वं प्राप्नुयाम । किम् । आयु । अवसा हेतुना[10] त्वया अतो मरणाद् रक्षिता सन्त इत्यर्थं । [11]न च केवलमायु । किं तर्हि[11]

---

1-1 योऽयमसौ भाग उच्यते हे सवित यस्तव हस्तयोर्निहित स इत्थंभूत । इत्था सत्ये। अविसंवाद । भगो भजनीय । शशमान स्तुत्य । शश स्तुतौ। कर्मणि कर्तृप्रत्ययश्च । स्तुत्य । अविद्यमानद्वेष नहि कस्यचित्प्राणिन आयुस्तद्वशो वा द्वेष्टि वि[1] भ कु † नास्ति मूको 2-2 हि याचध्वे सारम °चध्वे वि[1] भ कु 3-3 निन्दतिर्विशसनार्थ एव वा वि[1] भ कु 4-4 एवमन्यथा वा अस्या अर्थयोजना पूर्वानपेक्षेण । इत्था अमुत्रार्थे । भगो धनम् । यत्तदमुत्र स्वर्गे धनं तत् स्तुवन्नहं मन्निन्दितु पूर्वं द्वेषवर्जित आत्मना हस्तयो धारयेयम्। मह्यं तद्दद्या वि[1] भ कु 5 निन्दितुर्म° वि[1] भ[1] °नुष्यान् वि[1] 6 निदधातु वि[1] हर्व 7 दधे° वि 8 °पूर्वेणान्वय वि 9 नास्ति वि[1] भ कु 10-10 हविषा स्तुत्या वा पुंभिश्च सेवितस्य इति वा। त्वदीया वयमनापि ऊर्ध्वमायु प्राप्नुयाम। तव पालनहेतुना वि[1] भ कु 11-11 नास्ति वि[1] भ कु

[1]मूर्धानम् राय धनस्य यच्छिरोभूतम् । उत्कृष्ट च धनम् इत्यर्थ । उपभोगान वा[2] आरब्धुम् उपभोक्तु यष्टु [3]वत्यर्थ । यत् त्वस्या ऋच 'भगभक्तस्य भागी वा' ( बृदे ३,९८ ) इति भगदेवत्यत्व[4] शौनकेनोक्त तद् भगस्योपसर्जनत्ववचनत्वात्[5] । भगशब्दस्य [6]"स सवितार-मुपससार अभि त्वा देव सवितरित्येतेन तृचेन" ( ऐब्रा ७,१६ ) इति[7] ब्राह्मणेऽप्रत्यक्षत्वाद्[8] येनाभिप्रायेणोक्त स पर्येष्य ॥ ५ ॥

वेङ्कट० तेन भाग्येन सभक्तस्य तव वयम् रक्षणेन उद्‍व्याप्नुमः धनस्य परम पदम् आरब्धुम्[1] ॥ ५ ॥

मुद्गल० हे सवित ! ते त्वदीया वयम् शुनःशेपनामान भगाशस्य धनेन सयुक्तस्य तव अवसा रक्षणेन उदशेम उत्कर्षेण व्याप्नुम । किं कर्तुम् । राय धनस्य मूर्धानम् उत्कर्षम् आरभे प्रारब्धुम् । धनिकत्वप्रसिद्ध्या व्याप्ता भूयास्मेत्यर्थ ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये त्रयोदशो वर्ग ॥

नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६ ॥

नहि । ते । क्षत्रम् । न । सह । न । मन्युम् । वय । चन । अमी इति । पतयन्त । आपु ।
न । इमा । आप । अनिऽमिषम् । चरन्ती । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥ ६ ॥

स्कन्द० 'त सवितोवाच वरुणाय वै [1]राज्ञे नियुक्तोऽसि । तमेवोपधावेति । स वरुण राजानमुपससार अत उत्तराभिरेकविंशत्या'[2] ( ऐब्रा ७,१६ ) । 'पर शेषस्य वारुण' ( तु बृदे ३,९८ ) । 'पर सूक्तमेक विंशकम्, अस्य शेषो द्वयर्थ । एतदुभयमपि वरुणदैवतम् । वरुणश्चात्रोक्तस्थान[ आदित्य । न हि त क्षत्रम् धन बल वा सेनालक्षणम् । नापि सह शारीर बलम् । नापि मन्युम् क्रोधम् । वय चन पक्षिण । चन अप्यर्थे । पक्षिणोऽपि अमी पतयन्त गच्छन्त आपु प्राप्नुवन्ति अतिमहत्त्वात् । न इमा नापि इमा आप अनिमिषम् सततम् चरन्ती गच्छन्त्य । न अपि ये वातस्य प्रमिनन्ति मीङ हिंसायाम् । हिंसन्ति । अभ्वम् अभ्वमिति महन्नाम (तु निघ ३,३ ) । महत्त्वम् । कस्य । सामर्थ्याद् गते । वातादपि ये शीघ्रगतिकरा इत्यर्थ । के ते । मरुतो वान्ये वा केचिन्मनआदय[3] ॥ ६ ॥

1-1 धनस्य मूर्धाने च प्राप्नुयाम । उत्कृष्ट च धनम् उपभोगान् यागान्वा वि[1] अ कु 2 2 वा । यत्त्वस्या ऋचो भगदेवत्यत्व वि[1] अ कु 3 [3]सजनत्व वचनत्वात् साम्ब 4 4 नास्ति वि[1] अ कु 5 5 ब्राह्मणस्य प्रत्य° साम्ब, °णे प्र° वि[1] अ कु 6 आरब्धम् अ[1] 7 7 इति स वरुणमुपससार अत उत्तराभिरेकविंशत्या वि[1] अ कु 8 8 वरुणश्चात्र उक्तस्थान आदित्य । तव क्षत्रं धन बल वा सेनालक्षणम् सेनामपि । सह शारीर बलमपि । नापि क्रोधम । पक्षिणोऽप्यमी गच्छन्तो न प्राप्नुवन्ति । गान(°)शकुना वय इति । चन अपी । अतिमहत्त्वात् तवैतानि न प्रापु । इमा आप सन्तत चरन्त्योऽपि । मीङ हिंसायाम् । अभ्वाऽभ्वो विभून स्थूर इति महति । ये वायोर्हिंसन्ति गतर्महत्त्वात् तेऽपि न मरुतो मनआदयो वा । वयामि आप अनिमिषा अन्येऽपि लाभन्नमहोमन्यूनामन्त न प्रापु वि[1] अ कु † °ध्वातो स्थ साम्ब

वेङ्कट० नहि तव वरुण ! बलम् अभिभवसामर्थ्यं शत्रूणामभिमननं च महता वेगेन पतन्त श्येनादय अपि आपु । न च इमा आप सतत चरन्त्य । न च ये पर्वतादय वातस्य अपि महत्ता प्रहिंसन्ति[1] ॥ ६ ॥

स्कन्द० अथ[2] सवित्रा प्रेरित शुन शेप एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुण तुष्टाव। हे वरुण पतयन्त प्रौढे वियति उत्पतन्त अमी दृश्यमाना वय चन श्येनादय पक्षिणोऽपि ते क्षत्रम् त्वदीय शरीरबलम् नहि आपु नैव प्राप्ता । त्वत्सदृश शरीरबल पक्षिणामपि नास्तीत्यर्थ । तथा सह त्वदीय पराक्रमम् अपि न प्रापु । तथा मन्युम् त्वदीय कोपमपि न प्रापु । त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थ । अनिमिषम् सर्वदा चरन्ती प्रवाहरूपेण गच्छन्त्य इमा आप त्वदीय बलम् न प्रापु । वातस्य वायो ये गतिविशेषा त्वदीयम् अभ्वम् वेगम् न प्रमिनन्ति न हिंसन्ति । अतिक्रम कर्तुं न शक्ता इत्यर्थ । तेऽपि न प्रापुरिति पूर्वत्रान्वय ॥ ६ ॥

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ ॥

अबुध्ने । राजा । वरुण । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्ष । नीचीना । स्थु । उपरि । बुध्न । एषाम् । अस्मे इति । अन्त । निऽहिता । केतव । स्युरिति स्यु ॥ ७ ॥

स्कन्द० बुध्नोऽधोभाग[3] । स इतरयोर्भागयोराश्रय । बुध्नत्वाश्रयत्वयो सम्बन्धाद् [4]बुध्नशब्देनाश्रयो लक्ष्यते । अबुध्ने अनाश्रये अनालम्बनेऽन्तरिक्षे राजा दीप्त ईश्वरो वा वरुण वनस्य ऊर्ध्वम् स्तूपम् ददते 'वनम्' ( निघ १,६ ) इति रश्मिनाम । बहुवचनस्य स्थाने एकवचनम् । स्तूपशब्द सङ्घातवचन । 'विश्वे देवा पुष्करे त्वाददन्त' ( ऋ ७,३३,११ ), 'ददते †मणिम्' ( या २,२ ) इत्यादिप्रयोगदर्शनाद् ददतिर्धारयतिकर्मा । रश्मीना सङ्घातमूर्ध्वं धारयतीत्यर्थ । कीदृश । पूतदक्ष शुद्धबल । न चोर्ध्वमेव । किं तर्हि । नीचीना अधोमुखा स्थु तिष्ठन्त्यनेन रश्मय । उपरि बुध्न आश्रयो मण्डलाख्य एषाम् । अनाश्रयेऽप्यन्तरिक्षे आदित्यमण्डलस्योर्ध्वमध स्ताच्च रश्मीन धारयतीत्यर्थ । पर पादोऽन्यार्थ । तत्सम्बन्धार्थं यत्तच्छब्दौ योग्यार्थ सम्बन्धावध्याहर्तव्यौ । य इद करोति तस्य प्रसादेन अस्मे अस्माकम् अन्त मध्ये मनसि निहिता केतव प्रज्ञा स्यु । जीवनमनेन प्रकारेणाशास्यते । जीवतो ह्यन्त प्रज्ञा भवन्ति न मृतस्य । अथवा केतवोऽत्र प्रज्ञानात्मका रश्मय प्रादुर्भवन्ति । तेन इदमादित्यरश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते[4] ॥ ७ ॥

---

१ प्रहिंसन्ति वि[1] छप २ इति वि ३ बुध्नयो° वि[1] अ कु ४ ४ बुध्नशब्देनाश्रयो लक्ष्यते । अबुध्ने अनालम्बनेऽन्तरिक्षे ईश्वरो दीप्तो वा वरुण । वननानि वस्त्राणि इति रश्मी । आदि दत्त् । रश्मीनां सङ्घातमूर्ध्वं धारयति शुद्धबल । नीचीना अधोमुखास्तिष्ठन्ति अन्ये रश्मय । उपर्याश्रयो मण्डलाख्य । एषां वनानां स्तूपम् अबुध्ने आदित्यमण्डलस्योर्ध्वं नीचीनांश्च भुवि रश्मीन् धारयति । पर पादोऽन्यार्थ । तत्सम्बन्धार्थं यच्छब्दौ स । य इद करोति तस्य प्रसादे अस्माकं मनसि निहिता प्रज्ञा स्यु । आदि गे । जीवनाशा इयम् । जीवितस्य एव अन्त प्रज्ञा स्यु न मृतस्य । अथवा रश्मिपुञ्ज केतव इति रश्मी । ते प्रज्ञानात्मका । ते चक्षुर्द्वारेण अन्तर्गतानि भवेयु । चक्षुषा रश्मीन् पश्येम इति मन्यते । मुमूर्षो हि चक्षुषा इव आदित्यो दृश्यते । न रश्मिप्रादुर्भाव । आदित्यरश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते वि[1] अ कु † मणिम् स्यात्

वेङ्कट० अमूलेऽनालम्बनेऽन्तरिक्षे[1] वरुणः राजा तेजस उदकस्य वा सङ्घातम्[2] ऊर्ध्वम् धारयति शुद्धबलः । ते च रश्मयो नीचीनाग्राः तिष्ठन्ति[3] । तेषाम् एषाम् मूलम् उपरि भवति[4] । अस्माकम् अन्तः अमृतानां निहितानि भवन्तु प्रज्ञानानि ॥ ७ ॥

मुद्गल० पूतदक्षः शुद्धबलः वरुणः राजा अबुध्ने मूलरहितेऽन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसः स्तूपम् संघम् ऊर्ध्वम् उपरि देशे ददते धारयति । नीचीनाः स्युः ऊर्ध्वदेशे वर्तमानस्य रश्मय इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । एषाम् रश्मीनाम् बुध्नः मूलम् उपरि तिष्ठतीति शेषः । तथा सति केतवः प्रज्ञापका. प्राणाः अस्मे अस्मासु अन्तः निहिताः स्थापिताः स्युः । मरणं न भविष्यतीत्यर्थः ॥ ७ ॥

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उं ।

अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥

उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनुऽएतवै । ऊम् इति ।

अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥

स्कन्द० उरुम् विस्तीर्णम् [5]हिशब्दस्तु पदपूरणः । राजा वरुणः चकार । कस्मै । सूर्याय मण्डलमय सूर्यशब्देनोच्यते । तदर्थम् । किम् । पन्थाम् पन्थानम् । क । सामर्थ्यादन्तरिक्षे । किमर्थम् । अन्वेतवे आनुपूर्व्येण गन्तुम् । सूर्य आनुपूर्व्येणाऽऽयास्यतीत्येवमन्तरिक्षे विस्तीर्णं पन्थानं कृतवानित्यर्थः । अपदे पदं यत्र निधातुं न शक्यते अप्रतिष्ठत्वात् तदपदमन्तरिक्षं तत्र । पादा आत्मीयौ पादौ प्रतिधातवे प्रतीत्येष नीत्येतस्य स्थाने । निधातुम् । अकः करोति । अप्रतिष्ठेऽप्यन्तरिक्षे पदं निधत्त इत्यर्थः । उत अपि च अपवक्ता अपवदिता । कस्य । हृदयाविधः चित् परुषवचनायोग्यव्यवहारसमाचरणादिभिर्हृदयं यो विध्यति पीडयति स हृदयावित् तस्य । चिच्छब्दः पदपूरणः । अथवैवमन्यथाऽस्य पदस्याऽर्थयोजना । अपेत्य वक्ता अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्तेत्यर्थः । कस्य । सामर्थ्याद् यावत्किञ्चिद् दुर्वचस्तस्य सर्वस्य । हृदयाविधः चित् चिच्छब्दोऽप्यर्थे । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । हृदयं हृदयेन वा यो विध्यति सम्यग् जानाति । विध सम्यग्ज्ञाने । स हृदयावित् तस्यापि सकाशात्[5] ॥ ८ ॥

---

१. अमूलेन बलेनान्त° वि[1] लपं. २. सधातं मा[1] वि[1,2] लपं. ३. तिष्ठन् वि[1] लपं. ४. भवता अ[1] वि[2]. ५-५. पन्थानमन्तरिक्षे राजा वरुणश्चकार सूर्यमण्डलार्थं तस्यानुपूर्व्येण गन्तुम् । 'पथ. पन्थ च' (पा ४,३,२९) । तुमर्थे तवै । सूर्योऽन्वेतीत्येवमर्थं खे उरु पन्थानं कृतवानित्यर्थः । यत्र पदं निधातुं न शक्यते अप्रतिष्ठितत्वात् तदपदमन्तरिक्षम् । तत्र आत्मीयौ पादौ निधातुं करोति । प्रति. नी । तुमि तवे । अप्रतिष्ठितेऽप्यन्तरिक्षे पादौ निधत्ते । उत अपि चापवदिता शत्रोः । 'दुर्वैयो हृदयाविधः' इति शत्रौ । परुषवचनायोग्यव्यवहारसमाचरणादिभिः यो हृदयं विध्यति तस्य । अपेत्य वक्ता वा अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्ता यावत् किञ्चित् दुर्वचं तस्य सर्वस्य । हृदयाविध । चिदपी । डसो निर्देशात् सकाशादिति च । यो हृदयं विध्यति । विध सम्यग्ज्ञाने । हृदयेन वा । तस्यापि सकाशात् । हृदयज्ञस्यापि सकाशादपेत्य दुर्वचनीयस्य वक्ता इति वा वि[1] अ कु.

वेङ्कट० विस्तीर्णम् हि राजा वरुणः चकार सूर्यस्य गमनार्थं पन्थानम् । ततोऽयम् अनालम्बने- ऽन्तरिक्षे कृतवान् सूर्यस्य पदानि प्रतिधातुं पन्थानम् । सोऽयम् हृदयाविधः शत्रो अपवक्ता अस्तु पराभवत्वयमिति वदतु ॥ ८ ॥

मुद्गल० वरुणः राजा सूर्याय 'सूर्यस्य पन्थाम् मार्गम्' चकार । हि प्रसिद्धौ । उत्तरायण- दक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवानिति तदुच्यते । अन्वेतवै उ अनुक्रमेण उदयास्तं गन्तुमेव । तथा अपदे पादरहितेऽन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुम् अतः मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः, अत्र पादयोरिति विशेषः । उत अपि च हृदयाविधः चित् शत्रोरपि अपवक्ता निराकर्ता भवतु ॥ ८ ॥

शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥

शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु ।
बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥ ९ ॥

स्कन्द० [1]शतम् ते तव हे राजन्! वरुण! भिषजः भिषग् वैद्य उच्यते । आर्तानां जीवनोपायैः सम्बन्धो भिषक्शब्देनोपलक्ष्यते । अस्मदादीनाम् आर्तानां जीवनोपाया इत्यर्थः । न शतमेव केवलम् । किं तर्हि । सहस्रम् च । अत्यन्तबहव इत्यर्थः । अतो ब्रवीमि उर्वी विस्तीर्णा गभीरा अन्यैर्दुरवगाहा सुमतिः शोभनानुग्रहात्मिका बुद्धिः ते तव अस्मासु अस्तु । अनुग्राहकोऽस्माकं भवेत्यर्थः । बाधस्व दूरे दूरं गमयेत्यर्थः । किम् । निर्ऋतिम् मृत्युदेवताम् । पराचैः परागमनैः । पराङ्मुखम् इत्यर्थः । किञ्च कृतम् अप्यस्माभिः एनः प्र मुमुग्धि प्रपूर्वो मुञ्चतिरपनये । अपनय । अस्मत् अस्मत्तः[1] ॥ ९ ॥

वेङ्कट० [2]शतम् ते[2] राजन् । भैषज्यानि[3] सहस्रम् च । विस्तीर्णा [4]गम्भीरा मद्विषया[4] सुमतिः तव अस्तु । स त्वम् अस्मत्तः कृच्छ्रम् दूरे[5] पराङ्मुखम् बाधस्व । कृतम् च पापं प्रमोचयेति ॥ ९ ॥

मुद्गल० हे राजन् । वरुण ! ते तव शतम् सहस्रम् भिषजः बन्धनिवारकाणि शतसहस्रसंख्याकानि औषधानि वैद्या वा सन्ति । ते तव सुमतिः अस्मदनुग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु । निर्ऋतिम् अस्मदनिष्टकारिणीं पापदेवताम् पराचैः पराङ्मुखीं कृत्वा दूरे अस्मत्तो व्यवहिते देशे स्थापयित्वा ताम् बाधस्व । कृतम् चित् अस्माभिरनुष्ठितमपि एनः पापम् अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु ॥ ९ ॥

---

१-१. नास्ति वि[1]. २-२. हे राजन् वरुण तव भिषजः अस्मदादीनामार्तानां जीवनोपायाः एतद्वन्तो वैद्या वा शतं सहस्राणि सन्ति । अतो ब्रवीमि । उर्वी विस्तीर्णा चान्यैर्दुरवगाहा च शोभनानुग्रहात्मिका बुद्धि- स्तवास्मास्वस्तु । अस्मदनुग्राहको भव । बाधस्व दूरं गमय मृत्युदेवतां निर्ऋतिं परागमनैः पराङ्मुखम् । किञ्च अस्मत्कृतमप्येनः अपनय अस्मत्तः । प्रात् मुञ्चतिरपनयने ; इमो उक् च वि[1] अ मु. ३-३. नास्ति वि[1]. ४. भैषज्यानि वि[1] अ[1]. ५-५. गम्भीरविषया सायण[1]; [1]विषया वि[1]. ६. दूरे वि[1] लप.

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद् दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १० ॥

अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः ।
अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥ १० ॥

स्कन्द० 'अमी ये ऋक्षाः ऋक्ष इति नक्षत्रनाम ( तु. या ३,२० ) । अमूनि यानि नक्षत्राणि निहितासः निहितानि उच्चा उच्चैर्द्युलोके नक्तम् रात्रौ ददृश्रे दृश्यन्ते । कुह चित् कुहशब्दः क्वेत्यस्य पर्यायः। चिच्छब्दोऽप्यर्थे । क्वापि । दिवा अहनि ईयुः गच्छन्ति । दिवा ह्येतानि न दृश्यन्ते । अतो न जानीमः । क्वापि गच्छन्तीति । अथवा कुह चिद् दिवेत्येते समानाधिकरणे । ईयुरित्यपि शुद्धोऽप्येतिः सामर्थ्यादाङ्पूर्वार्थे । क्वचिदहन्यागच्छन्ति । क्वचिद्देवाहनि दृश्यन्ते, न सर्वत्रेत्यर्थः । यत्रैव ह्यहनि समस्तं राहुणा ग्रस्यते तत्रैव नक्षत्राणि दृश्यन्ते नान्यत्र । यान्यमूनीत्युद्देशात् प्रतिनिर्देशार्थं एतच्छब्दोऽत्राध्याहर्तव्यः । एतानि अदब्धानि अहिंसितानि वरुणस्य व्रतानि कर्माणि । वरुण एव तान्येतानि करोतीत्यर्थः । कथम् । वरुणो हि दिवा स्वभासा नक्षत्राणां भासः छादयति न रात्रौ, ततो रात्रौ दृश्यन्ते न दिवा । न चैतान्येव केवलानि । किं तर्हि । योऽप्ययम् विचाकशत् काशृ दीप्तौ । विविधं दीप्यमानः चन्द्रमाः नक्तम् एति एषोऽपि वरुणस्यैव कर्म । एतमपि वरुण एव एवं करोतीत्यर्थः । तदीयो ह्येको रश्मिः सुषुम्णाख्यश्चन्द्रमसं प्रति दीप्यते । तेनायं विचाकशत् चन्द्रमा नक्तमेति । अथवा 'अमी ये ऋक्षाः' इति यच्छब्दो बहुवचनान्तो व्यत्ययेन पुंलिङ्गश्च । तथा ददृश्रादिभिः क्रियाभिः सम्बध्यते न ऋक्षैः । कुत एतत् । यच्छब्दस्योद्देशार्थत्वादुद्दिष्टस्य चावश्यं प्रतिनिर्दिष्टव्यत्वेऽपाश्रप्रतिनिर्देशात् प्रतिनिर्देशकल्पनायामपि चैषामेकवाक्यत्वप्रत्ययसम्भवात्, 'अदब्धानि वरुणस्य व्रतानि' इति च कर्मणामुपादानात् क्रियोद्देशार्थत्वेन बहुवचनं पुंलिङ्गता च । एवं योजना—यन्नक्षत्राणि नक्तं दृश्यन्ते, यच्च दिवापि गच्छन्ति, यच्च विचाकशच्चन्द्रमा नक्तमेति, एतानि त्रीण्यपि अदब्धानि वरुणस्य व्रतानीति[1] ॥ १० ॥

---

1-1. नक्षत्ररूपा ज्योतींषि । अमूनि यानि नक्षत्राणि निहितान्युच्चैः द्युलोके रात्रौ दृश्यन्ते क्वाप्यहनि गच्छन्ति । दिवा नैतानि दृश्यन्ते । अतो न जानीमः क्वापि गच्छन्ति इति । 'आज्जसेरसुक्' ( पा ७,१,५० ), अव्ययानामपि सुबन्तत्वात् भाव् औ, 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ), 'किमोऽत्', 'वा ह च छन्दसि' ( पा ५,३,१२-१३ ) इति निहितादीनां प्रक्रिया । विवक्षौ । कुहचित् दिवा इति समानाधिकरणे वा । आङमध्याहरति ईयुश्च । क्वचिदहनि आगच्छन्ति । क्वचिद्दिवाहनि दृश्यन्ते । न सर्वेषु अहस्सु । यदा सूर्यस्य समस्तग्रहणं भवति तदा एव नक्षत्राणि दृश्यन्ते अहनि । य इत्युद्देशात् प्रतिनिर्देशार्थं एतच्छब्दः स्यात् । दम्भु हिंसायाम् । एतानि अहिंसितानि वरुणस्य कर्माणि । वरुण एव तान्येतानि नक्षत्ररूपाणि करोति । कथम् । वरुणो हि दिवा स्वभासा नक्षत्राणां भासं छादयति । न रात्रौ । ततो रात्रौ दर्शनम् अहन्यदर्शनं तेषाम् । नैतावदेव । चन्द्रमसोऽपि दीप्तिर्वरुणस्य कर्म । काशृ दीप्तौ । दाशृ च । विविधं दीप्यमानः चन्द्रमा रात्रावागच्छति । एषोऽपि वरुणकर्मणा । कथम् । तदीयो ह्येको रश्मिः सुषुम्नाख्यः । स चन्द्रमसं दीप्यते प्रति । तेन । अथवा ये इति व्यत्ययेन बहुवचनं पुंलिङ्गता च । ददृश्रे ईयुः इत्येते इति क्रियाभिरेव सम्बध्येते न ऋक्षैः । यैरिमानि नक्तं दृश्यन्ते, यत्र दिवा क्वापि गच्छन्ति, यत्र चन्द्र एति एतानि त्रीण्यपि वरुणस्याहिंसितानि कर्माणि इति क० सु.

वेङ्कट० नक्षत्राणि रात्रौ दृश्यन्ते क्व तानि दिवा गच्छन्ति । तथा दीप्यमान चन्द्र रात्रौ गच्छति । भवति च दिवा तिरोहित । तानीमानि शत्रुभिरहिंसितानि वरुणस्य व्रतानि इति[1] ॥ १० ॥

मुद्गल० अमी रात्रावस्माभिर्दृश्यमाना ऋक्षा सप्तऋषय उच्चा उच्चैरपरिप्रदेशे निहितास्स्थापिता ये सन्ति ते नक्षत्राः नक्तम् रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते । दिवा अहनि कुह चित् क्वापि गच्छेयु । न दृश्यन्त इत्यर्थ । वरुणस्य राज्ञ व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनाप्यहिंसितानि । किञ्च वरुणस्याज्ञयैव चन्द्रमा नक्तम् रात्रौ विचाकशत् विशेषेण दीप्यमान एत गच्छति ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये चतुर्दशो वर्ग. ॥

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ११ ॥

तत् । त्वा । यामि । ब्रह्मणा । वन्दमान । तत् । आ । शास्ते । यजमान । हविःऽभि ।
अहेळमान । वरुण । इह । बोधि । उरुऽशंस । मा । न । आयु । प्र । मोषी ॥ ११ ॥

स्कन्द० [2]तत् त्वा यामि याच्ञाकर्माऽयम् । याचे । ब्रह्मणा अनेन ऋग्लक्षणेन वन्दमान स्तुवन् । किं पुनस्तत् । सामर्थ्यादायु । तत् आ शास्ते प्रार्थयते अयं जलोदरगृहीतो हरिश्चन्द्राख्यो यजमान हविर्भि अन्नै । एतज्ज्ञात्वा अहेळमान अक्रुध्यन् हे वरुण ! इह कर्मणि अवस्थाया वा वर्तमानयोरावयो बोधि बुध्यस्व । शृणु याच्ञामित्यर्थ । श्रुत्वा च हे उरुशंस ! 'उरु' (निघ ३,१) इति बहुनाम । शंसा स्तुति । बहुस्तुत ! मा न 'अस्मदो द्वयोश्च' (पा १,२,५९) इत्येवमेतद् बहुवचनम् । आवयो आयु जीवितम् प्र मोषी । जीवय आवामित्यर्थ[2] ॥ ११ ॥

वेङ्कट० तत् त्वाम् अहम् याचामि स्तोत्रेण [3]वन्दमान । तत् एव[3] । च[4] आ शास्ते अयं च हरिश्चन्द्र यजमान हविर्भि । [5]तत् त्वम्[5] अक्रुध्यन् वरुण ! इह बुध्यस्व । तदाह—बहुस्तोत्र ! मा अस्माकम् आयु प्र मोषी इति ॥ ११ ॥

मुद्गल० हे वरुण ! मुमूर्षु अहम् त्वा त्वाम प्रति तत्[1] आयु यामि याचे । ब्रह्मणा वन्दमान वेदस्तुत्या मानयन् सर्वत्र यजमान अपि हविर्भि तत् आयु आ शास्ते प्रार्थयते । त्वं च इह कर्मणि अहेळमान अनादरमकुर्वन् तत् बोधि अस्मदपेक्षितं बुध्यस्व । हे उरुशंस ! बहुभि स्तुत्य ! न अस्मदीयम् आयु मा प्र मोषी प्रमुषितं मा कुरु ॥ ११ ॥

तदिन्नक्तं तद् दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद् गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु ॥ १२ ॥

---

1 नास्ति कु 2-2 तत्त्वा याचे ब्रह्मणा स्तुवन् । तदायुरेव प्रार्थयते अयं हरिश्चन्द्रो याग कुर्वन् हविर्भि । तत्त्वं अक्रुध्यन् हे वरुण इह कर्मणि अवस्थाया वा वर्तमानयोरावयो बुध्यस्व याच्ञाम् । हे बहुस्तुत ! आवयोर्जीवितं मा प्रमोषी । 'हेळमानोऽप्रसन्ना क्रुध्यन् ( क्रुद्धम् वि[1] अ )' इति क्रुद्ध । 'अस्मदो द्वयोश्च' इति ओमि आम् । जीवय आवाम वि[1] अ कु 3-3 [illegible] देव अ[1] वि[1,2] एप 4 नास्ति ताम्र कु 5-5 स त्वम् ताम्र कु, त्वम वि[1,2] एप 6 यत् मूको

तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ १२ ॥

स्कन्द० 'तत् इत् नक्तम् इच्छब्द एवार्थे । तदेव नक्तम् । तत् एव दिवा । सततमित्यर्थः । मह्यम् आहुः कथयन्ति । के । सामर्थ्यात् सुहृदः ऋषयो ब्राह्मणा वा' प्राणाधिदेवता वा । तत् एव अयम् केतः प्रज्ञानम् हृदः हृदयस्य सम्बन्धी <sup>२</sup>आ वि चष्टे<sup>२</sup> आभिमुख्येन कथयति । हृदयेनाप्यहं तदेव जानामीत्यर्थः । किं पुनस्तत् । सामर्थ्याद् वरुणः आर्तानामार्तिहर इत्येतत् । <sup>३</sup>यत एवमतो ब्रवीमि—शुनःशेपः यम् अह्वत् अतीतकल्पशुनःशेपापेक्षया वाऽयं प्रथमपुरुषप्रयोगः । आत्मन एव वा परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अतीतकल्पे यः शुनःशेप आसीत् अहमेव वा सः गृभीतः गृहीतः । सः अस्मान् राजा वरुणः मुमोक्तु अतो यूपात्<sup>३</sup> ॥ १२ ॥

वेङ्कट० तत् एव नक्तम् तत् दिवा मह्यम् सर्वे कथयन्ति वरुणस्त्वां मोक्तुमीष्ट इति । तत् एव हृदयस्य च प्रज्ञा मह्यम् वि चष्टे ममापि तथा बुद्धिर्भवति । यूपे बद्धः शुनःशेपः यम् देवम् आहूतवान् सः राजा वरुणः अस्मान् मुमोक्तु ॥ १२ ॥

मुद्गल० तदित् तदेव वरुणविषयं स्तोत्रम् नक्तम् रात्रौ मह्यम् शुनःशेपाय आहुः कर्तव्यत्वेन अभिज्ञाः कथयन्ति । तथा दिवा अपि तत् एवाहुः । हृदः मदीयमनसो निष्पन्नः अयम् केतः प्रज्ञाविशेषोऽपि तत् एव कर्तव्यत्वेन आ वि चष्टे सर्वतो विशेषेण प्रकाशयति । गृभीतः गृहीतो यूपे बद्धः शुनःशेपः पुत्रकामको जनः यम् वरुणम् अह्वत् आहूतवान्, सः च वरुणः राजा अस्मान् शुनश्शेपान् मुमोक्तु । बन्धनात् मुक्तं करोतु ॥ १२ ॥

शुनःशेपो ह्यह्वद् गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद् विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥

शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

स्कन्द० 'शुनःशेपः हि हिशब्दो यस्मादर्थे । यस्माच्छुनःशेपः अह्वत् गृभीतः आदित्यम् अदितेः पुत्रं त्रिषु द्रुपदेषु बद्धः द्रुशब्दो दारुमयत्वाद् यूपे वर्तते । पदशब्दः स्थानवचनः । त्रिषु यूपप्रदेशेषु बद्धः । अध प्रदेशे पादयोर्बद्धः, मध्ये कट्याम्, उपरि शिरसि इत्यर्थः' ।

---

१-१. तदेव रात्रौ तदेवाहनि महान्तः कथयः ब्राह्मणा वा स्वादितः वि॰ अ कु.　२. भासि वि॰ अ कु.
३-३. ज्ञोतः स्वयम जाने । यत एवम् अतो ब्रवीमि । देवस्य नित्यत्वात् तत्कथाया अपि नित्यता कल्पे कल्पे । तस्मादतीते कल्पे यः शुनःशेपः स्वयमाहूतवान् अयमेव वा सः गृहीतो यम् अह्वत् । स राजा वरुणः अस्मान् अतो यूपात् मुमोक्तु । 'मन्त्रकृतेनविप्रः' इति मतान्ते । 'स्वरैर्भिः' (पासा ८,२,२३) इति गृभीतः वि॰ अ कु.
४-४. स शुनःशेपो अस्मादितिः पुत्रं ... त्रिषु यूपप्रदेशेषु बद्धः । 'बन्धिनो दुर्बलयतिः' । दारुमयत्वाद् यूपोऽत्र । पदं स्थानम् वि॰ अ कु.

[1]यद्यपि चैकस्मिन् यूपप्रदेशे पशोः शिरस्येव बन्धनं विहितं नान्यत्र । तथापि पुरुषपशोरर्थात् कट्यां पादयोश्चास्ति बन्धनम् । नहि शिरोमात्रबन्धनेन पुरुषो विशसितुं निश्चलः शक्यो धारयितुम् । यस्मात्त्रिष्विति वचनात् तच्छब्दोऽध्याहर्तव्यः[1] । तस्मात् आर्तानुकम्पित्वात् एनम् शुनःशेपम् राजा वरुण. अव ससृज्यात् अवसर्गो नामाभ्यनुज्ञा[2] । 'जीव त्वम् मा स्मैनं मारयत' इत्येवमनुजानीयादित्यर्थः । [3]अनुज्ञाय च विद्वान् तानर् अस्माकमार्तानां भक्तानां वा अदब्धः अहिंसितः वि मुमोक्तु पाशान् एतान् यैर्वयं बद्धाः[3] ॥ १३ ॥

वेङ्कट० शुनःशेपः हि[4] [5]अयम् देवम् आहूवनान्[5] गृहीतः त्रिपु यूपस्य स्थानेषु बद्धः अदितेः पुत्रम् । तम् वरुणः अवसृजतु । विद्वान् अहिंसितः पाशान्[6] वि मुमोक्तु । पाशविमोचनं फलमवसर्गस्य ॥ १३ ॥

मुद्गल० गृभीतः बन्धनाय गृहीतः त्रिपु त्रिसंख्याकेषु द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु बद्धः शुनःशेपः आदित्यम् अदितेः पुत्रं यं वरुणम् अह्वत् [7]आहूतवान् हि यस्माद्देवम्, तस्मात् सः वरुणः राजा एनम् शुनःशेपम् अव ससृज्यात्[7] । अवसृष्टं बन्धनात् विमुक्तं करोत्वित्यर्थः । विमोकप्रकार एव स्पष्टीक्रियते—विद्वान् विमोकप्रकाराभिज्ञः अदब्धः केनाप्यहिंसितः वरुणः पाशान् बन्धनरज्जुविशेषान् 'वि मुमोक्तु' विच्छिद्यैनं मुक्तं करोतु ॥ १३ ॥

अवं ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १४ ॥

अवं । ते । हेळः । वरुण । नमःऽभिः । अवं । यज्ञेभिः । ईमहे । हविःऽभिः ।
क्षयन् । अस्मभ्यम् । असुर । प्रचेत इति प्रऽचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥१४॥

स्कन्द० [8]अव इत्युपसर्गं ईमहे इत्याख्यातेन सम्बध्यते । अवपूर्वं ईमह इत्ययमपनयने वर्तते । अवेमहे अपनयामः । ते तव हेळः क्रोधम् । हे वरुण ! नमोभिः नमस्कारैः स्तुतिभिः । न च केवलैर्नमोभिः । किं तर्हि । अव यज्ञेभिः ईमहे सोमयागैश्चापनयामः । हविर्भिः चरुपुरोडाशादिभिः । अपनीतक्रोधश्च त्वम् क्षयन् क्षि निवासगत्योः इत्यस्यार्थं व्यत्ययेन । निवसन् इहागच्छन् वा अस्मभ्यम् अस्मदर्थम् हे असुर ! असवः प्राणा वहन् ! प्रचेत ! प्रकृष्टज्ञान ! राजन् ! दीप्त ! ईश्वर ! वा एनांसि पापानि शिश्रथः श्लथय मन्दविपाकानि कुरु । कृतानि यान्यस्माभिः[9] । [10]एतदुक्तं भवति[10]—

---

1-1. पशोश्शिरसु बन्धने न युज्यते । तद् पुरुषपशुत्वात् । न चेद् विशसने निश्चलो न स्थापिते पादयोः कट्यां च बन्धने । त्रि इति पञ्चम्यात् तच्छब्दश्च वि[1] अ कु. 2. अभ्यनुज्ञा वि[1] अ कु. 3-3. अनुज्ञाय अस्माकमार्तानां वा अहिंसितः वि मुमोक्तु पाशान् अस्मद्बन्धकरान् वि[1] अ कु. 4. नास्ति सायं[1] कु. 5-5 अयम् आहू[0] मास[1] छ. 6. पाशान् वि[1] छपं. 7-7. नास्ति वि मं[1]. 8-8. नास्ति वि. 9 9. हे वरुण तव क्रोधं नमोभिः यज्ञैः हविर्भिश्च अवेमहे अपनयामः । नमस्कारस्तुतिसोमयागपुरोडाशादिभिः अपनीतहेळः त्वम् क्षयन् क्षि निवासगत्योः । निवसन्निहागच्छन् वा अस्मदर्थं हे असुर असवः प्राणा । असुपि रः । प्राणवन्त्वम् प्रकृष्टज्ञान राजन् दीप्त ईश्वर वा पापानि श्लथय अस्माभिः कृतानि मन्दविपाकानि कुरु वि[1] अ कु. 10-10. नास्ति वि[1] अ कु.

[1]यैः पूर्वकृतैरपुण्यैर्बन्धनं मरणं च प्रापिता वयं तान्यतोऽपि तावत् परं मन्दविपाकानि कुरु[1], येन पुनरीदृशं दुःखं न प्राप्नुमः[2]। एनांसीति पाशा एव[3] वाऽभिप्रेताः। तानस्मदिप्रा कृतान् शिश्रथः। मुञ्चेत्यर्थः ॥ १४ ॥

वेङ्कट० अव अवगच्छतितिति[4] याचामहे। विनाशयामः तव वरुण[5]! नमस्कारैः क्रोधम्। एवं[6] यज्ञैः हविर्भि[7] च। निवसन् अस्मदर्थं बलवन्! प्राज्ञ! राजन्! कृतानि पापानि विनाशय ॥ १४ ॥

मुद्गल० हे वरुण! ते तव हेळः क्रोधम् नमोभिः नमस्कारैः[7] अव ईमहे अपनयामः। तथा यज्ञेभिः यज्ञैः साङ्गानुष्ठानेन पूज्यैः हविर्भिः अव ईमहे वरुणं परितोष्य क्रोधमपनयामः। हे असुर! अनिष्टक्षेपणशील! प्रचेत.! प्रकर्षेण प्रज्ञायुक्त! राजन्! दीप्यमान वरुण! अस्मभ्यम् अस्मदर्थम् क्षयन् अस्मिन् कर्मणि निवसन् कृतानि अस्माभिरनुष्ठितानि एनांसि पापानि शिश्रथः श्रथितानि शिथिलानि कुरु ॥ १४ ॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय।
अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥ १५ ॥

उत्। उ॒त्ऽत॒मम्। व॒रु॒ण॒। पाश॑म्। अ॒स्मत्। अव॑। अ॒ध॒मम्। वि। म॒ध्य॒मम्। श्र॒थ॒य।
अथ॑। व॒यम्। आ॒दि॒त्य॒। व्र॒ते। तव॑। अना॑गसः। अदि॑तये। स्या॒म॒ ॥ १५ ॥

स्कन्द० [1]उत् इत्युपसर्गः श्रथाय इत्यारव्यातेन सम्बन्धयितव्यः। उच्छ्रथाय ऊर्ध्वम् श्रथय। उत्तमम् वरुण! पाशम् अस्मत् अस्मत्तः। अव अधमम् अधममपि श्रथय। वि मध्यमम् श्रथाय मध्यमं श्रथय। त्रयाणि स्थितं विमुञ्चेत्यर्थः। अथ पाशत्रयविमोक्षानन्तरम् वयम् हे आदित्य! अदितेः पुत्र! व्रते यागकर्मणि तव स्वभूते। त्वद्देवत्ये याग इत्यर्थः। अनागसः अपगतपापाः अदितये 'अदितिः' (निघ १,११) इति वाङ्नाम। तादर्थ्ये चतुर्थी। स्तुतिलक्षणवागर्थम् स्याम भवेम। त्वद्देवत्ये यागे त्वां स्तुयामेत्यर्थः[8] ॥ १५ ॥

वेङ्कट० उत्तमम् वरुण! पाशम् उत् श्रथय[1] अस्मत्तः मध्यमम् वि श्रथय[1], अव श्रथय[1] अधमम्। अत ऊर्ध्वम् अदितेः पुत्र! त्वत्स्वामिके ससन्ध्यावन्दनादिके[10] व्रते प्रमादरहिताः अस्यै पृथिव्यै स्याम अमृताः सन्तः ॥ १५ ॥

मुद्गल० हे वरुण! उत्तमम् उत्कृष्टं शिरसि बद्धम् पाशम् अस्मत् अस्मत्तः उत् श्रथाय उत्कृष्य शिथिलीकुरु। अधमम् निकृष्टं पादेऽवस्थितं पाशम् अव श्रथाय अधस्तादवकृष्य शिथिलं कुरु।

1-1. पूर्वकृतानि[?]ऽहं बन्धनमरणे प्रापितः। तान्यतोऽपि तावत् शिथिलय वि[1] अ कु. 2. प्राप्नुयाम् वि[1] अ कु. 3. नास्ति साम्ब. 4. गच्छतीति वि[1] लपं; अवगच्छ सम् इ शोधः. 5. नास्ति मु. 6. अप इ साम्ब[1]; एव साम्ब[1]. 7. नास्ति वि[1]. 8-8. हे वरुण उत्तमं पाशं शीर्षगत बद्धम् ऊर्ध्वं श्लथय अस्मत्तः। अधमं पादयो बद्धम् अव श्लथय। मध्यमं बद्धम् बद्धं वि श्लथय। त्रीनपि पाशान् विमुञ्च। अथ पाशत्रयविमोक्षानन्तरं वयं हे आदित्य तव यागकर्मणि त्वद्देवत्ये अस्मिन् यागे अनपगतपापाः भवेम। अदितिर्वाङ् स्तुतिः। स्तुत्ये वि[1] अ कु. [illegible]

मध्यमम् [1]नाभिप्रदेशगत पाशम् वि श्रथाय विमुच्य शिथिलीकुरु । अथ अनन्तरम् हे आदित्य! अदितेः पुत्र! वरुण! वयम् शुनःशेपाः[2] तव व्रते त्वदीये कर्मणि अदितये खण्डनराहित्याय अनागसः अपराधरहिताः स्याम भवेम ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये पञ्चदशो वर्गः ॥

[२५]

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥ १ ॥

यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतम् । मिनीमसि । द्यविऽद्यवि ॥ १ ॥

स्कन्द० [3]यत् इति निपातो यद्विशब्दस्यार्थे । चित् शब्दोऽप्यर्थे । हिशब्दः पदपूरण । यदपि ते तव विशः यथा यथैवान्ये मनुष्या तद्वद् वयमपि हे देव! वरुण! व्रतम् यागकर्म प्र मिनीमसि मीञ् हिंसायाम् । प्रकर्षेण हिंस्म । द्यविद्यवि अहन्यहनि । का पुनर्यागकर्मणो हिंसा । प्रमादेनाकरणम् । यद्यप्यन्यमनुष्यवत् अहन्यहनि प्रमादेन यागं न कुर्म इत्यर्थः । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । उत्तरयर्चैकवाक्यता । तथापि सा न इत्यादि । अथवा यच्चिद्धि त इति यच्छब्दो लुप्तविभक्तिः यस्माच्छब्दस्य येशब्दस्य वार्थे । चिद्धि शब्दौ द्वावपि पदपूरणौ । प्र मिनीमसि इत्यपि माङ् माने इत्यस्य रूपम् । यस्माद् ये च वयं तत्रान्यमनुष्यवत् कर्म सायंप्रातरुपस्थानं यागकर्म वा प्र मिनीमसि प्रकर्षेण मिमीमहे । कुर्म इत्यर्थः । कदा । अहन्यहनि । तस्मात् तान् वा[4] ॥ १ ॥

वेङ्कट० यत् वयम्[5] तव अन्यमनुष्यवत् असत्यमेवादिकरणात् व्रतम् अन्वहम् हिंसामस्तत्सर्वं क्षमस्व इति । सूक्तोपक्रमपु[6] क्रियापदमनेकत्र न[7] दृष्टमिति ॥ १ ॥

मुद्गल० 'यच्चित्' इत्येकविंशत्यृचं "द्वितीयं सूक्तम्" । 'शुनःशेप ऋषिः' । 'गायत्रम्' । 'वारुणम्' ।

हे वरुण देव! लोके यथा विशः प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि ते तव सम्बन्धि यच्चिद्धि यदपि किञ्चित् व्रतम् कर्म द्यविद्यवि प्रतिदिनम् प्र मिनीमसि प्रमादेन हिंसितवन्तः । तदपि मम प्रमादपरिहारेण साङ्गं कुर्विति शेषः ॥ १ ॥

---

१-१. °देशग° मै[1]. २. °शेपा वि[1]. ३-३. यदपि तव विशः अन्ये मनुष्या यथैव तद्वद्वयमपि हे देव वरुण यागकर्म प्रकर्षेण हिंस्महे अहन्यहनि । प्रमादेन करणमस्य यागस्य हिंसा । यद्यपि अन्यमनुष्यवदहन्यहनि प्रमादेन यागं कुर्मः तथापि मा त्वं ताडनाय हननाय न पूर्वकृतस्य वशे नैषीरिति वा । यदिति अत्र ... । न मां हिंसय । माङ् माने इत्येव । ये वयं हे देव वरुण! तव अन्यमनुष्यवत् सन्ध्यानु उपस्थान कुर्मः । यागं वा नित्यं ... वा । तस्मात्तान्वा वि[1] ... ४. अयं वि[1] रूप ... ५. मूलोक्तमेषु वि[1] ... ६. नास्ति वि[1] अ[1]. ७-७. नास्ति वि मै[1]. ८-८. शौन शेप मै[1]. ९-९. गायत्रं । वारुणो देवता मै[1].

मा नो॑ व॒धाय॑ ह॒त्नवे॑ जिहीळा॒नस्य॑ रीरधः । मा हृ॑णा॒नस्य॑ म॒न्यवे॑ ॥ २ ॥

मा । नः॒ । व॒धाय॑ । ह॒त्नवे॑ । जि॒ही॒ळा॒नस्य॑ । री॒र॒धः॒ । मा । हृ॒णा॒नस्य॑ । म॒न्यवे॑ ॥ २ ॥

स्कन्द० [1]मा नः अस्मान् वधाय हत्नवे वधस्ताडनम् । हत्नुः हननं मारणम् । ताडनाय मारणाय वा । जिह्रीळानस्य हेळ इति क्रुध्यतिकर्मा ( द्र. निघ २,१२ ) । भूते चायं लिट् । पूर्वं क्रुद्धस्य । रीरधः रध्यतिर्वशगमने । वशं नैषीः । यस्ताडयति मारयति तस्य पूर्वं क्रुद्धस्य माऽस्मान् वश्यान् कार्षीरित्यर्थः । मा हृणानस्य 'हृणिः' ( निघ २,१३ ) इति क्रोधनामसु पाठात् हृणिरिति क्रोधार्थोऽपीरयत्रगम्यते । व्यत्ययेन वा श्नाविकरणः । धात्वन्तरं वा हृण् । वर्तमाने लट् । तदानीमेव क्रुध्यतः । मन्यवे क्रोधाय । योऽपि साम्प्रतमेव क्रोद्धुमिच्छति । तस्यापि क्रोधार्थं माऽस्मान् वश्यान् कार्षीरित्यर्थः[1] ॥ २ ॥

वेङ्कट० मा अस्मान् सायुधाय हन्त्रे क्रुद्धस्य स्वभूताय वशं नय । मा च हृणानस्य मन्यवे । हिंसापरो हृणानः ॥ २ ॥

मुद्गल० हे वरुण ! जिहीळानस्य अनादरं कृतवतः हत्नवे हन्तुः पापहननशीलस्य तव सम्बन्धिने त्वत्कर्तृकाय वधाय नः अस्मान् मा रीरधः संसिद्धान् विषयभूतान् मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव[2] मन्यवे क्रोधाय मा अस्मान् रीरधः ॥ २ ॥

वि मृ॑ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम् । गी॒र्भिर्व॑रुण सीमहि ॥ ३ ॥

वि । मृ॒ळी॒काय॑ । ते॒ । मनः॑ । र॒थीः । अश्व॑म् । न । सम्ऽदि॑तम् । गीः॒ऽभिः । व॒रु॒ण॒ । सी॒म॒हि॒ ॥ ३ ॥

स्कन्द० [3]वि इत्युपसर्गः सीमहि इत्याख्यातेन सम्बन्धयितव्यः । मृळीकाय सुखाय जीवितलक्षणायात्मनः ते तव स्वभूतम् मनः हविर्भूतो मयायं भक्षयितव्य इत्येवं रूपं मदस्मास्वाबद्धचित्तं तत् । रथीः अश्वम् न सन्दितम् दितिरत्र बन्धनार्थः 'शुनश्चिच्छेपं निदितम्' ( ऋ ५,२,७ ) इति यथा । यथा रथीः सारथिरश्वं रथे बद्धमेवं वयम् गीर्भिः स्तुतिभिः हे वरुण ! वि सीमहि । विपूर्वस्य स्यतेरिदं रूपम् । स्यतिश्चोपसृष्टो विमोचने वर्तते । विमुञ्चामः । अथवा षिञ् बन्धने इत्यस्यैतद्रूपम् । विगतबन्धं कुर्मः । अपनयाम इत्यर्थः[3] ॥ ३ ॥

वेङ्कट० सुखार्थं सारथिः बद्धम् इव अश्वम् तव क्रुद्धम् मनः स्तुतिभिः विमोचयाम इति[4] ॥ ३ ॥

---

1-1. अस्मान् वा । वधस्ताडे । हत्नुर्मरणे । हेळः क्रुद्धे । 'लिट. कानज्वा' (पा ३,२,१०६) इति । भूते वा लिट् । रध वशगमने । योऽस्मान् ताडयति मारयति च तस्य पूर्वक्रुद्धस्य मा वश्यान् कार्षीः । हृण क्रोधे । हृन् वा । श्ना व्यत्ययेन । वर्तमाने लटः शानच् च । इदानीं क्रुध्यतः । यः साम्प्रतमेव क्रोद्धुमिच्छति तस्यापि क्रोधार्थं माऽस्मान् वश्यान् कार्षीः वि[1] भ कु. 2. नास्ति वि भै[2]. 3-3. आत्मनो जीवितलक्षणाय सुखाय तव मनः मद्विरमे । एतं भक्षयामि इति रथीः सारथिः । दि बन्धने । रथे सम्यक् बद्धमश्वं रथीर्यथा विमोक्ष्यति तद्वत् स्तुतिभिः हे वरुण विषीमहि विगतं बन्धं कुर्मः । वेः स्यतिर्विमोचने । विमुञ्चामः । षो अन्तकर्मणि इति स्यति षिञ् बन्धने इत्यस्यैव वा । विगतबन्धं कुर्मः त्वमनः वि[1] भ कु. 4. नास्ति कु साम्य.

मुद्गल० हे वरुण ! मृळीकाय अस्मत्सुखाय ते तव मन गीर्भिः स्तुतिभिः वि सीमहि विबध्नीमः । प्रसादयाम इत्यर्थः । दृष्टान्तः । रथी 'रथस्य स्वामी' सदितम् सम्यक् खण्डितं दूरगमनेन श्रान्तम् अश्वम् न अश्वमिव । यथा स्वामी श्रान्तमश्वं यवसप्रदानादिना[2] प्रसादयति तद्वत् ॥३॥

परा हि मे विमन्यवः पतन्ति वस्यइष्टये । वयो न वसतीरुप ॥ ४ ॥

परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये । वयः । न । वसतीः । उप ॥ ४ ॥

स्कन्द० [1]परा वि इत्युपसर्गौ पतन्ति इत्याख्यातेन सम्बन्धयितव्यौ । हिशब्दः पदपूरणः । मे मम मन्यवः 'मन्यते, छन्त्सत्' (निघ २,६) इति कान्तिकर्मसु पाठात् मन्यतिरत्र कान्तिकर्मा । मननानि मन्यवः कामाः वि परा पतन्ति विविधं त्वां प्रति प्राप्नुवन्ति । वस्यइष्टये इष गतौ । शुद्धोऽपि चात्र सामर्थ्यात् सोपसर्गार्थो द्रष्टव्यः । वसुनोऽधिगत्यै त्वत्तो धनं लब्धुमित्यर्थः । कथं पुनः परापतन्ति । उच्यते । वयः न पक्षिण इव । वसती उप उपशब्दः प्रतिशब्दस्यार्थे । स्वानि निवासस्थानानि प्रति[1] ॥ ४ ॥

वेङ्कट० मम विविधा इच्छाबुद्धयः[4] श्रेयसः[5] इच्छार्थं वरुणं राजानं प्रति परा पतन्ति । यथा पक्षिण आवासस्थानान्यनुभूतानि[6] उप गच्छन्ति ॥ ४ ॥

मुद्गल० हे वरुण ! मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयः[7] वस्यइष्टये वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्त्यै परा पतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हिशब्दो प्रसिद्धौ सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः—वयः न पक्षिणो यथा वसती निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत् ॥ ४ ॥

कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसम् ॥ ५ ॥

कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे । मृळीकाय । उरुऽचक्षसम् ॥ ५ ॥

स्कन्द० [8]कदा कस्यां वेलायाम् क्षत्रश्रियम् क्षत्रं बलं धनं वा श्रयति क्षत्रश्रीर्बलवान् धनवान् वा तं क्षत्रश्रियम् । नरम् मनुष्याकारम् वरुणम् आ करामहे अर्वागागमाभिमुखं करिष्याम इत्यर्थः । मृळीकाय सुखाय जीवितलक्षणायात्मनः । कीदृशम् । उरुचक्षसम्[8] बहूनां द्रष्टारं बहुदर्शनं वा । विमोचनविलम्बनात् परिदेवनैषा ॥ ५ ॥

वेङ्कट० बल[9] [10]च श्रयति[10] कदा तम् नेतारम् वरुणम् अभिमुखं कुर्मः सुखार्थं बहूनां द्रष्टारम् ॥ ५ ॥

1-1 °रथस्वामी वि मै[1], °स्वामी यमश्वम् मै[2] २ धान्यप्रदा° मै[1] ३-३ मन कामे । कामा वि परा पतन्ति विविधं त्वां प्रति प्राप्नुवन्ति वस्यइष्टये इष गतौ । वसुन प्राप्तये धनस्याधिगत्यै । यथा पक्षिणः स्वनिवासस्थानानि प्रति तद्वत् वि[1] भ कु ४ बुद्धय वि[1] एप ५ श्रेयस° ए वि[1] ६ आवासस्थानानि सान्त ७ °बुद्धय सीदरश मूको ८-८ कदा क्षत्रे बलधनयो । तद्वत् श्रयति तम् । बल्वान् धनवान्वा । नराकारं वरुणमाकरामहे अर्वागागमाभिमुखं करिष्याम । प्राणजीवनसुखाय वि[1] भ क ९ नास्ति वि[1] १०-१० वत यत्र ल वि[1], यत्र श्री साम्ब] यत्र यत्र श्री भ[1] साम्ब[2]

मुद्गल० मृळीकाय अस्मत्सुखाय वरुणम् कदा कस्मिन् कर्मण्यागतं करवाम। कीदृशम्। क्षत्रश्रियम् बलसेविनम् नरम् नेतारम् उरुचक्षसम् बहूनां द्रष्टारम्॥ ५॥

इति प्रथमाष्टके द्वितीयाध्याये षोडशो वर्गः।

तदित् समानमाशाते वेनन्ता न प्र युच्छतः। धृतव्रताय दाशुषे॥ ६॥

तत्। इत्। समानम्। आशाते इति। वेनन्ता। न। प्र। युच्छतः। धृतऽव्रताय। दाशुषे॥ ६॥

स्कन्द० [1]इत् शब्दः पदपूरणः। तत् समानम् साधारणं वा। सहभूतौ आशाते व्याप्नुतो भक्षयतो वा। कौ। द्विवचननिर्देशात् साहचर्याच्च मित्रावरुणौ। वेनन्ता कामयमानौ। किं पुनस्तत्। सामर्थ्याद् यद् यजमानः केवलाय हि वरुणाय मित्राय वा हविर्ददाति। न प्र युच्छतः युच्छ प्रमादे। न प्रमाद्यतः अवश्यमाशाते इत्यर्थः। किमर्थम्। धृतव्रताय धृतमपरित्यक्तं स्वकर्म येन स धृतव्रतः तस्मै दाशुषे यजमानाय। यजमानस्योपकर्तुमित्यर्थः। अथवा एवमन्यथाऽस्या ऋचो योजना—आशाते इति लोडर्थे लट्। तत् समानमश्नुवातां कामयमानौ। आत्मन एवेदं परोक्षरूपेण प्रथमपुरुषेणाभिधानं द्रष्टव्यम्। आवां शुनःशेपहरिश्चन्द्रावश्नुवावहा इत्यर्थः। किं तत्। सामर्थ्यादायुः। किं कारणम्। यतो न प्रयुच्छतः। इदमपि पूर्ववत् प्रथमपुरुषेणात्मन एवाभिधानम्। यतो यागे स्तुतौ न प्रमाद्याव इत्यर्थः। किमर्थम्। धृतव्रताय दाशुषे स्वकर्मणामपरित्यक्तृत्वात् धृतव्रतो वरुणः। स एव दाश्वान् स्तोतृभ्यः कामानां दातृत्वात्। तदर्थौ वरुणार्थौ यो यागः या स्तुतिर्वा तत्र यतो न प्रमाद्याव इत्यर्थः[1]॥ ६॥

वेङ्कट० तदानीमेव सह आगच्छतो[2] मित्रावरुणौ कामयमानौ। न च प्रमाद्यत धृतकर्मणे यजमानाय कर्मपौष्कल्यार्थमिति[3]॥ ६॥

मुद्गल० धृतव्रताय अनुष्ठितकर्मणे। दाशुषे हविर्दत्तवते यजमानाय वेनन्ता कामयमानौ मित्रावरुणाविति शेषः। तावुभौ समानम् साधारणम् तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते। न प्रयुच्छतः कदाचिदपि प्रमादं न कुरुतः॥ ६॥

वेदा यो वीनां पदमन्तरिक्षेण पतताम्। वेद नावः समुद्रियः[4]॥ ७॥

वेद। यः। वीनाम्। पदम्। अन्तरिक्षेण। पतताम्। वेद। नावः। समुद्रियः[4]॥ ७॥

---

१-१. अशू व्याप्तौ। अश भक्षणे। तत् यजमानः यद्धविर्ददाति तत् साधारणं मित्रावरुणयोः। तौ व्याप्नुतो भक्षयतो वा। विन कामने। रोता च गुणश्च। कामयमानौ। युच्छ प्रमादे। यजमानः केवलाय वरुणायैव ददाति चेत् अवश्यं उभावपि आशाते। न प्रमाद्यतः अपरित्यक्तकर्मणे यजमानायोपकर्तुम्। अथवा आशाते इति लोटि लट्। व्यत्ययेन अत्र वहौ। आवां हरिश्चन्द्रशुनःशेपौ तत् साधारणमायुः अश्नवावहै कामयमानौ। न प्रमाद्याव.। अत्रापि तम् वनि। यागे स्तुतौ। यतः स्वकर्मणामपरित्यक्ता स्तोतृभ्यः कामानां दाता च वरुणाय यो यागः स्तुतिर्वा तत्र यतो न प्रमाद्यावः ततः आयुरश्नवावहै वि' ध कु. २. आगच्छन्तौ वि". ३. पौष्कल्यार्थं साम्ब कु. ४. तु. वैप १,३२०१ j.l.

स्कन्द० [1]य कीदृशो वरुण उच्यते—†'वेदा यो वीनाम्' इति† । वेद जानाति य वरुण वीनाम् पक्षिणाम् पदम् अन्तरिक्षेण पतताम् गच्छताम् । दुर्ज्ञानं हि पांसुवर्जितेनान्तरिक्षेण गच्छता पदम् । न च वीनामेव केवलम् । किं तर्हि । वेद नाव पदमपि समुद्रिय समुद्रियाया समुद्रे भवाया । समुद्रेण गच्छन्त्या इत्यर्थः । एतदपि दुर्ज्ञानमेव[1] ॥ ७ ॥

वेङ्कट० [2]प्रजानाति य[3] अन्तरिक्षेण[3] गच्छताम् पक्षिणाम् आवासस्थानं यत्र सायं वसन्ति[4] । वेद च नाव समुद्रेण [5]गच्छन्तीः । मनुष्यास्तु[5] पतत[6] पश्यन्ति विसृज्यमानाश्च नावः । [7]न तु तेषामावासम्[7], न च[8] विसर्गस्थानमिति ॥ ७ ॥

मुद्गल० अन्तरिक्षेण पतताम् आकाशमार्गेण गच्छताम् वीनाम् पक्षिणाम् पदम् य वरुण वेद । तथा समुद्रिय समुद्रेऽवस्थितो वरुण नाव जले गच्छन्त्या पदम् वेद जानाति । सोऽस्मान्[8] बन्धनात् मोचयतु इति शेष ॥ ७ ॥

वेद॒ मासो॑ धृ॒तव्र॑तो॒ द्वाद॑श प्र॒जाव॑तः । वेदा॒ य उ॑प॒जाय॑ते ॥ ८ ॥

वेद॑ । मासः॑ । धृ॒तऽव्र॑तः । द्वाद॑श । प्र॒जाऽव॑तः । वेद॑ । यः । उ॒प॒ऽजाय॑ते ॥ ८ ॥

स्कन्द० [10]यश्च वेद मास मासान् धृतव्रत अपरित्यक्तस्वकर्मा द्वादश । कीदृशान् । प्रजावत प्रजननवत । उत्पत्तिमत इत्यर्थः । अथवा प्रजासहितान् । प्रजा अपि वेदेत्यर्थः । न च द्वादशैव केवलान् । किं तर्हि । वेद य योऽयम् उपजायते अधिकमासस्त्रयोदश तमपि[10] ॥ ८ ॥

वेङ्कट० वेद द्वादश मासान् धृतसन्ध्यावन्दनादिकर्मा स्वेस्वे काले प्रजायमानानृतुभिः । त्रयोदशमुपजायमानमधिमास च वेत्ति ॥ ८ ॥

मुद्गल० धृतव्रत स्वीकृतकर्मविशेष यथोक्तमहिमोपेतो वरुण प्रजावत तदा तदोत्पद्यमान प्रजायुक्तान् द्वादश मास चैत्रादीन् फाल्गुनान्तान् वेद जानाति । य त्रयोदशोऽधिकमास उपजायते संवत्सरसमीपे स्वयमेव उत्पद्यते तमपि वेद ॥ ८ ॥

वेद॒ वात॑स्य वर्त॒निमु॒रोर्ऋ॒ष्वस्य॑ बृह॒तः । वेदा॒ ये अ॒ध्यास॑ते ॥ ९ ॥

वेद॑ । वात॑स्य । व॒र्त॒निम् । उ॒रोः । ऋ॒ष्वस्य॑ । बृ॒ह॒तः । वेद॑ । ये । अ॒धि॒ऽआस॑ते ॥ ९ ॥

---

१-१. यो वरुणोऽन्तरिक्षेण गच्छतां पदं वेद पक्षिणामपि । पांसुवर्जितत्वाद् दुर्ज्ञेयमपि वीनां च अवेद्यं च पदं जानाति । समुद्रे भवाया अपि नाव पदं च यो वेद वि[०] अ[०] कु. †-† नास्ति मूको. २-२. य प्रजा[०] कु प्रजानाति साम्ब. ३. अन्तरिक्षे अ[०] वि[०] छ[०]. ४. वसन्ति वि[०]. ५. गच्छन्ती मनु[०] वि[०] अ[०]; [०]नौमनुष्यास्तु वि[०] छ[०]. ६. पक्षिण कु. ७-७. न तेषामावा[०] वि[०] अ[०]. ८-८. नास्ति साम्ब कु. ९. [०]स्मान् मूको. १०-१०. योऽपरित्यक्तकर्मा द्वादश मासान् वेद । मा चन्द्रमा । तस्मै मा इति षष्ठे । द्वादश मासा एवाव । प्रजासहितान् । प्रजा अपि वेद । य उपजायते तमपि । उपजायते त्रयोदश इति अधिमास तम् ( [०]मासतम् वि[०] अ[०] ) वि[०] अ[०] कु.

स्कन्द० [1]वेद वातस्य वर्तनिम् गमनमागमनम् । कीदृशस्य । उरोः विस्तीर्णस्य ऋष्वस्य महन्नामैतत् (द्र. निघ ३,३) । महतः बलवत इत्यर्थः । बृहतः एतदपि महन्नामैव (द्र. निघ ३,३) । वेगेन सम्बन्धेन त्वपुनरुक्तिः कर्तव्यम् । महतः । वेगेन शीघ्रस्येत्यर्थः । यश्च वेद ये अधि सर्वस्योपरि द्युलोके आसते देवाः तान् । य एतानि वेद तस्मै वरुणाय 'न प्रयुच्छतः । धृतव्रताय दाशुषे' ( ऋ १,२५,६ ) इत्येवं यच्छब्दस्य पूर्वयैकवाक्यता । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्योत्तरयैकवाक्यता वा योज्या । य एतानि वेद सः[1] ॥ ९ ॥

वेङ्कट० वेद वायोः आवासस्थानं विस्तीर्णस्य दर्शनीयस्य महतः । वेद च नक्षत्राणि यानि दिवि अध्यासते ॥ ९ ॥

मुद्गल० उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिम् मार्गम् वेद वरुणो जानाति । ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति ॥ ९ ॥

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ १० ॥

नि । ससाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ । साम्ऽराज्याय । सुऽक्रतुः ॥ १० ॥

स्कन्द० [2]नि षसाद निषीदति धृतव्रतः वरुणः । क । पस्त्यासु 'पस्त्यम्' ( निघ ३,४ ) इति गृहनाम । †कुटीत्वाभिप्रायमेतत्† । लोकपालत्वात् सर्वेषु गृहेषु वा । आकारस्तु पदपूरणः । किमर्थम् । साम्राज्याय सर्वयज्ञस्याधिपत्याय । कीदृशः । सुक्रतुः सुकर्मा सुप्रज्ञो वा[2] ॥ १० ॥

वेङ्कट० स[3] निषीदति धृतकर्मा वरुणः गृहभूतासु नदीषु साम्राज्यं कुर्वन् सुप्रज्ञः ॥ १० ॥

मुद्गल० धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ नि ससाद आगत्य निषण्णवान् । किमर्थम् । प्रजानाम् साम्राज्याय साम्राज्यसिद्ध्यर्थम् । सुक्रतुः शोभनकर्मा ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये सप्तदशो वर्गः ।

अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ॥ ११ ॥

अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति । कृतानि । या । च । कर्त्वा ॥ ११ ॥

---

१-१. यश्च वायोर्मार्गं विस्तीर्णस्य महतो बलवतो महतो वेगेन शीघ्रस्य । उरुर्विस्तीर्णे । ऋष्वबृहती महति व्याप्तौ बले वेगे च स्तो । व्याप्तस्य महाबलवतः महावेगवत इत्यर्थः । ये उपरि आसते देवादयः तांश्च यो वेद तस्मै वरुणाय न प्रयुच्छतः । तद् यागान् स्तुतीश्च कुर्व एव वि[1] अ कु. २-२. य एतानि वेद स निषसाद इति वा धृतकर्मा वरुणः सर्वेषां वा यज्ञस्य वा लोकपालत्वात् 'कुटी कृत्वाभिप्रायो ऽपत्' (पा ५,३,८९) गृहेषु सर्वयज्ञस्याधिपत्याय निषीदति सुकर्मा सुप्रज्ञश्च । पस्त्या हर्म्यं गयः पदम् इति गृहे वि[1] अ कु. †-† कुटीत्वाभिप्राय ···· मूको. ३. नास्ति साम्द[3] ह.

स्कन्द० [1]अतः इति पञ्चमीनिर्देशादागत्येति शेषः । अतो द्युलोकादागत्य । अथवा अत इति सप्तम्यर्थे पञ्चमी । अत्र पृथिव्याम् । विश्वानि सर्वाणि अद्भुता महान्ति शुभान्यशुभानि वा कर्माणि चिकित्वान् ज्ञाता वरुणः लोकपालत्वात् अभि पश्यति । यस्य प्राणिनो यान्यशुभानि शुभानि वा कर्माणि तस्य लोकपालत्वात् प्रत्यवेक्षत इति कृतानि यानि या च कर्त्वा यानि कर्तव्यानि । य इदं करोति[1] ॥ ११ ॥

वेङ्कट० अस्माद् वरुणादेवंजातीयकानि विश्वानि आश्चर्याणि प्राज्ञः अभि पश्यति, यान्यनेन कृतानि यानि च कर्तव्यानि ॥ ११ ॥

मुद्गल० अतः अस्मात् वरुणात् विश्वानि अद्भुता[2] सर्वाणि आश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतोऽवलोकयति । या कृतानि यानि आश्चर्याणि पूर्वं वरुणेन सम्पादितानि । चकारात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः परं कर्तव्यानि । तानि सर्वाण्यभिपश्यतीति पूर्वेणा न्वयः ॥ ११ ॥

स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ॥१२॥

सः । नः॒ । वि॒श्वाहा॑ । सु॒ऽक्रतुः॑ । आ॒दि॒त्यः । सु॒ऽपथा॑ । क॒र॒त् । प्र । नः॒ । आयूं॑षि । ता॒रि॒ष॒त् ॥१२॥

स्कन्द० [3]सः नः अस्मान् विश्वाहा विश्वाहोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते । सर्वदा । सुक्रतुः सुप्रज्ञः सुकर्मा वा आदित्यः सुपथा करत् करोतिः क्रियासामान्यवचनः । सामर्थ्यादत्र नयने वर्तते[3] । शोभनेन पथा नयतु । सर्वदाऽभिप्रेतेषु तं तं पन्थानमुपदिशतु येन प्रवृत्ता वयमभिप्रेतानि प्राप्नुम [4]इत्यर्थः । किञ्च प्र नः आयूंषि तारिषत् प्रपूर्वस्तरतिर्वर्धने । वर्धयतु नः अस्माकमायूंषि[4] ॥ १२ ॥

वेङ्कट० स अस्मान् सर्वदा सुक्रतुः आदित्यः शोभनेन पथा कृणोतु[5] । अस्माकम् आयूंषि च प्र तारयतु ॥ १२ ॥

मुद्गल० सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेषु अहस्सु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु[6] । किञ्च नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु ॥ १२ ॥

बिभ्र॑द् द्रा॒पिं हि॑र॒ण्ययं॒ वरु॑णो वस्त नि॒र्णिज॑म् । परि॒ स्पशो॒ नि षे॑दिरे ॥ १३ ॥

बिभ्र॑त् । द्रा॒पिम् । हि॒र॒ण्यय॑म् । वरु॑णः । व॒स्त॒ । निः॒ऽनिज॑म् । परि॑ । स्पशः॑ । नि । से॒दि॒रे ॥१३॥

---

1-1. अतो द्युलोकादागत्य अत्र पृथिव्यामिति वा । अतो इति । 'अद्भुतं भवति कर्तव्यम्' इति कर्माणि । लोकानां शुभाशुभकर्माणि ज्ञाता प्रत्यवेक्षते लोकपालत्वाद् वरुणः कृतानि यानि च कर्तव्यानि । यस्य प्राणिनो यानि शुभाशुभानि तस्य तत्फलदानार्थं प्रतिपालयते वि॰ अ कु. 2. अद्भुतानि वि मै॰. 3-3. य इदं करोति स आदित्यः सुप्रज्ञः सुकर्मा वा अस्मान् सोपायान् वि॰ अ कु. 4-4. प्रवर्धयतु अस्माकम् आयूंषि च । प्राप्नोतीति वि॰ अ कु. 5. कृणोतु साम्य शोधः 6. अकरोत् वि.

स्कन्द० [1]बिभ्रत् उदयोत्तरकाले धारयन् द्रापिम् हिरण्ययम् कवचं हिरण्मयम् वरुणः वस्ते वस आच्छादने। महता तेजसा आच्छादयति। निर्णिजम् 'निर्णिक्' (निघ ३,७) इति रूपनाम। आत्मीयं रूपमिति। तेजस्वित्वाद्ध्यादित्यस्य रूपं नोपलभ्यते। स्पशः च तदीयास्तत्परा रश्म्याख्याः[2] परि नि षेदिरे कृताकृतप्रत्यवेक्षणार्थं प्राणिनां सर्वतो[3] निषीदन्ति। अथवा निर्णिगिति घटादि द्रव्यरूपम् अभिप्रेतम्[4]। उदयोत्तरकालमाबद्धहिरण्मयकवचो वरुणः रश्मिभिराच्छादयति [4]घटादिद्रव्यगतं रूपम्[4]। रश्मिभिस्तमोऽपनीय यावत् किञ्चिद् रूपं तत् सर्वं प्रकाशयतीत्यर्थः। तत्सहचरिताश्च देवानां स्पशः [5]प्राणिनां प्रत्यवेक्षार्थं[5] सर्वतो [6]निषीदन्तीति पुराणेषु प्रसिद्धम्[6]—

'आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्' ॥ इति ॥ १३ ॥

वेङ्कट० बिभ्रत् कवचं हिरण्मयम् वरुणः आच्छादयति रूपं दीप्तम्। परितश्चैनं निषीदन्ति ज्ञापकाः रश्मयः ॥ १३ ॥

मुद्गल० हिरण्ययम् सुवर्णमयम् द्रापिम् कवचम् बिभ्रत् धारयन् वरुणः निर्णिजम् पुष्टम् स्वशरीरम् वस्ते आच्छादयति। स्पशः हिरण्यस्य स्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः ॥ १३ ॥

न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम्। न देवमभिमातयः ॥ १४ ॥

न। यम्। दिप्सन्ति। दिप्सवः। न। द्रुह्वाणः। जनानाम्। न। देवम्। अभिऽमातयः ॥ १४ ॥

स्कन्द० [7]न यम् दिप्सन्ति दम्भोर्वधकर्मणः (द्र निघ २,१९)। जिघांसन्ति। दिप्सवः जिघांसकाः असुराः। न[8] द्रुह्वाणः द्रोग्धारः। कस्य। जनानाम् मनुष्याणाम्। न यमात्मीया हिंसका असुरा नापि मनुष्याणां हिंसकाश्चोरादयो हिंसन्तीत्यर्थः। न अपि यम् देवम् अभिमातयः अभिमातिशब्दोऽत्र हिंसावचनः। 'ते हि ष्मा वनुषो नरोऽभिमातिं कयस्य चित्' (ऋ ८,२५,१५) इति यथा। असुरैश्चोरादिभिः प्रयुज्यमाना हिंसा[7] ॥ १४ ॥

---

१ १ उदयोत्तरकाले 'द्रापिरस्त च निर्णिज' इति कवचे। धारयन् कवचं हिरण्ययम्। वरुण आच्छादयति रूपम्। वस आच्छादने। 'वप्मा निर्णिग्वपु ष्सर' इति रूपे। 'नामोस्य समिध स्पश' इति रश्मिषु। वरुण रश्मय त्रि[1] अ कु　२ २ परितः त्रि[1] अ कु　३ ३ अनात्मरूपम त्रि[1] अ कु　४ ४ °द्रव्यरूपं त्रि[1] अ कु　५ ५ प्राणिकमज्ञानार्थं त्रि[1] अ कु　६ ६ निषीदन्ति कतमे थाने पौराणिका रहस्यमाह्निका आहु साम्ब[7]? ७ ७ दम्भु हिंसायाम्। 'धातो कर्मण समानकर्तृकादिच्छायां वा (पा ३,१,७) इति सन्। 'सन्यडो' (पा ६,१,९) इति द्वि। 'हलादि शेष' (पा ८ ४,६०)। 'खरि च' (पा ८,४,५५) इति चर्त्वम् अभ्यासलोपश्च। 'अत्र लोपोऽभ्यासस्य' (पा ७ ४,५८) इति। 'दम्भ इच्च' (पा ७ ४,५६) इति दिप्सा (°प्साऽस्यान्न त्रि[1] अ)। 'सनाशंसभिक्ष उ' (पा ३ २ १६८) इति दिप्सु। दिप्सवो राधस स्थ' इति गुणौ। द्रुह द्रोह। अभिमातिर्हिंसा। यं वरुण जिघांसका असुरा न जिघांसन्ति। नापि द्रोग्धारो मनुष्याणाम्। तद्धिंसकाश्चोरादय। तेऽपि तं न हिंसन्ति। असुरै चोरादिभिर्वा प्रयुज्यमाना हिंसाश्च न हिंसन्ति। देवं वरुणं नूनं वा। 'ते हि ष्मा वनु' इत्यत्र हिंसायामत्र अभिमाति त्रि[1] अ कु　[8] नास्ति साम्ब[8]

वेङ्कट० यम् वरुणं हिंसार्थिनः न हिंसितुमिच्छन्ति। जनानाम् अन्येषां द्रोग्धारश्च यस्मै न द्रुह्यन्ति। न यं चाभिमन्यन्ते अभिमातयः च। उत्तरत्र सम्बन्धः[२] ॥ १४ ॥

मुद्गल० इमं वरुणं हिंसितुमिच्छन्तो वैरिणः यम् वरुणम् न दिप्सन्ति भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति। जनानाम् प्राणिनाम् द्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति। अभिमातयः पाप्मानः देवम् तं वरुणम् न स्पृशन्ति ॥ १४ ॥

उत यो मानुषेष्वा यशश्चक्रे असाम्या। अस्माकमुदरेष्वा ॥ १५ ॥

उत। यः। मानुषेषु। आ। यशः। चक्रे। असामि। आ। अस्माकम्। उदरेषु। आ ॥ १५ ॥

स्कन्द० [१]उत यः अपि च वरुणः मानुषेषु आकारोऽत्र चशब्दस्यार्थे। 'देवेभ्यश्च पितृभ्य आ' (ऋ १०,१६,११) इति यथा। तच्छ्रुतश्च योग्यद्वितीयसमुच्चयाध्याहारः। मनुष्येषु देवेषु च यशः अन्नम् चक्रे रश्मिभिः रसानाहरन् प्रतिदिनं करोति। कीदृशम्। असामि सामिशब्दोऽर्धवचनः। अनर्धं सकलं प्रभूतमित्यर्थः। आकारस्तु पदपूरणो वा चक्रे इत्यनेन वा सम्बन्धयितव्यः। अभिमुखेन करोतीति। न च केवलेषु मानुषेषु देवेषु च अस्माकम् उदरेषु आ अयमप्याकारः चशब्दस्यार्थे। अस्माकमित्येतस्माच्च परो द्रष्टव्यः। अस्माकं च मनुष्याणां तिर्यक्सदनानामुदरेषु। यच्छब्दश्रुतेस्तच्छब्दाध्याहृत्योत्तरयैकवाक्यता। तम्[१] ॥ १५ ॥

वेङ्कट० अपि च यः मनुष्येषु अन्नम् असाधारणम् चक्रे सः अस्माकम् अपि[४] उदरेषु आ करोतु। प्रथमः आकारः सप्तम्यर्थं[५] स्फुटीकरोति ॥ १५ ॥

मुद्गल० उत अपि च यः वरुणः मानुषेषु यशः अन्नम् आ चक्रे सर्वतः कृतवान् सः वरुणः कुर्वन्नपि आ सर्वतः असामि संपूर्णं चक्रे न तु न्यूनं कृतवान्। विशेषतः अस्माकम् उदरेषु आ सर्वतः चक्रे ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये अष्टादशो वर्गः ॥

परा मे यन्ति धीतयो गावो न गव्यूतीरनु। इच्छन्तीरुरुचक्षसम् ॥ १६ ॥

परा। मे। यन्ति। धीतयः। गावः। न। गव्यूतीः। अनु। इच्छन्तीः। उरुऽचक्षसम् ॥ १६ ॥

१ नास्ति को. २ °न्धः इति मू'. ३-३. उत यः वरुणः मानुषेषु च देवेषु चान्नमाभिमुख्येन करोति। तत्सम्बन्धार्थे च निवासहेतूनां च्युतामुदरेषु च। आः चिन्त्यः आयन्ता चार्थे। देवेभ्यश्च पितृभ्य आ' इतिवत्। तच्छ्रुतेश्च योग्यद्वितीयसमुच्चयाध्याहारः। मानुषशब्देन चेत्याभिधानेन अन्नेन चलताभिन्ना देवानाम् 'अन्नं वीर्यं' इति पाठः। अपि अपरः च। असामि प्रभूतम् वि' भ. म. ४ नास्ति को मास्स. ५ सप्तम्यर्थं वि' भ'.

स्कन्द० [1]परा मे यन्ति परागच्छन्ति प्राप्नुवन्ति त्वां मे मम धीतयः प्रज्ञाः कर्माणि वा स्तुत्या-त्मकानि । मदीया बुद्धयः स्तुतयो वेत्यर्थः । कथं परायन्ति । गावः न गव्यूतीः अनु गावो यत्र चरन्ति स भूमदेशो गव्यूतिरित्युच्यते । अनुशब्दः प्रतिशब्दस्यार्थे । गाव इव गव्यूतिं प्रति । इच्छन्तीः इच्छन्त्यः । किम् । सामर्थ्यादायुः । कीदृशं त्वाम् । उच्यते । उरुचक्षसम् बहूनां द्रष्टारं बहुदर्शनं वा[2] ॥ १६ ॥

वेङ्कट० परागच्छन्ति मे बुद्धयो वरुणं राजानं प्रति, यथा गावः गोमार्गान्[1] प्रति गच्छन्ति, इच्छन्त्यः बहूनां द्रष्टारं द्रष्टुम् ॥ १६ ॥

मुद्गल० उरुचक्षसम्[1] बहुभिर्द्रष्टव्यं वरुणम् इच्छन्तीः मे धीतयः शुनःशेपस्य बुद्धयः परा यन्ति पराङ्मुखा निवृत्तिरहिता गच्छन्ति । तत्र दृष्टान्तः । गावः न यथा गावः गव्यूतीः अनु गोष्ठान्य-नुलक्ष्य गच्छन्ति तद्वत् ॥ १६ ॥

सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् ॥ १७ ॥

सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम् । होताऽइव । क्षदसे । प्रियम् ॥१७॥

स्कन्द० [1]नु ( निघ २,१५ ) इति क्षिप्रनाम । क्षिप्रम् सम् वोचावहै पुनः आवां हरिश्चन्द्र-शुनःशेपौ पुनःसम्भूतौ । किम् । सामर्थ्यान्मुञ्च त्वमावाम् इति[2] । हरिश्चन्द्रं वा त्वं चाहं च पुनः संवोचावहै । [3]मां विमुञ्च मया संभाषस्व[4] । अहमपि भवन्तं मुच्यमानं इति हि त्वदाज्ञाम इत्यर्थः । कस्मात् । [5]यतः मे त्वादृश्यं एषा चतुर्थी । मदर्थम्[6] । यजमानीयमभिप्रायं चाहं जुहुविमः यदाज्यलक्षणम् मधु आभृतम्[7] ऋत्विग्भिः । यत् आज्यं गृहीत्वा मां [8]होतृमृत्विजं उपस्थिता इत्यर्थः । यतः होतेव क्षदसे क्षदतिरत्र सामर्थ्याद् विलम्बनार्थः । यथा होताऽभिगुरैस्ताहानेन एवं त्वमपि निर्मोक्षणेन विलम्बसि । किम् । प्रियम् इदं मम शरीरम् । अथवा यत इति सप्तम्यर्थे पञ्चमी[9] । यत्र यज्ञे मदर्थं मध्वाभृतं यत्र च त्वं होतेव विलम्बसि प्रियं [10]मम शरीरं[11] तत्र क्षिप्रं संवोचावहै पुनरिति ॥ १७ ॥

वेङ्कट० त्वं चाहं च वरुण ! अधुना संवादम् पुनःपुनः कुर्वः । यतः मे मधुमत्तो सोमः संभृतम् । त्वं च होतेव प्रियम् अदनं अदिः शाकम्भावकर्मा[1] । यथा होताऽभिगुं वदन् यथा पशुं शाकम्भोरोपेतमिदं तुभ्यं हव्यमिदं[1] तुभ्यं हव्यमिति वदसि ॥ १७ ॥

मुद्गल० यत यस्मात् कारणात् मे मम जीवनार्थम् मधु मधुर हवि आभृतम् अत्र सत्रास्ये कर्मणि सम्पादितम् अत कारणात् होतेव होमकर्तेव त्वमपि प्रियम् हवि क्षदसे अश्नासि। पुन हवि स्वीकारादूर्ध्वं तृप्तस्त्व जीवच्च च नु अवश्यम् सम् वोचावहै सम्भूय प्रियवार्ता करवावहै ॥ १७ ॥

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥ १८ ॥

दर्शम् । नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि । एता । जुषत । मे । गिरः ॥ १८ ॥

स्कन्द० [1]दर्शम् नु महता यत्नेन दृष्टवानहम् नु क्षिप्रम् । विश्वदर्शतम् सर्वस्य दर्शनीय द्रष्टारं वा वरुणम् । न च केवलम् । किं तर्हि । रथम् अपि दर्शम् यत्रायमारूढ । क । अधि क्षाम पृथिव्या उपरि । द्वितीयार्थे । यत एवमतो ब्रवीमि । स एता जुषत जुषता सेवता मे गिर स्तुती[1] ॥ १८ ॥

वेङ्कट० दृष्टवानस्म्यहम् इदानीं सर्वस्य दर्शनीय[2] वरुणम्[3] दर्शम्[4] चास्य रथम् भूमेरुपरि । [5]स मे[5] स्तुती एता सेवताम् ॥ १८ ॥

मुद्गल० विश्वदर्शतम् सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमाविर्भूत वरुणम् दर्शम् नु अह दृष्टवान् खलु । क्षमि क्षमायां भूमौ रथम् वरुणसम्बन्धिनम् अधि दर्शम् आधिक्येन दृष्टवानस्मि। एता उच्यमाना मे गिर मदीया स्तुती जुषत वरुण सेवितवान् ॥ १८ ॥

इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥ १९ ॥

इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय । त्वाम् । अवस्युः । आ । चके ॥ १९ ॥

स्कन्द० [1]इमम् मे मम हे वरुण ! शृणुष्व हवम् आह्वानमिदम् । श्रुत्वा च अद्य च चशब्दादितश्चोर्ध्वम् मृळय विमुच्य मा सुखय । किं कारणम् । यस्मात् त्वाम् अवस्यु आत्मपालनकामोऽहम् आ चके कान्तिकर्मायम् ( द्र निघ २,६ ) । कामये । पालयेत्यर्थ[1] ॥ १९ ॥

वेङ्कट० इमम् मे वरुण[6] ! शृणु हवम् । श्रुत्वा च अद्य मां सुखय । त्वाम् रक्षणेच्छुरहं कामये । यद्वाऽभिगच्छामि ॥ १९ ॥

मुद्गल० हे वरुण ! मे मदीयम् इमम् हवम् आह्वानम् श्रुधि शृणु । किञ्च अद्य अस्मिन् दिने मृळय मृडय अस्मान् सुखय । अवस्यु रक्षणेच्छु अहम् त्वाम् वरुणम् आ चके आभिमुख्येन शब्दयामि । स्तौमीत्यर्थ ॥ १९ ॥

---

१-१. महता प्रयत्नेन दृष्टवानहं क्षिप्रं सर्वस्य दर्शनीयं द्रष्टारं वा वरुणम् । तद्रथमपि दर्शं पृथिव्या उपरि [illegible] यत्रायमारूढ । यत एवमतो ब्रवीमि एता सेवतां मम स्तुतीः वि[1] अ कु. २ दर्शनीयं वि[1] अ[1] ३ वरुण वि[1] ए अ[1]; नास्ति वि[2] ४ दर्शनं सास्य ५-५ मम ए, सन वि[1,3] [illegible] ६-६ मम हे वरुण शृणु आह्वानमिदम् । श्रुत्वा च अद्य [illegible] कर्ध्वं च सुखय । आत्मपालनकामोऽहं त्वाम् आ चके । [illegible] कामोऽहं मा पालय इत्यर्थः इति कामये वि[1] अ कु. ७ नास्ति वि[2]

[1]त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥ २० ॥

त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥ २० ॥

स्कन्द० [1]सः यामनि इति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यः त्वम् विश्वस्य यावदर्थजीवस्य सर्वस्य हे मेधिर यज्ञवन्! दिवः च ग्मः च 'ग्मा' ( निघ १,१ ) इति पृथिवीनाम । दिवश्च पृथिव्याश्च । राजसि ईशिषे । सः यामनि अधिकरणेऽत्र मनिन्द्रष्टव्यः । मृत्युं प्रति गम्यते यस्मिन् स यामा मरणकालः तत्र । मह्यम् प्रति श्रुधि प्रतिशृणु । किम् । सामर्थ्यात् मुञ्चामि त्वाम् । त्वं न म्रियस इत्येतत् प्रतिजानीहीत्यर्थः[1] ॥ २० ॥

वेङ्कट० त्वम् विश्वस्य[2] दिवः पृथिव्याः च राजसि[3] प्राज्ञ!। सः गमनेऽभिलषितम्[4] अस्माकम् प्रति श्रुधि ॥ २० ॥

मुद्गल० हे मेधिर मेधाविन्! वरुण! त्वम् दिवः च द्युलोकस्यापि ग्मः च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि दीप्यसे । सः तादृशस्त्वम् यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः ॥ २० ॥

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ॥ २१ ॥

उत् । उत्ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत । अव । अधमानि । जीवसे ॥ २१ ॥

स्कन्द० [5]उत् उत्तमम् उत्तमं तावत् पाशम् मुमुग्धि ऊर्ध्वं मुञ्च नः । वि पाशम् मध्यमम् चृत चृतिर्हिंसाग्रन्थनयोः । मध्यममपि पाशं तत्रैव स्थितं विग्रन्थय विमुञ्चेत्यर्थः । अधमानपि पाशान् अव चृत अधो मुञ्च जीवसे जीवयितुं माम्[5] ॥ २१ ॥

वेङ्कट० उत्तमस्य पाशस्य उन्मोचनम्, मध्यमस्य विचर्तनम्, अवमोचनम्[6] अधमानां[7] बन्धनानां जीवनायेति ॥ २१ ॥

मुद्गल० नः अस्माकम् उत्तमम् शिरोगतम् पाशम् उत् मुमुग्धि उत्कृष्य मोचय । मध्यमम् उदरगतं पाशं वि चृत वियुज्य नाशय । जीवसे जीवितुम् अधमानि मदीयान् पादगतान् पाशान् अव चृत अपकृष्य नाशय ॥ २१ ॥

इति प्रथमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः ।

---

१-१. त्वं हे मेधिर 'मेधसाधि ( 'साति त्रि[1] अ. ) इंव्यजुष्टि ' इति पक्षे । मतुपि रः । हे यज्ञवन् ! यस्य सर्वेऽप्यर्थजीवस्य दिवश्च पृथिव्याश्च राजसि ईशिषे । 'ग्माऽवनिर्गौ रसा क्षमा' इति श्रुतिः । स त्वं यामनि मरणकाले । मृत्युं प्रति गम्यते यस्मिन् सः कालः यामा । तत्र मदमरणं प्रति जानीहि । त्वां मुञ्चामि इति प्रतिज्ञां कुरु । न त्वं म्रियसे त्रि[1] अ कु. २. °स्य जीवनं साम्ब. ३. राजसि साम्ब कु. ४. °भिलषितम्° वि[1] अ[1]. ५-५. उत्तमं पाशमूर्ध्वं मुमुग्धि । मध्यमं पाशं तत्रैवावस्थितं वि श्रथय । चृतिः हिंसासंग्रन्थनयोः । अधमानि अवचृत अधोमुखं मुञ्च जीवनाय वि[1] अ कु. ६. अवमोचनम् साम्ब कु. ७. अवमानाम् ल वि[1]

आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यः ॥ ३ ॥

आ । हि । स्म । सूनवे । पिता । आपिः । यजति । आपये । सखा । सख्ये । वरेण्यः ॥ ३ ॥

स्कन्द० [1]आङ् मर्यादायाम् । हिशब्दो यस्मादर्थे । स्मशब्दः पदपूरणः । यस्मात् मर्यादया सूनवे पुत्रार्थम् पिता आपिः ज्ञातिश्च होता नियम्य यजति आपये ज्ञातये । सखा च सख्ये वरेण्यः वरणीयः । त्वं चास्माकं पित्रादिरूप इत्यर्थः[1] ॥ ३ ॥

वेङ्कट० कश्चिदग्नेः स्तोता पुत्रस्थाने भवति तस्मै[2] अयम् पिता भूत्वा यजति । ज्ञातिः ज्ञातये, मित्राय मित्रं[3] वरणीयः । हिशब्दो विस्मये ॥ ३ ॥

मुद्गल० हे अग्ने! वरेण्यः वरणीयः पिता पितृस्थानीयस्त्वम् सूनवे पुत्रस्थानीयाय मह्यमभीष्टं देहीति शेषः । हि स्म इति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे । अभीष्टदाने दृष्टान्तद्वयमुच्यते— यथा[4] आपिः बन्धुः आपये बन्धवे आ यजति हि स्म सर्वथा ददातीति शेषः । सखा प्रियः सख्ये प्रियाय अभीष्टं सर्वथा ददाति तथा त्वमपि देहि ॥ ३ ॥

आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा । सीदन्तु मनुषो यथा ॥ ४ ॥

आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा । सीदन्तु । मनुषः । यथा ॥ ४ ॥

स्कन्द० [5]आ इत्युपसर्गः सीदन्तु इत्याख्यातेन सम्बन्धयितव्यः । नः अस्माकं स्वभूतम् बर्हिः रिशादसः हिंसतां क्षेप्तारः । प्रतिहिंसितार इत्यर्थः । वरुणः मित्रः अर्यमा च आ सीदन्तु । वरुणादयश्चात्र देवमात्रोपलक्षणार्थाः । सर्वे देवा आसीदन्त्वित्यर्थः । मनुषः यथा मनुष्या इव[5] ॥ ४ ॥

वेङ्कट० [6]आ सीदन्तु बर्हिः[6] अस्माकम् इमे देवा मनोरिव प्रजापतेः रिशतामसितारः ॥ ४ ॥

मुद्गल० हे अग्ने! वरुणादयो[7] देवाः त्वद्बान्धवः त्वया प्रेरिताः रिशादसः हिंसकानदन्तः[8] नः अस्मदीयम् बर्हिः यज्ञम् आ सीदन्तु । दृष्टान्तः—यथा मनुषः ज्ञानिनः प्रजापतेर्यज्ञमासीदन्ति तद्वत् ॥ ४ ॥

पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च । इमा उ षु श्रुधी गिरः ॥ ५ ॥

पूर्व्य । होतरिति । अस्य । नः । मन्दस्व । सख्यस्य । च । इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥ ५ ॥

---

१-१. त्वमेव मे पिता भ्रातिश्च सखा च । ते यस्मात् मर्यादया पुत्रार्थं ज्ञात्यर्थं सख्यर्थं च यजन्ति वरणीयाः । आङ् मर्यादार्थे । हिः यस्मादर्थे । 'होत्रं कुर्वन् पिता मुनीनां ज्ञातीनां ज्ञातयोऽपि वा । मित्राणि ज्ञापयाति स्तोतारः नस्मदायकाः ।' इति । मर्यादया सं नियम न. यज्ञ यज वि° अ कु. २. तस्मात् वि° अ°. ३. नास्ति कु. ४. तथा मूको. ५-५. अस्माकं बर्हिषि वरुणमित्रार्यमादय आ सीदन्तु मनुष्या इव हिंसितुश्चेतारः । सर्वे देवा इत्यर्थः वि° अ कु. ६-६. नास्ति वि°. ७. ते वरु° मूको. ८. °दन्तः वरुण मित्र अर्यमा मूको.

स्कन्द० [1]पूर्व एव पूर्व्यः । यकार उपजनः । हे पूर्व्य ! चिरन्तन ! होत ! अस्य नः मन्दस्व साख्यस्य च सख्यस्येति द्वितीयार्थे षष्ठी । सख्य च 'देवै. सह मनुष्याणां स्तुत्यस्तोतृत्वलक्षणम्' । इद सख्य च न. । उ सु इति पदपूरणौ । इमा श्रुधि गिर । शुनश्शेपो देवानां स्तोतृत्वेन प्रकाशय इमा च स्तुतीः शृण्वित्यर्थः । अथवा अस्य सख्यस्येति सप्तम्यर्थे षष्ठी । मन्दतिरत्र मोदनार्थे । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु इति । अस्मिंश्च सख्ये मोदस्व इमाश्च शृणु स्तुतीरित्यर्थः [1] ॥ ५ ॥

वेङ्कट० पूर्वेषु भव ! होत. ! अस्माकम् इद[2] सख्यम् अनुपालय । स्तुती च इमा सुष्ठु शृणु ॥ ५ ॥

मुद्गल० हे पूर्व्य ! अस्मदादे. पूर्वमुत्पन्न ! होत ! होमनिष्पादकाग्ने[3] नः अस्मदीयस्य प्रवर्तमानस्य अस्य यज्ञस्य सख्यस्य च अस्मदनुग्रहस्य च सिद्ध्यर्थं मन्दस्व त्वं हृष्टो[1] भव । इमाः अस्माभि. प्रयुज्यमानाः गिरः उ षु स्तुतिरूपा वाचोऽपि श्रुधि शृणु ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये विंशो वर्गः ॥

यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ॥ ६ ॥

यत् । चित् । हि । शश्वता । तना । देवम्ऽदेवम् । यजामहे । त्वे इति । इत् । हूयते । हविः ॥ ६ ॥

स्कन्द० [4]यत् चित् यद्यपि हि इति पदपूरण । शश्वता तना 'शश्वत्' ( निघ ३,१ ) इति बहुनाम । बहुना हविर्लक्षणेन धनेन देवदेवम् यजामहे । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । तथापि त्वे इत् इत्छब्द एवार्थे । त्वय्येव हूयते सर्वं तत् हवि , नान्यत्र क्वचित्[4] ॥ ६ ॥

वेङ्कट० यदि हि वय बहुना धनेन सर्वान् देवान् यजामहे, त्वयि एव[4] तेभ्योऽपि हूयते हवि ॥ ६ ॥

मुद्गल० हे अग्ने ! यच्चिद्धि यद्यपि शश्वता शाश्वतेन नित्येन तना विस्तृतेन हविषा देवदेवम् अग्न्यमान्यवरुणेन्द्रादिरूपं नानाविधं देवताविशेषम् यजामहे । तथापि तत् हवि सर्वम् त्वे इत् त्वय्येव हूयते । अतो देवतान्तरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थ ॥ ६ ॥

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥ ७ ॥

प्रियः । नः । अस्तु । विश्पतिः । होता । मन्द्रः । वरेण्यः । प्रियाः । सुऽअग्नयः । वयम् ॥ ७ ॥

१-१ हे चिरन्तन ! होत ! त्वमस्माकं मन्दस्व सख्यं च । इदं भवि । स्तुत्यस्तोतृत्वलक्षणं देवैः सख्यम् । तत् श्रुधि । इमा स्तुती शृणु च । शोभन शुनःशेपो देवाना स्तोता इत्येतत् प्रकाशय, इमा शृणु च स्तुतीरित्यर्थ । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु च । [illegible] । अस्मिंश्च सख्ये मोदस्व । इमा शृणु स्तुतीः [illegible] [illegible] २ इद वि॰ मै॰. ४-४. यद्यपि बहुना हविर्लक्षणेन धनेन अन्यमन्यमपि देवं यजामहे तथापि त्वय्येव हूयते सर्वं हविः, नान्यत्र क्वचित् । [illegible] 'शश्वत् (निघ [illegible]) [illegible]' इति [illegible] । 'भूरिपूर्वी [illegible]' इति [illegible] । [illegible]
वि॰ भ॰.

स्कन्द० [1]प्रियः नः अस्तु । तथोपकरोतु यथाऽस्माकं प्रियो भवतीत्यर्थः । विशो मनुष्यास्तेषां पतिरग्निः । होता मन्द्रः मन्दतेरर्चतिकर्मण एतद्रूपम् । स्तुत्यः स्तोता वा । वरेण्यः वरणीयः । अग्नेरपि प्रियाः स्याम स्वग्नयः शोभनैराहवनीयादिभिर्युक्ताः वयम्[1] ॥ ७ ॥

वेङ्कट० [2]प्रियः नः[2] अस्तु विश्पतिः होता मादयिता वरणीयः । वयम् चास्मै स्वग्नयः प्रियाः स्याम ॥ ७ ॥

मुद्गल० विश्पतिः विशां प्रजानां पालकः होता होमनिष्पादकः मन्द्रः हृष्टः[3] वरेण्यः वरणीयः अग्निः नः अस्माकम् प्रियः अस्तु । वयम् अपि स्वग्नयः शोभनाग्नियुक्ताः सन्तः तव प्रियाः भूयास्मेति शेषः ॥ ७ ॥

स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥ ८ ॥

सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥ ८ ॥

स्कन्द० [4]स्वग्नयः हि हिशब्दोऽत्र पदपूरणः । शोभनाहवनीयादिभिर्युक्ता वार्यम् वरणीयम् । किं तत् । सामर्थ्याद्धविः सोमम् । देवासः दधिरे च देवशब्दोऽत्र हविर्दानादित्विक्षु वर्तते । चशब्दश्चास्मात् परो द्रष्टव्यः । देवाश्च दधिरे ऋत्विजश्च विश्वामित्रादयो धारयन्ति कुर्वन्ति । नः अस्माकं सम्बन्धिनः । वयं च तैराहवनीयादिभिः स्वग्नयः मनामहे मन्यतेरर्चतिकर्मण एतद् रूपम् । स्तुमः । अथवा हिशब्दो यस्मादर्थे । वार्यमिति सोमलक्षणहविर्वचनः[4] । दधिरे चेति चशब्दाद् योग्यद्वितीयसमुच्चयाध्याहारः । [5]मनामह इत्यपि याच्ञायाम्[5] । एवमेकवाक्यता—यस्मात् स्वग्नयः ऋत्विजोऽस्मत्तो[6] वरणीयतरं सोमलक्षणं हविर्धारयन्ति, दास्यन्ति चाग्नये, तस्मात् स्वग्नयो वयं [7]याचामहे । किम् । सामर्थ्यादात्मविमोक्षम्[7] ॥ ८ ॥

वेङ्कट० स्वग्नयः हि वरणीयं धनम् अस्मभ्यम् देवा धारयन्ति[8] । ततो वयम् स्वग्नयः हविर्वहनायाग्निं स्तुमः ॥ ८ ॥

मुद्गल० स्वग्नयः शोभनाग्नियुक्ताः देवासः दीप्यमाना ऋत्विजः नः अस्मदीयम् वार्यम् वरणीयं हविः हि यस्मात् दधिरे[9] धृतवन्तः तस्माद्वयम् स्वग्नयः शोभनाग्नियुक्ताः सन्तः मनामहे [10]त्वां याचामहे[10] ॥ ८ ॥

अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयः ॥ ९ ॥

अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् । मिथः । सन्तु । प्रऽशस्तयः ॥ ९ ॥

---

१-१. यथाऽस्माकं प्रियो भवति (°भतु वि[1] अ) तथोपकरोत्वित्यर्थः । विशो नराणां पतिरग्निः । होता स्तुत्यः स्तोता वा । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । वरणीयः । अग्नेरपि प्रियाः स्याम वि[1] अ कु. २-२. नास्ति वि[1]. ३. हृष्टः वि मै[1]. ४-४. शोभनाहवनीयादियुक्ता वयं देवाः वार्यं दधिरे । देवो वा दाता । हविर्दानादत्र ऋत्विजः । चशब्दश्चास्मात्परो द्रष्टव्यः । देवाश्च धारयन्ति । ऋत्विजश्च विश्वामित्रादयः वरणीयमस्मै स्तोत्रं कुर्वन्ति नः अस्माकं सम्बन्धिनः । वयं च तैराहवनीयादिभिः स्वग्नयः स्तुमः । मन स्तुतौ । हि यस्मादर्थे वा । वार्यमिति सोमलक्षणं हविः वि[1] अ कु. ५-५. मन याच्ञायाम् वि[1] अ कु; °याच्ञा साम्ब. ६. °जो मत्तो साम्ब. ७-७. आत्मविमोक्षं याचामहे वि[1] अ कु. ८. धारयेयन्ति अ[1]. ९. °धिरे च वि. १०-१०. नास्ति वि.

स्कन्द० [1]अथ विमोक्षानन्तरम् न 'त्यदादीनि सर्वैर्नित्यम्' ( पा १,२,७२ ) इत्येवमयमस्मदो युष्मच्छन्देन एकशेषः । तव चास्माकं च उभयेषाम् अमृत! मरणवर्जित[1] अग्ने! मर्त्यानाम् मनुष्याकाराणाम्। शुनश्शेपो हि मनुष्यत्वादेव तदाकार, अग्निस्तु पुरुषविधत्वात्। मिथः परस्परम् सन्तु प्रशस्तयः । प्रशंसः त्वमस्मान्[2]—नेदृशा अन्ये स्तोतार इति । वयमपि प्रशंसाम —नेदृशोऽन्यो देव इति । [3]अथवा मिथःशब्दः सहत्ववचनः । तवास्माकं च सह सन्तु प्रशस्तयः[3] । नहि स्तुत्यस्य स्तोत्रा विना प्रशंसास्ति न स्तोतुः स्तुत्येन । तत्र तव स्तुत्यस्य अस्माभिरेव सहास्माकं च स्तोतॄणां त्वयैव सह प्रशंसाऽस्तु, माऽन्यैः केनचिदित्याशास्महे ॥ ९ ॥

वेङ्कट० अमृत! अग्ने[4] तव च अस्माकं च मर्त्यानाम् उभयेषाम् परस्परम् प्रशस्तयः सन्तु । सुष्टुतमिति त्वं[5] ब्रूहि, सुदत्तमिति वयमिति[5] ॥ ९ ॥

मुद्गल० हे अमृत[6] मरणरहिताग्ने[6] अथ कर्मानुष्ठानानन्तरम् मर्त्यानाम् मनुष्याणाम् न अस्माकम् अस्म-त्स्वामिनः हरिश्चन्द्रस्य तव च[×] उभयेषाम् मिथः परस्परम् प्रशस्तयः प्रशंसारूपा वाचः सन्तु ॥ ९ ॥

विश्वे॑भिरग्ने अ॒ग्निभि॑रि॒मं य॒ज्ञमि॒दं वचः॑ । चनो॑ धाः सहसो यहो ॥ १० ॥

विश्वे॑भिः । अ॒ग्ने॒ । अ॒ग्निऽभिः॑ । इ॒मम् । य॒ज्ञम् । इ॒दम् । वचः॑ । चनः॑ । धाः॒ । स॒ह॒सः॒ । य॒हो॒ इति॑ ॥ १० ॥

स्कन्द० विश्वेभिः हे अग्ने! [7]आत्मनो भ्रातृभिः अग्निभिः सह इमम् यज्ञम् इदम् वचः स्तुतिलक्षणम्। चनः 'चन' ( या ६,१६ ) इत्यन्ननाम । अन्नं चरुपुरोडाशादिलक्षणम् धाः [†]स्थापय त्वम्[†]। [‡]सामर्थ्यात् अत्र स्थापयितव्येषु यज्ञं तावद् देवेषु स्थापय, स्तुतिं[‡] स्वकरणे, चनोऽपि स्वोदरे । मा तु युष्मत्त्वर्थे । हे सहसः यहो[7] बलस्य पुत्र[7] । बलेन मथ्यमानाभ्याम् अरणीभ्यामभिनिर्वर्तत इति बलस्य पुत्र उच्यते[7] ॥ १० ॥

वेङ्कट० सर्वैः सहायभूतैः अग्निभिः अग्ने! अस्माकम् इमम् यज्ञम् इदम् च स्तोत्रम् अन्नं चात्मस्थं कुरु बलस्य पुत्र[8] ॥ १० ॥

मुद्गल० सहसः बलस्य यहो! पुत्र[9] हे देवतारूप[9] अग्ने[9] विश्वेभिः अग्निभिः सर्वैराहवनीयादिभिर्युक्तस्त्वम् इमम् अस्मदीयम् यज्ञम् इदम् अस्मदीयम् वचः स्तोत्रं च सेवमानः चनः अन्नम् धाः अस्मभ्यं धेहि[*] ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये एकविंशो वर्गः ॥

---

१-१ अथ न 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः । युष्मदस्मच्छब्दयोः ( ब्रिंदु कु ) अस्मच्छब्द एव शिष्यते न इति । हे अग्ने तव च अस्माकं च उभयेषां हे मरणवर्जित मनुष्याकाराणाम् । अग्नि पुरुषविधः, अन्यो मनुष्य एव । परस्परम् सन्तु प्रशंसा । त्वमस्मान् प्रशंस ब्रिं अ कु   २-२ मिथः सह इति । तव चास्माकं च सह सन्तु प्रशंसा ब्रिं अ कु   ३ स्तं च ब्रिं   ४ नास्ति ब्रिं   ५ नास्ति वि   ६-६ त्वद्भ्रातृभिरिमं यज्ञम् इमां स्तुतिम् चरुपुरोडाशादिलक्षणं हविश्चान्नं धा । स्थापय स्थापयितव्येषु यज्ञं देवेषु स्तुतिं, स्वकरणे चन स्वोदरे । मा तु युष्म । हे बलस्य पुत्र बलेन मथ्यमानाभ्यां अभिजातत्वात् । 'सामर्थ्यात् तावद् अत्र', 'युष्मत्त्वर्थे' इति ब्रिं अ कु   †-† स्थापय त्वम् मास्य', स्थापय सास्य   ‡-‡ स्थापयितव्येषु यज्ञं देवेषु स्तुतिम् स्वकरणे', 'स्वोदरे मा तु युष्मत्त्वर्थे सास्य'[10]   ७ धेहि वि

[ २७ ]

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥ १ ॥

अश्वम् । न । त्वा । वारऽवन्तम् । वन्दध्यै । अग्निम् । नमःऽभिः । सम्ऽराजन्तम् । अध्वराणाम् ॥ १ ॥

स्कन्द० ¹अश्वम् वारवन्तम् इति समानाधिकरणे एते । वारवन्तमिति वालशब्दस्य कपिलादित्वाद् रत्वम् । अश्वम् न वालवन्तम् वालवान् योऽश्वस्तमिव त्वाम् वन्दध्यै तुमर्थेऽध्यैप्रत्यय । वन्दितुम् इच्छाम प्रारभामहे वा इति वाक्यशेष । कम् । अग्निम् । नमोभि नमस्कारैः स्तुतिभि । कीदृशम् । सम्राजन्तम् राजतिरैश्वर्यकर्मा ( द्र निघ २,२१ ) । सम्यगीशानम् । अध्वराणाम् यज्ञानाम् । अथवा राजतिर्दीप्त्यर्थ । सम्यग् दीप्यमानम् । सप्तम्यर्थे चात्र षष्ठी । षष्ठीश्रुतेर्वा मध्ये इति वाक्यशेष । [अश्वोपमानोऽभिप्राय पर्येष्य ]¹ ॥ १ ॥

वेङ्कट० अश्वम् इव त्वा वालवन्तं² नमस्कारैर्वन्दितुम् ईशानम् यज्ञानामुपक्रम इति ॥ १ ॥

मुद्गल० 'अश्व न त्वा' इति त्रयोदशर्चं चतुर्थं³ सूक्तम् । ⁴शौन शेपम् । गायत्रम् । आग्नेयम्⁴ ।

अध्वराणाम् यज्ञानाम् सम्राजन्तम् सम्राड्रूपम् स्वामिनम् अग्निम् त्वा त्वाम् नमोभि स्तुतिभि. वन्दध्यै वन्दितु प्रवृत्ता इति शेष । दृष्टान्त । वारवन्तम् वालयुक्तम् अश्वम् न अश्वमिव । अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभि अस्मद्विरोधिन परिहरसीत्यर्थ ॥ १ ॥

स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ॥ २ ॥

स । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः । मीढ्वान् । अस्माकम् । बभूयात् ॥ २ ॥

स्कन्द० ⁵घ इति पदपूरण । स प्रकृतोऽग्नि न सूनु 'अस्मदो द्वयोश्च' ( पा १,२,५९ ) इत्येषमेतद् द्वयोर्बहुवचनम् । आवयोर्हरिश्चन्द्रशुनश्शेपयो पुत्र⁵ अरणीमन्थनेन जनितत्वाद् । यद्यपि यजमानत्वाद्धरिश्चन्द्रेणैवाग्निर्जनित नोभाभ्याम्, तथापि साहचर्यात् निमित्तत्वसामान्याद्वा उभौ प्रति पुत्रत्वव्यपदेश । शवसा पृथुप्रगामा स्वेन तेजसाऽय विस्तीर्णगामी । अथवा पूर्वेण सम्बध्यते । बलेन हेतुना पुत्र इति । यस्माद् बलेनारणिं मथित्वा जात इत्यर्थ । सुशेव सुसुख । मीढ्वान् धनवान् सेक्ता वा हविर्नयनद्वारेण वृष्टिप्रदत्वात् अस्माकम् बभूयात् भवत्वर्थं दत्वेन भूयादित्याशास्महे । क । सामर्थ्यात् भोक्ता । अथवा सुशेव इत्येतेन सम्बध्यते⁶ ।

---

१-१ वारशब्दस्य कपिलादित्वाद् रत्वम् । अश्वमिव वालवन्तं त्वा वन्दितुमिच्छाम प्रारभामहे वा । अग्नि नमस्कारै स्तुतिभि यज्ञाना सम्यगीशानं सन्दीप्यमानं वा । इति वा भाष् । आनुपूर्व्या मध्ये । अथोपमानाभिप्राय पर्येष्य वि' म कु [ ] मध्ये अथोपमानाभिप्राय पर्येष्य साम्य'. [-] नास्ति साम्व¹¹ २ वालवन्तम् साम्ब कु ३ नास्ति वि मै'. ४-४ शुन शेप ऋषि । गायत्री छन्द । अग्निर्देवता मै' ५-५. न इति 'अस्मदो द्वयोश्च' इति द्वयोर्बहुवचनम् । स प्रकृतोऽग्नि आवयो सूनु । अरणीमथन[ ]त्वात् हरिश्चन्द्रस्य, तत्सहचर्याद् निमित्तसामान्याद्वा उभयोरपि पुत्रत्वमिति । स्वतेजसा विस्तीर्णगामी । बलेनारणीमथनाज्जात इति पूर्वेणासम्बन्धो वा । इतेन सुसुखो वा वि' म कु [ ] नास्ति साम्ब.

[1]सुशेवोऽस्माकं भूयात् । अथवा सूनुरित्येतेन सम्बध्यते अस्माकं पुत्रो भूयादित्याशास्महे। जनयित्वा त्वा पुत्रमाशास्महे इत्यर्थः । अत्र चास्माकमित्येतत् सुशेव इत्येतेन सम्बध्यते। योऽस्माकं सुसुखो विमोक्तृत्वात् स नः सूनुर्भूयादिति[1] ॥ २ ॥

वेङ्कट० स खलु अस्माकम् बलेन स्तूयमानो विस्तीर्णगमनः सुसुखः कामानां सेक्ता अत्यन्तं भवतु ॥ २॥

मुद्गल० सः घ स एवाग्निः नः अस्माकम् सुशेवः सुसुखो भवत्विति शेषः । कीदृशः । शवसः बलस्य सूनुः पुत्रः पृथुप्रगामा पृथुप्रगमनः । किञ्च अस्माकम् मीढ्वान् कामानां वर्षिता सभूयात् भवतु ॥ २ ॥

स नो॑ दू॒राच्चा॒साच्च॒ नि मर्त्या॑दघा॒योः । पा॒हि सद॒मिद्वि॒श्वायु॑ः ॥ ३ ॥

सः । नः॒ । दू॒रात् । च॒ । आ॒सात् । च॒ । नि । मर्त्या॑त् । अ॒घ॒ऽयोः । पा॒हि । सद॑म् । इत् । वि॒श्वऽआ॑युः ॥३॥

स्कन्द० यः उक्तगुणोऽसि [2]स नः अस्माकम् दूरात् च आसात् च 'आसात्' (निघ २,१६) इत्यन्तिकनाम। तात्स्थ्याच्चोभयत्र ताच्छब्द्यम्, मञ्चाः क्रोशन्तीति यथा। दूरस्थादन्तिकस्थाच्च। मर्त्यात् अघायोः पापकामात् नि पाहि नियमेन रक्ष। सदम् सदाशब्दपर्यायोऽयम्। इत् शब्दः पदपूरणः एवार्थे वा। सदैव। विश्वायुः आयुःशब्द एते । एति गत्यर्थः । अन्ननाम वा। सर्वगामी सर्वान्नो वा[3] ॥ ३॥

वेङ्कट० सः [3]अस्मान्[4] दूरात् अन्तिकात् च पापमिच्छतः मर्त्यात्[5] सदैव नि पाहि सर्वेषामभिगन्ता ॥ ३ ॥

मुद्गल० हे अग्ने! विश्वायुः व्याप्तगमनः सः त्वम् दूरात् च दूरेऽपि आसात् च आसन्नदेशेऽपि अघायोः अघं पापम् अनिष्टं कर्तुमिच्छतः मर्त्यात् मनुष्यात् वैरिणः नः अस्मान् सदमित् सर्वदैव नि पाहि नितरां पालय ॥ ३ ॥

इ॒मम् ऊ॒ षु त्वम॒स्माकं॑ स॒निं गा॑य॒त्रं नव्यां॑सम् । अग्ने॑ दे॒वेषु॒ प्र वो॑चः ॥ ४ ॥

इ॒मम् । ऊँ॒ इति॑ । सु । त्वम् । अ॒स्माक॑म् । स॒निम् । गा॒य॒त्रम् । नव्यां॑सम् । अग्ने॑ । दे॒वेषु॑ । प्र । वो॒च॒ः ॥४॥

स्कन्द० [1]इमम् ऊ षु ऊ सु इति पदपूरणौ। इमम् त्वम् अस्माकम् सनिम् षणु दाने। सम्भक्तिरिषः सोमादिहविर्दानम्, गायत्रम् गायतिरर्चतिकर्मा (द्र निघ ३,१४)। स्तोत्रं च नव्यांसम् नवतरम् अन्यैः स्तोतृभिरकृतपूर्वम् हे अग्ने[1] देवेषु प्र वोचः देवेभ्यः प्रकर्षेणाचक्ष्व। मा मुञ्चेत्यर्थः[1] ॥ ४ ॥

---

१-१ 'सुशेवः' [illegible] इति धने। षिद सेवने। [illegible] । सुष्ठुसेवस्य सेवा वा। [illegible] भूयात्, [illegible] भूयादिति वा, सुशेवो भूयादिति वा आशास्महे। अस्मान् [illegible] । योऽस्माकं सुसुखः विमोक्तृत्वात् स नः सूनुर्भूयात् [illegible] वि॰ अ कु॰ २ २ ग [illegible] मनुष्यात् पापकामात् नितरां पाहि। सदैव [illegible] वा। सद सदार्थे। [illegible] वा [illegible] दूरात् आसन्नात् [illegible] वि॰ अ कु॰ १-१ ए [illegible] ३ नास्ति वि॰ अप॰ ४ अस्मान् वि॰ अप॰ ५ मर्त्यात् अप॰ ६६ [illegible] इति [illegible] अन्यैः [illegible] नव्यांसम् [illegible] हे अग्ने देवान् प्राप्य प्रकर्षेण [illegible] । मा [illegible] । '[illegible]' इति [illegible] । षणु दाने वि॰ अ कु॰

वेङ्कट० अस्माकम् इदम् हविषो दानम् गायनम् च साम नवतरम् अग्ने! देवेषु प्र ब्रूहि ॥ ४ ॥

मुद्गल० हे अग्ने! त्वम् अस्माकम् अस्मत्सम्बन्धिनम् इमम् ऊ षु पुरोदेशे अनुष्ठीयमानमपि सनिम् हविर्दानम् नव्यांसम् नवतरम् गायनम् स्तुतिरूपं वचोऽपि देवेषु देवानामग्रे प्र वोचः प्रब्रूहि ॥ ४ ॥

आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अन्तमस्य ॥ ५ ॥

आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अन्तमस्य ॥ ५ ॥

स्कन्द० आ भज [1]सेवस्व नः अस्मान् परमेषु 'यस्य च भावेन भावलक्षणम्' (पा २,३,३७) इत्येवमियं सप्तमी । तच्छ्रुतिसामर्थ्याद् योग्यलक्षणभूतक्रियाध्याहारः । परमेषूपकल्पितेषु हविर्लक्षणेष्वन्नेषु । न केवलेषु । किं तर्हि । आ भज वाजेषु हविर्लक्षणेष्वन्नेषु मध्यमेषु अपि । अथवा न इति षष्ठी । परमेष्वित्यादिषु द्वितीयार्थे सप्तमी । आभजस्वास्माकं स्वभूतानि हविर्लक्षणान्यन्नानि मध्यमानि च, सां तु भुङ्क्ष्वेत्यर्थः । किञ्च शिक्ष शिक्ष दाने । देहि । वस्वः अन्तमस्य अन्तमशब्दोऽन्तिकनाम (तु. निघ २,१६) । द्वितीयार्थे चोभयत्र षष्ठी । धनं सन्निकृष्टतमम्[?] । अत्यन्तोत्कृष्टमित्यर्थः । तद्धि देवानां सन्निकृष्टतमं भवति, नान्यत्[2] ॥ ५ ॥

वेङ्कट० प्रापय अस्मान् दूरस्थेषु अन्नेषु, आ भज च मध्यमेषु । तथा प्रयच्छ अन्तिकतमं धनमिति ॥ ५ ॥

मुद्गल० हे अग्ने! परमेषु उत्कृष्टेषु द्युलोकवर्तिषु वाजेषु अन्नेषु नः अस्मान् आ भज सर्वतः प्रापय । मध्यमेषु अन्तरिक्षलोकवर्तिषु[1] वाजेषु आ भज[1] । अन्तमस्य अन्तिकतमस्य भूलोकस्य सम्बन्धीनि वस्वः वसूनि शिक्ष देहि ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये द्वाविंशो वर्गः ॥

विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥ ६ ॥

विऽभक्ता । असि । चित्रऽभानो इति चित्रभानो । सिन्धोः । ऊर्मौ । उपाके ।
आ । सद्यः । दाशुषे । क्षरसि ॥ ६ ॥

स्कन्द० विभक्ता त्वम् असि [3]चित्रभानो! भानुर्दीप्तिः । विचित्रदीप्ते । पूजनीयदीप्ते! वा अग्ने†! । कस्य । सिन्धोः ऊर्मौ सिन्धुरत्र स्यन्दनात् सोमोऽभिप्रेतः । ऊर्मावित्यपि षष्ठ्यर्थे सप्तमी । सोमस्योर्मेः । उपाके अन्तिकनामैतत् (तु. निघ २,१६) सन्निकृष्टे । कस्मिन् । सामर्थ्याद् यागकाले । प्राप्ते यागकाले इत्‡ देवानां सोमस्य विभक्तेत्यर्थः । अथवा उपाके इत्येतदूर्मावित्येतेन[4]

१. नास्ति साम्य कु वि॰ लपं. २-२. अस्मान् परमेषूपकल्पितेषु हविर्लक्षणेषु अन्नेषु मध्यमेष्वपि 'यस्य च भावेन भावलक्षणम्' इत्येवं सप्तमी उपकल्पितक्रियाध्याहरति । आभि वा नः इति । इति वा सुप् । परमाणि अन्नानि आ भज्स्व मध्यमानि च । मां तु भुङ्क्ष्व च । शिक्ष दाने । देहि वसु तव सन्निकृष्टतमम् । 'वसु रिक्थं धनं (भाने वि॰ अ) वसुः' इति धने । अभि इस् । यदत्यन्तोत्कृष्टं धनं तद् देवानामन्तिकं भवति नान्यत् वि॰ अ कु † भ यतो वा साक्षा[?]. ३. इति वि. ४-४. हे विचित्रदीप्ते पूज्यदीप्ते वा । स्यन्दनात् सिन्धुः सोमः । इति इः । सोमस्योर्मेः सन्निकृष्टे यागकाले प्राप्ते त्वं देवानां सोमस्य विभक्ता अन्योऽन्याकाल[?] इति वा वि॰ अ कु. † अपि साम्य.
‡ नास्ति साम्य.

[1]समानाधिकरणम् । तादर्थ्यात् ताच्छब्द्येनात्मान्तिकस्थस्य सोमोर्मेर्विभक्तेरर्थे । आकारस्तु इव पूरणो वा मर्यादार्थो वा विभक्तेरेतेन सम्बन्धयितव्य मर्यादया विभक्तेति । विभज्य च सद्य समानेऽहनि तस्मिन्नेव दाशुषे क्षरसि सम्प्रदाने चतुर्थीश्रुते क्षरतिरत्र दानार्थः । यजमानाय ददाति यद् दातव्य धन वा आयुर्वा[1] ॥ ६ ॥

वेङ्कट० दाता भवसि[2] चित्रदीप्ते[3], स्यन्दमानस्य गोधनस्य सद्धे अन्तिकस्थे सति सद्य एव त्वं यजमानाय धनम्[4] क्षरसि ॥ ६ ॥

मुद्गल० हे चित्रभानो[1] विचित्ररश्मियुक्ताग्ने[1] विभक्ता[1] विशिष्टस्य धनस्य प्रापयिता असि । दृष्टान्त । आकार उपमार्थे । यथा सिन्धो नद्या उपाके समीपे ऊर्मौ ऊर्मिं तरङ्गोपलक्षित उदकादिप्रवाह विभजति तद्वत् । दाशुषे हविर्दत्तवत यजमानाय सद्य तदानीमेव क्षरसि कर्मफलभूता वृष्टिं करोषि ॥ ६ ॥

## यम॑ग्ने पृ॒त्सु मर्त्य॒मवा॒ वाजे॑षु॒ यं जु॒नाः । स यन्ता॒ शश्व॑ती॒रिषः॑ ॥ ७ ॥

यम् । अ॒ग्ने॒ । पृ॒त्ऽसु । मर्त्य॑म् । अवाः॑ । वाजे॑षु । यम् । जु॒नाः । सः । यन्ता॑ । शश्व॑तीः । इषः॑ ॥ ७ ॥

स्कन्द० [2]यम् हे अग्ने! पृत्सु सङ्ग्रामेषु मर्त्यम् अवा पालयसि त्वम् । वाजेषु अन्नेषु च हविर्लक्षणेषु निमित्तभूतेषु यम् जुना जुन गतौ । गच्छसि । य च प्रति हवींषि भक्षयितु गच्छसीत्यर्थ । अथवा वाजेष्विति तृतीयार्थे सप्तमी । जुना इत्यपि जुनाते †। जुनाते ‡ सामर्थ्याद् प्रीणनार्थे । अन्नैश्च य प्रीणयसीत्यर्थ । स यन्ता यच्छतिर्दानार्थे । प्रयन्ता । अन्येभ्यो दातेत्यर्थ । अथवा यमु बन्धने । आत्मनि निबन्धा । लब्धेरर्थ । किम् । शश्वती ध्रुवा अनपायिनी । अथवा 'शश्वत् ( निघ ३,१ ) इति बहुनाम । बह्वी । का । इष अन्नानि[2] ॥ ७ ॥

वेङ्कट० यम् त्वम् अग्ने[1] सङ्ग्रामेषु मर्त्यम् रक्षसि, यम् वा तत्र प्रहिणोषि, स नियच्छति[1] बहूनि अन्नानि ॥ ७ ॥

मुद्गल० हे अग्ने[1] पृत्सु सङ्ग्रामेषु यम् मर्त्यम् यजमानम् अवा अवसि रक्षसि । यम् पुरुषम् वाजेषु सङ्ग्रामेषु जुना प्रेरयसि । स नरो यजमान शश्वती इष नित्यान्यन्नानि यन्ता नियन्तु समर्थो भवति ॥ ७ ॥

---

१ १ समानाधिकरणाद् । तादर्थ्याद् आत्मान्तिकस्थस्य सोमस्य ऊर्मौ विभक्ता मर्यादया । आङ् पूरणे मर्यादार्थो वा । विभज्य च तस्मिन्नेवाहनि यजमानाय स्नामि [illegible] यजमानायुर्वा वि[1] अ कु २ भवति सा[4] ३ नास्ति क माव ४ नास्ति वि ५-५ हे अग्ने त्वं सङ्ग्रामेषु यं मनुष्यं पालयसि, हवींषि यं च गच्छसि निमित्तभूतेषु वाजेषु ( पात्रा २ ३,३६ ) इति वाजेष्विति द्वप् । 'पृत्सु तूर्ये युधि इति युद्धे । स्त्रीऽकारो ( पा ३,४,७४ ) इति आदम् उभयत्र विभाषाम् भिभि वा द्वप । जुन गतौ प्रीणने च । वाजेषु यं प्रीणयसि वाज वा [illegible] । यमु [illegible] बन्धने च । यम् अवा जुना च स दाता अन्येभ्य , आत्मनि निबन्धा लब्धा वा ध्रुवाणि अन्नानि बहूनि इति वा । 'भूरिपूर्वी पुविच्छन्ध्य इति बह्वी । उषाश्च यजनादिभ्याद् । 'इरा इ यत्र वि[1] अ इ
† नास्ति मूको ‡ जुनाते साव ६ हि घष्ट[1] वि[1] इ सान्म

नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥ ८ ॥

नकिः । अस्य । सहन्त्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥ ८ ॥

स्कन्द० [1]किञ्च नकिः अस्य नकिरिति निपातो नैत्यस्यार्थे । अस्येत्यनुदात्तत्वात् पूर्वस्याम् ऋच्यादिष्टस्य मर्त्यस्यान्वादेशः । नचास्य मर्त्यस्य हे सहन्त्य ! सहस्वन् ! अभिभवितः ! पर्येता परिगन्ता प्राप्ता । कः । सामर्थ्यादनिष्टः । नचैनं कश्चिदनिष्टः प्राप्नोतीत्यर्थः । अथवा पर्येतेति परिपूर्वं एतिः सामर्थ्यादत्र वधार्थः । न चास्य कश्चिद्धन्तेत्यर्थः । कयस्य चित् कस्यचिदपि । सर्वस्येत्यर्थः । किञ्च वाजः अन्नं बलं वाऽस्य अस्ति भवति श्रवाय्यः श्रवणीयं प्रख्यातम्[1] ॥ ८ ॥

वेङ्कट० यं त्वं सङ्ग्रामेषु सहनशील ! रक्षस्यहिंसार्थम्, अस्य परितो गन्ता न कश्चित् अस्ति । यकार उपजनः । कस्य चिदपि । ससेनमसेनं [2]वा न तं[2] कश्चिदभिभवति । श्रवणीयम्[3] अन्नं च तस्य अस्ति शत्रुभ्यो जितम् ॥ ८ ॥

मुद्गल० हे सहन्त्य शत्रूणामभिभवनशीलाग्ने ! अस्य त्वद्भक्तस्य यजमानस्य [4]कयस्य चित् कस्यापि पर्येता नकिः आक्रमिता नास्ति । किञ्च अस्य यजमानस्य[4] श्रवाय्यः श्रवणीयः वाजः बलविशेषः अस्ति ॥ ८ ॥

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ ९ ॥

सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥९॥

स्कन्द० सः प्रकृतोऽग्निः [5]वाजम् सङ्ग्रामम् विश्वचर्षणिः सर्वस्य द्रष्टा अर्वद्भिः अश्वैः अस्तु तरुता तरतिः प्लवनार्थः । प्लवनं च गमनम्, प्लवतेर्गत्यर्थत्वात् । अस्मदर्थं गन्ताऽस्तु । सङ्ग्रामे गत्वाऽस्माकं नित्यं साहाय्यं करोत्वित्यर्थः । किञ्च वाजमिति सप्तम्यर्थे द्वितीया । तात्स्थ्याद्वा ताच्छब्द्यं मञ्चाः क्रोशन्तीति यथा । तरुतेत्यपि †तुर्वतेर्हिंसार्थस्येदं रूपम् । सङ्ग्रामे सङ्ग्रामस्थम् अस्मच्छत्रुं हिंसिताऽस्तु । किञ्च विप्रेभिः तृतीयानिर्देशात् स्तूयमान इति वाक्यशेषः । मेधाविभिरस्माभिः स्तूयमानः अस्तु सनिता सम्भक्ता । कस्य । सामर्थ्यादस्मत्स्तुतीनाम्[5] अस्माकमेव वा[6] ॥ ९ ॥

वेङ्कट० सः सङ्ग्रामं विश्वस्य द्रष्टा अश्वैः अस्तु तरुता तारकः । मेधाविभिरश्वैः अस्तु सङ्ग्रामं संभक्ता ॥ ९ ॥

---

१-१. किञ्च अस्य शब्दानुदात्तत्वात् पूर्वस्याम् ऋचि उक्तस्य अन्वादेशः । अन्वादेशेऽनुदात्तं स्यात् । हे सहन्त्य षह मर्षणे अभिभवे च । हे सहस्वन् अभिभवितः वा । न चास्य मर्त्यस्य अनिष्टः परिगन्ता । नचैनं कश्चिदनिष्टः प्राप्नोतीत्यर्थः । परेः इण् वधे वा । न चास्य कश्चिद् हन्ता । कयस्य चित् कस्यचिदपि । सर्वस्य त्वत्सेवकस्य । किं च अन्नं बलं वा अस्यास्ति च श्रवणीयं प्रख्यातम् वि[1] अ कु. २-२. वा न ल वि[1]; वा साम्व[2]. ३. श्रवणी° वि[1] साम्व. ४-४. नास्ति वि. ५-५. सग्रामं सर्वस्य द्रष्टा अश्वैरस्मदर्थं गन्तास्तु । तॄ प्लवनतरणयोः, गतौ च । स संग्रामं गत्वाऽस्माकं नित्यं साहाय्यं करोतु । वाजम् इति द्वौ वा अम् । तात्स्थ्याद्वा तच्छब्दः । सङ्ग्राममस्मच्छत्रुं हिनस्तु । किञ्च मेधाविभिरस्माभिः स्तूयमानः अस्मत्स्तुतीनां संभक्ता अस्तु वि[1] अ कु. † तुर्व° साम्व. ६. च मूको.

मुद्गल० विश्वचर्षणिः सर्वैर्मनुष्यैरुपेतः सः अग्निः अर्वद्भिः अश्वैः वाजम् संग्रामम् तरुता तारयिता अस्तु । विप्रेभिः मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः सनिता 'फलस्य दाता' अस्तु ॥ ९ ॥

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥ १० ॥

जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥ १० ॥

स्कन्द० अत्रेतिहासमाचक्षते — अग्निः स्तूयमानः शुनःशेपमुवाच — 'रुद्रं स्तुहि, रौद्रा हि पशवः' इति । स तं प्रत्युवाच — 'नाहं जानामि रुद्रं स्तोतुम्, त्वमेवैनं स्तुहि' इति । तदेतदनयोच्यते [1]'जराबोधेति । जरा स्तुतिः जरतेः स्तुतिकर्मणः (द्र. या. ४,३८) । तां यो बुध्यते बोधयति देवान् होतृत्वात्स जराबोधोऽग्निः, तस्य सम्बोधनं हे जराबोध ! तत् विविड्ढि विदेः ज्ञानार्थस्येदं रूपम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । यद् मामवोचः तत् त्वमेव वेत्सि । अथवा विविड्ढीति विष्लृ व्याप्तौ इत्यस्यैतद्रूपम् । अयं च 'वेषः' ( निघ २,१ ) इति कर्मनामसु पाठाद्व्याप्त्यावजत्वात् कर्मणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि, न व्याप्त्यर्थः एवेति गम्यते । तत् कुर्वित्यर्थः । किं तत् । उच्यते । विशेविशे यज्ञियाय सर्वत्र तादर्थ्ये चतुर्थी । यावान् कश्चिन्मनुष्यो यज्ञार्होऽहं वान्यो वा यज्ञस्य कर्ता तस्य सर्वस्यार्थाय । स्तोमम् रुद्राय रुद्रार्थम् । कीदृशम् । दृशीकम् दर्शनीयम् । अथवा यज्ञियायेत्येतद् रुद्रायेत्येतेन समानाधिकरणं न विशेविशे इत्येतेन । विशेविशे इति षष्ठ्यर्थे चतुर्थी । सर्वमनुष्याणां यज्ञार्हाय रुद्राय स्तोममिति । यास्कस्तु (द्र या १०,७) रोरूयमाणत्वाद् अग्निरेवात्र रुद्रशब्देनोच्यत इति व्याचष्टे । तत्र जराबोधेति आत्मन एवान्तरात्मन इदं सम्बोधनमिति व्याख्यातव्यम् । स्तुत्या स्तुतेर्वा बोधयितः ! अन्तरात्मन् ! यदुच्यते तद् विविड्ढि । किं तत् । सर्वमनुष्याणां यज्ञियाय स्तोममग्नय इति[1] ॥ १० ॥

वेङ्कट० स्तुत्या देवानां बोधयितः ! स्तोतः ! तत् जानीहि मनुष्यस्य यज्ञियाय स्तोमम् रुद्राय [2]दर्शनीयम् । अत्र यास्कः[3] ( १०,७;८ ) — 'अग्निरपि रुद्र उच्यते' । ××× 'जरा स्तुतिः जरते स्तुतिकर्मणः तां [4]बोध तया[4] बोधयितरिति वा । तद्विविड्ढि तत् कुरु । मनुष्यस्य मनुष्यस्य यज्ञनाय स्तोमं रुद्राय दर्शनीयम्' इति ॥ १० ॥

---

१-१. फलदाता वि. २-२. जर स्तुतौ । जरा स्तुतिं यो बुध्यते बोधयति देवान् होतृत्वात् सः । जराबोध भो यन्माम् अवोचः तत् त्वमेव वेत्सि । विष्लृ व्याप्तौ । अयं च 'वेषः' इति कर्मनामसु पाठात् नाम्ना च आख्यातजत्वात् कर्मणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि । तत्कुरु । यो वा कश्चिन्मनुष्यः यज्ञार्हः अहं वा अन्यो वा तस्य सर्वस्यार्थं स्तोमं रुद्रार्थं दृशीकं दर्शनीयम् । दर्शनमर्हतीति दृशीकम् (दाधिर.? वि[1] अ. ) । तदर्हतीत्यर्थे टक् । यतदर्थ एव 'यज्ञर्त्विग्भ्यां घखञौ' (पा ५,१,७१) । 'घस्य इय्' (पा ७,१,२) । यज्ञियः । यज्ञकर्मार्हः । यज्ञियाय रुद्रायेति वा, न विशेविशे । विशेविशे इति आमि ङे । सर्वमनुष्याणां यज्ञार्हाय रोरूयमाणत्वादग्निरेव रुद्रः इति यास्कः । तत्रैव जराबोध इति आत्मा अन्तरात्मानं सम्बोधयति । स्तुतिभिः ! अन्तरात्मन् ! यदुच्यते तद्विविड्ढि कुरु विशां यज्ञार्हाय अग्नये स्तुतिं नाम् वि[1] अ कु. † कर्मेत्यर्थः । ग: साम्य[1,2]. ‡ प्रयोगात् साम्य[1,2]. ३-३. नास्ति वि[1]. ४-४. नास्ति कु; बोधयिता साम्य.

मुद्गल० हे जराबोध[1] जरया स्तुत्या बोध्यमान[1] अग्ने[1] विशेविशे तत्तद्यजमानरूपप्रजानुग्रहार्थम् यज्ञियाय यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थम् तत् देवयजनम् विविड्ढि प्रविश । यजमानोऽपि[1] रुद्राय क्रूराय अग्नये तुभ्यम् दृशीकम् दर्शनीय समीचीनम् स्तोमम् स्तोत्र करोतीति शेष ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये त्रयोविंशो वर्ग ॥

स नो॑ म॒हाँ अ॑नि॒मा॒नो धू॒मके॑तुः पुरु॒श्च॒न्द्रः । धि॒ये वाजा॑य हिन्वतु ॥ ११ ॥

स । न॒ । म॒हान् । अ॒नि॒ऽमा॒न । धू॒मऽके॑तु । पु॒रु॒ऽच॒न्द्र । धि॒ये । वाजा॑य । हि॒न्व॒तु ॥ ११ ॥

स्कन्द० 'स अग्नि न अस्मान् महान् अनिमान अनियत मान यस्य सोऽनिमान । नियत परिमाणवर्जित । धूमकेतु केतु पताकोच्यते । धूम पताकास्थानीयो यस्य स धूमकेतु । अथवा 'केतु '(निघ ३,९) इति प्रज्ञानाम । धूम केतु ज्ञान यस्य स धूमकेतु । धूमेन ज्ञायत इत्यर्थ । पुरुश्चन्द्र 'पुरु' ( निघ ३,१ ) इति बहुनाम । 'चन्द्रश्चन्दते कान्तिकर्मण ' (भा ११,५)। बहूना कान्त । धिये प्रज्ञायै, कर्मणे वा यागाख्याय वाजाय अन्नाय च हिन्वतु । हिन्वति प्रीणनार्थ । प्रीणयतु । अग्निना हि प्रीण्यमाना† वय सुख प्रज्ञा यागम् अन्न च प्राप्नुम [1] ॥ ११ ॥

वेङ्कट० 'स अस्मान्[2] महान्[3] निमानवर्जित [4] धूमकेतु बहूना कमनीय कर्मणे अन्नाय च प्रहिणोतु ॥११॥

मुद्गल० स अग्नि न अस्मान् धिये कर्मणे वाजाय अन्नाय च हिन्वतु प्रीणयतु । कीदृश । महान् गुणाधिक अनिमान निमानवर्जित । अपरिच्छिन्न इत्यर्थ । धूमकेतु धूमेन ज्ञाप्यमान [5] पुरुश्चन्द्र बहुदीप्ति [6] ॥ ११ ॥

स रे॒वाँ इ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॑णोतु नः । उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः ॥ १२ ॥

स । रे॒वान्ऽइ॑व । वि॒श्पति॑ । दैव्य॑ । के॒तु । शृ॒णो॒तु॒ । न॒ । उ॒क्थै । अ॒ग्नि । बृ॒हत्ऽभा॑नु ॥१२॥

स्कन्द० 'स रेवान् धनवान् इव विशपति विशो मनुष्या तेषामपि पतिर्विश्पति राजा । यथा धनवान् राजा सर्वार्थिनाम् एवमभिप्रेतानि सम्पादयन् । दैव्य देव देवेषु वा भवो दैव्य । केतु प्रज्ञानसत्त्व† कर्ता वा सर्वस्य कर्मण शृणोतु न उक्थे द्वितीयार्थे एषा तृतीया । उक्थानि शस्त्राणि अग्नि बृहद्भानु महादीप्ति.[8] ॥ १२ ॥

---

1 °नानो रि त्रि २ २ सोऽग्निरस्माकं महान् । अनियतं मानं यस्य स अनियतपरिमाण । केतु पताका । धूम पताकास्थानीयो यस्य स । केतुर्ज्ञानं वा । धूमेन यो ज्ञायते स इति वा । 'उरु विस्त तुवि पुरु' इति बहो । चदि आह्लादने । बहूना कान्त प्रज्ञायै यागाख्याय कर्मणे वा अन्नाय च प्रीणयतु । 'धीधिष्ठा' इति, 'धी सुम्न' इति वा । हिनु प्रीतौ । स्तुर्यो । अग्निना प्रीयमाणा वयं सुखं धियं वाजं च प्राप्नुयाम वि[1] अ कु. † प्रीयमाणा साम्ब[1]. ३ ३ नास्ति वि[1]. ४ अति साम्ब कु ५ मानवर्जित वि[1] कु साम्ब ६ प्राप्य वि ७ °दीप्ति वि ८-८ स धनवानिव प्रजा सर्वार्थिनामभिवर्णाभिप्रेतानि सम्पादयन् । देव देवभवो वा प्रज्ञानसत्त्व सर्वकर्मणां वा शृणोतु अस्माकं उक्थानि भक्तिमहादीप्ति । उक्थैरिति द्वाभि भिन्नम् । तृतीयमानमक्रवाक्यमनुक्तम् । स्तनानि श्रुत्वाऽन्यान भिन्नार्थ सैसादेव वि[1] अ कु † प्रज्ञानसत्त्व साम्ब

वेङ्कट० स धनवानिव मनुष्यराज[1] देवाना प्रज्ञानभूत[2] शृणोतु अस्मान् क्रियमाणे स्तोत्रे अग्नि महातेजा ॥ १२ ॥

मुद्गल० स अग्नि उक्थै स्तोत्रै युक्तान् न[3] अस्मान् शृणोतु । दृष्टान्त—रेवानिव यथा लोके धनवान् राजा वन्दिना स्तोत्र शृणोति तद्वत् । कीदृश । विशांपति प्रजापालक दैव्य देवाना सम्बन्धी केतु दूतवज्ज्ञापक बृहद्भानु प्रौढरश्मि ॥ १२ ॥

नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।
यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥ १३ ॥

नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः । नमः॑ । आ॒शि॒नेभ्यः॑ ।
यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा । ज्याय॑सः । शंस॑म् । आ । वृ॒क्षि॒ । दे॒वाः॒ ॥ १३ ॥

स्कन्द० इति प्रार्थित अग्निस्तमुवाच—"विश्वान्नु देवान् स्तुहि इति । स तान् 'नम' इत्यृचाऽस्तौत्" (तु ऐब्रा ७,१६)। "देवा इत्यामन्त्रितयोगात् प्रत्यक्षकृतोऽयं मन्त्र । नम महद्भ्य वृद्धेभ्य युष्मभ्यम् । नम अर्भकेभ्य अल्पनामैतत् (तु निघ ३,२)। अल्पेभ्य । बालेभ्य इत्यर्थ । नम युवभ्य तरुणेभ्य । नम आशिनेभ्य [व्याप्तेभ्य परिणतेभ्य] तारुण्यवृद्धत्वलक्षणयोर्द्वयोरपि[‡] वयसोर्व्याप्त्वादामव्यपलितेभ्यो[¶] मध्यमवयस्केभ्यो वेत्यर्थ । कुत एतत् । द्वयोरधिकारादस्य च वयस परिशिष्टत्वात् (तु स्क [या ३,२०]) । किञ्च यजाम देवान् यदि शक्नवाम अविगुणयागस्य दुष्करत्वाद् एवमाह यदि शक्नवामेति । यत एवमतो ब्रवीमि—मा ज्यायस वृद्धतरस्य दीर्घतरस्य वा आयुष शंसम् आशंसा प्रार्थना वा आ वृक्षि वृश्चतेश्छेदनार्थस्येदं रूपम् । मध्यमपुरुषबहुवचनस्य स्थाने इह प्रत्ययलोत्तमपुरुषैकवचनम् । मा छैत्त यूय हे देवा । मा मे आयुष प्रार्थनामपहार्ष्ट, दत्त मे दीर्घमायुरित्यर्थ । अथवा वृक्षीति स्वार्थ एवोत्तमपुरुष । मा इत्येव तु धीरयेतस्यार्थमाह । मात्मनो दीर्घस्यायुष प्रार्थना विच्छिद्यासम् । अविच्छेदेन सततमायु प्रार्थये । भवन्तश्च यथाप्रार्थितमेव मे देयासु इत्यर्थ[4] ॥ १३ ॥

वेङ्कट० नम महाशरीरेभ्य । नम अल्पशरीरेभ्यश्च[5] । नम युवभ्य वृद्धेभ्यश्च । शक्ता चेद्वयं[6] देवान् एव यजाम[7] । अभ्युदयस्य अभिलाषं[8] हे देवा । मा अहम् वृश्चि । वृश्चविच्छेदनकर्मा । आशाच्छेदाद्[9] अहं निराशो मा[10] भूवमिति ॥ १३ ॥

---

१ °राजा इव भ[१] २ प्रज्ञाभूत साम्र[२] ३ नास्ति त्रि ४ ४ नमो वृद्धेभ्य तरुणेभ्य अनतिवयोभिरधिनेभ्यो युवभ्यश्च । नमो बालेभ्य । नमस्तरुणेभ्य । नमो व्याप्तेभ्य परिणतेभ्यो वा । तारुण्यवृद्धत्वलक्षणयोर्द्वयोरपि वयसो । आमव्यपलितेभ्यो मध्यमवयस्केभ्य । द्वयोरधिकाराद् अस्य च वयस परिशिष्टत्वाच्चेति । यजाम देवान् यदि शक्नवाम । अविगुणयागस्य दुष्करत्वात् यदि शक्नवामेति । यत एवमतो ब्रवीमि—मा वृद्धतरायुष दीर्घतरस्यायुषो वा आशंसनमपहार्ष्ट हे देवा । वृश्चू छेदने । अस्य स्थाने व्यत्ययेन लिङ् । मा छैत्त मा मे आयुष प्रार्थनामपहार्ष्ट । दत्त मे दीर्घमायु । स्वार्थ एव वा लिङ् । मा अहमात्मनो दीर्घायु प्रार्थना विच्छेत्स्यम्, अविच्छेदेन सततमायु प्रार्थये । भवन्तश्च यथाप्रार्थितमेव मे देयासु त्रि' अ कु † † परिणतानां वा साम्र ‡ °व्यपेता इत्या° साम्र ¶ °लितेभ्य° साम्र ५ °शरीरेभ्य कु ६ दयवन त्रि°. ७ यजाम मूको ८ लाषस्य कु; °लाष भ' साम्र ९ नास्ति साम्र कु १०. नास्ति त्रि

मुद्गल० अग्निना प्रेरितः शुनःशेपः विश्वान् देवान् अनया तुष्टाव । नमः महद्भ्यः गुणैराधिकेभ्यो देवेभ्यः । नमः अर्भकेभ्यः गुणैरल्पेभ्यो देवेभ्यः, नमः युवभ्यः तरुणेभ्यो देवेभ्यः । नमः आशिनेभ्यः वृद्धेभ्यो देवेभ्यः । यदि शक्नवाम कथंचित्[1] धनादिसंपत्त्या शक्ताश्चेत् तदानीम् देवान् यजाम । हे देवाः ! ज्यायसः ज्येष्ठस्य देवताविशेषस्य आ सर्वतः प्रसृतम् शंसम् स्तोत्रम् मा वृक्षि अहं विच्छिन्नं मा कार्षम् ॥ १३ ॥

इति प्रथमाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः ॥

[२८]

यत्र ग्रावा॑ पृथुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे । उ॒लूख॑लसुताना॒मवे॒द्विन्द्र॑ जल्गुलः ॥ १ ॥

यत्र॑ । ग्रावा॑ । पृ॒थुऽबु॑ध्नः । ऊ॒र्ध्वः । भव॑ति । सोत॑वे । उ॒लूख॑लऽसुतानाम् । अव॑ । इत् । ऊँ इति॑ । इन्द्र॑ । ज॒ल्गु॒लः ॥ १ ॥

स्कन्द० 'ऐन्द्रश्चतुर्ऋचः परः' ( बृ. बृदे ३,१०० ) । 'इन्द्रदेवत्योऽयं चतुर्ऋचः 'नमो महद्भ्यः' इत्यस्याः परः[2] । वियुक्तपाशः शुनःशेप एतेन चतुर्ऋचेन सोमं जुहाव । परेणोलूखलमुसलेनाभिसुषाव[3] । अन्त्यया द्रोणकलशमभ्यवनिनाय । यथा वियुक्तपाशं शुनःशेपमधिकृत्य ब्राह्मणं भवति—"तमृत्विज ऊचुः—'त्वमेव नोऽस्याह्नः संस्थामधिगच्छेति । अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श । तमेताभिश्चतसृभिरभि-सुषाव 'यच्चिद्धि त्वं गृहेगृहे' (ऋ १,२८,५) इति" ( ऐब्रा ७,१७ ) इति । एतासां चर्चामुलूखलमुसल-देवतात्वादुलूखलमुसलेनाभिसुषावेति गम्यते । "अथैनं द्रोणकलशमभ्यवनिनाय 'उच्छिष्टं चम्वोर्भर' ( ऋ १,२८,९ ) इत्येतयर्चा । अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकार" ( ऐब्रा ७,१७ ) इति । यत्र यज्ञे अभिषवग्रावा पृथुबुध्नः हस्तेनोद्घृष्यमाण ऊर्ध्वः भवति सोतवे सोमाभिषवार्थम् । यत्रेति श्रुतेस्तत्रेत्यध्याहार्यम् । तत्र उलूखलसुतानाम् द्वितीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वैकदेशमिति शेषः । उलूखलसुतं सोमम्, उलूखलसुतस्य वा सोमस्यैकदेशम् । अव इत् इन्द्र ! जल्गुलः अवेत्युपसर्गो जल्गुल इत्याख्यातेन सम्बन्धयितव्यः । जल्गुल इत्येतच्च गिरतेर्यङ्लुगन्तस्य रूपम् । उ इति पदपूरणः । हे इन्द्र ! अव जल्गुलः अत्यर्थं पुनःपुनर्वा अवगिर पिबेत्यर्थः[4] । [5]अधिषवणफलकयोरेव सोमोऽभिषूयते नोलूखले । तत्राभिधानात् तदाकार-त्वात् तत्कार्यकरत्वाद् वा उलूखलशब्दः[5] ॥ १ ॥

---

१. नास्ति वि मै. २. नास्ति वि॰ अ कु. ३. °लमुले मु° साम्ब. ४-४. इति पद्मभिरुक्तम् । यत्र यज्ञे अभिषवग्रावा विस्तीर्णाधोभागः हस्तेनोद्घृ(? घ)ष्यमाण ऊर्ध्वो भवति सोमाभिषवार्थम् । तत्र उलूखलसुतं सोममत्यर्थं पिब । पुनःपुनः पिब इति वा । गॄ निगरणे । अनिष्टार्थोऽवपूर्वत्वात् । क्रियासमभिहारार्थे यङ्लुगन्तम् अवजल्गुलः इति । 'सन्यङोः' (पा ६,१,९) इति द्वित्वम् । 'गुणो यङ्लुकोः' (पा ७,४,८२) इति गुणः । उरण्रपरत्वम्, 'उदोष्ठ्यपूर्वस्य' (पा ७,१,१०२) 'बहुलं छन्दसि' (पा ७,१,१०३) इति उत्वम् वि॰ अ कु. † शब्दार्थः साम्ब. ५-५. उलूखलसोमाभिषवस्याभिधानात् उलूखलशब्दगुण्यः 'सुतानाम्' इत्यत्र च 'यच्चिद्धि त्वं गृहेगृहे' इत्यत्र च तदाकारत्वात् तत्कार्यकरत्वाद् वा अधिषवणफलकयोराधिषवणवत् ग्रावद्रुतानामिति व्याख्यानम्यम् साम्ब[1,2],

वेङ्कट० यस्मिन् यज्ञे अभिषवग्रावा पृथुमूल आहननप्रकार ऊर्ध्वमुख भवति सोमाभिषवाय। तत्र उलूखलसुतान् सोमान् इन्द्र[1] त्वम् अव जल्गुल अवगिर[1] पिब ॥ १ ॥

मुद्गल० 'यत्र ग्रावा' इति नवर्चं पञ्चम सूक्तम्। 'शौन शेपस् । आद्या [2] षडनुष्टुभ । 'आयजी' इत्याद्या स्तिस्रो गायत्र्य । [3]आद्याश्चतस्र ऐन्द्र्य[3] । ततो द्वे उलूखलदेवत्ये। [4]ततो द्वे उलूखलमुसल देवत्य[4] । अन्त्याया 'उच्छिष्टम्'[5] इत्यस्या हरिश्चन्द्राधिषवणचर्मसोमानामन्यतमो देवता ॥

हे इन्द्र! यत्र यस्मिन् अत्र सवे कर्मणि सोतवे अभिषवार्थम् ग्रावा पाषाण पृथुबुध्न स्थूलमूल ऊर्ध्व उन्नत भवति । तस्मिन् कर्मणि उलूखलसुतानाम् उलूखलेनाभिषुताना रसम् अव इत् स्वकीयत्वेनावगत्यैव जल्गुल भक्षय ॥ १ ॥

यत्र॒ द्वावि॑व ज॒घना॑धिषव॒ण्या॑ कृ॒ता । उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ॥ २ ॥

यत्र॑ । द्वाऽइ॑व । ज॒घना॑ । अ॒धि॒ऽस॒वन्या॑ । कृ॒ता । उ॒लूख॑लऽसुतानाम् । अव॑ । इत् । ऊँ॒ इति॑ । इ॒न्द्र॒ । ज॒ल्गु॒ल॒ ॥ २ ॥

स्कन्द० यत्र यज्ञे '[6]द्वौ इव जघना[6] यथा मैथुनकाले स्त्रीपुंसजघने एवम् अभिषवकाले परस्पर सम्पर्कौ [7]अधिषवण्या। प्रथमाद्विवचनस्यायमाजादेश । अधिषवण्यौ ग्रावाणौ कृता कृतौ । तत्र उलू खलसुतानाम् इत्याद्युक्तार्थम्[7] ॥ २ ॥

वेङ्कट० यत्र 'द्वौ इव' जघनौ अधिषवणफलके विस्तीर्णे अध्वर्युभि कृत '[8]प्रतिमुखौ पुरस्तात् समाविस्तीर्णौ पश्चात्' (आपश्रौ ११,१,३१) इत्यधिषवणफलकयो[8] सूत्रमिति ॥ २ ॥

मुद्गल० यत्र [10]यस्मिन् कर्मणि अधिषवण्या उभे अधिषवणफलके द्वौ इव जघना द्वौ जघनस्य प्रदेशाविव कृता विस्तीर्णे कृते सपादिते । अन्यत् पूर्ववत्[10] ॥ २ ॥

यत्र॒ नार्य॑पच्य॒वमु॑पच्य॒वं च॒ शिक्ष॑ते । उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ॥ ३ ॥

यत्र॑ । नारी॑ । अ॒प॒ऽच्य॒वम् । उ॒प॒ऽच्य॒वम् । च॒ । शिक्ष॑ते । उ॒लूख॑लऽसुतानाम् । अव॑ । इत् । ऊँ॒ इति॑ । इ॒न्द्र॒ । ज॒ल्गु॒ल॒ ॥ ३ ॥

---

१ अवगिर साम्ब कु, वा गिरा एप वि[1], वा गिर अ[1] वि[1], अवगिर ल   २-२ शुन शेप काम आग्नि मै[1]   ३ ३ आग्नितद्चतसृणामिन्द्रा देवता मै[1]   ४ ४ तदनन्तरभाविन्यौ उलूखलमुसलोभयदेवताक मै   ५ नास्ति वि मै[1]   ६ ६ नास्ति वि[1] अ कु   ७ ७ अधिषवणफलकग्रावाणौ कृतौ । औतिभक्ते आद् । तत्राधिषवणफलकाभ्या ( [9]षवणाभ्या वि[1] अ ) सुतमवपिब वि[1] अ कु   ८ ८ अथापि वा वि[1] अ[1]   ९ ९ प्रति मुखे पुरस्तात् समाने पश्चाद्विषधि० साम्ब कु प्रतिमुखे पुरस्तात् समाविस्तीर्णे पश्चादधिषवणफलके वा (?) इत्ये वि[1] ए   १० १० नास्ति वि मै[1]

स्कन्द० 'नारी इत्येतदलुप्तोपमा'[1]। यत्र यज्ञे, मैथुनकाले स्वजघने नारीव पुरुषाय, एकोऽभिषवग्रावा इतरस्मै ग्राव्णे [2]अपच्यवम् उपच्यवम् च च्यवतिर्गत्यर्थः। अपगमनमुपगमनम् च शिक्षते ददाति। अपगच्छत्युपगच्छति चेत्यर्थः। तत्र उलूखलसुतानाम् इत्याद्युक्तार्थम्[2] ॥ ३ ॥

वेङ्कट० यत्र अभिषवप्रवृत्तं ग्रावाणं दृष्ट्वा स्त्री भर्तरि प्रवेशकौशलं निर्गमनकौशलं च शिक्षते ॥ ३ ॥

मुद्गल० यत्र यस्मिन् कर्मणि नारी पत्नी अपच्यवम् शालाया निर्गमनम् उपच्यवम् च शालाप्रासिञ्च शिक्षते अभ्यासं करोति। अन्यत् पूर्ववत् ॥ ३ ॥

यत्र मन्थां विबध्नते रश्मीन्यमितवा इव। उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ४ ॥

यत्र। मन्थाम्। विऽबध्नते। रश्मीन्। यमितवैऽइव। उलूखलऽसुतानाम्। अव। इत्। ऊँ इति। इन्द्र। जल्गुलः ॥ ४ ॥

स्कन्द० यत्र यज्ञे [3]मन्थाम् अभिषवग्रावाऽत्र मन्था उच्यते सोमस्य मथितृत्वात्। तं विबध्नते विबध्नन्त्यङ्गुलीभिः। कथम्। रश्मीन् यमितवा इव अश्वरश्मीनिव† नियन्तुमश्वान्। अथवा दधिमन्थनरज्जूरवाह। तृतीयार्थे द्वितीया। यथा दधिमन्थानं नियन्तुं रज्जुभिर्बध्नीयुस्तद्वदित्यर्थः। तत्र उलूखलसुतानाम् इत्याद्युक्तार्थम्[3] ॥ ४ ॥

वेङ्कट० यस्मिन् यज्ञे सोमाभिषवाय[4] ग्रावाणं धारयन्ति रश्मीन् इव अश्वानां यमनाय[5] तत्र उलूखलसुतानाम् इति ॥ ४ ॥

मुद्गल० यत्र यस्मिन् कर्मणि मन्थाम् आशिरमथनहेतुं मन्थानम् विबध्नते विबध्नन्ति। दृष्टान्तः। रश्मीन् अश्वबन्धनार्थान्[1] प्रग्रहान् यमितवा इव नियन्तुमिव। अन्यत् पूर्ववत् ॥ ४ ॥

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे। इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥५॥

यत्। चित्। हि। त्वम्। गृहेऽगृहे। उलूखलक। युज्यसे। इह। द्युमत्ऽतमम्। वद। जयतामऽइव। दुन्दुभिः ॥ ५ ॥

स्कन्द० 'उलूखलस्य द्वे द्ये' (तु० बृदे ३,१०१): [6]द्वे एते ऋचौ उलूखलदेवत्ये। यत् चित् यद्यपि हि इति पदपूरणः। त्वम् गृहेगृहे उलूखलक! युज्यसे व्रीह्यादिअवघातार्थम्। यद्यपीति वचनात् तथापीत्यध्याहार्यम्। तथापि इह† मया शुनःशेपेन सोमाभिषवाय नियुक्तम् द्युमत्तमम् दीप्तिमत्तमम् वद शब्दं कुरु। कथम्। जयताम् इव राज्ञाम् दुन्दुभिः वादित्रम्। सङ्ग्रामे हि ये जयन्ति तेषां दीप्तिमद् दुन्दुभिर्वदति नेतरेषाम्[7] ॥ ५ ॥

१-१. नास्ति वि[1] अ कु. २-२. अपगमनमुपगमन च ददाति। च्यु गतौ। शिक्ष दाने। अपगच्छत्युपगच्छति चेत्यर्थ। तत्र सोमं सिव वि[1] अ कु. ३-३ अभिषवग्रावाण विबध्नन्ति अङ्गुलीभि.। अश्वरश्मीन् नियन्तुमश्वानिव। सोमस्य मथितृत्वात् ग्रावा मन्थाः दधिमन्थनरज्जूर्वा। दामिमो. अमूश्मौ। यथा दधि मन्थानेन नियन्तुं रज्जुभि र्बध्नीयुस्तद्वत्। तत्रोलूखलसुत विव वि[1] अ कु. † अश्व° रश्मी° साम्ब. ४. अभिषवाय साम्ब[1] कु; अभिषवग्रा° साम्ब[2,1]. ५. यमनात् स्पं. ६. नास्ति वि मं[2]. ७-७. यद्यपि त्वं गृहेगृहे हे उलूखल व्रीह्यवघातार्थं युज्यसे तथापि इह मया सोमाभिषवाय युक्तस्त्वम् दीप्तिमत्तमं वद शब्दं कुरु। यथा जयता राज्ञा दुन्दुभि आसादि: वि[1] अ कु. † नास्ति साम्ब.

वेङ्कट० यदि अपि हि[1] त्वम् उलूखल[2]! सर्वेषु गृहेषु युज्यसे[3] इह अपि दीप्ततमम् वद मुसलेनाभिहत । यथा जयताम् दुन्दुभिः ॥ ५ ॥

मुद्गल० हे उलूखलक! यत् चिद्धि यद्यपि त्वम्[4] अवघातार्थम् गृहेगृहे युज्यसे तथापि इह वैदिककर्मणि[5] तीव्रमुसलप्रहारेण द्युमत्तमम् अतिशयेन दीप्त प्रभूतध्वनियुक्तशब्दम् वद । दृष्टान्त । जयताम् इव दुन्दुभि यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिः महान्त ध्वनिं करोति तद्वत् ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः ॥

उ॒त स्म॑ ते वनस्पते॒ वातो॒ वि वा॒त्यग्र॒मित्। अथो॒ इन्द्रा॑य॒ पात॑वे सु॒नु सोम॑मुलूखल ॥६॥

उ॒त । स्म॒ । ते॒ । व॒न॒स्प॒ते॒ । वात॑ । वि । वा॒ति॒ । अग्र॑म् । इत् । अथो॒ इति॑ । इन्द्रा॑य । पात॑वे । सु॒नु । सोम॑म् । उ॒लू॒ख॒ल॒ ॥ ६ ॥

स्कन्द० 'उत' इति पदपूरण यस्मादर्थे वा । स्म इति तु पदपूरण एव । वनस्पते इति 'अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति' ( या २,५ ) इत्येवं वनस्पतिविकारस्योलूखलस्याभिधानम् । यस्मात् ते तव हे वनस्पतिविकार!‡ वृक्षावस्थायाम् वातः वि वाति वाति स्म सामर्थ्यात् कम्पनार्थे । लट् च भूते काले । वातो विविधमकम्पयदित्यर्थः । किम्? अग्रम् । इत् इति इत्तु पदपूरणः । अथो अयमपि पदपूरण । तस्मात् इन्द्राय पातवे पातुम् इन्द्र पास्यतीत्येवमर्थम् । सुनु सोमम् हे उलूखल[1] । वात इन्द्र. स यस्माद् वृक्षावस्थाया मग्रकम्पनेन तवोपकृतवान्, तस्मात् त्वमपि प्रत्युपकारार्थं तत्पानार्थं सुनु सोमम् उलूखलेत्यर्थः । अथवा वातो वि वात्यग्रमिति निष्प्रयोजनत्वमिति प्रतिपाद्यते । एतदुक्त भवति । यस्माद् वृक्षावस्थाया वातेन चल्यमानमग्र कचिदप्यन्यत्राविनियुक्त निष्प्रयोजनमासीत्[2] । इदानीं तु महति प्रयोजने इन्द्रपानार्थं सोमाभिषवे विनियुक्तमसि । तस्मात् सुनु "सोमम् उलूखलेति" ॥ ६ ॥

वेङ्कट० वृक्षविकारस्य वृक्षवत्[3] स्तुतिः । अपिच ते वनस्पते! वात अग्रम् एव चलयतीन्द्रप्रसादात्[4] । तथा सति इन्द्रस्य पानार्थम् सुनु सोमम् उलूखल[5] ॥ ६[6] ॥

मुद्गल० उत अपि च हे वनस्पते उलूखलरूप वृक्ष[7] ते अग्रम् इत् तव पुरत एव वात वि वाति स्म स्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्र[8] सरति खलु । अथो अनन्तरम् हे उलूखल इन्द्राय इन्द्रोपकारार्थम् पातवे पातुम् सोमम् सुनु सोमाभिषवं कुरु ॥ ६ ॥

---

१. नास्ति वि[°] रुप २. °त्सु[?]गानम् वि[°] रुप. ३ युज्यसे स साम्य कु ४ नास्ति वि ५. °दिके क[°] मै[°]. ६-६ हे वनस्पतिविकार उलूखल! [illegible] क्रियते । तद्धितेन [illegible] भवन्ति' इत्येवम् । यस्मात्तव [illegible] वायुर्विविधमकम्पयत् तस्मादिन्द्रस्य पातुम् [illegible] । हे [illegible] वा । वा [illegible] च । 'लट् स्मे' ( पा ३,२,११८ ) इति भूते वाति स्म । [illegible] सोमाभिषवस्याभिधानम् [illegible] । [illegible] ( °म तान वि[°] अ ) [illegible] ( १ वि[°] अ ) [illegible] सुनु । [illegible] ( १ वि[°] अ ) [illegible] वि[°] अ [illegible] ‡ [illegible] साम्य ७-७. [illegible] वि[°] अ कु. ८. [illegible] साम्य[°]. ९ [illegible] साम्य[°]. १०. [illegible]

आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः । हरीइवान्धांसि बप्सता ॥ ७ ॥

आयजी इत्याऽयजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः । हरी इवेति हरीऽइव । अन्धांसि । बप्सता ॥ ७ ॥

स्कन्द० 'द्वे परे मुसलस्य च 'उलूखलस्य च' (तु. बृदे ३,१०१)। उभयदेवते इत्यर्थः । ता ह्युच्चेति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । ये उलूखलमुसले आयजी. मर्यादया यष्ट्री । अवघातद्वारेण यागस्य कर्त्री इत्यर्थः । वाजसातमा अवघातवेलायामन्नस्य सम्भक्तृतमे । ता हि हिशब्दः पदपूरणः । ते उच्चा उच्चैः विजर्भृतः हरतेर्यङ्लुगन्तस्य कर्मणीदं व्यत्ययेन च परस्मैपदम् । मुसल उत्क्षिप्यमाणे पुनःपुनर्विह्रियेते । अथवा हिशब्दो यस्मादर्थे एव । एवन्तु योजना—मर्यादया यष्ट्री अन्नानां च सम्भक्तृतमे उलूखलमुसले । कस्मात् । यस्मात् तत्र उच्चैः पुनःपुनर्विह्रियेते इति । किं कुर्वाणे । हरी इव अन्धांसि बप्सता हरी इन्द्राश्वौ बप्सतिरत्तिकर्मा† (तु. निघ २,८)। यथा हरी यज्ञे स्वभागं धाना भर्जीयं च भक्षयतः एवमवघातवेलायां चरुपुरोडाशलक्षणान्यन्नानि भक्षयती हवींषि अवघ्नती‡ इत्यर्थः[1] ॥ ७ ॥

वेङ्कट० उलूखलमुसलयोर्द्वे भवतः[2] । आयष्टव्ये अन्नानां संभक्तृतमे[3] ते हि उच्चैः विह्रियेते, अश्वौ इव धान्यानामवहननकाले[4] अन्नानि भक्षयन्तौ ॥ ७ ॥

मुद्गल० ये[5] उलूखलमुसले आयजी सर्वतो यज्ञसाधने वाजसातमा अतिशयेन अन्नप्रदे ता हि ते खलु उच्चा प्रौढध्वनिर्यथा भवति तथा विजर्भृतः विशेषेण पुनःपुनः विहारं कुरुतः । दृष्टान्तः । अन्धांसि अन्नानि चणकादीनि खाद्यानि बप्सता बप्सन्तौ हरी इव इन्द्रस्याश्वाविव ॥ ७ ॥

ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः । इन्द्राय मधुमत्सुतम् ॥ ८ ॥

ता । नः । अद्य । वनस्पती इति । ऋष्वौ । ऋष्वेभिः । सोतृऽभिः । इन्द्राय । मधुऽमत् । सुतम् ॥८॥

---

1-1. द्वे उलूखलमुसले आयजी मर्यादया यष्ट्री अवघातद्वारेण यागस्य कर्त्री । अवघातवेलायामन्नस्य भक्तृतमे । ते उच्चैः पुन.पुनः विह्रियेते । हिः यस्मादर्थे वा । यस्मात्ते तत्रोच्चैर्विह्रियेते तस्मान्मर्यादया यष्ट्री हविः- पुरोडाशावघातेनान्नस्य संभक्तृतमे च । इन्द्राश्वाविव । तौ यथा धाना भर्जीयं च स्वभागं भक्षयतः तद्वदवघातकाले चरुपुरोडाशादीनि बप्सतः । प्सा भक्षणे । शता स्नुश्च । 'श्लौ' (पा ६,१,१० ) इति द्विः । 'हलः' ( पा ७,४,५९ ) 'हलादिः शेषः' (पा ७,४,६०) च । 'अभ्यासे चर्च' ( पा ८,४,५४ ) इति जश्त्वम् । द्वा । विजर्भृतः इति । वेः हृञ् विहारे । 'धातोरेकाचः' ( पा ३,१,२२ ) इति यङ् । 'यङोऽचि च' ( पा २,४,७४ ) इति लुक् । 'सन्यङोः' ( पा ६,१,९ ) इति द्विः । 'गुणो यङ्लुकोः' (पा ७,४,८२) 'उरण् रपरः' (पा १,१,५१) 'कुहोश्चुः' ( पा ७,४,६२ ) 'हृग्रहोर्भश्छन्दसि' ( पावा ८,२,३२ ) इति रूपं सिध्यति वि[1] म कु. † °बप्सतिर° साम्व. ‡ °वहतः इति साम्व शोधः. 2. नास्ति साम्व कु. 3. समाभक्तृतमे ल; समाभक्तृतमे साम्व[2] वि[1] अ[1]. 4. °नामावहन° कु; °नामपहन° वि[1] रुपं; धन्याना° अ[2] वि[3]. 5. द्वे वि मै[1].

वेङ्कट० 'चर्माधिषवणीयं वा सोमं षाऽन्त्या प्रशंसति' (बृ दे ३,१०१) इत्युक्तम्। 'प्रजापतेर्हरिश्चन्द्रस्याऽन्त्या चर्मप्रशसा वा' (ऋअ २,१,२८) इति कात्यायनः। हरिश्चन्द्र! अधिषवणफलकयोरुपरि अवशिष्टम् सोमम् भर। सुतं च सोमं दशापवित्रे आ सृज। तदर्थम् नि धेहि अधिषवणफलकयोरुपरि गोः त्वचि इति ॥ ९ ॥

मुद्गल० हे ऋत्विग्विशेष! हरिश्चन्द्रदेवतापक्षे हे हरिश्चन्द्र! इति। चम्वोः सोमस्य भक्षत्वसम्पादकयोः अधिषवणफलकयोः शिष्टम् अभिषवराहित्येन अवशिष्टम् सोमम् उत् भर शकटस्योपरि हर। सोमम् 'अभिषुतम् सोमम्' पवित्रे दशापवित्रे आ सृज आनीय प्रक्षिप। प्रक्षेपे सत्यवशिष्टं सोमम् गोः त्वचि आनडुहे चर्मणि अधि नि धेहि अध्यारोप्य स्थापय ॥ ९ ॥

इति प्रथमाष्टके द्वितीयाध्याये षड्विंशो वर्गः ॥

[२९]

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १ ॥

यत्। चित्। हि। सत्य। सोमऽपाः। अनाशस्ताःऽइव। स्मसि। आ। तु। नः। इन्द्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ ॥ १ ॥

स्कन्द० 'तं[1] विश्वे देवा ऊचुः। इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तन्नु स्तुहय लोत्स्याम इति। स इन्द्रं तुष्टाव' (ऐब्रा ७,१६)। 'ऐन्द्रं यच्चिद्धि सत्येत्युत्तरं चाश्विनामृचात्' (बृदे ३,१०२)। 'आश्विनावश्वावत्या' (ऋ १,३०,१७-१९) इत्येतस्मात्। यत् इति 'सुपां सुलुक्' (पा ७,१,३९) इति पञ्चम्या लुक्। चित् हि इति पदपूरणे। यस्मात्ते सत्य! सोमपाः! सोमानां पातः! अनाशस्ता इव ईषच्छंसनं स्तुतिराशस्तम्। अविद्यमानमाशस्तं येषां ते अनाशस्ताः ईषत्स्तुतिवर्जिताः। अत्यन्तस्तुतिपरा भवन्त इत्यर्थः। इवशब्दस्तु 'अस्त्युपमानार्थस्य सम्प्रत्यर्थे प्रयोग.' (बृ या ७,३१) इति पदपूरण.। स्मसि भवामः। यस्मादत्यन्तं स्तुम इत्यर्थः। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्मात् आ न· शंसय। तु इति पदपूरणः क्षिप्रार्थे वा। क्षिप्रमस्मानाशंसय प्रार्थयमानान् प्रार्थितसम्पादनेन प्रयुङ्क्ष्व। देहीत्यर्थः। हे इन्द्र!। किम्। उच्यते। गोषु अश्वेषु द्वितीयार्थेऽत्र सर्वत्र सप्तमी। गाः अश्वांश्च। कीदृशान्। शुभ्रिषु शुभ्रिणः शोभावतः। शोभनान् इत्यर्थ.। कियतः। सहस्रेषु सहस्रसङ्ख्याकान् हे तुवीमघ! बहुधन![1] ॥१॥

---

१-१. नास्ति वि. २. भाष्ये विश्वेदेवानन्तरमिन्द्रं स्तुतवानिति। तं वि° भ कु. ३-३. इति द्वाभ्यामिन्द्रं तुष्टाव। ऐन्द्रं यच्चिद्धि सत्येति उत्तरं चाश्विनं तृचम्। यदिति 'सुपां सुलुक्' इति अलोपेऽकृ। यस्मात् हे इन्द्र!; अविसंवादिन्! सोमानां पातः! तव अत्यन्तस्तुतिपरा भवामः। ईषदर्थे आङ्। ईषत्स्तुतिपरा आशस्ता.। अविद्यमानेषत्स्तुतयः अनाशस्ताः। इव एवे। अस भुवि। मस्। 'इदन्तो मसि' (पा ७,१,४६)। 'श्नसोरल्लोपः' (पा ६,४,१११)। शपो लुक् च इति स्मसि। यस्मादत्यन्तं स्तुम. तस्मात् क्षिप्रमस्मानाशंसय प्रार्थयमानान् प्रार्थितसम्पादनेन प्रयुङ्क्ष्व। तदेदि गाः अश्वान् शोभावतः सह सहस्रान् हे इन्द्र! बहुधन!। तु. क्षिप्रे। शंसि शप्। 'ऋचि तुनुघ' इति दीर्घः। मघम् धनम् वि° भ कु.

वेङ्कट० यत् सत्य[1] सोमस्य पातः! वयम् आशंसारहिता[2] दरिद्रैरप्रार्थिता[3] इव भवाम, तत अस्मान् बहुधन! दरिद्रैः क्षिप्रम् आ शंसय गवादिषु त्वया दत्तेषु। शुभ्रिण शोभायुक्ता इति। यद्वा[4] स्तुतिरहितानामाशंसय गवादिप्रदानेनेति ॥ १ ॥

मुद्गल० 'यच्चिद्धि' इति [5]सप्तर्चं पञ्चं सूक्तम्। शुनःशेप ऋषिः। पङ्क्तिः छन्दः। इन्द्रो देवता[5] ॥

विश्वेभिर्देवेभिः प्रेरितः शुनःशेप एतदादिकाभिर्द्वाविंशतिसंख्याकाभिः ऋग्भिरिन्द्रं तुष्टाव। हे सोमपा! सोमस्य पातः! सत्य! सत्यवादिन्! इन्द्र! यच्चिद्धि यद्यपि वयम् अनाशस्ता इव स्मसि अप्रशस्ता इव भवामः। तथापि तुवीमघ हे बहुधन! इन्द्र! त्वं तु गोषु अश्वेषु शुभ्रिषु शोभनेषु सहस्रेषु सहस्रसंख्याकेषु च निमित्तभूतेषु च क्षिप्रम् नः अस्मान् आ शंसय प्रशस्तान् कुरु ॥ १ ॥

शिप्रिन्वाजानां पते शचीवस्तव दंसना ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ २ ॥

शिप्रिन्। वाजानाम्। पते। शचीऽव। तव। दंसना। आ। तु। नः। इन्द्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ ॥ २ ॥

स्कन्द० शिप्रे हनू नासिके वा। 'तद्वन्'!। अथवा 'शिप्राः शीर्षसु वितता हिरण्ययीः' (ऋ ५, ५४,११) इति प्रयोगदर्शनात् शिप्राशब्द † शिरस्त्राणवचनः। तद्वन्! वाजानाम् पते! बलानामन्नानां वा स्वामिन्! शचीव! कर्मवन्! प्रज्ञावन्! वा तव दंसना 'दंसि दर्शनदंसनयोः'। दर्शना। का। स्त्रीलिङ्गनिर्देशाद् वाक् स्तुतिर्वा अस्मासु। यत एवम् अतो ब्रूमः। आ तू न इन्द्र इत्याद्युक्तार्थम्[6] ॥ २ ॥

वेङ्कट० हनुमन्! अन्नपते! प्रज्ञावन्! तव विद्यते कल्याणं कर्मेति ॥ २ ॥

मुद्गल० हे शचीव! शक्तिमन्! शिप्रिन्! शोभनहनूयुक्त! वाजानां पते! अन्नानां पालक! इन्द्र! तव दंसना कर्मविशेषोऽनुग्रहरूपः सर्वदा वर्तते ॥ २ ॥

नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ३ ॥

नि। स्वापय। मिथुऽदृशा। सस्ताम्। अबुध्यमाने इति। आ। तु। नः। इन्द्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ ॥ ३ ॥

---

१. सत्यं वि[1] अ[1]. २ रहिता वि[1]. ३ °देरपि प्रार्थिता साम्ब कु. ४. यदा वि[1]. ५-५. नास्ति वि मै[1]. ६-६. 'शिरस्त्राणेऽपि शिप्रा स्यात्'। साऽस्यास्तीति वा। शिप्रिन्। 'शिप्राः शीर्षसु वितता' इति दृष्टत्वात्। हे शिप्रिन् धनानामन्नानां वा स्वामिन् कर्मवन् प्रज्ञावन् वा तव दंसना इति दर्शनदंसनयोः। शब्दत्वात् वाक् स्तुतिर्वा। एवं एवमन्य भाष्यस्य पाठो देवीसुन्दर वि[1] ल कु. † शिप्रा° साम्ब.

स्कन्द० मुमूर्षुः किल विकृतरूपाणि प्रेतपिशाचानि मिथुनानि पश्यति । तदभावमत्र शुनश्शेप आशास्ते । 'नि स्वापय अस्मद्दर्शनपरिहारार्थं नियमेन स्वापय । मिथूदृशा मिथुनीभूते ये दृश्येते ते मिथूदृशा । प्रेतः पिशाचो वा पुमान् स्त्री च । ते च सस्ताम् स्वप्नं कुरुताम् । अबुध्यमाने प्रतिबोधवर्जिते । किञ्च आ तू नः इत्याद्युक्तार्थम्[1] ॥ ३ ॥

वेङ्कट० मुमूर्षुः प्राणहरणार्थं[2] यमादागते मिथुनीभूते[3] दृश्यमाने द्वे स्त्रियौ[4] पश्यति । ते स्वम् 'इन्द्र ! नि स्वापय । त्वया निद्रापिते[5] ते[6] मया अबुध्यमाने सस्ताम् स्वपिताम्[7] ॥ ३ ॥

मुद्गल० मिथूदृशा परस्परसंगतत्वेन दृश्यमाने यमदूत्यौ नि स्वापय नितरां सुप्ते कुरु । ते च अस्मान् मारयितुम् अबुध्यमाने सत्यौ सस्ताम् निद्रां प्राप्नुताम् । अन्यत् पूर्ववत् ॥ ३ ॥

ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ४ ॥

ससन्तु । त्याः । अरातयः । बोधन्तु । शूर । रातयः । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ४ ॥

स्कन्द० 'यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहार्यः । ये जाग्रतो मां मुच्यमानं नेच्छन्ति । ससन्तु स्वपन्तु । त्याः अरातयः अरातिशब्दः शत्रुपर्यायः, तस्य च पुंलिङ्गत्वात्त्या इति व्यत्ययेन टाप् । ते शत्रवः । बोधन्तु बुध्यन्ताम् । हे शूर ! रातयः ज्ञातयः ये मां मुच्यमानमिच्छन्तीत्यर्थः । अथवा† अरातय इत्यदानान्यत्रोच्यन्ते‡ । न रातयो दानानि । स्वपन्तु अव्यापाराणि भवन्तु । यानि तु मदायुषो दानानि, तानि बुध्यन्तां व्याप्रियन्ताम् । सदा देहि म आयुरित्यर्थः । किञ्च आ तू नः इत्याद्युक्तार्थम्[8] ॥ ४ ॥

वेङ्कट० स्वपन्तु त्याः[9] अज्ञातयः, बुध्यन्तु च शूर ! ज्ञातयः ॥ ४ ॥

मुद्गल० त्याः अस्माभिर्दृश्यमानाः परोक्षास्ताः अरातयः अदानशीलाः शत्रवः ससन्तु निद्रां कुर्वन्तु । हे शूर ! इन्द्र ! रातयः दानशीलाः बन्धवः बोधन्तु बुध्यन्ताम् । अन्यत् पूर्ववत् ॥ ४ ॥

---

१-१. महाधन ! इन्द्र ! अस्मद्दर्शनपरिहारार्थं नियमेन स्वापय । मिथुनीभूय ये दृश्येते ते मिथूदृशौ । प्रेतः पिशाचो वा पुमान् स्त्री च । ते च स्वप्नं कुरुताम् प्रतिबोधवर्जिते । सस स्वप्ने । बुध अवगतौ । किञ्च आशंसयास्मान् वि[१] अ कु. २. प्राणसंह° वि[१] अ[१]. ३. °भूता इ वि[१][१] अ[१]. ४. स्त्रियौ च साम्ब[१]. ५. निद्रापिते वि[१] अ[१]. ६. नास्ति कु साम्ब. ७. स्वापाम् कु; स्वसाम् साम्ब; स्वसान् वि[१] अ[१]; सुप्ताम् वि[१] लपं. ८-८. ये जाग्रतो मां मुच्यमानं नेच्छन्ति त्या अरातयः शत्रवः स्वपन्तु । 'रिश्वरीवा अरातयः' इति श्रुतेः । त्या इति टाप् व्यत्ययेन पुंविशेषणत्वात् । रा दाने । 'स्त्रियां क्तिन्' ( पा ३,३,९४ ) । रातिर्दानम् । तत्प्रातिकूल्ये अरातयः स्त्रियो वा । हे शूर मन्मुक्तिकाङ्क्षिणः ज्ञातयः बोधन्तु । श्यनि शप् । मदायुर्दानानि बुध्यन्ताम् । मे आयुर्देहि इत्यर्थः । किञ्च आशंसयास्मान् वि[१] अ कु. † नास्ति मूको. ‡ °इत्यमाना° मूको. ९. च साम्ब.

सर्मिन्द्र गर्दभं मृण नुवन्तं पापयांऽमुया ।
आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५ ॥

सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ५ ॥

स्कन्द० हे इन्द्र ! गर्दभम् सम् मृण [1]मृण हिंसायाम् । भिन्धि । नुवन्तम् शब्दं कुर्वन्तम् । आरटन्तमित्यर्थः । पापया अमुया स्त्रीलिङ्गनिर्देशाद् वाचा । गर्दभोऽपि विस्वरमारटन्ननिष्टस्य सूचकः । तेनापि तदवघात आशास्यते । किञ्च आ तू नः इत्याद्युक्तार्थम्[1] ॥ ५ ॥

वेङ्कट० [2]सम् मृण इन्द्र ![2] गर्दभम्[3] शब्दायमानम् पापया अनया[4] वाचा ॥ ५ ॥

मुद्गल० हे इन्द्र ! अमुया अनया अस्माभिः श्रूयमाणया पापया निन्दारूपया वाचा नुवन्तम् स्तुवन्तम् । अपकीर्तिं प्रकटयन्तमित्यर्थः । तादृशम् गर्दभम् गर्दभसमानं वैरिणम् सम् मृण सम्यङ् मारय । यथा गर्दभः श्रोतुमशक्यं परुषं शब्दं करोति तथा शत्रुरपि । अन्यत् पूर्ववत् ॥ ५ ॥

पताति कुण्डृणाच्या दूरं वातो वनादधि ।
आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥

पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ६ ॥

स्कन्द० [5]अधर्थवांस्योऽधिशब्दोऽपकृष्य पताति इत्याख्यातेन सम्बन्धयितव्यः । अधि पताति । 'अधी-त्युपरिभावे' (द्र. या १,३) । उपरि पतति । ऊर्ध्वं गच्छतीत्यर्थः । किम् । कुण्डृणाच्या कुण्ड-तिर्गतेत्यर्थः । कुण्डाकारा भूत्वाऽञ्चतीत्यर्थः । कुण्डृणाची वात्या । तृतीया च प्रथमार्थे । दूरम् वातः वनात् वनमरण्यम् । वातोऽरण्याद् दूरं पतति तिर्यग् गच्छति । औचित्यप्रदर्शने वात्यार्धर्चस्य उत्तरेणैकवाक्यता । एतदुक्तं भवति — यथैव वात्याया ऊर्ध्वगमनमुचितं भवति वायोदर्वा तिर्यग्गमनम् एवं भवतोऽपि स्तोत्रानुग्रहकरणमेव । किञ्च आ तू नः इत्याद्युक्तार्थम्‡ । अथवा कुडकेऽञ्चतीति कुण्डृणाची कुडयचरी गृहगोधिकोच्यते । घरोविकलेति याऽपभ्रंशेन लोके प्रसिद्धा । तथाश्वमेधपशुषु गरगोलिकायामस्य प्रयोगः 'कुण्डृणाची गोलत्तिका अप्सरसाम्' (तैसं ५,५, १६,१) इति । साऽधिपताति ऊर्ध्वं गच्छति । या कुडये चङ्क्रम्यत इत्यर्थः । तस्या हि[5]

---

१-१. अपशब्दं कुर्वन्त पापयामुया वाचा । विस्वरमारटन् हि गर्दभोऽनिष्टसूचकः । तेन तद्धिंसामस्याशंसे । मृण हिंसायाम् । नुव आरटने । किवाधीसपास्मान् कु; नास्ति वि[1] अ. २-२. नास्ति साम्ब. ३. नास्ति कु. ४. नास्ति साम्ब. ५-५. कुण्डाकारा भूत्वा अञ्चतीति कुण्डृणाची वात्या । सा यथा अधि पताति उपरि गच्छति । सो दा । यथा वातोऽपि वनाद् दूरं पतति अरण्यात् तिर्यग् गच्छति । यथैतयोरेतदुचितमेव स्यात् तद्वदपि स्तोतुरनुग्रहकरणम् उचितम् एव । प्रसाम्यमनुग्रहाय इत्यौचित्याद् योज्यम् । कुण्ड्यमञ्चतीति वा कुण्डृणाची । कुड्य-चारी गरगोलिका । या कुड्यम् आरुह्य चङ्क्रम्यते इत्यर्थः वि[1] अ कु. † इत्येव (?) साम्ब. ‡ नास्ति मूको.

[1]कृष्णाया दर्शनमनिष्टस्य सूचकम् । तदनेन प्रतिपादयति—वातश्च वनाद् दूरं गच्छति । मां स्वप्न आद्रायेति वाक्यशेषः । तद्धि मुमूर्षोर्भवति । तथा ह्यचिरमरणस्वप्नानधिकृत्य श्रुतिर्भवति[1]—'आशु वायुरेनं प्रवहति' इति । एताभ्यां द्वाभ्यां लिङ्गाभ्यामासन्नमरणतया मां ज्ञात्वा [2]अनुग्राहकस्वभावत्वात् आ तू नः इन्द्र! किम् । सामर्थ्यादायुर्देहीत्यर्थः । न च केवलमायुः । किं तर्हि । गोषु अश्वेषु शुभ्रिषु सहस्रेषु इत्यादिकमुक्तार्थम्[2] ॥ ६ ॥

वेङ्कट० कुण्डृणाची नाम पक्षी । तेन सह अरण्यात्[3] दूरम् मत्समीपम् आपतति वायुः ॥ ६ ॥

मुद्गल० वातः अस्मत्प्रतिकूलो वायुः कुण्डृणाच्या कुटिलगत्या अस्मान् परित्यज्य वनात् अधि अरण्यादप्यधिकम् दूरम् दूरदेशम् पताति पततु । अन्यत् पूर्ववत् ॥ ६ ॥

सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥

सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

स्कन्द० अनिष्टं यत् सूचयति तत् सर्वम् [4]त्वं शृगालवायसादिकम् जहि । किञ्च जम्भय जभि नाशने । नाशय कृकदाश्वम् । कृकलास. कृकदाश्व उच्यते । तस्य दर्शनमनिष्टस्य सूचकम् । किञ्च आ तू नः इत्याद्युक्तार्थम्[4] ॥ ७ ॥

वेङ्कट० अन्यमपि सर्वम् परिक्रोष्टारं वृकादिकं नाशय, जम्भयोश्च[5] कुरु कृकलासम् । आ तू न इन्द्र! इति ॥ ७ ॥

मुद्गल० परिक्रोशम् अस्मद्विषये सर्वत्र आक्रोशकर्तारम् सर्वम् पुरुषम् जहि मारय । कृकदाश्वम् अस्मद्विषये हिंसाप्रदं शत्रुम् जम्भय मारय । अन्यत् पूर्ववत् ॥ ७ ॥

इति प्रथमाष्टके द्वितीयाध्याये सप्तविंशो वर्गः ॥

## [ ३० ]

आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥

आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् । मंहिष्ठम् । सिञ्चे । इन्दुऽभिः ॥ १ ॥

---

१-१. तस्या हि कृष्णाया दर्शनमनिष्टसूचकम् । तदनेन प्रतिपाद्यते । वातोऽपि स्वप्ने मामादाय दूरं गच्छति वनात् । तच्च मुमूर्षोरचिरमरणसूचकमिति श्रुतिश्च वि[1] अ कु.    २-२. अनुग्राहकस्वभावेनायुर्देहि गवादींश्च वि[1] अ कु.    ३. आरण्यं वि[2].    ४-४. शृगालवायसादिकं जहि, नाशय कृकलासम् । तद्दर्शनमप्यनिष्टम् । जभि हिंसायाम् । कृकलास एव कृकदाश्व. । अनिष्टान् सर्वानुक्तांश्च नाशय । श्रद्धान् कुरु च वि[1] अ कु.    ५. जम्भय आशु कुरु सास्य.

[1]कथम् । निम्नं न निम्नमिव प्रदेशम् । किम् । सामर्थ्यादुदकम् । यथा निम्नं प्रदेशमुदकं शीघ्रमागच्छति तद्वद् यः त्वं पानार्थमत्यन्तबहून् सोमान् शीघ्रमागच्छसि तं त्वामिन्द्रं वाजयन्त आसिषेम सोममित्याशास्महे इति समस्तार्थः[1] ॥ २ ॥

वेङ्कट० [2]शतम् वा[2] पूतानां सोमानाम्[3] सहस्रम् वा सम्यगाशिरेण मिश्रितानाम् [4]एवम् आगच्छति[5], निम्नम् इवोदकम् ॥ २ ॥

मुद्गल० यः इन्द्रः शुचीनाम् शुद्धानां सोमानाम् शतम् वा शतसंख्याकं समूहं वा समाशिराम् समीचीनेन आशिरारव्येन श्रयणद्रव्येणोपेतानां सोमानाम् सहस्रम् वा सहस्रसंख्याकं समूहं वा[5] आ इदु रीयते आगच्छत्येव । सोऽस्मान् अनुगृह्णात्विति शेषः । सोमप्राप्तौ दृष्टान्तः । निम्नम् न यथा निम्नं प्रदेशम् आपः[6] आप्नुवन्ति तद्वत् ॥ २ ॥

सं यन्मदा॑य शु॒ष्मिण॑ ए॒ना ह्य॑स्यो॒दरे॑ । स॒मु॒द्रो न व्यचो॑ द॒धे ॥ ३ ॥

सम् । यत् । मदा॑य । शु॒ष्मिणे॑ । ए॒ना । हि । अ॒स्य॒ । उ॒दरे॑ । स॒मु॒द्रः । न । व्यचः॑ । द॒धे ॥३॥

स्कन्द० [7]यत् इदम्‡ शतं सहस्रं च मदाय मदार्थं बलार्थं च अस्य इन्द्रस्य उदरे समुद्रः न समुद्र इव व्यचः व्याप्तिं सम् दधे सम्यग् धारयति । यथा समुद्रो व्याप्नुयादेवमुदरं व्याप्यावतिष्ठत इत्यर्थः । किं तस्य । 'तद्वत्‡ आरीयसे', 'तं वाजयन्त आसिषेम इत्येतदाशास्महे' इत्येवं यच्छब्दस्य पूर्वाभ्यामृग्भ्यामेकवाक्यता[7] ॥ ३ ॥

वेङ्कट० यत् सोमपात्रशतम् अस्य बलिन इन्द्रस्य मदाय भवति, सहस्रं वा । अनेन अस्य उदरे अन्तरिक्षम् इव व्याप्तिः सम् दधे । यथान्तरिक्षं विततं[8] तद्वद् व्याप्तमिति । तस्मादागच्छतीति ॥ ३ ॥

मुद्गल० यत् पूर्वोक्तं शतं सहस्रं वा शुष्मिणे शुष्मिणो बलवत इन्द्रस्य मदाय मदार्थं सन्नतं भवति । एना हि अनेनैव शतेन सहस्रेण च अस्य इन्द्रस्य उदरे व्यचः व्याप्तिः दधे धृता भवति । दृष्टान्तः । समुद्रः न समुद्र इव । यथा समुद्रमध्ये जलं व्याप्तं तद्वत् ॥ ३ ॥

अ॒यमु॑ ते॒ सम॑तसि क॒पोत॑ इव गर्भ॒धिम् । वच॒स्तच्चि॑न्न ओहसे ॥ ४ ॥

अ॒यम् । ऊँ इति॑ । ते॒ । सम् । अ॒त॒सि॒ । क॒पोतः॑ऽइव । ग॒र्भ॒ऽधिम् । वचः॑ । तत् । चि॒त् । नः॒ । ओ॒ह॒से॒ ॥४॥

---

१-१. उदकं निम्नं प्रदेशं यथा शीघ्रं गच्छति तद्वद्। रीङ् गतौ । पानार्थं सोमरसानां शीघ्रमागच्छसि तं त्वां वयं वाजयन्तः सोमैरासिञ्चामः वि[1] अ कु. २-२. नास्ति साम्ब कु. ३. "मानां शतं वा कु. ४-४. एवागच्छति कु; मेवमिच्छ" साम्ब[1]; "च्छति क. ५. नास्ति वि. ६. "पश्च मै". ७-७. एना इति सौ दा । यदेतद् । 'द्वितीयटौस्स्वेनः' (पा २,४,३४) । प्रथमायां व्यत्ययेनेदम् । यदिदं सोमानां शतं सहस्रं च मदार्थं बलार्थं चास्येन्द्रस्योदरे व्याप्तिं सम्यग्धारयति । यथा समुद्रो व्याप्नुयात्, एवं त्वदुदरं व्याप्यावतिष्ठते । व्यचः व्याप्ति. । तं त्वां वाजयन्तः आसिञ्चेम सोमैः । ते त्वदुदरे व्याप्ता भवन्तु वि[1] अ कु. † यदिदम् साम्ब. ‡ तद् च साम्ब. ८. "तं यदद् साम्ब" वि[2] अ[1].

स्कन्द० [1]अयम् इति सन्निहितस्य सोमस्य प्रतिनिर्देशः । उ इति पदपूरणः । अयम् ते अभिषुतः सोमः । सम् अनमि अत सातत्यगमने । एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहर्तव्यः । यं प्रति सम्यक् सततं गच्छसि । कयम् । कपोतः इव गर्भधिम् गर्भो धीयतेऽस्यामिति गर्भधिः । कपोतिकाऽत्राभिप्रेता । यथा मैथुनार्थी कपोतः कपोतिकां तद्वदित्यर्थः । वचः तत् चित् चिच्छब्दः पदपूरणः । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः । यदिदमुक्तं वचः तत् नः अस्माकम् ओहसे वहेः सम्प्रसारणेन गुणेन चेदं रूपम् । वहस्व आत्मानं प्रति प्रापय । शृण्वित्यर्थः । श्रुत्वा च सोमेनेव तृप्तो मां मोचयेरित्यभिप्रायः[1] ॥ ४ ॥

वेङ्कट० अयम् सोमः त्वदीयः । तम् त्वं कपोतः कपोतीम् इव गर्भनिधानीं[2] पिपासुः सङ्गच्छसि । स्तुतिं च ताम् अस्मदीयामात्मानं[3] प्रापयसि ॥ ४ ॥

मुद्गल० हे इन्द्र ! अयम् उ अयमपि[4] दृश्यमानः सोमः ते त्वदर्थं सम्पादितः । यं सोमम् समनसि सम्यक् सातत्येन प्राप्नोषि । दृष्टान्तः । कपोत इव यथा[5] कपोताख्यः पक्षी गर्भधिम् गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् । तच्चित् तस्मादेव कारणात् नः अस्मदीयम् वचः ओहसे प्राप्नोषि ॥ ४ ॥

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥ ५ ॥

स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते । विऽभूतिः । अस्तु । सूनृता ॥ ५ ॥

स्कन्द० [6]यावत् किञ्चित् स्तोत्रम् तत् सर्वं हे राधानाम् पते ! धनानां स्वामिन् ! गिर्वाहः ! गिरः स्तुतयः ता उह्यन्ते प्राप्यन्ते यत्र स्तोतृभिः स गिर्वाहाः, तस्य सम्बोधनं हे गिर्वाहः ! स्तुत्याश्रयेत्यर्थः । वीर ! विक्रान्त ! इति यस्य ते तव । सर्वैः स्तोत्रैः यः स्तूयसे इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य विभूतिः अस्तु विभवतीति विभूतिः समग्रस्तुतिकरणसमर्था अस्तु भवतु । का । सूनृता अपठितमपि वाङ्नामैतत् । अथवा विभूतिशब्द ऐश्वर्यवचनः । सामर्थ्याद्वाग्वर्णितमत्वर्थः । विभूतिमत्यस्तु । मदैश्वर्यकरीयं स्तुतिलक्षणा मदीया वागस्त्वित्यर्थः । अथवा या तव विभूतिः साऽस्तु सूनृता । शोभनेषु नृषु स्तुतिपरेषु तायते विस्तीर्यत इति सूनृता । स्तोतृद्भोग्येत्यर्थः[6] ॥ ५ ॥

1-1. अयं तेऽभिषुतः सोमः । यं त्वं सम्यक् सततं गच्छसि । यथा मैथुनार्थं कपोतः कपोतिकाम् । गर्भो धीयते अस्यामिति गर्भधिः । ताम् । 'उपसर्गे घोः किः' ( पा ३,३,९२ ) 'कर्मण्यधिकरणे च' ( पा ३,३,९३ ) । 'अर्तिगृभ्यो मन्' ( पाउ ३,१५३ ) । गर्भे । स इव यं त्वं सोऽयम् । यदिदमुक्तमस्माकं तद्वहस्व आत्मानं प्रति प्रापय । मद्वचः श्रुत्वा सोमेनानन्दितो मां मोचय । अत सातत्यगमने । वह प्रापणे । यजादित्वात् अकिति च 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति सम्प्रसारणम् गुणः वि[1] अ कु. 2. गर्भधानी सामग कु; [illegible] वि[1] [illegible]. 3. 'दीयमा[illegible]' वि[1] अ[1]. 4. हे म० वि[1]. 5. नास्ति मै[1]. 6-6. हे गिरां वाहक स्तुतिवाहक स्तुत्याश्रय धनानां स्वामिन् [illegible] यस्य तव यावत् किञ्चित् स्तोत्रं तत्सर्वम् । यस्त्वं सर्वैः स्तोत्रैः स्तूयसे तस्य तव विभूतिर्वागस्तु । विभवति इति विभूतिः । [illegible] भवतु । 'वाग्वै सूनृता' इति श्रुतिः । विभूतिरैश्वर्यं वा । सा मतुबर्थो वा । [illegible] मदीया विभूतिमती मदैश्वर्यकरी स्तुतिरस्तु । शोभनेषु नृषु तायते इति वा सूनृता । तनु विस्तारे । 'क्विप् च' ( पा ३,२,७६ ) 'अनुदात्तोपदेशवनतितनोत्यादीनाम्' ( पा ६,४,३७ ) इत्यादिना । स्तोतृद्भोग्येत्यर्थः वि[1] अ कु.

वेङ्कट० गीर्भिस्स्तूयमान[1]! अश्वानाम् पते! यस्य तव स्तोत्रम् इदमनेन क्रियते स्तोत्रा, तस्मै[2] सत्या श्रीः अस्तु ॥ ५ ॥

मुद्गल० हे इन्द्र! राधानाम् पते! धनानां[3] पालक! गिर्वाहः! गीर्भिस्स्तूयमान! वीर! शौर्योपेत! यस्य ते तव स्तोत्रम् ईदृशं भवति, तस्य तव विभूतिः लक्ष्मीः सूनृता प्रियसत्यरूपा अस्तु ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः ॥

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो । सम॒न्येषु ब्रवावहै ॥ ६ ॥

ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतो इति शतऽक्रतो । सम् । अन्येषु । ब्रवावहै ॥ ६ ॥

स्कन्द० उत्तिष्ठ । [4]यद् ब्रवीमि तत्र प्रवर्तस्वेत्यर्थः । नः अस्माकं पालनाय अस्मिन् वाजे सङ्ग्रामे । आत्ममरणफलत्वाद् यज्ञमेव सङ्ग्राममाह । हे शतक्रतो! सम् अन्येषु अन्येष्विति द्वितीयार्थे सप्तमी । सम्भूयाऽन्यान् देवान् ब्रवावहै मद्विमोचनार्थमभ्यर्थयावहै इत्यर्थः।[4] ॥ ६ ॥

वेङ्कट० [5]ऊर्ध्वः तिष्ठ अस्माकं रक्षणाय अस्मिन् सङ्ग्रामे शतकर्मन्! । शत्रुषु त्वं च [6]अहं च[6] सम्भूय ब्रवावहै ॥ ६ ॥

मुद्गल० हे शतक्रतो! इन्द्र! अस्मिन् प्रसक्ते वाजे सङ्ग्रामे नः अस्माकम् ऊतये रक्षणाय ऊर्ध्वः उन्नतः उत्सुकः[7] तिष्ठ [8]भव। त्वं च अहं[8] च मिलित्वा[9] अन्येषु कार्यान्तरेषु सम् ब्रवावहै सम्यक् विचारयावः ॥ ६ ॥

योगेयोगे त॒वस्तरं वाजेवाजे हवामहे । सखा॑य॒ इन्द्र॑मू॒तये ॥ ७ ॥

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

स्कन्द० [10]अपूर्वस्यागमो योग इत्यर्थेच्छाप्राप्तिः । तत्रतत्रेच्छाप्राप्तौ बलवत्तरम् इन्द्रम् । †इदमिदं ददातीतीन्द्रम्† । तत्रतत्र सङ्ग्रामे च हवामहे । हे सखायः! ‡तत्रतत्र‡ पालनाय[10] ॥ ७ ॥

वेङ्कट० प्रवेशेप्रवेशे अतिशयेन बलयुक्तम् इन्द्रम् युद्धेयुद्धे हवामहे सखायः सन्तो रक्षणाय ॥ ७ ॥

मुद्गल० योगेयोगे प्रवेशेप्रवेशे तत्तत्कर्मोपक्रमे वाजेवाजे[11] कर्मविघातिनि तस्मिंस्तस्मिन् सङ्ग्रामे तवस्तरम् अतिशयेन बलिनम् इन्द्रम् ऊतये रक्षार्थम् सखायः सखिवत्प्रिया वयम् हवामहे आह्वयामः ॥ ७ ॥

---

१. °मानम् साग्र कु अ[1]. २. नास्ति वि[1] लपं. ३. धन° वि. ४-४. यद् ब्रवीमि तत्र प्रवर्तस्व । अस्माकं पालनाय अस्मिन् सङ्ग्रामे । आत्ममरणफलत्वात् यज्ञ एव संग्रामः । बहुकर्मन् बहुप्रज्ञ वा । सम्भूयान्यान् देवान् मद्विमोचनार्थमभ्यर्थयावहै । एतदर्थमुत्तिष्ठ । अन्येष्विति शसि सुप् वि[1] अ कु. ५. ऊर्ध्वेनः साग्र कु. ६-६. नास्ति वि[1] लपं ७. नास्ति वि मै[1]. ८-८. भवावहं वि मै[2]. ९. नास्ति वि. १०-१०. नास्ति साग्र[1,2]. †-† नास्ति मूको. ‡ इदमिदं ददातीतीन्द्र तत्रतत्र मूको.

आ घा गमुद्यदि श्रवत्सहुस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ॥ ८ ॥

आ । घ । गुमुत् । यदि । श्रवत् । सहुस्रिणीभि । ऊतिऽभि । वाजेभि । उप । नु । हवम् ॥ ८ ॥

स्कन्द० 'घ इति पदपूरण । उप इति तृतीयपादस्थ उपसर्ग आ गमत् इत्याख्यातेन सम्बन्धयितव्य । उपागमद् उपागच्छेत् । यदि श्रवत् शृणुयादिन्द्र । कथ पुनरुपागच्छेत् । सहस्रिणाभि ऊतिभि 'इत्थम्भूतलक्षणे' (पा २,३,२१) इत्येवमेषा तृतीया । सहस्रसङ्ख्यायुक्तै पालनै सम्बद्ध । पालनसाहस्रैरस्मान् पालयिष्यत्यर्थे । वाजेभि अन्नैश्च । अन्नानि च ददति त्यर्थ । कि यदि शृणुयात् । उच्यते—न अस्माक स्वभूतम् हवम् आह्वानम्' ॥ ८ ॥

वेङ्कट० उपागच्छेदिन्द्र यदि शृणुयात् आह्वान सहस्रसख्यै पालनैरन्नैश्च ॥ ८ ॥

मुद्गल० यदि अयम् इन्द्र न अस्मदीयम् हवम् आह्वानम् श्रवत् शृणुयात्, तदानीम्' स्वयमेव सहस्रिणाभि ऊतिभि बहुभि पालनै वाजेभि अन्नैश्च सह उप समीपे घा अवश्यम् आ गमत् ॥ ८ ॥

अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ॥ ९ ॥

अनु । प्रत्नस्य । ओकस । हुवे । तुविऽप्रतिम् । नरम् । यम् । ते । पूर्वम् । पिता । हुवे ॥ ९ ॥

स्कन्द० 'अनुशब्दो लक्षणे कर्मप्रवचनीय प्रतिशब्देन समानार्थ । 'प्रत्नम्' (निघ ३,२७) इति पुराणनाम । 'ओक इति निवासनाम' (या ३,३) । षष्ठी चोभयत्र कर्मप्रवचनीययोगलक्षणद्वितीयास्थाने । पुराणनिवासस्थान सोमाख्य प्रति हुवे आह्वयामि त्वाम् । कीदृशम् । तुविप्रतिम् 'तुवि' (तु निघ ३,१) बहुनाम इति । प्रतिशब्द उपसर्ग । 'उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित् क्रियावाची शब्द प्रयुज्यते तत्र क्रियाविशेषमाहु । यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहु' (पाम ५,२,२८) । तेनात्र प्रत्ययस्यार्थे प्रतिशब्दो वर्तते । बहुना प्रत्यवस्थाता तुविप्रति शत्रूणाम् इत्यर्थः । त तुविप्रतिं नरम् मनुष्याकारम् । यम् ते द्वितीयार्थे षष्ठ्येषा । यम् त्वाम् पूर्वम् पिता अपि मम हुवे आहूतवान् । अथवा यमिति प्रत्नस्यौकस. सोमाख्यस्य प्रतिनिर्देश । य सोम ते तव स्वभूत प्रति पिता मम आहूतवान् इति' ॥ ९ ॥

वेङ्कट० यम् इन्द्र तव पिता आहूतवान् वयम् त्वदर्थं पुराणस्यास्य निवासस्थानात् अनुक्रमेण हुवे अनेकेषु शत्रुषु नतारम्[४] ॥ ९ ॥

---

१-१ इन्द्र न हवं यदि श्रवत् अस्मदाह्वानं यदि शृणुयात् सहस्रसंख्यायुक्तैः पालनैरन्नैश्च उपागच्छेत्। 'इत्थंभूतलक्षणा' इत्यर्थे भिन्। सम्बद्ध पालनसहस्रैरस्मान् पालयन् अन्नानि च ददत्वित्यर्थं वि[?] मु कु । [?] 'गच्छ' मूको २ नास्ति वि ३-३ हे इन्द्र त्वां पुराणनिवासस्थानं सोमाख्यं प्रति आह्वयामि । बहूनां प्रत्यवस्थातारं तुविप्रतिं । इत्यादि । तं तुविप्रतिं नराकारं त्वां पूर्वं मम पिता आहूतवान् । य तव सोममिति वा । 'प्रत्नम् प्रत्नम्' इति पुराणे । 'ओकः' इति गृहे । एतदो अपि इस् वि[?] मु कु । [?] समाप्तं मूको ४ नेता-रम्', नास्ति वि

मुद्गल० प्रत्नस्य पुरातनस्य ओकसः स्थानस्य स्वर्गरूपस्य सकाशात् तुविग्रतिम् बहून् यजमानान् प्रति गन्तारम् नरम् पुरुषम् इन्द्रम् अनु हुवे अनुक्रमेण कर्मसु आह्वयामि । यम् ते त्वामिन्द्रं पिता अस्मदीयो जनकः पूर्वम् पुरा स्वकीयानुष्ठानकाले हुवे आहूतवान् । तमाह्वयामीति पूर्वत्रान्वयः ॥ ९ ॥

तं त्वा॑ व॒यं वि॑श्ववा॒रा शा॑स्महे पुरुहूत । सखे॑ वसो जरि॒तृभ्यः॑ ॥ १० ॥

तम् । त्वा॒ । व॒यम् । वि॒श्व॒ऽवा॒र॒ । आ । शा॒स्म॒हे॒ । पु॒रु॒ऽहू॒त॒ । सखे॑ । व॒सो॒ इति॑ । ज॒रि॒तृऽभ्यः॑ ॥ १० ॥

स्कन्द० [1]यो उक्तगुणोऽसि, तम् त्वा वयम् हे विश्ववार! सर्वस्य वरणीय! आ शास्महे प्रार्थयामहे । आत्मनोऽर्थाय जीवितं याचामह इत्यर्थः । हे पुरुहूत! सखे! वसो! शतपथे—'यद्वै‡ नु श्रेष्ठस्तेन वसिष्ठः' ( माश ८,१,१,६ ) इति वसिष्ठशब्दस्य श्रेष्ठशब्देनार्थविवरणदर्शनाद् वसुशब्दः प्रशस्यवचनः, धननाम वा§ अत्रान्तर्णीतमत्वर्थः । प्रशस्य! धनवन्! वा । न केवलमात्मन एवार्थाय । किं तर्हि । जरितृभ्यः अन्येषामपि स्तोतृणामर्थाय । अथवा जरितृभ्य इत्यात्मन एव प्रतिनिर्देशः । स्तोतुरात्मनोऽर्थायेत्यर्थः[1] ॥ १० ॥

वेङ्कट० [2]तम् त्वा[2] वयम् सर्वेषां वरणीय[3]! प्रार्थयामः सखे! वासयितः! स्तोतॄणाम् ॥ १० ॥

मुद्गल० हे विश्ववार! सर्वैर्वरणीय! पुरुहूत! बहुभिः स्वस्वकर्मण्याहूत! सखे! सखिवत्प्रिय! वसो! निवासहेतो! इन्द्र! तम् पूर्वोक्तगुणयुक्तम् त्वा त्वाम् जरितृभ्यः स्तोतॄणामनुग्रहार्थम् वयम् आ शास्महे प्रार्थयामहे ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः ॥

अ॒स्माकं॑ शि॒प्रिणी॑नां॒ सोम॑पाः सोम॒पाव्ना॑म् । सखे॑ वज्रि॒न्त्सखी॑नाम् ॥ ११ ॥

अ॒स्माक॑म् । शि॒प्रिणी॑नाम् । सोम॑ऽपाः । सो॒म॒ऽपाव्ना॑म् । सखे॑ । व॒ज्रि॒न् । सखी॑नाम् ॥ ११ ॥

स्कन्द० [4]†अस्माकम् शिप्रिणीनाम्† शिप्रे हनू नासिके वा । तद्वतामित्यर्थः । हे सोमपाः! सोमपाव्नाम् सोमस्य पातॄणाम् हे सखे! वज्रिन्! सखीनाम् तथा तदस्तु त्वत्प्रसादेन[4] ॥ ११ ॥

वेङ्कट० अस्माकं सोमपानसाधनभूतशिप्रायुक्तानाम्[5] सोमस्य पातः! सोमपातॄणाम् सखे! वज्रिन्! सखीनाम् उत्तरत्र सम्बन्धः ॥ ११ ॥

---

१-१. हे सर्वस्य वरणीय पूर्वोक्तं त्वां वयमात्मजीवितमाशास्महे । बहुभिराहूत सखे प्रशस्य धनवन् वा । स्तोत्रर्थम् आत्मार्थमन्यार्थं वा आशास्महे । 'जरिता स्तोमवाहसः' इति स्तोतरि । शतपथे—'यद्वै नु श्रेष्ठस्तेन वसिष्ठः' इति । वसुः प्रशस्यः वि[1] अ कु. † नास्ति मूको. ‡ यदो साम्ब. § च मूको. २-२. नास्ति वि[२]. ३. वरणीयम् साम्ब कु वि[1,4] अ[1]. ४-४. हे सोमानां पातः सखे वज्रवन् यथा वयं चिरं जीवेम इति कामयामहे तव यागार्थं तत् तथा कुरु । अस्माकं हनूमतां नासिकावतां वा सोमस्य पातॄणां सखीनां त्वत्प्रसादेन तथा तदस्तु नि[1] अ कु. †-† नास्ति साम्ब. ५. °पानस्य साधनभूतं शिप्रा° ल; °पानसाधनभूतेन शि° साम्ब[2,3] अ[1]; °भूताः शि° वि[1,2] लपं.

मुद्गल० हे सोमपा ! सोमस्य पातः[1] सखे ! सखिवत्प्रिय[1] वज्रिन् ! वज्रयुक्तेन्द्र[1] सखीनाम् सखिवत् प्रियाणां सोमपानाम् सोमस्य पातॄणाम् अस्माकम् शिप्रिणानाम् हनूभ्यां युक्तानां गवां समूहः त्वत्प्रसादाद्भवत्विति शेषः ॥ ११ ॥

तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये ॥ १२ ॥

तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते । उश्मसि । इष्टये ॥१२॥

स्कन्द० [1]तथा तदस्तु सखीनां त्वत्प्रसादेन हे सोमपाः ! । सखे ! वज्रिन् ! तथा कृणु, यथा उश्मसि कामयामहे वयम् । वयं हि चिरं जीवेमेति कामयामहे । त्वत्प्रसादेन तथैवास्तु । त्वमपि तत् तथैव कुर्वित्यर्थः । किमर्थम् । इष्टये तव यागाय[1] ॥ १२ ॥

वेङ्कट० यथा वयं त्वत्तः कामयामहे तथा अस्माकम् तत् अस्तु । सखे ! वज्रिन् ! तथा कुरु इष्टये अभिलषितसिद्ध्यर्थमिति ॥ १२ ॥

मुद्गल० हे सोमपा ! सखे ! वज्रिन् इन्द्र[2] ! इष्टये अभिलषितार्थम् ते तव अनुग्रहम् यथा येन प्रकारेण उश्मसि वयं कामयामहे, त्वम् तथा कृणु कुरु । त्वत्प्रसादात् तद् अभीष्टम् तथा अस्तु ॥ १२ ॥

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ १३ ॥

रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥ १३ ॥

स्कन्द० [3]रेवतीरित्येतत् सन्त्वित्येतेन सम्बन्धयितव्यम् । रेवती सन्तु धनवत्यो भवन्तु । धनस्य साधिका भवन्त्वित्यर्थः । नः अस्माकम् । काः । वाक्यसामर्थ्यात् स्तुतयः । कस्य । उच्यते । सधमादे इन्द्रे षष्ठ्यर्थे सप्तम्येषा । सहभूतैर्यो माद्यते तर्प्यते स्तूयते स सधमाद इन्द्रः तस्य । न च रेवतीरेव केवलाः । किं तर्हि । तुविवाजा बह्वन्नाश्च । अन्नस्य बहुसाधिका इत्यर्थः । मा कीदृश्यः । उच्यते । क्षुमन्तः । क्षुशब्दः † क्षु शब्दे इत्यस्य कीर्तिवचनः । कीर्तिमन्तः ‡ । वयम् याभिः मदेम 'मदति' ( निघ ३,१४ ) इत्यर्चतिकर्मसु पाठाद् मदतिः स्तुत्यर्थः । याभिर्नित्यमिन्द्रं स्तवामेत्याशास्महे इत्यर्थः[3] ॥ १३ ॥

वेङ्कट० योऽस्माभिः सह सोमेन[4] माद्यतीन्द्रः[5] तस्मिन् इन्द्रे बह्वन्ना आपः अस्माकम् सन्तु । क्षुधिता वयम् याभिः मदेम शब्दवन्तो विख्याता वेति ॥ १३ ॥

---

१-१. पृ १९७ टि ४-४ द्र. २. इन्द्रस्य मै[?]. ३-३. अस्माकं स्तुतयः रेवती सन्तु । धनवत्यो भवन्तु । तस्याधिका भवन्तु इत्यर्थः । सहभूतैर्यो माद्यते । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । स्तूयते तर्प्यते वा । तस्येन्द्रस्य धनसाधिका बह्वन्नाश्च बह्वन्नसाधिकाश्च क्षुशब्दः कीर्तिमत्र । कीर्तिमत्यः । वयं याभिर्नित्यमिन्द्रं स्तुमः इति वा । मन्ति स्तुतिं त्रिं म कु. † नास्ति मूको. ‡ कीर्तिमन्तः साम्ब[?]. ४. नास्ति साम्ब कु. ५. मदतीन्द्र साम्ब मु, मदन्तीन्द्र अ[?] वि[?] इप.

मुद्गल० क्षुमन्तः अन्नवन्तो वयम् याभिः गोभिः सह मदेम हृष्येम, सधमादे अस्माभिः सह हर्षयुक्ते इन्द्रे सति नः अस्माकं ता गावः रेवतीः क्षीराज्यादिधनवत्यः तुविवाजाः प्रभूतबलाश्च सन्तु ॥ १३ ॥

आ घ॒ त्वावा॒न्त्मना॒प्तः स्तो॒तृभ्यो॑ धृष्णविया॒नः । ऋ॒णोरक्षं॒ न च॒क्र्योः॑ ॥१४॥

आ । घ॒ । त्वाऽवा॑न् । त्मना॑ । आ॒प्तः । स्तो॒तृऽभ्यः॑ । धृ॒ष्णो॒ इति॑ । इ॒या॒नः । ऋ॒णोः । अक्ष॑म् । न । च॒क्र्योः॑ ॥ १४ ॥

स्कन्द० [1]'आ इत्युपसर्गः ऋणोः इत्याख्यातेन सम्बन्धयितव्यः । घ इति पदपूरणः । त्वावान् त्वत्सदृशः त्मना आप्तः आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः । स्तुतः सन्नित्यर्थः । स्तोतृभ्यः हे धृष्णो ! प्रगल्भ ! अभिभवितः ! वा शत्रूणाम् । इयानः 'ईमहे' ( निघ ३,१९ ) इत्यस्य याच्ञाकर्मण इदं रूपम् । याच्यमानः । आ ऋणोः ऋणु गतौ । सामर्थ्याच्चान्तर्णीतण्यर्थः । व्यत्ययेन च प्रथमपुरुषस्य स्थाने मध्यमपुरुषः । आ ऋणोत् आगमयति । किम् । सामर्थ्यादुत्तरस्यां चर्चि दर्शनात् कामान् स्तोतृभ्यो ददातीत्यर्थः । कथं च पुनः प्रेरयति । अक्षम् न चक्र्योः यथा अक्षं कश्चित् चक्रयोः† प्रक्षिपेदेवं कामान् स्तोतृषु प्रक्षिपेदित्यर्थः.[1] ॥ १४ ॥

वेङ्कट० त्वत्सदृशः[2] स्तोतृकार्यार्थं[3] शत्रूणां धर्षयितः ! स्वयमेव गच्छन् भवति बन्धुः । तथा त्वं च स्वयमेव आगतः सन् स्तोतॄणां कामान् ऋणोः प्रक्षिप, यथा अक्षम् चक्रयोः प्रक्षिपन्ति[4] ॥ १४ ॥

मुद्गल० हे धृष्णो ! धार्ष्ट्ययुक्त ! इन्द्र ! त्वावान् त्वत्सदृशो देवताविशेषः त्मना आप्तः त्वदनुग्रहवशात् स्वयमवाप्तः सन् इयानः अस्माभिर्याच्यमानः स्तोतृभ्यः स्तोतॄणामनुग्रहाय तदभीष्टमर्थम्[5] घ अवश्यम् आ ऋणोः आनीय प्रक्षिपतु । दृष्टान्तः । चक्र्योः चक्रयोः अक्षम् न यथा अक्षं प्रक्षिपन्ति तद्वत् ॥ १४ ॥

आ यद्दुवः॑ शतक्रत॒वा कामं॑ जरितॄ॒णाम् । ऋ॒णोरक्षं॒ न शची॑भिः ॥ १५ ॥

आ । यत् । दुवः॑ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । आ । काम॑म् । ज॒रि॒तॄ॒णाम् । ऋ॒णोः । अक्ष॑म् । न । शची॑भिः ॥ १५ ॥

स्कन्द० [6]'आ ऋणोः आगमयसि आत्मनि प्रेरयसि यत् दुवः दुव इति परिचरणा । यावती काचित् परिचर्या, तया सर्वया स्तोतृभिरात्मानं परिचारयसि इत्यर्थः । न च दुव एव केवलम् । किं तर्हि । शतक्रतो ! आ कामम् जरितॄणाम् ऋणोः कामानपि स्तोतॄणामागमयसि प्रेरयसि । सम्पादयसीत्यर्थः । कथं प्रेरयसि । अक्षम् न[6] अक्षमिव शचीभिः प्रज्ञाभिः कर्मभिर्वा ॥ १५ ॥

---

१-१. हे इन्द्र त्वत्सदृशः 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' ... 'छन्दसि सादृश्ये' ( पावा ५,२,३९ ) । आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः स्तुतः सन् स्तोतृभ्यः । हे प्रगल्भ अभिभवितः । ई याच्ञायाम् । याच्यमानः । ऋणु गतौ । अन्तर्णीतण्यर्थः । तिपि सिप् । आ ऋणोत् । स्तोतृभ्यः कामान् गमयति ददातीत्यर्थः । चक्रयोरक्षमिव । यथा अक्षं चक्रेषु प्रक्षिपेत् एवं स्तोतृषु कामान् वि[1] अ कु. † नास्ति सास्व. २. त्वत्स° वि[2] अ[1]. ३. स्तोत्रका° कु सास्व. ४. क्षिपन्ति वि[1] अ[1]. ५. °ष्टं मदर्थम् त्रि मै[2]. ६-६. 'सुतस्थ्रद्भादनं दुवः' इति स्तुतौ । यावती काचित्परिचर्या तया सर्वया स्तोतृभिरात्मानं परिचारयसि स्तोतॄणां कामानपि आगमयसि । तद्ददासि वि[1] अ कु.

वेङ्कट० स्तोतॄणा परिचरण शतकर्मन्[1] वामम् च अक्षम् इव चक्रयोर्यदा इव प्रज्ञाभि प्राक्षिपस्तदा स्वयमेवागच्छसीति[2] ॥ १५ ॥

मुद्गल० हे शतक्रतो! इन्द्र! यत् द्रुव धन कामितार्थरूपम् आ स्तोतृभिराप्तव्यमस्ति त वामम् जारतॄणाम् स्तोतॄणामनुग्रहाय आ भणो आनीय प्रक्षिपसि । दृष्टान्त — शचीभि कर्मभि शकटोचितव्यापारविशेषै. अक्षं न यथा अक्ष प्रक्षिपन्ति तद्वत् ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये त्रिंशो वर्ग ॥

शश्व॒दिन्द्रः॒ पोप्रु॑थद्भि॒र्जिगाय॒ नान॑दद्भि॒: शाश्व॑सद्भि॒र्धना॑नि ।
स नो॑ हिरण्यर॒थं द॒ंसना॑वा॒न्त्स न॑: सनि॒ता स॒नये॒ स नो॑ऽदात् ॥ १६ ॥

शश्व॑त् । इन्द्र॑ । पोप्रु॑थत्ऽभि । जि॒गा॒य॒ । नान॑दत्ऽभि । शाश्व॑सत्ऽभि । धना॑नि । स । न॒ । हि॒र॒ण्य॒ऽर॒थम् । द॒सना॑ऽवान् । स । न॒ । स॒नि॒ता । स॒नये॑ । स । न॒ । अ॒दा॒त् ॥ १६ ॥

स्कन्द० 'तस्मा इन्द्र स्तूयमान प्रीतो मनसा हिरण्यरथ ददौ। तमेतया प्रतीयाय शश्वदिन्द्र इति' (ऐब्रा ७,१६)। 'स नो हिरण्यरथमिति तच्छब्दात् यच्छब्दोऽध्याहार्य । शश्वत् शब्दश्च नित्यपर्याय । यो नित्यम् इन्द्र पोप्रुथद्भि प्रोथृ पर्याप्तावितस्यैतद्रूपम् । अभ्यस्तानामुपधाह्रस्वत्वसपीत्येवं ह्रस्वत्वम्। पर्याप्तिश्च समर्थीभाव उच्यते । अत्यर्थं समर्थैरश्वै जिगाय जयति । न च कवल पोप्रुथद्भि । किं तर्हि। †नानदद्भि अत्यर्थं† पुन पुनर्वा ह्रेषद्भिरित्यर्थ । शाश्वसद्भि च शीघ्र गतित्वात् ‡अत्यर्थं पुन पुनर्वा श्वास कुर्वद्भि ‡ । किं पुनर्जिगाय । उच्यते—धनानि असुराणां स्वभूतानि। स न सम्प्रदान एषा चतुर्थी। अदादित्येतेन व्यवहितेनाख्यातेन सम्बन्धयितव्य । स अस्मभ्यम् अदात् । किम् । हिरण्यरथम् हिरण्मय रथम् । कीदृश । दसनावान् दसि दर्शनदशनयो । दर्शनीयत्वाद् दसना वाग् रूप वा । अथवा दस §इति कर्मनामसु§ (तु निघ २,१) दर्शनात् तदेकदेशदसनुगतो दसनाशब्दोऽपि कर्मनामैव । वाग्मी रूपवान् कर्मवान् वेत्यर्थं । किञ्च स न सनिता स एवास्माक सर्वविधुरेषु सम्भक्ता । सनये स न सनिर्लाभ । जीवितस्य लाभाय स एवास्माकम्। जीवितमपि स एव दास्यतीत्यर्थ[1] ॥ १६ ॥

---

1 °कर्म साम्ब कु त्रि[1] [?] अ[1] स्प २ °च्छमि कु १.३ य इन्द्र एवंभूतैरश्वै असुरधनानि जिगाय सोऽस्मभ्यं हिरण्यरथमदात्। पोप्रुथद्भि । प्रोथृ पर्याप्तौ । नाना वा स्तुथ । 'श्लौ' (पा ६ १,१०) इति द्वि । 'हलादि शेष' (पा ७,४,६०)। (णौ चङि० [पा ७,४,१], 'नाग्लोपि०' [पा ७,४,२] 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम' [पा ७,४,३] इत्यादिषु 'त्वरत्यादीना वा' [पावा ७,४,३] इति उपधाह्रस्व) ? । पर्याप्त समर्थ । अत्यर्थं समर्थं । नानदद्भि अत्यर्थं पुन पुनर्वा ह्रेषद्भि । नद शब्दे । यङ्लुकि । 'तपरो' (पा ६,१,५) इति दमदयपे। 'दीर्घोऽकित' (पा ७,४,८३) 'तुजादीना दीर्घोऽभ्यासस्य' (पा ६,१,७) छन्दसि प्रत्ययविशेष इति वा दीर्घ । ह[1] भ्रमनिश्वासत्यर्थं पुन पुनर्वा श्वास कुर्वद्भि । श्वस प्राणने । दसि दंसदर्शनयो । 'दसना कुर्वन्ति कर' इति कर्मणि । दर्शनीयत्वाद् दसना वाग् रूपं वा। कर्मवान् वा वाग्मी वा रूपवान् वा। स एवास्माक सनिता धन दा समर्थो सर्वविधुरेषु सेवमान । स एवास्माकं सनये पशु दाने। जीवितलाभस्य च दि[1] म कु † † "ह्रेषद्भि" साग[1]" ‡-‡ नास्ति साग[1] §-§ दसयति नामकर्म मूको

वेङ्कट० इन्द्रेण दत्तं हिरण्यरथं प्रतिगृह्णन् तं स्तौति—ओष्ठव्यापारं कुर्वद्भिः [1]अत्यन्तं हेषद्भिः[1] अत्यन्तं श्वसद्भिः[1] एतैः अश्वैः[1] इन्द्रः शश्वत् जिगाय शत्रुधनानि । सः अस्मभ्यं कर्मवान् ददातु हिरण्यरथम् । सः हि अस्माकं धनस्य दाता । सः एव नः ददात्विति ॥ १६ ॥

मुद्गल० तुष्टेनेन्द्रेण दत्तं हिरण्यरथम् अनया प्रतिजग्राह । इन्द्रः शश्वत् सर्वदा धनानि वैरिसम्बन्धीनि जिगाय जितवान् अश्वैरिति शेषः । कीदृशैः । पोप्रुथद्भिः घासभक्षणादनन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः नानदद्भिः नादमास्यगतं हेषाशब्दं कुर्वद्भिः शाश्वसद्भिः पुनःपुनः श्वसद्भिः । दंसनावान् कर्मवान् सनिता दाता सः इन्द्रः नः अस्माकम् सनये सम्भजनार्थम् हिरण्यरथम् सुवर्णेन निर्मितं रथम् अदात् दत्तवान् । 'स नः स नः' द्विः[6] आदरार्थः ॥ १६ ॥

आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥ १७ ॥

आ । अश्विनौ । अश्वऽवत्या । इषा । यातम् । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥

स्कन्द० [5]"तमिन्द्र उवाचाश्विनौ नु स्तुहि । अथ त्वोत्स्रक्ष्याम इति । सोऽश्विनौ तुष्टाव उत्तरेण तृचेन' ( ऐब्रा ७,१६ ) । आ इत्युपसर्गो यातम् इत्याख्यातेन सम्बन्धयितव्यः । हे अश्विनौ । अश्ववत्या इषा 'इत्थम्भूतलक्षणे' ( पा २,३,२१ ) इत्येवमेषा तृतीया । अश्ववताऽन्नेन सम्बद्धौ । आ यातम् आगच्छतम् । यदस्मभ्यमाश्वम्[†] अन्नं च दातव्यं तद् गृहीत्वाऽऽगच्छतम् इत्यर्थः । शवीरया तृतीयान्तमेतत्, आश्विनोः सम्बोधनम्, अनुदात्तत्वाप्रसङ्गाय । 'शु' ( निघ २,१५ ) इति क्षिप्रनाम । ईर गतौ । क्षिप्रगतिः शवीरा । शवेर्गतिकर्मणो वा[‡] एतत् । शविर्वेगः तद्वती वा[‡] शवीरा । तया । वेगवत्या गत्येत्यर्थः । कथं च पुनरायातम् । गोमत् गोसंयुक्तम् । गा अपि गृहीत्वेत्यर्थः । हे दस्रा! शत्रुपक्षक्षयकरौ! दस्रनामानौ! । यद्यपि चाश्विनोरेको दस्रनामा, तथापि साहचर्यादुभयोर्व्यपदेशः । हिरण्यवत् हिरण्यसंयुक्तं च । हिरण्यं च गृहीत्वेत्यर्थः[5] ॥ १७ ॥

वेङ्कट० आ यातम् अश्विनौ! अश्वयुक्तेन अन्नेन क्षिप्रप्रेरणेन गोयुक्तम् दर्शनीयौ! हिरण्ययुक्तं च ॥ १७ ॥

मुद्गल० इन्द्रेण प्रेरितः[6] शुनःशेपः अश्विनौ तुष्टाव । हे अश्विनौ! अश्वावत्या बहुभिरश्वैर्युक्तया शवीरया प्रेर्यमाणया इषा अन्नेन सह आ यातम् अस्मिन् कर्मणि आगच्छतम् । हे दस्रा! अश्विनौ! युवयोः प्रसादात् गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् बहुना हिरण्येन युक्तमस्मदीयं गृहमस्त्विति शेषः ॥ १७ ॥

---

१-१. नास्ति छपं; °न्तं श्वसद्भिः साम्ब ल.　२. हेषद्भिः साम्ब ल.　३. नास्ति कु.　४. नास्ति भूको.　५-५. 'तमिन्द्र उवाच—अश्विनौ नु ××× इति सोऽश्विनौ तुष्टवात उत्तरेण तृचेन' । हे अश्विनौ अश्ववताऽन्नेन आ यातम् । इत्थंभूतलक्षणत्वात् तत्संबद्धौ । अश्वयुक्तौ । 'मतौ बह्वचोऽनजिरादीनाम्' ( पा ६,३,११९ ), 'शरादीनां च' ( पा ६,३,१२० ) इति पूर्वस्य दीर्घः । यदस्मभ्यमाश्वमन्नं च दातव्यं तद् गृहीत्वा आगच्छतम् । शु क्षिप्रे । ईर गतौ । क्षिप्रगत्यमानुगतौ वेगे च । ('मेधारथाभ्यामिरन्निरचौ' [ पावा ५,२,१०९ ] इत्वाच इनि इरच् ) ? । वेगवत्या इषा । गोमत् । क्रियाविशेषणमिदम् । गा हिरण्यं च गृहीत्वा आगच्छतम् । 'शत्रुनाशकरौ दस्रौ' । एकस्य नाम्ना उभयोर्व्यपदेशो वा वि° स कु.　† °श्वम् भूको.　‡ नास्ति भूको.　६. प्रेषितः मै°.

समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ १८ ॥

समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ १८ ॥

स्कन्द० [1]समानः साधारणः द्वयोरप्येक एव यो युज्यते स समानयोजनः । हि-शब्दस्तु पदपूरणः । वाम् युवयोः रथः हे दस्रौ ! अमर्त्यः मरणवर्जितः । अविनाशीत्यर्थः । समुद्रे अन्तरिक्षनामैतत् ( द्र निघ १,२ ) । निरालम्बनेऽप्यन्तरिक्षे हे अश्विना ! ईयते गच्छति[1] ॥ १८ ॥

वेङ्कट० युवयोः हि रथः द्वयोरप्येकभूतः दर्शनीयौ[1] अमरणः अन्तरिक्षमध्ये[2] गच्छति । तत आयातमिति ॥ १८ ॥

मुद्गल० हे दस्रौ ! अश्विनौ ! [1]हि यस्मात्[1] वाम् युवयोः सम्बन्धी रथः समानयोजनः तुल्ययोजनः । युवयोर्द्वयोरेकरथारूढत्वादुभयार्थं सकृदेव युज्यते । युक्तः स रथः अमर्त्यः विनाशरहितः । अप्रतिहतगतिरित्यर्थः । अत एव हे अश्विनौ ! समुद्रे[3] अन्तरिक्षे ईयते गच्छति ॥ १८ ॥

न्य१ घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥ १९ ॥

नि । अघ्न्यस्य । मूर्धनि । चक्रम् । रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ॥ १९ ॥

स्कन्द० [4]नि इत्युपसर्गः येमथुः इत्याख्यातेन सम्बन्धयितव्यः । अघ्न्यः अहन्तव्यत्वात् प्रजापतिरादित्यो वा । तस्य मूर्धनि एकम् चक्रम् स्वरथस्य नि येमथुः नियमितवन्तौ स्थः । परि द्याम् परिशब्दो लक्षणया कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । दिवं प्रति अन्यद् द्वितीयम् ईयते गच्छति । नैमित्तिकस्य चिद्रथस्य सामर्थ्यमित्यर्थः[4] ॥ १९ ॥

वेङ्कट० अश्विनावेकं चक्रम् रथस्य पर्वतमूर्ध्नि[5] स्थापयामासतुः । [6]अन्यत् तु[7] चक्रं परितः दिवं गच्छति ॥ १९ ॥

मुद्गल० हे अश्विनौ ! युवाम् अघ्न्यस्य हन्तुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य मूर्धनि उपरि रथस्य चक्रम् भवदीयरथसम्बन्ध्येकं चक्रम् नि येमथुः नियमितवन्तौ । अन्यत् चक्रम् परि द्याम् द्युलोकस्य परितः ईयते गच्छति ॥ १९ ॥

यस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥ २० ॥

यः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ॥ २० ॥

---

१-१ हे दस्रौ अश्विनौ वां रथः साधारणे युज्यते व्योमयोरपि । मरणवर्जितश्च । 'नाकः समुद्र इत्यन्तरिक्ष नामसु । अनालम्बन गच्छति वि[1] मु २ अन्तरिक्षे मध्ये अ[2] वि[1] ३-३ नास्ति मूको ४ ४ समुद्र मूको ५ ५ अघ्न्य हन हिंसागत्योः । 'तमहनजनखनघसाम्' (पा ६,४,९८) । अघ्न्यस्य प्रजापतिरादित्यो वा । तस्य मूर्धनि स्वरथस्य एकं चक्रं नियमितवन्तौ । कर्मप्रवचनीयमतो परि । दिवं प्रति अन्यद् द्वितीयं गच्छति मु ६ "मूर्धनि ऌ, "मूल वि[1] ७-७ अन्यन्तु वि[1] ऌर्थ

स्कन्द० "तमश्विनावूचतुः—उपसं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति । स उपसं तुष्टाव्त उत्तरेण तृचेन' (ऐब्रा ७,१६)। 'उपस्यस्तृच उत्तरः' (तु. बृदे ३,१०२)। उत्तरस्तृच उषोदेवतः। हे उषः! कधप्रिये! कम् उदकम्, तद् रश्मिभिराहितं यो दधाति धारयति स कधः प्रजापतिः। केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यत इति वा कधः। कोऽसौ। आदित्यः। तस्य प्रिया स वा प्रियो यस्याः सा कधप्रिया। अत्यन्तसाहचर्याच्च †तत्प्रियत्वाद् वा सा। तत्सम्बोधनं† हे कधप्रिये!। भुजे भुजिरत्र पालनार्थः। पालनाय कः मर्तः मनुष्यः। अमर्त्ये! मरणवर्जिते!। कं त्वं मनुष्यं पालयसीत्यर्थः। कम् वा नक्षसे। नक्ष इति व्याप्तिकर्मसु (तु. निघ २,१८) पाठाद् नक्षतिर्व्याप्त्यर्थः। आयुरादिप्रदानेन व्याप्नोषीत्यर्थः। अथवा णक्ष स्तृक्ष णक्ष गतौ। गत्यर्थो नक्षतिः। कं वा पालयितुं गच्छसीत्यर्थः। कथय। एतत् सुखं ज्ञात्वा वयमपि तादृशा एव भवेमेत्यर्थः। विभावरि! विविधा भा दीप्तिर्विभा ‡तद्वति!। ईवनिपौ छन्दसि‡। वनिर्मत्वर्थीयः[1] ॥ २० ॥

वेङ्कट० कः ते उषः! कधनाप्रिये! मकारधकारौ समानौ। भोगाय भवति मर्तः मरणवर्जिते[2]!। कीदृशं च[3] त्वं व्याप्नोषि दीप्तिमति! ॥ २० ॥

मुद्गल० अश्विभ्यां प्रेरितः शुनःशेपः उपसं तुष्टाव। हे कधप्रिये! स्तुतिप्रिये! अमर्त्ये! मरणरहिते! उषः! एतच्छब्दाभिधेये उषःकालाभिमानिनि देवते! ते भुजे तव भोगाय मर्तः मनुष्यः कः विद्यते। हे विभावरि! विशेषप्रभायुक्ते उषोदेवि! कम् पुरुषम् नक्षसे आप्नोषि। तवोचितं भोगं दातुं न कोऽपि समर्थः। अत एव त्वं कमपि पुरुषं भोगापेक्षया न प्राप्नोषि। ईदृशस्तव महिमेत्यर्थः ॥ २० ॥

वयं हि ते अमन्मह्याऽऽन्तादा पराकात्। अश्वे न चित्रे अरुषि ॥ २१ ॥

वयम्। हि। ते। अमन्महि। आ। अन्तात्। आ। पराकात्। अश्वे। न। चित्रे। अरुषि ॥ २१ ॥

स्कन्द० "हि-शब्दः पदपूरणः। ते इति द्वितीयार्थे षष्ठी। वयम् त्वाम् अमन्महि 'ईमहे यामि मन्महे' (निघ ३,१९) इति याच्ञाकर्मसु पाठाद् याच्ञार्थोऽयम्। याचामहे। किम्। सामर्थ्यात् स्वस्यायुषः। न वाल्पस्य। किं तर्हि। आ अन्तात् आ पराकात् 'पराके' (निघ ३,२६) इति दूरनाम[4]।

---

१-१. 'तमश्विना ऊचतुः—उपसं नु ××× इति। स उपसं तुष्टाव्त उत्तरेण तृचेन'। 'उपस्यस्तृच उत्तरः'। हे उषः 'पुरीषं कम्' इत्युदके। रश्म्याहृतं तद् यो दधाति धारयति वा स कधः, 'आतोऽनुपसर्गे कः' (पा ३,२,३) इति कः। कः प्रजापतिर्वा। केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यते इति वा कधः। आदित्यः। तस्य प्रिया। स प्रियो यस्या इति वा। अत्यन्तसाहचर्याद्धि तत्प्रियत्वं साध्यते। एवंभूते अमरणे। भुजे पालनाय। मर्तः। स्वार्थे यत्। 'नवसूरमर्त°' (पाग ५,४,३६)। तस्य लुक्। मर्तः। कं मर्त्यम् आयुरादिप्रदानेन व्याप्नोषि। नक्ष व्याप्तौ। स भुजे भवम्। तृक्ष स्तृक्ष णक्ष गतौ। कं पालयितु गच्छसीति वा। कथय। एतत्सुखं ज्ञात्वा वयमपि तादृशा एव भवेम। भा दीप्तौ। विविधा भा विभाः। मतुपि छन्दसि वनिप्। विभायुक्ता विभावरी। 'ऋन्नेभ्यो ङीप्' (पा ४,१,५), 'वनो र च' (पा ४,१,७), 'अम्बार्थनद्योर्ह्रस्वः' (पा ७,३,१०७) वि[1] अ कु. †-† तत्प्रियत्वाद् व्यमानः सम्बोधनम् मूको. ‡-‡ नास्ति। ईवनिपौ छ° मूको. २. °वर्जितो साम्ब. ३. नास्ति वि[1] लपं. ४-४. वय त्वाम् आजीविनं याचामहे। मन याच्ञायाम्। मरायुर आ अवसानात्। आ पर्यन्तात्। दूरात्। दूरं पराकं वि[1] अ कु.

'विप्रकृष्टत्वाच्च पुरस्तादुप वर्षशतमत्र दूरमभिप्रेतम् । आ अभिविधौ मर्यादायाम् । आ वर्षशतात् । यावद्वर्षशतं पूर्णम् इत्यर्थः । अश्वे न चित्रे अश्वा वडवा । सा यथा चित्रा विचित्रा पूज्या वा तद्वच्चित्रे' । अथवा †श्रूयमाणोपमार्थीयो नायमुपमानशब्दः । उपमानाम् उपमानवृत्तिरुपमेय विषयसम्बोधनसम्बन्धासम्भवाद् अश्वाशब्दो† नोपमानवृत्तिः । किं तर्हि । लुप्तोपम उपमेयवृत्तिः । क्रियाशब्दो वा । नशब्दस्तु 'उपरिष्टादुपचारः' ( नि या १,४ ) उपमार्थीयत्वाद् । 'अस्त्युपमार्थस्य सम्प्रत्ययार्थे प्रयोगः' ( नि या ७,३१ ) इति पदपूरणः । अश्वे' वडवासदृशे! व्याप्ते' वा । चित्रे' चित्ररूपे' पूज्ये' वा । अरुषि' ‡अर्पतेर्दीप्तिकर्मणो दीप्तिवचनः । अर्पतेर्वा‡ गतिकर्मणो गन्तृवचनः । दीप्ते' गन्त्रि' वा' ॥ २१ ॥

वेङ्कट० वयम् हि त्वाम् अज्ञासिष्म' आ' अन्तात् आ च पराकात् पराकशब्दो दूरवचनः । मूलादुपक्रम्याऽन्तादित्यर्थः । अश्वे ! गमनशीले ! पूज्ये ! आरोचने ! इति । नकारः सम्प्रत्ययार्थीय ॥२१॥

मुद्गल० हे अश्वे ! व्यापनशीले ! चित्रे ! चायनीये ! अरुषि ! आरोचमाने ! उषः कालाभिमानिनि देवते ! तव स्वरूपम् आ अन्तात् समीपपर्यन्तम् आ पराकात् दूरपर्यन्तम् वयम् मनुष्याः न अमन्महि न बोद्धुं समर्थाः । हि प्रसिद्धौ । देवतामहिम्न पारावारयोरज्ञानमस्मासु प्रसिद्धमित्यर्थः ॥ २१ ॥

त्वं त्येभि॒रा ग॑हि॒ वाजे॑भिर्दुहितर्दिवः । अ॒स्मे र॒यिं नि धा॑रय ॥ २२ ॥

त्वम् । त्येभिः । आ । ग॒हि॒ । वाजे॑भिः । दु॒हि॒त॒रि॒ । दि॒व॒ः । अ॒स्मे इति॑ । र॒यिम् । नि । धा॒र॒य॒ ॥२२॥

स्कन्द० [5]त्येभि इति 'इत्थंभूतलक्षणे' (पा २,३,२१) तृतीया । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । त्वम् यानि वयमर्थयामहे तैः सम्बद्धा आ गहि आगच्छ वाजेभि अन्नैः । यान्यस्मभ्यं दातव्यानि अन्नानि तानि गृहीत्वाऽऽगच्छेत्यर्थः । हे दुहितः दिवः आदित्यतेजसो दिवि जायमानत्वात् सा दिवो दुहिता, तेनैवमामन्त्र्यते—हे दुहितर्दिव इति । किञ्च अस्मे रयिम् नि धारय धनं चास्मभ्यं देहीत्यर्थः[5] । स च शुनःशेपोऽस्यास्तृचयुक्ताया विपाशो मुमुचे[6] इतीतिहासार्थः ॥२२॥

वेङ्कट० त्वम् एतैः प्रदिदिसितैः[7] अन्नैः आगच्छ दिवः दुहितः ! अस्मासु रयिम् नियच्छेति ॥ २२ ॥

मुद्गल० हे दिवः दुहितः ! द्युदेवतायाः पुत्रि ! उषोदेवि ! त्येभिः वाजेभिः तैरन्नैः सह त्वम् आ गहि अत्राऽऽगच्छ । अस्मे अस्मासु रयिम् धनम् नि धारय नितरां स्थापय ॥ २२ ॥

इति प्रथमाष्टके द्वितीयाध्याये एकत्रिंशो वर्गः ॥

इति प्रथममण्डले षष्ठोऽनुवाकः ॥

---

1-1 विप्रकृष्टम् । पुरस्तादुपवैदतं पूर्वम् । आङ् मर्यादायामभिविधौ वा । यावद् वर्षशतं पूर्णम् । अश्वे न चित्रे । यथा वडवारूपेण विचित्रा पूज्या वा तद्वत् । अश्वे वडवासदृशे व्याप्ते वा । विचित्ररूपे पूज्ये वा । अरुषि दीप्ते गन्त्रि वा । दश इव दैक्षिणो वि' अ कु †-† °मार्थीयानमुपमानशब्द । सदृशे व्याप्ते वा । चित्रे चित्ररूपे पूज्ये वा । अरुषि । दश्यानमुपमानवृत्तिरुपमेयविषयसम्बोधनसम्बन्धासम्भवः मूको ‡-‡ अर्पते चोदनेर्वा मूको २. °मिष वि' हर्ष, °ष्मिम् वि' अ', ३ नास्ति कु ४ °त्यर्थे वि' हर्ष ५-५ तैः यानि वयमर्थयामहे तैरागच्छ यते । यच्छ्रोतव्य यन्न नि तानि गृहीत्वाऽऽगच्छ । दिवो नाम आदुरा दिवो दुहिता । हे दुहितर्दिव । अस्मभ्यं धनं निधनेन धारय वि' अ कु ६. "ये मुमुचात् सात्य'" ७ प्रदिदिसैः कु

[ ३१ ]

त्वम॑ग्ने प्रथमो अङ्गि॑रा ऋषि॑र्दे॒वो दे॒वाना॑मभवः शि॒वः सखा॑ ।
तव॑ व्र॒ते क॒वयो॑ विद्म॒नाप॑सोऽजाय॒न्त म॒रुतो॒ भ्राज॑दृष्टयः ॥ १ ॥

त्वम् । अ॒ग्ने॒ । प्र॒थ॒मः । अङ्गि॑राः । ऋषि॑ः । दे॒वः । दे॒वाना॑म् । अ॒भ॒वः॒ । शि॒वः । सखा॑ । तव॑ । व्र॒ते । क॒वय॑ः । वि॒द्म॒नाऽअ॑पसः । अजा॑यन्त । म॒रुत॑ः । भ्राज॑त्ऽऋष्टयः ॥ १ ॥

स्कन्द० "'हिरण्यस्तूप आङ्गिरसः त्वम्' । हिरण्यस्तूपो नामाङ्गिरसः पुत्रः 'त्वम् अग्ने' इत्यादि दृष्टवान् । 'आग्नेयं प्रथमं सूक्तम्' । हिरण्यस्तूपस्य प्रथमं सूक्तमग्निदैवतम् । त्वम् हे अग्ने ! प्रथम सर्वत उत्कृष्टः । अङ्गिराः अङ्गानि शरीरावयवाः तद्वदङ्गि शरीरम् तत्र स्थितिहेतुः अशितपीतरसोऽङ्गिरसः । तं करोत्यङ्गिरसयति 'तत् करोति तदाचष्टे' ( पाधा ३,१,२६ ) इति णिच् । तदन्तात् क्विप् । 'अत्वसन्तस्य चाधातोः' ( पा ६,४,१४ ) इति दीर्घत्वम् । अधातुभूतपूर्वमात्रस्य हीदमिष्यते । गोमान् यवमानिति यथा । दिवोदासादित्वाच्च छान्दसमाद्युदात्तत्वम् । अङ्गिराः शरीरस्थितिहेतोः अशितपीतरसस्य† कर्तेत्यर्थः । जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसमेदोऽस्थिमज्जाशुक्रभावेन‡ परिणममानः शरीरस्थितिहेतुर्भवति । ऋषिः द्रष्टा च सर्वस्य । अथवा योऽयं प्रथमोऽङ्गिरा नाम ऋषिः स त्वमेव त्वत्कारणत्वात् । तथा चैतिहासिका आहुः— 'ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः' ( तु. बृदे ५,९९ ) इति । किञ्च देव. त्वं हविर्नयनाद्युपकारेण देवानाम् अभवः भवसि । शिवः सुख. सखा । किञ्च तव व्रते 'व्रतम्' ( निघ २,१ ) इति कर्मनाम । सप्तमीनिर्देशात् अवस्थिता इति वाक्यशेषः । तव कर्मणि परिचर्यायामवस्थिताः कवयः मेधाविन. विद्मनापसः विदितयागादिकर्माणो वेदितव्यकर्माणो वा । उत्कृष्टचेष्टिता इत्यर्थः । अजायन्त मरुतः देवाः । कीदृशा. । भ्राजदृष्टयः ऋष्टिः शक्त्याख्य आयुधविशेषः । दीप्तशक्तयः । देवत्वं हि धर्मोपात्तम् । धर्मश्चाग्निपरिचर्यायत्तः । अथात एवमुच्यते—तव व्रते अजायन्त मरुत इति । केचित्तु मरुत इत्यृत्विङ्नामाचक्षते ( तु. निघ ३,१८ ) । अत्र चर्त्विक्त्वेन वर्तते । सामर्थ्याच्चान्तर्णीतमत्वर्थः तद्वद्यजमानवचनो वा§ । अजायन्तेत्येतत्¶ विद्मनापस इत्येतेन सम्बध्यते' ।

---

१०१. हिरण्यस्तूप आङ्गिरस. । आग्नेयं प्रथमं सूक्तम् । हे अग्ने त्वं सर्वत उत्कृष्टः शरीरस्थितिहेतो. अशितपीतरसकर्ता च । अङ्गं शरीरावयवः । मतुप्यत इनिः । अङ्गिन. स्थित्यै अशितपीतरसोऽङ्गिरसः । 'तत्करोति तदाचष्टे' इति णिच् । णिच्यागते मापत्यधातुत्वात् क्विप् च । 'अत्वसन्तस्य चाधातोः' इति अधातुभूतपूर्वस्य दीर्घत्वम् । दिवोदासादित्वादाद्युदात्तत्वम् । इत्यङ्गिरा. जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसमेदोऽस्थिमज्जा शुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति । ऋषिस्सर्वस्य द्रष्टा मननेन । अथवा योऽयं प्रथमोऽङ्गिरा ऋषिः स त्वमेव । त्वत्कारणत्वात् । 'अग्नेरर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषि.' । देवाना हविर्नयनाद्युपकारेण देवोऽभव. । तेषामपि दाता । सुखः सखा च भवसि । 'सुम्नं शर्मः शुन शिवम्' इति सुखे । तव कर्मणि परिचर्यायामवस्थिताः मेधाविनः विदितयागादिकर्माणः वेदितव्यकर्माणो वा । विद ज्ञाने । 'आतो मनिन्°' (पा ३,२,७४), 'अन्येभ्योऽपि°' (पा ३,२,७५)। विद्मना। 'आपोऽप्नस्व कर्म' (?) इति कर्मणि । उत्कृष्टचेष्टिताः अजायन्त मरुतः दीप्यमानशक्त्यायुधाः । 'ऋष्टिरूर्मैः खादिराः' इति मरुन्नायुधे । 'धर्मोपात्तं हि देवत्वं धर्मश्चाग्निपरिचर्यायत्तः' । अतः तव व्रते वि॰ ज कु. † °रसक° मूको. ‡ °शुक्र° मूको. § नास्ति मूको. ¶ °त्येतस्य मूको.

[1]अवस्थिता ऋत्विजो यजमाना वा† विद्मनापसो वेदितव्यकर्माण उत्कृष्टचेष्टिता अजायन्तेति । अत्र चेतिहासमाचक्षते[2]—'त्रिशङ्कुर्नामैक्ष्वाको राजा वसिष्ठस्य याज्योऽभवत् । स वसिष्ठमब्रवीत्—येनाहं क्रतुना सशरीरो दिवं यायां तेन मां याजयेति । तं वसिष्ठोऽब्रवीद् अशक्यमेतदिति । स किञ्चिदागतमन्युरेतदेव वसिष्ठपुत्रानब्रवीत् । त एनमब्रुवन्—भगवान् प्रवृत्तो यजने, किमर्थं वृक्षमुत्सृज्य शाखास्ववलम्बस इति । स तानब्रवीत्—अशक्यमेतदिति भगवताऽहमुक्त इति । त एनं प्रत्यब्रुवन्—यत् तस्याशक्यं कथं तदस्माकं शक्यं भविष्यतीति । स तानब्रवीत्—प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैश्च । अन्यां गतिं यास्यामीति । तं वसिष्ठपुत्रः शक्तिः क्रुद्धोऽशपत्—पुर्वेतिश्वमाच्चण्डालो भवेति । स शापानन्तरमेव घोररूपश्चण्डालोऽभवत् । अथासौ पुत्रं राज्येऽभिषिच्य विश्वामित्राश्रमं गत्वा प्रोषितस्य तस्य भार्यां परिचरितवान् । अथागतो विश्वामित्रः स्वदारपरिचरणाहितितोषो यथावृत्तं तत्सर्वमुपलभ्य राजानमब्रवीद्—अहं त्वा तेन क्रतुना याजयिष्यामि[3] येन सशरीरः स्वर्गं यास्यसीति[3]—इत्युक्त्वा स्वयमेव सम्भारान् संभृत्य शिष्यानुवाच—आमन्त्र्यन्तामृषयः । यश्च यद् ब्रवीति तत् सर्वं मह्य-माख्यायताम् इति । त ऋषीनुपामन्त्रयन्त । उपामन्त्र्यमाणाश्च ऋषयोऽब्रुवन्—आगमिष्याम इति । वासिष्ठास्त्वब्रुवन्—चण्डालो यत्र यजते क्षत्रियो याजयति च कथं तत्र देवताभिर्महा महीयन्ते । कथं तत्रागच्छाम इति । तत् सर्वं विश्वामित्राय तच्छिष्या आचक्षत । अथ सपुत्रवसिष्ठ-वर्जमागतेष्वृषिषु परिसमाप्त एव यज्ञे उत्पतेति विश्वामित्रस्त्रिशङ्कुमब्रवीत् । अथासा-वुत्पत्य त्रिदिवमगच्छत् । त देवाः पातयितुमैच्छन् । अतः क्रुद्धो विश्वामित्रोऽन्यान् देवान-सृजत् । अथैनं भीता देवा अब्रुवन् यथा भवानिच्छति तथास्तु इति । सोऽद्य त्रिशङ्कुरद्यापि दिवि रोचते' । तदेतद्वनेनार्धर्चेनोच्यते । ये भ्राजदृष्टयः क्षत्रियत्वाद् दीप्तशक्त्याद्यायुधाः ते तव व्रते अवस्थिता मरुत ऋत्विजो विश्वामित्रादयः [4]तद्वन्तो वा त्रिशङ्क्वादयो यजमानाः विद्मनापसः वेदितव्यकर्माणोऽत्यन्तोत्कृष्टसशरीरस्वर्गगमनादिकर्माणोऽजायन्तेति[4] ॥ १ ॥

वेङ्कट० हिरण्यस्तूप आङ्गिरस । त्वम् अग्ने! मुख्य- आङ्गिरसां च एकः सर्वस्य द्रष्टा देवः देवानाम् अभवः कल्याण सखा । तव कर्मणि त्वया प्रेरिताः कवयः क्रान्तप्रज्ञाः लब्धव्याप्तयो वा प्रादु-र्भवन्ति मरुतः दीप्तस्वायुधाः ॥ १ ॥

मुद्गल० सप्तमेऽनुवाके पञ्च सूक्तानि । [5]तत्र 'त्वमग्ने प्रथम.' इति अष्टादशर्चं प्रथमं सूक्तम् । आङ्गिरसः हिरण्यस्तूप ऋषिः । अष्टमीषोडश्यष्टादश्यः त्रिष्टुभः । शिष्टा. जगत्यः । अग्निर्देवता[5] ॥

हे अग्ने! त्वम् प्रथम. आद्यः अङ्गिराः 'आङ्गिरसानामृषीणां सर्वेषां' जनकत्वात् तादृशोऽङ्गिरो—नामक ऋषिः अभवः । तथा स्वयम् देवः भूत्वा देवानाम् अन्येषाम् शिवः शोभनः सखा अभवः । तव व्रते त्वदीये कर्मणि कवयः मेधाविनः विद्मनापसः ज्ञानेन व्याप्नुवानाः भ्राजदृष्टयः दीप्य-मानायुधाः मरुतः मरुत्संज्ञका देवाः अजायन्त ॥ १ ॥

---

1-1. अजायन्त मरुत इति । केचित्तु मरुत इति ऋत्विङ्नाम मन्यन्ते । अत्र च ऋत्विजः एव स्तुत्य-मानेषु वा । तादृशेष्वस्मिन्ना ऋत्विजो यजमाना वा वेदितव्यकर्माण. अजायन्तेति योजना । अत्र चेतिहास वि[1] अ कु. † नास्ति मूको. २. च्यानिति मूको. ३. यास्यसि मूको. ४-४. तद्वन्तो. त्रिशङ्कुयजमाना वा वेदितव्य-कर्माण अत्यन्तोत्कृष्टसशरीरस्वर्गगमनादिकर्माणोऽजायन्त वि[1] अ कु. ५-५. नास्ति वि मै[2]. ६-६. भवनां सर्वेषामृषीणां वि.

त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ २ ॥

त्वम् । अग्ने । प्रथमः । अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् ।
विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवे ॥ २ ॥

स्कन्द० [1]त्वम् हे अग्ने! प्रथमः अङ्गिरस्तमः[1] शरीरस्थितिहेतोः अशितपीतरसस्याऽतिशयेन कर्ता । [2]अङ्गिरस ऋषेरतिशयेनोत्पत्तिकारणं[2] वा[3] । [4]कविः मेधावी देवानाम् स्वभूतम् परि भूषसि परिपूर्वो भवतिः सर्वत्र परिग्रहे । परिगृह्णासि । व्रतम् यागाख्यं कर्म । किञ्च विभुः ईश्वरः विश्वस्मै भुवनाय तादर्थ्ये एषा चतुर्थी । सर्वस्य भूतजातस्याऽर्थाय मेधिरः यज्ञवान् । यज्ञस्य सम्पादयितेत्यर्थः । द्वे द्यावापृथिव्यौ वा अरणी वा मातरौ यस्य स द्विमाता शयुः शयतिरत्र स्थानार्थः, आमाशयो जलाशय इति यथा । व्यवस्थातेत्यर्थः । कतिधा चित् कतिभिरपि प्रकारैः । कस्यार्थाय । आयवे आयवो मनुष्याः तेषामर्थाय । और्वशेयो वा पुरूरवसः पुत्र आयुः, तस्यार्थाय । कतिधा पुनर्व्यवस्थाता । उच्यते[4] । अग्निहोत्रदर्शपूर्णमासादिषु गार्हपत्यदक्षिणाग्न्याहवनीयत्वात् त्रिधा । पिण्डपितृयज्ञचातुर्मास्येषु चतुर्धा प्रणीतातिरेकात् । पशौ पञ्चधा शामित्रातिरेकात् । [5]सोम आग्नीध्रस्य धिष्ण्यातिरेकात् यावत्तत्संख्यम्[5] ॥ २ ॥

वेङ्कट० त्वम् अग्ने! मुख्यः[6] अङ्गिरसां च वरिष्ठः कविः यज्ञम् अलङ्करोषि । सर्वस्मै भुवनाय अनेकशरीरो भवन् प्राज्ञः द्वयोर्लोकयोर्निर्माता पुरूरवसः पुत्राय आयवे गार्हपत्यादिव्यूहेनानेकधा शयानः ॥ २ ॥

मुद्गल० हे अग्ने! त्वम् प्रथमः आद्यः अङ्गिरस्तमः अतिशयेनाङ्गिरा भूत्वा कविः मेधावी सन् देवानाम् अन्येषाम् व्रतम् कर्म परि भूषसि परितोऽलङ्करोषि । कीदृशस्त्वम् । विश्वस्मै भुवनाय समस्तलोकानुग्रहार्थम् विभुः बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः । मेधिरः मेधावान् द्विमाता द्वयोररण्योरुत्पन्नः आयवे मनुष्यार्थम् कतिधा चित् कतिभिः प्रकारैः सर्वत्र शयुः शयानः । तत्तन्मनुष्यस्य[7] गृहे अवस्थितस्य तव प्रकारा इयन्त इति न केनापि ज्ञायत इत्यर्थः ॥ २ ॥

त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।
अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ ३ ॥

त्वम् । अग्ने । प्रथमः । मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते ।
अरेजेताम् । रोदसी इति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसो इति ॥ ३ ॥

---

1-1. हे अग्ने सर्वेषामुत्कृष्टः सः वि[1] अ कु. 2-2. ऋषिवचनेनाङ्गिरः शब्देनोत्पत्तिकारणम् साम्ब[1,2]. 3. नास्ति मूको. 4-4. मेधावी देवानां यागाख्यं कर्म परिगृह्णासि । परिभूः परिग्रहे । किंच ईश्वरश्च विश्वभुवनार्थं यज्ञस्य संपादयिता । मेधो यज्ञः । 'मेधारथाभ्यामिरच्' (द्र. पावा ५,२,१०९) । नित्यं यज्ञयुक्तः । तस्मात् तत्संपाद-यिता । द्यावापृथिव्यौ अरणी वा मातृस्थानीये यस्य स द्विमाता । आमाशयो जलाशय इव शय शीङ् स्थाने । 'आयवः पूरवः प्रजाः' इति मृषु । कतिप्रकारैर्मनुष्यार्थं पुनर्व्यवस्थाता । और्वशेयो वा पुरूरवसः पुत्र आयुः । तदर्थाय वा । कतिधात्वम् वि[1] अ कु. 5-5. सोमाग्नीध्रधिष्ण्यातिरेकात् यावत्तावत्संख्यात्वम् वि[1] अ कु. 6. मत्तः साम्ब अ[1] वि[1]; प्रथमः कु. 7. °ष्यगृहे मै[1].

स्कन्द० 'अत्रेतिहासमाचक्षते—"सर्वम् इदम् अन्धं तम आसीत् । अथ मातरिश्वा आकाशे सूक्ष्ममग्निमपश्यत् । तम् अमथ्नात् । अथर्वा च ऋषिः । तत्‡ पराशरो भरद्वाजश्च वक्ष्यति—'मथायदी विभृतो† मातरिश्वा' (ऋ १,७१,४) 'त्वामग्ने पुष्करादधि' (ऋ ६,१६,१३) इति[१] । तत्र मथ्यमाने ज्वालामाली नामाग्निरजायत । स प्रथमं मातरिश्वने आविरभवत् । अथ विवस्वते" । [२]तदेतदिहोच्यते । त्वम् हे अग्ने[१] प्रथमः आग्निमः मातरिश्वने मातरिश्वा वायुः तस्मै आविर्भव लङर्थेऽयं लोट् । आविरभवः प्रकाशीभूत इत्यर्थः । सुक्रतूया शोभनं कर्म सुक्रतु तदिच्छा सुक्रतूया । तृतीयैकवचनस्याऽऽजादेशः । शोभनयागादिकर्मेच्छयेत्यर्थः । मातरिश्वने चाविर्भूय अनन्तरम् विवस्वते आविरभवः । किञ्च¶ अरेजेताम् 'भ्यसते रेजत इति भयवेपनयोः' (या ३,२१) । अबिभीताम् भयाद् वा अकम्पेताम् । रोदसी द्यावापृथिव्यौ । होतृवूर्ये वृतो वूर्यः । होता वूर्यश्चेति होतृवूर्यं, तस्मिन् होतृवूर्ये । होतरि वृते त्वयि| । यदा त्वं होता वृतो वेदिमध्यस्थोऽदीप्यथाः तदा अयमतिदीप्तोऽप्यावां दहेदित्येव द्यावापृथिव्यावप्यबिभीतां भयाद्वा अकम्पेताम् । किं पुनरन्य इत्यर्थः । अमृभ्णो भारम् अत्रेतिहासमाचक्षते[२]—'देवाः किल स्वयमेव स्वानि स्वानि हवींष्यूढ्वाऽभक्षयन् । तेषां केचिद् वोढुं नाशक्नुवन् । एकैकाहुतिस्त्रैलोक्यभारादतिरिच्यते । काश्चित्तु शक्नुवतोऽप्यसुरा अभ्यद्रवन् । ते सर्वेऽग्निमब्रुवन्—हव्यं नो वहेति । स तल्लीलायमानोऽवहत्' । तदेतदिहोच्यते—अमृभ्णो भारमिति । मृधिर्हिंसार्थः । मृधतिर्हिंसायाम् इति । इह तु भारस्य हिंसाकर्मताऽसम्भवात् मृधिः शक्नोत्यर्थः । मृह्णोर्वा शक्नोत्यर्थस्य इदं रूपम्, न मृधेः । शक्नोतेश्च नित्यकर्मभूतधात्वन्तरानुपपत्तत्वाद् भारमिति च श्रुतेर्वोढुमिति वाक्यशेषः । आहुतिभारं वोढुमशक्नोरित्यर्थः । तेन चाऽऽहुतिभारेण अयजः । महः महतो देवान् । हे वसो[१] प्रशस्य! धनवन्! वा ॥ ३ ॥

वेङ्कट० त्वम् अग्ने! पुराण[१] वायवे[४] आविः[५] अभवः, शोभनकर्मेच्छया विवस्वते । यद्वा[६] तस्मै[७] मातरिश्वा त्वामाजहार[८] । त्वयि होतरि देवैर्वृते महान्तं त्वां दृष्ट्वा द्यावापृथिव्यौ अकम्पेताम् । त्वं देवानां हविर्वहनभारं सोढवान् अयजः च महतस्तान् वासयितः[१] ॥ ३ ॥

मुद्गल० हे अग्ने[१] त्वम् मातरिश्वने प्रथमः मुख्यो भूत्वा वर्तसे अग्निर्वायुरादित्य इति वाक्यपेक्षया सर्वत्र मुख्यत्वावगमात् । तादृशस्त्वम् सुक्रतूया शोभनकर्मेच्छया विवस्वते परिचरते यजमानाय आविर्भव प्रकटो भव । तव सामर्थ्यं दृष्ट्वा रोदसी द्यावापृथिव्यौ अरेजेताम् अकम्पेताम् । होतृवूर्ये होतृवरणयुक्ते कर्मणि भारम् भरणम् 'अमृभ्णो ऊढवानसि' । हे वसो! निवासहेतो महः[१] महः पूज्यान् देवान् अयज इष्टवानसि ॥ ३ ॥

---

१-१ अत्रेतिहास—'सर्वमन्धं तम आसीत् । अथ मातरिश्वा सूक्ष्ममग्निमपश्यत् अथर्वा च ऋषिः । तत् पराशरो भरद्वाजश्च वक्ष्यति—'मथायदीम्', 'त्वामग्ने पुष्करादधि अथर्वा' त्रि[१] अ कु † विभृतो साम्ब ‡ तं साम्ब २-२ तदिहोच्यते—हे अग्ने! त्वम् आग्निमो वायवे आविरभवः । लिङि लोट् । शोभनकर्मेच्छया । लङर्थे ... । 'इल' (?) (पा ६,४,२) इति दीर्घत्व । ताथे आत् । सुक्रतूया शोभनयागादिकर्मेच्छया । मातरिश्वने च आविर्भूयानन्तरं विवस्वते च । 'रेजृ भयवेपनयोः' । अबिभीताम्, भयाद्वा अकम्पेताम् द्यावापृथिव्यौ होतृवूर्ये होतरि वृते त्वयि । यत्र त्वं होता वृतो वेदिमध्यस्थोऽदीप्यथाः, तदा रोदसी अपि अकम्पेताम् अयं दीप्तो आवां दहेदिति कम्पनौ, भयात् ... वा । किं पुनरन्ये । किञ्च अमृभ्णो । अत्रेतिहास त्रि[१] अ कु ¶ तत् किञ्च मूको †-† होतरि वृते होतृवूर्ये साम्ब १ प्रथम छ ४ मातरिश्वने छ ५ आविरभव आवि छ ६ यदा साम्ब ‡ अ[१] त्रि[१] तस्मै ७ सर्वे वि[१] ८ *अमर छ मा[१] त्रि[११]. ९-९ नास्ति वि मै[१].

त्वम॑ग्ने मन॑वे द्यामवाशयः पुरूरव॑से सुकृते सुकृत्त॑रः ।
श्वात्रेण यत् पित्रोर्मुच्य॑से पर्या त्वा पूर्वमनयन्नापरं पुनः ॥ ४ ॥

त्वम् । अग्ने । मन॑वे । द्याम् । अवाशयः । पुरूरव॑से । सुऽकृते । सुकृत्ऽत॑रः । श्वात्रेण । यत् ।
पित्रोः । मुच्य॑से । परि॑ । आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥ ४ ॥

स्कन्द० अत्रेतिहासमाचक्षते[1]—'स्वर्गकामो मनुरभिमधत्त पुरूरवाश्चैलः । ताभ्यामग्निः स्वर्गमद-दादिति' । '[2]तदेतदिहोच्यते । त्वम् हे अग्ने! मनवे तृतीयार्थे चतुर्थ्येषा । मनुना राज्ञा द्याम् अवाशयः वश कान्तौ । द्युलोकं कामितवान् । मनुं राजानं दिवं कामयमानं तत्प्रापणेन प्रयुक्तवान् इत्यर्थः । न च केवलेन मनुना । किं तर्हि । पुरूरवसे सुकृते इयमपि तृतीयार्थे एव चतुर्थी । पुरूरवसा च सुकृता शोभनानि कर्माणि कृतवता । सुकृत्तरः शोभनकर्मकृत्तरः । श्वात्रेण यत् । अत्रापीतिहासमाचक्षते—'तयोर्ज्वालामाली नामाग्निः प्रथमं मातरिश्वने आविरभवत् । ततो विवस्वते आविर्भूतः[3] । मातरिश्वा विवस्वतः सकाशात् पृथिव्यामानयदिति' । वक्ष्यति—'आ दूतो अग्निम्' ( ऋ ६,८,४ ) इति । '[3]तदेतेनाऽर्धर्चेनोच्यते—श्वात्रेण यत् पित्रोरिति । 'श्वात्रमिति क्षिप्रनाम' (या ५,३) । वायोरत्यन्तक्षिप्रत्वात् इह मातरिश्वनि वर्तते । मातरिश्ववचन एव वा सामर्थ्यात् श्वात्रशब्दः । तेन यत् आ पित्रोः मुच्यसे परि पितरावत्र द्यावापृथिव्यावभिप्रेते । मुच्यस इति लङर्थे लट् । परिशब्द उपरिभावे । द्यावापृथिव्योरुपर्यमुच्यथाः । यद्यपि ज्वालामाली मातरिश्वना पृथिव्या एव केवलाया उपर्यमुच्यत, न दिवः, तथापि साहचर्यादन्यतरसम्बन्धिनो विमोचनाय उभे प्रति व्यपदेशः आ त्वा पूर्वम् अनयन् आङत्र मर्यादायाम् । यदिति च यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ततः प्रभृति मर्यादया त्वां पूर्वमाहवनीयात्मना नीतवन्तः । के । सामर्थ्याद् यजमानाः । आ अपरम् मर्यादयैव अपरं गार्हपत्यात्मना । पुनःशब्दस्त्वङ्गीकृतवीप्सार्थो द्रष्टव्यः । पुनःपुनस्तत्र कर्मणी-त्यर्थः[3] । यदा हि[4] विवस्वतः सकाशात् मातरिश्वा पृथिव्यामानयत्, ततः प्रभृति त्वां यजमानाः कर्मसु त्रेधा व्यभजन्निति समस्तार्थः[5] ॥ ४ ॥

---

१. अत्रापीतिहासः वि[1] ख कु. २-२. एतदिहोच्यते । हे अग्ने त्वं मनुना राज्ञा द्यां द्युलोकं कामितवान् । मनुं राजानं दिवं कामयमान तत्प्रापणेन प्रयुक्तवान् । वश कान्तौ । 'हेतुमति च' ( पा ३,१,२६ ) इति णिच् । पुरूरवसा च सुकृता शोभनकर्माणि कृतवता शोभनकर्मकृत्तरः । के टार्थे सर्वः श्वात्रेण । अत्रापीतिहासः—यो ज्वालामालाग्निः प्रथमं मातरिश्वने विवस्वते च आविर्भूतः तम् वि[1] ख कु. ३-३. श्वात्रेणेत्यर्धर्चेन । अत्रापि 'क्षिप्रं मक्षु द्रुतु श्वात्रम्' इति क्षिप्रार्थत्वात् मातरिश्वनि वर्तते । तस्य वायोः अत्यन्तक्षिप्रत्वात् स एव श्वात्रः । तेन यत् यदा पित्रोर्मुच्यसे परि । पितरौ द्यावापृथिव्यौ । लङि लट् परिरुपरौ । द्यावापृथिव्योरुपरि अमुच्यथाः । यद्यपि ज्वालामालाग्निः मातरिश्वना केवलं पृथिव्या एवोपरि अमुच्यत, न दिवः, तथापि साहचर्यादुभे प्रति व्यपदेशः । यदा पृथिव्यां मुक्तवान् ततः प्रभृति मर्यादया त्वां पूर्वमाहवनीयात्मना निहितवन्तः यजमानाः । मर्यादयैवापरं गार्हपत्यात्मना पुनःपुनस्तत्र कर्मणि । पुनःशब्दस्त्वङ्गीकृतवीप्सार्थः ।- आङुभयत्रापि मर्यादार्थः वि[1] ख कु. ४. अपि साम्व; नास्ति वि[1] ख कु. ५. समष्टिः वि[1] ख कु.

वेङ्कट० त्वम् अग्ने! कथमयं[1] मनुरभ्युदयेन युक्त स्यादिति तस्मै स्वर्गमकासया[2]। यथा[3] पुरुर[वसे] च[4] त्व शोभनकर्मण कर्त्रे सुकृत्तम । क्षिप्र यदा[5] अरण्योस्त्वम् पार मुच्यसे तदानीमत्र[6] [त्वा] पूर्वम् अनयन् । पुन[7] च अपवृते कर्मणि अपरम् च कुर्वन्ति—'अयम् ते योनिर्ऋत्वियः' (ऋ ३,२९,१०) इति ॥ ४ ॥

मुद्गल० हे अग्ने! त्वम् मनवे मनोरनुग्रहार्थम् द्याम् द्युलोकम् अवाशय शब्दितवानसि पुण्यकर्मभि[:] साध्यो द्युलोक इति प्रकटितवानसि। सुकृते तव परिचरण कुर्वते पुरूरवसे 'एतन्नामकस्य राज्ञोऽनु[ग्र]हार्थम्' सुकृत्तर अतिशयेन शोभनकारी अभू । यत् यदा पित्रो अरण्यो श्वात्रेण क्षिप्रमथने[न] परि मुच्यस परितो मुक्तो भवसि । उत्पद्यसे इत्यर्थ । तदानीम् त्वा अरण्योरुत्पन्न त्वा[म्] पूर्वम् वेदे पूर्वदेशम् आ अनयन् आहवनीयत्वेन स्थापितवन्त । पुन पश्चात् अपरम् पश्चिम[प्र]देशम् आ अनयन् । गार्हपत्यरूपेण धारितवन्त इत्यर्थ ॥ ४ ॥

त्वम॑ग्ने वृष॒भः पु॑ष्टि॒वर्ध॑न॒ उद्य॑तस्रुचे भवसि श्र॒वाय्य॑ः ।
य आहु॑तिं॒ परि॒ वेदा॒ वष॑ट्कृति॒मेका॑यु॒रग्रे॒ विश॑ आ॒विवा॑ससि ॥ ५ ॥

त्वम् । अ॒ग्ने॒ । वृ॒ष॒भ । पु॒ष्टि॒ऽवर्ध॑न । उद्य॑तऽस्रुचे । भ॒व॒सि॒ । श्र॒वाय्य॑ । य । आऽहु॑तिम् । परि॑ । वेद॑ । वष॑ट्ऽकृतिम् । एक॑ऽआयु । अग्रे॑ । विश॑ । आ॒ऽवि॒वा॑ससि ॥ ५ ॥

स्कन्द० 'त्वम् हे अग्ने! वृषभ कामाना वर्षिता। दातेत्यर्थ । हविर्नयनद्वारेण वा वृष्टेरेव कर्ता। पुष्टिवर्धन वर्धयिता पुष्टे । उद्यतस्रुचे भवसि यागार्थं नित्यमुद्यता स्रुग् यस्य स उद्यत स्रुक्। षष्ठ्यर्थे चात्र चतुर्थी। यद्वा कामाना वृष्टेर्वा वर्षिता पुष्टश्च वर्धयिता भवसीत्यर्थ। श्रवाय्य श्रवणीय अत्यन्तोत्कृष्टगुण । कीदृश उद्यतस्रुक् । उच्यते—य आहुतिम् वषट्कृतिम् वषट्कार च परि वद। कर्मविधिज्ञ इत्यर्थं । एकायु इत्यादि। अत्रेतिहास[8]—'और्वशेय आयु र्गन्धर्वलोकादग्निमाहृत्याधत्त । सोऽस्य प्रथम देवविश पर्यचरत्। ततोऽन्येषामिति'। तदेव दुच्यते—एक आयु प्रथममाहर्ता यस्येत्येकायुस्त्वम्[10] अग्ने प्रथम देवविश आविवा ससि पर्यचर इत्यर्थं ॥ ५ ॥

वेङ्कट० त्वम् अग्ने! कामाना वर्षिता पुष्टेर्वर्धक[11] यजमानाय भवसि श्रवणीय । य[12] अग्नि स्वाहा कारहुत वषट्कारहुत च परित लभते मनुष्येभ्य इति परोक्ष । स त्वमग्ने! एकायु अविच्छिन्नायुरमृत[13] अग्र स्थित्वा मनुष्यान् परिचरसि । यद्वा बहूना प्रकाश कुर्वाण[14] ए[क] गमनस्त्व परिचरसीति[15] ॥ ५ ॥

---

1 कस्थय ए, कथमदात् वि[1] लप अ[1], कथय वि[1] 2 स्वर्गकामाय ए, स्वर्गागमया वि[2] अ[1], स्वर्गमनाय वि[2] लप 3 नास्ति साम्ब कु अ[1] वि[11] लप 4 नास्ति साम्ब कु 5 यद् ल वि[11] 6 °मेवा वि[2] लप 7 यद् पुन ए 8-8 नास्ति वि 9-9 हे अग्ने त्वं यदा कामाना वर्षिता दत्ते[...] । हविनयनद्वारेण वृष्टे कर्ता वा । पुष्टवर्धयिता च । यागार्थं नित्यं य स्रुवमुद्यमयति तस्य पुष्टेर्धयिता भवसि[...] भवसि । भवति श्रवणीयगुण । य आहुतीर्वषट्कार च सम परि वि जानाति । तस्योद्यतस्रुव । इति वि । एक [...] मुरि । अत्रेतिहास वि[1] अ कु 10 पूर्वस्यैका° साम्ब, यस्यैका° वि[1] अ कु 11 °वर्धने साम्ब, °र्धयिता° लप 12 नास्ति साम्ब कु 13 अवविच्छि° मूको 14 कुर्वन् साम्ब कु अ[1] लप 15 प्रका° ए वि[11] अ[1] कु साम्ब[1].

मुद्गल० हे अग्ने! त्वम् वृषभः कामानां वर्षिता पुष्टिवर्धनः यजमानस्य धनादिपोषाभिवृद्धिहेतुः उद्यतस्रुचे उद्धृतया स्रुचा[1] युक्ताय यजमानाय तदनुग्रहार्थम् श्रवाय्यः मन्त्रैः श्रवणीयो भवसि । यः यजमानः वषट्कृतिम् वषट्कारयुक्ताम् आहुतिम् परि वेद परितो जानाति । समर्पयतीत्यर्थः । एकायुः मुख्यायुस्त्वम् अग्ने प्रथमं तं यजमानम् विशः तदनुकूलाः प्रजाः आविवाससि सर्वतः[2] प्रकाशयसि ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये द्वात्रिंशो वर्गः ।

त्वम॑ग्ने वृजि॒नव॑र्तनिं॒ नरं॒ सक्म॑न्पिपर्षि वि॒दथे॑ विचर्षणे ।
यः शूर॑साता॒ परि॑तक्म्ये॒ धने॑ द॒भ्रेभि॑श्चि॒त्सम॑ृता॒ हंसि॒ भूय॑सः ॥ ६ ॥

त्वम् । अ॒ग्ने॒ । वृ॒जि॒नऽव॑र्तनिम् । नर॑म् । सक्म॑न् । पि॒प॒र्षि॒ । वि॒दथे॑ । वि॒ऽच॒र्ष॒णे॒ । यः ।
शूर॑ऽसाता । परि॑ऽतक्म्ये । धने॑ । द॒भ्रेभिः॑ । चि॒त् । सम्ऽऋ॑ता । हंसि॑ । भूय॑सः ॥ ६ ॥

स्कन्द० [3]त्वम् हे अग्ने! वृजिनवर्तनिम् नरम् कुटिलवर्तनिम् । वर्तनिर्मार्गः । कुटिलमार्गम् । अन्यासु चेष्टासु सम्यक्चेष्टितमित्यर्थः । नरम् मनुष्यम् । हे सक्मन्! षच सेवायाम् । सेव्य! सेवितः! वा देवानाम् पिपर्षि पालयसि । क्व । विदथे यज्ञे । हे विचर्षणे विश्वद्रष्टः! । यः त्वं कीदृक् । उच्यते । यः शूरसाता सङ्ग्रामनामैतत् ( तु. निघ २,१७ ) । सङ्ग्रामे । परितक्म्ये धने †'तकति, दीयति' (निघ २,१४) इति† गतिकर्मा । 'निमित्तात् कर्मसंयोगे' ( पावा २,३,३६ ) इत्येवं चैषा सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा । परिगन्तव्ये धने निमित्ते सङ्ग्रामे । यद् प्राप्तव्यं धनं तदर्थमित्यर्थः । दभ्रेभिः चित् समृता दभ्रशब्दोऽल्पनाम ( तु. निघ ३,२ ) । समृतिः सङ्गतिः । अल्पैरपि शत्रुभिः सङ्गतौ भयादसङ्गतान् दूरस्थानप्यन्यान् गत्वागत्वा हंसि भूयसः शत्रून् । देवतामाहात्म्या-न्मध्यमकर्मणैषाऽग्नेः स्तुतिः[3] । मध्यम एवाग्निः ॥ ६ ॥

वेङ्कट० त्वम् अग्ने! युद्धेऽशोभनमार्गम् नरम् पारयसि गृहे च विद्रष्टः! । यः त्वं युद्धे परिगन्तव्ये सति धने क्षुद्रैः अपि सङ्गतान् महतोऽपि स्तोतुः शत्रून् हंसि ॥ ६ ॥

मुद्गल० हे विचर्षणे! विशिष्टज्ञानयुक्त! अग्ने! त्वम् वृजिनवर्तनिम् विप्लुतमार्गं सदाचाररहितम् नरम् पुरुषम् सक्मन् सचनीये समवेतुं योग्ये विदथे कर्मणि पिपर्षि पालयसि । सत्कर्मानुष्ठानं करोषी-त्यर्थः । यः त्वम् परितक्म्ये परितो गन्तव्ये धने धनवच्छूराणां प्रियतमे शूरसाता शूरैः सम्भजनीये युद्धे दभ्रेभिश्चित् अल्पैरपि शौर्यरहितैः पुरुषैः समृता सम्यग्योद्धुं प्राप्ते सति

१. नास्ति त्रि. २. सर्वत्र वि. ३-३. हे अग्ने त्वं कुटिलमार्गं नरं पिपर्षि विदथे । हे सक्मन् षच सेवायाम् । 'अन्येभ्योऽपि'' ( पा ३,२,७५ ) इति मनन्तत्वात् । देवाना सेवितः सेव्य वा । विचर्षणे चर्षं दर्शने । विश्वद्रष्टः । 'अवर्ध वृजिन रिप्रम्' इति पापे । अन्यास्वपि चेष्टासु सम्यक्चेष्टितं वृजिनवर्तनिम् । पॄ पालनपूरणयोः । पालयसि यज्ञगृहे । 'धसरं विदथः' इति गृहे । यस्त्वं शूरसाता संग्रामे परिगन्तव्ये धने निमित्ते । 'निमित्तात् कर्मसंयोगे' इति ज्ञिः । संग्रामे यत्प्राप्यं धन तन्निमित्तम् दभ्रैः संगतौ भूयसो हंसि । दभ्रमल्पम् । ऋ गतौ । अल्पसंख्यैः शत्रुभिः संगतौ भयादसंगतान् दूरस्थानपि अन्यांश्च गत्वा बहून् हंसि । देवतामाहात्म्यान्मध्यमकर्मणा स्तुतिः वि' अ कु.. †-† तकतीयन्तीति मूको.

तदनुग्रहार्थम् भूयसः प्रौढान् शत्रून् हंसि मारयसि । ईदृशस्तव महिमेत्यर्थः ॥ ६ ॥

त्वं तम॑ग्ने अमृतत्व उ॑त्तमे मर्तं॑ दधासि श्रव॑से दि॒वेदि॑वे ।
यस्ता॑तृषाण उ॒भया॑य जन्म॑ने मय॑ः कृणोषि॒ प्रय॒ आ च॑ सू॒रये॑ ॥ ७ ॥

त्वम् । तम । अ॒ग्ने॒ । अ॒मृ॒त॒ऽत्वे । उ॒त्ऽत॒मे । मर्त॑म् । द॒धा॒सि॒ । श्रव॑से । दि॒वेऽदि॑वे ।
यः । त॒तृ॒षा॒णः । उ॒भया॑य । जन्म॑ने । मय॑ः । कृ॒णोषि॑ । प्रय॑ः । आ । च॒ । सू॒रये॑ ॥ ७ ॥

स्कन्द० 'यस्तातृषाण इति श्रुतस्य यच्छब्दस्याभिनिर्देशार्थत्वात् त्वंसमानाधिकरणतच्छब्दश्रुतेश्च तद्विषयो योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः त्वां परिचरति तम् त्वम् हे अग्ने! अमृतत्वे उत्तमे देवत्वे उत्कृष्टे मर्तम् मनुष्यम् दधासि स्थापयसि । न चामृतत्व एव । किं तर्हि । श्रवसे 'श्रवः' (निघ २,७) इत्यन्ननाम वा । कीर्तिपर्यायो वा । सप्तम्यर्थे चतुर्थी । अन्नादीनां चान्यतमे । न च कदाचित् । किं तर्हि । दिवेदिवे अहन्यहनि । सार्वकालमित्यर्थः । यस्त्वां परिचरति, तं देव! त्वं परलोके प्रापयसि देवत्वम्, इह लोकेऽपि सार्वकालमन्नादीनामन्यतमभित्यर्थः‡ । अथवा श्रव इति कीर्तिपर्यायः । स्वार्थ एव च तादर्थ्ये चतुर्थी । यस्त्वां परिचरति तं देवत्वं प्रापयसीत्यर्थः । किमर्थम् । श्रवसे दिवेदिवे । तस्यैवात्मनो§ वा कीर्त्यै सार्वकालमिति । यः कीदृशः । उच्यते— तातृषाणः स्तुतिहविर्भिस्तृष्णया बाध्यमानः । उभयाय जन्मने सप्तम्यर्थे चतुर्थ्येषा । उभयस्मिन् जन्मनि । इह च परत्र च । मयः कृणोषि 'मयः' (निघ ३,६) इति सुखनाम । करोतिरपि सूरय इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । सुखं ददासि । प्रयः आ च प्रय इत्यपठितमन्यन्नाम । आङ् मर्यादायाम् मयःशब्दात् परो द्रष्टव्यः । अन्नं च मर्यादया । कस्मै । सूरये स्तोत्र[1] ॥ ७ ॥

वेङ्कट० त्वम् तम् अग्ने! अमृतत्वे उत्कृष्टे मनुष्यं निदधासि दिवेदिवे अन्नाय । यः त्वम् सूरेः स्तोतुः उभयविधाय जन्मने तृष्यन्नुभयं करोषि[२] । सुखं च अस्य भूयात् अन्नं चास्ति-त्युभयोरुत्पत्तिमिच्छन्नुभयं[३] करोषीति ॥ ७ ॥

मुद्गल० हे अग्ने! त्वम् तम् मर्तम् तथाविधं त्वत्सेविनं मनुष्यम् दिवेदिवे प्रतिदिनम्[४] श्रवसे अन्नार्थम् उत्तमे अमृतत्वे उत्कृष्टे मरणरहिते पदे दधासि, यः यजमानः उभयाय[५] जन्मने[६] द्विविधजन्मार्थम् । द्विपदां चतुष्पदां च[७] लाभायेत्यर्थः । ततृषाणः अतिशयेन तृष्णायुक्तो[८] भवति । तस्मै सूरये अभिज्ञाय[९] यजमानाय मयः[१०] सुखम् प्रयः च अन्नमपि[१०] आ कृणोषि सर्वतः करोषि ॥ ७ ॥

---

1-1. हे अग्ने यस्त्वा परिचरति त्वं देवत्वे उत्कृष्टे तं मनुष्यं धारयसि कीर्त्यै अन्नाय वा अहन्यहनि सर्वकालमित्यर्थः । के सौ । यस्त्वा पूजयति तमिह लोके अन्नादीनि दत्त्वा धारयसि, परलोके देवत्वं च । अथवा श्रव. कीर्तिः । स्वार्थ एव के तादर्थ्ये । यस्त्वा स्तौति तं देवत्वं प्रापयसि अन्नादीन्यपि इह [illegible] वा तस्य वा यशसे सर्वकालमिति यस्त्वं स्तुतिहविर्भिः तृष्णया बाध्यमानः तृष तृष्णायाम् । तुजादित्वाद् वा अभ्यासदीर्घः । उभयस्मिन् जन्मनि मयः प्रयश्च मर्यादया विदुषे ददासि । 'सुम्नं शर्म मयः सं (१कं) शम्' इति सुखे । 'स्वधा पयः प्रयः मिनम्' इत्यन्ने । आङ् मर्यादार्थः । के सौ उभयाय जन्मने इति । इह च परत्र च अन्नं सुखं च सूरये स्तोत्रे कृणोषि । कृञ् गत्यर्थसाम् तानेत्र वि[॰] म कु. † 'तमीमन् मूको. ‡ °तमादित्यर्थः मूको. § वदंसे° मूको.
२. °त्युभयेन° वि°; °त्यनमयं साम्ब[॰]. ३. प्रति मूको. ४. उभयथा वि. ५. नास्ति वि. ६. नास्ति मूको. ७. तृष्णायुक्त सु° मूको. ८. 'मानय त्रि मै'. ९. नास्ति मै°. १०. °मपि वि मै°.

त्वं नो॑ अग्ने स॒नये॒ धना॑नां य॒शसं॑ का॒रुं कृ॑णुहि॒ स्तवा॑नः ।
ऋ॒ध्याम॒ कर्मा॒पसा॒ नवे॑न दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥ ८ ॥

त्वम् । नः॒ । अ॒ग्ने॒ । स॒नये॑ । धना॑नाम् । य॒शस॑म् । का॒रुम् । कृ॒णु॒हि॒ । स्तवा॑नः । ऋ॒ध्याम॑ । कर्म॑ । अ॒पसा॑ । नवे॑न । दे॒वैः । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । प्र । अ॒व॒त॒म् । नः॒ ॥ ८ ॥

स्कन्द० 'नः इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । त्वम् मां हे अग्ने! सनये लाभाय धनानाम् यशसम् कारुम् 'यशः' (निघ २,७) इति अन्ननाम । हविर्लक्षणेनान्नेन तद्वन्तं स्तोतारं च कृणुहि कुरु । नित्यं यष्टारं कुर्वित्यर्थः । स्तवानः स्तूयमानः । अथवा न इति षष्ठी कारुमित्येतेन सम्बध्यते । यशसमित्यपि यशःशब्दः कीर्तिपर्यायः । अस्माकं सम्बन्धिनमन्तरात्मानं यजमानं वा स्तोतारं धनलाभार्थं यशस्विनं कुरु स्तूयमान' । किञ्च ऋध्याम त्वत्प्रसादादेवर्द्धिं प्राप्नुयाम । किञ्चाग्निप्रसादादेव यागाख्यं कर्म इदम् अपसा कर्मणा पालनाख्येन नवेन अन्यैरकृतपूर्वेण देवैः सहयोगलक्षणैषा तृतीया । अन्यैरपि देवैः सह हे द्यावापृथिवी ! प्र अवतम् प्रकर्षेण अवतं रक्षतम् नः अस्माकं स्वभूतम् । अग्निप्रसादादेव युवामपि प्रावतमित्येवं द्यावापृथिव्योर्गुणभावादेवाग्नेयत्वस्याविरोधः[1] ॥ ८ ॥

वेङ्कट० त्वम् अग्ने! अस्माकं लाभाय धनानाम् यशस्विनं स्तोतारं पुत्रं कुरु स्तूयमानः । प्राप्नुयाम वयं कर्म यज्ञम् नवेन स्तुतिलक्षणेनानेन[2] कर्मणा । तानस्मान् स्तुतिप्रवृत्तान् देवैः सह द्यावापृथिवी! रक्षतम् ॥८॥

मुद्गल० हे अग्ने! स्तवानः स्तूयमानः त्वम् नः अस्माकम् धनानाम् सनये दानार्थम् यशसम् यशोयुक्तम् कारुम् कर्मणां कर्तारं पुत्रम् कृणुहि कुरु । नवेन नूतनेन अपसा प्राप्तेन त्वद्दत्तेन पुत्रेण कर्म यागदानादिरूपम् ऋध्याम । हे द्यावापृथिवी! उभे देवते! देवैः अन्यैः सह नः[3] अस्मान् प्रावतम् प्रकर्षेण रक्षतम् ॥ ८ ॥

त्वं नो॑ अग्ने पि॒त्रोरु॒पस्थ॒ आ दे॒वो दे॒वेष्व॑नवद्य॒ जागृ॑विः ।
त॒नू॒कृद्बो॑धि॒ प्रम॑तिश्च का॒रवे॒ त्वं क॑ल्याण॒ वसु॒ विश्व॒मोपि॑षे ॥ ९ ॥

त्वम् । नः॒ । अ॒ग्ने॒ । पि॒त्रोः । उ॒पऽस्थे॑ । आ । दे॒वः । दे॒वेषु॑ । अ॒न॒व॒द्य॒ । जागृ॑विः । त॒नू॒ऽकृत् । बो॒धि॒ । प्रऽम॑तिः । च॒ । का॒रवे॑ । त्वम् । क॒ल्या॒ण॒ । वसु॑ । विश्व॑म् । आ । ऊ॒पि॒षे॒ ॥ ९ ॥

---

1-1. हे अग्ने त्वं मा धनाना सनये यशस्वन्तं कारुं कुरु स्तूयमानः । सानिर्लाभः । 'अन्न पीवो यशः' इत्यन्ने । हविर्लक्षणान्नयुक्तम् । 'स्तोतारः कारव.' । स्तोतारं यष्टारं च कुरु इत्यर्थः । न इति शसि । अमि वा । यशः कीर्तिः । अस्माकमन्तरात्मान यजमान वा स्तोतारं धनलाभार्थं यशस्विन कुरु स्तूयमानः । किञ्च ऋध्याम त्वत्प्रसादेन वृद्धिं प्राप्नुयाम । इदं कर्म च यागाख्यम् । पालनाख्यकर्मणा अपसा नवेन अन्यैरकृतपूर्वेण अन्यैरपि देवैः सह हे द्यावापृथिव्यौ प्रकर्षेण रक्षतं युवामप्यग्निप्रसादादस्मत्कर्म । हे अग्ने धनलाभार्थं मां यशस्विनं स्तोतारं च कृत्वा मत्स्तुत्या प्रसन्नः तत्कर्म देवैर्द्यावापृथिवीभ्यां युक्तः पाहीत्यर्थः वि[1] अ कु. † नास्ति मूको. २. °णे अनेन कु. ३. नास्ति वि मै[1].

स्कन्द० [1]त्वम् नः अस्माकं स्वभूते पित्रोः उपस्थे पितरौ द्यावापृथिव्यौ । उपगम्य ऋत्विग्यजमाना-स्तिष्ठन्ति अस्मिन् उपस्थीयन्ते वा देवता इत्युपस्थो यज्ञः । क पुनर्द्यावापृथिव्योर्यज्ञेन सम्बन्धः । द्युस्थानां देवानामर्थाय पृथिव्यां यज्ञः क्रियते । कीदृशोऽहम् । उच्यते । देव' देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये दानादिगुण' । हे अनवद्य! प्रशस्य! जागृविः जागरण-शीलश्च सर्वकार्येष्वप्रमादी चेत्यर्थः । देवेष्वित्येतज्जागृविरित्येतेन सम्बध्यते । देवेषु चाप्रमादी । देवांश्च यष्टुमुत्साहीत्यर्थः । तनूकृत् अशितपीतरसादिभावापादनेन शरीराणां च कर्ता प्रमति च प्रकृष्टज्ञानश्च । किं करवाणि । उच्यते । बोधि बुध्यस्व । किम् । सामर्थ्यात् स्तुती । अस्मदीये द्युस्थानां देवानामर्थाय पृथिव्यां कृते यज्ञे स्तुती' शृण्वित्यर्थः । किञ्च कारवे स्तोत्रे त्वम् हे कल्याण! स्तोतॄणामुपरि भद्र! सानुग्रह! कमनीय! वा वसु धनम् विश्वम् बहुना मैतत् (द्र. निघ ३,१) । वहु आ ऊपिथे वपेरिदं रूपम् । आवपसि प्रक्षिपसि ददासीत्यर्थः [1] ॥ ९ ॥

वेङ्कट० त्वम् अस्माकम् अनवद्य! अग्ने[2]! द्यावापृथिव्यो' [3]उपस्थे वेद्याम्[3] आ सीद । देवः देवानां मध्ये जागरणशीलः स. त्वम् स्तोत्रे अज्ञाना कर्ता भवामीति बुध्यस्व । भव च तस्मै प्रमति । त्वम् हि विश्वम् धनम् कारवे आ वपसीति ॥ ९ ॥

मुद्गल० हे अनवद्य! दोषरहित[4] अग्ने! देवेषु सर्वेषु मध्ये जागृवि जागरूकः त्वम् पित्रोः मातापितृ-रूपयोर्द्यावापृथिव्यो उपस्थे समीपस्थाने वर्तमान' सन् न अस्माकम् तनूकृत् पुत्ररूप-शरीरकारी भूत्वा बोधि बुध्यस्व अनुगृहाणेत्यर्थः । तथा कारवे कर्मकर्त्रे यजमानाय प्रमति च अनुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः । हे कल्याण! मङ्गलरूपाग्ने[5]! त्वम् विश्वम् वसु सर्वमपि धनम् आ ऊपिषे यजमानार्थम् आवपसि ॥ ९ ॥

त्वम॑ग्ने॒ प्रम॑ति॒स्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् ।
सं त्वा॒ रायः॑ श॒तिनः॒ सं स॑ह॒स्रिणः॑ सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥ १० ॥

त्वम् । अ॒ग्ने॒ । प्रऽम॑तिः । त्वम् । पि॒ता । अ॒सि॒ । नः॒ । त्वम् । व॒यः॒ऽकृत् । तव॑ । जा॒मयः॑ । व॒यम् ।
सम् । त्वा॒ । रायः॑ । श॒तिनः॑ । सम् । स॒ह॒स्रिणः॑ । सु॒ऽवीर॑म् । यन्ति॑ । व्र॒त॒ऽपाम् । अ॒दा॒भ्य॒ ॥ १० ॥

स्कन्द० [6]त्वम् हे अग्ने! प्रमति प्रकृष्टज्ञान । त्वम् पिता असि न पितृकार्यकरत्वात्† । अथवा पितृशब्दोऽयं साक्षात् पारम्पर्येणेत्यस्य भेदस्याविवक्षितत्वात्‡ पितामहे प्रयुक्त । त्वं पितामहोऽस्माकमित्यर्थः[6] ।

1-1. त्वमस्मदीये उपगम्य ऋत्विग्यजमानास्तिष्ठन्ति अस्मिन् उपस्थीयन्ते वा देवा इति उपस्थो यज्ञः । हे अग्ने अनवद्य निर्दोष पित्रोर्द्यावापृथिव्योर्यज्ञे ताभ्यां यजनीयानां देवानां यज्ञे त्वं देवानां मध्ये दाता जागृविश्च सर्वकार्येषु अप्रमादी । देवेष्वप्रमत्त देवांश्च यष्टुमुत्साहीति वा । निर्धारणे वा अधिकरणे वा सुप् । तनूकृच्च अशितपीतरसानां भावापादनेन शरीराणां कर्ता च । हे कल्याण कारवे बोधि । वसु विश्वमावपसि च । प्रमतिः प्रकृष्टज्ञानस्त्वं द्युस्थानां देवानामर्थाय अस्मदीये वा स्तुतय ता' श्रुत्वा बुध्यस्व । स्तोतॄणामुपर्युपरि भद्र सानुग्रह कमनीय वा स्तोतृभ्यो बहु धनं ददासि दद [illegible] च देहि वि[०] अ कु. 2. नास्ति शाम्दं कु. 3-3. नास्ति वि[०]. 4. नास्ति वि[०]. 5-5 हे अग्ने त्वं प्रकृष्टज्ञान । त्वं पितृकार्यकरत्वात् न पितासि । पितेव पितामहः वि[०] अ कु. † न वि[०] मूको. ‡ भेदस्याविवक्षितत्वात् मूको.

[1]अग्नेः पुत्रोऽङ्गिराः, अङ्गिरसो हिरण्यस्तूपः । त्वम् वयस्कृत् पाकद्वारेणान्नानां कर्ता । दानार्थो वा करोतिः । स्तोतुरन्नानां दातेत्यर्थः । तव जामयः सजातीया वयम् पौत्रत्वात् । किञ्च सम् त्वा समित्युपसर्गो यन्तीत्याख्यातेन सम्बन्धयितव्यः । सम् यन्ति सम्यग् गच्छन्ति त्वाम् । तव स्वभूतं मां संप्रतिपद्यन्त इत्यर्थः । कानि । रायः धनानि । कियन्ति । शतिनः शतसङ्ख्यावन्ति । न च शतसङ्ख्यावन्त्येव केवलानि । सहस्रिणः सहस्रसङ्ख्यावन्ति च सम् यन्ति । कीदृशम् । उच्यते । सुवीरम् वीरो विक्रान्तः । यः सुष्ठु वीरः, शोभना वा यस्य सम्बन्धिनः । केन सम्बन्धेन । सामर्थ्यात् स्तोतृतया । स सुवीरः, तम् सुवीरम् । व्रतपाम् कर्मणां पालयितारम् । हे अदाभ्य! अहिंस्य[1]! ॥ १० ॥

वेङ्कट० [2]त्वम् अग्ने[3]! प्रकृष्टमतिः । त्वम् पिता इव च भवसि अस्माकम्[1] । त्वम् अन्नस्य कर्ता । तव बन्धवः[4] वयम् । सङ्गच्छन्ते त्वां शतसहस्रसंख्याः रायः शोभनवीरं[5] कर्मणां रक्षितारम् अदाभ्य! ॥ १० ॥

मुद्गल० हे अग्ने! त्वम् प्रमतिः अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोऽसि । तथा त्वम् नः अस्माकम् पिता पालकः असि । तथा त्वम् वयस्कृन् आयुष्यप्रदोऽसि । वयम् अनुष्ठातारः तव जामयः बन्धवः । हे अदाभ्य! केनापि अहिंसनीय! अग्ने! सुवीरम् शोभनपुरुषयुक्तम् व्रतपाम् कर्मणः पालकम् त्वा त्वाम् शतिनः शतसंख्यायुक्ताः रायः धनानि सम् यन्ति सम्यक् प्राप्नुवन्ति । तथा सहस्रिणः सहस्रसंख्याकाः रायः सम् यन्ति ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये त्रयस्त्रिंशो वर्गः ।

त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् ।
इळा॑मकृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ॥ ११ ॥

त्वाम् । अ॒ग्ने॒ । प्र॒थ॒मम् । आ॒युम् । आ॒यवे॑ । दे॒वाः । अ॒कृ॒ण्व॒न् । नहु॑षस्य । वि॒श्पति॑म् । इळा॑म् । अ॒कृ॒ण्व॒न् । मनु॑षस्य । शास॑नीम् । पि॒तुः । यत् । पु॒त्रः । मम॑कस्य । जाय॑ते ॥ ११ ॥

स्कन्द० अत्रेतिहासमाचक्षते[6]—'उर्वश्यामुत्पन्नः पुरूरवसः पुत्र आयुः नाम[7]' । तं कदाचिदसुरैरुपद्रूयमाणा देवा अब्रुवन्—जह्येनानसुरानिति । सोऽब्रवीत्—सेनापतिर्मे युष्माकमेको भवत्विति । तस्य देवा अग्निं सेनापतिमकुर्वन् तथा नहुषस्य' । तदेतदनेनार्धर्चेनोच्यते[8]—हे अग्ने! त्वाम् प्रथमम्

---

१-१. त्वत्पुत्रोऽङ्गिराः । तत्पुत्रोऽहमिति । त्वं वयस्कृत् अन्नकृत् । 'चनो दधिष्व पचतोत' इत्यत्र । तण्डुलादि पचसीत्यर्थः । कृञ् दाने । स्तोतॄणां दाता अन्नानां वा । तव सजातयो वयं पौत्रत्वात् । किञ्च सम् यन्ति त्वा त्वदीयं रायः शतसहस्रसंख्यायुक्ताः अत्यर्थं बहवः । सुष्ठु वीरः विक्रान्तः । शोभना वा वीरा यस्य संबन्धिनः । केन संबन्धेन । सामर्थ्यात् स्तोतृत्वेन । सः सुवीरः तम् । 'वृत व्रतम्' इति कर्मणि । कर्मणां पालयितारम् । हे अहिंस्य । दम्भु हिंसायाम् । तव स्वभूतं मा संप्रतिपद्यन्ते रायः वि[1] अ कु. २-२. नास्ति वि[2]. ३. अस्मान् वि[2]. ४. बान्धवाः साम्ब[1,2] कु. ५. शोभनं वीरं कु साम्ब. ६. °दासः वि[1] अ कु. ७. नास्ति वि[1] अ कु. ८. तदनेनार्ध° वि[1] अ कु.

उत्कृष्टम्। 'क्रियाविशेषणं वा प्रथमशब्द । प्रथमम् अग्ने आयुम् एतेर्गत्यर्थस्येदं रूपम्। असुरान् प्रति गन्तारम्। आयवे षष्ठ्यर्थे चतुर्थ्येषा । आयो राज्ञ । देवा अकृण्वन् कृतवन्त । नहुषस्य[१] विश्पतिम् मनुष्यपतिमित्यर्थ । किञ्च इळाम् अकृण्वन् इति[२] । अत्रापीतिहास —'मनु प्रजाकामो ऽग्नावाहुतिमजुहोत्[३] । अग्निमेवेळारूपिणं[४] कृत्वा प्रायच्छन्[५] । एषा ते सर्वान् कामान् दास्यतीति[६] । सा मनुरन्वशादिदमिदं च मे कुर्विति । सा तस्मै 'सर्वमकरोत्। पुरूरवसम्[६] ऐलं पुत्रमजनयदिति । "तदेतदनयार्धर्चेनोच्यत—त्वामेव इळाम् अकृण्वन् मनुषस्य मनुष्यस्य शासनीम् शासनीया वशवर्तिनी मित्यर्थ । कदा । पितु यत् यदा पुत्र पुरूरवा नाम ममकस्य मामकस्य मदीयस्याग्नेरिळाया जायते। एत्यर्थेऽयं लट्। अजायत । इळाया अपि पुत्र पुरूरवा । इळारूपी चाग्निरेव । तेन योऽस्या पुत्र सोऽग्नेरेव पुत्र । अग्निश्च हिरण्यस्तूपस्य पिता । पितृकार्यकरत्वात् पितामहो वा पितेति व्यपदिश्यत इति व्याख्यातम्। अत उपपन्नमेतत्। मदीयस्य पितुरग्नेरिळारूपिणो यदा पुत्र पुरूरवा नामाजायतेति[†]" ॥ ११ ॥

वेङ्कट० त्वाम् अग्ने! पूर्वम् आयुम् अकृण्वन् आयवे[८] मनुष्याय पुरूरवसे। पुरूरवस पुत्र आयु । तथा[९] देवा अकृण्वन् नहुषस्य च राज्ञ [१०]"विश्पतिम् नाम पुत्रम्[१०]" । तथा मनोश्च त्वाम्[११] इळाम् नाम दुहितरम् अकृण्वन् । या जाता सती पितरम् मनुम्[१२] अन्वशात्[१३] । यज्ञ[१४] प्रयाजानुयाजयोर्मध्ये [१५]"मामवकल्पय, मया[१५] सर्वानेव कामान् प्राप्स्यसीति[१६] । यदा ममकस्य पितु अङ्गिरस पुत्र जायते तदानीं तम् च त्वामकृण्वन्नङ्गिरसामेकमिति ॥ ११ ॥

मुद्गल० हे अग्ने! त्वाम् प्रथमम् पुरा देवा आयवे आयो मनुष्यरूपस्य नहुषस्य एतन्नामकस्य राजविशेषस्य आयुम् मनुष्यरूपम् विश्पतिम् सेनापतिम् अकृण्वन् कृतवन्त । तथा मनुषस्य मनो इळाम् एतन्नामधेयां पुत्रीम् शासनीम् धर्मोपदेशकर्त्रीम् अकृण्वन् कृतवन्त । यत् यदा ममकस्य मदीयस्य हिरण्यस्तूपसम्बन्धिन य पिता अङ्गिरा तस्य पितु पुत्र जायते तदानीं हे अग्ने! त्वमेव पुत्ररूप आसीरिति शेष ॥ ११ ॥

---

१ १ अग्र इति वा क्रियाविशेषणम्। एण् गतौ। अस्माद् औणादिक । 'छन्दसीण' (पाउ १,२) इति । असुरान् प्रति गन्तारं त्वां देवा आयवे नहुषस्य च विश्पतिम् अकुर्वन्। इति वे । आयोर्नहुषस्य च सेनापतिं चक्रु । किञ्च इळाम वि[१] अ कु २ १ "मा नावाहु" साम्प[१] वि[१] अ कु, "जात मनोनाहुतीम" साम्प[११] ३ "ग्नेरे" साम्प[१] ४ "रूप् मूको ५ ददातीति वि[१] अ कु ६-६ सर्वमक × × × सम् साम्प, नास्ति वि[१] अ कु ७-७ तदनेनोच्यते—त्वामेवेळाम् अकुर्वन् मनुष्यस्य वशवर्तिनीम् । मनुषस्तुमशासत ' इति मनुष्ये । शासनेन वशवर्त्ता साध्येन । करोनदिति । पितुर्यत् पुत्र पुरूरवा नाम मदीयस्य अग्ने इळाया जायत । 'तवकममकावेकवचने (पा ४,३,३) इति अणि परतके मामक । मामक मदीय ममक इत्यमे पर्याया । इळारूपिणोऽग्नेरेव पुत्र पुरूरवा । अग्निर्हिरण्यस्तूपपितामह । पितृकारकत्वात् पिता वा इति व्याख्यातम् । अत उपपन्नमतत् । मम[१] पितु प्रेरितारूपिण यत पुत्र पुरूरवा नाम अजायत वि[१] अ कु † नास्ति मूको ‡ "माप्रेरणा" मूको ८ नास्ति वि[१] ९ तत्र कु १०-१० विश्पतिनाम पुत्र वि[१] अ[१] ११ त्वाम् साम्प[१], १२ नास्ति एवं १३ अन्वशात् अ[१] ए कु १४ यज्ञ[१] ल १५ मामवकल्पयत् तया कु १६ प्राप्स्य[१] कु

त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य ।
त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते ॥ १२ ॥

त्वम् । नः॒ । अ॒ग्ने॒ । तव॑ । दे॒व॒ । पा॒युऽभिः॑ । म॒घोनः॑ । र॒क्ष॒ । त॒न्वः॑ । च॒ । व॒न्द्य॒ । त्रा॒ता । तो॒कस्य॑ । तन॑ये । गवा॑म् । अ॒सि॒ । अनि॑ऽमेषम् । रक्ष॑माणः । तव॑ । व्र॒ते ॥ १२ ॥

स्कन्द० [1]'त्वम् नः अस्मान् हे अग्ने! तव योग्यैः हे देव! पायुभिः पालनैः मघोनः मघवतः हविर्लक्षणेन धनेन धनवतः । हविष्मतः सत[1] इत्यर्थः । रक्ष त्रायस्व । न चास्मानेव केवलान् । †किं तर्हि† । तन्वः च शरीराणि च । कस्य । सामर्थ्यादस्मत्पुत्रस्य पौत्रस्य च । अस्मान् पुत्रान् पौत्रांश्चेत्यर्थः । हे वन्द्य! स्तुत्य! । किं कारणम् । उच्यते । त्राता तोकस्य तनये षष्ठ्यर्थे सप्तम्येषा । द्वयोश्चानयोरपौनरुक्त्यायापत्यनाम्नोः पुत्रविषयमेकं पौत्रविषयकमन्यत् । पुत्रस्य पौत्रस्य च इत्यर्थः[1] । [2]गवाम् च त्राता Sरक्षिता असि त्वम्S निमेषवर्जितं यत्नेन परिरक्षन् तव व्रते यागकर्मणि व्यवस्थितानां च यजतां पुत्रपौत्राणां गवां च रक्षिता असि त्वम्[2] ॥ १२ ॥

वेङ्कट० त्वम् अस्मान् अग्ने! तव देव! रक्षणैः हविष्मतः रक्ष पुत्रान् च वन्द्य! । त्वं हि[3] पुत्रस्य पुत्रेऽपि गवाम् रक्षकः भवसि त्वदीये[4] कर्मणि प्रवृत्तं मनुम् अनवरतम् रक्षमाणः ॥ १२ ॥

मुद्गल० हे वन्द्य! वन्दनीय! अग्ने! देव! त्वम् तव पायुभिः त्वदीयैः पालनैः मघोनः धनयुक्तान् नः अस्मान् रक्ष । तथा तन्वः च तनूः पुत्रदेहानपि रक्ष । तोकस्य अस्मदीयस्य पुत्रस्य यः तनयोऽस्मत्पौत्रादिः तव व्रते त्वदीये कर्मणि अनिमेषम् निरन्तरम् रक्षमाणः सावधानो वर्तते, तस्मिन् तनये या गावः सन्ति तासाम् गवाम् त्राता रक्षकः असि । ईदृशस्य तव अस्मद्रक्षणे किमु वक्तव्यमित्यर्थः ॥ १२ ॥

त्वम॑ग्ने॒ यज्य॑वे पा॒युरन्त॑रोऽनिष॒ङ्गाय॑ चतुर॒क्ष इ॑ध्यसे ।
यो रा॒तह॑व्योऽवृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तम् ॥ १३ ॥

त्वम् । अ॒ग्ने॒ । यज्य॑वे । पा॒युः । अन्त॑रः । अ॒नि॒ष॒ङ्गाय॑ । च॒तुः॒ऽअ॒क्षः । इ॒ध्य॒से॒ । यः । रा॒तऽह॑व्यः । अ॒वृ॒काय॑ । धाय॑से । की॒रेः । चि॒त् । मन्त्र॑म् । मन॑सा । व॒नोषि॑ । तम् ॥ १३ ॥

स्कन्द० [5]'त्वम् हे अग्ने! यज्यवे तादर्थ्ये एषा चतुर्थी । यष्टुरर्थाय । पायुः स्तोतॄणां यजमानां च पालयिता[5] ।

---

१-१. हे अग्ने त्वमस्मान् मघवनस्तन्वश्च रक्ष । स्वधनं मघम् । हविर्लक्षणेन धनेन धनवतः । 'श्वयुव-मघोनामतद्धिते' (पा ६,४,१३३) इति मतुबर्थवकारसंप्रसारणम् । तनूशब्देन पुत्रादयो लक्ष्यन्ते । पायुरायुवत् । हे देव वन्दनीय अग्ने तव योग्यैः पायुभिः पालनैः यजतोऽस्मत्पुत्रपौत्रादींश्च । त्राता तोकस्य तनयस्य । पुत्रस्य पौत्रस्य चेत्यर्थः । त्रा पालने । 'पुत्रः सूनुर्यदुस्तोकः कुमारस्तनयस्तनः' इति उभावपि पुत्रवाचिनौ । अपितु पुत्रपौत्रत्वान्न पुनरुक्तता । वासि ङिः । तनयस्येत्यर्थः वि[1] अ कु. † स्वतः मूको. ‡-‡ नास्ति मूको. २-२. नास्ति साम्व[1,2] S-S नास्ति साम्व[1,3] वि[1] अ कु. ३. नास्ति वि[2] अ[1]. ४. त्वदीय" साम्व[3]. ५-५. हे अग्ने यज्यवे यष्टुरर्थाय स्तोतृयजमानानां च पालयिता वि[1] अ कु.

[1]अन्तरः सन्निकृष्टश्च । ज्ञातिस्थानीयश्चेत्यर्थः । कीदृशाय यज्यवे । अनिपद्माय न निपद्यतेऽन्यदेवतापरिचर्यायां कामभोगेषु वेत्यनिपद्मः, तस्मै । त्वत्स्तुतियागपराय अभोगप्रधानाय वेत्यर्थः । किं करोषि । उच्यते । चतुरक्षः इध्यसे चत्वार्यक्षीणि यस्य स चतुरक्षः। अक्षिभिश्चात्र मुखानि लक्ष्यन्ते । चतुर्मुखः दिक्चतुष्टयाभिमुखो दीप्यसे। समन्ताद् यज्ञे दीप्यस इत्यर्थः । कीदृशो यज्युः । उच्यते। यः रातहव्यः पूर्वमपि दत्तहविष्कः । कस्मै । अवृकाय वृकशब्देनात्र हिंस्रप्राणिवचनत्वाद्धिंस्रत्वं लक्ष्यते । अहिंसाय तुभ्यम् । अथवा वुक वृक आदाने इत्यस्यैतद्रूपम् । आदातव्यानामनादात्रे† । स्तोतॄणां यजमानानां च देवहार्य‡ यद्धनं तस्याप्यनपहर्त्रे इत्यर्थः । धायसे धेट् पाने इत्यस्यैतद्रूपम् । आज्यसोमपयःप्रभृतीनां§ पात्रे । अथवा वृश्चतेः छेदनार्थस्य भावे वृकः । धायस इत्यपि पानवचनः । तेन च भोगो लक्ष्यते । तादर्थ्ये चोभयत्र चतुर्थी । अच्छिन्नाय पानाय । अव्यवच्छिन्नस्य* भोगस्यार्थाय यो दत्तहविष्क इत्यर्थः । कीरेः चित् 'कीरिः' (निघ ३,१६) इति स्तोतृनाम । चिच्छब्दोऽप्यर्थे । यो दारिद्र्यात्र यजते स्तौत्येव केवलं तस्यापि स्वभूतं स्तुतिलक्षणम् मन्त्रम् मनसा हृदयेन सादर एव भूत्वा त्वम् वनोषि तम् । वनिरत्र याच्ञार्थः । सम्भजत्यर्थे वा । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः । यः करोति, याचसे प्रार्थयसे तम्, सम्भजसे वा तमित्यर्थः[1] ॥१३॥

वेङ्कट० त्वम् अग्ने! यजमानार्थं [1]कर्मणोऽन्तरङ्गो रक्षको[2] रक्षोभिः अनिपद्माय [3]रक्षसामनन्ववचाराय सर्वतो ज्वालाभिः पश्यन् समिध्यसे[3] । यः दत्तहविष्कः[4] रक्षोवर्जिताय तस्मै प्रीणनाय सोमं पिबसि । यश्च तस्य स्तोतुः मन्त्रः तम्[5] च मनसा कामयसे ॥ १३ ॥

मुद्गल० हे अग्ने! त्वम् यज्यवे यज्योः यजमानस्य पायुः पालकः अन्तरः समीपवर्ती सन् अनिपद्माय रक्षोभिरसंबद्धाय[6] यज्ञाय चतुरक्षः दिक्चतुष्टयेऽपि इन्द्रियस्थानीयज्वालायुक्तः[7] इध्यसे दीप्यसे। अवृकाय अहिंसकाय धायसे पोषकाय तुभ्यम् रातहव्यः दत्तहविष्कः यः यजमानोऽस्ति तत् कीरेः चित् स्तोतुरेव सतः तस्य सम्बन्धिनम् मन्त्रम् त्वदीयस्तोत्ररूपम् मनसा त्वदीयेन चित्तेन वनोषि याचसि ॥ १३ ॥

त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद्रेक्णः॑ पर॒मं व॒नोषि॒ तत् ।
आ॒ध्रस्य॑ चि॒त्प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्र दिशो॑ वि॒दुष्ट॑रः ॥ १४ ॥

---

१-१. 'कृशानाविनिस्त्रिशाऽन्तरम्' (शाउ १,१)। सन्निकृष्टतरः । ज्ञातिस्थानीय इत्यर्थः । अनिपद्माय पद्यते चतुरक्ष इत्यर्थ । अन्यदेवतापरिचरणाय न निपद्यते कामभोगेषु वा इत्यनिपद्मः तस्मै । त्वत्स्तुतियागपराय अभोगप्रधानाय वा । दिक्चतुष्टयाभिमुखो दीप्यसे । अक्षणा मुखं लक्ष्यते । समन्ताद्यज्ञे दीप्यस इत्यर्थः । यो यज्युः रातहव्यः पूर्वमपि दत्तहविष्कः अहिंसाय तुभ्यम् । वृको हिंस्रनामा । तत्स्वभावरहिताय । अथवा वुक वृक आदाने इत्यस्मात् । आज्यसोमपयःप्रभृतीनामादात्रे (?) इति । ओव्रश्चू छेदने इत्यस्माद् भावे घञ् । धेट् पाने इत्यस्मात् धायसे इति च । 'तुमर्थे सेसेन्॰' (पा ३,४,९)। 'भावे युक् चिण्कृतोः' (पा ७,३,३३)। यः अच्छिन्नपानभोगार्थं दत्तहविष्क इत्यर्थः । 'सुराधः कीरयो यद्वा:' इति स्तोतारि । यो दारिद्र्यात्र यजते स्तौत्येव तस्यापि मन्त्ररूपां स्तुतिं मनसा हृदयेन सेवावने । वन याच्ञायाम् । सम्भजसि वा सादर एव । तच्छब्दाध्याहारश्च । यः तमिति । तं प्रार्थयसे सम्भजसे वा दि[?] म कृ. † आदातव्यानामनादात्रे सायण. ‡ यो देवहार्यो मूको. § आज्य ते सोम° मूको. * अव्यवच्छिन्न° मूको. २. कर्मणोऽन्तरम् गोरक्षकः रु अ° वि°. ३-३. सर्वतो ज्वालाभिः पश्यन् रक्षसामनन्ववचाराय ४. °विष्कः साग°. ५. ° अ° वि°. ६. °न्धाय वि. ७. °ज्वालान्वित° वि मै°.

त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् ।
आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ॥१४॥

स्कन्द० 'त्वम् हे अग्ने ! उरुशंसाय शंसु स्तुतौ । बहुस्तुतये । कस्मै । वाघते 'वाघतः' ( निघ ३,१८ ) इति ऋत्विङ्नाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः यजमाने वर्तते । ऋत्विग्वते यजमानाय स्पार्हम् स्पृहणीयमत्यन्तोत्कृष्टम् यद् रेक्णः धनम् परमम् वनोषि तत् परममिति क्रियाविशेषणम्, न धनविशेषणम्, स्पार्हमित्यनेन पौनरुक्त्यप्रसङ्गात् । वनोषीति वनिर्दानार्थः । 'वंस्वा नो वार्या पुरु' ( ऋ ८,२३,७ ) इति यथा । सुष्ठु ददासि तदित्यर्थः । आध्रस्य चित् 'आध्र आढ्यादृदरिद्रः' ( द्र. या १२,१४ ) । चिच्छब्दोऽप्यर्थे । दरिद्रस्यापि यष्टुं समर्थस्य प्रमतिः उच्यसे प्रकृष्टमतिरनुग्रहपर उच्यसे कथ्यसे त्वं जनैः । कीदृशः । पिता पितृसदृशः । पाकम् शास्सि पाकः अविपक्वप्रज्ञः परिपक्तव्यप्रज्ञत्वात् । तमपि प्रकर्षेणानुशास्सि । प्रज्ञामस्य जनयसीत्यर्थः । प्र दिशः च प्रकर्षेणानुशास्सि । दिक्छब्देनात्र तन्निवासिभूतानि लक्ष्यन्ते । सर्वभूतान्यनुशास्सीत्यर्थः । विदुष्टरः विद्वत्तरः[१] ॥ १४ ॥

वेङ्कट० त्वम् अग्ने ! बहुस्तुतये यजमानाय स्पृहणीयम् यत्[२] धनम् उत्तमम् तत्[३] प्रयच्छसि । तथा दानाधारभूतस्य दरिद्रस्य प्रमतिः पिता उच्यसे[४] । प्र शास्सि च[५] विद्वत्तरस्त्वं पक्तव्यप्रज्ञमनम्[६] प्र दिशः चतस्रो दिशः ॥ १४ ॥

मुद्गल० हे अग्ने ! त्वम् उरुशंसाय बहुभिः स्तोतव्याय वाघते ऋत्विजे तदुपकारार्थम् स्पार्हम् स्पृहणीयम् परमम् उत्तमम् यत् रेक्णः धनमस्ति तत् धनम् वनोषि अनुष्ठाता लभतामिति कामयसे । तथा त्वम् आध्रस्य चित् सर्वतो धारणीयस्य यजमानस्यापि प्रमतिः प्रकृष्टबुद्धियुक्तः पिता पालक इत्यभिज्ञैः उच्यसे । तथा विदुष्टरः अतिशयेनाभिज्ञस्त्वम् पाकम् शिशुं तादृशं यजमानम् प्र शास्सि प्रकर्षेणानुशिष्टं करोषि । तथा दिशः प्राच्यादिकाः प्र शास्सि । त्वदीयशासनाभावे अनुष्ठातॄणां विभ्रमः स्यात् ॥ १४ ॥

त्वम॑ग्ने प्रय॑तदक्षिणं नरं॒ वर्मे॑व स्यूतं परि॑ पासि वि॒श्वतः॑ ।
स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सोप॒मा दि॒वः ॥ १५ ॥

त्वम् । अ॒ग्ने॒ । प्रय॑तऽदक्षिणम् । नर॑म् । वर्म॑ऽइव । स्यूतम् । परि॑ । पा॒सि॒ । वि॒श्वतः॑ । स्वा॒दुऽक्ष॑द्मा ।
यः । व॒स॒तौ । स्यो॒न॒ऽकृत् । जी॒व॒ऽया॒जम् । यज॑ते । सः । उ॒प॒ऽमा । दि॒वः ॥ १५ ॥

---

१-१. शंसु स्तुतौ । 'उरु विस्तं तुवि' इति बहौ । 'वाघत. कारवः परस्याः' इति ऋत्विक्षु । वदति यजमानेऽत्र । 'स नृम्णं रत्ने रेक्णसन्' इति धने । परममिति क्रियाविशेषणम् । वन दाने । 'वंस्वा नो वार्या पुरु' इतिवद् । हे अग्ने त्व बहुस्तुताय यजमानाय स्पृहणीय यद्धन तद् परमं ददासीत्यर्थः । 'आध्र कृशो अमुरा(?)नाढ्य' इति दरिद्रे । त्वं जनैर्दरिद्रस्यापि प्रकृष्टमतिः अनुग्रहपर. इत्युच्यसे । पितृसदृश इति च । पाक प्रानुशास्सि । अविपक्वप्रज्ञं परिपक्तव्यप्रज्ञं वा प्रकर्षेणानुशास्सि प्रज्ञाम् । अस्य जनयसीत्यर्थः । प्र दिशश्च दिक्षु निवासीनि सर्वभूतान्यपि प्रानुशास्सि विद्वत्तरः वि॰ स कु. २. नास्ति साम्ब॰. ३. तं वि॰. ४. उच्यते साम्ब॰. ५ न्यव स मं॰ वि॰॰. ६. वक्तव्य॰ साम्ब लपं.

स्कन्द० ¹त्वम् हे अग्ने। प्रयतदक्षिणम् †प्रयच्छतिर्दानार्थः । दत्तदक्षिणम्। अथवा यमु बन्धने । प्रबद्धदक्षिणम्। सन्ततदक्षिणादानमित्यर्थः । नरम् मनुष्यम् वर्मेव स्यूतम् वर्म कवचम्। यथा कवचम् सुस्यूतं हृदयेऽवबद्धं योद्धारं परिपाति, तद्वत् परि पासि पालयसि विश्वतः सर्वतः । स्वादुक्षद्मा 'क्षद्म' (निघ २,७) इति अन्ननाम । स्वाद्वन्नः । यः वसती निवासे च स्योनकृत् सुखस्य कर्ता। कस्य। सामर्थ्यादतिथेः । अतिथिं स्वाद्वन्नं भोजयति सुखाय च शय्यायां शाययतीत्यर्थः । यश्च जीवयाजम् यजते जीवो जन्तुः, तेन यो यागः स जीवयागः । यज्ञियपशुलक्षणेन जन्तुना यथेष्टं भवति तथा यः यजत इत्यर्थः । सः उपमा दिवः 'उपमे' (निघ २,१६) इति अन्तिकनाम । तात्स्थ्यात् ताच्छब्द्यम्। प्रथमैकवचनस्यायमाकारः । अन्तिकस्थः सन्निकृष्टो दिवः । स त्वत्प्रसादात् स्वर्गं प्राप्नोतीत्यर्थः । अथवा दिवः स्वर्गस्योपमा उपमानं स भवति। सर्वैः प्राणिभिर्मृष्टाहारसन्तुष्टैः स्वर्गोऽयमिति स्तूयत इत्यर्थः¹ ॥ १५ ॥

वेङ्कट० त्वम् अग्ने! दरिद्रेभ्यः² प्रदत्तधनं³ मनुष्यं कवचमिव उरसि बद्धमिषुभ्यः⁴ सर्वेभ्यो दुरितेभ्यः परिरक्षसि। स्वाद्वन्नः यः गृहे दरिद्राणां सुखकृत् जीवानामन्नप्रदानाद् यज्ञं करोति, स स्वर्गस्य उपमा अन्तिके वर्तते ॥ १५ ॥

मुद्गल० हे अग्ने! त्वम् प्रयतदक्षिणम् येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशम् नरम् पुरुषं यजमानम् विश्वतः सर्वतः परि पासि सम्यक् पालयसि । दृष्टान्तः । स्यूतम् निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितम् वर्मेव यथा कवचं युद्धे पालयति तद्वत् । स्वादुक्षद्मा स्वाद्वन्नः वसती निवासभूते स्वगृहे स्योनकृत् अतिथीनां सुखकारी यः यजमानः जीवयाजम्⁵ जीवयजनसहितं यज्ञम् यजते अनुतिष्ठति। सः यजमानः दिवः स्वर्गस्य उपमा दृष्टान्तो भवति। यथा⁶ स्वर्गोऽनुष्ठातॄन् सुखयति तथा त्वमपि ऋत्विगादीनित्यर्थः ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये चतुस्त्रिंशो वर्गः ॥

इ॒माम॑ग्ने श॒र॒णिं मी॑मृषो न इ॒मम॑ध्वा॑नं॒ यम॑गा॑म दू॒रात् ।
आ॒पिः पि॒ता प्रम॑तिः सो॒म्यानां॒ भृमि॑रस्यृषि॒कृन्मर्त्या॑नाम् ॥ १६ ॥

इ॒माम्। अ॒ग्ने॒। श॒र॒णिम्। मी॒मृ॒षः॒। नः॒। इ॒मम्। अध्वा॑नम्। यम्। अगा॑म। दू॒रात्। आ॒पिः। पि॒ता। प्रऽम॑तिः। सो॒म्याना॑म्। भृमिः॑। अ॒सि॒। ऋ॒षि॒ऽकृत्। मर्त्या॑नाम् ॥ १६ ॥

---

१-१ यमु दाने बन्धने वा। 'वर्मेव स्यूतं न' इति कवचे । हे अग्ने त्वं दत्तदक्षिणं प्रबद्धदक्षिणं सन्ततदाने मनुष्यं सर्वतः परिपालयसि। कवचानुस्यूतं योद्धारं सर्वदा पाति यथा तद्वत् । 'स्वादुक्षद्मा' (पा ६,४,१९) इति करणे च। [illegible] बन्धने। हृदये बद्धकवचम्। किञ्च 'क्षद्म पाथ इळ' इत्यत्र । यो वसती स्वादुक्षद्मा स्योनकृत् भवति, जीवयागेन यजते च स [illegible] दिवः अन्तिकस्थः । 'पाथो क्षमा वसतीयाज्ञ' इति गृहे। यः स्वगृहे अतिथिं स्वादन्नं भोजयति, सुखार्थं शय्यायां शाययति च। जीवो जन्तुः। यज्ञियपशुना यजते देवान् [illegible]। 'अन्तमोपमयोर्दिवा' इत्यन्तिके। तात्स्थ्यात् [illegible] । अस्यात् । स [illegible] स्वर्गस्य एव। अथवा दिवः स्वर्गस्योपमानभूतः [illegible] † प्रयच्छतिर्दा° मूको. २ दरिद्रेभ्य वि° [illegible] ३ दत्त° [illegible] ४. [illegible] मनुष्येभ्य [illegible] ५ नास्ति वि मै१. ६. तथा मूको.

स्कन्द० [1]अत्रेतिहासः—'हिरण्यस्तूपो यागायाग्निं विहृत्य रक्षोभयाद् दूरं गत्वा गतेषु रक्षस्सु प्रत्यागतः कृतापराधत्वाभिप्रायेणाग्निमाह—इमाम् हे अग्ने! शरणिम् शॄ हिंसायाम् । आत्मनो हिंसाम् । मीमृषः मृष तितिक्षायाम् इति स्वार्थिको णिच् । लोडर्थे लुङ् । मीमृषः क्षमस्व । नः अस्माकम् । कतमा । उच्यते । इमम् अध्वानम् यम् अगाम त्वां विहृत्यानिष्ट्वा रक्षोभयाद् गताः स्मः दूरात् दूरम् । किं कारणम् । उच्यते । यस्मात् आपिः ज्ञातिः त्वम् । कीदृशः । पिता पितृस्थानीयः । प्रमतिः प्रकृष्टमतिः अनुग्रहपरः । केषाम् । सोम्यानाम् सोमसम्पादिनां सर्वयजमानानाम् । किञ्च भृमिः असि लोकत्रयेऽपि भ्रमितासि । त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः । तमोपघातद्वारेण च दर्शनकृन्मनुष्याणाम् । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना—इमां हे अग्ने! शरणिं संसारप्राप्तिलक्षणां हिंसां मीमृषो नः । मृजेरिदं जकारस्य षकारं कृत्वा छान्दसं रूपम्, न मृषेः । मार्जय अपनयास्माकं संसाराध्वानमिमं यमगाम प्राप्ताः स्मः । दूरात् सृष्टेः प्रभृति । किं कारणम् । यस्मात् त्वम् आपिः पिता प्रमतिः सोम्यानां यस्माच्च भृमिरसि । भ्राम्यतेर्ण्यन्तस्यैवं रूपम् । भ्रमयितासि भ्रान्तेः कर्तासि । ऋषिकृत् दर्शनकृत् सम्यग्ज्ञानकरश्च मनुष्याणाम् । एतदुक्तं भवति—भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता । त्वदायत्तौ च संसारप्राप्तिमोक्षौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपर । अतोऽस्मान् सम्यग्ज्ञानोत्पादनेन मोचयास्मात् संसारादिति'[1] ॥ १६ ॥

वेङ्कट० अरण्ये तपोऽर्थं गतोऽग्निमाशास्ते—इमाम् अग्ने! तपोजनितां हिंसां यया सहामहे तथा फलप्रदानेन[2] अस्मान् कुरु । तथा इमम् अध्वानम् च यम्[3] वयं त्वां द्रष्टुकामाः दूरात् अगाम । ज्ञातिः पालयिता प्रमतिः च सोमार्हाणां भ्रमणशीलस्त्वमन्धकाराऽपनयनात् मनुष्याणां दर्शनकृत् ॥ १६ ॥

---

१-१. अत्रायमितिहास । हिरण्यस्तूपो यागायाग्निं विहृत्यानिष्ट्वा रक्षोभयाद्दूरं जगाम । तेषु गतेषु प्रत्यागत्य कृतापराधत्वाभिप्रायेणाग्निमाह । शॄ हिंसायाम् । 'आक्रोशे नञ्यनिः' (?) ( पा ३,३,११२ ) । गुणश्च । मृष तितिक्षायाम् (?) । छन्दसि लुङ् लोटि । चुरादित्वात् णिच् । 'णिश्रिद्रुस्रुभ्यः' ( पा ३,१,४८ ) इति चङ् । 'चङि' (पा ६,१,११) इति द्वे । 'अत्र लोपोऽभ्यासस्य' ( पा ७,४,५८ ) इत्यस्यार्थे वर्तमाने 'मुचामित्' ( पा ७,४, ७६) इति इति च 'सन्यत' (पा ७,४,७९) इति इकारीभूतः । 'सन्वल्लघुनि' (पा ७,४,९३) इति चङि । 'दीर्घो लघोः' ( पा ७,४,९४ ) इति दीर्घः । 'बहुलं छन्दस्यमाङ्योगेऽपि' ( पा ६,४,७५ ) इत्यडभावः (?) । हे अग्ने आत्मन इमां हिंसां क्षमस्व अस्माकम् । यद् वय त्वा विहृत्यानिष्ट्वा रक्षोभयादिममत्यन्तं दूरमार्गं यमगाम तदस्मदपराधं त्वद्धिंसां मृषस्व । यस्मात्त्वं ज्ञातिः पितृस्थानीयश्च प्रकृष्टमतिरनुग्रहपरश्च सोमसम्पादिनां सर्वयजमानानाम् । 'कुगतिप्रादि (इति वि° अ)' इति ज्ञातौ । 'सोममर्हति यः' (पा ४,४,१३७) इति सोम्य । तत्तदर्मीमृषः । (?) 'छन्दसि लुङ् लङ् लिटः' ( पा ३,४,६ ) इति लुङ् लोटि । यङ्लुगन्तं वा लुङि । चुरादित्वाण्णिच् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' ( पा ३,१,४८ ) । पुरादि (?) । किञ्च भृमिः भ्रमिता असि त्रिष्वपि लोकेषु । ऋषिः दर्शने । तमोऽपनुदत् दर्शनकृन्मनुष्याणाम् । भ्रमु चलने । अथवा मुक्त्यर्थां । हे अग्ने इमां सरणिं मार्जयास्माकं जननमरणादिप्रवाहं [illegible] शोधय अपनय । दूरात् सम्पादिमय संसाराध्वानं गता स्मः । यस्मात्त्वं बन्धुः पितृकार्यकरश्च अनुग्रहपरश्च [illegible] सन् दर्शनकृत् सम्यग्ज्ञानकर असतां भ्रमयिता अपि मोहकरः । तथाऽस्माकमृषिकृत् मत इत्यर्थः । [illegible] भवति । भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता । त्वदायत्तौ संसारमोक्षौ । त्वं च पितृवत् [illegible] [illegible] । अतोऽस्मान् सम्यग्ज्ञानोत्पादनेन मोचय अस्मात् संसारात् इति । मृजू शुद्धौ । मध्यमपुरुषैकवचनम् । [illegible] । चुरादिणिज्वा लुङि । भृमि. सणिच् वि° अ कु. २ °दानाना वि° लपे. ३. यम् साम्य°.

मुद्गल० हे अग्ने! त्वम् नः अस्मत्सम्बन्धिनीम् इमाम् इदानीं सम्पादिताम् शरणिम् हिंसां व्रतलोपरूपाम् मीमृषः क्षमस्व। तथा त्वदीयसेवाम् अग्निहोत्रादिरूपां परित्यज्य दूरात् दूरदेशम् यम् इमम् अध्वानम् अगाम वयं गतवन्तः तमपि क्षमस्वेति शेषः। सोम्यानाम् सोमार्हाणाम् अनुष्ठातृणाम् मर्त्यानाम् त्वम् आप्यादिगुणयुक्त[1] असि। आपिः प्रापणीयः। पिता पालकः। प्रमतिः प्रकृष्टमननयुक्तः। भृमिः भ्रामकः कर्मनिर्वाहक इत्यर्थः। ऋषिकृत् दर्शनकारी अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः ॥ १६ ॥

मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम् ॥ १७ ॥

मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ १७ ॥

स्कन्द० [2]मनुष्वत् मनोरिव हे अग्ने!, अङ्गिरस्वत् अङ्गिरस इव हे अङ्गिरः!, ययातिवत् ययातेरिव, पूर्ववत् पूर्वेषामिव च ऋषीणां, [ममापि सदने] शुचे। दीप्त! अच्छ याहि अच्छाभेरर्थे। अभिगच्छ, अभिगम्य च आ वह दैव्यम् जनम् देवेषु भवं लोकम्, सर्वदेवजनमित्यर्थः। आवाह्य च आ सादय अस्मदीये बर्हिषि यक्षि च। कीदृशम्। प्रियम् इष्टमात्मनो मत्वा[2] ॥ १७ ॥

वेङ्कट० अङ्गिरसामेक[3]! मन्वादीनामिव ममापि गृहेऽधुनाभिमुखम् याहि। आ वह च दैव्यम् जनम्। [4]आ सादय[4] च बर्हिषि। यज च प्रियम् देवगणम् ॥ १७ ॥

मुद्गल० हे शुचे! शुद्धियुक्त! अङ्गिरः! अङ्गनशील! [5]हविरादानाय! तत्रतत्र गमनशील![5] अग्ने! अच्छ आभिमुख्येन सदने देवयजनदेशे याहि गच्छ। चत्वारो दृष्टान्ताः—मनुष्वत् यथा मनुरनुष्ठानदेशे गच्छति। अङ्गिरस्वत् यथा अङ्गिरा गच्छति। ययातिवत् यथा ययातिर्नाम राजा गच्छति[6]। पूर्ववत्[7] अन्ये च पूर्वपुरुषाः यज्ञं[8] गच्छन्ति। यथा मन्वादयो यज्ञे गच्छन्ति तद्वत्। गत्वा च दैव्यम् देवतासमूहरूपम् जनम् आ वह अस्मिन् कर्मण्यानय। आनीय च बर्हिषि आस्तीर्णे दर्भे आ सादय तान् देवान् उपवेशय। उपवेश्य च प्रियम् अभीष्टं हविः यक्षि च देहि ॥ १७ ॥

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ १८ ॥

1. °गिषु युक्तः मूको. 2-2. हे अग्ने शुचे दीप्त यत्सदने गृहे अभिगम्य आवाह्य देवलोकं सर्वदेवान् च अस्मदीये बर्हिषि निषादय। यज च इष्टं तत्र प्रियं वा। अच्छ अभि। बर्हिर्देवस्यन्यजनेभ्यो यम् (?) (पा ८,२,५८) गत्यर्थे। यथैतेषां मन्वङ्गिरोययातिपूर्वेषां होतृत्वेन नियत अभवः। हे अङ्गिरसोऽस्मत्य कर्तः तद्वन्ममापि इत्यर्थं वि क कु. [-] मनोरिव सदने मेरे मूको. 3. °मेक सामग्र पु. 4-4. आसद वि° म°. 5-5. नास्ति वि. [?] °पदस्य वि°. 6. भाग° वि. 7. नास्ति मे°. 8. यथा वि.

एतेन । अग्ने । ब्रह्मणा । वावृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजवत्या ॥ १८ ॥

स्कन्द० [1]एतेन हे अग्ने! स्तुतिलक्षणेन ब्रह्मणा वावृधस्व अत्यर्थं वर्धस्व । स्तूयमाना हि देवता वीर्येण वर्धते । अत एतदुच्यते—एतेन ब्रह्मणाऽत्यर्थं वर्धस्वेति । कतमेन । उच्यते । शक्ती वा तृतीयैकवचनस्यायं पूर्वसवर्णः । शक्त्या वा यत् ते चकृम, विदा वा ज्ञानेन वा । यथाशक्ति यथाज्ञानं च [यद् वयं चकृम कृतवन्त] इत्यर्थः । उत अपिच त्वमेव प्र णेषि अभि अभिप्रणयसि । स्तुतिकरणे प्रवर्तयसीत्यर्थः । कीदृशः । वस्यः वसीयः वसुमत्तमः । कान् । अस्मान् । एतदुक्तं भवति । त्वां स्तोतुं कुतो नः शक्तिः ज्ञानं वा । त्वदनुग्रहादेव वयं तव स्तुतिं कृतवन्तः, न स्वमहिम्नेति । अथवा उतशब्दः अभि प्र णेषीत्येतस्मात् परो द्रष्टव्यः । लट् च लेडर्थे । अभि प्र णेष्युत अभिप्रणयापि । एतेन ब्रह्मणाऽत्यर्थं वर्धस्व माघयस्व चेत्यर्थः । किम् । वस्यः द्वितीयाबहुवचनमेव । वसूनि धनानि चास्मभ्यं देहीत्यर्थः । सम् नः सृज संसृज सम्बन्धय नः अस्मान् सुमत्या शोभनया बुद्ध्या वाजवत्या अन्नसहितया[2] । ज्ञानमन्नं च नो जनयेत्यर्थः ॥ १८ ॥

वेङ्कट० एतेन अग्ने[2]! स्तोत्रेण वृद्धो भव । यथा कश्चिच्छक्त्या महता प्रयत्नेन स्तोत्रं करोति तथा[3] यत् ते चकृम विदा वा ज्ञानेन[4] वा यद् ब्रह्म वय चकृम । अपि च अस्मान् श्रेयश्च[5] अभि प्र णय । अन्नवत्या त्वदीयया सुमत्या च अस्मान् सम् सृज इति ॥ १८ ॥

मुद्गल० हे अग्ने! एतेन अस्मत्प्रयुक्तेन ब्रह्मणा वावृधस्व अभिवृद्धो भव, शक्ती वा विदा वा अस्मदीयशक्त्या चाऽस्मदीयज्ञानेन च ते तव यत् स्तोत्रम् चकृम वयं कृतवन्तः । एतेन ब्रह्मणेति पूर्वत्रान्वयः । उत अपि च अस्मान् अनुष्ठातॄन् वस्यः वसुमत्तरत्वलक्षणं[1] श्रेयः प्र णेषि प्रकर्षेण प्रापय । नः अस्मान् वाजवत्या प्रभूतान्नयुक्तया सुमत्या अनुष्ठानविषयया शोभनबुद्ध्या सम् सृज संयोजय ॥ १८ ॥

## [ ३२ ]

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ १ ॥

इन्द्रस्य । नु । वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री । अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥ १ ॥

---

१-१. हे अग्ने त्वम् एतेन अस्मत्स्तुतिलक्षणेन ब्रह्मणाऽत्यर्थं वर्धस्व । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवम् । यङ्लुकि । 'दीर्घो लघो ' (?) (पा ७,४,९४) । यच्च शक्त्या विदा वा चकृम । यद् ब्रह्म यथाशक्ति यथाज्ञानं करवाम (?) । 'सुपां' (पा ७,१,३९) इत्यादिना पूर्वसवर्णस्य टाविभक्तेः । अपि च त्वमभि प्र णेषि स्तुतिकरणेऽस्मान् प्रवर्तयसि । यस्य वसीयोऽसि । अस्माभिः स्तुतिं कारयसीत्यर्थः । एवमुक्तमत्र । त्वत्स्तुत्यर्थं कुतोऽस्माकं शक्तिं ज्ञानं च त्वदनुग्रहादेव त्वामस्तौष्म, न स्वमहिम्नेति । अभि प्र णेषि उत । लट् च लोटि । एतेन ब्रह्मणा अभिप्रणय । अपिच वसूनि वर्धयस्व च । अस्मभ्यं देहीत्यर्थः । संसृजास्मान् शोभनया बुद्ध्याऽन्नवत्या वि[1] अ कु. †-† पदद्वय न च कृतवन्तः साम्ब. २. अग्नेः वि[2]. ३. नास्ति वि[3]. ४. ज्ञानेन वावत् साम्ब[3]. ५. श्रेयश्च वि[1]. ६. °णयेव: वि

स्कन्द० 'द्वे ऐन्द्रे'। 'एते सूक्ते इन्द्रदेवते। इन्द्रस्य नु क्षिप्रम् वीर्याणि वीरकर्माणि प्र वोचम् ब्रवीमि। यानि चकार प्रथमानि अन्येन केन चिदप्यकृतपूर्वाणि अत्यन्तप्रकृष्टानि वा वज्री वज्रवान्। सवज्र इत्यर्थः। कतमानि तानि। उच्यते। अहन् अहिम् हतवान् मेघम्। अनु अपः ततर्द अवित्थ परभाने। अपरभाव पश्चाद्भाव। तर्दतिर्हिंसार्थः। मेघवधोत्तरकाल तदीया अपो हिंसितवान्। भूमौ पातितवानित्यर्थः। सा हि तासा हिंसा। केचित्तु तर्दनं विस्तारण व्याचक्षते। पृथिव्यामपो विस्तारितवानित्यर्थः। ताभिश्च पातिताभिर्विस्तारिताभिर्वा प्र वक्षणा अभिनत्, वक्षणा' (निघ १,११) इति नदीनाम। नदी अभिन्नवान्। बहूदकत्वाद् भिन्ना तत्कूलानि। सर्वत प्रवाहितवानित्यर्थ पर्वतानाम् महीधराणा सम्बन्धिनी। क पुन पर्वताना नदीना च सम्बन्ध प्रभवलक्षण। पर्वतेभ्यो हि नद्य प्रभवन्ति। अथवा वक्षणा पक्षाव उच्यन्ते। पर्वतशब्दो हि मेघनाम (तु निघ १,१०)। तेषाम् एक मध हतवान्। अन्येषामपि पक्षान् हतवानित्यर्थः। अथवा पक्षुवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपाद्यन्ते। पर्वतशब्दस्तु महीधरवचन एव। महीधराणां पक्षान् प्राभिनत्। छिन्नानित्यर्थः। एव हि चरकाध्वर्यूणा ब्राह्मण इतिहास श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठ तोकं यत् पर्वता। त पाक्षण आसन्। ते यनयनाकामयन्त तत्परापातमासत। अथ वा इय तर्हि शिथिराऽऽसीत्। तेषामिन्द्र पक्षानच्छिनत्। तैरिमामदृहत्' (काठ ३६,७) इति' ॥ १ ॥

वेङ्कट० अथ इन्द्रस्य अह क्षिप्रम् वीर्याणि प्रवक्ष्यामि यानि चकार पुरातनानि वज्री। तान्याह— अहिम् असुरम् अहन्[2] हत्वा च तेन रुद्धा अप सूर्येव रश्मिभि ततर्द। प्र अभिनत् च शिलोच्चयाना[3] नदी पृथिव्या पातयितुम् ॥ १ ॥

मुद्गल० [4] 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चं द्वितीय सूक्तम्। आङ्गिरसो हिरण्यस्तूप ऋषि। त्रिष्टुप् छन्द। इन्द्रो देवता[4]।

वज्री वज्रयुक्त इन्द्र प्रथमानि पूर्वसिद्धानि यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार तस्य इन्द्रस्य तानि वीर्याणि नु क्षिप्रम् प्र वोचम् प्रब्रवीमि। कानि वीर्याणीति तदुच्यते। अहिम् मेघम् अहन् हतवान्। तदेक वीर्यम्। अनु पश्चात् अप जलानि ततर्द हिंसितवान्। भूमौ पातितवानित्यर्थः। इद द्वितीय वीर्यम्। पर्वतानाम् सम्बन्धिनी वक्षणा प्रवहणशीला नदी प्र अभिनत् भिन्नवान्। कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इद तृतीय वीर्यम्। एवमु त्तरत्रापि द्रष्टव्यम्[5] ॥ १ ॥

---

१-१ इन्द्रस्य वीरकर्माणि क्षिप्रं ब्रवीमि। वज्रवान् अन्येनाकृतपूर्वाणि अत्यन्तप्रकृष्टानि यानि मेघहननापातनादीनि प्रथमे दत्तानि चकार तानि अवोचमित्यर्थः। 'अदित्त परि (दी नि[?] अ) पद' इति गेधे। तर्द हिंसायाम्। अनु पश्चात्। पूर्व मेघ हत्वा तदनन्तरं मेघस्य अप पातितवान्। भूगतमपा हिंसनम्। 'वक्षणा प्रावन कुल्या' इति निघ। पर्वतप्रभवा हि नद्य। पर्वतसम्बन्धिनी नदी बहूदकत्वात् भिन्ना स्वकूलानि सर्वत प्रवाहितवान् इत्यर्थः। तर्द विस्तारे वा। पृथिव्यामपो विस्तार। पातिताभिर्विस्तृताभिरपो नदीकूलभेद। अथवा वक्षणा पक्षाव। पर्वता मेघा। तेषामेक हत्वा अन्येषामपि पक्षान् प्राभिनदिति। अथवा पक्षुवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपाद्यन्ते। पर्वतोऽपि महीधर। पर्वतानां पक्षान् प्राभिनत् छिन्नवान्। एवं हि चरकाध्वर्यूणा ब्राह्मणे इतिहास श्रूयते—'प्रजापतेर्वा एतत् ज्येष्ठ तोकं यत्पर्वता। त पक्षिण आसन्। ते यत्रयत्राकामयन्त तत्परापातमासत। अथ वा इय तर्हि शिथिराऽऽसीत्। तेषामिन्द्र पक्षानच्छिनत्। तैरिमामदृहत्' इति वि[?] अ कु २ स्वकूलानि मूको[?] २ नास्ति वि[?] लप ३ श्वान् वि[?] सा[?] ४-४ नास्ति वि मै[?] ५ °द्रष्टव्यम्। अत्र पौर्वापर्येण हिरण्यस्तूपो व्याख्यातः, ग्रन्थ मै[?]

अह॒न्नहिं॒ पर्व॑ते शिश्रिया॒णं त्वष्टा॑ऽस्मै॒ वज्रं॑ स्व॒र्यं॑ ततक्ष ।
वा॒श्रा इ॑व धे॒नवः॒ स्यन्द॑माना॒ अञ्जः॑ समु॒द्रमव॑ जग्मु॒रापः॑ ॥ २ ॥

अह॑न् । अहि॑म् । पर्व॑ते । शि॒श्रि॒या॒णम् । त्वष्टा॑ । अ॒स्मै॒ । वज्र॑म् । स्व॒र्य॑म् । त॒त॒क्ष॒ । वा॒श्राःऽइ॑व । धे॒नवः॑ । स्यन्द॑मानाः । अञ्जः॑ । स॒मु॒द्रम् । अव॑ । ज॒ग्मुः॒ । आपः॑ ॥ २ ॥

स्कन्द० 'अहन् अहिम् पर्वते शिश्रियाणम् आश्रयन्तम् । लीयमानमित्यर्थः । मेघा हि स्वभावेन पर्वतेषु लीयन्ते । केन अहन् । उच्यते । त्वष्टा देवशिल्पी । अस्मै तादर्थ्ये चतुर्थी । अस्येन्द्रस्यार्थाय । वज्रम् स्वर्यम् स्वृ । शब्दोपतापयोः । प्रहारवेलायां शब्दकरमुपतापयितारं वाऽसुराणाम् । ततक्ष 'तक्षतिः करोतिकर्मा' (या ४,१९) । कृतवान् । अत्र चैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यं त्वष्टाऽस्मै वज्रं स्वर्यं ततक्ष तेनाहन्निति योग्यत्वसन्निधानाभ्यां वज्रस्य करणत्वप्रतीतिः, 'प्रहर शीघ्रमयं दण्डः' इत्यादिषु यथा । हते चाहौ वाश्राः इव धेनवः यथा वाशनशीला अभिनवप्रसूता‡ धेनवः वत्सान् प्रति गच्छेयुः, एवम् स्यन्दमानाः स्रवन्त्यः अञ्जः अञ्जुपर्यायोऽयम् । क्रियाविशेषणं चेदम् । तृतीयार्थे वा प्रथमा । ऋजुना वा मार्गेण । समुद्रम् अन्तरिक्षनामैतत् (द्र. निघ १,३) । पञ्चम्यर्थे चात्र द्वितीया । समुद्रादन्तरिक्षात् अव भूमिं प्रति जग्मुः गता आपः । अथवा समुद्रमिति पार्थिव एव समुद्रोऽभिप्रेतः । स्वार्थ एव द्वितीया । हतेऽहौ तस्याधः पार्थिवं समुद्रं प्रति जग्मुराप इति[1] ॥ २ ॥

वेङ्कट० अहन्[2] अहिम् महीधरे लीयमानम् । त्वष्टा अस्मै वज्रम् स्वरणशीलम्[3] अकरोत् तीक्ष्णधारम् । शब्दकारिण्योऽभिनवप्रसूता[4], इव धेनवः वत्सान्[5] प्रति स्यन्दमानाः अञ्जसा अन्तरिक्षं प्रति अव गताः[6] आपः । समुद्रोदधिं प्रति गता इति ॥ २ ॥

मुद्गल० पर्वते शिश्रियाणम् आश्रितम् अहिम् मेघम् अहन् हतवान् । अस्मै इन्द्राय स्वर्यम् सुष्ठु प्रेरणीयम् त्वष्टा विश्वकर्मा वज्रम् ततक्ष तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ताः आपः समुद्रम् अञ्जः सम्यक् अव जग्मुः प्राप्ताः । दृष्टान्तः । वाश्राः इव वत्सान् प्रति हम्भारवोपेताः धेनवः यथा सहसा वत्सगृहं गच्छन्ति तद्वत् ॥ २ ॥

---

१-१. अहन् । श्रिञ् सेवायाम् । अत्र एकीभावे । 'अचि श्नुधातुभ्रुवाम्०' (पा ६,४,७७) इति इयङ् । 'हलादिः शेषः' (पा ७,४,६०) । पर्वते लीयमानं मेघम् । यं त्वष्टा देवशिल्पी अस्मै इन्द्रार्थं वज्रं प्रहारवेलायां शब्दकरम् उपतापयितारं वा चकार । तेन अहन् इत्यर्थः । 'लिङ्येर्देवतायामकारश्चोपधायाः' (पावा ३,२,१६५) इति ताच्छील्यादिषु । अथवा तक्ष त्वक्ष तनूकरणे । स्वृ शब्दोपतापयोः । 'अचो यत्' (पा ३,१,९७) । गुणश्चाण् रपरः । मेघा हि स्वभावेन पर्वतेषु लीयन्ते । योग्यत्वसन्निधानाभ्यां वा वज्रस्यकरणत्वप्रतीतिः । प्रहर शीघ्रमयं दण्ड इतिवत् । हते चाहौ आपः स्यन्दमानाः स्रवन्त्यः समुद्रादन्तरिक्षात् । अञ्जः ऋजुना मार्गेण अव जग्मुः अधो भूमिं जग्मुः । अभिनवप्रसूतत्वात् यथा वाशनशीला धेनवः स्ववत्सान् प्रति गच्छेयुः तद्वत् मेघे हते द्रुततरं वृष्टिरूपेण । स्यन्द् प्रस्रवणे । शानच् मुक् च । अञ्जः क्रियाविशेषणं वा । दार्थे अयं सुः । 'नाकः समुद्रः' इत्यन्तरिक्षे । ङसेः अम् । अव अधोऽर्थे । पार्थिवमेव समुद्रं स्वार्थे । अवजग्मुरिति वा । अञ्जः क्षीरं वा अभि । अञ्जोऽन्तमुपमानमेव । 'स्फायितञ्चि' (पाउ २,१३) इत्यादिना रक् । 'दाभाभ्यां नुः' (पाउ ३,३२), 'धेट इच' (पाउ ३,३४ [°क्षीरं वा अभि कु.]) यथा वाश्रा धेनवः अञ्जः क्षीरं स्रवन्ति तद्वत् समुद्रमव जग्मुरापः वि[1] अ कु. † स्वर्यं साम्व. ‡ °प्रस्नुता मूको. २. तं अहन् वि[1]. ३. स्वरण° मूको. ४. °ण्योऽप्रति° ल अ[1] वि[1]. ५. वत्सं हर्षे वि[1]. ६. अवनताः साम्व[1].

वृषायमा॑णोऽवृणीत॒ सोमं॒ त्रिक॑द्रुकेष्वपिबत्सु॒तस्य॑ ।
आ साय॑कं म॒घवा॑ऽदत्त॒ वज्र॒मह॑न्नेनं प्रथम॒जामही॑नाम् ॥ ३ ॥

वृ॒ष॒ऽयमा॑णः । अ॒वृ॒णी॒त॒ । सोम॑म् । त्रिऽक॑द्रुकेषु । अ॒पि॒ब॒त् । सु॒तस्य॑ । आ । साय॑कम् । म॒घऽवा॑ । अ॒द॒त्त॒ । वज्र॑म् । अह॑न् । ए॒न॒म् । प्र॒थ॒म॒ऽजाम् । अही॑नाम् ॥ ३ ॥

स्कन्द० वृषायमाणः† "'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इत्यस्य 'यथाभागमश्नीतेत्येवैतदाह' (माश २,४,२,२०) तथा 'अमीमदन्त पितरो यथाभागमावृषायिषत' इत्यस्य 'यथाभागमाशिषुरित्येवैतदाह' (माश २,४,२,२२) इति शतपथब्राह्मणे विवरणात् ‡वृषायतिरशनार्थः‡ इति गम्यते । अश्नन् । अथवा वृषशब्दोऽत्र उपलक्षणद्वितीयान्तो व्यत्ययेन भावे द्रष्टव्यः, न कर्तरि । क्यङ् चेच्छायां नाचारे । इच्छाक्यच्येव वा छान्दसत्वाद् दीर्घत्वम् आत्मनेपदत्वं च । वृषायमाणः वर्षणमिच्छन्§ । वर्षयितुमिच्छन्नित्यर्थः । किं कृतवान् । उच्यते । अवृणीत वृतवान् प्रार्थितवान् सोमम् । वृत्वा च त्रिकद्रुकेषु अपिबत् अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । पीतवान् । सुतस्य द्वितीयार्थे षष्ठ्येषा । षष्ठीश्रुतेरेकदेशमिति शेषः । सुतं सोमं सुतस्य वा सोमस्यैकदेशं स्वांशलक्षणम् । आ सायकम् आ इत्युपसर्गः अदत्त इत्याख्यातेन सम्बन्धयितव्यः । सायकशब्दोऽपि षोऽन्तकर्मणि इत्यस्य क्रियाशब्दो विशेषणम् न वज्रनाम वज्रशब्देनोपात्तत्वात् । सायकं शत्रूणामन्तकरम् मघवा धनवानिन्द्रः आ अदत्त गृहीतवान् वज्रम् । गृहीत्वा च अहन् एनम् एनमिति पूर्वस्यामृच्यादिष्टस्य मेघस्यान्वादेशः समनन्तरस्य वा । वज्रमिति तृतीयार्थे द्वितीया । हतवानेनं मेघमनेन वा वज्रेण । कीदृशम् । प्रथमजाम् अग्रे जातम् अहीनाम् निर्धारणे एषा षष्ठी । मेघानां मध्ये[1] ॥ ३ ॥

वेङ्कट० वृषभ इवाचरन् अवृणीत[2] सोमम् आभिप्लविकस्य '[3]पूर्वस्त्र्यहस्त्रिकद्रुकस्तस्मिन्[3] सुतम् अपिबत् सोमम् । आ अदत्त अन्तकरम् आयुधम् मघवा । तेन एनम् मेघशिरसम्[4] अहिम्[5] असुरं मेघानां मुख्यम् अहन् ॥ ३ ॥

मुद्गल० वृषायमाणः वृष इव आचरन् इन्द्रः सोमम् अवृणीत वृतवान् त्रिकद्रुकेषु ज्योतिर्गौरायुः इत्येतन्नामकास्त्रयो यागाः त्रिकद्रुका उच्यन्ते । तेषु सुतस्य अभिषुतस्य सोमस्यांशम् अपिबत् पीतवान् । मघवा धनवान् इन्द्रः सायकम् वन्धकम् वज्रम् आ अदत्त स्वीकृतवान् । वज्रेण अहीनाम् मेघानां मध्ये प्रथमजाम् प्रथमोत्पन्नम् एनम् मेघम् अहन् हतवान् ॥ ३ ॥

---

१-१. वृषायमाणः । वृष अशने । यथा निरुक्तिरत्यन्तं 'अत्र पितर.' इत्यादिषु दृश्यते । शतपथश्रुतिं विवृणोति । 'अत्र पितरो मादयध्वं यथा भागमावृषायध्वम्' इत्यस्य 'यथाभागमश्नीतेत्येवैतदाह' (?) । तथा 'अमीमदन्त पितरो यथाभागमावृषायिषत' इत्यत्र 'यथाभागमशिषुरित्येवैतदाह' इति । वृषो वर्षम् । तदात्मन इच्छति इत्यर्थे 'सुप आत्मनः क्यच्' (पा ३,१,८) । कद्रुपथलात् (?) वृषायमाणः । अश्नन् वृषमिच्छन् वा सोमं प्रार्थितवान् अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । अभिप्लवत्र्यहेषु पीतवान् अभिषुतं सोमं तस्यैकदेशं वा । सायकम् षो अन्तकर्मणि । ण्वुल्.[*] (पा ६,१,४५) । इत्यतः । 'आतो युक्' (पा ७,३,३३) । मघं धनम् । तद्वानिन्द्रः । शत्रूणामन्तकरं वज्रमादत्त । एनमिति पूर्वस्य मेघस्य अन्वादेशः । अहीनां मेघानां मध्ये प्रथमजातमेनमहन् मेघं हतवान् इति मु. वि. मा. कु. † नास्ति मूको. ‡-‡ वृषायतिरशनार्थं मूको § °च्छतीति मूको. २. न दृश्यते म[१] वि[१]. ३-३. पूर्वं त्र्यहं त्रिकद्रुकं तस्मिन् साध्व कु. ४. मघशिरसं साध्व कु. मेघशिरः स ऋ[१] वि[१]. ५. नास्ति साम्ब[1] कु.

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ४ ॥

यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥४॥

स्कन्द० [1]यत् यदा हे इन्द्र ! अहन् हतवानसि प्रथमजाम् अहीनाम्, आत् †यदार्थे यच्छब्दश्रुतेरादिति निपातस्तदर्थे वर्तते । तदा तत्सहायानां मायिनाम् अतिसन्धानमायिनाम्‡ अमिनाः प्र मीञ् हिंसायाम् । प्रामिनाः प्रकर्षेण हिंसितवानसि । उत मायाः उतशब्दो मायाशब्दात् परो द्रष्टव्यः । माया अपि । न बलमदात् हठेनैवाहिं¶ हतवान् असि । किं तर्हि । तत्सहायानां मायावतां प्रज्ञामतिसन्धायेत्यर्थः । §तदैव वृष्टिमूलत्वात्§ सर्वजन्मनः सूर्यम् जनयन् द्याम् च उषसम् च । तादीत्नाशब्दस्तादृक्शपर्यायः तावच्छब्दपर्यायो वा । तादृशं मायावत्सहायं तावन्तं वा महापरिमाणम् अन्यं मेघं शत्रुम् शातयितव्यं वैरिणं त्वं न किल विवित्से विन्दतेरिदं रूपम् । न किलाविन्दः । नालभथा इत्यर्थः । यादृगसौ मायावत्सहायो महापरिमाणो वा तादृगन्यो नैवास्तीत्यर्थः । किलशब्द एव तदानींशब्दपर्यायस्तदेस्यैतस्मिन्नर्थे@ वर्तते । सूर्यादीन् जनयंस्तदानीमिति । आत् शब्दस्तु पदपूरण.[1] ॥ ४ ॥

वेङ्कट० यदा इन्द्र ! हतवानसि प्रथमजातम् अहीनाम् । [2]यदा च[2] तदनन्तरं तत्सहायानां मायावताम् मायाः प्रकर्षेण हिंसितवानसि । तदनन्तरमहिना तिरोभूतम् सूर्यम् द्याम् उषसम् च प्रादुर्भावयन् त्वं तदानीं जगति न कंचन शत्रुम् हतशिष्टम्[3] अन्वविन्दः ॥ ४ ॥

मुद्गल० उत अपि च हे इन्द्र ! यत् यदा अहीनाम् मेघानाम् प्रथमजाम् प्रथमोत्पन्नं मेघम् अहन् हतवान् असि । आत् तदनन्तरम् मायिनाम् मायोपेतानामसुराणां सम्बन्धिनीः मायाः[4] प्र अमिनाः प्रकर्षेण नाशितवानसि । अनन्तरम् सूर्यम् उषसम् उषःकालम् द्याम् आकाशं च जनयन् उत्पादयन् आवारकमेघनिवारणेन प्रकाशयन् वर्तसे । तादीत्ना तदानीम् आवरकान्धकाराभावात् शत्रुम् घातकं वैरिणम् न विवित्से किल त्वं न लब्धवान् खलु ॥ ४ ॥

---

१-१. हे इन्द्र यदा त्वमहीनां मेघानां मध्ये प्रथमजातं मेघम् अहन् हतवानसि । आत् तदार्थे । तदा मायावतां माया अपि अमिनाः । प्रकर्षेण प्र नाशयसीत्यर्थः । मीञ् हिंसायाम् । मेघहननेन तत्सहायानां मायायुक्तानां बलं प्रज्ञा चातिसन्धाय प्रामिनाः इत्यर्थः । यदा मेघहानिः तदैव सर्वजन्मनो वृष्टिमूलत्वात् सूर्यं द्याम् उषसं च जनयन् त्वं तादृशं मायावत्समित-मन्यं मेघं शत्रुं शातयितव्यं वैरिणं वा नैव अविन्दः । तावन्तं महापरिमाणं मेघम् इति वा तादीत्नार्थः । 'तादीत्ना स्यात्तदा-समः' । तादृगर्थे वा । अहीनां प्रथमजाः अहिः परिणामतो यादृक् यावानिति वा तद्वदन्यो नैव सृष्टे जाते । विद्लृ लाभे । लिट् । न अलभथाः । किल एवार्थे वि° म कु. †-† यदाशब्द° साम्ब. ‡ 'मप्रमा' मूको. ¶ हठेनैवाहिम् मूको. §-§ तत्र देववृष्टि° साम्ब°; तत्र देवदृष्टि° साम्ब°. @ 'स्तदयमि°' साम्ब°. २-२. नास्ति साम्ब°. ३. गताशि° वि° अ°. ४. नास्ति वि.

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाऽहिः शयत उपपृक्पृथिव्याः ॥ ५ ॥

अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण । महता । वधेन । स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥ ५ ॥

स्कन्द० [1]अहन् हतवान्[†] वृत्रम् मेघं वृत्रनामानमसुरं वा वृत्रतरम् वर्ततेर्गत्यर्थस्येदं रूपम् । गन्तृतरम् अतिशयेन गन्तारमित्यर्थः । व्यंसम् विगतांसं विच्छिन्नांसम् व्यंसनामानमपरमसुरं वा । कः । इन्द्रः । केन । वज्रेण । कीदृशेन । महता वधेन नित्यं हन्त्रा । अथवा हननतामैव वधः । प्रहारः । वज्रं च तत् करणम् । वज्रेण महता प्रहारेण हतवान् । हतश्च सन् स्कन्धांसीव वृक्षाणां स्थूला अधोभागाः स्कन्धांसि । तानि यथा कुलिशेन वज्रनामैतत् (तु. निघ २,२०) । इह तु आयुधसामान्याद्वा कुठारे प्रयुक्तः । कुठारेण विवृक्णा विविधं छिन्नानि शयीरन् तद्वत् । अहिः मेघः । अंहतेर्वा अहिर्गन्ता वृत्राख्यो व्यंसाख्यश्चासुरः । शयते शेतिरिह स्थानार्थः । आशाशयो जलाशय इति यथा, 'द्विमाता[‡] शयुः' (ऋ १,३१,२) इति यथा । कथं तिष्ठति । उपपृक् पृथिव्याः उपेत्यैष समित्येतस्य स्थाने । संपर्चितः पृथिव्यां भूमौ । §पतितः योऽवसन् मेघे उदकरूपेण भूमौ पतितः तिष्ठति शरीरेणैवासुरः[1]§ ॥ ५ ॥

वेङ्कट० हतवान् वृत्रम् अतिशयेन निवेष्टयितारम् व्यंसम् चापरमसुरम् इन्द्रः [2]महता आयुधेन[2] हन्त्रा । यथा वृक्षस्य स्कन्धांसि कुठारेण विविधं छिन्नानि शेरते एवम् अहिः शेते छिन्नपादहस्तः पृथिव्याः उपपर्चनः ॥ ५ ॥

मुद्गल० अयम् इन्द्रः महता वधेन सम्पादितो यो महान् वधः तेन वज्रेण वृत्रतरम् अतिशयेन लोकानां आवरकम् अन्धकाररूपम् तम् वृत्रम् एतन्नामकमसुरम् व्यंसम् विगतांसं छिन्नबाहुर्यथा भवति तथा अहन् हतवान् । अंसच्छेदे दृष्टान्तः । कुलिशेन कुठारेण विवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव । यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत् । तथा सति अहिः वृत्रः पृथिव्याः उपरि उपपृक् सामीप्येन संपृक्तः शयते शयनं करोति । छिन्नकाष्ठवत् भूमौ पततीत्यर्थः ॥ ५ ॥

इति प्रथमाष्टके द्वितीयाध्याये षट्त्रिंशो वर्गः ॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

---

१-१. अहन् इन्द्रो वज्रेण महता वधेन । नित्यहन्त्रा प्रहारेण इति वा वधार्थः । तेन वृत्रमहन् । वृत्रसंज्ञं असुरं । तौ अरातिनि वा । आवरणशीलत्वात् वृत्रं मेघं वृत्रतरं गन्तारम् अत्यर्थं गन्तारम् । विच्छिन्नांसम् इति वा । यथा कुठारेण विविधं छिन्नाः शाखाः पृथिव्या उपपृक् पृथिवीसंपर्चिताः तद्वदहिः शयते । उदकरूपेण भूमौ पतितः इति मेघपक्षे । असुरपक्षे स्वशरीरेण । 'शाखा स्कन्धा यथा वन्या' (?) इति । व्यत्ययेन नपुंसकम् । उपः समि । अहि गतौ । गन्ता वृत्र व्यंसश्च पतितौ शयाते । शीङ् स्वप्ने । जलाशय इव वि॰ भ॰ कु. †-† नास्ति सायण. ‡ यथा द्विमाता सायण. §-§ प॰ … … वसन् मेघे उदकरूपेण भूमौ पतितः तिष्ठति इति मूको. २-२. महायुधेन वि॰ भ॰.

अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न ।
अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

स्कन्द० [1]योद्धुमसमर्थः अयोद्धा। यथा सः दुर्मदः कुत्सितमदः सुरया मत्तः सन्नसमर्थोऽपि कश्चिद् युद्धायाह्वयेत, एवं वृत्रः आ हि जुह्वे हिशब्दः पदपूरणः। युद्धाय आहूतवानिन्द्रम्। कीदृशम्। महावीरम् तुविबाधम् महाविक्रान्तं बहूनां शत्रूणां बाधितारम्। ऋजीषम् †अर्जयितारं शत्रुधनानाम्†। अथवा यत् सोमस्य पूयमानस्य‡ अतिरिच्यते तदृजीषमुच्यते। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थकः। ऋजीषिणमित्यर्थः। कः। पुनरिन्द्रस्य ऋजीषेण सम्बन्धः। §हर्योरस्य स भागो धानाश्चेति। आहूय च युद्धायेन्द्रं वृत्रः न अतारीत् तरतिरत्र शक्नोत्यर्थे। शक्नोतेश्च नित्यं कर्मभूतधात्वन्तरसापेक्षत्वात् सोढुमिति वाक्यशेषः। नाशकत्। अस्य - इन्द्रस्य स्वभूतानाम् समृतिम् सङ्गतिम् वधानाम् प्रहाराणाम्। नासहतेत्यर्थः। अथ असहमानः किं कृतवान्। उच्यते। सम् रुजानाः पिपिषे ग्रीवाः किल रुजाना उच्यन्ते। आत्मीया ग्रीवाः संपिष्टवान् चूर्णितवान्। प्रहारैर्वध्यमानश्चूर्णीकृतग्रीव इत्यर्थः। अथवा 'रुजानाः' (निघ १,१३) इति नदीनाम। मेघश्च वृत्रः। नदीः संपिष्टवान्। बहुनोदकेन नदीनां कूलानि संपिष्य स्रोतांसि प्रवाहितवानित्यर्थः। सामर्थ्याद् वा गत्यर्थः संपिषिः। उदकरूपेण नदीः प्रति जगामेत्यर्थः। इन्द्रः शातयिता यस्य स इन्द्रशत्रुः[1] ॥ ६ ॥

वेङ्कट० युद्धासमर्थः मानी यथा समर्थमाह्वयत्येवम् आहूतवान् इन्द्रम् महावीरम् बहूनां बाधितारम् ऋजीषिणम्। न च अतारीत् इन्द्रस्यायुधानां सङ्गतिम्[2]। अथ पृथिव्यां निपातितोऽवशः सन् नदीः संपिष्टवान्। इन्द्रो यस्य शातयिताऽऽसीदिति[3] ॥ ६ ॥

मुद्गल० दुर्मदः दुष्टमदोपेतो दर्पयुक्तो वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रम् आ जुह्वे हि आहूतवान् खलु। कीदृशमिन्द्रम्। महावीरम् गुणैर्महान् भूत्वा शौर्योपेतम् तुविबाधम् बहूनां बाधकम् ऋजीषम् शत्रूणामपार्जकम्। अस्य ईदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषाम् वधानाम् समृतिम् सङ्गमम् न अतारीत् पूर्वोक्तो दुर्मदः तरितुं नाशक्नोत्। इन्द्रशत्रुः[4] इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्र इन्द्रेण हतो नदीषु पतितः सन् रुजानाः नदीः सम् पिपिषे सम्यक् पिष्टवान्। सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः ॥६॥

---

१-१. अयोद्धेव दुर्मदो वृत्र इन्द्रमा जुह्वे। योद्धुमसमर्थोऽपि सुरापानमत्तः य आह्वयति सः अयोद्धा। स इव। आत्मबलं तद्वीर्यं च अजानन् कुत्सितमदः। एवंभूतं त्वाम् आह्वयते। महाविक्रान्तं बहूनां शत्रूणां बाधितारम् ऋजीषिणम्। यत्सोमस्य पूयमानस्य अतिरिच्यते तदृजीषम्। माध्यन्दिनाभिषुत नीरसीकृतमृजीषम्। तमे(दे)व तृतीयसवने हारियोजने च अभिषुणोति। तदिन्द्रास्वभागम्(गः)। धानाश्च विप्रुषः(१)। एतद्(एष) इन्द्रस्य च ऋजीषस्य च संबन्धः। तद्वन्तमिन्द्रमाहूय युद्धे इन्द्रस्य वधाना प्रहाराणां स्तानि न अतारीत् नाशक्नोत्। प्रहारान् नासहत सोढुमित्यर्थः। तृ शक्तौ। तरो मक्रे। इन्द्रशत्रुः इन्द्रः शातयिता यस्य सः। रुजानाः आत्मग्रीवाः ताः संपिष्टवान् चूर्णीकृतवान्। इन्द्रप्रहारचूर्णीभूतग्रीवः इति असुरपक्षे। मेघपक्षे तु नद्यो रुजानाः। नदीकूलानि संपिष्य स्रोतांसि प्रवाहितवान्। पिष पेषणे गतौ वा। उदकरूपेण नदीः प्रति जगाम इति वा वि[1] स कु. †-† तु. स्क. [या ६,४.], वेङ्. आम्नाता मूको. ‡ सूयमा° मूको.
§ हारियोजनेऽस्य साम्ब[1]. २. °गतिम् साम्ब कु. ३. °सीत् कु. ४. नास्ति मै[1].

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद् व्यस्तः ॥ ७ ॥

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान ।
वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

स्कन्द० [1]अपात् अहस्तः इति लुप्तोपमौ । अपाद इव अहस्त इव । यथा कश्चित् पादवर्जितः कश्चिदहस्तोऽप्यचेष्टमानः† किञ्चित् पृतन्यति, एवम् अपृतन्यत् असङ्ग्रामयत् योधितवान् इन्द्रम् । योध्यमानश्चेन्द्रः आ‡ अस्य वज्रम् अधि आ§ इत्युपसर्गौ जघानेत्याख्यातेन सम्बन्धयितव्यः । अस्य वृत्रस्य अधि उपरि सानौ समुच्छ्रिते प्रदेशे आ जघान ।|हन्तिर्गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः|। आगमितवान् वज्रम् । वृष्णः वर्षितुरिन्द्रस्य वध्रिः वध्योऽपि¶ प्रतिमानम् बुभूषन् प्रतिद्वन्द्वित्वमाप्तुमिच्छन् पुरुत्रा बहुत्राणकृद् इन्द्रः‡ अशयत् अतिष्ठत् । व्यस्तः विसण्ड्य भूमौ क्षिप्त इत्यर्थः । अथवा वृत्रः मेघः, स बहुषु नदीतटाकादिषु प्रदेशेषूदकरूपेणातिष्ठत् विक्षिप्त इति । केचित्तु वध्रिशब्दस्य रूढिबलाद् वृषशब्दोऽत्र प्रजननसमर्थे बलवति वृषभे वर्तते । वध्रिः❀ छिन्नवृषणे प्रजननासमर्थे दुर्बले बलीवर्दे वर्तत इति व्याचक्षते । यथा प्रजननसमर्थस्य बलवतो वृषभस्य दुर्बल प्रजननासमर्थः प्रतिमानम् बुभूषन्[1] विक्षिप्तस्तिष्ठेत् एवं वृत्र इन्द्रस्येति ॥ ७ ॥

वेङ्कट० [2]हस्तपादवर्जितोऽपि[2] इन्द्रम् अपृतन्यत् । आ जघान अस्य उच्छ्रिते देशे वज्रम् इन्द्रः । वर्षितुर्वृषभस्य छिन्नवृषणः प्रतिद्वन्द्वीभवितुमिच्छन्नित्यौपमिकम् । अनेकेषु देशेषु वृत्रः अशयत् शकलीकृतः ॥ ७ ॥

मुद्गल० अपात् वज्रेण छिन्नत्वात् पादरहितः अहस्तः हस्तरहितः वृत्रः इन्द्रम् उद्दिश्य अपृतन्यत् पृतनां युद्धमैच्छत् । द्वेषाधिक्येन बहुधा छिन्नोऽपि युद्धं न परित्यक्तवानित्यर्थः । अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानौ पर्वतसानुसदृशे प्रौढस्कन्धे अधि उपरि वज्रम् आ जघान इन्द्रः आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टान्तः । वध्रिः छिन्नमुष्कः पुरुषः वृष्णः[3] रेतस्सेचनसमर्थस्य पुरुषान्तरस्य प्रतिमानम् सादृश्यम् बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः । सः वृत्रः पुरुत्रा बहुष्ववयवेषु व्यस्तः विविधं क्षिप्तः ताडितः सन् अशयत् भूमौ पतितवान् ॥ ७ ॥

---

१-१. अपात् अहस्तः । अत्रोपमा लुप्ता । अपादिव अहस्त इवेत्यर्थः । यथा पादहस्तवर्जितः पुरुषः चेष्टितुमशक्तः तद्वद्वृत्रोऽपि अपृतन्यत् इन्द्रं प्रति किञ्चित् असंग्रामयत् । योध्यमानश्चेन्द्रः अस्याधि अस्योपरि सानौ समुच्छ्रिते प्रदेशे आ जघान आगमितवान् वज्रम् । हन्तिर्गत्यर्थः अन्तर्णीतण्यर्थश्च । पृतना युद्धे । क्यजन्तत्वात् युध्यधातुत्वम् । लङ् च । अधिसत्वौ । वर्षनार्थं मेघं छिन्नवान् वर्षितुमित्यर्थः । वृष्णः वर्षितुरिन्द्रस्य वध्रिः वध्योऽपि प्रतिद्वन्द्वी भवितुमिच्छन् बहु भङ्गकरणाय अशिरद् व्यस्तः । विसण्ड्य भूमौ क्षिप्त आसीत् । मेघपक्षे नदीतटाकादिषु उदकरूपेण । बहुधा विक्षिप्तः । ग्रीक् स्थाने 'दुर्बले च बलीवर्दे अभियुक्ते इति भवेत्' इति । प्रजननसमर्थे वृषभे वा वृषशब्दः । 'पुंसि दर्शिमुष्कमतौ' इति । यथा प्रजननसमर्थस्य बलवद्वृषभस्य प्रतिद्वन्द्वेच्छया दुर्बलो वध्रिः वि[1] अ कु. † कश्चिदप्य साम्ब. ‡ नास्ति मूको. § अधीत्युपसर्गः साम्ब[1]. |-| नास्ति साम्ब. ¶ वध्यो[1] साम्ब. ❀ तत्र व्यान्तर्णीतण्यर्थः । वधि साम्ब. २-२. अहस्तपादोऽपि वि[1] अपं, अपादहस्तोऽपि अ[1]. ३. नास्ति वि.

नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।
याश्चिद् वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः । याः ।
चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥

स्कन्द० [1]यथा महान्तम् नदम् भिन्नम् भग्नकूलमापोऽतीत्य गच्छेयुः, तद्वत् अमुया †इत्थंभूतलक्षणया तृतीयया अर्थे† सामर्थ्यात् प्रतिनिर्देशः । अनया महत्या वृद्धया सम्बद्धम् शयानम् तिष्ठन्तम् मनः रुहाणाः आरोहन्त्यः । मनुष्याणां चित्तं ह्लादयन्त्य इत्यर्थः । अति यन्ति अतीत्यान्यतो गच्छन्ति आपः । इन्द्रेण भिन्नान्मेघाद्विस्सृत्यान्यतो गच्छन्तीत्यर्थः । चित् शब्दः पदपूरणः, एवार्थो वा । याः एव वृत्रः महिना महत्वा सेनालक्षणेन स्वशरीरेण वा पर्यतिष्ठत् परिवृत्यातिष्ठत् तासाम् एवेन्द्रेण हते वृत्रे अहिः मेघः पत्सुतःशीः बभूव । पादशब्दात् तृतीयार्थे सप्तमी । 'पादः पत्' (पा ६,४,१३०) इति पद्भावः । पत्सु । तृतीयार्थवृत्तित्वात् सप्तम्या. सप्तम्यन्तादप्यस्मात् 'तेनैकदिक्', 'तसिश्च' (पा ४,३,११२;११३) इति तस् । सप्तमीविभक्तेरलुक् । पत्सुतः शेते तिष्ठतीति पत्सुतःशीः । यतः पादौ ततः स्थाता बभूव । अधोवृत्तिर्बभूवेत्यर्थः । हताद्धि मेघादूर्ध्वं निश्चरन्तीनामपां पादतः स्थायी भवति मेघः । अत एवमुच्यते—तासामेवाहिः पत्सुतःशीर्बभूवेति[1] ॥ ८ ॥

वेङ्कट० यथा भिन्नम् सेतुम् आपः अति यन्ति, एवम् अनया पृथिव्या सह शयानम् मनुष्याणाम् मनः आरोहन्त्यो ह्लादयन्त्योऽतीत्य गच्छन्ति । याः चित् अपः वृत्रः [2]शरीरमहत्तया परिवृत्य अतिष्ठन्[2] तासाम् अहिः असुरः [3]पत्तःशायी[3] बभूव ॥ ८ ॥

मुद्गल० अमुया अमुष्यां पृथिव्याम् शयानम् पतितं मृतं[4] वृत्रम् आपः जलानि अति यन्ति अतिक्रम्य गच्छन्ति । दृष्टान्तः । भिन्नम् बहुधाभिन्नकूलम् नदम् न सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपः नद्याः कूलं भित्वा अतिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । मनः रुहाणाः नृणां चित्तमारोहन्त्यः पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता[5] आपः भूमौ [6]वृष्ट्या न पतन्ति[6] । तदानीं नृणां मनः खिद्यते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति । तदा वृष्टिलाभेन तु मनुष्यास्तुष्यन्तीत्यर्थः । तदेवोत्तरार्द्धेन स्पष्टीक्रियते । वृत्रः जीवनदशायाम् महिना स्वकीयेन महिम्ना

1-1. आपो मनो रुहाणा मनुष्याणां चित्तमारोहन्त्यः आह्लादयन्त्यः अमुया शयानम् अति यन्ति । अनया महत्या वृद्धया संबध्य तिष्ठन्तम् मनो रुहाणा अतिगच्छन्ति आपः । यथा महान्तं नदं भिन्नकूलमतीत्य गच्छेयुः तद्वत् । सर्वस्योपकारिण्य आपो मेघनिरोधान्निष्कन्ना आसुः । तदा इन्द्रो मेघं हतवान् । तदा सन्तुष्य वयं सर्वमाह्लादयामः इति विचिन्त्य अवर्षयन् इत्यर्थः । या एव वृत्रो महत्या स्वतन्वा सेनया वा परिवृत्यातिष्ठत्, इन्द्रेण हते सति, अहिः तासामेव पादसमीपस्थायी बभूव । सुपि 'पादः पत्' इति पद्भावः । 'तेनैकदिक्', 'तसिश्च' इति पत्सुतः । पादेनैकदिक् इत्यर्थः । टार्थे सुप् । पत्सुतः शेते इति पत्सुतःशीः । शीङ् स्वप्ने । यतोयतः अपां पाता वर्षधाराः ततस्ततः स्थाता अभूदित्यर्थः । हताद्धि मेघात् ऊर्ध्वं निश्चरन्तीनाम् अपां पादतः स्थायी मेघ । अत एवम् वि[1] अ कु. † लक्षणया [illegible] मूको. 2-2. °हत्त···इत् वि[2]. 3-3. पत्तःशायी [illegible] 4. नास्ति वि [illegible] 5. [illegible]
6-6. वृष्य न भवन्ति मै[1].

या पितृथा एव मेघगता अपः पर्यतिष्ठत् परिवृत्य स्थितवान्, अहिः वृत्रो मेघः तासाम् अपाम् पत्सुतः शाः पादस्याधः शयानः बभूव। यद्यपि अपां पादो नास्ति 'तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात् पादस्याधः शयनमुपपद्यते'[1] ॥ ८ ॥

नीचावया अभवद् वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव । वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धेनुः ॥ ९ ॥

स्कन्द० [2]वयः शाखाः अन्यत्र इह तु शाखास्थानीये भुजे वयःशब्दो वर्तते । नीचा वयो यस्याः सा नीचावयाः प्रलम्बबाहुः अभवत्। का। वृत्रपुत्रा वृत्रः पुत्रो यस्याः सा वृत्रपुत्रा। वृत्रस्य माता। वृत्रे हन्यमाने तन्माता तद्वधपरिरक्षया तस्योपरि प्रसार्य बाहू अतिष्ठदित्यर्थः। तथा व्यवस्थितायाः अपि इन्द्रः अस्याः अव वधः जभार वध वज्रनामैतत् (द्र निघ २,२०)। वज्रं जभार प्रापितवान्। तयाऽवष्टब्धोऽपि वृत्रस्यैव शरीरे वज्रं क्षिप्तवानित्यर्थः। केन पुनः प्रकारेण नीचावया अभवत्। उत्तरा उपरिवर्तिनी वृत्रस्योपरि निकुब्जिता प्रलम्बितबाहुः सूः सूते इति सूर्माता। अधरः अधोवर्ती बाहुजङ्घान्तरस्थायी पुत्रः आसीत्। दानुः वृत्रस्य माता शये स्थितवती। सहवत्सा न धेनुः वत्ससहितेव धेनुः[3] ॥ ९ ॥

वेङ्कट० नीचीनबाहुर्नासा अभवत् वृत्रो यस्याः पुत्रः। वृत्रे हन्यमाने तन्माता तद्वधपरिरिरक्षिषया[1] तस्योपरि बाहू प्रसार्यातिष्ठत्। अथ इन्द्रः अस्याः अधस्ताद् वृत्रशरीर एव वज्रं प्रहृतवान्। तदानीं वृत्रस्य उपरि आसीत् तन्माता[4] पुत्र[5] च अधः। तदानीम् दानुः वृत्रमाता वत्ससहिता धेनुः इव शये ॥ ९ ॥

मुद्गल० वृत्रपुत्रा वृत्रः पुत्रो यस्याः मातुः सेयं माता वृत्रपुत्रा नीचावयाः न्यग्भावं प्राप्ता हता(?) अभवत्। पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः। तदानीमयम् इन्द्रः अस्याः मातुः अव अधोभागे वृत्रस्योपरि वधः हननसाधनमायुधम् जभार प्रहृतवान्। तदानीम् सूः माता उत्तरा उपरिस्थिता आसीत्। पुत्रः तु अधरः अधोभागे स्थितः आसीत्। सा च दानुः दानवी वृत्रमाता शये मृता(?) शयनं कृतवती। दृष्टान्तः। धेनुः गौः सहवत्सा न यथा वत्ससहिता शयनं करोति तद्वत् ॥ ९ ॥

---

१ १ वृत्रस्याधः शयनमुपपद्यते मूको    १ २ वृत्रः पुत्रो यस्याः सा वृत्रपुत्रा वृत्रमाता नीचीनबाहुरभवत्। वृत्रे हन्यमाने तन्माता पुत्ररक्षार्थं तस्योपरि प्रसार्य बाहू अतिष्ठत् इत्यर्थः। तथा व्यवस्थिताया अपि इन्द्रः अस्याः अधस्तात् वृत्रस्य हतवान्। 'वधः' 'स्थितो वधः' इत्यायुधे। तयाऽवष्टब्धोऽपि वृत्रस्यैव शरीरे वधः वज्रं जभार। शित्वात् हरतेः। हरतरकार 'हृग्रहोर्भश्छन्दसि' (पा ७,२,३२) इति भलि हृद्। अभि मुखी। अथापराद्दस्याधस्तात् अपामेति पठार्थेन नीचावयस्त्वं समर्थ्यते। उत्तरा उपरिवर्तिनी वृत्रस्य माता भवित्री। 'सूर्वेदः' इति प्रयाया सूर्माता। अधरः अधोवर्ती ... प्रलम्बबाहुः स्थमातुः बाहुजङ्घान्तरस्थायी पुत्रः आसीत्। माता शये तस्मै सहवत्सा धेनुरिव वि' म द्र
३ 'गर्दितमा श्याम कु    ४ माता वि' हर्पे    ५ वृत्र साम्य कु

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥ १० ॥

अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥ १० ॥

स्कन्द० 'अतिष्ठन्तीनाम् अनवस्थायिनीनां चलानाम् अनिवेशनानाम् निविश्यते क्षीयते यस्मिन् नदीनदादौ स्थाने तन्निवेशनम्, तद् यासां नास्ति भूयस्त्वात् तासामनिवेशनानाम् । भूयस्त्वादसम्भविन्यवस्थानां चलानां† बह्वीनां चेत्यर्थः । काष्ठानाम् मध्ये आपः काष्ठा उच्यन्ते । अपाम् मध्ये निहितम् स्थापितम् शरीरम् । कस्य । वृत्रस्य वृत्रनाम्नोऽसुरस्य । कथं च पुनर्निहितम् । निण्यम् अन्तर्हितनामैतत् । अन्तर्हितं मरणभयात् गुप्तं निहितमित्यर्थः । एवम्भूतमपि वि चरन्ति आपः चरतिर्गत्यर्थः । सर्वे च गत्यर्था ज्ञानार्थाः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थता‡ । विज्ञापयन्ति आप आत्मनो मध्ये । ता इन्द्राय प्रकाशयन्त्याप इत्यर्थः । प्रकाशितेऽस्मिन्निन्द्रेण हते दीर्घम् मरणलक्षणम् तमः आशयत् आश्रितवान् इन्द्रशत्रुः वृत्रः । अथवा वृत्रो मेघः तस्य शरीरमध्ये आपो निधीयन्ते । तच्छरीरमपां मध्ये इत्येवस्याः सप्तम्या निराकाङ्क्षीकरणार्थमवस्थितानाम्§ इति वाक्यशेषः । अपां मध्येऽवस्थितानां बहिर्निहितं शरीरं मेघस्य । तथापि सुव्यवस्थितस्य वृत्रस्य निण्यं वि चरन्त्यापः । निण्यमिति नान्तर्हितनाम । किं तर्हि । येन प्रदेशेन मेघो नीचैर्नमति छिद्रीभवति तदपां निर्गमनबिलं निण्यम् । विचरन्तीत्यपि शुद्धज्ञानार्थ एव, नान्तर्णीतण्यर्थः । मेघनिर्गमनबिलं विजानन्त्याप इत्यर्थः । अप्सु च निर्जिगमिषन्तीषु तदवरुरुत्सया दीर्घं समस्तनभोमण्डलव्यापि तम आशयत् आश्रितवानिन्द्रशत्रुर्मेघः । तमोरूपेण स्वरूपेण मेघः समस्तं नभो व्याप्यातिष्ठदित्यर्थः[1] ॥ १० ॥

वेङ्कट० अनिष्ठन्तीनाम् अस्थानानाम्[2] अपाम् मध्ये वृत्रस्य शरीरम् अन्तर्हितं प्रति गच्छन्ति आपः इन्द्रस्य वृत्रं निलीनं दर्शयितुम् । ततः[3] इन्द्रेण हतः वृत्रः दीर्घम् तमः आशयत् ममारेति ॥ १० ॥

---

१-१. 'आपोऽपि काष्ठा उच्यन्ते' इति निरुक्तम् ( २,१५ ) । 'क्षोदः क्षीर रज काष्ठम्' इति भाष्यानुक्रमण्यामपि । अपां बहुत्वाद् अनवस्थायित्वं मनिवेशित्वम् च युज्यते एव । स्थाननिवेशरहितानामपां मध्ये निहितं वृत्रस्य शरीरं निण्यं तिरस्कृतं विज्ञापयन्ति इन्द्राय आपः । 'अपगूळ्ह हिरुङ् निण्यम्' इति गूढे । 'अहिर्वृत्र परिषदः' इति मेघे । चर गतिभक्षणयो । मनसा अवगम्यते इति गत्यर्थाः सर्वे ज्ञानार्थाश्च । सोऽन्तर्णीतश्च ( सान्तर्णीत च वि॰ अ ) । तथोऽर्थ चेत् (?) । वृत्रशरीरं मरणभयादपां मध्ये अन्तर्हितमपि आपः प्रकाशयन्ति इत्यर्थः । प्रकाशितेऽस्मिन् इन्द्र. अहन् । तदा इन्द्रशत्रुर्वृत्रः मरणलक्षणं दीर्घं तमः आश्रितवान् दीर्घनिद्रां प्रवेशित इव । मेघे तु मेघमध्ये आपो निहिता । तस्मादन्यथा योजना । मध्ये अवस्थिता, आप. बहिर्निहितमेघशरीरान्निर्गमनद्वारं निण्य विजानन्ति । नीचैर्नमतीति निण्य निर्गमनबिलम् । अप्सु निण्येन निर्जिगमिषन्तीषु तदवरोद्धुमिच्छया दीर्घं तम. समस्तनभोमण्डलव्यापितमोरूपेण आतिष्ठत् । नभसि सर्वत्र व्याप्यातिष्ठदित्यर्थः. वि॰ अ कु. † पञ्चानाम् साम्व[1,1]. ‡ °र्थतापि साम्व[2,1]. § °स्थिता मूको. २. अवस्था° वि॰ अ॰. ३. नास्ति साम्व[1].

मुद्गल० इन्द्रस्य शरीरम् आपः वि चरन्ति विशेषेण उपरि आक्रम्य प्रवहन्ति । कीदृशं शरीरम् । निण्यम् निर्नामधेयम् । अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम केनापि न ज्ञायते । एतदेव स्पष्टीक्रियते । काष्ठानाम् अपाम् मध्ये निहितम् निक्षिप्तम् । कीदृशीनां काष्ठानाम् । अतिष्ठन्तीनाम् स्थितिरहितानाम् अनिवेशनानाम् उपवेशनरहितानाम् । प्रवहणस्वभावत्वादेतासां मनुष्यवत् क्वापि स्थितिसम्भवति । इन्द्रशत्रुः वृत्रो जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घम् तमः दीर्घनिद्रात्मकं मरणं यथा भवति तद्वत् आशयत् सर्वतः पतितवान् ॥ १० ॥

इति प्रथमाष्टके द्वितीयाध्याये सप्तत्रिंशो वर्गः ।

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद् ववार ॥ ११ ॥

दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः । अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ ११ ॥

स्कन्द० 'दासपत्नीः दस्यतेरुपक्षयार्थस्य दासः । श्रमादिना उपक्षीणशक्तिः कर्मकरादिः । तस्य पालयित्र्यो "दासपत्न्य" । उपक्षीणशक्तिं हि श्रान्तं कर्मकरादिं पीतमात्रा एवापः आप्यायनेन पालयन्ति । अहिगोपाः अहिना गुप्ताः मेघोदरान्तर्गता' अतिष्ठन् निरुद्धाः । केन निरुद्धाः । अहिगोपा इति वचनादहिना । वृत्रं जघन्वानिति वावचनात् परस्ताद् वृत्रेण वा निरुद्धा अतिष्ठन् आपः । पणिना इव गावः 'पणिर्वणिग् भवति' ( या २,१७ ) । यथा विक्रयार्थं वणिजा गावो निरुद्धास्तिष्ठेयुः तद्वत् । एवं निरुद्धानां तासाम् अपाम् निर्गमनबिलम् अपिहितम् घटितम् यत् आसीत्, वृत्रम् मेघं तदधिष्ठातारमसुरं वा जघन्वान् शत्रुर्योऽयं क्रतुः । मन् अप तत् ववार बिलमपावृतवान् उद्घाटितवान्' ॥११॥

वेङ्कट० दासाधिपत्न्यः अहिना गुप्ताः अतिष्ठन् निरुद्धाः आपः असुरैः इव गावः । तत्र अपाम् बिलम् अपिहितम् यत् आसीत् वृत्रम् जघ्निवान् अप ववार तत् इति ॥ ११ ॥

मुद्गल० दासपत्नीः दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासामपां ताः दासपत्नीः । अत एव अहिगोपाः अहिर्वृत्रो गोपाः रक्षको यासां ताः । गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम् । एतदेव स्पष्टीक्रियते । आपः निरुद्धा अतिष्ठन् इति । दृष्टान्तः । पणिनेव गावः[2] पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । अपाम् यत् बिलम् प्रवहणद्वारम् अपिहितम् वृत्रेण निरुद्धम् आसीत् तत् बिलं प्रवहणद्वारम् वृत्रम् जघन्वान् हतवानिन्द्रः अप ववार अपावृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् ॥ ११ ॥

---

१-१. दासपत्नीः । दसु उपक्षये इत्यस्मात् घञ् । दासः कर्मकरः । श्रमादिभिर्वा आतपेन वा क्षीणशक्तिः पीतमात्रा एव एनं पान्ति इति तस्य पालयित्र्य आपः दासपत्न्यः । अहिना मेघेन गुप्ता उदरस्था आपः, तेन वा असुरेण वा निरुद्धा तिष्ठन्ति । पणिर्वणिगुच्यते । यथा विक्रयार्थं वणिजा निरुद्धा गावः तिष्ठेयुः तद्वदतिष्ठन्नापः । एवं निरुद्धानामपां निर्गमनार्थं घटितं यदासीद् तदा मेघं तदधिष्ठातारमसुरं वा मन् तद् बिलमपावृतवान् । असु' शत्रवे । मेघे नमसि व्यापि मर्या निर्गमनार्थं तदद्वारमुद्घाटितवान् वि' अ क्रु. † दासपत्नी° सायण°[२]. २. नास्ति वि.

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन् देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥ १२ ॥

अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ।
अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥ १२ ॥

स्कन्द० ¹अश्वशब्दोऽत्र 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' ( या २,५ ) इत्येवमश्वावयवे पृष्ठे वर्तते । अश्वपृष्ठे साधु स्थिरयानः अश्व्यः । वारः वाहयिता । अपोढयितरि वारशब्दः प्रसिद्धः अश्ववार इति । अश्वस्य वा वाहयिताऽश्ववार उच्यते । अथवा शत्रूणां वारः अभवः । तत् तदा हे इन्द्र । कदा । उच्यते । सृके 'सृकः' (निघ २,२०) इति वज्रनाम । 'यस्य च भावेन°' ( पा २,३,३७ ) इत्येव चैषा सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । सङ्ग्रामनाम वा अपठितोऽपि सामर्थ्यात् । सृकशब्दः वज्रगृहीते सङ्ग्रामे वा । यत् यदा त्वाम् प्रत्यहन् हन्तिरत्र गत्यर्थः । त्वा प्रतिगतवान् देवः एकः । कतमः । मरुद्गणः । एवं ह्यैतरेयिण इतिहासमधीयते—'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत् अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति । तथेति तं हनिष्यन्त आद्रवन् । सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति । तानभि प्राश्वसीत् । तस्य श्वसथा-दीषमाणा विश्वे देवा अद्रवन् । मरुतो हैनं नाजहुः । प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त' ( ऐब्रा ३,२० ) इति । तदेतदिहोच्यते—सृके यत् त्वा प्रत्यहन् देव एक इति । अथवा सृक इति तृतीयार्थे सप्तमी । आयुधसामान्याच्च वृत्रायुधे सृकशब्दो वर्तते । हन्तिश्च वधार्थ एव । ‡सृकेण स्वेनायुधेन‡ यदा त्वां प्रतिहतवान् वृत्र इत्यर्थः । किञ्च तदैव त्वं देव दानादिगुणयुक्त एक एव तम् अजयः । गाः तदैव अजयः । हे शूर । सोमम्, तदैव अव असृजः । अवसर्गोऽनुज्ञा । अनुज्ञातवान् । सर्तवे गमनाय सप्त सिन्धून् सप्त-सङ्ख्याका गङ्गाद्याः प्रधानभूता नदीः¹ ॥ १२ ॥

वेङ्कट० यदा 'तव प्रतिबोधनार्थमसुरैः²' पीड्यमानः कश्चित् देव त्वां³ त्वदीये वज्रे निहन्ति, तदा त्वम् अश्वपृष्ठस्थ दशानां वारको वाल इव भवसि । शत्रूनुभयतो हंसि । स त्वमसुरेभ्यः अजयः गाः । अजयः च सोमम् । अव असृजः सरणाय सप्त सिन्धून् गङ्गाद्याः सप्त देवनदीः⁴ ॥ १२ ॥

---

१-१ अश्व्यः अश्वपृष्ठे साधु स्थिरयानः । तद्धितत्वात् कृत्स्नवन्निगमः । वाहिता वारः । अश्ववारः शत्रूणां वारो वा । 'सृको वज्रे घने स्यात्' इत्यायुधे । युद्धे वा अपठितः । 'यस्य च भावेन°' इति डि । हे इन्द्र यदा त्वं वज्रं गृहीतवान् वृत्रयुद्धार्थम्, यदा च देवेषु एक एव देवो मरुद्गणः त्वा प्रति गतवांश्च तदा तु (?) अश्व्यो वारः अभूः इति वा अर्थः । त्वया यदा वज्रे गृहीते युद्धे प्रवृत्ते वा मरुत एव त्वां प्रतिजग्मुः । हन गतौ इति अस्मदीये ऐतरेयब्राह्मणे (?) 'इन्द्रो वै वृत्रं हनिष्यन्' इत्यादिभिर्वाक्यैः । अथवा सृकेण इति तार्थे डि । वृत्रायुधपक्षेन च आयुधसामान्यत्वात् । हन हिंसायाम् । यदा सृकेण आयुधेन त्वा प्रतिहतवान् वृत्रः तदा त्वमेक एव दानादिगुणयुक्तः तमजयः । तदैव गाः सोमं च । तदैव अनुज्ञातवान् गमनाय । अवसर्गो ह्यनुज्ञा । सप्तसंख्याका नदीः (नाधात् वि¹ भ) । गङ्गा हि सप्तधा स्रोतस्वती । ता वा अन्या वा प्रधानभूता नदी वि¹ भ कु । † तद्धितेन सृको ‡-‡ स्वायुधेना° साम्ब¹¹² १२. मस्त्वति° साम्ब कु ३ त्वा वि¹ ४ "नव वि¹¹ भ¹ ह्, नव स्रप

मुद्गल० एते वज्रे देव दीप्यमान सर्वायुधकराल एक अद्वितीयो वृत्र यत् यदा त्वा त्वाम् प्रति अहन् प्रतिकूलत्वेन प्रहृतवान् । तदानीं त्वम् अश्व्य वार अश्वसम्बन्धी वाल अभवः । यथाऽश्वस्य वालोऽनायासेन मक्षिकादीन् वारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः । किं च गा पणिनापहृता त्वम् अजय जितवान् । हे शूर! इन्द्र! सोमम् अजय जितवान् । सप्त सिन्धून् गङ्गायमुनासरस्वतीशुतुद्रीपरुष्णीमरुद्वृधार्जीकीयाख्याः सप्त नदीः सर्तवे सर्तुं प्रवाहरूपेण गन्तुम् अव असृजः त्यक्तवान् । वृत्रकृत प्रवाहनिरोधं निराकृतवानित्यर्थः ॥ १२ ॥

नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒ न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च ।
इन्द्र॑श्च॒ यद् यु॑यु॒धाते॒ अहि॑श्चो॒ताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ॥ १३ ॥

न । अ॒स्मै॒ । वि॒ऽद्युत् । न । त॒न्य॒तुः । सि॒षे॒ध॒ । न । याम् । मिह॑म् । अकि॑रत् । ह्रा॒दुनि॑म् ।
च॒ । इन्द्रः॑ । च॒ । यत् । यु॒यु॒धाते॒ इति॑ । अहिः॑ । च॒ । उ॒त । अ॒प॒रीभ्यः॑ । म॒घऽवा॑ । वि । जि॒ग्ये॒ ॥ १३ ॥

स्कन्द० 'न अस्मै' षष्ठ्यर्थे चतुर्थी तादर्थ्ये वा । अस्येन्द्रस्य स्वभूता अस्य वेन्द्रस्यार्थाय न विद्युत् नापि तन्यतुः स्तनयित्नुशब्दः सिषेध अन्तर्णीतण्यर्थोऽत्र सिधिः । अहिं ससाधितवान् वशीकृतवानित्यर्थः । अथवा सिधिरत्रापनयनार्थः । 'ते सेधन्ति पथो वृकम्' ( ऋ १,१०५,११ ) इति यथा । अहिमपनीतवानित्यर्थः । नापि याम् मिहम् मिह सेचने । वृष्टिरत्र मिट्[‡] उच्यते । आकरत् विकीर्णवान् । ह्रादुनम् च ह्रादुनि ह्रात्कारः [§]हनहनशब्दः स च वृष्टिश्चापि न[§] सिषिधतुः । न कश्चिदप्यन्य सिषेधेत्यर्थः । इन्द्र च । यत् यदा युयुधाते अहि च यदिति वचनात् उतशब्दोऽपि तदर्थे । अपराभ्य अपरीशब्दोऽन्यवचनः । तादर्थ्ये चात्र चतुर्थी । अन्यासां मायानामर्थाय । मघवा वि जिग्ये विजितवान् अहिम्[२] ॥ १३ ॥

वेङ्कट० अहिर्मेघरूपं धारयन्निन्द्रस्य वधार्थं विद्युदादीनकरोत् । सर्वानेव तानिन्द्रो जिगाय । न अस्मै इन्द्राय वारणार्थमभवत् विद्युत् । न च गर्जितशब्दः । न च याम् वृष्टिम् अकरोत् अशनिम् च । यदा इन्द्र च अहि च युयुधाते तदानीं विद्युदादिव्यतिरिक्ताभ्योऽपि मायाभ्य वि जिग्ये अहिम् इन्द्र ॥ १३ ॥

मुद्गल० अस्मै इन्द्रार्थं वृत्रेण निर्मिता विद्युत् न[१] सिषेध इन्द्र न प्राप्नोत् । तथा तन्यतु गर्जनम् । याम् मिहम् सेचन या वृष्टिम् अकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टि न सिषेध । ह्रादुनिम् च अशनिमपि या वृत्र प्रयुक्तवान् सापि न सिषेध । इन्द्र च अहि च इन्द्रवृत्रावुभावपि यत् यदा युयुधाते युद्ध कृतवन्तौ तदानीं विद्युदादयो न प्राप्ता इति पूर्वेणान्वय । उत

---

१ °भवत् वि मै°. २ २ अस्य इन्द्रस्य अथाय इन्द्रस्वभूता इति वा । यदा इन्द्रश्च अहिश्च परस्परं युद्ध्येते तदा एते न सिषिधु । विद्युत् तन्यतु स्तनयित्नु । या मिहं अकिरत् सा च ह्रादुनिश्च । अपरेभ्योऽपि मघवा वि जिग्ये । मिह सेचने । वृष्टिर्मिट् । कॄ विक्षेपे । [illegible] वृष्टिं विकिरन् [illegible] साऽपि ह्रादुनि [illegible] । '[illegible] वृष्टिर्मेघनादि च' । न अन्वभवत् । इन्द्रवधार्थमुत्पन्नाश्च । '[illegible]' इति [illegible] । [illegible] (?) । षिधु गत्याम् [illegible] । 'ते सेधन्ति पथो वृकम्' इत्यत्र [illegible] [†] [illegible] मूको [‡] मिट् मूको [§-§] हनहनशब्द [illegible] । [illegible] ३ नास्ति वि

यनरः तीर्णवानस्मि । दृष्टान्तः । श्येनः न भीतः श्येननामको बलवान् पक्षी इव दूरगमनाद् वत्र भयमासीदिति गम्यते । तद्वयं मा भूदित्यभिप्रायः ॥ १४ ॥

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।
सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५ ॥

इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः । सः । इत् । ऊँ इति॑ । राजा॑ । क्ष॒यति॒ । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व ॥ १५ ॥

स्कन्द० [1]इन्द्रः यातः गच्छतः जङ्गमस्याश्वादेः । अवसितस्य षिञ् बन्धने । अबद्धस्य । स्थावरस्य जङ्गमस्य चा इत्यर्थः । किम् । राजा ईश्वरः । शमस्य शान्तस्य च ऋष्यादेः । शृङ्गिणः गवादेः । अथवा जङ्गमग्रहणेनैव गवादेः शृङ्गवतो गृहीतत्वात् शृङ्गशब्दोऽत्र दीप्तिवचनः । दीप्तिमतो नक्षत्रादेः । कीदृशः । वज्रबाहुः बाहुशब्देनात्र हस्तो लक्ष्यते । वज्रहस्तः । सः इत् उ स एव राजा राजृ दीप्तौ । दीप्तः । क्षयति क्षयतेरैश्वर्यकर्मण एतद्रूपम् । ईष्टे । चर्षणीनाम् मनुष्याणामपि । न केवलमीष्ट एव । किं तर्हि । अरान् न नेमिः रथचक्रपृष्ठं हि नेमिरुच्यते । स यथा अरान् परिगृह्णाति तद्वत् । परि ता बभूव परिपूर्वो भवतिः परिग्रहे । ता इति सर्वेषां मनुष्याणां वा जङ्गमादीनां वा प्रतिनिर्देशः । तान् मनुष्यान् तानि वा जङ्गमादीनि परिगृह्णाति वशीकरोतीत्यर्थः[1] ॥ १५ ॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम्[2] ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति[3] ॥
[4]इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
द्वितीयोऽध्यायः[4] ॥

वेङ्कट० इन्द्रः जङ्गमस्य स्थावरस्य च राजा शान्तस्य हरिणादेः शृङ्गिणः महिषादेः च वज्रबाहुः । सः[5] एव[5] मनुष्याणाम् राजा भूत्वा निवसति । परि भवति च तानि[6] भूतानि अरान् इव नेमिः ॥ १५ ॥

इत्थं द्वितीयमध्यायं व्याकरोत् प्रथमेऽष्टके ।
गाधिनिर्माधवो[7] नाम संगृह्यार्थं प्रकाशयन्[8] ॥
इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके द्वितीयोऽध्यायः ॥

---

१-१. यातः जङ्गमम् । अवसितं स्थावरम् । चराचरेश्वर इत्यर्थः । शमः शान्तः करिनोऽक्षः । शृङ्गी दीप्तम् । दहन्तो नक्षत्रादयश्च । ईश्वरः शान्तानां दीप्तानां च । वज्रहस्तः । स एव राजा दीप्तः चर्षणीनां इष्टे मनुष्याणां च ईष्टे । केवलमीष्ट एव न । किं तर्हि । नेमिरिव अरान् परि ता बभूव । रथचक्रपृष्ठं हि नेमिः । स यथा अरान् परिगृह्णाति तद्वत् ता सर्वान् तान् मनुष्यान् सर्वाणि तानि भूतानि । ह्रादशागमिति प्रसिद्धः मरुत्पदः वि° अ कु. † नास्ति मूको २. संहितम् ख. ३. यथामति कु. ४-४. भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये प्रथमाष्टके द्वि° अ; स्कन्दस्वामिकृते ऋग्वेदे भाष्ये प्रथमाष्टके द्वि° वि°, द्वितीयोऽध्यायः कु. ५. नास्ति वि° अ°. ६. देव° वि°१ इदं साम्य कु. ७. तद्वन्ति साम्य कु, नदामी अ° वि°. ८. गाधिनिर्मा° ह वि° कु. ९. प्रदर्शयन् साम्य कु अ° वि°

मुद्गल० वज्रबाहुः इन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतो जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणाद्यप्रवृत्तस्याश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्य महिषबलीवर्दादेश्च राजा अभूत्। सः इत् उ स एव इन्द्रः चर्षणीनाम् मनुष्याणाम् राजा भूत्वा क्षयति निवसति। ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान्। दृष्टान्तः। अरान् न नेमिः यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत्॥ १५॥

इति प्रथमाष्टके द्वितीयाध्याये अष्टात्रिंशो वर्गः।

इति ऋग्भाष्ये द्वितीयोऽध्यायः समाप्तः॥

[ ३३ ]

एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ॥ १ ॥

आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् । सु । प्रऽमतिम् । ववृधाति । अनामृणः । कुवित् । आत् । अस्य । रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥ १ ॥

**स्कन्द०** आ इत आगच्छत मरुतो ऋत्विजो वा । अयाम उप या प्रापणे । उपशब्दोऽप्युपसर्गो 'छन्दसि परेऽपि' (पा १,४,८१) इत्येवं परः प्रयुक्तः[1] । उपायाम उपागच्छाम[2] गव्यन्तः गा इच्छन्तः इन्द्रम् । अथवा अयामेति 'ईमहे यामि' (निघ ३,१९) इत्यस्य याच्ञाकर्मणो रूपम् । उपशब्दस्तूपसर्गो धात्वर्थानुवादी । उपसर्गश्रुतेर्वा योग्यक्रियाध्याहारः[3] । याचामहे उपगम्य गव्यन्त[4] इन्द्रम् । किं पुनरत्र याच्यते । गावः । कुत एतत् । गव्यन्त[5] इति वचनात् । इष्यमाणस्य च याच्यमानत्वात् । कस्मात् पुनरिन्द्रमुपायाम । उच्यते । यस्मात् अस्माकम् सु प्रमतिम् सुशब्दोऽत्र सुष्ठ्वर्थे । प्रशब्दः प्रकर्षे । मतिरपि 'यामि, मन्महे' (निघ ३,१९) इति याच्ञाकर्मसु पाठाद् याच्ञायाम् । सुष्ठु प्रकृष्टां याच्ञाम् । वावृधाति वृधिरत्रान्तर्णीतण्यर्थः । लुडर्थे च लेट् । याचितप्रदानेन[6] पुनः पुनरवीवृधत् । "यद्यद् याचितं तत्तद्[7] दत्तवानित्यर्थः । यस्माच्च अनामृणः मृण हिंसायाम् । अहिंस्यः शत्रुभिर्हिंसितुमशक्यः । कुवित् बहुनामैतत् (द्र निघ ३,१) । अत्यन्तबहु । आत् इति निपातः पदपूरणः । अस्य इन्द्रस्य रायः वसु धनम् 'वसु, रायः, राधः' (निघ २,१०) इति हि धननामसु पाठात् धननामैतत् प्रथमान्तम् । 'रैः दाता' प्रथमार्थे षष्ठीयम् । यस्मादत्यन्तबहुधनत्वात् दानसमर्थ इत्यर्थः । यस्माच्च गवाम् केतम् गोशब्दोऽत्र सास्नादिमद्वचनः उदकनाम वा । केतशब्दोऽपि सामर्थ्यात् समूहवचनः । गवामपां वा समूहम् परम् अत्यन्तोत्कृष्टम् आवर्जते वृजिरत्र सामर्थ्यादन्तर्णीतण्यर्थो दाने वर्तते । आवर्जयति ददाति नः अस्मभ्यम् । यस्मादिदानीमप्यस्मभ्य[8] गा वृष्टिं वा ददात्यतोऽयमर्थः । अथवा 'कित ज्ञाने इत्यस्य[9] केतशब्दः ज्ञेयवचनः । गवामिति तु निर्धारणे षष्ठी । गवां मध्ये यत् केतं ज्ञेयमत्यन्तोत्कृष्टं गोजातं तत्[10] परमावर्जते सुष्ठु ददातीति[11] ॥ १ ॥

**वेङ्कट०** 'एतायामोप गव्यन्त' [12]इत्याचिख्यासति माधवः[12] ।
समामनाता स्वराद् वृत्तिरादौ तत्र प्रदर्श्यते ॥ १ ॥

---

1. प्रयुक्ते अ कु 2. उपग° कु. 3. क्रियाध्याहार्या° अ कु 4. गव्यन्तः अ 5-5 गव्यन्त इच्छन्त रवि 6. प्रदाने मूको 7-7. यद्यद् याचितं तत्तदा अ कु 8. नास्ति अ कु 9. नास्ति रवि 10. °गोजातम्° अ कु 11. नास्ति रवि 12. ददाति कु 12-12. नास्ति अ; वेकटोऽपि वि° अ° रवि

मुख्यस्तत्पुरुष प्रोक्तो द्वन्द्वश्च तदनन्तर[1]।
तृतीयस्तु बहुव्रीहिरव्ययीभाव उत्तर ॥ २ ॥
तत्रोत्तरपदार्थस्य प्राधान्य यत्र वर्तते[2]।
उदात्तस्तत्र भवति 'सुरूपकृत्नुमूतये'[3] ॥ ३ ॥
'द्रविणोदा द्रविणसो'[4], 'हव्यवाहं पुरुप्रियम्'[5]।
'निर्बाधित्य द्रुपदपु'[6], 'नो हिरण्यरथ दस०'[7] ॥ ४ ॥
यदि स्वर[8] पूर्वपदे तदर्थ प्रस्फुटो भवेत्।
'भगभक्तस्य ते वयम्'[9], 'विप्रंनून सुतावत'[10] ॥ ५ ॥
'तवेद्धि सख्यमस्तृतम्'[11], 'अनाधृष्टास ओजसा'[12]।
'अच्छिन्नपत्रा सचन्ताम्'[13], 'अप्रेना सन्त्वनिर्ण'[14] ॥ ६ ॥
अनुदात्तश्च दृष्टो नञ्[15] 'अयोद्धाऽइव† दुर्मदे'[16]।
तादृशोपूत्तरपदे प्राधान्यमिति निर्णय ॥ ७ ॥
कार्ययोगे यदि द्वन्द्व उभयोरपि दृश्यत।
स्थिते[17] पूर्वपदस्यार्थे द्वितीयस्यापि सग्रह ॥ ८ ॥
अन्तोदात्तस्ततो द्वन्द्व 'इन्द्रवायू बृहस्पतिम्'[18]।
'ऋक्सामाभ्यामभिहितौ'[19], 'इहेन्द्राग्नी उप ह्वय'[20] ॥ ९ ॥
समप्रधानयोर्द्वन्द्व उदात्त उभयोरपि।
'द्यावापृथिवी मरुत'[21], 'ह्वयामि मित्रावरुणौ'[22] ॥ १० ॥
प्रधान इन्द्र पूर्वोऽत्र प्रधान क्वचिदुत्तर।
स सोमारुद्रयोर्द्वन्द्व[23] 'मा सहूता'[24] निदर्शनम्[25] ॥ ११ ॥
बहुव्रीहिषु तात्पर्य विशेषणविशेष्ययो।
'अग्निर्होता कविक्रतु'[26], 'अग्ने सूपायनो भव'[27] ॥ १२ ॥
'मित्रं हुव पूतदक्ष'[28], 'श नो विष्णुरुरुक्रम'[29]।
'पञ्चपाद'[30], 'सप्तचक्र'[31], 'त्रिचक्रेण'[32], 'त्रिनाभि'[33] च ॥ १३ ॥

---

१ °न्तरम् वि१ स१ रवि१ २ विधेते स१ रवि१३ ३ ऋ १,४,१ ४ ऋ १,१५,७ ५ ऋ १,१२,२ ६ ऋ १,२४,१३ ७ ऋ १,३०,१६, °थ सदा रवि ८ स्वर लुप वि१ ९ ऋ १,२४,५ १० ऋ १,३,५, °स तासन रवि ११ ऋ १,१५,५ १२ ऋ १,१९,४ १३ ऋ १,२२,११ १४ सन्ति चानिग रवि, ऋ १,२१,५ १५ न वि१ लुप १६ तु पपा, ऋ १,३२,६ † °द्धेव मुको १७ नास्ति लुप वि१ १८ ऋ १,१४,२ १९ ऋ १०,८५,११; "सामभ्या" वेंकम २० ऋ १,२१,१ २१ ऋ १०,६३,९ २२ ऋ १,३५,१ २३ तु तै २,२,१०,५ सोमारुद्रयो । सोमरु° वेंकम २४ ऋ २,३३,४, 'हूतीभि वेंकम, °भूतीभि वि१, °हूति लुप २५ दर्शनम् वेंकम २६ ऋ १,१,५ २७ ऋ १,१,९ २८ ऋ १,२,७ २९ ऋ १,९०,९ ३० ऋ १,१६४,१२ ३१ ऋ १,१६४,२ ३२ १,११८,२ ३३ ऋ १,१६४,२.

उदात्तश्चोभयोर्दृष्ट पूर्वस्मिन्नपि चोत्तरे ।
उदात्तानुगुणश्चार्थो दर्शनीय 'इति स्थिति'[१] ॥ १४ ॥

अन्तोदात्तोऽव्ययीभाव स 'अनुकाम तर्पयधाम्'[२] ।
'प्रतिदोष गृणान'[३] च तादृशा सन्ति चापरे ॥ १५ ॥

अनुकाम विभक्त्यर्थे नाऽनोरर्थोऽस्ति कश्चन ।
पश्चात् कामस्य यद्वास्तु तथाऽप्यन्ते स्वरो भवेत् ॥ १६ ॥

प्रतिदोष गृणानोऽत्र वीप्सा द्योतयति प्रति[४] ।
दोषाशब्दो वाचकश्च ततस्तस्मिन् स्वर स्थित ॥ १७ ॥

अथ विग्रहवाक्यानि विस्पष्टप्रतिपत्तये ।
सुरूपकर्मणा[५] कर्ता पुरूणा च तथा प्रिय ॥ १८ ॥

भाग्यनाऽय[६] तु संभक्तो विप्रैराकृष्यते तथा ।
तव सख्य न हिंसितमयोद्धिस्यस्य निग्रह ॥ १९ ॥

न य समर्थो शुद्ध इति युद्धाऽसामर्थ्यदर्शनम् ।
प्रधान इन्द्रो वायुश्च मित्रश्च वरुणोऽपि च ॥ २० ॥

अश्र क्रतु कवि क्रान्तो[७] बहुव्रीहिस्तु विग्रह ।
'उररसि धर्मो' यस्य त्रीणि चक्राणि सन्ति च ॥ २१ ॥

कामेषु तर्पयेया म पश्चात् कामस्य वा पुन ।
रात्रौरात्रौ प्रतिदोषमिति विग्रहदर्शनम् ॥ २२ ॥

सर्वेष्वेषु समासेषु यत्रयत्र स्वरो भवेत् ।
कारा कुश वाऽत्रप्लव स्वरं त स्थापयेदिति ॥ २३ ॥

हिरण्यस्तूप । 'आगच्छत । गामिच्छन्तो वयम् इन्द्रम् उपगच्छाम । उपगमनानन्तर[८] स अस्माकम् अनेकार्याभिलाषिणी मति सुष्ठु वर्धयति । हिसकवर्जित[१०] अस्य धनस्य सु आवर्जयति । तद्वाह—गनाम् सदघम् कुविन् आवर्जयतीति ॥ १ ॥

सुद्धरू० [११]'त्वाग्ने प्रथम' ( ऋ १,३१,१ ) इति सप्तमानुवाके पञ्च सूक्तानि । तत्र 'एतायाम' इति पञ्चदशर्चं तृतीय सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषि । त्रिष्टुप् छन्द । इन्द्रो देवता[११] ।

देवा परस्परमेव कथयन्ति । हे देवा ! गव्यन्त पणिनामकेनासुरेण अपहृता[१२] अस्मदीया गा प्राप्तुमिच्छन्तो यूयम् एत आगच्छत । युष्माभि सहिता वयम् इन्द्रम् गवानयनक्षमम्

---

१-१ च इति वि[१] छप २ ऋ १,१७,१ ३ ऋ १,२५,१० ४ प्रति छ वि[११] अ[१] ५ सरू[१] वि[१] छप ६ भगे[१] पैक्सप, माग्येन च रवि ७ कान्तो छ ८-८ इति सितामो रवि, उपरमिन्तो रवि[१], सितामो विकभो पैक्सप ९-९ युटितम् छ नास्ति रवि. १० [१]मि उपगमनानन्तरे मूको ११-११ नास्ति मै[१]. १२ हृता वि

उप अयाम प्राप्नवाम[1] । स चेन्द्र अनामृण हिंसकरहित सन् अस्माकम् देयानाम् प्रमतिम् गोलाभेन हर्षयित्वा प्रकृष्टा बुद्धिम् सु वव्धाति सुष्ठु वर्धयति । आत् अनन्तरम् स इन्द्र अस्य राय धनस्य गवाम् गोरूपस्य सम्बन्धि परम् केतम् उत्कृष्ट ज्ञानम् न अस्माकम् कुवित् आवर्जेत अधिक प्रापयति[2] ॥ १ ॥

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥

उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येन । वसतिम् । पतामि ।
इन्द्रम् । नमस्यन् । उपऽमेभि । अर्कै । य । स्तोतृऽभ्य । हव्य । अस्ति । यामन् ॥ २ ॥

स्कन्द० उप शब्द पतामि इत्याख्यातेन सम्बन्धयितव्य । इत् शब्द पदपूरण । अहम् धनदाम् धनस्य दातारम् अप्रतीतम् अप्रतिगतम् । शत्रुभि अप्रत्यभिभूतपूर्वमित्यर्थ[3] । जुष्टाम् न श्येन वसतिम् यथा प्रिया वसतिं[4] निवासस्थान श्येन उपपतेत् एवमुपपतामि उपगच्छामि । कम् । इन्द्रम् । कथम्भूत[5] नमस्यन् परिचरन्[6] । कीदृशै । उपमेभि 'उपम' ( निघ २,१६ ) इति अन्तिकनाम । [7]सन्निकृष्टै । इन्द्रस्य योग्यैरित्यर्थ[7] । कै[8] । अर्कै मन्त्रै । मन्त्रै स्तुवन्नित्यर्थ । कीदृगिन्द्र[9] । उच्यते । य स्तोतृभ्य षष्ठ्यर्थे चतुर्थ्येषा । स्तोतृणाम् हव्य आह्वातव्य [10]अस्ति भवति[10] । क्व[5] । यामन् अधिकरणेऽयं सन्निर्देष्टव्य । यन्ति देवता अस्मिन्निति यामा[11] यज्ञ तत्र ॥ २ ॥

वेङ्कट० उप एव पतामि अहम् धनस्य दातार शत्रुभिरप्रतिगतम् इन्द्रम्[12] अर्चयन् उपमानभूतै मन्त्रै[13] । य इन्द्र स्तोतृभ्य हव्य भवति [14]यज्ञे अहनि[14] वेति[15] ॥ २ ॥

मुद्गल० [16]य इन्द्र[16] स्तोतृभ्य स्तोतृणाम् अनुष्ठातृणाम् अनुमहार्थम् यामन् तदीयशत्रुभि सह युद्धे हव्य अस्ति वैराह्वातव्यो भवति । तम् इन्द्रम् अहम् अनुष्ठाता उपेत् पतामि उपाप्नो- म्येव । किं कुर्वन् । उपमेभि उपमानस्थानीयैरत्तमै अर्कै स्तोत्रै सह नमस्यन् पूजयन् । कीदृशमिन्द्रम् । धनदाम् धनप्रदम् अप्रतीतम् अप्रतिगतम् । बलिभिरतिरस्कृतमित्यर्थ । इन्द्र- प्राप्तौ दृष्टान्त । जुष्टाम् पूर्वं सेविताम् वसतिम् स्वकीयनीडरूपा निवासभूमिम् श्येन न यथा श्येननामको वेगवान् पक्षी स्वकीयस्थान प्रति आदरेण धावति तद्वत् अहम् इन्द्रम् त्वरया प्राप्नोमि ॥ २ ॥

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥

---

१ प्राप्नुवाम मूको २ °येत वि ३ °भूतमि° कु ४ °तिं अ ५ नास्ति मूको ६ परिचरणकर्मासम् । परि° कु ७-७ °स्य इत्यर्थ कु, सन्निकर्षैरित्यर्थ अ ८ नास्ति कु ९ य कीदृ° रवि, कीदृश इन्द्र कु १०-१० नास्ति अ कु ११ याम कु १२ सेन्द्रं अ[1] वि[1,2] तद रवि कु १३ तु रवि, नास्ति मूको १४-१४ यज्ञे हनि कु, °ज्ञे ह्नि अ[1] १५ चेति मूको १६-१६ नास्ति वि.

नि । सर्वऽसेन । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि । चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

स्कन्द० [1]सर्वसेन समग्रया सेनयोपेत इषुधीन् तूणान् नि असक्त षञ्ज सङ्गे। निषजति। आत्मनः पृष्ठे रथे वा निबध्नातीत्यर्थः। निषज्य च अर्यः ईश्वरः इन्द्रः [2]शत्रूणां स्वभूता [2] गाः सम् अजति अज गतिक्षेपणयोः। सम्यक् क्षिपति। स्वराष्ट्रं प्रति प्रेरयति। अपहरतीत्यर्थः। यस्य वष्टि [3]अपहर्तुं कामयते तस्य सर्वस्यापहरति। न केनचित् प्रतिबन्धुं शक्यत इत्यर्थः[3]। [4]अथवा [4] स्वाश्रितेभ्यो दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम्। स्वाश्रितेभ्यो दानकाले समजति सम्यक् क्षिपति अर्पयति[5]। यस्य वष्टि क्षेप्तुं कामयते। यस्मै स्वाश्रिताय अभिप्रेतं दातुमिच्छति तस्मै ददातीत्यर्थः। अथवा गावोऽत्रापोऽभिप्रेताः। निषज्येषुधीन् मेघे अप् आप सम्यक् क्षिपति। यस्य राज्ञो यजमानस्य वा क्षेप्तुं कामयत इत्यर्थः। परोऽर्धर्चः प्रत्यक्षकृतः। पूर्वस्मादिदं वाक्यम्। चोष्कूयमाण स्कुञ् आप्रवणे अन्यत्र[6]। इह तु भूरि वामम् मा पणिः भूः इत्येवं[6] सम्बन्धात् दानार्थः। अत्यर्थं पुनः पुनर्वा ददत् हे इन्द्र! भूरि बहु वाम वननीयमत्यन्तोत्कृष्टं धनं मा पणिर्भूः। पणिर्वणिगुच्यते। तेन चात्र स्वगतमल्पदत्वं लक्ष्यते। माऽल्पदो[7] भूरित्यर्थः। अस्मत् अधि अस्माकमुपरि। अस्मभ्यं माऽल्पं दा इत्यर्थः। हे प्रवृद्ध! [8]वीर्येण शरीरेण वा[8] ॥ ३ ॥

वेङ्कट० निषजति[9] समग्रया सेनयोपेत इषुधीन् आत्मपृष्ठे। अर्यः[10] सम् अजति ईश्वरः पशून् तस्मै, शत्रुभ्यः यस्य शत्रुभिरपहृतानाहर्तुम्[11] इच्छति[12]। ददत् इन्द्र! बहु वननीयं धनम् मा पणिः भूः अस्मासु प्रवृद्ध!। पणिः पणनात्। कारणमनपेक्ष्य[13] देहीति ॥ ३ ॥

मुद्गल० सर्वसेन कृत्स्नसेनायुक्त इषुधीन् बाणानामाधारभूतान् निषङ्गान् नि असक्त नितरां पृष्ठभागे योजितवान्। अर्यः स्वामी इन्द्रः यस्य देवस्य वष्टि असुरेणापहृता गाः प्रदातुं कामयते, तस्य देवस्य गृहे ता गाः सम् अजति सम्यक् प्रापयति। हे प्रवृद्ध! महत्त्वयुक्त[14] इन्द्र! भूरि वामम् प्रभूतं गोरूपं धनम् चोष्कूयमाणः अस्मभ्यं प्रयच्छन् अस्मत् अधि अस्मासु[14] पणिः मा भूः व्यवहारी मा भूया। गवां मूल्यं मा याचस्वेत्यर्थः ॥ ३ ॥

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥

वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् । उपऽशाकेभिः । इन्द्र । धनोः । अधि ।
विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः । प्रऽइतिम् । ईयुः ॥ ४ ॥

---

१-१. सम्प्रमय[?] भ, समग्रया[?] कु. २-२. शत्रून् अभूता भ. ३-३. नास्ति भ रवि. ४-४. नास्ति भ। नास्ति मूको. ५. नास्ति कु. ६. इत्येतेन भ कु. ७. मारपदो भ कु. ८-८. वीर्येणेव शरीरेण वा भ कु. ९. निषजति कु. १०. अथ न कु रवि. ११. °पहृतान् हर्तुम् कु °नाहर्तुम्[?] रवि. १२. इच्छति वि° लपं. १३. °पेक्ष्य वि° लपं °मनपेक्ष्य कु. १४. °स्मदुपरि मै°.

स्कन्द० ते वि आयन् इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्य । उत्तरार्धर्चस्थैश्च भूयोभिर्बहुवचनान्तै सामानाधिकरण्यात् दस्युम् धनिनम् इति बहुवचनस्य स्थाने एकवचनम् । यान् वधी हि[1] हिशब्द पदपूरण । हतवानसि दस्युम् दस्यून् शत्रून्[2] धनिन धनवत घनेन निष्ठुरेण वज्रेण एक एव चरन् पर्यटन् । न च केवलेन वज्रेण । किन्तर्हि[3] । उपशाकेभि शक्यन्ते यैर्दस्यवो हन्तु ते शाका शक्तय । उपशब्दस्तु धात्वर्थानुवादी । शक्तिभिश्च । हे इन्द्र ! । अथवा अङ्गिरसोऽत्र उपशाका [4]अभिप्रेता । [4]चरन्नित्येतदपेक्षा च सहयोगलक्षणा[4] तृतीया । एक[4] एवावधी अङ्गिरोभि सह पर्यटन्नित्यर्थ । अङ्गिरसो हि 'इन्द्रो विदुरङ्गिरसश्च घोरा' ( ऋ १०,१०८,१० ) इति घोरत्वादि दर्शनात् इन्द्रात् किञ्चिन्न्यूनशक्तय । अत एषा तत्सदृशशक्तित्वादिन्द्रापेक्ष उपशाकव्यपदेश । इन्द्रस्य च सखायोऽङ्गिरस । सखिभिश्च सह पर्यटनमप्युपपन्नम्[5] । धनो अधि धनुशब्द अपठितोऽपि[7] अन्तरिक्षनाम । धन्वशब्दस्य वा ( तु निघ १,३ ) अन्तरिक्षनाम्न छान्दसमिद सम्प्रसारण नकारलोपश्च । अन्तरिक्षस्योपरि विषुणक[1] विष्वक् इतश्चेतश्च ते वि आयन् विगता नष्टा । नष्टा[8] अपि सन्त अयज्वान सनका सनकशब्दस्य[8] पुराणवचनस्येद रूपम् । चिरन्तना अयष्टार । जन्मन एव प्रभृति यागवर्जिता इत्यर्थ । प्रेतिम् प्रयाण मरणम् ईयु गता । नष्टा अपि सन्तस्त्वया मारिता एवेत्यर्थ ॥ ४ ॥

वेङ्कट० वधी हि त्व वज्रेण उपक्षपयितार धनवन्त वृत्रम् एक एव चरन् सहायभूतै मरुद्भि सह । तत्र तव धनुष सकाशात् विष्वक् ते वृत्रसहाया विविध गता । अयजमाना प्रत्ता[9] ते मरण गता ॥ ४ ॥

मुद्गल० हे इन्द्र[1] धनिनम् बहुधनोपेतम् दस्युम् चोर वृत्रम् घनेन कठिनेन[10] वज्रेण वधी हि त्व हतवान् खलु उपशाकेभि समीपवर्तिभि शक्तियुक्तै मरुद्भि सहितो भूत्वा एक चरन् प्रहर्तु स्वयमेक एव [11]गच्छन् । यद्यपि मरुत समीपे वर्तन्ते, तथापि ते प्रोत्साहयन्ते, न तु वृत्र प्रहरन्ति । प्रहर्ता तु स्वयमेक एव[11] । धनो अधि इन्द्रसम्बन्धिनो धनुष उपरि विषुणक् विविध नानामुद्दिश्य ते वृत्रानुचरा[12] वि आयन् विविधमागच्छन् । आगत्य च अयज्वन यज्ञविरोधिन सन्त सनका एतन्नामका वृत्रानुचरा प्रेतिम् ईयु मरण प्राप्ता[12] ॥ ४ ॥

परा चिच्छीर्षा ववृजुस्त इन्द्राऽयज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद् दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥

परा । चित् । शीर्षा । ववृजु । ते । इन्द्र । अयज्वान । यज्वऽभि । स्पर्धमाना । प्र । यत् । दिव । हरिऽव । स्थात । उग्र । नि । अव्रतान् । अधम । रोदस्यो ॥ ५ ॥

---

१ नास्ति कु २ नास्ति अ ३ नास्ति मूको ४ ४ °दपेक्षा च सहयोगलक्षणे वु ५ अनेक अ रवि ६ पर्यटनमुप° रवि ७ °पठितमपि मूको ८ सनाशब्द° रवि अ ९ प्रदत्ता वि[1], प्रहता रूप वि[1], प्रुदितम् ल, सकाशे वि[1] १० नास्ति वि ११ ११ नास्ति वि मै[1] १२ १२ नास्ति मूको

स्कन्द० केन पुनः प्रकारेण प्रेतिमीयुः । उच्यते—चित् 'परा चिद् इति' शब्दः पदपूरणः । शीर्षा त्वानि शिरांसि[1] त्वया छिन्नानि सन्ति[2] परा ववृतुः पराङ्मुखानि निवृत्तवन्त । भूमौ पर्यस्तवन्त इत्यर्थः । हे इन्द्र । अयज्वानः यज्वभिः त्वदाश्रितैः सह स्पर्धमाना । कदा । उच्यते—प्र यत् । प्रशब्दः अधम इत्याख्यातेन सम्बन्धयितव्य । यत् यदा दिवः हरिवः स्थातः दिव इत्येतत् स्थातरित्येतेन सम्बन्धयितव्य । हे दिवः स्थातः द्युलोकस्याधिष्ठातः हरिवः उग्र । अप्रसह्य प्र नि अव्रतान् अधमः प्रकर्षेण निरधमः अपक्षालितवानसि अव्रतान् अकर्मणः अयज्वन् रोदस्योः द्यावापृथिव्योः सकाशात् । लोकद्वयादपीत्यर्थः । अथवा प्र यद्दिव इति यच्छब्दः प्रथमा, इन्द्रप्रतिनिर्देशः । अधम इत्यपि लडर्थे[4] लङ् । यस्त्वमव्रतानयज्वनो मनुष्यान् द्वयोरपि निर्धमसि, स वधीर्हि दस्युमिति[5] ॥ ५ ॥

वेङ्कट० परा ववृतुः[7] शीर्षाणि ते इन्द्र । आसन्[8] पराङ्मुखाः[9] युद्धात्[10] । अयज्वानः यज्वभिः स्पर्धमाना । यदा त्वं दिवः स्थापयितः[11] हरिवः उद्गूर्ण[12] । आविष्टया शत्रून् प्रति, तदानीम् अयज्वमानान् तान् द्यावापृथिव्योः नि अधम ॥ ५ ॥

मुद्गल० हे इन्द्र ! ते वृत्रानुचरा शीर्षा स्वकीयानि शिरांसि परा चित् पराङ्मुखान्येव कृत्वा ववृतुः गतवन्तः । कीदृशास्ते । अयज्वानः स्वयं यागरहिताः यज्वभिः यागानुष्ठातृभिः सह स्पर्धमाना । हे हरिवः हरिनामकाश्वयुक्त ! स्थातः स्थितियुक्त ! युद्धे पलायनरहित ! उग्र ! शौर्ययुक्त ! इन्द्र ! यत् यदा दिवः अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतरहितान् वृत्रानुचरान् [13]नि प्र अधम[13] निःशेषेण धमनं कृतवानसि । तदानीं त्वदीयमुखवायुना मुखाः सन्तो ववृतुरिति पूर्वेणान्वयः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये प्रथमो वर्गः ॥

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥ ६ ॥

अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः । नवऽग्वाः । वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः । इन्द्रात् । चितयन्तः । आयन् ॥ ६ ॥

स्कन्द० एकवाक्यतायामिदमयं यत्तच्छब्दावध्याहार्यौ[14] । ये असुराः अयुयुत्सन् योधयितुमिष्टवन्तः[15] अनवद्यस्य प्रशस्यस्येन्द्रस्य सेनाम्, तान् काश्चित् अयातयन्त यातयतिर्वधकर्मा (द्र निघ २,१९) । स्वार्थिकश्चात्र णिच् हतवन्त । णिच्छ्रुतिसामर्थ्याद्वा इन्द्रेण घातितवन्त । के । क्षितयः मनुष्याः । कतमे । नवग्वाः 'अङ्गिरसो नः पितरो नवग्वाः' (ऋ १०,१४,६) इति सामानाधिकरण्यदर्शनादङ्गिरसोऽत्र नवग्वा इत्युच्यन्ते । ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः । ते काश्चिदयातयन्त । केचित्तु वृषायुधः न वध्रयः निरष्टाः वृषः प्रजननसमर्थो बलवान् वृषभः । तेन सह

1 नास्ति कु. 2 2 नास्ति मूको. 3 °सा गि कु. 4 °प्र यदयन्द इति, यच्छ° इति कु. 5 हन्ते मूको. 6 6 नास्ति मनादि अ° इति, °बधान्युम् कु. 7 °वृतुः पराङ्गनि वि° अ°. 8 नास्ति वि° अ°. 9 पाङ्मुखा अ°; °मुखानि वि° अ°. 10 युद्ध कु. 11 °यित इति. 12 °णं इति. 13 13 नियम वि° अ°. 14 °ध्याहार्यौ कु. 15 °मिष्टवन्त इति.

ये युध्यन्ते ते वृषायुध । नशब्द उपमायाम् । वध्रय प्रजननासमर्था दुर्बला[1] वलीवर्दा । निर्गता अक्षाभ्यो निरष्टा[2] पतितदशना[3] अत्यन्तवृद्धा बलीवर्दा । ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते यथा ते ताडिता अत्यन्तपराङ्मुखा नश्येयु, तद्वत् । प्रवद्भि प्लवमानैरत्यन्त शीघ्रगतिभिरश्वै रथैर्वा इन्द्रात् चितयन्त जानन्त[4] । किम् । सामर्थ्यादि न्द्रस्य पराक्रमम् । अथवा चित सचोदने इत्यस्य चितयन्त इति रूपम् । चोदयन्तोऽश्वान् आयन् अगमन्[5] नष्टा इत्यर्थ । अथवा निरष्टा इत्येतत् अशू व्याप्तौ इत्येतस्य रूपम् । प्रवद्भिरित्येतेन च सम्बध्यते । प्रवद्भिरित्येच्च अङ्गिरोविषयम् । यथा वृषेण सह युयुत्समाना वध्रयस्तेन व्याप्ता नश्येयु, एव निरष्टा निश्चयेन व्याप्ता प्रवद्भि प्लवमानैरत्यन्तशीघ्रगतिभि अङ्गिरोभि यस्यानुचराणामृषीणामीदृश पराक्रम स स्वयमसह्यपराक्रम इत्यङ्गिर पराक्रमादेवेन्द्रस्य पराक्रम जानन्तश्चोदयन्तो 'वाहवान् स्थानप्रापादेवेन्द्राद्'[6] आयन् गता नष्टा । ये इन्द्रस्य सेनामयुयुत्सन् ते कचिद्गता केचिन्नष्टा इति समस्तार्थ ॥ ६ ॥

वेङ्कट० *अयुयुत्सन् अनवद्यरहितस्य† सेनाम् अवता ‡ । अथैनमिन्द्रम् नवग्वा क्षितय युद्धार्थं निरगमयन् । अथ ते वृषायुध छिन्नवृषणा इव वार्धक्यात् उत्सृष्टा § साण्डेन[7] युध्यमाना प्रकर्षगमनवद्भि- रश्वै[8] 'बलवानयमिन्द्र' इति जानन्तो युद्धाद् प्रतिगता[10] ॥ ६ ॥

मुद्गल० अनवद्यस्य गर्हणीयदोषरहितस्य इन्द्रस्य सेनाम् प्रति अयुयुत्सन् वृत्रस्यानुचरा युद्धमैच्छन् । तदानीम् नवग्वा नवनीयगतय[11] स्तोतव्यचरित्रा[12] क्षितय मनुष्या अङ्गिर प्रभृतय अयात यन्त युद्धार्थम् इन्द्रम् नानाविधैर्मन्त्रै प्रोत्साहितवन्त । इन्द्र[13] योद्धु गते सति निरष्टा तेनेन्द्रेण निराकृता वृत्रानुचरा चितयन्त स्वकीयामशक्तिं ज्ञापयन्त इन्द्रात् इन्द्रस्य सकाशात् प्रवद्भि प्रवणै पलायितु सुशकै मार्गै आयन् दूरे गतवन्त । दृष्टान्त । वृषायुध वृषेण सेचनसमर्थेन पुरुत्वयुक्तेन शूरेण सह युद्ध कुर्वन्त वध्रय न नपुसका इव । ते यथा प्रबलेन निराकृता भवन्ति तद्वत् ॥ ६ ॥

त्वमे॒तान्रु॑द॒तो जक्ष॑तश्चायो॑धयो॒ रज॑स इन्द्र पा॒रे ।
अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑माव॒ः ॥ ७ ॥

त्वम् । ए॒तान् । रु॒द॒त । जक्ष॑त । च॒ । अयो॑धय । रज॑स । इ॒न्द्र॒ । पा॒रे । अव॑ । अ॒द॒ह॒ । दि॒व । आ । दस्यु॑म् । उ॒च्चा । प्र । सु॒न्व॒त । स्तु॒व॒त । शंस॑म् । आ॒व॒ ॥ ७ ॥

---

१ नास्ति कु २ वैप १ पृ १८१५ द्र ३ °दशना रवि[1] [2] ४ नास्ति अ कु ५ आग° मूको ६ ६ 'स्वान् अपाप्या' कु, °प्राप्तानेवे° अ ७ ७ अयुयुत्सन्त ये असुरा योधयितुमिच्छन्त अनव द्यस्य दोषरहितस्य इन्द्रस्य सेनामभिता नवग्वा क्षितय ज्ञानयन्त हतवन्त । नवभिर्मासै सिद्धि गता नवग्वा । प्रजननसमर्थो वृषभ तेन ताडिता वध्रयो यथा न युद्ध्यु । तद्वत् प्रजननासमर्थवध्रवदवदुर्बलेन अत्यन्तवृद्धा अथो एनमिन्द्र नवग्वा क्षितयो युद्धाय निरगमयन् यथैव वृषा आयुधच्छिन्नवृषणा इव वार्धक्यादुत्सृष्टेन न युध्य° (?) अ[2] वि[1] † °रहिता मूको ‡ अवतान् वि[1] [1] ल रवि[1] § अवसृष्टा रवि ८ °द्भि रथै° कु वि[1] [2] रवि[1] ९ °वानिन्द्र कु वि[1] रवि १० प्रगता कु रवि ११ °नीयग° मूको १२ °ता वि १३ नास्ति मै[1]

स्कन्द० त्वम् एतान् असुरान् मेघान्[1] वा रुदतः जक्षतः च जक्ष भक्षहसनयोः । रुदतो हसतश्च । सर्वास्ववस्थासु वर्तमानानित्यर्थः । अयोधयः योधितवानसि । रजसः लोकनामैतत् (नि० या० ४ ।१९) । अन्तरिक्षलोकस्य द्युलोकस्य वा । हे इन्द्र ! पारे अन्ते अवस्थितान्[2] । भयादन्तरिक्षस्य दिवो वा अन्त्यान्[3] नष्टानपि सत इत्यर्थः । किञ्च[4] अव अदहः अवशब्दः अधोभागे । दहतिरप्यत्र सामर्थ्यान्निर्धमनार्थः । अधो निरधमः निर्धमासि वा । दिवः द्युलोकात् । आकारस्तु पदपूरणः । [5]दस्युम् शत्रुम्[5] उच्चा उच्चैरप्यवस्थितम् । किञ्च सुन्वतः स्तुवतः च यजमानस्य शंसम् कामम् । प्राव [6]प्रकर्षेण रक्षितवान् तर्पितवान् वाऽसि[6] ॥ ७ ॥

वेङ्कट० त्वम् एतान् असतान्[7] रुदतः हसतः च पृथिव्याः [8]पारे अन्ते अवस्थितान् योधितवानसि इन्द्र[8] । तदानीम् उच्छ्रितात् दिवः असुरम् अधः[10] नीतवानसि[11] । सुन्वतः स्तुवतः च प्रार्थनां प्रकर्षेण अरक्षः[12] ॥ ७ ॥

मुद्गल० हे इन्द्र ! त्वम् रुदतः रोदनं कुर्वतः जक्षतः भक्षणं कुर्वतः च एतान् विविधानपि वृत्रानुचरान्[13] रजसः पारे अन्तरिक्षस्य परभागे अयोधयः युद्धमकरोः । युद्धेन मारितवानित्यर्थः । दस्युम् उपक्षपयितारं वृत्रम् दिवः आ द्युलोकादानीय उच्चा उत्कर्षेण अव अदहः दग्धवानसि । वृत्रं सपरिवारं विनाश्य [14]ततः ऊर्ध्वम्[14] सुन्वतः सोमाभिषवं कुर्वतः स्तुवतः [15]स्तोत्रं कुर्वतो[15] यजमानस्य शंसम् स्तुतिम् प्र आवः प्रकर्षेण रक्षितवानसि ॥ ७ ॥

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ॥ ८ ॥

चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुम्भमानाः । न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥ ८ ॥

स्कन्द० चक्राणासः कुर्वन्तः परिणहम् पृथिव्याः णह बन्धने । सर्वतो बध्यते येन पृथिवी स पृथिव्याः परिणाहः[16] । सालप्राकारादिकम् । दुर्गाणि कुर्वन्त इत्यर्थः । हिरण्येन मणिना शुम्भमानाः शोभयन्तः । [17]किम् । सामर्थ्यात् स्वशरीराणि† । स्वाभिः कृतरक्षाभिधानाः आस्थायन्ताश्च सन्त इत्यर्थः[17] । न हिन्वानासः तितिरुः ते हिनोतिर्वृद्ध्यर्थः । तिरतिः शक्नोत्यर्थः । शक्नोतेश्च कर्मभूतधात्वन्तरानुपपत्तेस्य निरधरनात् प्रतियोद्धुमिति वाक्यशेषः । ते इत्यसुराणां प्रतिनिर्देशः । [18]सर्वप्रकारं वर्धमाना असुरा नैवाशक्नुवन् प्रतियोद्धुमित्यर्थः[18] । कम् । इन्द्रम् । कस्मात् । उच्यते । यस्मात् तदसुराः

---

1 नास्ति कु. 2 °स्थितवान् भ कु 3 मन्त्रात् कु 4 नास्ति रवि 5-5 दस्यून् शत्रून् भ, दस्युं शत्रुन् रवि 6-6 प्रकर्षेण तर्पितवानसि तपयसि वा रवि, प्रकर्षेण भक्षितवानसि भ 7 इमान् भ° वि°. 8-8 पारे योधि° वि° भ° ल रवि, पारे याधितवानसी कु °स्थितान् योधितवानसि इ° वि° भ° 9 नास्ति भ° 10 नास्ति कु रवि 11 आनीत° रवि 12 °रक्ष कु 13 इमान् वि 14-14 तदूर्ध्वम् मै° वि 15-15 स्तोत्रं कर्तुः मै° 16 परिणाह रवि 17-17 नास्ति कु; किं सामर्थ्यात्स्वशरीराणि स° भ; किं सामर्थ्यं शरा° रवि † नास्ति मूको 18-18 स एवार्थमानार्थं भ; सर्वो वर्धमानाः कु

परि स्पश अदधात् पर्यदधात् सर्वतो निहितवान् इन्द्र स्पशो बाधकान्[1]। न केवलम् स्वयमेव[2] किं तर्हि। [3]सूर्येण अन्यैरपि देवै सह[3] सम्बन्ध्येरयर्थं। यस्माच्चारचक्षुर्मन्त्रशक्तियुक्तैरयर्थं ॥ ८ ॥

वेङ्कट० कुर्वाणा आच्छादन महत्त्वा पृथिव्या हिरण्मयेन अलङ्कारेण शोभमाना ते इन्द्रम् प्रति गच्छन्त न तीर्णवन्त। सोऽयम्[4] सूर्येण सह परित [5]रश्मीन् निहितवान्[5] ॥ ८ ॥

मुद्गल० ये वृत्रानुचरा पृथिव्या भूमे परीणहम् आच्छादन सर्वतो व्याप्तिम् चक्राणास कुर्वाणा हिरण्येन हिरण्ययुक्तेन मणिना कण्ठबाह्वादिगतेन मण्याद्याभरणेन शुम्भमाना शोभमाना[6] हिन्वानास वर्धमाना सन्तो वर्तन्ते, ते[7] तथाविधा वृत्रानुचरा इन्द्रम् युद्धायोद्यन्तम् न तितिरु जेतु न समर्था आसन्। तदानी स इन्द्र स्पश बाधकान् वृत्रानुचरान्[8] सूर्येण आदित्यन परि अदधात् व्यवहितान् अकरोत् ॥ ८ ॥

परि॒ यदि॑न्द्र॒ रोद॑सी उ॒भे अबु॑भोजीर्महि॒ना वि॒श्वतः॑ सीम् ।
अम॑न्यमानाँ अ॒भि मन्य॑मानै॒र्निर्ब्र॒ह्मभि॑रधमो॒ दस्यु॑मिन्द्र ॥ ९ ॥

परि॑ । यत् । इ॒न्द्र॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । अबु॑भोजीः । म॒हि॒ना । वि॒श्वतः॑ । सी॒म् । अम॑न्य-मानान् । अ॒भि । मन्य॑माने । नि । ब्र॒ह्मऽभि॑ । अ॒ध॒म॒ । दस्यु॑म् । इ॒न्द्र॒ ॥ ९ ॥

स्कन्द० यत इति प्रथमा[9]। व्यत्ययेन तु नपुंसकम्[10]। यस्मादर्थे वा। यस्त्व यस्मात् वा हे इन्द्र! रोदसी उभे परि अबुभोजी भुज पालनाभ्यवहारयो। परिपालयासि भुन्क्षे वा। महिना महता वीर्येण। विश्वत सर्वत। सीम् इति तु पदपूरण। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य। स तस्माद्वा अमन्यमानान् मन्यतिरर्चतिकर्मा (तु निघ ३,१४)। अस्तुवत अभि मन्यमानै अभिष्टुवद्भि[11]। [11]केन। ब्रह्मभ[12] ऋग्यजु सामलक्षणै। नि अधम धमतिरत्र [13]सामर्थ्यादन्तर्णीतण्यर्थ। ण्यन्तश्चापकार यतेरर्थे[13] वर्तते। स्वस्मात् स्थानादपकालयसीत्यर्थ[14]। कान्[2]। दस्युम् अमन्यमानानिति बहुवचनसामानाधिकरण्यात् बहुवचनस्य स्थाने इदमेकवचनम्। दस्यून् अनभिष्टुवत[15] शत्रून् हे इन्द्र! इदि परमैश्वर्ये। अत्यन्तेश्वर[1] ॥ ९ ॥

वेङ्कट० इन्द्र! त्व माहात्म्येन आद्यान्[16] शत्रून् हत्वा द्यावापृथिव्यौ उभे[17] अपि सर्वत परि अबुभोगी नि सपत्नमकुरुथा[18], त्वदतीतमहिम्नेति[19] अनुत्पन्नानि [20]अमन्यमानान् अस्मदाद्[21] अभि मन्यमानै मन्त्रैर्दिव[19] शत्रून्[21] नि अधम ॥ ९ ॥

मुद्गल० हे इन्द्र! यत् यदा रोदसी उभे द्युलोकभूलोकावुभौ महिना त्वदीयेन महिम्ना विश्वत

१ बधिकान् क  २ नास्ति मूको  ३ ३ सूर्येण सह अन्यैरपि देवै रवि  ४ तान् वि[1] अ[2]
५ ५ रश्मिभि निहित° वि[1] अ[2], विहित° वि[2]  ६ नास्ति वि  ७ नास्ति वि मं[2]  ८ अनुचरान् मं[2]
९ प्रथमान्त कु अ  १० नपुंसकता कु अ  ११ °भिष्टुव° रवि[1,2]  १२ १२ नास्ति रवि[1,2]
१३ १३ °रत्र अन्तर्णीतण्यर्थ। ण्यन्तस्यापि चाक° अ कु  १४ °दपाय° कु  १५ अभिष्टु° मूको
१६ अन्यान् वि[1] अ[2] कु रवि  १७ उभौ वि[1] अ[2]  १८ °मकुरुथा ए वि[1] अ[1] कु, °मभुनथा वि[2] अ[1]
१९ ना प्रकर्षेण रक्ष तदा° वि[1] लप  २० २० °मान आक्षिपन् वि[1] अ[2]  २१ °श्चिा वि[1] लप
२२ शत्रू कु अ[1], शत्रु त अ[2], दस्यु शत्रु त वि[1]

सीम् सर्वत परिगृह्य परि अबुभोजी परितो भुक्तवानसि। तदानीं त्वम् अमन्यमानान् मन्त्रार्थम् अनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् अभि मन्यमानै अस्मदीया एते यजमाना रक्षणीया इति अभिमान कुर्वद्भि त्वाभि मन्त्रै दस्युम् चोर वृत्रादिरूपमसुरम् नि अधम नि सारितवानसि ॥९॥

न ये दि॒वः पृ॑थि॒व्या अन्त॑मा॒पुर्न मा॒याभि॑र्धन॒दां प॒र्यभू॑वन् ।
युजं॒ वज्रं॑ वृष॒भश्च॑क्र॒ इन्द्रो॒ निर्ज्योति॑षा॒ तम॑सो॒ गा अ॑दुक्षत् ॥ १० ॥

न । ये । दि॒वः । पृ॒थि॒व्याः । अन्त॑म् । आ॒पुः । न । मा॒याभिः॑ । ध॒न॒ऽदाम् । प॒रि॒ऽअभू॑वन् ।
यु॒जम् । वज्र॑म् । वृ॒ष॒भः । च॒क्रे॒ । इन्द्रः॑ । निः । ज्योति॑षा । तम॑सः । गाः । अ॒धु॒क्ष॒त् ॥ १० ॥

स्कन्द० ये अपि असुरा दिव पृथिव्या च अन्तम् न आपु न प्राप्नुवन्ति । द्यावापृथिव्योरेकदेशवर्तिन इत्यर्थ । न अपि मायाभि प्रज्ञाभि धनदाम् इन्द्रम्[1] पर्यभूवन् परिभवन्ति। इन्द्रात् 'प्रज्ञया न्यूना[2] इत्यर्थ । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । तैरपि सह युजम् सम्बद्धम् वज्रम्[3] वृषभ वर्षिता चक्रे इन्द्र । तानपि वज्रेण हतवानित्यर्थ । हत्वा च ज्योतिषा सौरेण वैद्युतेन वा[4] तमस यत्र गुहादौ तमोरूपे[5] स्थापितास्ततस्तेषामसुराणा[6] स्वभूता गा निः अधुक्षत् निर्दुग्धवान्[7] निष्कासितवानित्यर्थ[8] । अथवा ये इति मेघाना प्रतिनिर्देश । 'गा अधुक्षद्' इत्यपि गोशब्द उदकनामा । येऽपि[9] मघा द्यावापृथिव्योरेकदेशवर्तिन इन्द्राच्च न्यूनप्रज्ञास्तानपि वज्रेण हतवान्। हत्वा च वैद्युतेन ज्योतिषा तदीयात् तमस अपो निरधुक्षत् क्षारितवान् ॥ १० ॥

वेङ्कट० या आप दिव पृथिव्या अन्तम् न आपु । न[10] कर्मभि धनस्य दातारमिन्द्र परितोऽभवन्। तासा[11] जयार्थं सहायम् वज्रम् वर्षिता इन्द्र चक्रे। तत ज्योतिषा गा अप[12] तमस मेघात्[12] नि अधुक्षत् दस्यु हत्वेति ॥ १० ॥

मुद्गल० ये जलविशेषा [13]दिव द्युलोकात्[13] पृथिव्या अन्तम् [14]भूमे स्थानम्[14] न आपु प्राप्ता । मेघ रूपमापन्नेन वृत्रेण निरुद्धत्वात्। अत एव भूमिप्राप्त्यभावात् धनदाम् धनप्रदा भूमिम् मायाभि सस्योपकारादिभि कर्मभि न पर्यभूवन् परितो न व्याप्ता । जलपानसस्याभिवृद्ध्याद्युपकार न चक्रुरित्यर्थ । तदानीमयम् इन्द्र वृषभ कामाना वर्षिता मेघभेदनाय वज्रम् युजम् स्वहस्त युक्तम् चक्रे। तत ज्योतिषा [15]द्योतमानेन वज्रेण तमस अन्धकाररूपात् मेघात् गा गमन शीलान्युदकानि नि अधुक्षन् नि शेषेण दुग्धवान्। मेघं भित्त्वा जल वृष्टवानित्यर्थ [16] ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये द्वितीयो वर्ग ।

अनु॑ स्व॒धाम॑क्षर॒न्नापो॑ अ॒स्याऽव॑र्धत॒ मध्य॒ आ ना॒व्या॑नाम् ।
स॒ध्री॒चीने॑न॒ मन॑सा॒ तमिन्द्र॒ ओजि॑ष्ठेन॒ हन्म॑नाऽहन्न॒भि द्यून् ॥ ११ ॥

---

1 1. नास्ति रवि 2 2. न्यूनतमा अ कु 3. नास्ति रवि 4. प अ कु 5. °देश° मूको. 6. 'स्वकारस्य' कु रवि 7. निरुध° मूको 8. निष्काशि° रवि 9. 9. नास्ति अ कु 10. न वि° अ° 11. तेषाम् मूको 12. अप वि°. 13. मेघात् कु अ° 14 14. द्युलोका° विरा मे° 15 15. 'मेघस्थ मे° वि 16 16. नास्ति वि

अनु । स्वधाम् । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानाम् । सध्रीचीनेन ।
मनसा । तम् । इन्द्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ ११ ॥

स्कन्द० अनुशब्दो लक्षणे कर्मप्रवचनीयः । 'स्वधा' ( निघ १,१२ ) इति उदकनाम । यत् पूर्वपतितमुदकं तत् प्रति अक्षरन् क्षरितवत्यः क्षरन्ति वा आपः अस्य इन्द्रस्य स्वभूताः प्रसादेन वा । [1]अनुपश्चीणायामेव पूर्ववृष्टौ पुनरपि अवर्षन् वर्षितव्या इत्यर्थः[1] । अथवा[2] अन्विति पश्चाद्भावे । 'स्वधा' ( निघ २,७ ) इत्यप्यन्ननाम । अस्येत्येतच्च स्वधाम् इत्येतेन सम्बध्यते । अस्य इन्द्रस्य[3] स्वभूतां हविर्लक्षणां स्वधामनु तदीयस्य हविषः पश्चात् । यदाऽस्मै हविर्दीयते तदानन्तरमित्यर्थः । अक्षरन्[4] । किमक्षरन् । आपो वृष्टिलक्षणाः । कथं पुनर्मेघेन निरुद्धाः सत्योऽक्षरन् । अवर्धत मध्ये आ आ इत्येषः अवेत्येतस्य[5] स्थाने । सध्रीचीनेन मनसा तम् इति तच्छब्दात् यच्छब्दोऽत्राध्याहार्यः । यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपाम् अव[6] अधः । कियतीनाम् । नाव्यानाम् नावा तार्याणाम् । अत्यन्तबह्वीनामित्यर्थः । सध्रीचीनेन सह अञ्चति गच्छतीति "सध्रीचीनो वज्रः तेन सध्रीचीनेन" सहगामिना वज्रेण । केन सहगामिना । मनसा । यत्रैव मनो गच्छति तत्रैव गन्त्रा । यत्र मनसा इष्यते तत्र निपततेत्यर्थः । तं मेघम् इन्द्रः । कीदृशेन वज्रेण । ओजिष्ठेन बलवत्तमेन हन्मना हन्त्रा मेघानाम् । अहन् हतवान् । अभि द्यून् दिवसान् प्रति । येषु वार्षिकेष्वहस्सु हन्तुं योग्यस्तेष्वित्यर्थः ॥ ११ ॥

वेङ्कट० वृत्रे हते इन्द्रस्य [8]'आपः स्वधाम् मधु अक्षरन्[8]' । अयञ्चेन्द्रो नावा तार्याणामपाम्[9] मध्ये अवर्धत । सहायभूतेनानुगुणेन धृष्टेन मनसा बलवत्तमेन हननसाधनेन[10] हतवान् असुरं [11]दिवसेषु तेष्विति[11] ॥१२॥

मुद्गल० आपः जलानि अस्य इन्द्रस्य स्वधाम् अन्नं व्रीह्यादिरूपम् अनु[7] अनुलक्ष्य अक्षरन् मेघाद् वृष्टा अभवन् । तदानीमयं वृत्रः नाव्यानाम् नावा तरणयोग्यानां बह्वीनाम् अपाम् मध्ये आ समन्तात् अवर्धत वृद्धिं प्राप्तः । प्रभूतजले वर्तमानोऽपि न ममार, किन्तु अभिवृद्ध एव । तदानीम् इन्द्रः सध्रीचीनेन सह गच्छता मनसा युक्तम् तम् वृत्रम् ओजिष्ठेन अतिशयबलयुक्तेन हन्मना हननसाधनेन वज्रेण अभि द्यून् कतिचिद्दिवसान् अभिलक्ष्य अहन् तेषु दिवसेषु हतवान् । जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेन्द्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिज्ञाय हतवानित्यर्थः ॥ ११ ॥

न्यविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२ ॥

---

१-१. °यां मेघपूर्ववृष्टौ पुनरपि (अवर्षत?) वर्षन्ति स्म इत्यर्थः रवि. २. नास्ति रवि[2,1] अ कु. ३. नास्ति रवि. ४. नास्ति मूको. ५. अपेत्येतस्य अ कु. ६. एव अ कु. ७-७. नास्ति अ कु. ८-८. स्वभूता आपः वृष्टिलक्षणा आपः स्वधा वृष्टिलक्षणाम् अन्वक्षरन् वि[1] अ[1]; °आपः स्वसारम् अक्षरन् लु, आपः स्वसारम् मधु अक्षरन् रवि. ९. तार्यमाणानाम्° रवि. १०. तथानुगामिना मनसा यत्र मनोऽनुगच्छति तत्र गन्त्रा तेन वज्रेण हनन° वि[1] अ[1]. ११. °षु वार्षिकेषु ते° वि[1] अ[1]; दिवसेष्विति रवि.

नि । अ॒वि॒ध्य॒त् । इ॒ली॒बिश॑स्य । दृ॒ळ्हा । वि । शृ॒ङ्गिण॑म् । अ॒भि॒न॒त् । शुष्ण॑म् । इन्द्र॑ । याव॑त् । तरः॑ । म॒घ॒ऽव॒न् । याव॑त् । ओजः॑ । वज्रे॑ण । शत्रु॑म् । अ॒व॒धीः॒ । पृ॒त॒न्युम् ॥ १२ ॥

स्कन्द० कस्य चित् यावत्[1] नि अविध्यत् निष्कृष्य विद्धवान् । कस्य । इलीबिशस्य इलीबिशो मेघ । कथम् । 'इळा' (निघ २,७) इति अन्ननाम । बिशशब्दो बिस्यते । 'बिस्यतिश्च भेदनकर्मा' वृद्धिकर्मा वा । एवं ह्याह—'बिस बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा' ( या २ २४ ) इति । अथवा 'पिस्यति, विस्यति, मिस्यति' ( निघ २,१४ ) इति गतिकर्मसु पाठात् बिस्यतिर्गत्यर्थः[2] । बीजरूपमन्नमुत्क्लिनत्ति वर्द्धयति उदकरूपो वा भूत्वा[3] गच्छतीति इळाबिस । इळाबिस सत्तिलीबिश उच्यते । छान्दस ईकार सकारश्च । अथवा इळाशब्दोऽन्नहेतुत्वादुदके वर्तते । बिशशब्दोऽप्येकदेशलोपेन बिलशय शब्दस्यार्थे । अन्नहेतोरुदकस्य बिलेषु शेते तान्यप्यावृत्य[4] तिष्ठतीति इलीबिशो मेघ तस्य । दृळ्हा दृढानि दुर्भेद्यानि[5] । कानि । सामर्थ्यात् उदकनिर्गमनबिलानि । कश्चित्तु शृङ्गिणम् दीप्तिमन्त[6] मेघम् वि अभिनत् विविध भिन्नवान् । विदारितवानित्यर्थ । कीदृशम्[7] । शुष्णम् बलनामैतत् ( निघ २,९ ) । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थं । बलवन्तम् । क । इन्द्र । कस्यचिन्मेघस्य बिलान्युद्घाटितवान् । कश्चित्तु शतशर्करं[8] भग्नवानित्यर्थ । अथवा 'शुष्ण पिप्रु कुयव वृत्रम्' ( ऋ १,१०३,८ ) इत्यादिषु दर्शनात् शुष्णो नामासुर । त विविध भिन्नवान् विदारितवान् मारितवान्[9] इत्यर्थ । शुष्ण-सम्बन्धाच्च इलीबिशोऽप्यसुर एव । तस्य स्वभूतानि दृढानि पुराणि निरविध्यत् । व्यध ताडने । निर्भिद्य[10] ताडितवान् । हतवानित्यर्थ । परोऽर्धर्चं प्रत्यक्षकृतो भिन्न वाक्य पूर्वसमादर्धर्चात् । यावत् तर शरीरसामर्थ्यलक्षण बलम् हे मघवन्! धनवन्[9]! यावत् च ओज सेना लक्षण बलम् । यावदित्युद्देशात् [11]तावदित्यध्याहार्यं । तावता सर्वेण युक्तस्त्वम्[11] । वज्रेण शत्रुम् अवधी अस्मदीय वा जहि पृतन्युम् सङ्ग्रामकामम् ॥ १२ ॥

वेङ्कट० नि अविध्यत् उदकस्य निर्गमनद्वारमावृत्य शयानस्य दृढानि द्वाराणि मेघस्य[11] । तेजस्विनं शुष्णासुरञ्च वि अभिनत् इन्द्र । यावत् वेग यावत् च बल मघवन्![12] तत् सर्वमादाय पृतनाकामम् शत्रुन् शुष्णम् अवधी ॥ १२ ॥

मुद्गल० इलीबिशस्य इळाया भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि दृळ्हा दृढितानि असुरेण निरुद्धानि प्रभूतानि उदकानि इन्द्र नि अविध्यत् नितरा विद्धवान् । तत ऊर्ध्वम् शृङ्गिणम् गोमहिष्यादिशृङ्गसमाने आयुधैर्युक्तम् शुष्णम् जगत शोषक वृत्रम् वि अभिनत् विविध ताडितवान् । हे मघवन्! इन्द्र! तव यावत् तर यावद्वेगोऽस्ति यावत् ओज यावद् बलमस्ति तेन सर्वेण युक्तस्त्वम् पृतन्युम् पृतना युद्धमिच्छन्तम् शत्रुम् वृत्रम् वज्रेण अवधी हतवान् ॥ १२ ॥

अ॒भि सि॒ध्मो अ॑जिगादस्य॒ शत्रू॒न् वि ति॒ग्मेन॑ वृष॒भेणा॒ पुरो॑ऽभेत् ।
सं वज्रे॑णाऽसृजद् वृ॒त्रमिन्द्रः॒ प्र स्वां म॒तिम॑तिर॒च्छाश॑दानः ॥ १३ ॥

---

1 तान् रवि २ २ 'निर्भेद' रवि ३ 'गतिकर्मा क कु ४ नास्ति क कु ५. तानि भत्वा' कु ६ दुष्पथानि वि कु, दुर्भेद्यानि रवि[13] ७ दीप्त क कु ८ धर्ष शतशर्करं कु ९ नास्ति क कु १० निभिद्य कु निर्भिद्य क ११-११ यावदध्योध्याहार्यं । (रवि) तेन सर्वेण मूको १२ 'एव इति निरुद्धोदकस्य दृढानि पुराणि निर्भिद्य ताडितवान् हतवानित्यर्थ तेज' वि[1] क[2] १३. मघवन् कु

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

स्कन्द० सिध्मः साधयितेन्द्रः अभि अजिगात अभिगतवान् । किम् । अस्य एवेन्द्रस्य शत्रून् । अथवा सिध्म इति वज्र उच्यते । साधयिता वज्रः अभ्यजिगादस्येन्द्रस्य शत्रून् । [1]अभिगतेन च तेन वज्रेण[1] तिग्मेन तीक्ष्णेन[2] वृषभेण वर्षित्रा तेषां शत्रूणां स्वभूताः पुरः नगराणि वि अभेत् विविधं भिन्नवान् । विनाशितवानित्यर्थः । किञ्च सम् वज्रेण असृजत् समसृजत् संसर्जितवान्[3] । सम्बन्धितवानित्यर्थः । कम् । वृत्रम् असुरम् । कः । इन्द्रः । प्र स्वाम् मतिम् अतिरत् मतिमिति मन्यतेरर्चतिकर्मणो रूपम् । अतिरदित्यपि तिरतिर्वृद्ध्यर्थः । आत्मीयां स्तुतिं प्रकर्षेणावर्धयत् । शाशदानः पुनःपुनरसुरान् तत्पुराणि च शातयन् । [4]यो हीदृशं[4] कर्म पुनःपुनः करोति स [5]तत्कर्मसम्बद्धा आत्मीयस्तुतीः[5] वर्धयति । अथवा मतिरिति प्रज्ञैवोच्यते । स्वप्रज्ञामवर्धयदिति । यो हि यत्नित्यं करोति तस्य तत्र प्रज्ञाकौशलं वर्धते[6] ॥ १३ ॥

वेङ्कट० साधयिता कर्मणामिन्द्रः अस्य शुष्णस्य शातयितव्यान्[7] सहायान् अभि अजिगात्, वि अभिनच्च वज्रेण कामानां वर्षित्रा पुराणि । [8]वज्रेण वृत्रम्[8] सम् अयोजयत् इन्द्रः । अवर्धयत्[9] स्वाम् मतिम् शत्रुपुराणि शातयन्[10] ॥ १३ ॥

मुद्गल० अस्य इन्द्रस्य सिध्मः साधको वज्रः शत्रून् अभि इन्द्रवैरिणोऽभिलक्ष्य अजिगात् गतवान् । स च इन्द्रः तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेन आयुधेन तेन वज्रेण पुरः वृत्रस्य पुराणि वि अभेत् विविधं भिन्नवान् । ततः स इन्द्रः वज्रेण स्वकीयेन वृत्रम् सम् असृजत् संयोजितवान्, संयोज्य च शाशदानः वृत्रं हिंसन् स्वाम् मतिम् स्वकीयां हर्षोपेताम् बुद्धिम् प्र अतिरत् प्रकर्षेण वर्धितवान् ॥१३॥

आवः कुत्समिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥

आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् । शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥ १४ ॥

स्कन्द० आवः [11]कुत्सम् आवस्त्वं कुत्सनामानम् ऋषिम्†[11] । यस्मिन् कुत्से यागं कुर्वति चाकन् कामितवानसि सोमं स्तुतीश्च[12] । न च केवलं कुत्सम् । किं तर्हि । प्र आवः प्रकर्षेणारक्षः युध्यन्तम् युध्यमानम् [13]वृषभम् नामासं[13] राजानम् दशद्युम् बहुदीप्तिम् । केन प्रकारेण । उच्यते । शफच्युतः [14]शफेभ्यः प्रच्युतः रेणुः[14] पांसुः नक्षत नक्षतिर्गतिकर्मा[15] व्याप्तिकर्मा वा । गतवान् व्याप्तवान्

1-1. °गतेन वज्रेण कु, °गतेन च वज्रेण रवि. 2. तीक्ष्णेन अ कु. 3. तु. स्क. [ या ६,१६ ], वेङ्क. 4-4. य ईदृशं कु. 5. °तत्कर्म॰ आत्मीयस्तुती° अ कु. 6. वर्धते रवि. 7. शातयित° अ[1] वि[1]. 8-8. वृत्रेण वज्रे च वि[1] वृत्रं वि[2] अ[2]; वृत्रं च वज्रेण कु रवि. 9. °वर्धत् कु. अ[1] वि[1]; वर्धयत् वि[2] वृत्रं वि[3] अ[3]. 10. शातयन् अ[1] वि[1]. 11-11. नास्ति कुत्सं नाम ऋषिम् कु; नास्ति अ. † नास्ति रवि. 12. स्तुतीश्च कु, स्तुतीश्च अ. 13-13. वृषभनामानं अ कु. 14. शफच्युतो रेणु. कु, शफच्युतो रेणु स्तु. अ. 15-15. °गतकर्मा रवि.

वा द्याम् द्युलोकम् । उत् श्वैत्रेयः उच्छन्दः तस्थौ इत्याख्यातेन सम्बन्धयितव्यः । 'श्रु' (निघ २,१५) इति क्षिप्रनाम । इण् गतौ । श्रु इत्रा श्वित्रा आशुगामिनी जगतः प्रकृतिः । तस्या अपत्यं श्वैत्रेयो वायुः । स च[2] नृषाह्याय शत्रुमनुष्याभिभवनाय उत्तस्थौ उत्थितः । शत्र्वभिभवार्थं[1] युद्धवेलायां महान्तं रेणुं वात्याश्व[3] अकरोदित्यर्थः ॥ १४ ॥

वेङ्कट० रक्षितवानसि कुत्सम् इन्द्र! । यस्मिन् कुत्से स्तुतीः[4] कामितवानसि प्र आवः च युध्यन्तम् स्तुतीनां वर्धितारम् [5]दशद्युम् नाम[5] । युद्धे शफैश्च्युतः रेणुः अन्तरिक्षम्[6] नक्षत[7] । प्रवृद्धम्[8] आसीत् युद्धम्[8] । अथ श्वित्रायाः पुत्रो दशद्युस्त्वयोपबृंहितः शत्रूणामभिभवाय कस्मिंश्चिद् ह्रदे भयात्[9] प्रविष्टस्ततः उत्तस्थौ । अस्योत्तरा भूयसे निर्वचनाय 'आवः शमम्' इति ॥ १४ ॥

मुद्गल० हे इन्द्र! कुत्सम् एतन्नामकं गोत्रप्रवर्तकम् ऋषिम् आवः रक्षितवानसि । यस्मिन् कुत्से चाश्नन् स्तुतिं कामयमानः वर्तसे, तं कुत्समिति पूर्वेणान्वयः । तथा दशद्युम् एतन्नामकं दशसु दिक्षु दीप्यमानमृषिम् प्र आवः प्रकर्षेण रक्षितवानसि । कीदृशम् । युध्यन्तम् स्वकीयैः शत्रुभिः सह युद्धं कुर्वन्तम् वृषभम् गुणैः श्रेष्ठम् । शफच्युतः त्वदीयाश्वस्य शफात् पतितः रेणुः धूलिः द्याम् द्युलोकम् नक्षत प्राप्नोति । श्वैत्रेयः श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहात् नृषह्याय नृभिः पुरुषैः सोढव्याय उत् तस्थौ जलादुत्थितवान्[10] ॥१४॥

आवः शर्मं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५ ॥

आवः । शर्मम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकः ॥ १५ ॥

स्कन्द० आवः शमम् शान्तात्मकम् वृषभम् नाम राजानम् तुग्र्यासु 'तुग्र्या' (निघ १,१२) इति उदकनाम । सप्तमीनिर्देशाच्च[11] स्थितमिति वाक्यशेषः । अप्सु स्थितम् । अद्भ्य उत्तारितवानसीत्यर्थः । किमर्थम्[1] । क्षेत्रजेषे क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्य उत्तारितः[12] पृथिवीं जेष्यतीत्येवमर्थम् । हे मघवन्! । कीदृशम् । श्वित्र्यम् गाम् गन्तारं देवान् शत्रून् वा प्रति । ज्योक् चित् ज्योगिति निपातश्चिरवचनः । चिच्छब्दः पदपूरणः । एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभं चिरम् अत्र पृथिव्याम् तस्थिवांसः स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुरा वा अक्रन् । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपणे[13] वर्तते । अप्सु प्रक्षिप्तवन्तः[14] । यं पृथिव्यां [15]चिरं प्रतिष्ठिता अपि सन्तः[15] शत्रवोऽसुरा वा राज्योच्छेदनभयादप्सु[16] प्रक्षिप्तवन्त इत्यर्थः । उत्तार्य च शत्रूयताम् शत्रुभावं कामयमानानां तेषां यानि स्वभूतानि वेदनानि अपठितमपि धननामैतत् । धनानि तानि अधरा अधराणि [17]तस्य अधोवर्तीनि[17] अकः कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोरित्यर्थः[18] ॥ १५ ॥

1. नास्ति कु. 2. शत्रुन् अभिभवनार्थं कु. 3. वात्यां च कु. 4. स्तुतिं वि[1] अ[1] रुपं. 5-5 शत्रून् दशद्युम्नवनम् वि[1] अ[1]. 6. °रिक्षे कु. 7. नक्षत् रु; गतवान् नक्ष° वि[1] अ[1]. 8. इद वि[1] सर्व 9. भयात् वि[1] अ[1]. 10. नास्ति वि. 11. °निर्देशात् स कु. 12. °रितो स कु. 13. °णे स कु 14. °न्ति° स कु. 15-15. चिरप्रतिष्ठितमपि सन्तं कु; स्थिरप्रतिष्ठितमपि सन्तं स. 16. °भयादपस्य कु. 17-17. नास्ति रवि. 18. °करोदि मूको.

वेङ्कट० बलाभावाच्छान्तम्[1] शयम्[2] उदकेषु भयाद् गतम् पृथिवीजयार्थं[3] श्वित्र्याया अपत्यं[3] दशद्युम् आवः । चिरं[4] तस्मिन्[5] स्थिताः शत्रवः कृतवन्तो युद्धम्[6] । अथ तेषां शत्रुत्वमिच्छताम् उपद्रवाणि अधराणि चकारेति[7] ॥ १५ ॥

मुद्गल० हे मघवन्! धनवन्! इन्द्र! श्वित्र्यम् श्वित्राया: पुत्रं पूर्वोक्तं पुरुषम् आवः रक्षितवानसि । किमर्थम् । क्षेत्रजेषे शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् । शयम् त्वदीयपरिपालनेन चित्तस्याकुलतां परित्यज्य शान्तम् वृषभम् गुणैः श्रेष्ठम् तुग्र्यासु गाम् जलेषु गतं मग्नमित्यर्थः । अत्र अस्माभिः सह युक्ते युद्धे ज्योक् चित् चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः अक्रन् वैरिणः शत्रुत्वमकुर्वन् । शत्रूयताम् शत्रून् आत्मन इच्छतां तेषाम् अधरा वेदना निकृष्टानि दुःखानि त्वम् अकः कुरु ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये तृतीयो वर्गः ।

## [ ३४ ]

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ १ ॥

त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम् । यामः । उत । रातिः । अश्विना । युवोः । हि । यन्त्रम् । हिम्याऽइव । वाससः । अभिऽआयंसेन्या । भवतम् । मनीषिऽभिः ॥

स्कन्द० 'तत आश्विनम्' । ये एते ऐन्द्रे सूक्ते उक्ते, ताभ्यां परमिदमाश्विनम् । त्रिः चित् त्रिःशब्दोऽत्र[1] सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुकृत्वः इत्यस्यार्थे । बहुकृत्वः । चिच्छब्दस्तु पदपूरणः । नः अस्मान् अद्य भवतम् भवतिरिह प्राप्त्यर्थः । प्राप्नुतम् । हे नवेदसा । मेधाविनौ! बहुकृत्वोऽद्यास्मत्समीपमागच्छतमित्यर्थः[10] । [11]किं कारणम् । उच्यते । यस्मात् विभुः गमनसमर्थः[11] । वाम् युवयोः यामः यान्त्यनेनेति यामो रथ इहोच्यते । 'अश्व वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः' ( ऋ ३,५३,१९ ) इति यथा । उत रातिः उतशब्दोऽप्यर्थे । [12]रातिशब्दोऽपि कर्मसाधनो देयवचनः[12] । देयमपि विभु हे अश्विनौ! यद्दागत्यास्मभ्यं धनं दास्यथः तदपि प्रभूतमित्यर्थः । युवोः हि यन्त्रम् हिशब्दो यस्मादर्थे । यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु । येन यन्त्रेण युवां[13] शत्रून् हथः, तदपि सर्वगमनप्रतिबन्धकम् । हिम्येव वाससः अभ्यायंसेन्या भवतम् 'हिमा' (निघ १,७) इति रात्रिनाम । तत्र भवा हिम्या उषाः । वास इत्यपठितमप्यहर्नाम । 'आदात्री वासस्तनुते सिमस्मै' ( ऋ १,११५,४ ) इति यथा । अभ्यायंसेन्येत्यभ्याङ्पूर्वस्य यंसेन्यशब्दस्य[14] कर्तरि प्रत्ययः । यथा उषाः

1. बलेनत्वाच्छान्तं रवि. 2. शयं नाम राजानम् वि[1] भ[2]. 3-3. श्वित्र्यायाः वि[1] छपं. 4. चिरात् वि[1] छपं; चिरं मां गन्तारं शत्रुं देवाय वि[1], चिरं मां गन्तारं देवाय तस्थिवांसः भ[2]. 5. नास्ति भ[1]. 6. युद्धं शत्रुत्वमिच्छतामुत्सर्गं च वि[1] भ[1]. 7-7. उपद्रवाणि अधराणि च कर्तेति वि[1] भ[1]. 8-8. येनाय भ्यातुल्मा रि. 9. त्रिः मूको. 10. आगच्छतम् कु. 11-11. नास्ति भ कु. 12-12. शब्दोऽपि देय कु; शब्दोऽपि कर्मस्वेय भ. 13. युवाभि कु. 14. सेन्य रवि, सेना कु भ; वैप १,१८०९ c ह.

[1]अह्न अभि तथा अस्मान्[1] आभिमुख्येन यन्तारौ भवतम्[2]। कस्य। सामर्थ्यात् रथस्य। यथोपा नियमेन अहरत्यत्या अभिमुखं करोति, एवं युवां नियमेन रथमस्मदभिमुखं कुरुतम्[3], येनासौ अस्मत्समीपमागच्छतीत्यर्थः। अथवा[4] अभ्यायशब्दः क्विबन्तः। सेनाया अभ्यायन्तारौ अभ्याय सेनौ[5]। 'राजदन्तादिषु परम्' (पा २,२,३१) इति परनिपातः। अभ्यायसेनावेव अभ्याय सेन्यौ। स्वार्थिकोऽत्र यत्प्रत्ययः[6]। स्वसेनाया[7] अस्मानाभिमुख्येन यन्तारौ भवतमित्यर्थः। न च केवलौ। किं तर्हि। मनीषिभिः मेधाविभिः सह। कैः। त्रयस्त्रिंशता देवैः। कुत एतत्। 'आ नासत्या त्रिभिरेकादशैरिह' (ऋ १,३४,११) इति दर्शनात्। अथवा हिम्येव वाससः इत्येतद् उपमानम्। युवोर्हि यन्त्रम् इत्येतेन च सम्बध्यते। अयं च पादो भिन्नमेव वाक्यम्, पूर्वस्मादर्धर्चात्। युवोरिति[8] षष्ठीनिर्देशात् ज्योतिरिति वाक्यशेषः। युवयोर्ज्योतिः। यन्त्रम् यमु बन्धने। यमनं बन्धनम्। कस्य। सामर्थ्यात् तमसः। कथम्। हिम्येव वाससः उष्यते अस्यामिति वासो रात्रिः। अहर्वचनेन वा वासःशब्देन रात्रिर्लक्ष्यते। रात्र्यापि स्वसम्बन्धि तमो लक्ष्यते। यथा उषाः शार्वरस्य तमसः तद्वदित्यर्थः। चतुर्थोऽपि पादो भिन्नं वाक्यं पूर्ववच्च व्याख्यातव्यम्[9] ॥ १ ॥

वेङ्कट० त्रिः चित् अस्माकम् अद्य भवतम् प्राप्तौ[10]। विभवति युवयोः गमनमनेकेषु दानं च। युवयोः हि युगलं[11] रात्र्येव अह्नः[12] सुश्लिष्टम्। तौ युवामस्मान् प्रति गन्तारौ भवतम् देवौ ॥ १ ॥

मुद्गल० [13]'त्रिश्चिन्नो अद्य' इति द्वादशर्चं चतुर्थं सूक्तम्। आङ्गिरसो हिरण्यस्तूप ऋषिः। अश्विनौ देवता। 'त्रयः पवयः' इति नवमी, 'आ नो अश्विना' इति द्वादशी च त्रिष्टुभौ। शिष्टा जगत्य[14]।

हे नवेदसा अश्विना। मेधाविनौ अश्विदेवौ। अभ्यायसेन्या अभितः आयच्छमानसेनाकौ[14] युवाम् मनीषिभिः मेधाविभिर्ऋत्विग्भिः स्तुतौ सन्तौ त्रिः चित् त्रिवारमपि अद्य अस्मिन् कर्मणि नः अस्मदर्थम् भवतम् आगच्छतम्। अत्र त्रिरिति वचनं सवनत्रयापेक्षम्। वाम् युवयोः यामः गमनसाधनभूतो रथः विभु व्याप्तः। उत अपि च रातिः दानं विभुरिति शेषः। युवोः युवयोरुभयोः यन्त्रम् परस्परनियमनरूपः सम्बन्धविशेषोऽस्ति खलु। अतः भवतम् आगच्छतम्। दृष्टान्तः। वाससः सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य हिम्येव हिमयुक्तया रात्र्येव। यथा रात्र्या सह दिवसस्य सम्बन्धः कदाचिदपि नापैति तद्वत् ॥ १ ॥

त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः।
त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ २ ॥

त्रयः। पवयः। मधुऽवाहने। रथे। सोमस्य। वेनाम्। अनु। विश्वे। इत्। विदुः। त्रयः। स्कम्भासः। स्कभितासः। आऽरभे। त्रिः। नक्तम्। याथः। त्रिः। ऊँ इति। अश्विना। दिवा ॥ २ ॥

१-१ अह इति अहोऽभ्यायन्तासा इवि[1]; अहोऽभ्यागमनानभि इवि[1] २ भवत अ कु ३ कुरु कु ४ नास्ति कु ५ अभ्याय इति अभ्यान् अ कु ६ य प्र[2] अ कु ७ स्वसेनाया इवि[1] अ कु ८ युवो[2] अ कु ९ तत्पविरम्य इवि[1] १० 'तौ त्रि इत्य अद्यागुर्ग लोकामुष्यः त्रि देवौ विशुगमनमनं यत्र गन्ता अहुप्सार्थ भवे दात्र त्रिनि मधुरलियर्थ वि[2] अ[13] ११ युगलं अ[14] १२ अहः कु १३-१३ नास्ति वि मै १४ आयच्छमानसेनौ ताहशो मूको

स्कन्द० [1]त्रयः पवयः पवयोऽत्र हिरण्मयानि मधुभाजनानि[1], 'हिरण्यया वां पवयः प्रुषायन्' ( ऋ १, १८०,१ ) इति मन्त्रान्तरे दर्शनात् । ते[2] मधुपूर्णाः त्रयः पवयः युवयोः स्वभूते मधुवाहने रथे। आगच्छतोः श्रमात्[2] पिपासितयोः युवयोः अस्ति रथे पेयं मध्वित्यर्थः । सोमस्य चोपरि वेनाम् कान्तिम् युवयोरिच्छामित्यर्थः[3] । विश्वे इत् विदुः इत् एवार्थे । सर्व एव यजमाना जानन्ति आगच्छतोः[4] । आगताभ्यां युवाभ्यां सोमाभिलाषितां[5] जानन्तः सर्व एव यजमानाः सोमं दास्यन्तीत्यर्थः । त्रयः स्कम्भासः स्तम्भाः[6] स्कभितासः प्रतिबद्धाः । क्व। सामर्थ्यात् रथे सदसि वा। किमर्थम्। आरभे आरम्भणाय अवष्टम्भनाय[7] । आगच्छतोरागतयोर्वा श्रान्तयोः रथे सदसि वा अवष्टम्भनस्तम्भा अपि विद्यन्त एवेत्यर्थः । एतज्ज्ञात्वा त्रिः बहुकृत्वः नक्तम् रात्रौ याथः यातमस्मत्समीपम्। त्रिः उ[8] उकार एवार्थे । बहुकृत्व एव। हे अश्विनौ! दिवा ॥ २ ॥

वेङ्कट० त्रीणि मधुपात्राणि सन्ति[9] मधुवाहने भवतोः[10] रथे । [11]सोमस्य कान्तां सूर्याम् अनु तस्याः स्वयंवरे सर्वे एव देवास्तं रथं प्रत्यक्षेण अजानन्[11] । तस्मिन् तिस्रः[12] स्थूणाः अवष्टम्भनार्थं स्थापिताः । तौ युवां रात्रावस्मान्[13] त्रिः आगच्छतम् अह्नि[14] च ॥ २ ॥

मुद्गल० मधुवाहने मधुद्रव्याणां नानाविधखाद्यादीनां वहनेन[15] युक्ते अश्विनोः सम्बन्धिनि रथे पवयः वज्रसमाना दृढाः चक्रविशेषाः त्रयः त्रिसंख्याकाः[16] सन्ति । इत् इत्थं चक्रत्रयसद्भावप्रकारम् विश्वे सर्वे देवाः सोमस्य चन्द्रस्य वेनाम् कमनीयां भार्याम् अनु[17] उपलक्ष्य यात्रायाम् विदुः जानन्ति । यदा सोमस्य वेनया सह विवाहः तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं रथमारुह्य अश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः । तस्य रथस्योपरि स्कम्भासः स्तम्भविशेषाः त्रयः त्रिसंख्याकाः स्कभितासः स्थापिताः । किमर्थम् । आरभे आरब्धुम् अवलम्बितुम्। यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तावलम्बनभूताः स्तम्भा इत्यर्थः । हे अश्विना! अश्विनौ! युवां तादृशेन रथेन नक्तम् रात्रौ त्रिः याथः त्रिवारं गच्छथः । तथा दिवा दिवसेऽपि त्रि याथः । रात्रावहनि च रथमारुह्य पुनः पुनः क्रीडथ इत्यर्थः ॥ २ ॥

समाने अहन् त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥ ३ ॥

समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्षतम् । त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥ ३ ॥

---

१-१. अत्र कु. २. नास्ति अ कु. ३. °रिच्छाम् रवि. ४. नास्ति रवि. ५. °भिलषितं कु. ६. नास्ति मूको. ७. °म्भनाय कु. ८. नास्ति कु. ९ नास्ति वि[1] अ[1] ल कु रवि. १०. भवतः वि[1] ल. ११-११. त रथं सो° वि[1] रवि ल अ, पिपासितयोः । आगच्छतोः सोमं प्रति युवयोरिच्छा सर्व एव यजमाना जानन्ति सोमाभिलाषता जानन्त, युवाभ्या सोमं दास्यन्तीत्यर्थ. वि[1] अ[1], रथं 'अजानन् वि[2]. १२. त्रयः वि[2]. १३. रात्रेः° कु ल रवि. १४. अह कु ल रवि. १५. द्र. सा.; वेङ्क. मूको. वाहन°. १६. °का: वि. १७. नास्ति मूको.

स्कन्द० अहन्[१] त्रिः इत्यनयोः कारकक्रियाविशेषणयोः अवद्यगोहना इत्यनया आमन्त्रितस्था क्रियया सम्बन्धः । पराङ्गवद्भावस्तु न भवति, [२]त्रिशब्दस्य अव्ययस्य[२] प्रतिषेधात् । समाने[३] अहस्त्रिरित्यनयोः त्रिशब्देन व्यवधानात् । समाने अहन् एकस्मिन्नेवाहनि त्रिः बहुकृत्वः अवद्यगोहनौ[४]! गर्ह्यस्य तमसो गूहयितारौ[५]! स्वेन ज्योतिषा अपहन्तारावित्यर्थः । त्रिः बहुकृत्वं अद्य अस्मदीयं यज्ञम् मधुना उदकेन मिमिक्षतम् सिञ्चतम् । त्रिः बहुकृत्वः वाजवतीः बलवतीः इषः अन्नानि हे अश्विनौ! युवम् युवाम् अस्मभ्यम् पिन्वतम् सिञ्चतं धारयतम् । बलकराण्यन्नान्यस्मभ्यं दत्तमित्यर्थः । मा च केवलौ । किं तर्हि । युष्मत्प्रसादेनैव दोषा उषसः च रात्रयश्चोषसश्च अस्मभ्यं[६] ददतु । उषःशब्देनात्र साहचर्यादहर्लक्ष्यते । सप्तम्येकवचनस्य स्थाने उभयत्र प्रथमाबहुवचनम् । रात्रौ चाहनि च पिन्वतम् । सततं दत्तमित्यर्थः ॥ ३ ॥

वेङ्कट० एकस्मिन् अहनि त्रिः आगतौ हे अवद्यानि विनाशयन्तौ[७]! । त्रिः अद्य अस्माकम् [८]यज्ञम् मधुना[८] सिञ्चतम् । तथा ‡रात्रीः उषसः‡ च¶ बलयुक्तानि अन्नानि युवाम् अस्मभ्यम् त्रिः दुग्धम्§ ॥ ३ ॥

मुद्गल० अश्विना[९] । हे अश्विनौ देवौ! युवम् युवाम् उभौ समाने अहन् एकस्मिन्ननुष्ठानदिने त्रिः अवद्यगोहना त्रिवारमनुष्ठानगतानां दोषाणाम् संवरणकारिणौ भवतम् । अद्य अस्मिन्दिने यज्ञम् यज्ञगतं हविः मधुना मधुररसेन[१०] त्रिः मिमिक्षतम् त्रिवारं सिञ्चतम् । किञ्च दोषाः उषसः च रात्रीः दिवसांश्च रात्रिषु दिवसेषु च नैरन्तर्येण वाजवतीः बलकारिणीः इषः अन्नानि अस्मभ्यम् त्रिः त्रिवारम् पिन्वतम् सिञ्चतम् । प्रयच्छतमित्यर्थः ॥ ३ ॥

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥ ४ ॥

त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराऽइव । पिन्वतम् ॥ ४ ॥

स्कन्द० त्रिः वर्तिः त्रिः बहुकृत्वः वर्तिः वर्तन्या प्रसिद्धेन मार्गेण यातम् । क्व । त्रिः अनुव्रते जने अनुव्रतशब्दः आनुपूर्व्येण भक्तवचनः प्रसिद्धो लोके । बहुकृत्वो भक्ततामापन्ने[११] भक्ते जने । नित्यं भक्तस्य भारतस्य मनुष्यस्य समीपं गच्छतमित्यर्थः । गत्वा च त्रिः सुप्राव्ये सुष्ठु प्रावयति[१२] प्रतर्पयति यो देवताः स सुप्रावी यष्टा तस्मै सुप्राव्ये बहुकृत्वो यष्ट्रे । त्रेधेव शिक्षतम् ।

१. अहन् अहन् इति. २-२. °शब्दान्यय° अ. ३. हे समाने कु. ४. °गोहना इति. ५. °गोहि° तारौ कु. ६. अस्म्या अ कु. ७. अविनाशयन्तौ वि[१] अ[१]. ८-८. नास्ति वि[१]. † °ना उदकेन वि[२] अ[२]. ‡-‡ रात्रिषु° त्रि[२] अ[१] क. ¶ च दातव्यानि वि[१]. § दोग्धुं दत्तम् वि[१] अ[१]; दोग्धम् ह इति[१५]. ९. नास्ति । १०. मधुरसेन वि. ११. °को भाव° कु; भक्तभाव° अ. १२. प्रव° इति.

त्रिधाशब्दः त्रिशब्दस्य[1] बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुवचनस्यार्थे[2] । इवशब्दः 'अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः' (तु. या ७,३१) इति पदपूरणः । शिक्षतिर्दानकर्मा (तु. निघ ३,२०)। बहुप्रकारं दत्तम् । किम् । सामर्थ्यात् धनम् । किञ्च त्रिः नान्यम् टुनदि समृद्धौ । बहुकृत्वः पुत्रादिसमृद्धिम् वहतम् प्रापयतम् । हे अश्विनौ! युवां पुत्रादिसमृद्धिमपि दत्तमित्यर्थः । किञ्च त्रिः, पृक्षः अन्ननामस्वेतत् पठितम् ( तु. निघ २,७ ) 'पक्वाः पृक्षो भरन्त वाम्' ( ऋ ५,७३,८ ) इत्यादिषु बहुवचनान्त-सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम् । बहुकृत्वोऽन्नानि । अस्मे अस्मभ्यम् अक्षरेव पिन्वतम् 'अक्षरम्' ( निघ १,१२ ) इत्युदकनाम । उदकानीव पिन्वतम् । यथा मेघः अन्यो वा कश्चित् प्रभूतान्युदकानि [3]वर्षत्येवं प्रभूतान्यन्नानि[3] बहुकृत्वोऽस्मभ्यं दत्तमित्यर्थः ॥ ४ ॥

वेङ्कट० [4]त्रिः मार्गं गच्छतम् । त्रिः अनुकूलकर्मणि जने आगच्छतम् । त्रिः सुष्ठु परिरक्षणीयौ† । तथा त्रेधा च‡ दत्तम् । इव इति पूरणम्[4] । त्रिः अस्माकं[5] हर्षजननं [6]धनम् वहतम्[6] । त्रिः अन्नम् अस्मासु उदकानीव पर्जन्यः पिन्वतम्[7] ॥ ४ ॥

मुद्गल० हे अश्विना! अश्विनौ! युवम् युवाम् त्रिः वर्तिः यातम् अस्मदीयवर्तनसाधनं गृहं त्रियातम् । त्रिवारं प्राप्नुतम् । तथा अनुव्रते अस्मदनुकूलव्यापारयुक्ते जने त्रिः यातं त्रिवारं तदनुग्रहाय गच्छतम् । त्रिः सुप्राव्ये त्रिवारं सुष्ठु प्रकारेण भवद्भ्यां रक्षणीये । प्रवर्तमानान् अस्मान् त्रेधेव त्रिभिरेव प्रकारैः शिक्षतम् । पुनःपुनरनुष्ठानमुपदेष्टव्यमित्यर्थः । तथा नान्द्यम् नन्दनीयं सन्तोषकरं फलम् त्रिः वहतम् प्रापयतम् । अस्मे अस्मासु पृक्षः अन्नम् त्रिः पिन्वतम् त्रिवारं प्रयच्छतम् । दृष्टान्तः । अक्षरेव अक्षराण्युदकानि तानि[8] पर्जन्यो यथा प्रयच्छति तद्वत् ॥ ४ ॥

त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता॒ त्रिरु॒ताव॑तं॒ धियः॑ ।
त्रिः सौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि न॒स्त्रि॒ष्ठं वां॒ सूरे॑ दुहि॒ता रु॑हद्रथ॑म् ॥ ५ ॥

त्रिः । नः॒ । र॒यिम् । व॒ह॒त॒म् । अ॒श्वि॒ना॒ । यु॒वम् । त्रिः । दे॒वऽता॑ता । त्रिः । उ॒त । अ॒व॒त॒म् । धियः॑ ।
त्रिः । सौ॒भ॒ग॒ऽत्वम् । त्रिः । उ॒त । श्रवां॑सि । नः॒ । त्रि॒ऽस्थम् । वा॒म् । सूरे॑ । दु॒हि॒ता । आ । रु॒ह॒त् । रथ॑म् ॥

स्कन्द० त्रिः[9] बहुकृत्वः नः अस्मभ्यम् रयिम् धनम् वहतम् प्रापयतं दत्तं हे अश्विनौ! युवाम् । क्व । त्रिः देवताता यज्ञनामैतत् ( तु. निघ ३,१७ ) त्रिरावृत्ते[10] यागे पुनःपुनः यजद्भ्योऽस्मभ्यम्[11] इत्यर्थः । त्रिः उत अवतम् धियः उतशब्दोऽप्यर्थे । धिय इत्यस्माच्च परो द्रष्टव्यः । धियोऽपि त्रिरवतम् । कर्माण्यपि प्रज्ञा वा अस्मदीया बहुकृत्वो रक्षतमित्यर्थः । किञ्च त्रिः सौभगत्वम् बहुकृत्वः सौभाग्यं सुधनतां वा[12] । किम् । साकाङ्क्षत्वात् योग्यत्वाच्च व्यवहितस्यापि वहतमित्यस्यानुषङ्गः । वहतं दत्तम् । त्रिः उत श्रवांसि 'श्रवः' (निघ २,७) इत्यन्ननाम । कीर्तिपर्यायो वा । अन्नान्यपि

१. त्रिधाश° म कु २. बहुधाशब्दस्यार्थे म कु. ३-३. तथा कु. ४-४. नास्ति त्रि[२]. † °णीये सुष्ठु प्रवर्तयानि या देवता स शुप्रावीयेष्टा यागे यष्टे (?) वि[१] अ[२]. ‡ नास्ति अ[२] कु. ५. °कम् अन्न वि[१]. ६-६. नास्ति वि[१] अ[२]. ७. पिवतम् वि[१] ल. ८. नास्ति वि. ९ नास्ति कु. १०. °रावृत्ते रवि अ. ११. °स्मभ्यम् कर्हि म. १२. नास्ति म कु.

कीर्तिं वा बहुकृत्वो वहतम् । कस्मै । नः अस्मभ्यम् । किञ्च त्रिवृतम् वाम् इत्यादि । अत्रेतिहासमाचक्षते—'सूर्यस्य दुहितरं देवा वरयामासुः । ते ऊचुः—आजिं धावाम,[1] यो नो जेष्यति तस्येयं भविष्यतीति । तामश्विनौ जिग्यतुः । सा जित्वाऽश्विनौ रथमारुरोह'[2] इति । तदेतत् त्रिवृतं वाम् इत्यादिनोच्यते । 'त्रिवन्धुरेण त्रिवृता रथेन त्रिः चक्रेण सुवृता यातमर्वाक्' ( ऋ १,११८,२ ), 'क्व त्री चक्रा त्रिवृतः ( ऋ १,३४,९ ) इत्यादिषु दर्शनादश्विनोः त्रिचक्रो रथः । स त्रिषु चक्रेषु स्थितत्वात्[3] लोकत्रयस्यत्वात् च[4] त्रिवृतः । तं त्रिवृतम् युवयोः स्वभूतम्[5] । सूरे दुहिता सूरशब्दः सूर्यपर्यायः । षष्ठ्यर्थे सप्तमी । तत्प्रभवत्वाच्च उषसो दुहितृव्यपदेशः । सूर्यस्य दुहिता उषाः । आ वहत् आरूढवती रथम् । तत् कक्षीवान्[6] वक्ष्यति—'आ वां रथं दुहिता सूर्यस्य' ( ऋ १,११६,१७ ) इति ॥ ५ ॥

वेङ्कट० त्रिः अस्मभ्यं धनम् वहतम्[7] । त्रिः यज्ञे[7] दत्तम् । अपि च कर्माणि रक्षतम् । त्रि[7]सौभाग्यम् । त्रिः उत अन्नानि[7] । त्रिभिश्चक्रैरवस्थितं तं युवयोः रथं सूर्ये[8] स्वयंवरार्थं गतयोः स्तस्य दुहिता आ[9] रुरोह ॥ ५ ॥

मुद्गल० हे अश्विना । अश्विनौ ! युवम् युवाम् नः अस्मान् रयिम् धनम् त्रिः वहतम् त्रिवारं प्रापयतम्[10] । देवताता देवताती देवयुक्ते[11] कर्मणि त्रिः त्रिवारम् आगच्छतमिति शेषः । उत अपि च धियः अस्मद्बुद्धीः त्रिः त्रिवारं रक्षतम् । सौभगत्वम् सौभाग्यम् त्रिः वहतमिति शेषः । उत अपि च श्रवांसि अन्नानि नः अस्मभ्यम् त्रिः वहतम् । वाम् युवयोः सम्बन्धिनम् त्रिवृतम् चक्रत्रयेऽवस्थितम् रथम् सूरे सूर्यस्य दुहिता पुत्री आ रुहत् आरूढवती ॥ ५ ॥

त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।
ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६ ॥

त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊँ इति । दत्तम् । अत्ऽभ्यः । ओमानम् । शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम् । शुभः । पती इति ॥ ६ ॥

स्कन्द० [12]त्रिः बहुकृत्वः नः अस्मभ्यम् अश्विना । अश्विनौ ! दिव्यानि भेषजा दिव्यानि भेषजानि व्याधिनिवृत्तिकराण्यौषधानि[12] । त्रिः पार्थिवानि त्रिः उ त्रिरेव दत्तम् अद्भ्यः अन्तरिक्षात् । 'आपः' (निघ १,३) इति अन्तरिक्षनाम । [13]लोकत्रयेऽपि यानि भेषजानि[13] तान्यस्मभ्यं बहुकृत्वो दत्तमित्यर्थः । किञ्च ओमानम् सर्वोपस्करपालनसमर्थम् । शंयोः चतुर्थ्यर्थे षष्ठी । शंयवे सुखकामाय ममकाय मामकीनाय सूनवे पुत्राय । त्रिधातु धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽस्मरसाः । देवविद्

1. धावत् कु. 2. °रुरोह् विवः रवि. 3. नास्ति रवि. 4. °भूता रवि. 5. दत्त् अ[1] वि[1].] 6. दश अ[1] वि[1]. 7-7. °भाग्यं च वहतं दत्तं विजान्यन्नानि च वि[1] अ[1]. 8. सूर्यस्य दुहिता अ[1] वि[1]. 9. °हिता उषा अ[1] वि[1]. 10. °तमिति वि. 11. युक्ते वि. 12-12. त्रिः बहुकृत्वः न अस्मभ्यं हे अश्विना दिव्यानि भेषजा दिव्यानि भिषक्कर्मकृतानि भ कु; त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः अश्विनौ दिव्यानि रवि. 13-13. °लोकत्रयेऽपि ताने भ कु.

मनुष्योपभोग्यैरन्नरसैस्त्रिभिरप्युपेतम्। शर्म गृहनामैतत् ( द्र० निघ ३,४ )। गृहम् वहतम् प्रापयतं दत्तम्। शुभः पती! उदकस्य[1] स्वामिनौ!। अथवा शंयोरिति सुखेच्छोपादानादिष्यमाणस्य याचितव्यत्वात् शं च दत्तमित्यर्थः, न गृहम्। ओमानमित्यपि[2] अवतेस्तृप्तिकर्मण.। अवनं पालनं[3] वा। त्रिधात्वित्यपि त्रयाणां धातूनां समूहः। अवनपालनयोरन्यतरत् देवपितृमनुष्योपभोग्यमन्नरसत्रयसमूहं[4] सुखं च दत्तमित्यर्थः। अथवा त्रिधात्विति शर्मण एव विशेषणम्, नार्थान्तरप्रतिनिर्देशः। धातुशब्देन तु शीतोष्णवर्षकालाख्य उच्यन्ते। त्रिषु कालेषु भवं[5] त्रिधातु शर्म। कालत्रयेऽपि सुखं दत्तमित्यर्थः॥ ६॥

वेङ्कट० 'त्रि' अस्मभ्यम् अश्विनौ! दिवि भवानि भेषजानि दत्तम्। त्रि. पार्थिवानि त्रि. च आन्तरिक्षाणि†। ‡शंयो. बार्हस्पत्यस्य‡ यज्जगत. रक्षकं सुखं §तत् त्रिगुणम्§ उदकपती! सूनवे ¶मदीयाय आवहतम्¶[6]॥ ६॥

मुद्गल० हे अश्विना! अश्विनौ! न. अस्मभ्यम् दिव्यानि द्युलोकवर्तीनि भेषजा औषधानि त्रि दत्तम्। "तथा† पार्थिवानि पृथिव्यामुत्पन्नान्यौषधानि त्रिः दत्तम्"। अद्भ्य. उ अन्तरिक्षसकाशादपि औषधानि त्रि दत्तम्। शंयोः एतन्नामकस्य बृहस्पतिपुत्रस्य सम्बन्धिनम् ओमानम् सुखविशेषं ममकाय सूनवे मदीयाय पुत्राय दत्तम्। हे शुभस्पती! शोभनस्यौषधजातस्य पालकौ! युवाम् त्रिधातु वातपित्तश्लेष्मधातुत्रयशमनविषयम् शर्म सुखम् वहतम् प्रापयतम्॥ ६॥

इति प्रथमाष्टके तृतीयाध्याये चतुर्थो वर्गः॥

त्रिर्नो॑ अश्विना यज॒ता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑ पृथि॒वीम॑शायतम्।
ति॒स्रो ना॑सत्या रथ्या परा॒वत॑ आ॒त्मेव॒ वात॒: स्वस॑राणि गच्छतम्॥ ७॥

त्रिः। नः॒। अ॒श्वि॒ना॒। य॒ज॒ता॒। दि॒वेऽदि॑वे। परि॑। त्रि॒ऽधातु॑। पृ॒थि॒वीम्। अ॒शा॒य॒त॒म्। ति॒स्रः। ना॒स॒त्या॒। र॒थ्या॒। प॒रा॒ऽवत॑। आ॒त्माऽइ॑व। वात॑:। स्वस॑राणि। ग॒च्छ॒त॒म्॥ ७॥

स्कन्द० 'त्रि' बहुकृत्व[7] न. अस्मान् 'हे अश्विनौ! यजता नेदमामन्त्रितम्, अननुदात्तत्वात्[8]। प्रत्यक्षकृतश्चायं मन्त्र.। अतः यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यौ यजता यष्टव्यौ यागार्हौ दिवेदिवे अहन्यहनि तौ परि[9] त्रिधातु पृथिवीम् त्रिधात्विति पृथिवीसामानाधिकरण्यात् व्यत्ययेन[10] नपुंसकता। पृथिवीशब्देनापि समस्तभूमण्डलवचनेनैकदेशोऽत्र लक्ष्यते। त्रिभिरपि रसैरन्वेतां निवासभूमिम्। परि अशायतम् "अश्नोतेरिदं प्यन्तस्य छान्दसं रूपम्[11]।

१. °स्य पती कु. २. °मिति अ कु. ३. सम्पादन भ. ४. °भोग्यान्नरस° कु. ५. भव् कु. ६-६. नास्ति वि[2]. † °क्ष्याणि कु. ‡-‡ नास्ति कु. §-§ दत्तं तद्गु° वि[1] अ[2]. ¶-¶ मदीया च वहतम् वि[1] लपं, मदीयायावहतम् वि[1] अ[2]. ७-७. नास्ति मै[2]. † यथा मूको. ८-८. नास्ति रवि. ९. मनुदा' रवि. १०. नास्ति रवि. ११-११. अश्नोते रूपम् अ कु

[1]पर्यशायतं परिप्रापयतम् । दत्तमस्म्यामित्यर्थः[1] । अथवा न इति षष्ठी पृथिवीविशेषणार्था । पृथिवी च वेदिरभिप्रेता । अशायतमित्यपि प्रकृत्यन्तरस्यैवाश्नोतेः रूपम् । अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं [2]परि अशायतम् अश्नुवाथाम् । सर्वतो व्याप्नुतमित्यर्थः । अथवा अशायतमिति शेते रूपम् । शेतिश्च स्थानार्थः । शुद्धोऽप्याङ्पूर्वार्थे द्रष्टव्यः । सर्वत आविष्टम् । अवष्टभ्य तिष्ठतमित्यर्थः । त्रिधात्विति धातुशब्दो यथाक्षरसवचनः ततः पूर्ववत् पृथिवीविशेषणम् । त्रिभी रसैरुपेतां वेदिलक्षणां पृथिवीमिति[2] । अथ[3] धातुशब्दः कालवचनः । ततः क्रियाविशेषणम् । त्रिषु पूर्वाह्णमध्यन्दिनापराह्णलक्षणेषु कालेषु भवं[4] त्रिधातु अशायतम् । सर्वासु यागवेलासु अशायतमित्यर्थः । किञ्च तिस्रः अपि अस्मदीया ऐष्टिकपाशुकसौमिकलक्षणा वेदीः । [5]हे नासत्या[5] ! नासत्यनामानौ ! । यद्यपि चाश्विनोरन्यतरस्येदं नामधेयं तथापि साहचर्यादुभयोर्व्यपदेशः । रथ्या । रथस्य वोढारौ ! [6]यज्ञान् प्रति प्रापयितारौ[6] ! रथे वा साधू ! । परावतः दूरनामैतत् (तु. निघ ३,२६) । तादर्थ्याच्चात्र तादर्थ्यम् । दूरस्थाः[4] अपि । आत्मेव वातः आत्मशब्देनात्र आत्मसम्बन्धात् मन उच्यते । [6]वात इत्यपि[6] लुप्तेवशब्दम् उपमानमेव द्वितीयम् । [7]मन इव च[7] वात इव च । यथा वायुमनसी शीघ्रं गच्छतः तद्वत् । स्वसराणि अहर्नामैतत् (तु निघ १,९) । सप्तम्यर्थे चात्र प्रथमा । यजनीयेष्वहस्सु शीघ्रं गच्छतम्[8] । अथवा आत्मेति वातस्यैव[9] विशेषणम् न पृथगुपमानम्[10] । वातो हि सर्वस्यात्मा, सर्वशरीराणां पाञ्चभौतिकत्वात् । यथा सर्वस्यात्मा वातः शीघ्रं गच्छति तद्वच्छीघ्रं गच्छतमिति । अनयोश्चार्धर्चयोः पूर्वेण निवासभूमिप्राप्तिराशास्यते, परेण यागकालेषु[11] वेदिगमनमित्यस्यां तावत् कल्पनायामपौनरुक्त्यमेव । यदा तु पूर्वेण वेदिव्याप्तिरुक्ता, तदा परेण वेदिगमनमुच्यते । गमनोत्तरकालं व्याप्तिः पूर्वेणेत्येवमपौनरुक्त्यम्[11] । वाक्यभेदाद्वा अर्धर्चयोस्तुल्यार्थत्वेऽप्यपौनरुक्त्यमेवेति ॥ ७ ॥

वेङ्कट० अश्विनौ ! [13]यजनीयौ अह्नः ] निः अस्मान् वेदिभूताम् पृथिवीम् बर्हिषा त्रिधातुना परि अशायतम् ‡परितः स्थारितवन्तौ‡ । त्रिधातु तिस्रो वेदीः नासत्यौ ! रथ्यौ ! दूरात्[14] आगच्छतम् । व्याप्त इव वायुः अह्नानि[14] । यथा वायुर्दिवसेषु संचरति[15] ॥ ७ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! दिवेदिवे प्रतिदिनम् यजता यष्टव्यौ युवाम् नः अस्मदीयाम् पृथिवीम् वेदिरूपां भूमिम् परि सर्वतः प्राप्य त्रिधातु कक्ष्यात्रययुक्ते आस्तीर्णे बर्हिषि त्रिः त्रिवारम् अशायनम् शयनं कुरुतम् । हे नासत्या ! सत्यवन्तौ ! रथ्या । रथ्यौ ! रथस्वामिनौ !

---

1-1. अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं पर्यशायतम् अश्नुवाथाम् । सर्वतो व्याप्नुतमित्यर्थः । अथवा अशायतमिति शेतेः रूपम् । शेतिश्च व्यानार्थः । इदं मध्यमस्य छान्दसं रूपम् । पर्यशायतं परिप्रापयतम् । दत्तमस्म्यामित्यर्थः अ कु. 2-2. नास्ति अ कु. 3. अथवा अ कु. 4. भवद् कु. 5. [5]स्थः कु. 6-6. वातशब्दोऽपि अ कु. 7-7. मन इति इव च कु; मन इवेव अ. 8. गच्छतः कु. 9. वातस्य इवि. 10. [10]पमा कु. 11. [11]काले इवि. 12. [12]तत्तथा कु. 13-13. [13]नीयावन्वशिरसिमन् वेदिम् वेदिभूतां पृथिवीं बर्हिषा कुशाकुलवल्लेषु प्रातःसवनादिषु अशायनम् परिशायनन्त परितस्थारितवन्तौ । तिस्रो वेदीः ऐष्टिकपाशुकसौमिकलक्षणा वेदीः । नामधौ रथ्यौ रथस्य वोढारौ (?) अ[२] वि[१]. † नास्ति वि[१]. ‡-‡ [०]रितस्तारि[०] छ इवि; [०]रितः तारि[०] कु. 14. अहनि कु. 15. चरति वि[१] अ[१].

तिस्रः त्रिसंख्याका ऐष्टिकपाशुकसौमिकरूपाः वेदीः परावतः दूरदेशात् द्युलोकात् गच्छतम्। दृष्टान्तः। स्वसराणि शरीराणि आत्मेव वातः यथा प्राणिनामात्मभूतः प्राणवायु.[1] तदीयानि शरीराणि गच्छति तद्वत् ॥ ७ ॥

त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥ ८ ॥

त्रिः । अश्विना । सिन्धुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतम् ।
तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् । रक्षेथे इति । द्युऽभिः । अक्तुऽभिः । हितम् ॥

स्कन्द० त्रिः बहुकृत्वः हे अश्विनौ! सिन्धुभिः सप्तमातृभिः स्यन्दनात् सिन्धवः सोमा उच्यन्ते। सप्त छन्दांसि मातृभूतानि अभिषवद्वारेण [1]वा निर्मातृणि[2] येषां ते सप्तमातरः सोमा [2]एव। उभयत्र[3] इत्थंभूतलक्षणे तृतीया। छन्दोभिरभिषुतैः सोमैः सम्बद्धाः। त्रयः आहावाः कूपादेः सन्निधौ प्रभूतोदकं गवादीनां[4] निपानमाहाव इति प्रसिद्धं[5] लोके। तत्स्थानीयाः त्रयः। किम्। सामर्थ्यात्[5] कृतशब्दः परस्तात्कृतोऽनुषक्तव्यः। युष्मदर्थं कृता। केन[6] सामर्थ्यादस्माभिः। कतमे पुनस्ते। पूतभृदाधवनीयद्रोणकलशाः[7]। बहुकृत्वोऽस्माभिर्युष्मदर्थं सर्वे. छन्दोभिरभिषुतानां सोमानां पूर्णा आहावस्थानीयाः पूतभृदाधवनीयद्रोणकलशाः[7] त्रयोऽप्युपकल्पिता इत्यर्थः। न च केवलाः। किं तर्हि। अन्यदपि पुरोडाशादि सवनविभागेन[8] त्रेधा हवि. कृतम्। किंच तिस्रः पृथिवीः उपरि प्रवा दिवः पृथिवीशब्देनात्र साहचर्यात् सर्वे लोका उच्यन्ते। उपरीत्येतत् दिव इत्येतेन सम्बध्यते। प्रवेति[9]। प्रवातिर्गतिकर्मा (द्र. निघ २,१४)। न चेदमामन्त्रितम्, अननुवाक्यत्वात्[10]। रक्षेथे इति[11] मध्यमपुरुषसंयोगात्। अयमप्यर्धर्चः प्रत्यक्षकृतः। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता कल्प्या। यौ युवां त्रीनपि लोकानुपरि च द्युलोकस्य प्रवा गन्तारौ तौ नाकं स्वर्गं [12]स्वेन व्यापारेण[12] रक्षेथे। न च केवलम्। किन्तर्हि। द्युभिः अक्तुभिः "द्युः" (निघ १,९) इत्यहर्नाम[2]। अक्तुः (निघ १,७) इति रात्रिनाम। उभयत्र च सहयोगलक्षणा तृतीया। अहोभिः रात्रिभिश्च[13] सह। कीदृशम्। हितम् उपकारकं सर्वप्रजानाम् ॥ ८ ॥

वेङ्कट० सप्तादित्यरश्मयो मातरो यासां नदीनां ताभिः अश्विनौ! त्रिः कृतम्। एतद्विशदमाह— त्रयः इति। कूपस्य [14]समीपं †प्रभूतोदकं निपानमाहावः†। त्रयः आहावाः कृता.[14]। एतदेव स्पष्टमाह—त्रेधा हवि। द्रोणकलश आधवनीयः पूतभृत् (द्र. तै ३,२,१,२) इति त्रय आहावास्तेषु त्रेधा सोमः कृतः। एवं कृते तिस्रः वेदीः अभि भ्रुवनेन[15] दिवः आगच्छतम् [16]द्युवाम् अहोरात्रैः निहितम्[16] आदित्यम् रक्षेथे ॥ ८ ॥

---

१. नास्ति वि. २-२. नास्ति अ कु. ३. नास्ति अ कु. ४. °द. अ कु. ५. साकल्यलात् कु. ६. नास्ति मूको. ७. °भृद्वनी° अ कु. ८. विभागेन अ कु. ९. प्रवा अ कु. १०. अनुवा° रवि. ११. इत्यपि रवि[1,2]. १२-१२. स्वव्यापारेण अ कु. १३. रात्री° कु. १४-१४. समीपम् भूतोदकं गवादीनामनिधानमाहावास्त्रय आहावा अस्माभिः व्यापाः वि[1] अ[2]. †-† °दकनिधान° रवि, °निधानम° कु. १५. भ्रवनेन ल वि[1,2] १६-१६. द्युवानमहोरात्रे लोकोपकारकं तम् वि[1] अ[2].

मुद्गल० हे अश्विना! अश्विनौ! सप्तमातृभिः सप्तसङ्ख्याकाः गङ्गादिनद्यः मातरः उत्पादिका येषां जलविशेषाणां ते सप्तमातरः। तैः सिन्धुभिः स्यन्दनस्वभावैः जलैर्वसतीवरीनामभिः त्रिः सोमाभिषवः कृत इति शेषः। आहावाः यथोक्तजलयुक्तसोमस्याधारभूताः कूपसदृशाः त्रय त्रिसंख्याका द्रोणकलशाधवनीयपूतभृदाख्या निष्पन्ना इति शेषः। तेषु त्रिषु पात्रविशेषेषु त्रेधा त्रिभिः प्रकारैः सवनत्रयगतैः हविः कृतम् सोमाख्यं हविः सम्पादितं द्रव्यं वर्तते इति शेष। तिस्रः पृथिवीः उपरि त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वम् प्रवा प्रवन्तौ गच्छन्तौ युवाम् दिवः नाकम् द्युलोकसम्बन्धिनम् आदित्यम् रक्षेथे। कीदृशं नाकम्। द्युभिः अहोभिः अक्तुभिः रात्रिभिश्च हितम् स्थापितम्। अहनि सूर्य उदेति रात्रावस्तं गच्छति—इत्येवमहोरात्राभ्यां सूर्यं व्यवस्थापयथ इत्यर्थः ॥ ८ ॥

क्व॑ त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य॒ क्व॑ त्र॒यो व॒न्धुरो॒ ये सनी॑ळाः ।
क॒दा योगो॑ वा॒जिनो॒ रास॑भस्य॒ येन॑ य॒ज्ञं ना॑सत्योपया॒थः ॥ ९ ॥

क्व॑ । त्री । च॒क्रा । त्रि॒ऽवृतः॑ । रथ॑स्य । क्व॑ । त्र॒यः । व॒न्धुरः॑ । ये । सऽनी॑ळाः । क॒दा । योगः॑ । वा॒जिनः॑ । रास॑भस्य । येन॑ । य॒ज्ञम् । ना॒स॒त्या॒ । उ॒प॒ऽया॒थः ॥ ९ ॥

स्कन्द० 'क्व त्री चक्रा' त्रीणि चक्राणि त्रिवृतः त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्। तस्य त्रिवृतो युष्मदीयस्य रथस्य अवयवभूतानि। क्व चा त्रयः वन्धुरः सारथिस्थानं वन्धुर[1] उच्यते। ये सनीळाः समानस्थानाः एकस्मिन्नेव प्रदेशे स्थिताः। मानुषस्य[3] शकटस्येव न[4] भिन्नप्रदेशवर्तिन इत्यर्थः। कदा योगः रथे नियोजनम्। वाजिनः वेगवतः। रासभस्य युष्मदीयस्य अश्वस्य। कदा युष्मदीयोऽश्वो रथे नियोक्ष्यत इत्यर्थः। येन अश्वेन यज्ञम् हे नासत्यौ! उपयाथः उपगच्छथः[5]। किमसन्निहितानि वो गमनसाधनानि येन नागच्छथ इत्येवमागमनविलम्बनादुपालम्भोऽयम् ॥ ९ ॥

वेङ्कट० क्व त्रीणि चक्राणि त्रिभिश्चक्रैर्वर्तमानस्य[6] युवयोः रथस्य। क्व[7] वा त्रयः †फलकाः सङ्घाताः†। प्रउगाकारस्य कोणेषु त्रय †फलकाः सङ्घाताः† भवन्ति[8]। ये सनीळाः एकस्मिन् [9]देशे फलकाः सङ्घटिताः[9]। कदा[10] च [11]योगः रथे[11] युवयोः बलवतः [12]रासभस्य। येन रासभेन[12] नासत्यौ! यज्ञम्[13] उपगच्छथ. ॥ ९ ॥

मुद्गल० हे नासत्या! अश्विनौ! त्रिवृतः त्रिसंख्याकैरधिभिरुपेतस्य[14] भवदीयस्य रथस्य ईषाद्वयं पूर्वभागे संयुज्यते। सेयम् एका अधिः। पृष्ठभागे वियुज्यते। तत्र कोणद्वयं सम्पद्यते। ईषात्रय

1-1. नास्ति क कु. 2. वन्धुरः मूको. 3. मनुष्यस्य क कु. 4. नास्ति मूको. 5. [illegible] गच्छथः क कु. 6. °मिश्च ये य° वि[1]; °मिश्च ते° र° कु रवि अ[1]. 7. नास्ति वि[1] अ[1]. 8-8. [illegible] (?) (ये अ[1]) [illegible] वि[1] अ[1]. †-† °फलकाः° वि[1] [illegible] अ[1] कु रवि. 9-9. [illegible] वि[1] रवि [illegible] वि[1] अ. 10. कदा वि[1] अ[1]. 11-11. [illegible] वि[1] रवि[1] अ[1]; [illegible] वि[1] अ[1]. 12. °[illegible] रासभेन [illegible] वि[1] अ[1]. 13. यज्ञम् अ[1] क. 14. °[illegible]° वि.

[1]रथस्य सम्बन्धीनि त्री चक्रा त्रीणि चक्राणि क्व कुह स्थितानि इत्यस्माभिर्न दृश्यते। ये काष्ठविशेषाः सनीळाः नीळं गृहसदृशं रथस्योपर्युपवेशनस्थानम्, तेन सह वर्तन्ते इति सनीळाः। ते काष्ठविशेषाः बन्धुरः नीडबन्धनाधारभूता त्रयः अक्षेण सहिते द्वे ईषे। इत्येवं त्रिसंख्याकाः क्व कुह स्थिता इति अस्माभिर्न ज्ञायते। वाजिनः बलवतः रासभस्य भवदीयाश्वस्थानीयस्य गर्दभस्य योगः रथे योजनम् कदा कस्मिन् काले। निष्पन्नमिति अस्माभिर्न दृश्यते। येन चक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेन रथेन यज्ञम् अस्मदीयं यागस्थानम् युवाम् उपयाथ † प्राप्नुथ। तादृशस्य रथस्येति पूर्वेणान्वयः[1] ॥ ९ ॥

आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥ १० ॥

आ। नासत्या। गच्छतम्। हूयते। हविः। मध्वः। पिबतम्। मधुऽपेभिः। आसऽभिः। युवोः। हि। पूर्वम्। सविता। उषसः। रथम्। ऋताय। चित्रम्। घृतऽवन्तम्। इष्यति ॥ १० ॥

स्कन्द० हे नासत्यौ! आ गच्छतम् युवाम्। किं कारणम्। यस्मात् सोमलक्षणम् हविः हूयते। आगत्य च[2] मध्वः मधुस्वादमिदं मधुस्वादस्य वाऽस्य[3] एकदेशं स्वांशलक्षणम् पिबतम्॥ मधुपेभिः आसभिः व्यत्ययेनेदं बहुवचनम्। मधुपाभ्यामास्याभ्याम्। कस्मादागच्छावः[4]। उच्यते। युवोः हि हिशब्दो यस्मादर्थे। यस्मात् युवयोः स्वभूतम्[5]। पूर्वम् क्रियाविशेषणमेतत्। अन्याभ्यो देवताभ्यः प्रथमम्। सविता यजमाननामधेयमेतद् शाकपूणिना पठितम्। सर्वस्य यज्ञस्य प्रसविता अभ्यनुज्ञाता यजमानः। उषसः च स्वभूतम् रथम् ऋताय ऋ गतौ। यज्ञं प्रति गमनाय। चित्रम् विचित्रं पूजनीयं वा घृतवन्तम् उदकवन्तम् इष्यति इच्छतेरयं व्यत्ययेन श्यन्। इच्छति। यस्मात् यजमानः युष्मदीयम् औषसं च रथं [6]पूर्वमिच्छति तस्मादागच्छतमित्यर्थः[6]। अथवा सविता प्रकाशद्वारेण सर्वस्य प्रसविता[7] सूर्य उच्यते। उषस इत्येतच्च ऋतायेत्येतेन सम्बध्यते। इष्यतीत्यपि भूतकाले लट्[8] व्यत्ययेन[9] द्रष्टव्यः। यस्मात् युवयोः स्वभूतं रथं पूर्वमतीते काले सविता सर्वस्य प्रसविता सूर्यः स्वदुहितुरुषसः[10] ऋताय गमनाय इष्यति इष्टवान् प्रार्थितवान्। तदेतत्—'आ वां रथं दुहिता सूर्यस्य' (ऋ १,११६,१७)। इत्यत्र [11]वक्ष्यति कक्षीवान्[11]। यस्मात् सूर्यप्रभृतिभिः देवैरप्युषसो [12]गमनाय प्रार्थितरथौ स्थ[12]। तस्मात् महात्मकत्वादागच्छतमित्यर्थः ॥ १० ॥

वेङ्कट० आ गच्छतम् नासत्यौ!। हूयते हविः। [13]तं सोमम् पिबतम्[13] सोमपैः आस्यैः। [14]बहुवचने न[14] तात्पर्यमस्ति। यद्वा[15] बहूनि भवन्ति देवशरीराणि। युवयोः हि रथम् चित्रम्। उदकवन्तम्[16] उषसः पूर्वम् अपररात्र एव[17] सविता दिवसकरणाय इच्छति[18] प्रेरयति वेति[19] ॥ १० ॥

---

१-१. नास्ति वि   † नास्ति मूको.   २. नास्ति कु.   ३ वा तस्य रवि.   ४. °गच्छ कु. ५. °भूतः कु.   ६-६. °मागच्छतामिच्छन्तीत्यर्थः रवि, आगच्छतमिच्छतामि° अ.   ७. प्रसुवन् कु, प्रकाशवान् अ. ८. लङ् रवि.   ९. प्रत्ययेन-अ रवि[1,2].   १०. दुहि° कु.   ११-११. वक्ष्यते रवि.   १२-१२. गमन प्रार्थित कु.   १३. पिब कु.   १४-१४. °चनेन कु.   १५. अथवा कु.   १६. उदकं तमुदकवन्तं वि[1] हपे, उदकं ताम् कु वि[2] रवि.   १७. °न यज्ञस्य प्रासविता यजमानस्य निमित्तं यज्ञ प्रतिगमनाय वि[1] अ[2].   १८ °ति चित्रम् मूको.   १९. वा कु, चेति-ल; नास्ति वि[1] अ[2].

मुद्गल० हे नासत्या! अश्विनौ! इह कर्मणि आ गच्छतम्। अत्रास्माभिः हविः हूयते। युवां च मधुपेभिः मधुरद्रव्यपानयुक्तैः[1] आसभिः भवदीयैरास्यैः मध्वः मधुरद्रव्याणि हवींषि पिबतम्। सविता सूर्यः उषसः पूर्वम् उप कालात्पुरा युवयोरश्विनोः सम्बन्धिनम् रथम् ऋताय अस्मद्यज्ञार्थम् इष्यति हि प्रेरयति खलु। कीदृशम्। चित्रम् पूर्वोक्तैः चक्रत्रयादिभिः विचित्रम् घृतवन्तम् अक्षाञ्जनसाधनेन घृतेनोपेतम् ॥ १० ॥

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ११ ॥

आ। नासत्या। त्रिऽभिः। एकादशैः। इह। देवेभिः। यातम्। मधुऽपेयम्। अश्विना। प्र। आयुः। तारिष्टम्। निः। रपांसि। मृक्षतम्। सेधतम्। द्वेषः। भवतम्। सचाऽभुवा ॥ ११ ॥

स्कन्द० हे नासत्यौ! त्रिभिः एकादशैः इह देवेभिः एकादश परिमाणं येषां ते एकादशाः। त्रयस्त्रिंशत्[1]। सहयोगलक्षणा चात्र तृतीया। इहेत्येतच्च[2] मधुपेयमित्यनेन सम्बध्यते। त्रयस्त्रिंशता देवैः सह। इह यज्ञे यदेतत् मधुपेयम् मधुस्वादं च पानार्हं च सोमलक्षणं हविः तत् प्रति आ यातम्[3]। आगत्य च सोमपानोत्तरकालं हे अश्विनौ! प्र आयुः तारिष्टम् प्रकर्षेण अस्माकम् आयुर्वर्धयतम्। निः रपांसि मृक्षतम् 'रपो रिप्रमिति पापनामनी भवतः' (या ४,२१)। पापानि च निर्मृक्षतम्। मृजू शुद्धौ। निःशोधयतम्। सर्वाण्यपनयतमित्यर्थः। सेधतम् सिधिरत्र[4] सामर्थ्याद् वधार्थः। हतं च। किम्[5]। द्वेषः द्वेष्टॄन् द्वेष्यान्[6] वा अस्माकम्। अथवा सेधतिर्गतिकर्मा। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। शुद्धोऽपि च सोपसर्गार्थो द्रष्टव्यः। यत्किञ्चिद्[7] द्वेष्टृ द्वेष्यं वा अस्माकं तत्सर्वमपगमयतमित्यर्थः। 'नित्यं च सचाभुवा भवतम् यज्ञेषु[8] अस्माभिः सह भवतम्। सचा[9] सहेत्यर्थः। सहभुवौ एकस्थानवर्तिनौ नित्यम् अस्मदीयेषु[10] यज्ञेषु आगच्छतमित्यर्थः ॥११॥

वेङ्कट० आ यातम् नासत्यौ! त्रयस्त्रिंशद्देवैः[11] इह पातव्यं सोमम्। [12]आयुः च प्र वर्धयतम्। पापानि च विनाशयतम्। ‡द्वेष्टॄंश्च निः सेधतम् भवतम् च सहभूतावस्माभिः‡[13] ॥ ११ ॥

मुद्गल० हे नासत्या! असत्येन रहितौ! अश्विना! अश्विनौ देवौ! युवाम् त्रिभिः एकादशैः 'ये देवासो दिव्येकादश स्थ' (ऋ १,१३९,११) इत्यादिमन्त्रप्रतिपादितैः त्रिसंख्याकैः एकादशात्मकवर्गत्रयगतैः देवेभिः देवैः सह मधुपेयम् सोमद्रव्यात्मकं मधुरद्रव्यपानम्[14] अभिलक्ष्य इह अस्मिन् देवयजनदेशे आ यातम् आगच्छतम्। आयुः अस्मदीयमायुष्यम् प्र तारिष्टम् प्रवर्धयतम्। रपांसि अस्मदीयानि पापानि निः मृक्षतम् नि शेषेण शोधयतम्। द्वेषः द्वेषकर्तॄन् सेधतम् प्रतिषेधतम्[15] सचाभुवा। अस्माभिः सहावस्थितौ भवतम् ॥ ११ ॥

---

१. °दवसन° वि. २. नास्ति कु. ३. °देनाह कु. ४. °तम् आगच्छतम् अ. ५. सेधि° अ कु. ६. द्वेष्या कु रवि. ७. यत्किंच कु. ८-८. नित्य च यज्ञेषु रवि, किंच यज्ञे अ कु. ९. सचाभुवा सचा अ कु. १०. अस्मान् अ. ११. °शद्भिर्देवैः अ[1] कु रु वि[1]; °शद्भि वि[1] भ्रपं. १२-१२. नास्ति वि[1] भ्रपं. † इदं मधु स्वादु च पानार्हं च सोमलक्षणं हविः तं प्रति वि[1] अ[1]. ‡-‡ °इव निरुत निरोधनं यज्ञेषु सहभूतौ एकस्थानम् गौ वि[1] अ[1]; निरोधनम्° रु कु रवि. १३. °मधस्य° वि मै. १४. नास्ति वि.

आ नो॑ अश्विना त्रिवृता रथे॑ना॒र्वाञ्चं॑ र॒यिं व॑हतं सु॒वीर॑म् ।
शृ॒ण्वन्ता॑ वा॒मव॑से जोहवीमि वृ॒धे च॑ नो भवतं॒ वाज॑सातौ ॥ १२ ॥

आ । नः॒ । अ॒श्वि॒ना॒ । त्रि॒ऽवृता॑ । रथे॑न । अ॒र्वाञ्च॑म् । र॒यिम् । व॒ह॒त॒म् । सु॒ऽवीर॑म् । शृ॒ण्वन्ता॑ । वा॒म् । अव॑से । जो॒ह॒वी॒मि॒ । वृ॒धे । च॒ । नः॒ । भ॒व॒त॒म् । वाज॑ऽसातौ ॥ १२ ॥

स्कन्द० नः इति तादर्थ्ये चतुर्थी । अस्माकमर्थाय हे अश्विनौ! त्रिवृता रथेन आत्मीयेन अर्वाञ्चम् अस्मदभिमुखम् रयिम् धनम्[1] आ[2] वहतम् प्रापयतम् सुवीरम् शोभनैर्वीरैरुपेतम् । शृण्वन्ता वाम्[3] नित्यमस्मदीयमाह्वानं शृण्वन्तौ वां युवाम् । अवसे तर्पणाय वा पालनाय वा जोहवीमि पुनः-पुनराह्वयामि । वृधे वर्धनाय च नः अस्माकम् भवतम् वाजसातौ संग्रामनामैतत् ( तु. निघ २,१७) संग्रामे । नित्यं च अस्मान् संग्रामेषु जयलक्षणया वृद्धया वर्धयतमित्यर्थः ॥ १२ ॥

वेङ्कट० [1]आ वहतम् अश्विनौ! त्रिवृता रथेन अस्मभ्यम् इतोमुखम् सुवीरम् रयिम् । शृण्वन्तौ वाम् अहं[ रक्षणार्थं भृशमाह्वयामि । वृद्धयर्थम् च अस्माकम् भवतम् युद्धे[3] ॥ १२ ॥

मुद्गल० हे अश्विना । अश्विनौ । त्रिवृता रथेन अप्रतिहतगतित्वात् त्रिषु लोकेषु वर्तमानेन रथेन सह नः अस्माकम् अर्वाञ्चम् अभिमुखम् सुवीरम् शोभनैः वीरैः पुत्रभृत्यादिभिरुपेतम् रयिम् धनम् आ वहतम् आनीय प्रापयतम् । शृण्वन्ता अस्मदीयां स्तुतिं शृण्वन्तौ वाम् युवाम् अवसे अस्मद्रक्षणार्थम् जोहवीमि आह्वयामि । नः अस्माकम् वाजसातौ सङ्ग्रामे वृधे वर्धनाय च भवतम् ॥ १२ ॥

इति प्रथमाष्टके तृतीयाध्याये पञ्चमो वर्गः ।

## [ ३५ ]

ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से ।
ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ॥ १ ॥

ह्वया॑मि । अ॒ग्निम् । प्र॒थ॒मम् । स्व॒स्तये॑ । ह्वया॑मि । मि॒त्रावरु॑णौ । इ॒ह । अव॑से । ह्वया॑मि । रात्री॑म् । जग॑तः । नि॒ऽवेश॑नीम् । ह्वया॑मि । दे॒वम् । स॒वि॒तार॑म् । ऊ॒तये॑ ॥ १ ॥

स्कन्द० 'ह्वयामीत्यग्रये पादो मैत्रावरुण उत्तरः । तृतीयो रात्रिसंस्तावः सूक्तं सावित्रमुच्यते' (तु. बृदे ३,१०५) । ह्वयामि इत्याद्यः पाद आग्नेयः । ततः परो द्वितीयो मैत्रावरुणः । तृतीयो रात्रेः संस्तावः । रात्रिदेवत्य[4] इत्यर्थः । शिष्टमन्यत् सूक्तं सावित्रम् । ह्वयामि अग्निम् । कीदृशम् । प्रथमम् मुख्यम्[4] । क्रियाविशेषणं वा[4] प्रथमशब्दः । अन्याभ्यो देवताभ्यः प्रथमम् अग्रे । स्वस्तये अवि-

१. नास्ति अ कु. २. नास्ति मुको. ३-३. नास्ति वि[1] लपं. [-] अश्विनौ त्र'''ता रथेन अस्मदभिमुखं सुवीरं रयिं वहतम् शृण्वन्तौ वि[1] अ[2]. ४. नास्ति रवि.

नाशाय आत्मनः । ह्वयामि मित्रावरुणौ इह अवसे पालनाय । ह्वयामि रात्रिम् जगतः कृत्स्नस्य[1] निवेशनीम् स्वापकरीम् । ह्वयामि देवम् सवितारम् ऊतये पालनाय ॥ १ ॥

वेङ्कट० ह्वयामि अग्निम् मुख्यम् अविनाशाय । ह्वयामि मित्रावरुणौ इह रक्षणाय । ह्वयामि रात्रिम्[2] जङ्गमस्य निवेशयित्रीम्[3] । ह्वयामि देवम् सवितारम् रक्षणाय ॥ १ ॥

मुद्गल० [4]'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम् । हिरण्यस्तूप ऋषिः । आद्या नवमी च जगती च्छन्दस्के । शिष्टा त्रिष्टुभः । आद्याऽग्निमित्रावरुणरात्रिसवितृदेवताका । शिष्टाः सवितृदेवताकाः[5] ।

स्वस्तये अस्माकमविनाशाय प्रथमम् आदौ अग्निम् ह्वयामि । इह अस्मिन् कर्मणि अवसे अस्मद्रक्षणाय मित्रावरुणौ ह्वयामि । जगतः जङ्गमस्य प्राणिजातस्य निवेशनीम् उपवेशनहेतुभूताम्[6] रात्रीम् रात्रिदेवताम् ह्वयामि । जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान्[7] कृत्वा स्वस्व गृहे रात्रावुपविशन्तीति प्रसिद्धम् । ऊतये अस्मद्रक्षणार्थम् सवितारम् देवम् ह्वयामि ॥ १ ॥

आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च ।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥ २ ॥

आ । कृ॒ष्णेन॑ । रज॑सा । वर्त॑मानः । नि॒ऽवे॒शय॑न् । अ॒मृत॑म् । मर्त्य॑म् । च॒ । हि॒र॒ण्यये॑न ।
स॒वि॒ता । रथे॑न । आ । दे॒वः । या॒ति॒ । भुव॑नानि । पश्य॑न् ॥ २ ॥

स्कन्द० रजोऽत्र तमो रात्रिर्वा उच्यते । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । कृष्णेन रजसा तमसा रात्र्या वा व्याप्ते जगति । आ वर्तमानः 'वर्तते' (निघ २,१४) इति गतिकर्मा । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इत्येवमत्र हेतौ शानच् । आगमेन आत्मीयेन हेतुना निवेशयन् । शुद्धोऽप्ययं निविशिः अभिपूर्वार्थे[8] द्रष्टव्यः । स्वव्यापारेषु अभिनिवेशयन्[9] । यत्नेन व्यापारयन्नित्यर्थः । किम् । अमृतम् मरणवर्जितं देवादिम् । मर्त्यम् मनुष्यादिम् च । उदिते हि सवितरि सर्वे स्वव्यापारे प्रवर्तन्ते । अत एवमुच्यते — आ वर्तमानः निवेशयन् अमृतं मर्त्यं चेति । किं करोति । उच्यते । हिरण्ययेन सविता रथेन देवः आ याति भुवनानि कृताकृतप्रत्यवेक्षणार्थम् पश्यन् । अथवा निवेशयन्निति[8] निवेशः स्वाप एवाभिप्रेतः । कृष्णेन रजसा इत्येतच्च निवेशयन्नि त्येतेन सम्बध्यते । सहस्यार्थे चात्र तृतीया । आ वर्तमानो [10]निवेशयन्निति हेतुहेतुमद्भावः[10] । एवं योजना — कृष्णया रात्र्या निवेशयन् स्वापयन् अमृतं मर्त्यं च आवर्तमानः[11] । कदा । सामर्थ्यादहनि । हिरण्ययेन सविता रथेन आ देवो याति । क्व आयाति[12] । सामर्थ्यात् रात्रौ । रात्रावावर्तमानः[13] निवेशयन्नमृतं मर्त्यं च उदयगिरिं प्रत्यायाति । उत्तरकुरुस्थानि भूतानि[14] पश्यन् । अहनि त्वावर्तमानः[14] पृथिवीं प्रत्यायाति तत्रस्थानि भूतानि पश्यन्निति[15] ॥ २ ॥

---

१. नास्ति कु. २. रात्रीन् अ[1]. ३. 'निवेशनीं स्वापकरीम् वि[1] अ[2]. ४-४. नास्ति वि मै[1]. ५. 'वेशनभूता वि, 'वेशनभूतां देवभूतां मै[1]. ६. स्वस्वव्या' मै[1]. ७. 'थार्थो कु. ८. निवेशय कु. ९. नास्ति दवि. १०-१०. 'शयन्निति तु हेतुमद्भावो अ कु. ११. 'मानस्य मूको. १२. यातिः अ कु. १३. नास्ति मूको. १४. नास्ति अ कु. १५. पश्यन् कु.

वेङ्कट० कृष्णवर्णेन [1]रजसा द्युलोकेन आ वर्तमानः[1] निवेशयन् [2]देवान् मर्त्यान् च[2] हिरण्मयेन सविता रथेन देवः [3]आ याति[3] सर्वाणि भुवनानि[4] पश्यन् ॥ २ ॥

मुद्गल० सविता सूर्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन। अन्तरिक्षलोको हि सूर्यागमनात् पुरा[5] कृष्णवर्णो भवति। तेनान्तरिक्षमार्गेण आ [6]वर्तमानः पुनःपुनरागच्छन्[6] अमृतम् देवम् मर्त्यम् मनुष्यम् च निवेशयन् स्वस्वस्थाने स्थापयन्। यथोक्तगुणोपेतः सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः।प्रकाशयन्नित्यर्थः। हिरण्ययेन [7]सुवर्णनिर्मितेन रथेन[7] आ याति अस्मत्समी-पमागच्छति ॥ २ ॥

याति॑ दे॒वः प्र॒वता॑ या॒त्यु॒द्वता॑ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम्।
आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥ ३ ॥

याति॑। दे॒वः। प्र॒ऽवता॑। याति॑। उ॒त्ऽवता॑। याति॑। शु॒भ्राभ्या॑म्। य॒ज॒तः। हरि॑ऽभ्याम्।
आ। दे॒वः। या॒ति॒। स॒वि॒ता। प॒रा॒ऽवतः॑। अप॑। विश्वा॑। दुः॒ऽइ॒ता। बाध॑मानः ॥ ३ ॥

स्कन्द० 'याति देवः' प्रवता 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इत्येवमयं वतिप्रत्ययः। शीघ्रयायिना। केन। सामर्थ्यात् रथेन। याति उद्वता ऊर्ध्वगामिना। केन। सामर्थ्यात् [8]रथेनैव[10]। याति शुभ्राभ्याम् शोभनाभ्याम्। यजतः यष्टव्यो[11] यागार्हः। हरिभ्याम् अश्वाभ्याम्। यत्र यथा[12] गन्तव्यं शीघ्रं 'चोर्ध्वं वा' रथेन वा[13] अश्वैर्वा तत्र तथा गच्छतीत्यर्थः। किं च आ देवः याति सविता परावतः दूरादुदयगिरेः। अप विश्वा [14]दुरिता दुरितानि। अत्र तमोलक्षणानि। बाधमानः अपनयन्। अथवाऽपुण्यान्येव दुरितानि, तान्यपि सविता बाधते[14]। रश्मिसंस्पर्शस्य शुचित्वकर-त्वाद्दहति[15] च पापनिवृत्त्यर्थं प्रायश्चित्तानुष्ठानात्[16] ॥ ३ ॥

वेङ्कट० [17]'याति देवः[17] प्रवणेन मार्गेण प्रातः। याति अनन्तरम् उन्नतेन[18]। याति शोभनाभ्याम् अश्वाभ्याम् यष्टव्यः। आ याति [19]देवः सविता[19] दूरात् अप बाधमानः विश्वानि दुरितानि ॥ ३ ॥

मुद्गल० देवः दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति गच्छति। तथा[20] उद्वता उत्कृष्टेन ऊर्ध्वदेशयुक्तेन मार्गेण याति। उदयानन्तरम् आमध्याह्नम् ऊर्ध्वो मार्गः। तत उपरि आसायं प्रवणो मार्ग इति विवेकः। तथा यजतः यष्टव्यः स देवः शुभ्राभ्याम् श्वेताभ्याम् हरिभ्याम् अश्वाभ्याम् याति देवयजनदेशे गच्छति। सविता देवः विश्वा दुरिता सर्वाणि पापानि अप बाधमानः विनाशयन् परावतः दूरदेशात् द्युलोकात् आ याति यागदेशे आगच्छति ॥ ३ ॥

---

१-१. °वसा तमसारव्या व्योम्नि जगति आवमानः (?) द्युलोकेनावर्तमानः वि[1] अ[2]. † नास्ति ख कु रवि. २-२. °वांश्च (°वान् कु वि[2]) मनुष्यांश्च वि[1,3] अ[1] कु. ३-३. आगच्छति वि[1] अ[1]. ४. भूतानि वि[1] अ[1]. ५. नास्ति वि मै[1]. ६-६. °मानः पुनर्मार्गेणाग° मूको. ७-७. °तरथेन मूको. ८-८. नास्ति रवि. ९-९. नास्ति कु रवि[1,2]. १०. रथेन रवि[1,2]. ११. नास्ति कु. १२. यदा अ. १३. नास्ति रवि. १४-१४. दुरिता बाधमानः सर्वाणि दुरितानि सविता बाधते अ कु. १५. शुचिकरत्वा° अ कु. १६. °ष्ठानम् अ कु. १७-१७. नास्ति इदं वि[1]. १८. उन्नतः रवि. १९-१९. नास्ति अ[1] वि[1]. २०. तदा वि.

अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥

अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् । आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥ ४ ॥

स्कन्द० अभिवृतम् कृशनैः हिरण्यनामैतत् ( द्र निघ १,२ )। हिरण्यैः । सुवर्णरचितमित्यर्थः । विश्वरूपम् 'विश्वम्' (निघ ३,१) इति बहुनाम । सर्वपर्यायो वा[1] । बहुरूप सर्वरूप वा । हिरण्यशम्यम् वोढुरश्वस्य अनडुहो वाऽनपगमार्थं या निधीयते सा शम्येति प्रसिद्धा । सा हिरण्मयी यस्य स हिरण्यशम्यः । यजतः[2] यागार्हः[3] । बृहन्तम् आ अस्थात् आतिष्ठति आस्थितवान् वा रथम् सविता [4]चित्रभानुः चित्रदीप्तिः विचित्रदीप्तिर्वा पूजनीयदीप्तिर्वा[4] । कृष्णा कृष्णानि रजांसि तमांसि[5] । तविषीम् बलनामैतत् (द्र निघ २,९)। तृतीयार्थे चात्र द्वितीया । स्वेन [6]तेजसा बलेन[6] । दधानः धारयन् । निरन्धयन्नित्यर्थः ॥४॥

वेङ्कट० परिवृतः [7]हिरण्यैः नानारूपं हिरण्मयशम्यम्[7] यष्टव्यो महान्तम् रथम् आस्थित सविता 'चित्रदीप्तिः कृष्णानि तेजांसि' बलं च दधानः ॥ ४ ॥

मुद्गल० सविता रथम् आ अस्थात् आस्थितवान् । आरूढवानित्यर्थः । कीदृशम् । अभीवृतम् अभितो वर्तमानम् । तथा कृशनैः विश्वरूपम् सुवर्णेन नानारूपम् । क्वचित् सुवर्णनिर्मितगजपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिः इत्येव बहुरूपत्वम् । हिरण्यशम्यम् अश्वानां स्कन्धेषु रथयोजनवेलायां तिर्यक् प्रक्षेप्स्यमाणा शङ्कुः शम्या । ताः सुवर्णमय्यो रथे वर्तन्ते । बृहन्तम् प्रौढम् । कीदृशः सविता । यजतः[1] यष्टव्यः चित्रभानुः विविधरश्मियुक्तः कृष्णा रजांसि अन्धकारयुक्ततया कृष्णवर्णान् लोकान् उद्दिश्य तमोनिवारणार्थम् तविषीम् बलम् स्वकीयम् प्रकाशरूपम् दधानः ॥ ४ ॥

वि जनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥

वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

स्कन्द० जनान् मनुष्यान् श्यावाः श्याववर्णाः[8] शितिपादः अश्वाः वि अख्यन् विविधं प्रकाशयन्ति सवितुः स्वभूतम् रथम् हिरण्यप्रउगम् यत्र रथो [10]नियम्यते स प्रदेशः[10] प्रउगम्[11] इत्युच्यते । स हिरण्मयो यस्य तं हिरण्यप्रउगम् । वहन्तः । किंच शश्वत् बहुनामैतत् (द्र निघ ३,१)। नित्यपर्यायो वा ।

१ नास्ति मूको. २ यजतो द्रु. ३. यागार्हम् मूको. ४-४ °भानुः विचित्रदीप्तिः वि ५. नास्ति भ द्रु. ६-६ तेजोबलेन भ द्रु. ७-७ हिरण्यैः नाना° भ[1] द्रु. हिरण्यैः नानारूपं (°ण्येन हिं वि[1]) हिरण्यं शम्यम् । वोढुरश्वस्यानडुहो वाऽनप(वा सम वि[1]) गमार्थम् या निधीयते सा शम्येति प्रसिद्धा वि भ[1]. ८-८ चित्र दीप्तिः कृष्णानि तमांसि तमांसि बलेन धारयन् निरन्धयन्नित्यर्थः वि[1] भ[1]. ९ नास्ति वि १०-१० °बध्यते(°ते वि[1]) (सुवर्णरचन) प्रदेशः वि. ११ प्रयुग द्रु.

बहुशो[1] नित्यं वा। विशः मनुष्याः सवितुः दैव्यस्य देव एव दैव्यः। [2]अथवा देवेषु दिवि वा भवो दैव्य.[2]। तस्य दैव्यस्य उपस्थे उपस्थाने। विश्वा भुवनानि सर्वाणि च भूतानि। तस्थुः स्थितानि[3]। बहवो मनुष्याः सर्वाणि च भूतजातानि सवितारमुपतिष्ठन्त इत्यर्थः ॥ ५ ॥

वेङ्कट० वि अख्यन् जनान् श्यामवर्णाः[4] श्वेतपादाः[5] हिरण्मयप्रउगम् रथम् वहन्तः [6]अश्वाः। सदा[6] सवितुः दिवि भवस्य उपस्थे[7] विशो व्याप्ता दिशः[8] तिष्ठन्ति, सर्वाणि च[9] भुवनानि[10] ॥ ५ ॥

मुद्गल० श्यावाः एतन्नामकाः सूर्यस्याश्वाः। ते च शितिपादः शितयः श्वेतवर्णाः पादा येषां ते शितिपादः हिरण्यप्रउगम् रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगम् इत्युच्यते। तच्चत्र सुवर्णमयम्। तद्युक्तम् रथम् वहन्तः[11] जनान् प्राणिनः वि अख्यन्। विशेषेण प्रकाशितवन्त इत्यर्थः। शश्वत् सर्वदा विशः प्रजाः दैव्यस्य इतरदेवसम्बन्धिनः सवितुः प्रेरकस्य सूर्यस्य उपस्थे समीपस्थाने[12] तस्थुः स्थितवत्यः। न केवलं प्रजाः। किन्तर्हि[13]। विश्वा भुवनानि सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः ॥ ५ ॥

ति॒स्रो द्याव॑: सवि॒तुर्द्वा उ॒पस्थाँ॒ एका॑ य॒मस्य॒ भुव॑ने विरा॒षाट् ।
आ॒णिं न रथ्य॑म॒मृताधि॑ तस्थुरि॒ह ब्र॑वीतु॒ य उ॒ तच्चिके॑तत् ॥ ६ ॥

ति॒स्रः। द्याव॑ः। स॒वि॒तुः। द्वौ। उ॒पऽस्था॑। एका॑। य॒मस्य॑। भुव॑ने। वि॒रा॒षाट्। आ॒णिम्। न। रथ्य॑म्। अ॒मृता॑। अधि॑। त॒स्थुः। इ॒ह। ब्र॒वी॒तु॒। यः। ऊँ॒ इति॑। तत्। चिके॑तत् ॥ ६ ॥

स्कन्द० [14]"तिस्रो द्यावः[14]" द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते। त्रीणि दिवोऽवयवभूतानि स्थानानि सवितुः। अथवा द्युत[15] एव दर्शनात् दिवां बहुत्वं प्रतिपत्तव्यम्। तिस्रो दिवः सवितुः स्वभूता.। तासाम् द्वौ[16] द्वे उपस्थे समीपे सवितुः। एका तु[17] यमस्य भुवने लोके विराषाट्[18] विराषाडिति विपूर्वस्य राजतेर्दीप्त्यर्थस्येदं रूपम्। विविधं दीप्ता[19]। अथवा द्युसाहचर्यात्[20] त्रयो लोका अत्र तिस्रो दिव उच्यन्ते[21]। तासां द्वे समीपे द्यौरन्तरिक्षं च। एका तु पृथिवी यमस्य भुवने। अग्निरत्र यम उच्यते। 'यमो ह जातो यमो जनित्वम्' (ऋ १,६६,४) 'इति यथा[2]। तस्य स्वभूते पार्थिवे लोके। विराषाट् विविधं स्वदीप्त्या[19] दीप्ता। किञ्च आणिम् न रथ्यम् चक्रस्य अक्षान्निर्गमननिरोधार्थं कील आणिरुच्यते। रथे भवो रथ्यः। यथा रथ्यमाणिं सर्वाणि रथाङ्गान्याश्रितानि, एवं सवितारम् अमृता 'अमृतम्' (निघ १,१२) इत्युदकनाम। रश्म्याहृतान्युदकानि। अथवा अमृतशब्दो[22] देववचन.। प्रथमाबहुवचनस्यायमाकारः। अमृता देवाः। अधि तस्थुः अधिष्ठितवन्तः। आश्रिता इत्यर्थः। इह लोके [23]"सभायां वा[23]" सः[21] ब्रवीतु यः उ[24] उकारः पदपूरणः। यः तत्[25] चिकेतत्[26] ॥ ६ ॥

---

१. बहुशो कु.; बहुनो रवि. २-२. नास्ति अ कु. ३. स्थिता. रवि. ४. श्यावर्णाः वि[1] अ[1] कु. रवि. ५. श्वेतपदा वि[1] अ[2]. ६-६. शश्वत् कु. ७. °स्थे वासस्थानि वि[1] अ[2]. ८. दिश वि[1] अ[1]; दिशि वि[2]; नास्ति कु. ९. नास्ति कु अ[1] वि[1]. १०. °नानि भूतानि वि[1] अ[2]. ११. °हन्तः न मै[2]. १२. उप समी° मूको. १३. तर्हि किम् मै[1]. १४-१४. नास्ति कु. १५ द्युतः अ कु. १६. च अ कु. १७. नास्ति रवि. १८. °षाट् अथवा कु. १९. दीप्ताः रवि. २०. साह° रवि[1,2]. २१. इष्यन्ते अ कु. २२. अमृताश° रवि. २३. नास्ति अ रवि. २४. उ तत् मूको. २५. नास्ति मूको २६. °चिकेत दत् अ.

**वेङ्कट०** तिस्र द्याव सन्ति। तत्र द्वे सवितु उपस्थे [1]†उत्सङ्गे भवत†। अथ अपरा यमस्य भवे ‡भुवने विराजती‡ वैद्युतस्य। चक्रनिर्गमननिरोधार्थम्§ आणिम् रथाक्षान्ते निहितम् रथाङ्गानि इव॥ अमृतानि कञ्चन[1] [2]अधितिष्ठन्ति। य तत् जानाति, स ¶इह तत् ब्रवीतु¶[2]। अग्निना सवित्रा चोभयत[3] स्थिताभ्यामाणिभ्यामिव तिस्रो[4] द्यावो ध्रियन्तेऽत्रिनष्टा[5] इति। यद्वा सर्वेषाममरणानि[6] सवितरि[7] तिष्ठन्तीति। तत् सविता वोऽमृतत्वमासुवत्' (ऋ १,११०,३) इति मन्त्र ॥ ६ ॥

**मुद्गल०** द्याव स्वर्गोपलक्षिता प्रकाशमाना लोका तिस्र त्रिसंख्याका सन्ति। तत्र द्वौ लोकौ सवितु सूर्यस्य[8] उपस्था उपस्थाने वर्तेते। द्युलोकभूलोकयो सूर्येण प्रकाशितत्वात्। एका मध्यमा भूमि अन्तरिक्षलोक यमस्य भुवने पितृपतेर्गृहे विराषाट् विराट् गन्तॄन् सहते। प्रेता पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थ। अमृता अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि अधि तस्थु सवितारमधिगम्य स्थितानि। दृष्टान्त। रथ्यम् आणिम् न रथादि रथच्छिद्रे प्रक्षिप्त कीलविशेष आणिरित्युच्यते। रथसम्बन्धिनमाणिमधिगम्य यथा रथस्तिष्ठति तद्वत्। य तु मानव तत् सवितृरूपम् चिकेतत् जानाति स मानव इह अस्मिन् विषये ब्रवीतु। केनापि वस्तुमशक्यं सवितुर्महिमेत्यर्थ ॥ ६ ॥

इति प्रथमाष्टके तृतीयाध्याये षष्ठो वर्ग ॥

वि सु॒प॒र्णो अ॒न्तरि॑क्षाण्यख्यद् ग॒भी॒रवे॑पा॒ असु॑रः सु॒नी॒थः ।
क्वे॒३॒॑दानीं॒ सूर्यः॒ कश्चि॑केत कत॒मां द्यां र॒श्मिर॑स्या॒ तता॑न ॥ ७ ॥

वि। सुऽपर्णः। अ॒न्तरि॑क्षाणि। अ॒ख्य॒त्। ग॒भी॒रऽवे॑पाः। असु॑रः। सु॒ऽनी॒थः। क्व॑। इ॒दानी॑म्। सूर्यः॑। कः। चि॒के॒त॒। क॒त॒माम्। द्याम्। र॒श्मिः। अ॒स्य॒। आ। त॒ता॒न॒ ॥ ७ ॥

**स्कन्द०** सुपर्णं[1] सुपतन सुगमन सविता। अथवा सुपर्ण इति रश्मिनाम (द्र निघ १,५)। सामर्थ्याच्च मत्वर्थीयमत्वर्थ। सुपर्णवान् रश्मिवान्[10]। अन्तरिक्षाणि अन्तरिक्षाण्यथवा अत्रान्तरिक्षशब्देनोच्यन्ते। बहून्येव ह्यन्तरिक्षाणि। अन्तरिक्षसाहचर्याद् या त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते। तानि वि अख्यत् विविध प्रकाशितवान्। गभीरवेपा गभीर दुरवगाहम्। वेप (निघ २,१) इति कर्मनाम। गभीरकर्मा। असुर प्रज्ञावान्। सुनीथ प्रशस्यनामैतत् (द्र निघ ३,८)। प्रशस्य। क्व इदानीम्। अनयोरर्धर्चयोरेकवाक्यतामभिप्रेत्य पराक्ऽध्याहर्तव्यौ। इदानीमिति च रात्र्यभिप्रायमेतत्। यो दिवो अन्तरिक्षाणि व्यख्यत् स क्व इदानीं रात्रौ सूर्य सतां गन्ता सविता। क तत्[11]

---

†† नास्ति त्रि'। ‡‡ भवन अवने ए वि'। ¶¶ नेप्रति रा' वति। § 'रोधनाय' वि' अ'। ¶ मा वि' अ'। २ २ नास्ति अ'। ¶¶ इत' वि' स्प, रह ए ऽके समर्था वा वि' अ'। १ अन्य' वि' अ', ४ कि ऐ ति मु। ५ 'स्त वि' स मु। ६ वि तिन' वि'। ६ 'मा मर' वि' अ'। ७ स्तीव वि' अ'। ८ नास्ति मे'। ९ ति द्रा मु। १० रश्मिमान् मु। ११ नास्ति म मु।

चिकेत जानाति । [1]यो जानाति स आचष्टामित्यर्थः[1] । कतमाम् द्याम् दिवोऽवयवं द्युलोकमेव वा । लोकमात्रवचनो वा[2] द्युशब्दः । कतमं लोकम् । रश्मिः अस्य स्वभूतः[3] । आ ततान तनोति । तनोतिरत्र सामर्थ्यात् प्रकाशनार्थः । प्रकाशयति । अथवा । द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीयप्रतिशब्दाध्याहारः[4] । कतमां द्यां प्रति रश्मिरस्याततान आत्मानं विस्तारयति ॥ ७ ॥

वेङ्कट० वि अख्यत् शोभनपतनः अन्तरिक्षाणि त्रीणि गम्भीरवेगः प्राज्ञः प्रशस्यः । सः इदानीम् सविता सुनीथः[5] क्व भवति रात्रौ । कः चैनम् जानाति । कतमाम् च द्याम् अस्य रश्मिः आ ततान इति रात्रौ पृच्छति ॥ ७ ॥

मुद्गल० सुपर्णः शोभनपतनः सूर्यरश्मिः[6] अन्तरिक्षाणि अन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि वि अख्यत् विशेषेण व्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः[7] । गभीरवेपाः गभीरकम्पनः । रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः । असुरः सर्वेषां प्राणदः । सुनीथः सुनयनः शोभनप्रापणः । मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः सूर्यः इदानीम् रात्रौ क्व[8] कुत्र वर्तते । तद्रहस्यम् कः चिकेत को जानाति । न कोऽपीत्यर्थः । अस्य सूर्यस्य रश्मिः कतमाम् द्याम् आ ततान कं द्युलोकं रात्रौ व्याप्तवान् । एतदपि को जानाति ॥ ७ ॥

अ॒ष्टौ व्य॑ख्यत् क॒कुभः॑ पृथि॒व्यास्त्री धन्व॒ योज॑ना स॒प्त सिन्धू॑न् ।
हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द् दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥ ८ ॥

अ॒ष्टौ । वि । अ॒ख्य॒त् । क॒कुभः॑ । पृ॒थि॒व्याः । त्री । धन्व॑ । योज॑ना । स॒प्त । सिन्धू॑न् ।
हि॒र॒ण्य॒ऽअ॒क्षः । स॒वि॒ता । दे॒वः । आ । अ॒गा॒त् । दध॑त् । रत्ना॑ । दा॒शुषे॑ । वार्या॑णि ॥ ८ ॥

स्कन्द० अष्टौ [9]चतस्रो दिश चतस्रोऽवान्तरदिशः ता एता अष्टौ[9] वि अख्यत् ककुभः दिङ्नामैतत् (द्र. निघ १,६) । दिशः पृथिव्याः सम्बन्धिनीः । न च केवलाः । किन्तर्हि । त्री धन्व त्रीणि च धन्वानि । 'धन्व' (निघ १,३) इत्यन्तरिक्षनाम । अत एव च दर्शनादन्तरिक्षाणां त्रित्वं प्रतिपत्तव्यम् । तदवयवेषु वा आद्यमध्यान्तेषु धन्वशब्दो वर्तते । साहचर्याद् वा त्रयो लोकास्त्रीणि धन्वानि उच्यन्ते । योजना "युज्यन्त एभिः मनुष्याः तत्फलैरिति योजनानि कर्माणि । तानि च[9] । सप्त सिन्धून् नदीनामैतत् (द्र. निघ १,१३) । शोणादीन् महतः प्रधानभूतान्[10] नदान् । अथवा सप्तसंख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते । तृतीयार्थे द्वितीया । सप्तभिः रश्मिभिः व्यख्यदित्यर्थः । परोऽर्धर्चो भिन्नमेव वाक्यम् । यत्तच्छब्दावध्याहृत्य [11]एकवाक्यता योज्या[11] । यो व्यख्यत् ककुभः सः हिरण्याक्षः हिरण्मये एव हिरण्मयसदृशे वा अक्षिणी यस्य स हिरण्याक्षः । सः सविता देव आ अगात् आगतः[12] । उदित इत्यर्थः । दधत् ददत् रत्ना धनानि दाशुषे यजमानाय वार्याणि वरणीयानि उत्कृष्टानि ॥ ८ ॥

---

१-१. नास्ति अ कु. २. नास्ति मूको. ३. स्वभूतम् अ कु. ४. °वचनीयशब्दा° अ कु.
५. °नीथः वि° लपं. ६. °रश्मिः मूको. ७. नास्ति वि. ८. कुत्रापि मूको. ९-९. नास्ति रवि.
१०. प्रभूतान् अ कु. ११-११. °वाक्यतां नेयः कु; °वाक्यतां नयन् अ. १२. नास्ति कु.

वेङ्कट० अष्टौ दिशः वि अख्यत् अन्तरिक्षसम्बन्धिनीः[1] त्रीणि[2] च अन्तरिक्षाणि कार्येष्ववकाशप्रदानेन योजकानि[3] सप्त च सिन्धून् हिरण्मयाक्षः सविता देवः आ अगात् प्रयच्छन्[4] रत्नानि वरणीयानि यजमानाय ॥ ८ ॥

मुद्गल० पृथिव्याः सम्बन्धिनीः अष्टौ ककुभः प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिश. वि अख्यत् सविता प्रकाशितवान् । तथा योजना प्राणिनः स्वस्वभोगेन योजयितॄन् धन्व अन्तरिक्षोपलक्षितान्[5] त्री त्रिसंख्याकान् पृथिव्यादिलोकान् सप्त सिन्धून् गङ्गादिनदीः सविता व्यख्यत् । हिरण्याक्षः हितरमणीयचक्षुर्युक्तः सविता देवः आ अगात् इहागच्छतु । किं कुर्वन् । दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्ना रत्नानि दधत् प्रयच्छन् ॥ ८ ॥

हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते ।
अपामी॑वां बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम्॑ृणोति ॥ ९ ॥

हिर॑ण्यऽपाणिः । स॒वि॒ता । विऽच॑र्षणिः । उ॒भे इति॑ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तः । ईय॑ते । अप॑ । अमी॑वाम् । बाध॑ते । वेति॑ । सूर्य॑म् । अ॒भि । कृ॒ष्णेन॑ । रज॑सा । द्याम् । ऋ॒णोति॑ ॥ ९ ॥

स्कन्द० हिरण्यपाणिः[6] हिरण्मयौ पाणी यस्य स हिरण्यपाणिः । अत्र च शाट्यायना इतिहासब्राह्मणमधीयते[7]—'अथ यत्र ह तद्देवा यज्ञमतन्वत[8] । तत्सवित्रे प्राशित्रं[9] परिजहुः । तस्य पाणी प्रचिच्छेद । [10]तस्मै हिरण्मयौ प्रतिदधुः[10] । तस्मात् हिरण्यपाणिरिति स्तुतः' ( शांब्रा ६,१३ ) इति । स हिरण्यपाणिः सविता विचर्षणि. इत्याकृतस्य विद्रष्टा उभे द्यावापृथिवी अन्तः अधिकरणभूतेश्च योग्यक्रियाध्याहारः । मध्येऽवस्थितः ईयते गच्छति । मध्ये स्थित. उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः । किंच अप अमीवाम् बाधते अमीवा हिंसिता शत्रुर्यजमानस्य तमो वा प्रकाशस्य हिंसितृत्वात् । तम् अपबाधते । वेति वेतिर्गतिकर्मा (तु. निघ २,१४) । अयं गच्छति च सूर्यम् प्रथमार्थे द्वितीया । सूर्यः सर्ता सविता[11] । कं प्रति । सामर्थ्यादस्तपर्वतम्, अथवा [12]सर्तव्यत्वात् सूर्यप्रतिसम्बन्धात् वा[12] सूर्योऽस्तपर्वत इहोच्यते, तं प्रति । अस्तञ्च[13] गच्छतीत्यर्थः । ततश्च उत्तरकालम् कृष्णेन रजसा तमसा द्याम् अभि[14] ऋणोति ऋणोतिर्गतिकर्मा ( तु. निघ २,१४ ) । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अभिगमयति । व्यापयतीत्यर्थः ॥ ९ ॥

वेङ्कट० हिरण्मयपाणिः सविता [15]जगतः विद्रष्टा[15] द्यावापृथिव्योः उभयोः मध्येन गच्छति । [16]अप बाधते च[16] रक्षः । सूर्यम् च[17] प्राप्नोति । कृष्णेन [18]तेजसा सूर्येण द्युलोकम्[18] विध्यति ॥ ९ ॥

मुद्गल० हिरण्यपाणिः सुवर्णमयहस्तयुक्तः विचर्षणिः विविधदर्शनयुक्तः सविता देवः उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति । [19]अमीवाम् रोगादिबाधाम् अप बाधते[19]

---

1. °ध्यानि ह वि[1]; °न्धीनि रवि[1]; °सम्बन्धी वि[3]. 2. त्रिणि वि[1]. 3. योजनानि वि[1] अ[1]. 4. °च्छद् रवि. 5. °क्षितोप° वि. 6. नास्ति कु. 7. °हासमाचक्षते अ कु रवि[1]. 8. अतन्वत अ कु. 9. प्राशित्रे प्राश्त्रिं अ कु रवि[1]. 10-10. नास्ति अ कु, तस्माद्दिर° रवि[1]. 11. नास्ति रवि. 12-12. सर्तव्यत्वात् सूर्यसम्बन्धाद अ, °सूर्यसम्बन्धाद कु. 13. अस्तं रवि. 14. नास्ति मूको 15-15. °तोऽपि द्रष्टा वि[1] अ[1] रवि, °तः अपि द्रष्टा वि[3]. 16-16. अव बाधते वि[1] अ[1]. 17. च मूको° 18-18. °सा पश्यन् सूर्येण अ[1] वि[1]; °सा गर्वे च द्यु° ह वि[1][1]. 19-19. नास्ति वि.

[1]सम्यङ् निराकरोति । तथा सूर्यम् वेति गच्छति[1] । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा तेजसा द्याम् आकाशम् अभि ऋणोति सर्वतो व्याप्नोति ॥ ९ ॥

हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ १० ॥

हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ १० ॥

स्कन्द० हिरण्यहस्तः असुरः प्रज्ञावान् सुनीथः प्रशस्यः सुमृळीकः सुसुखः [2]स्ववान् धनवान् यातु अर्वाङ् अस्मदभिमुखम्[2] । अपसेधन् सेधतिरत्र सामर्थ्यात् वधार्थः । गत्यर्थो वा अन्तर्णीतण्यर्थः[3] । अपघ्नन् अपगमयन् वा रक्षसः राक्षसान् । कीदृशान् । यातुधानान् रक्षसां[4] रक्षश्शब्देनैवोक्तत्वाद् विशेषणार्थः क्रियाशब्दोऽयम् यातु[5] हिंसा, तस्यां निधातव्याः स्थापयितव्या यातुधानाः, तान् यातुधानान् । हिंसार्हानित्यर्थः । [6]आगत्य च[6] अस्थात् लोडर्थेऽयं[7] लुङ् । तिष्ठतु अस्मदीयायां वेलायाम् । प्रतिदोषम् 'दोषा' ( निघ १,७ ) इति रात्रिनाम । अत्र च[8] साहचर्यात् अहनि वर्तते । प्रत्यहम् । गृणानः व्यत्ययेनायं 'कर्मणि कर्तृशब्दः[9] । गीयमानः स्तूयमानः अस्माभिः ॥ १० ॥

वेङ्कट० हिरण्यहस्तः[10] बली प्रशस्यः सुखयिता धनवान्[11] सविता अभिमुखः[12] इह[13] आयातु । रक्षसः हिंसानिधानान्[14] निषेधन् [15]उदस्थात् देवः प्रतिरात्रम्[15] अस्माभिः स्तूयमानः ॥ १० ॥

मुद्गल० हिरण्यहस्तः असुरः प्राणप्रदाता सुनीथः सुष्टु नेता । प्रशस्य इत्यर्थः । सुमृळीकः सुष्टु सुखयिता स्ववान् धनवान्[16] अर्वाङ् अभिमुखः कर्मदेशं[17] यातु गच्छतु । किञ्च अयम् देवः प्रतिदोषम् प्रतिरात्रि गृणानः स्तूयमानः अस्थात् । किं कुर्वन् । रक्षसः बाधकत्वेन रक्षणनिमित्तभूतान् यातुधानान् असुरान् अपसेधन् निराकुर्वन् ॥ १० ॥

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ११ ॥

ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः । अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ११ ॥

---

१-१. नास्ति वि. २. °वान् यातु अस्म° कु; °वान् यातु अस्यभिमुख. भ. ३. °ण्यर्थस्त भ कु. ४. राक्षसान् रवि. ५. या यातु रवि[1], या तनय यातु रवि[1][7]. ६-६. नास्ति भ कु. ७. लोडर्थे भ कु. ८. नास्ति रवि. ९-९. कर्तरि भ कु. १०. हिरण्यहस्तः रवि. ११. धनवान् वि[2]. १२. °मुखः रवि. १३. नास्ति वि[1] भ[1]. १४. हिंसकान् यातुधानान् कु,° सर्वनिषेधान् वि[1]; हिंसकान् वि[2]. १५-१५. अवमन् उदस्थात् अतिष्ठतु देवः प्रतिरात्रं रात्रि (वि: १) स्तुवन्नपरेद्यवि अर्चने प्रत्यहम् वि[1] भ[1]. १६. नास्ति वि मै[2]. १७. कर्मदेशे वि.

स्कन्द० ये ते [1]तव पन्थाः[1] पन्थानः हे सवितः! पूर्व्यासः पूर्वे[2] चिरन्तनाः अरेणवः पांसुवर्जिताः सुकृताः शोभनाः कृताः। केन। सामर्थ्याद् त्वयैव विधात्रा। क्व[3]। अन्तरिक्षे। तेभिः नः इति तादर्थ्ये चतुर्थी। तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः। तैरस्मदर्थमागत्य। कदा[4]। अद्य। कैः। पथिभिः। कीदृशैः। सुगेभिः[5] सुगमनैः। रक्ष च नः अस्मान्। अधि च ब्रूहि अधिवचनमाज्ञापनम्। आज्ञापय च मदाज्ञापयितव्यं हे देव! ॥ ११ ॥

वेङ्कट० ये तव मार्गाः चिरन्तनाः रेणुवर्जिताः[6] सुष्ठु कृताः[5] अन्तरिक्षे[7]। तैः अस्मान् पथिभि सुगमैः [8]अद्य रक्ष[8]। अपि च अस्मान्[9] अधि ब्रूहि[10]। पुनः नः इति पूरणम् ॥ ११ ॥

मुद्गल० हे सवितः! ये ते तव पन्थाः मार्गाः पूर्व्यासः पूर्वसिद्धाः अरेणवः धूलिरहिताः अन्तरिक्षे सुकृताः सुष्ठु सम्पादिताः। सुगेभिः सुष्ठु गन्तुं शक्यैः तेभिः पथिभिः तैः मार्गैः आगत्य अद्य अस्मिन् दिने नः अस्मान् रक्ष च पालनमपि कुरु। तथा हे देव! अस्मान् अनुष्ठातॄन् [11]अधि च ब्रूहि[11] देवानामग्रे अधिकत्वेन कथय च ॥ ११ ॥

इति प्रथमाष्टके तृतीयाध्याये सप्तमो वर्गः ॥

इति प्रथमे मण्डले सप्तमोऽनुवाकः ॥

[ ३६ ]

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् ।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥ १ ॥

प्र। वः॒। य॒ह्वम्। पु॒रू॒णाम्। वि॒शाम्। दे॒व॒ऽयतीना॑म्। अ॒ग्निम्। सु॒ऽउ॒क्तेभिः॑। वचः॑ऽभिः। ई॒म॒हे॒। यम्। सी॒म्। इत्। अ॒न्ये। ईळ॑ते ॥ १ ॥

स्कन्द० 'प्र वः[11]कण्व उत्तरः[12]। 'प्र वो यह्वम्' इत्येतत्[12] कण्वो नाम महर्षिः[13] हिरण्यस्तूपादुत्तरोऽपश्यत्। 'घौरः घोरपुत्रश्च स ज्ञेयः'। 'प्र वो यह्वम्' इत्याग्नेयं चैतत् सूक्तम्। प्र इत्युपसर्गः ईमहे इत्याख्यातेन सम्बन्धयितव्यः[14]। वः इति द्वितीयैकवचनस्य स्थाने बहुवचनम्। त्वाम्। यह्वम् महन्नामैतद् (द्र. निघ ३,३)। महान्तम्। पुरूणां विशाम् देवयतीनाम् 'पुरु' (निघ ३,१) इति बहुनाम। सर्वत्र च निर्धारणे षष्ठी। बह्वीनां मनुष्यजातीनां देवानिच्छन्तीनां[6] मध्ये वयम् अग्निम् सूक्तेभिः सूक्तैः[8] [1]स्तुतिलक्षणैर्वचोभिः प्रेमहे[1] प्रकर्षेण याचामहे। यम् सीम् इत्। सीमिति परिग्रहार्थीयो वा पदपूरणो वा। इच्छब्दस्तु पदपूरण एव। यं सर्वे अन्ये अपि[1] ईळते ईळिरत्र याच्ञार्थः। याचन्ते। अथवा सूक्तानां वचसां स्तुतिकरणत्वात्[1] ईमहे ईळते इत्येतावुभावपि[1] स्तुत्यर्थौ। बह्वीनां मनुष्यजातीनां मध्ये वयं स्तुमः। यमन्येऽपि स्तुवन्तीत्यर्थः ॥ १ ॥

---

1-1. नास्ति अ कु. २. पूर्वाः कु. ३. नास्ति अ कु. ४. नास्ति रवि. ५. °ताः कृताः वि[1]. ६. °ताः सुष्ठु वि[1] अ[3]. ७. नास्ति वि[1] द. ८-८. रक्ष कः; अद्य आगत्य रक्ष वि[1] अ[3]. ९. अस्माकम् रवि. १०. ब्रूहि अधिवचनमाज्ञापनम्। आज्ञापय वि[1] अ[1]. 11-11. °पि ब्रूहि च मे[1]. 12-12. कण्वस्य उ° कु; °स्य स्वरं रवि[12]. 13. दृष्टो रवि. 14. ऋषिः अ कु. 15. °बध्नाते कु. 16. स्तुतिलक्षण° कु. 17. °तावपि रवि.

वेङ्कट० 'कण्वो घौरः । प्र याचामहे बह्वीनाम् वः देवानिच्छन्तीनाम्'[1] विशाम् महान्तम् अग्निम् वयम् शोभनवचनैः वचोभिः । यम् अग्निं सर्वे अपि अन्ये अभिलषितं याचन्ते ॥ १ ॥

मुद्गल० 'अष्टमेऽनुवाके अष्टौ सूक्तानि । 'प्र वो यह्वम्' इति विंशत्यृचं प्रथमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । अयुजो बृहत्यः, तृतीयपादस्य द्वादशाक्षरत्वात् । युजः सतोबृहत्यः, प्रथमतृतीययोः पादयोर्द्वादशाक्षरत्वात् । त्रयोदशी चतुर्दशी च यूपदेवताके । शिष्टा अग्निदेवताकाः'[2] ।

हे ऋत्विग्यजमानाः! देवयतीनाम् देवान् कामयमानानाम् पुरूणाम् बहूनाम् विशाम् प्रजारूपाणाम् वः युष्माकमनुग्रहाय यह्वम् महान्तम् अग्निम् सूक्तेभिः सूक्तरूपैः वचोभिः वाक्यैः प्र ईमहे प्रकर्षेण याचामहे । अन्ये इत् अन्येऽपि ऋषयः यम् अग्निम् सीम् सर्वतः ईळते स्तुवन्ति । तमग्निमिति पूर्वत्रान्वयः ॥ १ ॥

जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते ।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ॥ २ ॥

जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते । सः । त्वम् । नः । अद्य ।
सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ २ ॥

स्कन्द० सः त्वम् नः इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यम्[3] जनासः मनुष्याः अग्निम् दधिरे परिचर्यया 'धारयन्ति । परिचरन्तीत्यर्थः'[4] । सहोवृधम् बलस्य वर्धयितारम् । हविष्मन्तः[5] विधेम वयमपि परिचरामः । ते द्वितीयार्थे षष्ठ्येषा[6] । त्वाम् । स त्वम् नः अद्य सुमनाः सुचित्तोऽनुग्रहपरः इह अविता पालयिता भव वाजेषु संग्रामेषु हे सन्त्य! षणु दाने इत्यस्य एतत् रूपम् । दातः! ॥ २ ॥

वेङ्कट० "अग्ने! यं त्वाम्" अन्येऽपि जनाः अधारयन्[8] बलस्य वर्धयितारम्, तं वयमपि हविष्मन्तः परिचरामः । सः त्वम् नः अद्य शोभनमनाः इह रक्षकः भव 'युद्धेषु भजनीय!'[9] ॥ २ ॥

मुद्गल० जनासः अनुष्ठातारो जनाः सहोवृधम् बलस्य वर्धयितारम् अग्निम् दधिरे धृतवन्तः । हविष्मन्तः हविर्युक्ता वयं हे अग्ने! ते त्वाम् विधेम परिचरेम । 'वाजेषु अन्नेषु सन्त्य! दानशील! हे अग्ने! सः त्वम् अद्य अस्मिन् दिने इह कर्मणि नः अस्मान् प्रति सुमनाः शोभनमनस्कः अविता रक्षिता भव ॥ २ ॥

प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् ।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥ ३ ॥

---

१-१. प्र व इति द्वितीयैकवचनस्थाने बहुवचनम् । उग्रो घोरः प्र याचामहे बह्वीना वो देवानिच्छन्तीना सध्ये वि[1] अ[2].   २-२. नास्ति वि मै[2].   ३. ये कु.   ४-४. धारयन्तीत्यर्थः रवि.   ५. यं च हवि° म कु, हविष्मन्तः वयमपि हवि° रवि[1,2].   ६. षष्ठी म कु.   ७-७. यं त्वामग्ने कु.   ८. अधारयन् छ वि[1,2],
९-९. °द्धे भजनीयो भव अ[2] वि[2]; °भजनीय. रवि.

प्र । त्वा । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ ३ ॥

स्कन्द० [1]प्र त्वा त्वाम्[1] दूतम् [2]प्रकर्षेण वृणीमहे[2] होतारम् च विश्ववेदसम् सर्वधनं [3]सर्वज्ञं वा[3]। महस्सतः —अयमर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात्[4]। [5]यत्तच्छब्दावध्याहृत्य एकवाक्यता योज्या[5]। यस्य ते तव महः महतः सुदीप्तस्य सतः सर्वतः वि चरन्ति अर्चयः ज्वालाः । दिवं स्पृशन्ति भानवः दिवीति द्वितीयार्थे सप्तमी । भानवो दीप्तयो दिवं स्पृशन्ति ॥ ३ ॥

वेङ्कट० प्र वृणीमहे त्वाम्[6] दूतम् होतारम् सर्वधनम् । महतः भवतः तव [6]वि चरन्ति अर्चयः दिवि च[7] स्पृशन्ति भासमानाः ॥ ३ ॥

मुद्गल० हे अग्ने! होतारम् होमनिष्पादकम् विश्ववेदसम् सर्वज्ञम् दूतम् देवानां दूत्ये प्रवृत्तम् तादृशम् त्वा त्वाम् प्र वृणीमहे प्रकर्षेण वरणं कुर्मः । महः महतः सतः नित्यं वर्तमानस्य ते तव अर्चयः दीप्तयः वि चरन्ति विविधं प्रचरन्ति । भानवः [8]त्वदीया रश्मयः[8] दिवि द्युलोकं स्पृशन्ति । तत्रत्यान् प्राणिनः प्रकाशयन्तीत्यर्थः ॥ ३ ॥

देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥ ४ ॥

देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥ ४ ॥

स्कन्द० [9]देवासः देवाः त्वा त्वाम्[9] वरुणः मित्रः अर्यमा इत्येते दूतम् प्रत्नम् पुराणम् सम् इन्धते तेजसा दीपितवन्तः । देवा अपि त्वां परिचरितवन्तः । न केवलं मनुष्या इत्यर्थः । किञ्च विश्वम् बहुनामैतत् ( द्र. निघ ३,१ )। बहु सः हे अग्ने! जयति स्ववशे करोति । लभत इत्यर्थः । त्वया तृतीयानिर्देशादत्र योग्यक्रियाध्याहारः । त्वया अनुगृह्यमाणः । [10]किं जयति[10]। धनम् । किं[11] करोति । उच्यते[11]। यः ते ददाश हविर्ददाति मर्त्यः मनुष्यः ॥ ४ ॥

वेङ्कट० वरुणादयः देवाः त्वाम् दूतम्[12] पुराणम् सम् इन्धते । तथा यः तुभ्यं हविः प्रयच्छति मनुष्यः स त्वया[13] विश्वम् धनम् जयति[14] ॥ ४ ॥

मुद्गल० हे अग्ने! वरुणादयस्त्रय देवाः देवाः प्रत्नम् पुरातनम् दूतम् त्वा त्वाम् सम् इन्धते सम्यक् दीपयन्ति । यः मर्त्यः मनुष्यः यजमानः ते तुभ्यम् ददाश हविर्दत्तवान्, सः यजमानः त्वया सहायभूतेन विश्वम् सर्वम् धनम् जयति ॥ ४ ॥

---

१-१. प्र त्वा त्वाम् वि. त्वा त्वाम् अ कु. २-२. प्रवृणीमहे अ रवि. ३-३. नास्ति अ कु. ४. पूर्वस्मात् अ क. ५. त्वा वि' लर्ध. ६-६. °त्वा नि वि' अ'. ७-७. तत्र्येदश्नय वि. ८-८. देवाः रश्मयः अ रवि. ९. नास्ति कु. १०-१०. किम् कु. ११. य कि कु. १२. नास्ति अ रवि. १३. देवः वि' अ'. १४. त्वा वि' ल्पी. १५. °न्धि मनुगृह्यमाणः स्ववशे करोति । लभत इत्यर्थः वि' अ'.

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥ ५ ॥

मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वे इति । विश्वा । सम्ऽगतानि ।
व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ५ ॥

स्कन्द० मन्द्रः मदतिः स्तुत्यर्थः । स्तोता हर्षयिता[1] वा । होता गृहपतिश्च हे अग्ने ! दूतश्च विशाम् मनुष्याणाम् असि[2] भवसि । किंच त्वे तव विश्वा सर्वाणि सङ्गतानि स्तोतृभिः यष्टृभिश्च सह सत्यानि व्रता कर्माणि च ध्रुवा ध्रुवाणि । कतमानि । उच्यन्ते । यानि देवा अकृण्वत कृतवन्तः । हविर्वहनादीनि[3] अग्ने कर्माणि देवैः कृतानि ॥ ५ ॥

वेङ्कट० मादयिता होता[4] गृहपते अग्ने ! दूतः मनुष्याणां भवसि । त्वयि विश्वानि कर्माणि ध्रुवाणि सङ्गतानि । यानि देवाः [5]पृथक् पृथक् कुर्वन्ति[5] वर्षणनियमनोत्क्षेपणादीनि । यानि[6] प्रत्यक्षं देवाः कृण्वन्ति तानि सर्वाणि त्वयि सङ्गतानि इति ॥ ५ ॥

मुद्गल० हे अग्ने ! त्वम् मन्द्रः हर्षहेतुः होता देवानामाह्वाता विशाम् यजमानरूपाणां प्रजानाम् गृहपतिः गृहस्य पालकः दूतः देवदूतः असि । त्वे त्वयि विश्वा व्रता सर्वाणि कर्माणि सङ्गतानि, पृथिव्यादयः देवा ध्रुवा ध्रुवाणि स्थिराणि यानि कर्माणि अकृण्वत कृतवन्तः । पृथिवी धारयति । पर्जन्यो वर्षति । सूर्यः प्रकाशयति । तान्येतानि त्वयि सङ्गतानीति पूर्वत्रान्वयः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये अष्टमो वर्गः ॥

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥ ६ ॥

त्वे इति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः । सः । त्वम् । नः ।
अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥ ६ ॥

स्कन्द० 'त्वे इत्' स त्वं नः इति सच्छन्दात् यच्छन्दोऽध्याहार्यः[7] । यस्मिन् त्वयि । इदिति पदपूरणः । हे अग्ने ! सुभगे सुधने । हे यविष्ठ्य[8] युवतम ! विश्वम् अहु सर्वं सा आ हूयते हविः । स त्वम् नः अद्य सुमनाः सुचित्तोऽनुग्रहपरः[9] । उत अपरम् चेत्यप्यर्थे । अपरमित्यस्माच्च परो द्रष्टव्यः । अपरमिति च सप्तम्यर्थे द्वितीया । अपरस्मिन्नपि काले । अद्य चागामिनि च काले इत्यर्थः । यक्षि यज देवान् सुवीर्या तृतीयैकवचनस्य चायमाकारः । शोभनेन आत्मीयेन वीर्येण ॥ ६ ॥

वेङ्कट० 'त्वयि एव अग्ने[11] शोभनधन युवतम ! सर्वं देवार्थम्[10] हविः आ हूयते । स त्वम् नः अद्य सुमना अपि च [11]अपरम् श्वश्च[11] । यज देवान् शोभनेन[12] वीर्येण ॥ ६ ॥

---

१ नास्ति भ कु. २ कामानि । इति° भ क. ३ नास्ति वि[2]. ४४ अकृण्वत कृतवन्तो हवि वहनादीनि वि[1] अ[2]. ५ नास्ति वि[1] भ[1]. ६६ नास्ति भ कु. ७ यच्छब्दोऽध्याहार्यः भ कु. ८ युविष्ठ्य° भ. ९९ नास्ति अ[2] वि[1]. १० सर्वे° ए वि[1][2] कु रवि. ११ ११ °रम्च वि[1][2] लप °रश्च ल, अपरश्वश्च रवि, परश्वश्च क, °रम् श्वश्च अपरस्मिन् काले वि[1] अ[2]. १२ °नेन आत्मीयेन वि[1] अ[2].

मुद्गल० हे यविष्ठ्य! युवतम! अग्ने! सुभग शोभनभाग्ययुक्ते त्वे इत् त्वय्येव विश्वम् सर्वम् हवि आ हूयते सर्वत प्रक्षिप्यते । स त्वम् न अस्मान् प्रति सुमना शोभनमनस्को भूत्वा अद्य अस्मिन् दिने उत अपि च अपरम् अहरादिकमुत्तर कालम् सर्वस्मिन्नपि काले नैरन्तर्येण सुवीर्या शोभनवीर्योपेतान देवान् यक्षि यज ॥ ६ ॥

तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥ ७ ॥

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते । होत्राभिः । अग्निम् । मनुषः ।
सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ॥ ७ ॥

स्कन्द० तम् अग्निम् । घ ईम् इति पदपूरणौ[१] । इत्था सत्यनामैतत् (द्र निघ ३,१० ) । सत्यम् । नमस्विन स्तुतिमन्त । स्वराजम् स्वदीप्तम् उप आसते स्तुतिभि परिचरन्ति । स्तुवन्तीत्यर्थ । न च स्तुवन्त्येव केवलम् । किं तर्हि । होत्राभि यज्ञनामैतत्[१] आहुतिलक्षणेषु[२] यागेषु वर्तते । आहुतिभिश्च । अग्निम् मनुष मनुष्या सम् इन्धते सन्दीपयन्ति । तितिर्वांस अग्निप्रसादादेव निस्तीर्णवन्त । अथवा तिरति इति वधकर्मसु पाठात् ( द्र निघ २,१९) तिरतिरत्र वधार्थ । हतवन्त । अति सुष्ठु । कान्[४] । स्रिध स्रेधति क्षयार्थ शोषणार्थो वा । क्षपयितॄन् शोषयितॄन् वा । बहुवत शत्रूनित्यर्थ ॥ ७ ॥

वेङ्कट० तम्[५] 'ह एनम् इत्थम् हविष्मन्त उप आसत स्वराजम् । यागैः अग्निम् मनुष्या प्रज्वलयन्ति अतितर॰न्त[†] शत्रून्[६] ॥ ७ ॥

मुद्गल० हे अग्ने! नमस्विन अन्नयुक्तास्तादृशा यजमाना स्वराजम् स्वतो दीप्यमानम् तम् घ ईम् तमेव पूर्वोक्तसर्वगुणविशिष्ट त्वाम् इत्था[७] अनेन प्रकारेण हविष्प्रदानादिरूपेण उप आसते । मनुष मनुष्या यजमाना होत्राभि होत्रादिभि सप्तभिर्वषट्कर्तृभि अग्निम् त्वाम् सम् इन्धते सम्यग्दीपयन्ति । कीदृशा मनुष्या । स्रिध शत्रून् अति तितिर्वांस अतिशयेन तरन्त ॥ ७ ॥

घ्नन्तो वृत्रमतरन् रोदसी अप उरु क्षयाय चक्रिरे ।
भुवत् कण्वे वृषा द्युम्न्याहुतः क्रन्दद॑श्वो गविष्टिषु ॥ ८ ॥

घ्नन्तः । वृत्रम् । अतरन् । रोदसी इति । अप । उरु । क्षयाय । चक्रिरे । भुवत् । कण्वे ।
वृषा । द्युम्नी । आऽहुतः । क्रन्दत् । अश्वः । गोऽइष्टिषु ॥ ८ ॥

---

1. 'पूरण वर्ग २. यमना' अ ह्रु ३. स दि भाष्य' ह्रु ४. नास्ति दवि ५. नास्ति वि' ६. ६ वेनमिद्द हविष्मन्तमुपासते स्तुतिभि परिचरति मनुष्या प्रज्वलन्ति अग्निसन्दीपयन्ति तरन्त शत्रून् इतरत्र वा वि' अ॰. † अभिगरल: वि' छ॰ ७. इत्था वि

स्कन्द० घ्नन्तः न पलायमानम्[1] वृत्रम् अतरन् निस्तीर्णवन्तः[2]। के। सामर्थ्यात् अग्नेः स्तोतारो यष्टारश्च। किंच[3] रोदसी अपः अपः इत्येतदन्तरिक्षनाम द्वितीयाबहुवचनान्तम्। बहुवचनान्तमेव हि 'आपः'[4] ( निघ १,३ ) इत्यन्तरिक्षनामसु पठितम्। द्यावापृथिव्यौ चान्तरिक्षं च। कीदृशम्। उरु विस्तीर्णम्[5]। क्षयाय निवासाय आत्मनः चक्रिरे कृतवन्तः। अग्निप्रसादात् त्रिष्वपि लोकेषु यथाकामं[1] न्यवसन्नित्यर्थः। यत एवमतो ब्रवीमि — भुवत् भवतु। कण्वे षष्ठ्यर्थे सप्तम्येषा। ममापि कण्वस्य। वृषा कामानां वर्षिता। दातेत्यर्थः। द्युम्नी[6] द्युम्नं द्योततेः। यशो वा अन्नं वा धनवान् वा। तद्वान्। यशस्वी अन्नवान् धनवान् वा इत्यर्थः। आहुतः[5] आङ् मर्यादावचनः। मर्यादया हुतः सन्[1]। किं कुर्वन्। उच्यते। क्रन्दत् कदि[6] क्रदि क्लदि आह्वाने। शत्रन्तं चेदं द्रष्टव्यम्। क्रन्दन् आह्वयन् देवान्। अश्वः लुप्तोपममेतत् द्रष्टव्यम्। अश्व इव महता शब्देनेत्यर्थः। अथवा अश्वशब्दोऽत्र क्रियाशब्दः[1]। अष्टा[7]व्याप्ता। क्व[7]। उच्यते। गविष्टिषु गावः सोमाः, ते यत्रेष्यन्ते देवताभिः, गावो वा याभिरिष्यन्ते यजमानैः, ताः गविष्टयः, तासु। यज्ञेष्वित्यर्थः। अथवा क्रन्ददित्याख्यातम् पादादित्वात्त्वनिघातः[1]। क्रन्दत्। क्रन्दतु आह्वयतु[8] च देवता यज्ञेष्वित्यर्थः ॥ ८ ॥

वेङ्कट० घ्नन्तः[9] उपद्रवम् अतरन् द्यावापृथिव्यौ अन्तरिक्षं च। [10]विस्तीर्णम् निवासाय स्थानं[10] कुर्वन्ति स्तोतारोऽग्नेः। सोऽग्निरधुना कण्वे मयि वर्षिता भवतु अन्नवान् आहुतः। गवामन्वेषणेषु क्रन्दत् अश्वः "[11]यथा शब्दायमानोऽश्वो गाः साधयति तद्वत् साधयिता[11]" ॥ ८ ॥

मुद्गल० हे अग्ने! घ्नन्तः त्वत्सहायेनेतरे देवाः प्रहरन्तः वृत्रम् अतरन् तीर्णवन्तः। तदनन्तरम् रोदसी द्यावापृथिव्यौ अपः अन्तरिक्षं च क्षयाय प्राणिनां निवासार्थम् उरु विस्तारो यथा भवति तथा चक्रिरे। भवांस्तु कण्वे कण्वनामके महर्षौ वृषा कामानां वर्षिता द्युम्नी धनवान् आहुतः सर्वतो होमयुक्तश्च भुवत् भवतु। दृष्टान्तः। गविष्टिषु गोविषयेच्छायुक्तेषु सङ्ग्रामेषु अश्वः क्रन्दत् शब्दं कुर्वन् यथाभीष्टप्रापकस्तथेति शेषः ॥ ८ ॥

सं सी॑दस्व म॒हाँ अ॑सि॒ शोच॑स्व देव॒वीत॑मः ।
वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त दर्श॒तम् ॥ ९ ॥

सम् । सी॒द॒स्व॒ । म॒हान् । अ॒सि॒ । शोच॑स्व । दे॒व॒ऽवीत॑मः । वि । धू॒मम् । अ॒ग्ने॒ । अ॒रु॒षम् । मि॒ये॒ध्य॒ । सृ॒ज । प्र॒ऽश॒स्त॒ । द॒र्श॒तम् ॥ ९ ॥

स्कन्द० सम् सीदस्व अस्मद्वेषाम्। किं कारणम्। यस्मात् महान् असि। संसद्य च शोचस्व दीप्यस्व। देववीतमः वेतिर्गत्यर्थः कान्त्यर्थो वा। अतिशयेन देवान् प्रति गन्ता कामयिता वा देवानाम्। शोचमानश्च[12] अर्धदग्धानां हविषां धूमम् हे अग्ने! अरुषम् रुशतेः रोचतेर्वा

1. °माना: अ रवि. 2. निस्तीर्णा: अ कु; च निस्तीर्° रवि. 3. नास्ति रवि. 4. अप: अ कु. 5. नास्ति अ कु. 6. °शब्दे रवि. 7-7. व्याप्तः अ कु. 8. ह्वयतु अ कु. 9. घ्नन्तम् अ[1] वि[2]. 10-10. °र्णनिवासस्था° वि[1] अ[2]. 11-11. शब्दायमानाश्वो साधयति तद्वत् साधयिता यज्ञो देवानामथवा शब्दायमानोऽश्व इव वि[1] अ[2]. 12. रोचमानः रवि[1]; °मानः रवि[1,2].

आदपूर्वस्य अरुषशब्दः । स्वदीप्त्या दीप्तम् । मद्रूपमित्यर्थः[1] । अथवा अरुषतेर्गतिकर्मणः[2] (द्र निघ २, १४) अरुषो गन्ता । दिवं प्रति गन्तारम् । दिवस्पृशमित्यर्थः[3] । हे मियेध्य ! मेध्य ! यज्ञार्ह ! वि सृज विमुञ्च । हे प्रशस्त ! दर्शतम् दर्शनीयम् ॥ ९ ॥

वेङ्कट० सम् सीदस्व । [4]महान् असि । ज्वल अतिशयेन देवान् प्रति गन्ता[4] । वि सृज धूमम् आ-धारोचमान[5] यज्ञिय ! प्रशस्त ! दर्शनीयम् ॥ ९ ॥

मुद्गल० हे अग्ने ! सम् सीदस्व बर्हिषि उपविश । महान् असि गुणाधिको भवसि । देववीतम अतिशयेन देवान् कामयमानः शोचस्व दीप्यस्व । हे मियेध्य ! मेधार्ह ! प्रशस्त ! उत्कृष्ट ! अग्ने ! अरुषम् गमनशीलम् दर्शतम् दर्शनीयम् धूमम् वि सृज विशेषेण सम्पादय ॥ ९ ॥

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १० ॥

यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् । हव्यऽवाहन । यम् । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतम् । यम् । वृषा । यम् । उपऽस्तुतः ॥ १० ॥

स्कन्द० अत्रेतिहासमाचक्षते—"देवा सत्रमासत । ते तत्राग्निमैन्धत । ते तेनस्वन्तोऽग्निं[6] मनवे प्राद्द[7]त । [मनुरैन्ध । तम्] ऋषय ऋषिपुत्राश्च श्रुतऋषय प्रावचनाश्चेति[7]" । तत्र यत् इन्धनं तत् दर्शपूर्णमासयोरावाहननिगदे[8] दृश्यते । 'देवेद्धो मन्विद्ध' (तैब्रा ३,५,३,१) इति" इति[9] । यत्तु मनवे दानं तदुपसमर्थेच आह— यम् त्वा देवासः मनवे दधुः दत्तवन्त इह । लोके इत्यर्थः । अथवा मनुशब्दो मनुष्यपर्यायः । तादर्थ्ये चतुर्थी । दधुरित्यपि दधातिर्निधानार्थः[10] । यं त्वा देवा मनुष्याणामर्थाय इह लोके विनिहितवन्त इत्यर्थः । कीदृशम् । यजिष्ठम् यष्टृतमम् । हे हव्यवाहन ! हविषा वोढः । यम् च कण्व सोऽयमित्यभिसम्बन्धात् पुत्रेऽस्य पितृशब्द प्रयुज्यते । काण्वो मेध्यातिथिर्नाम ऋषिः । अथवा कण्वश्च मेध्यातिथिश्च । किम् । [11]ईध इति शेषः[11] । कुत एतत् । साकाङ्क्षत्वात् उत्तरस्यां चार्चि[11] दर्शनात् । कीदृशम् । धनस्पृतम् । स्पृ प्रीतिपालनयोः । धनस्य पालयितारं धनेन वा प्रीणयितारं यजमानानाम् । दानार्थं वा सामर्थ्यात् स्पृणोति । धनस्य दातारमित्यर्थः । न च केवलो मेध्यातिथिः । किन्तर्हि[11] यम् वृषा नाम ऋषिरीधे[12] । यम् च उपस्तुत नाम ऋषिः । किं तस्यैति । संसीदस्वेति [13]पूर्वस्यर्चैकवाक्यता, तच्छब्दश्रुतेः । परया न,[14] तदीयस्य आद्यस्य[15] अर्धर्चस्यान्य च तुल्यार्थत्वात् पौनरुक्त्यप्रसङ्गात् ॥ १० ॥

---

1. मद्रू° रवि २ रुषते° मूको. ३ दिव स्प° रवि ४-४. अस्माद्देवा महानसि गा वि° स°, °सि ज्वाल्याति° ग त्रि°° अ°, ५ °माने स्पृशं वा त्रि° अ°. ६ ते स्वन्तोऽग्निं मूको ७-७ तं मनु° । तम् ऋषयः । तम् ऋषिपुत्राश्च प्रावचनाश्चेति अ कु [-] मनुरैन्धत रवि ८. °रावाहननिगदे अ कु, °राव ननिगमे रवि ९ नास्ति मूको १० °र्निधि° मूको ११-११ आनीय इति वाक्यशेष कु, आनीयर्थ इति वाक्यशेष अ १२. °ऋषि अ कु १३. कण्वर्षि कु. १४. °रीधे कु. १४-१५ न (न हि) तच्छब्दश्रुते. पूर्वपदैकवाक्यता । परया वा मूको १६. नास्ति अ कु

वेङ्कट० यम् त्वा[1] देवाः[1] मनवे[1] निदधुः अस्मिन् लोके यष्टृतमं हविषां वोढः! । यम् च काण्वपुत्रः मेध्यातिथिः[3] धनस्य स्रष्टारं निदधे, [4]यम् च[4] वृषा, यम् च[5] उपस्तुतः ॥ १० ॥

मुद्गल० हे हव्यवाहन! अग्ने! मनवे मनोरनुग्रहाय देवासः सर्वे देवाः यजिष्ठम् अतिशयेन पूज्यम् त्वा त्वाम् इह देवयजनदेशे दधुः धृतवन्तः। मेध्यातिथिः मेधार्हैरतिथिभिर्युक्तः कण्वः एतन्नामको महर्षिः यम् त्वाम् धनस्तृतम् धनेन प्रीणयितारं कृत्वा दधे इति शेषः । तथा वृषा इन्द्रः यम् त्वां दधे। तथा उपस्तुतः अन्योऽपि स्तोता यजमानो यम् त्वां दधे । स त्वं संसीदस्वेति पूर्वेणान्वयः ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये नवमो वर्गः ॥

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥ ११ ॥

यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि । तस्य । प्र । इषः । दीदियुः ।
तम् । इमाः । ऋचः । तम् । अग्निम् । वर्धयामसि ॥ ११ ॥

स्कन्द० "यम् अग्निम् मेध्यातिथिः" । अत्रापीतिहासमाचक्षते[6]— 'मेध्यातिथिरादित्यादग्निमाहृत्य समीधे' इति । तदेतदिहोच्यते— यम् अग्निम् मेध्यातिथिः कण्वः[7] काण्वः, अथवा कण्वः मेध्यातिथिश्च ईधे दीपितवान् । ऋतात् अधि आदित्योऽत्र ऋतशब्देनोच्यते । अधीति चोपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आदित्यादधिगम्य लब्ध्वा । आदित्यादानीयेत्यर्थः । तस्य सम्बन्धिन्यः इषः अन्नानि प्र दीदियुः प्रकर्षेण दीप्यन्ते। केन पुनः सम्बन्धेन सम्बन्धीन्यन्नानि प्रदीप्यन्ते[10]। तद्दत्ततया । तेन यानि यष्टृभ्योऽन्नानि दत्तानि तानि न [11]कुतश्चिन्न्यूनानि भवन्तीत्यर्थः[11]। य ईद्धः, तम् अग्निम् इमाः अस्मदीया ऋचः वयं च तम् एव अग्निम् अन्याभिरपि स्तुतिभिः वर्धयामसि। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत एवमुच्यते— तमिमा ऋचो वयं चान्याभिरपि स्तुतिभिर्वर्धयाम इति ॥ ११ ॥

वेङ्कट० यम् अग्निम् कण्वपुत्रः मेध्यातिथिः[12] यज्ञात्[13] जनयित्वा [14]सम् ईधे[14], तदर्थमेतानि अन्नानि प्रदीप्यन्ते। तथा तम् इमाः ऋचः वर्धयन्ति। तम् वयं च वर्धयामः ॥ ११ ॥

मुद्गल० मेध्यातिथिः मेध्या[15] यागयोग्याः अतिथयः ऋत्विग्रूपा यस्य तादृशः कण्वः ऋषिः ऋतात् अधि आदित्यादध्याहृत्य यम् अग्निम् ईधे दीपितवान्, तस्य अग्नेः इषः गमनस्वभावाः रश्मयः प्र दीदियुः प्रकर्षेण दीप्यन्ते। तथा तम् अग्निम् इमाः अस्माभिः प्रयुज्यमानाः ऋचः वर्धयन्तीति शेषः। वयमपि तम् अग्निम् वर्धयामसि स्तोत्रैर्वर्धयामः ॥ ११ ॥

---

१. त्वा कु. २. °वास वि[1] लपं. ३. नास्ति अ[1] वि[1]. ४. मेधाति° वि[1]. ५-५. च यं अ[1] वि[1]. ६. वा कु. ७-७. नास्ति अ कु. ८. अग्नेति° दवि. ९. नास्ति अ कु. १०. दीप्यन्ते अ कु. ११-११. °न्यूनीम° दवि. १२. मेधाति° वि[1]. १३. यज्ञान् दवि, यज्ञान् वि[1] अ[1]. १४-१४. समिन्धे ल अ[1]; समिधे दीपितवान् ऋतादादित्यादधिगम्य लब्ध्वा तद° वि[1] अ[1]. १५. नास्ति मूको.

रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥ १२ ॥

रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् । त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ १२ ॥

स्कन्द० रायः धनस्य[1] पूर्धि पूरयास्मान् । अथवा [2]राय इति[2] द्वितीयाबहुवचनम् । पूर्धीत्यपि याच्ञाकर्म ( द्र. निघ ३,१९ ) । [3]याच्ञया चात्र[3] दानं लक्ष्यते । धनानि देहीत्यर्थः । हे स्वधावः ! अन्नवन् ! किं कारणम् । उच्यते । [4]अस्ति हि ते[4] हिशब्दो यस्मादर्थे । यस्मादस्ति ते तव । हे अग्ने ! देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये । आप्यम् आप्तव्यम् । यदस्माभिरर्थिभिर्मनुष्यैः[4] देवेभ्यः आप्तव्यं तत् देवानां मध्ये यस्मात्[5] तवैव अस्ति नान्यस्य कस्यचिदित्यर्थः । अथवा आप्यम् इति आपिशब्दस्य ज्ञातिवचनस्य भावप्रत्ययान्तस्य रूपम् । यस्मादस्ति तव देवेषु[6] आपित्वं ज्ञातित्वम् । यस्मात् तव देवा ज्ञातयः । ज्ञातित्वाच्च तदीयानि धनानि त्वां ददतमनुमन्यन्त इत्यर्थः । परोऽर्धर्चो भिन्नं वाक्यम् । सः नः मृळ इति तच्छब्दात् यच्छब्दोऽध्याहार्यः । यः त्वम् वाजस्य अन्नस्य श्रुत्यस्य[8] श्रोतव्यस्य अत्यन्तोत्कृष्टस्य, अथवा श्रुत्यस्य[8] श्रुतस्य प्रख्यातस्य राजसि ईशिषे । स नः अस्मान् मृळ मृळय[7] सुखय । किं कारणम् । यस्मात् महान् असि प्रभावतः । महाप्रभावाश्चाश्रितानां सुखकरा भवन्ति ॥ १२ ॥

वेङ्कट० धनेन पूरय अन्नवन् ! । अस्ति हि[9] ते अग्ने ! देवेषु धनेश्वरेषु [10]ज्ञातेयम् । त्वम्[10] अन्नस्य श्रोतव्यस्य[11] ईश्वरो भवसि । सः अस्मान् सुखय । महान् भवसि ॥ १२ ॥

मुद्गल० हे स्वधावः ! अन्नवन् ! अग्ने ! अस्माकम् रायः धनानि[12] पूर्धि पूरय । हे अग्ने ! ते तव देवेषु आप्यम् प्रापणीयं सख्यम् अस्ति हि विद्यते खलु । त्वम् श्रुत्यस्य श्रवणीयस्य वाजस्य अन्नस्य राजसि ईश्वरो भवसि । सः त्वम् नः अस्मान् मृळ सुखय । महान् गुणैरधिकः असि ॥ १२ ॥

ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता । ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः । वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥

1. °स्य वाचकः रवि. 2-2. नास्ति रवि. 3-3. °याञ्च अ रवि. 4-4. नास्ति अ कु. 5. यस्मात्° अ कु. 6. नास्ति अ कु. 7. नास्ति रवि. 8. श्रुत्यस्य अ कु. 9. नास्ति वि[1] अ[1] 10-10. ज्ञानित्वम् । यः त्वम् कु. 11. °तव्यस्य अत्यन्तोत्कृष्टस्य वि[1] अ[1]. 12. नास्ति वि.

स्कन्द० ऊर्ध्वः इत्येतत् तिष्ठ इत्येतेन सम्बन्धयितव्यम्[1]। [2]ऊ सु इति पदपूरणौ[2]। नः अस्माकम् ऊतये पालनाय ऊर्ध्वस्तिष्ठ उत्तिष्ठ। व्याप्रियस्वेत्यर्थः। कथम्। देवः न सविता यथा सविता देवः सर्वदा[3] अस्माकं पालनाय उत्तिष्ठति तद्वत्। न च केवलाय पालनाय। किं तर्हि। ऊर्ध्वः वाजस्य सनिता सनितिर्लाभः[4]। चतुर्थ्यर्थाय्ं षष्ठी[5]। अन्नस्यापि [6]लाभाय ऊर्ध्वस्तिष्ठ[6]। कस्मात्[7]। उच्यते। यत्[8] यस्मात् अञ्जिभिः 'छन्दांस्यत्र अञ्जय' उच्यन्ते। तैः। वाघद्भिः 'वाघतः' (निघ ३,१८) इति ऋत्विङ्नाम। आत्मीयैः ऋत्विग्भिः विह्वयामहे ह्वयतिरन्तर्णीतण्यर्थः। यज्ञेषु नित्यं विविधं ह्वयामः। यस्मात् नित्यं यज्ञेषु त्वामाहूय यजामह इत्यर्थः ॥ १३ ॥

वेङ्कट० यथा सविता सर्वरक्षार्थम् ऊर्ध्वः[10] तिष्ठति, एवम् अस्मद्रक्षार्थम् ऊर्ध्वः[11] तिष्ठ। तथा च सन् [12]भव अन्नस्य[12] दाता। यदा वयमाज्येन त्वाम् अञ्जद्भिः ऋत्विग्भिः विविधं ह्वयामहे ॥ १३ ॥

मुद्गल० हे यूप! नः अस्माकम् ऊतये रक्षणाय ऊर्ध्वः उन्नतः तिष्ठ। दृष्टान्तः। सविता देवः न यथा सूर्यो देव ऊर्ध्वः उन्नतस्तिष्ठति तद्वत्। ऊर्ध्वः उन्नतः सन् वाजस्य अन्नस्य सनिता दाता सु सुष्ठु भवसि। यत् यस्मात् कारणात् अञ्जिभिः आज्येन यूपमञ्जद्भिः वाघद्भिः यज्ञं वहद्भिर्ऋत्विग्भिः सह विह्वयामहे अन्नदानाय त्वां विशेषेणाऽऽह्वयामः। तस्मादन्नस्य [13]दाता भवेति[13] पूर्वत्रान्वयः। ऊ इति पूरणः ॥ १३ ॥

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १४ ॥

ऊर्ध्वः। नः। पाहि। अंहसः। नि। केतुना। विश्वम्। सम्। अत्रिणम्। दह। कृधि। नः।
ऊर्ध्वान्। चरथाय। जीवसे। विदाः। देवेषु। नः। दुवः ॥ १४ ॥

स्कन्द० ऊर्ध्वतयाऽत्र[14] यत्नो लक्ष्यते। ऊर्ध्वः यत्नवान् नः अस्मान् पाहि अंहसः नि[15] नि नियमेन पाहि रक्ष अंहसः पापात्। किंच केतुना 'केतुः' (निघ ३,९) इति प्रज्ञानाम। इह तु [16]प्रज्ञानात्मकत्वात् दाहकत्वात्[16] दाहकरणत्वोपपत्तेश्च ज्योतिषि वर्तते। स्वेन ज्योतिषा। विश्वम् सर्वम् अत्रिणम् अत्तिशब्दो रक्षोवचनः। अत्तारं राक्षसम् सम् दह। किंच कृधि कुरु। नः अस्मान् ऊर्ध्वान् ऊर्ध्वतयाऽत्र व्यापारसामर्थ्यम् अविकलशरीरता च लक्ष्यते। अविकलशरीरान् सर्वव्यापारसमर्थान्। किमर्थम्। चरथाय चरणाय गमनाय। जीवसे जीवनाय। किंच विदाः जानीहि। ज्ञानेन चात्र[17] करणं प्रतिपाद्यते। कुरु। देवेषु पञ्चम्यर्थे सप्तम्येषा। देवानाम्। नः तादर्थ्ये एषा चतुर्थी। अस्माकमर्थाय। दुवः परिचर्याम्[18]। अस्मदर्थं देवान् परिचरेत्यर्थः। अथवा नः इति षष्ठी। अस्माकं या देवानां परिचर्या तां जानीहि। [19]यद्वयं देवान् परिचरामः तत् जानीहि[19]। ज्ञात्वा च अनुरूपं फलं देहीत्यर्थः।

---

१. °यितव्यः वि. २-२. सु इति पदपूरणः अ कु. ३. सर्वस्य अ वि. ४. °लाभार्थः वि. ५. षष्ठेशः अ कु. वि[?]; षष्ठेशः वि[1]. ६-६. °नास्तिष्ठ वि[?]. ७. कर्थ कु; कथं मु अ. ८. नास्ति वि. ९-९. छन्दा-स्यञ्जयः वि. १०. ऊर्ध्व वि[1]. ११. नास्ति सर्व; ऊर्ध्व वि[1]. १२-१२. भवान्नस्य अ[1] कु वि, भवान्नस्य वि[1]. १३-१३. दाभेति वि मै[1]. १४. ऊर्ध्वतो यत्न अ. १५. नास्ति मूको. १६-१६ °त्मकत्वाद् दाहकत्वात् कु. १७. अत्र वि. १८. °चर्यामे अ; °चर्याः मूको. १९-१९. नास्ति वि.

यद्वा यूपोच्छ्रयणे विनियोगात् तत्र प्रयुज्यमाने यूपदेवत्ये एते ऋचौ भवत, यदाश्रित्य शौनकेनोक्तम्— 'ऊर्ध्व ऊ षु ण ऊतये एते काण्व्यावृचौ यौप्यौ' (बृदे ४,१००) इति, तदा ऊर्ध्वस्तिष्ठन्नु च्छ्रियमाणो यूप उच्यते, नाग्नि । ऊर्ध्वश्च सन् पशोर्बन्धनतामापद्यमान न पाहीति विशेष। शिष्टं समानम् ॥ १४ ॥

वेङ्कट० ऊर्ध्व अस्मान् रक्षस नि पाहि । तेजसा विश्वम् रक्ष सम् दह । कुरु च अस्मान् ऊर्ध्वान् चरणाय जीवनाय च । वेदय देवेषु अस्माकम् परिचर्याम् ॥ १४ ॥

मुद्गल० हे यूप! ऊर्ध्व उन्नत सन् न अस्मान् केतुना ज्ञानेन अहम पापात् नि पाहि नितरां पालय । विश्वम् अत्रिणम् सर्वमत्तार भक्षक राक्षसम् सम् दह सम्यक् भस्मीकुरु। न अस्मान् ऊर्ध्वान् उन्नतान् कृधि कुरु। किमर्थम् । चरथाय लोके चरणाय जीवसे जीवनाय च । न अस्माकम् दुव धन च हविर्लक्षणम् देवेषु विदा लम्भय ॥ १४ ॥

पा॒हि नो॑ अग्ने र॒क्षसः॑ पा॒हि धू॒र्तेररा॑व्णः ।
पा॒हि रीष॑त उ॒त वा॒ जिघां॑सतो॒ बृह॑द्भानो॒ यवि॑ष्ठ्य ॥ १५ ॥

पा॒हि । नः॒ । अ॒ग्ने॒ । र॒क्षसः॑ । पा॒हि । धू॒र्तेः । अरा॑व्णः । पा॒हि । रिष॑तः । उ॒त । वा॒ । जिघां॑सतः ।
बृह॑द्भानो॒ इति॒ बृह॑त्ऽभानो । यवि॑ष्ठ्य ॥ १५ ॥

स्कन्द० [1]पाहि न[2] हे अग्ने! रक्षस राक्षसात् । पाहि धूर्तेः हिंसितुः मारयितुः । अराव्ण अदातुर्दरिद्राम् । अयागशीलादित्यर्थः । पाहि रिषत रेषण हिंसा ताडनलक्षणाऽत्राभिप्रेता। प्रहर्तुस्ताडयत । उत वा जिघांसत हन्तुमिच्छत । हे[3] बृहद्भानो! महादीप्ते! यविष्ठ! युवतम! ॥ १५ ॥

वेङ्कट० पाहि अस्मान् अग्ने! रक्षस । पाहि हिंसितु अदातुश्च । पाहि न्यूनीकर्तुः, अपि च ताडयितु महादीप्ते! युवतम! ॥ १५ ॥

मुद्गल० हे बृहद्भानो! महातेज[4] यविष्ठ्य! युवतम! अग्ने! न अस्मान् रक्षस बाधकात् राक्षसात् पाहि पालय। तथा अराव्ण धनादीनामदातृरूपात् धूर्ते हिंसकात् पाहि। तथा रिषत हिंसकात् [5]व्याघ्रादे सकाशात्[6] पाहि। उत वा अथवा जिघांसत हन्तुमिच्छत शत्रो सकाशात् पाहि ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये दशमो वर्गः ॥

घ॒नेव॒ विष्व॒ग्वि ज॒ह्यरा॑व्ण॒स्तपु॑र्जम्भ॒ यो अ॑स्म॒ध्रुक् ।
यो मर्त्यः॒ शिशी॑ति अ॒त्यक्तु॑भि॒र्मा नः॒ स रि॒पुरी॑शत ॥ १६ ॥

---

१ नास्ति मूको २. "ध्वांत् भक्तिकल्पशरीरान् स्वध्यायारातमर्थान् वि' अ' १०१ नास्ति वि
४ नास्ति भ कु ५ महतेज मूको ११ नास्ति वि भै'.

घनाऽईव। विष्वंक्। वि। जुहि। अरांव्णः। तपुःऽजम्भ। यः। अस्मऽध्रुक्। यः। मर्त्यः। शिशाति। अति। अक्तुऽभिः। मा। नः। सः। रिपुः। ईशत॥ १६॥

स्कन्द० घ्नन्ति[1] तप्तं लोहं येन हन्यते स घन उच्यते। तृतीयैकवचनस्य आयमाकारः[2]। 'घनेन इव'[3] यथा लोहकारः तप्तं लोहं घनेन हन्यात् एवं विष्वक् नानाभूतानपि वि जहि। अराव्णः अदातॄन् हविषः। अयष्टॄन् इत्यर्थः। हे[3] तपुर्जम्भ! 'इमं जम्भसुतं पिब' (ऋ ८, ९१,२) इति प्रयोगदर्शनात् जम्भशब्दोऽत्र दंष्ट्रावचनः। तापयितृदंष्ट्र!। तीक्ष्णदंष्ट्र! इत्यर्थः। न च केवलान् अराव्णः। किन्तर्हि। यः अस्मध्रुक् यश्चास्माकं[2] द्रोग्धा तमपि[4]। अथवा यः अस्मध्रुगिति परेण सम्बध्यते। यः अस्मध्रुक्, यः च मर्त्यः मनुष्यः शिशाति अति[4] शो तनूकरणे। अतिशिशीते सुष्ठु तनूकरोति। केन। अक्तुभिः। अक्तुशब्दोऽत्र सामर्थ्यादायुधवचनः। आयुधैः। सामर्थ्यात् अस्मान् आयुधैः तनूकरोति कर्शयति[5]। "ये अस्माकं सहायाः तानायुधैः तक्ष्णोति इत्यर्थः"। अथवा अक्तुभिरिति द्वितीयार्थे तृतीया। यश्च अक्तून्यायुधानि अति शिशीते सुष्ठु निश्यतीत्यर्थः[8]। मा नः अस्माकम् सः रिपुः शत्रुः ईशत ईशिष्ट। मा तस्य वशवर्तितां गमामेत्यर्थः॥ १६॥

वेङ्कट० यथा तप्तं लोहपिण्डं कर्मारो[9] घनेन[10] विष्वक् हन्ति[11] एवम् अदातॄन् सर्वतोदिशम्[12] जहि [13]तापयितृदंष्ट्र!। यः वा अस्मभ्यं† द्रोग्धा, यः वाऽस्मान् मर्त्यः आयुधैः अत्यन्तं तनूकरोति,[13] सः मा अस्माकम् रिपुः ईशिष्ट॥ १६॥

मुद्गल० हे तपुर्जम्भ! तप्यमानरश्मियुक्त! अग्ने! अराव्णः अस्मभ्यं देयस्य धनस्य अदातॄन् वैरिणः विष्वक् सर्वतः वि जहि विशेषेण मारय। दृष्टान्तः। घनेव यथा कठिनेन दण्डपाषाणादिना भाण्डादिभङ्गं करोति तद्वत्। अन्योऽपि यः रिपुः अस्मध्रुक् अस्मद्विषयद्रोहकारी भर्त्सनादिना बाधते। यः च अन्यः मर्त्यः मनुष्यः शत्रुः अक्तुभिः आयुधैः अति शिशाति तनूकरोति। अस्मान् मारयतीत्यर्थः। सः रिपुः भर्त्सनप्रहारकारी[14] द्विविधोऽपि शत्रुः नः अस्मान् प्रति मा ईशत ईश्वरः स्वामी मा भूत्॥ १६॥

अग्निर्व॑व्ने सु॒वीर्य॑म॒ग्निः कण्वा॑य॒ सौभ॑गम्।
अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उ॑पस्तु॒तम्॥ १७॥

अ॒ग्निः। व॒व्ने॒। सु॒ऽवीर्य॑म्। अ॒ग्निः। कण्वा॑य। सौभ॑गम्। अ॒ग्निः। प्र। आ॒व॒त्। मि॒त्रा। उ॒त। मेध्य॑ऽअतिथिम्। अ॒ग्निः। सा॒तौ। उ॒प॒ऽस्तु॒तम्॥ १७॥

---

१. नास्ति मूको. २. घ्नन्ति° रवि. ३-३. नास्ति रवि. ४. नास्ति भ कु. ५. यः अस्मान् रवि. ६. नास्ति रवि[14]. ७-७. नास्ति रवि[11]. ८. °स्यती भ. ९. कर्मारो वि° कु रवि. १०. घनेन नन्ते ... वि° अ°. ११. हन्ति स. १२. सर्वतो कु; °र्वतोदश स वि°; °तोदिशं वि°; °शं वि° अ°; सर्वतोदिश अ° वि. १३-१३. °वितृदंष्ट्रः° ... तनूकरोति यः अस्मान् ... वि° अ°. † अस्मद° कु. अस्मभ्यं रवि; अस्मान् स. १४. °प्रहारी वि.

स्कन्द० कण्वाय इति सम्प्रदानचतुर्थीश्रुते[1] 'वस्वा नो वार्या पुरु' ( ऋ ८,२३,२७ ) इति प्रयोगदर्शनाच्च[2] वनिरत्र दानार्थः । अग्निः वव्ने दत्तवान् । सुवीर्यम् शोभनं वीर्यम् । अग्निः एव मह्यम् कण्वाय सौभगम् सुधनतां दत्तवान् । अग्निः प्र आवत् प्रकर्षेण रक्षितवान् । मित्रा मित्राणि उत मेध्यातिथिम् ऋषिम् । अग्निः एव[3] साती सन्यन्ते सम्भज्यन्ते यत्र धनानि योद्धृभिः सा[4] सातिः, सङ्ग्रामोऽत्राभिप्रेतः, तत्र उपस्तुतम् उपस्तुतनामानमपरमृषिम् ॥ १७ ॥

वेङ्कट० अग्निः[5] [5]प्रायच्छत् सुवीर्यम् धनम् । अग्निः कण्वाय सुभगत्वम्[5] । अग्निः प्र अवत् मित्राणि, अपि च मेध्यातिथिम्[6] । अग्निः सङ्ग्रामे उपस्तुतम्[7] चावत् ॥ १७ ॥

मुद्गल० अग्निः देवः सुवीर्यम् शोभनवीर्योपेतं धनमुद्दिश्य वव्ने याचितः । स अग्निः कण्वाय महर्षये सौभगम् शोभनधनादिरूपं भाग्यम् प्रायच्छदिति शेषः । तथा अग्निः मित्रा अस्मन्मित्राणि प्र आवत् प्रकर्षेण रक्षितवान् । उत अपि च मेध्यातिथिम् मेधयोग्यैरतिथिभिरुपेतम् ऋषिं प्रावत् । तथा उपस्तुतम् अन्यमपि स्तोतारं यजमानम् सातौ धनादिदाननिमित्तं प्रावदिति शेषः ॥ १७ ॥

अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे ।
अ॒ग्निर्न॑य॒न्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥ १८ ॥

अ॒ग्निना॑ । तु॒र्वश॑म् । यदु॑म् । प॒रा॒ऽवत॑ः । उ॒ग्रऽदे॑वम् । ह॒वा॒म॒हे॒ । अ॒ग्निः । न॒य॒त् । नव॑ऽवास्त्वम् । बृ॒हत्ऽर॑थम् । तु॒र्वीति॑म् । दस्य॑वे । सह॑ः ॥ १८ ॥

स्कन्द० अग्निना सहयोगलक्षणैषा तृतीया । अग्निना सह परिचर्यातिशयेन तदनुचरतामापन्नम् तुर्वशम् यदुम् उग्रदेवम् च राजानम् परावतः दूरात् हवामहे ह्वयामः । परोऽर्धर्चो भिन्नवाक्यम् । अग्निः नयत् नीतवान् । नववास्त्वम् नाम असुरम् बृहद्रथम् महारथम् तुर्वीतिम्, तुर्वी थुर्वी दुर्वी हिंसार्थाः । हिंसाम्[8] । नववास्त्वं हिंसितवानित्यर्थः । अथवा तुर्वीतिरिति असुरान्तरस्य[9] नामधेयम् । अग्निः नयत् इति नयतिः सामर्थ्यात् वधार्थः । नववास्त्वं च तुर्वीतिं चाग्निर्हतवानित्यर्थः[10] । दस्यवे द्वितीयार्थे चतुर्थ्येषा । दस्यु शत्रुम् । सहः बलनामैतत् (तु निघ २,९) । अन्तर्णीतमत्वर्थं चेद् द्रष्टव्यम् । सहस्वन्तं बलवन्तम् । अथवा सहः इति तृतीयार्थे द्वितीया । [11]सहसा स्वबलेन नीतवान् इत्यर्थः[11] । यद्यपि च 'अहं स यो नववास्त्वम्' ( ऋ १०,४९,६ ) इति दर्शनादिन्द्रेण नववास्त्वो हत इत्यवगम्यते, तथापि माहाभाग्यात्[12] देवतानाम् [13]अत एव च[13] दर्शनात् अग्निनापि हत एवेत्यवबोद्धव्यम् ॥ १८ ॥

वेङ्कट० अग्निना सह दूरात् तुर्वशम् यदुम् उग्रदेवम्[14] च राजर्षीन् आह्वयाम । अग्निः [15]नववास्त्वादींस्त्रीन् अनयत् उपक्षपयितुं अभिभविता[15] ॥ १८ ॥

---

1 °चतुर्थी अ. 2 °नान् मूको. 3 नास्ति रवि, स मूको. 4 सोऽग्नि वि[1]. ५-५ °अदद् दयशान् सुवार्यं अग्नि कण्वाय सुभगत्वम् सुधनत्वम् अ[1] वि[1]. 6 मेधातिथिं वि[1]. 7 °म् ऋषिम् अ[1] वि[1]. 8 नास्ति अ कु. 9 मनुरस्य रवि. 10 °त्यर्थः । कम् रवि. 11-11 बलेन नीतवानिति रवि. 12 महाभा° रवि. 13-13 हत एव इति च अ कु. 14 उग्रदे° वि[1] अ[1]. 15-15 °वास्त्वं असुरान् अनयत् नीतवान् हिंसितवानित्यर्थः । दस्यं (? दस्युं) शत्रुतम (? शत्रुं सह) बलवन्तम् उपक्षपयिता (? °ता) भवत (? भव) वि[1] अ[2].

मुद्गल० अग्निना सहावस्थितान् तुर्वशम् एतन्नामकम् यदुम् एतन्नामकम् उग्रदेवम् एतन्नामकम् च राजर्षीन् परावत दूरदेशात् हवामहे आह्वयाम । स च अग्नि नववास्त्वम् एतन्नामकम् बृहद्रथम् एतन्नामकम् तुर्वीतिम् एतन्नामकम् राजर्षीन् च नयन् इहानयतु[1] । कीदृशोऽग्नि । दस्यवे सह अस्मदुपद्रवहेतो चोरस्याभिभविता ॥ १८ ॥

नि त्वाम॑ग्ने॒ मनु॑र्दधे॒ ज्योति॒र्जना॑य॒ शश्व॑ते ।
दी॒देथ॒ कण्व॑ ऋ॒तजा॑त उक्षि॒तो यं न॑म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥ १९ ॥

नि । त्वाम् । अ॒ग्ने॒ । मनु॑ । द॒धे॒ । ज्योति॑ । जना॑य । शश्व॑ते । दी॒देथ॑ । कण्वे॑ । ऋ॒तऽजा॑त । उ॒क्षि॒त । यम् । नम॒स्यन्ति॑ । कृ॒ष्टय॑ ॥ १९ ॥

स्कन्द० त्वाम् हे अग्ने । मनु नि दधे पृथिव्या निहितवान् । ज्योति अन्तर्णीतमत्वर्थमेतत् द्रष्टव्यम् । ज्योतिष्मन्तम् । जनाय शश्वते बहव बहूना मनुष्याणामर्थाय । दीदेथ दीप्यस्व । कण्वे यस्य च भावेन भावलक्षणम्[2] ( पा २ ३,३७ ) इत्येवमिय सप्तमी । तच्छतेश्च लक्षणभूतयोरयक्रियाध्याहार । यस्तव कण्व यजति ऋतजात ऋतो यज्ञ तत्र जात उत्पन्न । अथवा ऋत आदित्य ततो जात । आदित्यादाहृत इत्यर्थ । तदुक्तम्—'यमग्निं मेध्यातिथि कण्व ईध ऋतादधि' ( ऋ १,३६,११ ) इति । उक्षित उक्ष सेचने । आहुत्याज्येन सिक्त । [3]स त्व । कीदृश[4] । उच्यते । यम् नमस्यन्ति परिचरणकर्माऽयम्[5] ( तु निघ ३,५ ) । परिचरन्ति । कृष्टय मनुष्या ॥ १९ ॥

वेङ्कट० नि दधे त्वाम् अग्ने[6] [7]मनु अनेकस्मै जनाय[8] ज्योतिर्भूतम् । स दीप्यस्व[9] कण्वे मयि यज्ञाज्जातो [10]हविर्भि उक्षित[11] । यम् त्वाम् नमस्यन्ति परिचरन्ति[12] मनुष्या ॥ १९ ॥

मुद्गल० हे[13] अग्ने ! ज्योति प्रकाशरूपम् त्वाम् शश्वते जनाय 'बहुविधाय जनाय' मनु प्रजापति नि दधे देवयजनदेशे स्थापितवान् । हे अग्ने[14] त्वम् ऋतजात ऋतेन यज्ञेन निमित्तभूतेनोत्पन्न उक्षित हविर्भि तर्पित सन् कण्वे एतन्नामके[15] महर्षौ दीदेथ दीप्तवानसि । यम् अग्निम् कृष्टय मनुष्या नमस्यन्ति नमस्कुर्वन्ति । स त्वमिति पूर्वेणान्वय ॥ १९ ॥

त्वे॒षासो॑ अ॒ग्नेरम॑वन्तो अ॒र्चयो॑ भी॒मासो॒ न प्रती॑तये ।
र॒क्ष॒स्विनः॒ सद॒मिद्या॑तु॒माव॑तो॒ विश्वं॒ सम॒त्रिणं॑ दह ॥ २० ॥

त्वे॒षास॑ । अ॒ग्ने॒ । अम॑ऽवन्त । अ॒र्चय॑ । भी॒मास॑ । न । प्रति॑ऽइतये । र॒क्ष॒स्विन॑ । सद॑म् । इत् । या॒तु॒ऽमाव॑त । विश्व॑म् । सम् । अ॒त्रिण॑म् । द॒ह॒ ॥ २० ॥

---

1 °नयतु वि 2-2 यस्तं कीदृश मू यजन्तम् इति 3 परिचरन्ति कर्मार्थे मू कु 4-4 मनुरग्ने हविर्भ्यां दधे निहितवान् । बहवे कस्मै जनाय अनवरतमवहानमवितम् वि[1] अ[1] 5 स्व॰ वि[1] कु ह॰[1] अ[1] । 6 निहितः वि[1] अ[1] 7 नास्ति ए वि[1] अ कु इति 8 नास्ति वि 9-9 °नमस्यन्ति° वि °यजन्ते° मै[1] 10 °जनकस्मै° वि

स्कन्द० [1]त्वषास दीप्ता अग्ने स्वभूता अमवन्त [1]आत्मपर्यायममशब्दं व्याचक्षते । आत्मवन्त । यत्नवन्त इत्यर्थ । अथवा अम[2] गत्यादिषु । गमनवन्त । अम रोगे । तमसो रोगवन्त । तमसो भङ्गवन्त इत्यर्थ । अर्चय ज्वाला । भीमास न प्रतीतये न प्रतिगमनाय कस्य चित् । [3]न केनचित् प्रत्यभिभवितु शक्या[3] इत्यर्थ । परोऽर्धर्च प्रत्यक्षकृतो भिन्न वाक्यम् । रक्षस्विन रक्षोजातिमत । राक्षसानित्यर्थं । कीदृशान् । उच्यते । सदम् इत् सदशब्द सदाशब्द पर्याय । इच्छब्द एवार्थे । सदैव । यातुमावत मावत[4] इति 'वतुप्प्रकरणे[4] युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' ( पावा ५,२,३९ ) इत्येव वतुप् । मावतो यातवो यातुमावन्त[5] । षष्ठीसमासे छान्दसत्वात् राजदन्तादित्वाद्वा[6] परनिपात । तान् यातुमावत । मत्सदृशस्या प्युपरि रक्षोभूतानित्यर्थ[7] । अथवा यातुधानैर्निर्मीयमाणत्वाव् यातुमा हिंसा । तद्वतो यातु मावत । विश्वम् सर्वं च अत्रिणम् अत्तारमस्माकं[8] व्याघ्रादिकम् सम् दह ॥ २० ॥

वेङ्कट० दीप्ता अग्ने[9] बलवन्त अर्चय भयङ्करा न प्रतिगमनाय । रक्षोभिरभिभवितृभिर्युक्तान्[10] सदा एव यातुमावत यो मत्सदृशस्त्वामुपगच्छति तस्मात् विश्वम् रक्ष सम् दह इति ॥ २० ॥

मुद्गल० अग्ने अर्चय ज्वाला त्वयास दीप्ता अमवन्त बलवन्त भीमास भयङ्करा । अत प्रतीतये अस्माभि प्रत्येतुम् न शक्या इति शेष । हे अग्ने[!] रक्षस्विन बलवत यातुमावत यातुधानान् असुरान् सदम् इत सर्वदैव सम् दह सम्यग्भस्मीकुरु । तथा विश्वम् सर्वम् अत्रिणम् भक्षकम् भस्म दाधक[11] शत्रु सन्दह ॥ २० ॥

इति प्रथमाष्टके तृतीयाध्याये एकादशो वर्ग ॥

[ ३७ ]

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत ॥ १ ॥

क्रीळम् । व । शर्ध । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वा । अभि । प्र । गायत ॥ १ ॥

स्कन्द० 'त्रीणि सूक्तानि मारुत'[11] ( द्र बृदे ३,१०७ ) । त्रीण्येतानि सूक्तानि मरुद्देवत्यानि । क्रीळम् क्रीडनस्वभावकम् । व प्रथमाया स्थाने इय द्वितीया । यूयम् शर्ध बलम् मारुतम् मरुतां स्वभूत मरुत्समूहरूप वा । अनर्वाणम् ऋ गतौ । अन्यत्र आश्रिततया गन्ता अर्वा । आश्रित इत्यर्थ । ततोऽन्य अनर्वा । तमनर्वाणम् । शर्धसश्च नपुंसकस्य विशेषणत्वात् व्यत्ययेनात्र पुंलिङ्गता । अन्यत्र अनाश्रितमित्यर्थ । रथेशुभम् रथेषु व्यवस्थित यत् शोभते तत् रथेशुभम् । हे कण्वा ! [12]मम कण्वस्य पुत्रा ! पौत्रा ! वा[12] अभि प्र गायत गायतिरर्चतिकर्मा ( द्र निघ ३ १४ ) । अभिप्रेत्यनयोश्चात्र विपर्ययो द्रष्टव्य । प्राभिगायत[13] प्रकर्षेणाभिष्टुत ॥ १ ॥

---

१-१ अग्ने स्वभूता अमवन्त त्वेषासो दीप्ता अ कु २ नास्ति अ कु ३,३ केनचित् प्रत्यभि भवितुमशक्या अ कु ४ नास्ति अ कु ५ नास्ति रवि ६ °दन्तादिवत् अ कु रवि° ७ रक्षो भूतानित्यर्थ अ कु ८ अत्तारं सुन्दर अ कु ९ अग्ने मु वि°१ अ° १० °युक्तार्थ वि° रूप; °युक्तान् रु वि°१ अ°१२ ११ नास्ति वि १२ भावत्म् अ कु १३,१३ कण्वस्य पुत्रा रवि १४ प्रा° अ कु

वेङ्कट० [1]क्रीडमानं यूयं मरुतां वेगम् अप्रस्पृतमन्यस्मिन् रथे यः शोभते तम्[1] कण्वाः। अभि प्र गायत ॥ १ ॥

मुद्गल० [2]"क्रीळं वः" इति पञ्चदशर्चं द्वितीयं सूक्तम्। घोरपुत्रः कण्व ऋषिः। गायत्री छन्दः। मरुतो देवताः[2] ॥

हे कण्वाः! कण्वगोत्रोत्पन्ना महर्षयः! वः युष्मदर्थम् मारुतम् मरुत्समूहरूपम् शर्धः बलम् अभि प्र गायत अभितः प्रकर्षेण स्तुध्वम्। कीदृशं शर्धः। क्रीळम् विहरणशीलम्। अनर्वाणम् भ्रातृव्यरहितम्। रथेशुभम् स्वकीये रथेऽवस्थाय शोभमानम् ॥ १ ॥

ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः। अजायन्त स्वभानवः ॥ २ ॥

ये। पृषतीभिः। ऋष्टिऽभिः। साकम्। वाशीभिः। अञ्जिऽभिः। अजायन्त। स्वऽभानवः ॥ २ ॥

स्कन्द० ये मरुतः पृषतीभिः अत्र[3] आदिष्टोपयोजनमेतत् अश्वनाम। पृषद्वर्णाभिः वडवाभिः। ऋष्टिभिः 'अंसेषु व ऋष्टयः' (ऋ ५,५४,११) इत्यंसस्थत्वदर्शनात् तूणाः[4] शक्तयो वा ऋष्टय उच्यन्ते, ताभिश्च। साकम् सह। वाशीभिः आयुधविशेषाः[5] वाश्यः, ताभिश्च। अञ्जिभिः रत्नप्रायाण्याभरणानि अञ्जय उच्यन्ते[6], तैश्च। अजायन्त स्वभानवः स्वदीप्तयः। अपराश्रयविभूतयः सर्वोपकरणैः सहैव ये जाता इत्यर्थः। तेषां शर्धं अभिप्रगायतेरयेवं यच्छब्दश्रुतेः पूर्वया ऋचा एकवाक्यता परया वा ॥ २ ॥

वेङ्कट० ये पृषद्वर्णैरश्वैः ऋष्टिभिः च अंसस्थैः साकम् [7]वाशीभिः च कटाहाकारैरायुधैः[7] आभरणैश्चाञ्जनसाधनैः सह प्रादुर्भवन्ति स्वदीप्तयः, तेषां शर्धः अभिप्रगायत[8] इति ॥ २ ॥

मुद्गल० ये मरुतः पृषतीभिः[9] पृषत्यादिभिः साकं स्वभानवः स्वकीयदीप्तियुक्ताः अजायन्त[10] सम्पन्नाः। पृषत्यो बिन्दुयुक्ता मृग्यः मरुद्वाहनभूताः। ऋष्टयः आयुधानि। वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः। अञ्जयः अलङ्करणानि। तान् स्तुम इति शेषः ॥ २ ॥

इहेव शृण्व एषां कशा हस्तेषु यद् वदान्। नि यामञ्चित्रमृञ्जते ॥ ३ ॥

इहऽइव। शृण्वे। एषाम्। कशाः। हस्तेषु। यत्। वदान्। नि। यामन्। चित्रम्। ऋञ्जते ॥ ३ ॥

स्कन्द० इहेव[1] इवशब्दः 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (तु या ७,३१) इति पदपूरणः। एवशब्दार्थे वा। ये पृषत्यादिभिः सहैव अजायन्त तेषाम् एषाम् इहेव पृथिव्यामेव शृण्वे लिटोऽसत्[11] कर्मणि व्यत्ययेन रूपम्। लडर्थे च लिट्। श्रूयते। किम्। सामर्थ्यात् शब्दः[12]। कदा। उच्यते। कशाः अश्वाभ्यः[13] कशा उच्यन्ते, ताः[14]। हस्तेषु सप्तमीनिर्देशात् स्थिता इति शेषः। यत् यदा। वदान् वदन्ति। हस्तैर्गृहीताः कशाः अश्वानाघ्नन्त्यः[15] शब्दं यदा कुर्वन्तीत्यर्थः।

---

१-१. °माने मरुतां वेगम् अस्मात्रयः शोभते वि[1] अ[2]. २-२. नास्ति वि मै[1]. ३. नास्ति रवि अ. ४. तूष्ना कु. ५. °विशेषः मूको. ६. नास्ति रवि. ७-७. °मिश्चकीकटहा° लपं; °मि चक्रीकटा° वि[2]; °मिश्च कटहा° कु वि[1] रवि; °कटाह° अ[1] वि[1]. ८. नास्ति मूको. ९. नास्ति मै[1]. १०. °जायन्त इति मूको. ११. लिङेनत् मूको. १२. शब्दं कु. १३. अश्वाधम्य कु, अश्वाघ्न्यः अ. १४. तां कु. १५. °घ्नत्य° मूको.

यदा च यामन् रथम् चित्रम् विचित्रं पूर्ण्वं वा ऋञ्जते ऋञ्जतिः प्रसाधनकर्मोऽन्यत्र, इह तु सामर्थ्याद् गत्यर्थोऽन्तर्णीतण्यर्थश्च[1]। निगमयन्ति नियतेन मार्गेण गमयन्ति। यदा मरुतः रथेन वा गच्छन्तीत्यर्थः॥ ३॥

वेङ्कट० यदा अमी गमनप्रारम्भे 'हस्तस्थाः वादयन्ति मरुवाजनीः† तदानीं समीपस्थितानामिव कशानामाहननशब्दः श्रूयते। किञ्चैते गमनप्रारम्भे‡ प्रसाधनमात्मनः[3] चित्रं[3] कुर्वन्ति॥ ३॥

मुद्गल० एषाम् मरुताम् हस्तेषु स्थिताः कशाः[4] स्वरथवाहनताडनहेतवः यत् वदान् यद्वदन्ति यं ध्वनिं कुर्वन्ति, तं ध्वनिम् इहेव अत्रैव स्थित्वा शृण्वे शृणोमि। स ध्वनिविशेषः यामन् सङ्ग्रामे चित्रम् विविधं शौर्यम् नि ऋञ्जते नितरामलङ्करोति॥ ३॥

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे। देवत्तं ब्रह्म गायत॥ ४॥

प्र। वः। शर्धाय। घृष्वये। त्वेषऽद्युम्नाय। शुष्मिणे। देवत्तम्। ब्रह्म। गायत॥ ४॥

स्कन्द० वः इति प्रथमार्थे द्वितीया। [5]यूयम् अस्मत्पुत्रादय[5] ऋत्विजो वा। शर्धाय बलाय मारुताय। घृष्वये अपठितमपि महन्नामैतत् महते। त्वेषद्युम्नाय द्युम्नं द्योततेः, यश इहाभिप्रेतं दीप्तयशसे। शुष्मिणे बलवते। देवत्तम्[6] देङ् रक्षणे इत्यस्यायं छान्दसत्वादनुपसर्गादपि देवशब्दात्[7] 'अव उपसर्गात्तः' (पा ७,४,४७) इत्येवं तकारः। देवेभ्यो मरुद्भ्यो दत्तं रक्षितं देवत्तम्[8]। अस्माभिर्मरुदर्थमुपकल्पितमित्यर्थः। अथवा देवत्तमिति[9] ददातेरेव[10] रूपम्। [11]देवेनेन्द्रेण दत्तं देवत्तमिति[11]। अत्र चेतिहासमाचक्षते[12]—'दितिः[13] किल शत्रुहननसमर्थं पुत्रमिच्छन्ती कश्यपमुपचचार। तां स परितुष्ट उवाच। जनिष्यते तवेदृशः पुत्रः, यदि [14]गर्भं प्रयता[14] वर्षसहस्रं धारयिष्यसीति। तथेति दितिः[15] प्रतिपेदे। तच्छ्रुत्वेन्द्रः छिद्रान्वेषी तां शुश्रूषाञ्चक्रे। सा कदाचिद् इन्द्रस्य उत्सङ्गे शिरो निधाय मुक्तकेशी विप्लुतोपस्थद्वारा सुष्वाप। तामप्रयतामासाद्येन्द्रः तस्या उपस्थं प्रविश्य तं गर्भं सप्तधा वज्रेण चिच्छेद। स च्छिन्नो रुरोद। तमिन्द्रः प्रत्येकं पुनः सप्तधा चिच्छेद। [16]त एव[16] सप्त सप्तका मरुतां गणाः। तत्[17] प्रबुद्धा दितिर्ज्ञात्वा[17] इन्द्रमुवाच। ममैवायमपराधः, तेन न त्वां शपामि[18], [19]किन्तु तैः[19] सह सख्यमुपेहि[20], भागधेयमेषां प्रकल्पयेति। तैः सहेन्द्रः सख्यमुपेत्य तान्[21] स्तुतिभाजो हविर्भाजश्च चकार' इति। तदेतदुच्यते। देवेनेन्द्रेण दत्तं[22] ब्रह्म स्तुतिलक्षणम्। प्र गायत। कै गै शब्दे। प्रशब्दयत। प्रकर्षेण उच्चारयतेत्यर्थः॥ ४॥

वेङ्कट० प्र गायत यूयं वेगवते वृक्षादीनां घर्षणं[23] कुर्वते दीप्तयशसे बलवते[24] मारुताय देवत्तम्[25] देवदत्तं भाग्यलब्धं[26] ब्रह्म[27]॥ ४॥

---

१. °त्यर्थः कु. २-२. नास्ति त्रि[1] भ[2]. † अश्वाजनीः कु रवि. ‡ प्रगमन° वि[3]. ३. चित्रम् वि[3]. ४. नास्ति वि. ५-५. युष्मत्पुत्रादय° रवि. ६. देवदत्तं कु. ७. नास्ति रवि. ८. नास्ति भ कु, देवदत्तम् रवि. ९. देवदत्त° मूको. १०. दातेः भ कु. ११-११. अथवा देवेनेन्द्रेणदत्तमिति भ कु, °देवदत्त° रवि. १२. तु. सा. (ऋ १,११४,६), रामायणम् (१,४२ [वि. बे. संस्करणम्]), मभा. (५,११०) १३. अदितिः मूको. १४-१४. प्रयतगर्भं भ कु. १५. अदितिः किल भ कु; अदितिः रवि. १६-१६. एते भ कु. १७. अदिति° मूको. १८. शपामि इति भ कु. १९-१९. नास्ति रवि. २०. सख्यमुपेहि भ कु; °मुपेहि रवि. २१. नास्ति भ कु. २२. दत्तं देवदत्तं भ कु. २३. घर्षणं कु; घर्षणा वि[1] भ[2]. २४. मरुत° वि[1] एवं. २५. नास्ति मूको. २६. भाग्यलब्धं वि[1] भ[2] रवि; गान्धर्वलब्धम् भ[1] वि[1] कु. २७. नास्ति कु, देवत्तं ब्रह्म भ[1] वि[11] ल रवि.

मुद्गल० हे ऋत्विजः! वः युष्माकं सम्बन्धिने शर्धाय प्रसहनशीलाय घृष्वये शत्रुधर्षणयुक्ताय त्वेषद्युम्नाय दीप्यमानयशसे शुष्मिणे बलवते एवंभूताय मरुद्गणाय ब्रह्म हविर्लक्षणमन्नमुद्दिश्य प्र गायत स्तुध्वम्। कीदृशं ब्रह्म। देवत्तम् देवैर्दत्तं देवतानुग्रहाल्लब्धम् ॥ ४ ॥

प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम्। जम्भे रसस्य वावृधे ॥ ५ ॥

प्र। शंस। गोषु। अघ्न्यम्। क्रीळम्। यत्। शर्धः। मारुतम्। जम्भे। रसस्य। ववृधे ॥ ५ ॥

स्कन्द० क्रीळम्[1] यत् इति यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहार्यः। तत् प्र शंस शंस स्तुतौ। आत्मन एवायमन्तरात्मनः प्रैषः। प्रकर्षेण स्तुहि हे अन्तरात्मन्!। गोषु इति[2] निमित्त एषा सप्तमी। प्रयोजनस्य निमित्तत्वेन[3] विवक्षा। गोषु निमित्तभूतासु। गवार्थमित्यर्थः। अघ्न्यम् अहन्तव्यं शत्रुभिः हन्तुमशक्यम् कतमत्[4]। उच्यते। क्रीळं यत् शर्धः मारुतम् तत्। किं करोति। उच्यते। जम्भे जम्भतिरत्र सामर्थ्यात् पानार्थः। तृतीयार्थे च सप्तमी। जम्भेन पानेन रसस्य सोमरसस्य ववृधे वीर्येण वर्धते ॥ ५ ॥

वेङ्कट० प्र[5] स्तुहि गोषु स्थितम् अहन्तव्यं क्रीळमानम्। यत् शर्धः मारुतम् 'तद् रसस्य[6] पयसः भक्तः ववृधे[7]। जम्भशब्द उदरवचनः। 'पृश्नियै वै पयसो मरुतो जाताः' (तैसं २,२,११,४) इति ब्राह्मणम् ॥ ५ ॥

मुद्गल० गोषु मरुन्मातृभूतपृश्निप्रभृतिषु धेनुषु अवस्थितम् अघ्न्यम् अहन्तव्यम् क्रीळम् विहारोपेतम् मारुतम् मरुत्सम्बन्धि शर्धः प्रसहनशीलम् तेजः यत् अस्ति तत् प्र शंस हे ऋत्विक्समूह! स्तुहि। रसस्य गोक्षीररूपस्य सम्बन्धि तत्तेजः जम्भे मुखे ववृधे वृद्धमभूत् ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये द्वादशो वर्गः ॥

को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः। यत् सीमन्तं न धूनुथ ॥ ६ ॥

कः। वः। वर्षिष्ठः। आ। नरः। दिवः। च। ग्मः। च। धूतयः। यत्। सीम्। अन्तम्। न। धूनुथ ॥ ६ ॥

स्कन्द० कः वः निर्धारण एषा षष्ठी। युष्माकं मध्ये वर्षिष्ठः वृद्धतमः। न कश्चिदपि वृद्धतमः। सर्वे सवयस्का इत्यर्थः। हे नरः! मनुष्याकाराः!। दिवः च ग्मः च द्युलोकस्य पृ[8] पृथिव्याश्च आ[9] धूतयः! आकम्पयितारः!। कीदृशाः[9] यूयम्[10]। उच्यते। यत् ये[9] सीम् इति परिग्रहार्थीयः। सर्वं जगत् अन्तम् न अग्न्यमिव। यथा कश्चित् शाखाया[11] वंशस्य वा अन्तं धूनुयात् एवं धूनुथ। भयेन कम्पयथेत्यर्थः ॥ ६ ॥

वेङ्कट० यदा[12] समीपम् इव सर्वमेव परिगृह्य[13] कम्पयथ, तदानीं मरुतः! युष्माकम् कः वर्धितृतमः दिवश्च पृथिव्याश्च कम्पयितारः!। आकारः पूरणः ॥ ६ ॥

---

१. प्रशंस क्रीळं अ कु. २. नास्ति रवि. ३. हेतुत्वेन रवि. ४. यत् का[5] रवि. ५. नास्ति अ[1] वि[1]. ६-६. मद्रस्य अ[1] वि[1]. ७. ववृधे कु. ८. नास्ति अ कु. ९. ये कीदृ[9] अ. १०. यदं अ रवि. ११. छायाया. अ कु; शालायाः रवि. १२. यदा मरुत. कु रवि. १३. विगृह्य वि[1] अ[1].

मुद्गल० दिवं च द्युलोकस्यापि [1]ग्मं च भूलोकस्यापि[1] धूतयः कम्पनकारिणः नरः । नेतारो हे मरुतः व युष्माकं मध्ये आ समन्तात् वरिष्ठः श्रेष्ठतमः कः । यत् यस्मात् कारणात् साम् सर्वतः अन्तम् न वृक्षाग्रमिव धूनुथ चालयथ । तस्मात् कारणात् कम्पयितृणां युष्माकं मध्ये कः श्रेष्ठः इति प्रश्नः ॥ ६ ॥

नि वो॒ यामा॑य॒ मानु॑षो द॒ध्र उ॒ग्राय॑ म॒न्यवे॑ । जिही॑त॒ पर्व॑तो गि॒रिः ॥ ७ ॥

नि । वः॒ । यामा॑य । मानु॑षः । द॒ध्रे । उ॒ग्राय॑ । म॒न्यवे॑ । जिही॑त । पर्व॑तः । गि॒रिः ॥ ७ ॥

स्कन्द० वः युष्माकं स्वभूतम् यामाय द्वितीयार्थे चतुर्थ्येषा । यामं रथम् मानुषः मनुष्यः[2] नि दध्रे धृङ् धारणे । नियमेन स्ववशे धारयति । अथवा यामशब्दो यागवचनः । स्वार्थ एव च तादर्थ्ये चतुर्थी । युष्माकं यागाय । यूयं यज्ञे यास्यथ इत्येवमर्थं मनुष्यो नियमनं धारयति । किम् । सामर्थ्यात् सोमलक्षणानि हवींषि । किमर्थम् । उग्राय मन्यवे मन्युर्मन्यतेर्दीप्ति कर्मणः, दीप्तिरिहाभिप्रेता । उग्रायै दीप्त्यै । प्रकृष्टायैश्वर्यायेत्यर्थः । किञ्च जिहीत ओहाङ् गतौ । अन्यत्र गच्छति । युष्मद्भयादपयातीत्यर्थः । कीदृशः । पर्वतः पर्ववान् बह्ववयवकः[3] । महानपि सन्नित्यर्थः । कः । गिरिः मेघो महीधरो वा । अथवा पर्वतो गिरिरिति समुच्चीयमानार्थौ[4] । [5]एते न[5] परस्परविशेषणविशेष्यभूते[6] । पर्वतश्च गिरिश्च । मेघश्च महीधरश्चेत्यर्थः । अथवा एव मन्यथा अस्या ऋचोऽयं योजना[7] । वः इति द्वितीयाबहुवचनम् । 'यात्यस्मिन् देवाः[8]' इति यामो यज्ञः । युष्मान् यज्ञाय मनुष्यो नियमनं धारयति । किञ्च उग्राय मन्यवे जिहीत । 'मन्युः' (निघ २, १३) इति क्रोधनाम । पञ्चम्यर्थे[9] चतुर्थी । उग्रात् क्रोधात् गच्छति । उग्रेभ्यः क्रुद्धेभ्यो युष्मदः[10] विभ्यदपयातीत्यर्थः । कः । पर्वतो गिरिः अपि महान् गिरिः किमुत अन्य इत्यर्थः ॥ ७ ॥

वेङ्कट० नि[11] मानुषः[11] दध्रे स्थूणादिकं युष्माकं[12] गमनाय उद्गूर्णाय अभिमन्त्रे । स्थिरं[13] स्थूणादिकं दृढम् निहन्ति मानुषः[14], । पर्ववान्[15] गिरिः च कम्पते ॥ ७ ॥

मुद्गल० हे मरुतः ! वः युष्माकम् यामाय गमनार्थम् मानुषः गृहस्वामी कश्चिन्मनुजः नि दध्रे गृहदार्ढ्यार्थं दृढं स्तम्भं निक्षिप्तवान् । भवदीयगमनेन चालितं गृहं पतिष्यतीति भीत्या तन्निवारणाय दृढस्तम्भप्रक्षेपः । कीदृशाय यामाय । उग्राय तीव्राय मन्यवे चालनार्थम् अभिमन्यमानाय । युज्यते हि [16]"भवद्गमनात् भीतिः । यतः भवद्भयात्[16]" चालितः पर्वतः बहुविपर्वयुक्तः गिरिः शिखरी जिहीत गच्छेत् ॥ ७ ॥

येषा॒मज्मे॑षु पृथि॒वी जु॑जु॒र्वाँ इ॑व वि॒श्पतिः॑ । भि॒या यामे॑षु॒ रेज॑ते ॥ ८ ॥

येषा॑म् । अज्मे॑षु । पृ॒थि॒वी । जु॒जु॒र्वान्ऽइ॑व । वि॒श्पतिः॑ । भि॒या । यामे॑षु । रेज॑ते ॥ ८ ॥

---

1-1 नास्ति वि. 2 मनुष्या अ कु. 3 °ववयवक अ कु. 4 °मानार्थौ कु °मानार्थं अ. 5-5 एतेन दु. 6 °भूतौ अ कु. 7 °ऋचो या° रवि. 8-8 यात्यस्मिन् देवा रवि. 9 °दे च अ कु. 10 युष्मभ्यं मूको. 11 दधे वि° अ°. 12 नास्ति मूको. 13 नास्ति वि° अ°. 14 नास्ति कु गिरः वि° अ°. 15 मनुष्य वि° अ°. 16 पर्वत वि° ब. 17-17 भवद्गमनात् भीतिः भवद्भयात् वि

स्कन्द० [1]कीदृशा यूयम्। उच्यते[1]। येषाम् युष्माकम् अज्मेषु अज गतिक्षेपणयो । गमनेषु। पृथिवी जुजुर्वान् इव विश्पति । पुत्रपौत्रादीनां मनुष्याणां पति विश्पति । कुलज्येष्ठोऽत्राभिप्रेत, न राजा। यथा जीर्णोऽत्यन्त वृद्ध। भिया भयेन रेजते कम्पते। यामेषु इत्येतत्तु अज्मेषु इत्येतेन सम्बन्धयितव्यम्। तृतीयार्थे चात्र सप्तमी। यामै रथै अज्मेष्विति। येषु युष्मासु रथैर्गच्छत्सु कमप्येते हन्तुं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते। किमुत अन्ये इत्यर्थ। अथवा येषामित्येतत् भियेत्येतेन सम्बन्धयितव्यम्। तत्सम्बन्धे च 'भीत्रार्थानाम्०' (पा १,४,२५) इत्यपादानत्वात्[2] पञ्चम्यर्थे षष्ठी। अज्मेषु इत्यप्यज्मशब्दो गृहनाम (तु निघ ३,४)। अज्मेषु[3] यामेष्वित्येतच्च[4] समुच्चीयमानार्थे [5]एते। सप्तमीनिर्देशाच्च[6] योग्यक्रियाध्याहार । यम्यो युष्मत्[6] अज्मेषु यामेषु [7]च गृहेषु रथेषु च[7] व्यवस्थितेभ्य भिया भयेन पृथिवी रेजत इति । येभ्य स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थ । [8]तेषा वो यामाय मानुष[8] इत्येवं तच्छब्दश्रुते पूर्वया ऋचैकवाक्यता परया वा ॥ ८ ॥

वेङ्कट० येषाम् उत्क्षेपकेषु[9] गमनेषु पृथिवी ओषधिवनस्पतियुक्ता, [10]जीर्ण राजेव परबलागमने,[10] कम्पते भिया। पूर्वत्र सम्बन्ध ॥ ८ ॥

मुद्गल० हे मरुत[11] येषाम् युष्माकम् यामेषु गमनेषु अज्मेषु क्षेपकेषु सत्सु पृथिवी भूमि भिया रेजते कम्पते। दृष्टान्त । जुजुर्वान् इव विश्पति । यथा वयोहानिरोगादिना जीर्ण प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ॥ ८ ॥

स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत् सीमनु द्विता शवः ॥ ९ ॥

स्थिरम्। हि। जानम्। एषाम्। वयः। मातुः। निःऽएतवे। यत्। सीम्। अनु। द्विता। शवः ॥ ९ ॥

स्कन्द० हि शब्द पदपूरण । येषाम् अज्मेषु[11] येभ्यो वा भिया पृथिवी रेजते, तेषाम् एषाम् मरुताम् स्थिरम् जानम् जन्म वय च यौवनलक्षणम्। यथा [12]मनुष्या जाता[12] शीघ्रमेव [13]वृद्धीभवन्ति म्रियन्ते[13] च, न तद्वत् ते[14] मरुत इत्यर्थ । किमर्थम्। उच्यते। मातु निरेतवे। मातु सकाशात् निर्गन्तुम् । मातुरुदरे पुन पुनर्गर्भवासमननुभवितुमित्यर्थ । यो हि [15]वृद्धीभवति म्रियते[15] च, तेनावश्य मातुरुदरे पुन पुनर्गर्भवासोऽनुभवितव्य । कीदृशा मरुत । उच्यते। यत्, षष्ठ्या अत्र लुक्। येषाम्। सीम् अनु सीमिति परिग्रहार्थीय । अन्विति लक्षण कर्मप्रवचनीय प्रति[16] शब्देन समानार्थ । सर्व प्रति द्विता द्विधा द्विविधमपि सांयोगिक[17] च हस्त्यश्वादि शारीर[18] च शव बलम्। ये द्विविधेनापि बलेन न कुतश्चिन्न्यूना इत्यर्थ ॥ ९ ॥

वेङ्कट० स्थिरम् हि जन्म मरुताम् वय च मातु निर्गमनाय[19]। न पुनर्जननाय मातरं प्रविशन्ति[20]। यत् येषा सर्वं जगत् अनुप्रविशति[21] तत् बल द्विधा भवति दिवि च पृथिव्यां चेति ॥ ९ ॥

---

१-१. ये कीदृशा मरुत् उच्यन्ते भ २ दत्येतथा° कु ३ °ज्मेष्विति कु ४ °ष्विति च भ कु ५-५ °त्वात्' रवि ६ युष्मच्चं मूको ७-७ गृहेषु च थेषु भ कु ८-८ तेषां ये मानुष भ कु, तेषा यामाय मानुष रवि ९ °षेपेषु वि°. १०-१० जीर्णो द बलागमने वि° अ° ११. नास्ति मूको १२ यो तु रवि १३-१३ मनुष्याजन्म भ कु १४-१४ म्रियन्ते वृद्धीभवन्ति मूको १५ ते भ कु १६-१६ म्रियते वृद्धीभवति मूको १७ सांयोगिक कु १८ शरीर भ कु १९ गमनाय वि° अ°. २० °विशन्ति भ° कु २१ °प्रविशति वि° अ°, अनुभवति इ

मुद्गल० एषाम् मरुताम् जानम् जन्मस्थानमाकाशम् स्थिरम् हि चलनरहितं खलु । मातुः मरुतां जननीस्थानीयादाकाशात्[1] वयः पक्षिणः निरेतवे निर्गन्तुं समर्थाः भवन्तीति शेषः । तादृशात् आकाशात् जन्मेति मरुतां स्तुतिः । यत् यस्मात् कारणात् शवः मवदीयं बलम् अनुक्रमेण मीम् सर्वतः द्विता द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते । अतो भवदीयं जानं स्थिरं हि इति पूर्वत्रान्वयः ॥ ९ ॥

उदु॒ त्ये सू॒नवो॒ गिर॒: काष्ठा॒ अज्मे॑ष्वत्नत । वा॒श्रा अ॑भि॒ज्ञु यात॑वे ॥ १० ॥

उत् । ऊँ॒ इति॑ । त्ये । सू॒नव॑: । गिर॑: । काष्ठा॑: । अज्मे॑षु । अ॒त्न॒त॒ । वा॒श्रा॑: । अ॒भि॒ऽज्ञु । यात॑वे ॥ १० ॥

स्कन्द० उत् इत्युपसर्गः अत्नत इत्याख्यातेन सम्बन्धयितव्यः । उ इति पदपूरणः । ये उक्तगुणाः त्ये ते मरुतः । सूनवः पुत्राः । कस्य । पृश्नेर्वा रुद्रस्य वा । कुत एतत्—'पृश्नेः पुत्रा उपमासो रभिष्ठाः' ( ऋ ५,५८,५ ), 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' ( ऋ ६,६६,३ ) इत्यादिषु मन्त्रान्तरेषु दर्शनात् । गिरः काष्ठाः आपोऽत्र काष्ठा उच्यन्ते (तु. या २,१५) । गर्जितलक्षणा वाचः अपश्च । अज्मेषु तृतीयार्थे सप्तमी । अज्मैः अजनैः स्वगमनैः उदत्नत ऊर्ध्वं विस्तारयन्ति । मेघं प्रति 'स्वयं गत्वा' गर्जन्ति । तदीयाश्चापो विक्षिपन्तीत्यर्थः । कीदृशीरपः । वाश्राः वाशनशीलाः शब्दकारिणीः । बह्वीरित्यर्थः । कथमुदत्नत । अभिज्ञु क्रियाविशेषणमेतत् । अभिगतं जानु यस्मिन् उत्तानने तदभिज्ञु । निपात्य जानुं महता यत्नेनेत्यर्थः । किमर्थम् । यातवे । पृथिव्यां पातनायेत्यर्थः ॥ १० ॥

वेङ्कट० उदत्नत उत्तता[1] अकुर्वन् विस्तीर्णौषधीरकुर्वन् अमी प्रेरयितारः[2] शब्दयन्तः[2] दिशः गमनेषु । यदा[3] गच्छन्त्योषधिभिः[3] विस्तारयन्ति दिश इति । तथा धेनूश्च अभिगतजानुकं[4] जानुम्कुर्वन् । ओषधिसद्भावादुत्क्षिप्तपादाः[5] चरन्ति धेनव इति ॥ १० ॥

मुद्गल० त्ये पूर्वप्रकृताः गिरः सूनवः वाचः उत्पादका मरुतः । वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्ति । अज्मेषु स्वकीयेषु गमनेषु सत्सु काष्ठाः अपः उत् उ [10]उत्कर्षेणैव अत्नत विस्तारितवन्तः । उदकं[11] विस्तार्य तत्पानार्थम् वाश्राः हम्भारवोपेता गाः अभिज्ञु जान्वभिमुखं यथा भवति तथा यातवे गन्तुं प्रेरितवन्त इति शेषः ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये त्रयोदशो वर्गः ॥

त्यं चि॑द्घा दी॒र्घं पृ॒थुं मि॒हो नपा॑त॒ममृ॑ध्रम् । प्र च्या॑वयन्ति॒ याम॑भिः ॥ ११ ॥

त्यम् । चि॒त् । घ॒ । दी॒र्घम् । पृ॒थुम् । मि॒हः । नपा॑तम् । अमृ॑ध्रम् । प्र । च्य॒व॒य॒न्ति॒ । याम॑ऽभिः ॥ ११ ॥

---

१. जनन° मूको. २-२. नास्ति अ कु. ३. उत्तता कु. ४. प्रेरितारः कु; प्रेरितारं अ रवि. ५. शब्दायन्तः मूको. ६. यदि अ[11] वि[11] छ एवं रवि. ७. °धीभिः वि° एवं कु. ८. अभिगतजानु वि° अ°. ९. °ओषधीन° वि[11] एवं अ° कु. १०. नास्ति वि से°.

स्कन्द० न च केवला गिरः काष्ठाश्च। किं तर्हि। 'त्यम् चित्[1] चिदित्यप्यर्थे। घ इति पदपूरणः। तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। योऽयं वैद्युतो नामाग्निः तमपि[1] दीर्घम् पृथुम् मिहः नपातम् मिह सेचने। सेचनात् मिह् मेघ उच्यते। नपादिति अपत्यनाम। मेघस्य अपत्यभूतम्। मेघाद्धि वैद्युतोऽग्निर्जायते। अथवा[2] नपादिति पौत्रस्यैव नाम, न पुत्रस्य। तत्रादित्यो मिहुच्यते। सोऽपि हि रश्म्याहृताभिरद्भिर्मध्यमं सिञ्चति। तास्यश्चाद्भ्यो मेघो जायते। मेघात् वैद्युत इत्येवमादित्यपौत्रत्वमस्य। अमृध्रम् मृधिर्हिंसार्थः। अहिंस्यम् अहिंसितारं वा साधूनाम्। अथवा मृध्रशब्दो मृदुपर्यायः। तथाहि यास्केन दर्शितम्[4]—"'दनो विश इन्द्र मृध्रवाचः' (ऋ १,१७४,२)। दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु" (या ६,३१) इति। अमृध्रम् अमृदुं तीक्ष्णम्। अथवा मृध्रशब्दो निर्वीर्यवचनः। एवं हि छागलेयिनां श्रुतौ प्रयोगः—'दक्षिणेन हस्तेन देवानसृजत्। [5]सव्येनासुरान्। तेन[5] देवा वीर्यवन्तोऽभवन्। मृध्रा असुराः' इति। अत्र च वीर्यवत्प्रतियोगित्वेनोपादानात् मृध्रशब्दो निर्वीर्यवचन इति गम्यते। अमृध्रं वीर्यवन्तं प्र च्यावयन्ति मेघात् यामभिः यानैः। विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः। [6]अथवा दावलक्षणोऽग्निरभिप्रेतः। न वैद्युतः। स हि मिहो नपात्। कथम्। मेघात् वृष्टिद्वारेण ओषधिवनस्पतयो जायन्ते। ओषधिवनस्पतिभ्यः स इति। तं ग्रीष्मे प्रवृद्धं प्रच्यावयन्ति अपगमयन्ति यामभिः यानैः। कस्य। सामर्थ्यात् वृष्टिलक्षणानामपाम्। योऽयं दावरूपोऽग्निः, तमपि वृष्टिं गमयन्तोऽपनयन्तीत्यर्थः[6] ॥ ११ ॥

वेङ्कट० त्यम्[7] चित् खलु दीर्घम् [8]'विस्तीर्णम् मेघस्य पुत्रम् अमृदुम् गमनैः[8] प्र च्यावयन्ति मरुतः। इदं[9] शिलोच्चयाभिप्रायमिति ॥ ११ ॥

मुद्गल० त्यं चित् घ[10] प्रसिद्धो यो मेघ. तमपि मेघम् यामभिः स्वकीयगमनैः प्र च्यावयन्ति मरुतः प्रकर्षेण गमयन्ति। कीदृशम्। दीर्घम् आयामोपेतम् पृथुम् तिर्यग्विस्तृतम् मिहः नपातम् सेचनी यस्य जलस्य न पातयितारम्। वृष्टिमकुर्वन्तमित्यर्थः। अमृध्रम् केनापि अहिंस्यम् ॥ ११ ॥

मरु॑तो॒ यद्ध॑ वो॒ बलं॒ जनाँ॑ अचुच्यवीतन। गि॒रीँर॑चुच्यवीतन ॥ १२ ॥

मरु॑तः। यत्। ह॒। वः॒। बल॑म्। जना॑न्। अ॒चु॒च्य॒वी॒त॒न॒। गि॒रीन्। अ॒चु॒च्य॒वी॒त॒न॒ ॥ १२ ॥

स्कन्द० हे मरुतः! यत् वः बलम्। ह इति पदपूरणः। यद्[11] वो बलं जनान्[12] असुरजनान्[13] अचुच्यवीतन स्वराष्ट्रेभ्यः च्यावितवत्[14]। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तदेव। गिरीन् अपि मेघान् पर्वतान् वा अचुच्यवीतन च्यावयति[15] ॥ १२ ॥

वेङ्कट० हे[16] मरुतः! यत् ह[16] वः बलम् तत् जनान् च्यावयति। तत् शिलोच्चयानपि[17] च्यावयति ॥ १२ ॥

मुद्गल० हे मरुतः! यत् ह यस्मादेव कारणात् वः युष्माकम् बलम् अस्ति अस्मादेव कारणात् जनान् प्राणिनः अचुच्यवीतन स्वस्वव्यापारेषु प्रेरयत[18]। तथा गिरीन् मेघान् अचुच्यवीतन प्रेरयत[18] ॥ १२ ॥

---

१-१. नास्ति रवि. २. तदपि कु. ३. अथ तु अ रवि. ४. दर्शितः अ कु. ५. सव्येन नरान् ते अ कु. ६-६. नास्ति अ कु. ७. तम् अ[1] वि[2]. ८-८. मेघं विस्तीर्णस्य पुत्रमधृतं गमनैः वि[1] स्र[3], मेघस्य पुत्रं मृदुगमनैः वि[3]. ९. एतत् अ[1,2] वि[1,3] स स्र[3] रवि. १०. नास्ति वि मं[1]. ११. यद अ रवि. १२. नास्ति अ रवि. १३. नास्ति कु. १४. च्यावितवन्तः अ कु. १५. च्यावयन्ति मूको. १६. नास्ति वि[1,2] अ[2]-स कु रवि. १७. °यानपि वि[1] स्र[3]. १८. प्रेर[°] मूको.

यद्ध् यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् ॥ १३ ॥

यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥

स्कन्द० यत् यदा यान्ति मरुतः, यान्तश्च सम् ब्रुवते परस्परेण सम्भाषन्ते अध्वन् आ । आ इत्युप सर्गोऽत्राप्यर्थे[1] । अध्वनोऽधि अध्वन उपरि । अध्वनीत्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा शृणोति कः चित् एषाम् [2]मरुतां सम्भाषणम्[2], न सर्वः । यस्यैवैते[3] मरुतः प्रसादवन्तः, स एवैतान् गच्छतः अध्वनि भाषमाणान् शृणोति, नापर इत्यर्थः ॥ १३ ॥

वेङ्कट० यदा खलु यान्ति मरुतः, तदानीं मार्गेऽमी सह शब्दं कुर्वन्ति । तं शब्दम् एषाम्[4] कः चित् अपि शृणोति । सर्वो जनः आगोपालं शृणोति ॥ १३ ॥

मुद्गल० यत् ह यदा खलु मरुतः यान्ति गच्छन्ति । तदानीम् अध्वन् आ मार्गे सर्वतः सम् ब्रुवते ह सम्भूय ध्वनिम् अवश्यं कुर्वन्ति । एषाम् मरुतां सम्बन्धिनं शब्दम् कश्चित् यः कोऽपि शृणोति ॥ १३ ॥

प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः । तत्रो षु मादयाध्वै ॥ १४ ॥

प्र । यात । शीभम् । आशुऽभिः । सन्ति । कण्वेषु । वः । दुवः । तत्रो इति । सु । मादयाध्वै ॥ १४ ॥

स्कन्द० प्र इत्येष उपेत्येतस्य स्थाने । उप यात अस्मान् शीभम् क्षिप्रनामैतत् (द्र. निघ २,१५) । क्षिप्रम् आशुभिः [5]शीघ्रैः अश्वैः[5] । किं कारणम् । उच्यते । यस्मात् सन्ति कण्वेषु एकस्मिन्नेवात्मनि 'अस्मदो द्वयोश्च' (पा १,२,५९) इत्येवं[6] बहुवचनम् । पुत्रपौत्राद्यपेक्षं वा । अस्मासु कण्वेषु । वः युष्माकम् दुवः परिचर्याः[7] । यस्मादागतान् युष्मान् वयं परिचरिष्याम इत्यर्थः । आगत्य च तत्रो षु तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽत्राप्याहर्तव्यः[8] । योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु मादयाध्वे मद तृप्तौ । तर्पयत आत्मानम् ॥ १४ ॥

वेङ्कट० उद्युक्ता भवत क्षिप्रं[9] शीघ्रैरश्वैः । सन्ति कण्वेषु वः परिचर्याः । तत्र सुष्ठु मदयत[10] ॥ १४ ॥

मुद्गल० हे मरुतः! आशुभिः वेगवद्भिः स्वकीयैर्वाहनैः शीभम् शीघ्रम् प्र यात प्रकर्षेण कर्मभूमिं गच्छत । कण्वेषु मेधाविषु अनुष्ठातृषु वः युष्माकम् दुवः दुवांसि परिचरणानि सन्ति । तत्रो षु तेष्वेव परिचारकेषु कण्वेषु मादयाध्वै तृप्ता भवत ॥ १४ ॥

अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम् । विश्वं चिदायुर्जीवसे ॥ १५ ॥

अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् । विश्वम् । चित् । आयुः । जीवसे ॥ १५ ॥

---

1. °प्सर्गोऽप्यर्थे मूको. 2-2. सम्भाषणं मरुता मूको. 3. यस्यैव ते मूको. 4. एष वि[1] अ[1]. 5-5. अश्वैः शीघ्रैः मूको. 6. इति मूको. 7. °चर्या मूको. 8. °प्याहार्यः मूको. 9. शीघ्र क्षिप्रैरश्वैः वि[1] अ[1] वि[3]. 10. मेदत वि[1] अ[1]; मदत: वि[3]; दत्तम् वि[1] अ[1]; मदत ख्; मदत कि; मापद ख् कोषः.

स्कन्द० कस्मात् । उच्यते । हि-शब्दो यस्मादर्थे । स्म इति पदपूरणः[1] । यस्मात् तत्र अस्ति मदाय वः । किम् । सामर्थ्यात् सोमः । यस्मात् युष्मन्मदकरणसमर्थः सोमोऽस्तीत्यर्थः । यस्माच[2] स्मसि स्म वयम् स्मेति पदपूरणः[3] । वियामहे वयमपि एषाम् युष्माकं मरुतां स्वभूताः । यस्मात् वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिकराश्च[4] वियामह इत्यर्थः । यस्माच विश्वम् चित् आयुः । 'विश्वम्' ( निघ ३,१ ) इति बहुनाम । चिच्छब्दोऽप्यर्थे, आयुरित्यस्माच परो द्रष्टव्यः । आयुः इत्येतच अत्र अन्ननाम ( निघ २,७ ) । अन्नमपि बह्वस्तीत्यर्थः । किमर्थम् । जीवसे जीवनाय[5] जीवितुम् । अस्मज्जीवनार्थम् । यत् सोमेन आत्मानं तर्पयित्वा जीवनाय अस्मभ्यमन्नं दास्यथ,[5] तदपि बह्वस्तीत्यर्थः ॥ १५ ॥

वेङ्कट० [6]अस्ति हि[6] मदाय वः[5] अस्मासु स्तोत्रम् । तथा एषाम् भवताम्[7] 'स्तोतारः वयम्[8] परिपूर्णम् आयुः जीवितुं भवामः ॥ १५ ॥

मुद्गल० हे मरुतः! वः युष्माकम् मदाय तृप्तये अस्ति हि ष्म अस्माभिः प्रयुज्यमानं हविः[9] विद्यते खलु । एषाम्[10] युष्माकं भृत्यभूताः वयम् स्मसि स्म वियामहे खलु । जीवसे जीवितुम् विश्वम् चित् आयुः सर्वमप्यायुः प्रयच्छतेति शेषः ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये चतुर्दशो वर्गः ॥

[ ३८ ]

## कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः ॥ १ ॥

कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ॥१॥

स्कन्द० कत् शब्दः कदेत्यस्य पर्यायः । ह नूनम् इति पदपूरणौ । कदा हे कधप्रियः! कम् उदकम् तद्[11] दधाति धारयतीति कधो मेघः । स प्रीः[12] प्रियो येषां ते कधप्रियः[13] । अथवा[14] कध आदित्यः, उदकस्य धारयितृत्वात् प्रजापतिना वा प्रकाशार्थं निहितत्वात् । प्रीञ् तर्पणे । [15]प्रीः प्रियः तर्पयिता[15] । आदित्यस्तर्पयिता[16] येषां ते कधप्रियः[17] । मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते । तेषां सम्बोधनं हे कधप्रियः! । पिता पुत्रम् न हस्तयोः यथा पिता बालकं पुत्रं लालयन् हस्तयोर्धारयति, एवम् दधिध्वे लालयन्तो[18] धारयिष्यथ । कम् । सामर्थ्यात् अस्मान् । कदा अस्मान् [19]लालयन्तो धारयिष्यथेत्यर्थः[19] । हे वृक्तबर्हिषः! सर्वैः मनुष्यैः वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः । सर्वमनुष्यैः कृतयागा इत्यर्थः । तेषां सम्बोधनं हे वृक्तबर्हिषः! ॥ १ ॥

---

१. °पूरणम् म कु. २ नास्ति भ कु. ३. °मात्मन म कु रवि[1]. ४. दास्यते म कु. ५-५. भवति हि म[2] वि[1]. ६. नास्ति वि[2]. ७. नास्ति कु. ८-८. स्तोऽन्य रवि. ९. हविर्षो मूको. १०. एषाम् वो वि. ११. तं कु. १२. नास्ति मूको. १३. °प्रियाः भ रवि[2]. १४. व्यत्ययेनैकवचनं द्रष्टव्यम् । अथवा मूको. १५-१५. तर्पयिता प्रियः म रवि; प्रियः तर्पयिता कु. १६. नास्ति कु. १७. °प्रिय कु रवि[2]. १८. धारयन्ते म; धारयन्तो कु. १९-१९. लालयिष्यथेत्यर्थः म कु.

वेङ्कट० सुख पुरा स्तोत्रप्रीता[1]। पिता पुत्रम् इव हस्तयो अस्मान् दधिध्व यज्ञार्थं छिन्नबर्हिषो[2] मरुत ! ॥१॥

मुद्गल० [3]'कद्ध नूनम्' इति पञ्चदशर्चं तृतीय सूक्तम् । घोरपुत्र कण्व ऋषि । गायत्री छन्द । मरुतो देवता[3] ॥

हे मरुत ! कत् ह कदा खलु नूनम् अवश्यम् हस्तयो दधिध्वे यूयम् अस्मान् हस्ते धारयथ। दृष्टान्त । पिता पुत्रम् न हस्तयो यथा लोके पिता हस्तयो स्वकीय पुत्रं धारयति तद्वत्। कीदृशा मरुत । ऋधप्रिय स्तुतिप्रीता वृक्तबर्हिष वृक्त छिन्नं बर्हि दर्भो येषां मरुताम् ते[4] ॥ १ ॥

क्व॑ नू॒नं कद्द्वो॒ अर्थं॒ गन्ता॑ दि॒वो न पृ॑थि॒व्याः । क्व॑ वो॒ गावो॒ न र॑ण्यन्ति ॥२॥

क्व॑ । नू॒नम् । कत् । व॒ । अर्थ॑म् । गन्त॑ । दि॒व । न । पृ॒थि॒व्या । क्व॑ । व॒ । गाव॑ । न । र॒ण्य॒न्ति ॥२॥

स्कन्द० [5]'नूनम् कत्'[5] इति पदपूरणौ[6]। क्व दृशे कदा दृशे वा व अर्थम् ऋ गतौ इत्यस्य रूपम्। अर्थं[7] गमनमुच्यते। युष्माक गमनम्। क्व कदा वा यूय गन्तार[8] स्थेत्यर्थ । किमुच्यते[9]। येन पुन पुनराहूयमाना[10] गन्त दिवो न पृथिव्या । द्वितीयार्थे षष्ठ्येषा । गच्छथ द्युलोकात्र पृथिवीम् । एतदुक्त भवति—स्वस्मिन् स्थाने नूनमसन्निहिता एव स्थ । येनाहूयमाना अपि नागच्छथेति। क्व व[11] गाव अश्वा अत्र गाव उच्यन्ते । क्व वो युष्माक स्वभूता गन्तार अश्वा न रण्यन्ति न रमन्ते । एतदुक्त भवति—सर्वत्रैव वोऽश्वा रमन्ते । अत अस्मत्समीप कि[12] नागच्छथेति ॥ २ ॥

वेङ्कट० क्व सम्प्रति यूय स्थ। [13]क्व व[13] गमन भवति। गच्छत[14] द्युलोकात्। इहागताश्च न गच्छत पृथिव्या[15]। क्व युष्मान् पशून् इव रमयन्ति ॥ २ ॥

मुद्गल० हे मरुत ! नूनम् इदानीम् क्व यूय कुत्र स्थिता । कत् कदा व युष्माकम् अर्थम् अरणम् देवयजनदेशे गमनम् । विलम्ब मा कुरुतेत्यर्थं । दिवो गन्त द्युलोकात् गच्छत। पृथिव्या न[16] गन्त भूलोकात् मा गच्छत। व युष्मान् क्व रण्यन्ति देवयजनरूपाया पृथिव्या अन्यत्र कुत्र शब्दयन्ति यजमाना स्तुवन्ति। दृष्टान्त । गाव न यथा गाव रणन्ति शब्दयन्ति तद्वत् ॥ २ ॥

क्व॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सुवि॒ता । क्वो॒३॒॑ विश्वा॑नि॒ सौभ॑गा ॥ ३ ॥

क्व॑ । व॒ । सु॒म्ना । नव्यां॑सि । मरु॑त॒ । क्व॑ । सु॒वि॒ता । क्वो॒३॒॑ इति॑ । विश्वा॑नि । सौभ॑गा ॥ ३ ॥

स्कन्द० क्व अन्यत्र व युष्माकम् सुम्ना 'सुम्नम्'[17] (निघ ३,६) इति सुखनाम। परिचर्यासुखानि। नव्यांसि नवतराणि अस्माभिरनुत्पादितपूर्वाणि[18]। यदिच्छया यूयमन्यत्र गता । हे मरुत ! । क्व सुविता सुवितशब्द सुगतवचन । क्व वा सुगतानि स्थानानि । यत्र च पुन पुनर्गम्यते तत् सुगत भवति।

---

१ स्तोत्रप्रिया अ[1] वि[1] २ जीर्णबर्हि° अ[1] वि[1] ३-३ नास्ति वि मै[1] ४ नास्ति मूको ५-५ कत् नूनं मूको ६ °पूरण अ रवि ७ अर्थो रवि अरमाग्ग° रवि[1,2] ८ गन्ता रवि ९ येन निमु° अ १० पुनराह्वय° कु ११ वा अ रवि १२ नास्ति रवि[1,2] १३-१३ नुटित अ[1] वि[1] १४ गच्छथ वि[1] अ[1] १५ पृथिव्याम् अ वि[1] १६ नास्ति वि १७ द्युम्ना उपयन्तो सुम्नमिति अ १८ °रस्माभिरनुत्पादितपू° अ

अतोऽनेन गमनौचित्यं प्रतिपाद्यते । क्व अन्यत्र भवतामुचितं गमनमित्यर्थः । क्वो विश्वानि सौभगा । 'विश्वम्' ( निघ ३,१ ) इति बहुनाम । 'भगः' ( निघ २,१० ) इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । क्व वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि । क्वान्यत्र परिचर्यातिरेके 'सुखं वा गमनौचित्यं' वा हविरतिरेको वा येन अस्मत्समीपं नागच्छथेति समस्तार्थः ॥ ३ ॥

वेङ्कट० क्व वः सुम्नानि नवतराणि मरुतः! । क्व वा शोभनगमनानि[१] कल्याणानि । अत्र यास्कः— 'सुविते 'सु इते सूते सुगते[१] प्रजायामिति वा' ( या ४,१७ ) इति । क्व वा वः सर्वाण्येव सौभगानि ॥ ३ ॥

मुद्गल० हे मरुत.! वः युष्माकं सम्बन्धीनि नव्यांसि नवतराणि[४] सुम्ना प्रजापशुरूपाणि रत्नानि क्व कुत्र वर्तन्ते । विश्वानि सर्वाणि सुविता सुवितानि शोभनफलानि रत्नादीनि क्व वर्तन्ते । सौभगा सौभाग्यरूपाणि गजाश्वादीनि क्व कुत्र वर्तन्ते । भवदीयैः सुम्नादिभिः सर्वैः सहागन्तव्यमित्यर्थः ॥ ३ ॥

यद् यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ॥ ४ ॥

यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥ ४ ॥

स्कन्द० यत् शब्दो यदिशब्दस्यार्थे । यदि यूयम् हे पृश्निमातरः! पृश्निवर्णा गौः पृश्निः, सा माता येषां ते पृश्निमातरः । कुत एतत् । 'गोमातरो यच्छुभयन्ते अञ्जिभिः' ( ऋ १,८५,३ ) इति दर्शनात् । अथवा पृश्निर्गौरिति उभे अपि द्युनामनी । द्यौर्माता येषां ते पृश्निमातरः । मर्तासः मनुष्याः स्यातन भवेत । स्तोता च वः अस्मदादिः अमृतः देवः स्यात् । ततः सर्वकामान् युष्माकं संवर्धयेदिति वाक्यशेषः । कुत एतत् । साकाङ्क्षत्वात् । 'यदग्ने स्यामहं त्वम्' ( ऋ ८,४४,२३ ), [५]'यदिन्द्र यावतस्त्वम्[५]' ( ऋ ७,३२,१८ ) इत्यादिषु चैवंरूपेषु मन्त्रेषु[६] दृष्टत्वात् । अथवा यदिति वचनात् तत इत्येतत् तृतीय एव पादेऽध्याहर्तव्यम्[७] । यदि यूयं मर्तासो मनुष्याः स्यातन, ततो युष्मत्प्रसादेन[८] स्तोता वः अमृतः मरणवर्जितः स्यादिति । एतद् उक्तं भवति—यूयं चेन्मनुष्या अभविष्यत, अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत, फलेन स्तोतारं समयोजयिष्यत । देवास्तु भवन्तः । अतो वयं न जानीमः—किं यूयं[९] प्रसत्स्यथ, न[१०] । फलेन वा स्तोतारं[११] संयोजयिष्यथ, नेति[१२] ॥ ४ ॥

वेङ्कट० यद्यपि यूयम् पृश्निमातरः! मर्ताः भवथ[१३] [१४]तथापि युष्माकम् स्तोता भवति अमृत[१४] इति ॥४॥

मुद्गल० हे पृश्निमातरः! पृश्निनामकधेनुपुत्राः! यूयम् यत् यद्यपि मर्तासः मनुष्याः स्यातन भवेत, तथापि वः युष्माकम् स्तोता यजमानः अमृतः स्यात् देवो भवेत् ॥ ४ ॥

मा वो मृगो न यवसे जरिता भूदजोष्यः । पथा यमस्य गादुप ॥ ५ ॥

मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा । यमस्य । गात् । उप ॥५॥

---

१-१. सुखं सुखौचित्यं अ, सुखे सौचित्य कु. २. बहूनि शोभनधनानि क अ[१] वि[१]. ३-३. यते वि[१] अ[१]. ४. °तराणि मूको. ५-५. यदिन्द्राह यथा त्वम् (ऋ ८,१४,१) कु. ६. नास्ति रवि. ७. °ध्याहर्तव्यः अ कु. ८. युष्माकं प्रसा° कु ९. यूयं न अ कु. १०. नास्ति अ कु. ११. स्तोतारं न अ कु. १२. इति अ कु. १३. भवेत रवि. १४-१४. तथा युष्माकं भवति अमृतम् वि[१] अ[१].

स्कन्द० मा इति प्रतिषेधार्थो भूत् इत्येतेन सम्बन्धयितव्य । व इत्यपि षष्ठ्यन्त जरिता इत्येतेन सम्बन्धयितव्य[1] । मृग न यवसे यवसशब्द सस्यवचन । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थ । यथा [2]सस्यवति देशे सस्यविनाशको मृग सर्वस्याप्रिय[3], एव वो जरिता 'जरिता' (निघ ३,१६) इति स्तोतृनाम । युष्माकं स्तोता अस्मदादि मा भूत् अजोष्य अप्रिय । कस्य । सामर्थ्यात् सर्वस्य । सर्वस्यैव प्रियोऽस्त्वित्यर्थ । एवतावज्जीवत स्तोतुराशास्य[1] । मरणोत्तरकालमपि पथा यमस्य यम आदित्य तस्य य पन्था देवयानस्तेन गात् उप उपगच्छतु । देवयानेन पथा स्वर्गलोकमुपगच्छत्वित्यर्थ । अथवा व इत्येतदजोष्य इत्येतेन सम्बध्यते । पथा यमस्येत्यपि यमशब्दो यज्ञवचन । गादित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम् । मा कदाचिदपि स्तोता युष्माकमप्रियो भूत् । किं तर्हि । सर्वदैव यज्ञस्य यो नियत पन्था तेन उपगच्छत स्तोतारमित्यर्थ ॥ ५ ॥

वेङ्कट० मा भूत् युष्माकम् मृग इव यवसे स्तोता असह्य[4], मा [5]वा उप गमत्[5] यमस्य पथा । मोपगच्छतु[6] मृत वैवस्वतस्य पथेति ॥ ५ ॥

मुद्गल० हे मरुत ! व युष्माकम् जरिता स्तोता अजोष्य असेव्य मा भूत् । दृष्टान्त । मृग न यवसे यथा[7] तृणे भक्षणीये मृग कदाचिदप्यसेव्यो न भवति, किन्तु सर्वदा तृणं भक्षयति, तद्वत् । किञ्च स्तोता यमस्य पथा यमलोकसम्बन्धिमार्गेण मा उप गात् मा गच्छतु । तस्य मरण मा भूदित्यर्थ ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये पञ्चदशो वर्ग ॥

मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥ ६ ॥

मो इति । सु । न । पराऽपरा । निःऽऋति । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ॥ ६ ॥

स्कन्द० मो इति निपातसमाहारो[8] निपातान्तर वा मा इत्यस्यार्थे वर्तते । सु इति पदपूरण । न[9] अस्मान् परापरा अत्यन्तपरा । युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थ । निर्ऋति मृत्युदेवता । दुर्हणा दुःखं हन्तीति दुर्हणा । मा वधात् । किन्तर्हि । पदीष्ट पद गतौ । शुद्धोऽपि चात्र सोपसर्गार्थ द्रष्टव्य । अस्मत्तोऽपगच्छतु[10] । अथवा परापरेत्येतत् पदीष्ट इत्येतेन सम्बध्यते । परापरा गच्छतु । दूरं गच्छत्वित्यर्थ । न च केवला । किन्तर्हि । तृष्णया सह तृष्णा नाम निर्ऋतेर्दुहिता, अन्यायेन वार्थाभिलाष तृष्णा, तया सह ॥ ६ ॥

वेङ्कट० मा एव अस्मान् अधोऽध दुःखेन हन्तव्य दारिद्र्यम् वधीत्[11] । सा निर्ऋति मदीयया तृष्णया सह पततु[12] । धनसद्भावे हि तृष्णा विनश्यति ॥ ६ ॥

मुद्गल० हे मरुत ! न अस्मान् निर्ऋति रक्षोजातिदेवता मो षु वधीत् सर्वथा वधं मा कार्षीत् । कीदृशी । परापरा उत्कृष्टादप्युत्कृष्टा । अतिप्रबलेत्यर्थ । अत एव दुर्हणा केनापि निहन्तुम्

1 °तव्यः अ ह २ सस्यवतो देशात् सस्यस्य विनाशकत्वात् मृग सर्वस्य प्रिय अ कु ३ °शास्यत इति ४ नास्ति वि[1] अ[1] ५-५ वो गमत् वि ह, °गमत्[1] वि[1] अ[1]; वा गमत् वि[1], यास्त[1] ह ६ मो[1] कु ७ यथा मूको ८ °पात समाहारः अ ह इति ९ मा न मूको १० °मस्तोऽप[1] अ हु ११ अवधीत् वि[1] १२ भवतु वि[1] अ[1].

अशक्या। सा निर्ऋतिः तृष्णया सह पदीष्ट पततु। अस्मदीया तृष्णा, बाधिका निर्ऋतिश्च विनश्यत्विति इत्यर्थः ॥ ६ ॥

सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः। मिहं कृण्वन्त्यवाताम् ॥ ७ ॥

सत्यम्। त्वेषाः। अमऽवन्तः। धन्वन्। चित्। आ। रुद्रियासः। मिहम्। कृण्वन्ति। अवाताम् ॥ ७

स्कन्द० सत्यम् एतत्। त्वेषाः दीप्ताः मरुतः। अमवन्तः अमशब्दः आत्मपर्यायः। आत्मवन्तः। यत्नवन्त इत्यर्थः। अथवा अम[1] गत्यादिषु। गमनवन्तः। अथवा अम रोगे। शत्रूणां रोगवन्तः। [2]रोगभूताः। उच्छेदका इत्यर्थः[2]। धन्वन् चित् आ[3] 'धन्व' (निघ १,३) इत्यन्तरिक्षनाम। चिच्छब्दोऽप्यर्थे। आ इत्याकार उपसर्गः अप्यर्थे। अन्तरिक्षेऽप्यधि। निरालम्बनस्य अन्तरिक्षस्याप्युपरीत्यर्थः। रुद्रियासः अपत्येऽर्थे घप्रत्ययो[3] द्रष्टव्यः। रुद्रपुत्राः। 'मिहम् सेचनात्' मिट्[4] वृष्टिरुच्यते। तां कुर्वन्ति अवाताम् वातवर्जितां वातेनानपहार्याम्। निरालम्बनेऽप्यन्तरिक्षे स्थिता निवाते[5] वर्षन्तीत्यर्थः। अथवा धन्वेति मरुदेश उच्यते। तस्याप्युपरि वृष्टिं कुर्वन्ति। अत्यन्तनिरुदकानपि देशान् वृष्टोदकवतः कुर्वन्तीत्यर्थः ॥ ७ ॥

वेङ्कट० सत्यम् दीप्ताः बलवन्तः[6] निरुदके अपि देशे रुद्रपुत्राः वृष्टिं कुर्वन्ति निरन्तराम्[7] ॥ ७ ॥

मुद्गल० धन्वन् चित् मरुदेशेऽपि रुद्रियासः रुद्रेण पालितत्वात् तदीया मरुतः आ सर्वतः अवाताम् वायुरहिताम् मिहम् वृष्टिम्[8] कृण्वन्ति कुर्वन्ति, तदेतत् सत्यम्। कीदृशा रुद्रियासः। त्वेषाः दीप्ताः अमवन्तः बलवन्तः ॥ ७ ॥

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति। यदेषां वृष्टिरसर्जि ॥ ८ ॥

वाश्राऽइव। विऽद्युत्। मिमाति। वत्सम्। न। माता। सिसक्ति। यत्। एषाम्। वृष्टिः। असर्जि ॥

स्कन्द० विद्युत् यथा वाश्रा शब्दनशीला अभिनवप्रसूता गौस्तद्वत् मिमाति मिमातिः शब्दकर्मा। मेघान् स्फोटयति। गर्जितलक्षणं शब्दं करोति। वत्सम् न माता यथा च माता वत्सम्, तद्वत् सिषक्ति सेवते। उपगच्छतीत्यर्थः। कम्। सामर्थ्यात् मेघं वा मरुतो वा। कदा। उच्यते। यत् यदा एषाम् मरुतां 'स्वभूता वृष्टिः[9]' असर्जि सृज्यते क्षिप्यते। यदैते मरुतः वर्षन्तीत्यर्थः ॥ ८ ॥

वेङ्कट० अभिनवप्रसूता[10] धेनुरिव विद्युत् गर्जितशब्दं करोति[11], वत्सम् इव माता सचते लोकम्, यत् एभिर्मरुद्भिः[12] वृष्टिः[13] सृज्यते ॥ ८ ॥

मुद्गल० वाश्रेव[14] [15]शब्दयुक्ता प्रस्नुतस्तनवती[15] धेनुरिव विद्युत् मेघस्था दृश्यमाना सती मिमाति शब्दं

---

१. नास्ति अ कु. २-२. नास्ति अ कु. ३. घचूप्र° अ कु. ४. मिट: रवि. ५. निर्वाते अ कु. ६. नास्ति वि[1] अ[1]. ७. निरन्तराम् वि[1] अ[1] कु रवि. ८. नास्ति वि. ९९. °भूता वृष्टिम् (?) अ. १०. प्रसूता ल अ[1] वि[1]. ११. °ति मेघान् स्फोटयति वि[1] अ[1]. १२. °भिर्मरुद्भिः ताम्मरुद्भिः वि[1] छपं. १३. वृष्टिः अ[1]; वृष्टिः वि[1]; विष्टिः वि[1] अ[1]. १४. नास्ति वि मै[1]. १५-१५. वत्सशब्दमस्तुतस्तनवती वि मै[1].

करोति। विद्युद्वेलाया हि मेघगर्जनं प्रसिद्धम्। माता धेनु वत्सम् न वत्समिव लिपकि इव विद्युत् मरुत सेवते। यत् यस्मात्कारणात् एषाम् मरुता[1] सम्बन्धिनी वृष्टि अगर्जि गर्जनसहित विद्युत्काले वृष्टा[2] भवति, तस्माद्विद्युत मरुत्सेवनमुपपन्नम् ॥ ८ ॥

दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत् पृथिवीं व्युन्दन्ति ॥ ९ ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥ ९ ॥

स्कन्द० [3]दिवा चित् तम कृण्वन्ति[3] दिवा अपि तम कुर्वन्ति मरुत पर्जन्येन उदवाहेन उदकवाहिना[4]। उदकवता मेघेनावित्य छादयन्तो दिवाऽपि तम कुर्वन्तीत्यर्थ । कदा। उच्यते । यत् यदा पृथिवीं व्युन्दन्ति विविध क्लेदयन्ति। यदा वर्षन्तीत्यर्थ ॥ ९ ॥

वेङ्कट० अहनि[5] अपि[6] अन्धकारम् कुर्वन्ति पर्जन्येन उदकवाहेन[7] यदा[8] पृथिवीम् क्लेदयन्ति ॥ ९ ॥

मुद्गल० मरुत उदवाहेन उदकधारिणा पर्जन्यन मेघेन सूर्यमाच्छाद्य दिवा चित् अहन्यपि तम कृण्वन्ति अन्धकार कुर्वन्ति। यत् यदा पृथिवीम् भूमिम् व्युन्दन्ति विशेषेण[9] क्लदयन्ति तदानीमेते वृष्टिकाले तम कुर्वन्तीति पूर्वत्रान्वय ॥ ९ ॥

अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् । अरेजन्त प्र मानुषाः ॥ १० ॥

अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषा ॥ १० ॥

स्कन्द० अध-शब्द पदपूरण, अपिचेत्यस्य वार्थे। अपिच स्वनात् शब्दादपि मरुता विश्व सर्वम्। आकारस्तु पदपूरण । सद्म सदन स्थावरम्[10]। पार्थिव पृथिव्या भवम्। अरेजन्त प्र मानुषा[11] च प्रारेजन्त। 'भ्यसते रेजते इति भयवेपनयो' (या ३,२१)। प्रकर्षेण बिभ्यति भयेन कम्पन्ते। मनुष्यग्रहण चात्र जङ्गममात्रोपलक्षणार्थम्। शब्दादपि मरुता [12]सर्वं स्थावर जङ्गमं[12] च प्रकर्षेण [13]बिभेति भयेन कम्पत[13] इत्यर्थ ॥ १० ॥

वेङ्कट० अनन्तर मरुताम्[14] स्वनात् पार्थिवम् विश्वम् सद्म अरेजत अकम्पत। सीदन्ति[15] अस्मिन्निति सद्म गृहम्। प्रकर्षेण मानुषा[16] च अरेजन्त ॥ १० ॥

मुद्गल० मरुताम् सम्बन्धिन स्वनात् अध ध्वनेर्गर्जनरूपादनन्तरम् पार्थिवम् पृथिवीसम्बन्धि विश्वम् सद्म सर्वं गृहम् आ समन्तात् अरेजतेति शेष । तथा मानुषा गृहवर्तिनो मनुष्या अपि प्र अरेजन्त प्रकर्षेण कम्पितवन्त ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये षोडशो वर्ग ॥

---

१ मरुताना मूको २ नास्ति वि ३-३ नास्ति म कु ४ °वाहेन अ ५ अपि म° कु रवि °िना म° वि° ६ मध्याद वि° ७ उदवा° वि°११ म° कर्य ८ यथा वि° हर्य कु ९ नास्ति वि मे° १० स्थाने कु नास्ति रवि ११ मानुषा मनुषा रवि म १२-१२ सर्वंस्थावरजङ्गमम् रवि १३,१३ बिभ्यति कम्पन्ते कु १४ मरुता च म° रवि १५ आसीद° वि° म° १६ मनुषा वि° कर्य

मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ॥ ११

मरुत । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥११॥

स्कन्द० हे मरुत ! वीळुपाणिभि वीळुशब्दोऽत्र दृढवचन । पाणिशब्दोऽप्यत्राधानामप्रपादे खुरे[1] वा वर्तते। दृढप्रपादै दृढखुरैर्वा। चित्रा रोधस्वती अनु 'रोधस्वत्य' (निघ १,१३) इति नदीनाम। अनुशब्दोऽपि लक्षण कर्मप्रवचनीय प्रतिशब्देन समानार्थ । विचित्रा नदी प्रति। यात गच्छत। ईम् इति पदपूरण । अखिद्रयामभि अखिन्नगामिभिरश्वै । सर्वदाऽश्रान्तैरश्वैरित्यर्थ[2] । यज्ञे ष्वागच्छन्त क्रीडार्थ विचित्रा नदीरपि प्रति गच्छतेति समस्तार्थ ॥ ११ ॥

वेङ्कट० मरुत । दृढै पाणिभि[3] सह चित्रा[4] नदी लक्षीकृत्य ता पूरयितुम् यात अच्छिद्रैर्गमनै ॥११॥

मुद्गल० हे मरुत ! यूयम् वीळुपाणिभि दृढहस्तै सहिता चित्रा रोधस्वती अनु कूलयुक्ता नदी समुलक्ष्य अखिद्रयामभि अच्छिद्रगमनै यात ईम् गच्छतैव ॥ ११ ॥

स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ॥ १२ ॥

स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् । सुऽसंस्कृताः । अभीशवः ॥ १२ ॥

स्कन्द० स्थिरा अविचला व युष्माकं स्वभूता[5] सन्तु नेमय रथचक्रधारा, रथा च[6], [7]अश्वास च[7] एषा रथाना सम्बन्धिन सुसंस्कृता सुष्ठु च[8] संस्कृता अभीशव अश्वप्रग्रहा । भवताम् आगच्छता सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थ ॥ १२ ॥

वेङ्कट० आगच्छता भवता रथनेमय स्थिरा सन्तु[9]। अथ परोक्ष । रथा अश्वाश्च एषाम् स्थिरा सन्तु । सुसंस्कृता च अश्वप्रग्रहा भवन्तु ॥ १२ ॥

मुद्गल० हे मरुत ! एषाम् व युष्माकम् नेमय रथचक्रवलया स्थिरा सन्तु। रथा अश्वास अश्वाश्च स्थिरा सन्तु। अभीशव अङ्गुल्य सुसंस्कृता अश्वबन्धनरज्जुपरिग्रहणे[10] स्वलङ्कृता सावधाना सन्तु ॥ १२ ॥

अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं न दर्शतम् ॥ १३ ॥

अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् । अग्निम् । मित्रम् । न । दर्शतम् ॥ १३ ॥

स्कन्द० [11]अच्छ वद[11] अच्छशब्द आप्तुमित्यस्यार्थे। [12]वदेत्यात्मन एवायमन्तरात्मन प्रैष[12]। हे अन्तरात्मन्! आप्तु वद। कान्[13]। प्रकरणात् मरुत । केनाप्तुम्। तना धननामैतत् (द्र निघ २,१०)। हविर्लक्षणेन धनेन। गिरा जरायै 'गी' (निघ १,११) इति वाङ्नाम। [14]जरा स्तुति[14]। जरते स्तुतिकर्मण (द्र निघ ३ १४)। तृतीयायाश्च स्थाने चतुर्थी। वाचा स्तुतिलक्षणया। युष्मानह हविषा स्तुत्या च

१ खुरेषु मूको २ सर्वदानुश्रान्तै अ कु ३ °भिर्दृढामगादैस्सै अ[1] वि[1] ४ चित्र[2] वि[1] एप. ५ नास्ति कु ६ ६ नास्ति अ कु ७ ७ अश्वाश्च रवि अ अश्वाम कु ८ नास्ति रवि ९ भवन्तु अ[1] वि[1] १० °हणे ११ ११ नास्ति कु १२-१२ वदेत्यन्तरात्मन प्रैष अ कु । आगत रवि १३ नास्ति कु १४ १४ जरायै रवि

आस्तवानित्येतत्[1] मरुतो वदेरयर्थ । अथवा अच्छा वदेति अच्छ अभे स्थाने । अभिवद । स्तुहीत्यर्थ । तना हेतावियं तृतीया । धनेन हेतुना । धनलाभार्थमित्यर्थ । केन स्तवानि[2] । उच्यते । गिरा जरायै वाचा स्तुतिलक्षणया । कथमच्छा वदानि[3] । उच्यते । ब्रह्मणस्पतिम् अग्निम् मित्रम् न नशब्द उपमार्थीयस्त्रिभिरप्येतै सम्बन्धयितव्य । ब्रह्मणस्पतिमिव च अग्निमिव च मित्रमिव च । कीदृश मित्रम्[4] । दर्शतम् दर्शनीयम् । [5]अथवा दर्शतमिति मरुतागणाभिधानम्, न मित्रस्य । गणाभिप्राय चैकवचनम् । अच्छा वद दर्शनीय मरुतां गणमिति[5] ॥ १३ ॥

वेङ्कट० अभि वद[6] तया गिरा स्तोतुम् ब्रह्मणस्पतिम् अग्निम् मित्रम् इव च [7]दर्शनीयं मारुतं गणम्[7] ॥ १३ ॥

मुद्गल० हे ऋत्विक्समूह[1] तना तनया देवतास्वरूप प्रकाशयन्त्या गिरा वाचा ब्रह्मणस्पतिम् मन्त्रस्य पालक मरुद्गणम् अग्निम् दर्शतम् दर्शनीयम् मित्रम् न मित्रमपि जरायै स्तोतुम् अच्छ आभिमुख्येन वद ब्रूहि ॥ १३ ॥

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम् ॥ १४ ॥

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततन । गाय । गायत्रम् । उक्थ्यम् ॥ १४ ॥

स्कन्द० [8]ममीहि †मिमीहीत्यात्मन एवायमन्तरात्मन प्रैष † । निर्मिमीष्व कुरु हे अन्तरात्मन्[8] श्लोकम् वाङ्नामैतत् (द्र निघ १,११) । स्तुतिलक्षणं शब्दम् । आस्ये तृतीयार्थे सप्तम्येषा । आस्येनात्मीयेन वदनेन ‡निर्माय च‡ पर्जन्य इव ततन यथा पर्जन्य स्वशब्द विस्तारयति तद्वद् विस्तारय । विस्तारितेन च तेन गाय¶ गायतिरर्चतिकर्मा (द्र निघ ३,१४) । स्तुहि गायत्रम् स्तुत्यम् उक्थ्यम् प्रशस्यम् । एकवचननिर्देशात् प्रकरणात् उत्तरस्याश्चर्चि दर्शनात् मारुत गणम्[8] ॥ १४ ॥

वेङ्कट० [9]निर्मिमीहि पूर्वम् श्लोकम्[9] आस्ये । अथ तम् पर्जन्य इव वृष्टिं विस्तारय । [10]गाय गायत्रम् च साम उक्थार्हं स्तोत्र[10] ॥ १४ ॥

मुद्गल० हे ऋत्विक्समूह[1] आस्ये स्वकीयमुखे श्लोकम् स्तोत्रम् मिमीहि निर्मित कुरु । त च श्लोकम् ततन विस्तारय । दृष्टान्त । पर्जन्य इव यथा मेघो वृष्टिं विस्तारयति तद्वत् । उक्थ्यम् शस्त्रयोग्यम् गायनम् गायत्रीच्छन्दस्क सूक्तम् गाय पठ ॥ १४ ॥

वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ॥ १५ ॥

वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ॥ १५ ॥

स्कन्द० [11]वन्दस्व मारुतम् गणम् त्वेषम् दीप्तम् पनस्युम् । स्तुतिकामिनमित्यर्थ[11] । अथवा पनस्यतिरर्चतिकर्मा (द्र निघ ३,१४) । स्तुत्यमित्यर्थ । अर्किणम् स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तमन्नवन्त वा । किं कारणम् ।

---

१-१ भ्यास्तवानि° रवि. २ वा स्त' रवि, स्तुवान भ, स्तवान कु ३ वद कु ४ मित्रं न भ ५-५ नास्ति भ ६. 'वदस वि[1,2] ए रवि ७ ७ °नीयं स्तुतिकाम शरीरं च दर्शनीय मारुतं गणं वन्दस्व (?) वि[1] भ[1]. ८-८ नास्ति भ †-† °दीयमन्तरात्मन प्रैष रवि ‡-‡ नास्ति कु ¶ गाय त्स्यम् भ रवि. ९ ९ नास्ति सप वि[1], 'मिमीहि पूर्वपूव श्लो' वि[1]. १० १० गाय गायत्र च सामोक्थस्तोत्रं प्रयोग वि[1] भ[1]. ११ ११ त्रुटितम् भ कु

यस्मात् अस्मे अस्माकं स्वभूते वृद्धाः वीर्येण परिवृद्धाः मरुतः असन् नित्यं भवन्ति इह कर्मणि। यस्मादस्मदीये कर्मणि[1] नित्यं मरुतः सन्निहिता भवन्ति, तस्माद् वन्दस्व मारुतं गणमिति समस्तार्थः। अथवा वन्दस्व मारुतं गणमित्यर्धर्च[2] एव समाप्तं वाक्यम्। तृतीयस्तु पादः आशीः भिन्नमेव वाक्यम्। मरुतां प्रसादेनास्माकं परिवृद्धा असन् भवन्तु। काः। सामर्थ्यात् सम्पदः[3] ॥ १५ ॥

वेङ्कट० स्तुहि मारुतम् गणम् दीप्तं स्तुतिकामं शस्त्रवन्तम्। अस्मासु[4] भवन्तु प्रवृद्धाः[5] इह मरुतः ॥ १५ ॥

मुद्गल० हे ऋत्विक्संघ! मारुतम् मरुत्सम्बन्धिनम् गणम् समूहम् वन्दस्व नमस्कुरु। कीदृशं गणम्। त्वेषम् दीप्तम्। पनस्युम् स्तुतियोग्यम्। अर्किणम् अर्चनोपेतम्। अस्मे अस्माकम् इह अस्मिन् कर्मणि वृद्धाः असन् मरुतः प्रवृद्धा भवन्तु ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये सप्तदशो वर्गः ॥

[३९]

प्र यदि॒त्था प॑रा॒वतः॑ शो॒चिर्न मान॒मस्य॑थ ।
कस्य॒ क्रत्वा॑ मरुतः॒ कस्य॒ वर्प॑सा॒ कं या॑थ॒ कं ह॑ धूतयः ॥ १ ॥

प्र । यत् । इ॒त्था । प॒रा॒ऽवतः॑ । शो॒चिः । न । मान॑म् । अस्य॑थ । कस्य॑ । क्रत्वा॑ । म॒रु॒तः॒ । कस्य॑ । वर्प॑सा । कम् । या॒थ॒ । कम् । ह॒ । धू॒त॒यः॒ ॥ १ ॥

स्कन्द० [6]हे मरुत। यत् ये यूयम्[6] इत्था सत्यनामैतत् (द्र. निघ ३.१०)। सत्यमेव परावतः दूरात् शोचिः न शोचिर्दीप्तिरुच्यते। [7]यथा अग्निरादित्यो वा सर्वत्र स्वदीप्तिं प्रास्यति एवम्[7] मानम्[8] वृष्टिद्वारेण सर्वस्य निर्मातारं मेघम् प्र अस्यथ प्रकर्षेण सर्वत्र[9] क्षिपथ। अथवा मानो गर्व उच्यते। शोचिरित्यपि प्रथमान्तं क्षेप्तृवचनम्, न[10] क्षिप्यमाणवचनम्। यथा अग्निरादित्यस्य वा शोचिर्दीप्तिः दूरात्तमांसि प्रास्यति एवं यूयं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ। नाशं गमयथेत्यर्थः। यच्छन्दश्रुतेस्तच्छन्दोऽध्याहर्तव्यः। ते कस्य क्रत्वा हेताविषं तृतीया। कस्य यजमानस्य कर्मणा हेतुना। कस्य वा वर्पसा रूपेण। कम् वा यजमानं प्रति याथ गच्छथ। कम् सुखनामैतत् (द्र. निघ ३.६)। क्रियाविशेषणं चैतत् द्रष्टव्यम्। सुखम्। अक्लेशेनेत्यर्थः। निपातो वा कंशब्दः पदपूरणः। हे धूतयः! कम्पयितारः। शत्रूणाम्। यत्कर्म कुर्वन्तं यद्रूपं वा यं वा यजमानं प्रति यूयमक्लेशेन गच्छथ,[11] तं मह्यं कथयत, सुखमहमपि तत्कर्मा तद्रूपः स एव च भवामीति। आगमनविलम्बनादुपालम्भोऽयम् ॥ १ ॥

वेङ्कट० प्रास्यथ इत्थं मरुतः! दूरात् यत् तेजः इवात्मीयम् शब्दम्, तत् [12]कस्य कर्मणा मरुतः! केन वा वेष्टिताः[12]। कम् च देशं यूयम् याथ, कम् वा तत्र पुरुषं हे कम्पयितारः! ॥ १ ॥

---

१. °मंणि अस्माकमेति रवि भ. २. °त्यस्यार्थं° भ ३. °म्पद् भ. ४ अस्माकं मुख° छर्ध वि[1]. ५. °द्म् भ[1]; वृद्धा भ[1] वि[1]. ६-६. ये यूयम् भ कु. यद् ये मरुत. यूयम् रवि. ७-७. त्रुटितम् भ. ८. मानम्. भ. ९. नास्ति भ कु. १०. नास्ति मूको. ११. गच्छत भ. १२-१२. कस्य यजमानस्य कर्मणा मरुतः वेष्टिता कस्य रूपेण कं यजमानं वि[1] भ[2].

मुद्गल० "प्र यदित्था" इति दशर्चं चतुर्थं सूक्तम्। घोरपुत्र कण्व ऋषि। युज सतोबृहत्य। अयुजो बृहत्य। मरुतो देवता[1]।

हे धूतय। स्थावरादीना कम्पनकारिण मरुत यत् यदा मानम् मननीय युष्मद्बलम् परावत दूरात् इत्था अस्मादन्तरिक्षात् प्र अस्यथ भूमौ प्रक्षिपथ। दृष्टान्त। शोचि न तेज इव। यथा सूर्यस्य तेजोऽन्तरिक्षात् भूमौ प्रक्षिप्यते तद्वत्। तदानीं यूयम्[2] कस्य यजमानस्य क्रत्वा क्रतुना सह सगच्छध्वे[3] इति शेष। तथा कस्य यजमानस्य वर्पसा स्तोत्रेण सङ्गच्छध्वे। कम् यजमानमुद्दिश्य याथ[4] देवयजनदेशे गच्छथ[5]। कम् ह कम् खलु यजमानम् अनुगृह्णीथेति[6] शेष ॥१॥

स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे।
युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २ ॥

स्थिरा। वः। सन्तु। आयुधा। पराऽनुदे। वीळु। उत। प्रतिऽस्कभे। युष्माकम्। अस्तु।
तविषी। पनीयसी। मा। मर्त्यस्य। मायिनः ॥ २ ॥

स्कन्द० स्थिरा[7] स्थिराण्यविचलानि[8] नित्यसन्निहितानि च सन्तु आयुधा[9] आयुधानि। किमर्थम्। पराणुदे नुद प्रेरणे। अस्मच्छत्रूणा प्रेरणाय स्वस्थानादपकालनाय। "वीळु चास्तु[10]"। वीळु दृढमभेद्यमेक चित्तमत्रोच्यते। एकचित्त चास्त्वित्यर्थ। किं तत्। सामर्थ्यात् सेनालक्षण बलम्। न च पराणुद एव केवलाय। किं तर्हि उत प्रतिष्कभे। स्कभि स्तभि प्रतिबन्धे। प्रतिबन्धाय अपि शत्रूणाम्। एतदुक्त भवति—सर्वस्यैव द्विविधा शत्रव। उच्छेद्या उच्छेदका वा। तत्र येऽस्माकमुच्छेद्या दानव तेषा स्थानादपकालनाय, ये तूच्छेदकास्तेषा[11] प्रतिबन्धाय युष्माकमायुधानि नित्य सन्निहितानि सन्तु। सेनालक्षण बल[9] चाभेद्यमस्त्विति। अथवा वीळु इति दीर्घत्व दर्शनादायुधाना च प्रकृतत्वात् तत्समानाधिकरणप्रथमाबहुवचनान्तो[12] वीळुशब्द[13] इति व्याख्या तव्यम्। स्थिराणि चायुधानि वीळूनि चेति। अस्मच्छत्रूणामपकालनाय प्रतिबन्धाय च नित्य सन्निहितानि[14] दृढानि च[15] युष्माकमायुधानि भवन्त्वित्यर्थ। अथवा वीळु[16] इत्यूकारस्य प्रगृह्यत्वदर्शनाद् वीळुशब्दो द्विवचनान्त। स्थिराणि च[17] आयुधानि सन्त्वस्मच्छत्रूणा[18] पराणोदाय[19]। किञ्च वीळू उत वीळू "च स्ताम्[20]"। कौ। द्विवचननिर्देशात् युद्धोपकरणाख्य इषुधी वा रथाक्षौ वा। किमर्थम्। प्रतिष्कभे प्रतिबन्धायापनयनाय, धारणाय वेत्यर्थ[21]। कस्य। सामर्थ्यात् रिपूणां वा युष्माक वा रथस्थानाम्। पदकाराभिप्रायश्च एव सति पर्येष्य। किञ्च युष्माकम् अस्तु तविषा पनीयसी मा अस्त्वित्येतत् मर्त्येनेन[22] सबन्धयितव्यम्[23]। तत्सबन्धाच्च तुदर्थे लोट् द्रष्टव्य। 'तविषी' (निघ २,९) इति बलनाम। पनीयसीति पनत स्तुत्यर्थस्य तृजन्तस्यातिशयप्रत्यये रूपम्। स्वरत्यर्थेन चात्र[24] तृष धर्मेणि द्रष्टव्य। युष्माक स्वभूते बलमतिशयेन स्तोतृव्य मा भवतु मा भूत्। कस्य। मर्त्यस्य मायिन मायावत। युष्मद्बलमशक्यैवातिशयेन स्तुत्यता[25] प्रतिपद्यता मा शत्रोरित्यर्थं ॥ २ ॥

---

१ १ नास्ति वि मं[1] २ नास्ति वि ३ "ध्वमिति" मूको ४ यथा मूको ५ गच्छ° मूको ६ 'गृह्णीतेति मूको ७ नास्ति मूको ८. "ण्यवचिलानि वि[12] ९. नास्ति कु १० १० नास्ति वि, वीळु° क कु ११ तूच्छेद° वि १२ °मा° वि १३ वीळु° वि १४ नित्य स° क कु १५. नास्ति क १६ वीळुशब्द कु. १७ च वि १८. मच्छत्र° वि १९ पराणु° वि १०-२० ग्रं कु; भाम्याम् वि २१ इत्यर्थ क कु २२ °मित्येनेन वि २३ °न्ध कु वि २४. त्र वि २५ स्तुत्यां क स्तुत्या कु

वेङ्कट० स्थिराणि युष्माकम् सन्तु आयुधानि शत्रूणां[1] प्रेरणाय। अपि च दृढं च प्रतिष्कभितुं युष्माकम् अस्तु बलम्[2] अतिशयेन स्तोतव्यम्। मा मायावतः मर्त्यस्य अयजमानस्य[3] ॥ २ ॥

मुद्गल० हे मरुतः! वः आयुधा युष्माकम् आयुधानि पराणुदे पराणां शत्रूणामपनोदनाय स्थिरा सन्तु स्थिराणि भवन्तु। उत अपि च प्रतिष्कभे शत्रूणां प्रतिबन्धाय[4] वीळु सन्तु दृढानि सन्तु। युष्माकम् तविषी बलम् पनीयसी अतिशयेन स्तोतव्यम् अस्तु भवतु। अस्मासु मायिनः छद्मचारिणः मर्त्यस्य मनुष्यस्य शत्रोः मा बलम् भवतु[5] ॥ २ ॥

परा॑ ह॒ यत् स्थि॒रं ह॒थ नरो॑ व॒र्तय॑था गु॒रु ।
वि या॑थन व॒निनः॑ पृथि॒व्या व्याशाः॒ पर्व॑तानाम् ॥ ३ ॥

परा॑ । ह॒ । यत् । स्थि॒रम् । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु । वि । या॒थ॒न॒ । व॒निनः॑ । पृ॒थि॒व्याः । वि । आशाः॑ । पर्व॑तानाम् ॥ ३ ॥

स्कन्द० परा इत्युपसर्गः हथ इत्याख्यातेन सम्बन्धयितव्यः। ह-शब्दः पदपूरणः। यत् स्थिरम् अविचलं स्वस्मात्प्रदेशात्[1] चालयितुमशक्यम् [2]यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तद् यूयं परा हथ स्वप्रदेशस्थितं मुष्टिभिश्चूर्णयथ। हे नरः! मनुष्याकारा मरुतः!। यच्च स्वस्मात्[†] प्रदेशाच्चाल-यितुमशक्यं[3] तत् वर्तयथ गमयथ[4]। प्रलोपयथेत्यर्थः। गुरु गुर्वपि[5]। दुष्प्रलोपमपीत्यर्थः। किञ्च वि याथन विगच्छथ। लङ्घयथेत्यर्थः। किम्। वनिनः वृक्षान्। कुतः। पृथिव्याः पृथिवीतः। भूमितः उद्गम्य [6]वृक्षानपि लङ्घयथेत्यर्थः[10]। न च पृथिवीत एव केवलात्[11]। किं तर्हि। व्याशाः 'आशाः' ( निघ १,६ ) इति दिङ्नाम। दिशोऽपि विगच्छथ[12] पर्वतानाम् सम्बन्धिनीः। कः[13] पुनः पर्वतानां दिग्भिः सम्बन्धः। दिक्षु पर्वता व्यवतिष्ठन्ते। अथवा पर्वतानामिति द्वितीयार्थे षष्ठी। दिशः पर्वतांश्च विगच्छथ इति। ऊर्ध्वं तिर्यक् च लङ्घनसमर्था: स्थेत्यर्थः। अथवा वियाथनेति[14] चालिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः। विगमयथ वनिनः पृथिव्याः। भूमितः [15]वृक्षान् उत्खनथेत्यर्थः[15]। व्याशाः पर्वतानाम् आशाशब्द इष्टावचनः। पर्वत इत्यपि मेघनाम (द्र. निघ १,१० )। अस्माभिर्देवितव्यमित्येवंरूपा आशा [16]मेघानां विगमयथ[16]। नाशयथेत्यर्थः ॥३॥

वेङ्कट० परा हथ यदा[17] स्थिरम् पर्वतादिकम्, यदा[17] वा नरः! [18]गुरुभारमपि शिलादिकं तृणमिव[18] वर्तयथ, यदा[17] पृथिव्याः [19]वृक्षाणां मध्येन[19] गच्छथ, तयोपरि च पर्वतानाम् दिशः मध्येन गच्छथ विशिष्यन्ते ॥ ३ ॥

मुद्गल० हे नरः! नेतारः! मरुतः! यत् यदा स्थिरम् वस्तु परा हथ वृक्षादिकं पराङ्गतं भग्नं कुरुथ। गुरु गुरुत्वोपेतम् पाषाणादिकं वर्तयथ प्रेरयथ[20]। तदानीं पृथिव्याः सम्बन्धिनः वनिनः वनस्पती[21]

1. अस्मात्प्रदेशात् वि[1] अ[1]. 2. बलम् अपि भू 3. अय॰ वि[1]. 4. बन्धनाय वि मे[2]. 5. मा भ॰ वि मे[1]. 6. दण्डा॰ म. 7-7. नास्ति अ भू. † अस्मात् इति[3]. 8. नास्ति क इति. 9. उर्वि इति. 10-10. वृक्षान् विन्दु॰ अ इति[2]. 11 केवलाद् मूको. 12. गच्छत भू. 13. कि अ भू. 14. यथेनेति भू, केमेति अ. 15-15. वैतच्चन्दि गत॰ भू. 16. यदा वि[2]. 17. यदा वि[1] अ[1]; नास्ति भू 18 18. [illegible] वि[2] अ[2]. 19 [illegible] वि[1] 20-20. [illegible] अ[11] इति वि[11] भू: [illegible] अ. 21. नास्ति वि

वृक्षान् वि याथन वियुज्य मध्ये गच्छथ ह। अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वात् इतरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति खलु। तथा पर्वतानाम् आशा पर्वतपार्श्वदिश वि याथन वियुज्यमाना[1] गच्छथ ॥ ३ ॥

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ॥ ४ ॥

नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः । युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ ४ ॥

स्कन्द० नहि व शत्रु शातयिता विविदे विद्यते। अधि द्यवि दिव उपरि। द्युलोक इत्यर्थ। न अपि भूम्याम् हे रिशादस[1] रिशिर्हिंसार्थ। असु क्षेपणे। रिशतोऽस्यन्तीति रिशादस। हिंसितॄणा प्रतिहिंसितार इत्यर्थ। तेषा सम्बोधन हे रिशादस[1]। किञ्च युष्माकम् अस्तु तविषी तना युजा। 'तना' (निघ २,१०) इति धननाम। [2]युष्मदीय बल हविर्लक्षणेन धनेन युक्तम् अस्तु[3] अस्मदीय हविरुपभुक्तामित्यर्थ। हे रुद्रास! पितृरुद्रोऽय सोऽयमित्यभिसम्बन्धात् पुत्रेषु प्रयुक्त। रुद्रपुत्रा इत्यर्थ। पुत्र पुत्रत्। 'रुद्रस्य ये मीळ्हुष सन्ति पुत्रा' (ऋ ६,६६,३) इत्यादिषु मरुतां रुद्रपुत्रत्व दर्शनात्। किमर्थम्। नू चित् आधृषे। 'नु' (निघ २,१५) इति क्षिप्रनाम। चिच्छब्द पदपूरण। क्षिप्रमस्मच्छत्रूणाम् धर्षणाय[1] अभिभवाय[4]। अथवा नू चिदाधृष इत्येवत् पूर्वानपेक्ष भिन्नमेव[5] वाक्यम्। नूचिच्छब्दश्चात्र नशब्दस्यार्थे। 'नू चित् स भ्रेषते जनो न रेषत्' (ऋ ७,२०,६) इति यथा। नाधृषे नाभिभवाय[6]। क। सामर्थ्याद् यूयम्। प्रकृतत्वाद्वा तविष्या[7] युष्मदीया तविषी। यूयं युष्मदीय वा[8] बल न[9] कुतश्चिदभिमर्द प्राप्नुथेत्यर्थ[10] ॥ ४ ॥

वेङ्कट० नहि व शत्रु ज्ञायते[11] स्वर्गे, न च भूम्याम् रिशतामसितार[1]। युष्माकम् अस्तु बल हविर्लक्षणेन धनेन सहायेन रुद्रपुत्रा[1] क्षिप्र शत्रूणामाधर्षणाय[12] ॥ ४ ॥

मुद्गल० हे रिशादस! शत्रुहिंसका[1] मरुत[1] अधि द्यवि द्युलोकस्योपरि व युष्माकम् शत्रु नहि विविदे न च बभूव। तथा भूम्याम् अपि शत्रु न बभूव। हे रुद्रास! रुद्रपुत्रा[1] मरुत[1] युष्माकम् एकोनपञ्चाशत्सङ्ख्याना मरुताम् युजा योगेन परस्परैकमत्येन आधृषे वैरिणा सर्वतो धर्षणाय तविषी बलम् नू चित् क्षिप्रमेव तना सुविस्तृता अस्तु भवतु ॥ ४ ॥

प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ ५ ॥

प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् । प्रो इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ ५ ॥

---

१ वियुज्यमाना मूको. २-२. युष्मदीयहविर्लक्षणेन धनेन युक्त (युक्ता क कु) मूको ३. अस्मदीय... ४ ...इति ५ ...इति ६ ...इति ७ तविष्य कु ८ नास्ति क ९ न ... १०. ...मूको ११ ...इति १२. शत्रूणामाधर्षणाय वि[?]

स्कन्द० प्र वेपयन्ति कम्पयन्ति पर्वतान् मरुतः। वि विञ्चन्ति विचिर्[१] पृथग्भावे। पृथक् कुर्वन्ति। उत्खनन्तीत्यर्थः। कान्। वनस्पतीन्। प्रत्यक्षकृतः[२] परोऽर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात्। 'प्रो आरत' अर्तिर्गत्यर्थः। प्रागच्छत हे मरुतः!। कथम्। दुर्मदा इव यथा दुर्मत्ताः सन्तः प्रकर्षेण हुंकारयन्तः आगच्छन्ति तद्वत्। 'देवासः! हे देवाः!। मा च केवला एव। किं तर्हि। सर्वया विशा 'विश.'[३] (निघ- २,३) इति मनुष्यनाम। सर्वया स्वपरिचारकमनुष्यजात्या सह। सर्वैः परिचारकैः सहेत्यर्थः ॥५॥

वेङ्कट० प्र[४] कम्पयन्ति[५] शिलोच्चयान्, पृथक् कुर्वन्ति वनस्पतीन्। इत्थं मधुमत्ता इव प्रगच्छथ[६] देवाः! मरुतः! सर्वैः अनुचरैः सह[७] ॥ ५ ॥

मुद्गल० पर्वतान् मेरुहिमवदादीन् प्र वेपयन्ति मरुतः प्रकर्षेण कम्पयन्ति। वनस्पतीन् वटाश्वत्थादीन् वि विञ्चन्ति परस्परवियुक्तान् कुर्वन्ति। हे मरुतः। देवासः। देवाः! सर्वया विशा प्रजया सहिता यूयम् प्रो आरत प्रकर्षेणैव[१०] सर्वतो गच्छथ। दृष्टान्तः। दुर्मदाः इव [११]यथा मदोन्मत्ताः[११] स्वेच्छया सर्वतः क्रीडन्ति[१२] तद्वत् ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये अष्टादशो वर्गः ॥

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६ ॥

उपो इति। रथेषु। पृषतीः। अयुग्ध्वम्। प्रष्टिः। वहति। रोहितः। आ। वः। यामाय। पृथिवी। चित्। अश्रोत्। अबीभयन्त। मानुषाः ॥ ६ ॥

स्कन्द० [१३]उपो रथेषु[१३] उपो इत्येष निरित्येतस्य स्थाने[१४]। आख्यातेन सम्बन्धयितव्यः। स्वरथेषु पृषतीः पृषद्वर्णा वडवा उपो अयुग्ध्वम् इति। अस्मद्यज्ञागमनार्थं [१५]रथस्यैकस्य पृषतीः निरयुग्ध्वम्[१५]। न च केवलाः। किं तर्हि। प्रष्टिः वहति रोहितः चतुर्वर्गस्य[१६] रथस्यैकस्यामेव[१७] धुरि यः पार्श्वे द्वितीयो नियुज्यते स प्रष्टिरित्युच्यते। एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। यः प्रष्टिर्वहति रोहितः लोहितवर्णः तं च। किं पुनः कारणम्, यतेनोच्यामहे। उच्यते। यस्मात् आ वः यामाय व इति षष्ठी। यामायेति यामशब्दो रथवचनः। 'विभुर्वो यामः' (ऋ १,१४,१) इति यथा। षष्ठ्यर्थे चतुर्थी। तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः। युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दम्। पृथिवी चित् शब्दः पदपूरणः। समस्ता पृथिवी। आ अश्रोत् मर्यादया शृणोति। अतस्ते वयमपि शृणुमः[१८] इत्यर्थः। अबीभयन्त बिभ्यति[१९] युष्मत्तः यागमकुर्वन्तः अस्मद्विधाः मानुषाः। अथवा[२०] आ वो यामायेति य इति 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा १,४,४०) इत्येतेन संप्रदानत्वात् संप्रदाने चतुर्थी। यान्त्यस्मिन् देवा इति यामो यज्ञः। द्वितीयार्थेऽत्र चतुर्थी। युष्मभ्यं यज्ञं समस्ता पृथिवी आ अश्रोत् आशृणोति प्रतिजानीते। यस्मात्[२१] युष्मान् यक्ष्यामीत्येतत् कश्चिदभ्युपगच्छतीत्यर्थः। अतश्चाप्यत्र व्यापृता

---

१. विचिरम् अ कु. २. °कृतो अ. ३-३. नास्ति अ. ४. हे देवासः अ कु. ५. विट् रवि. ६. नास्ति वि[१] लपं. ७. मेवापन्ति अ[१] वि[१]. ८. प्राग° वि[१] लपं. ९. नास्ति अ[१] वि[१]. १०. °णैव मै[१]. ११-११. यथोन्मत्ताः वि. १२. क्रीडयन्ति मूको. १३-१३. नास्ति रवि. १४. रथानेन रवि. १५-१५. नियुग्ध्वं अ कु; निरयुग्ध्वम् रवि. १६. चतुर्वर्गस्य अ कु. १७. 'रथैकस्य दक्ष' रवि अ. १८. शृणुमः मूको. १९. बिभ्यते अ कु २०. नास्ति मूको. २१. नास्ति अ कु.

मरुत कदाचिदस्मयज्ञ नागच्छेयुरपीत्येवमाशङ्किता युष्मदनागमनाद्[1] अबीभयन्त बिभ्यति[2] अस्मद्विधा मानुषा । यस्मादन्यव्यापृताना युष्माक स्वयज्ञेऽनागमनात बिभेमि तस्मात्तत ब्रवीमि—न्ययुग्ध्व पृषतीर्वेडवा प्रष्टिं च रोहितमिति समन्वार्थ[3] ॥ ६ ॥

वेङ्कट० यूयम् रथेषु पृषद्वर्णा अश्वा उपायुग्ध्वम्[7] । प्रष्टि भूत्वा वहति रोहितवर्ण अश्व च चोपायुङ्ग्ध्वम्[8] । आशृणोति भवताम् गमनाय पृथिवी । किं मरुत आगच्छन्तीति मयन बिभ्यति[9] च मानुषा ॥ ६ ॥

मुद्गल० हे मरुत ! रथेषु भवदीयेषु पृषता बिन्दुयुक्ता मृगी उपो[1] सामीप्येनैव अयुग्ध्व योजितवन्त । प्रष्टि एतत्सञ्ज्ञको वाहनत्रयमध्यवर्ती युग्यविशेष रोहित मृगावान्तरजाति लोहितवर्ण[4] वहति रथ नयति । व युष्माकम् यामाय गमनाय पृथिवी चित् अन्तरिक्षमपि आ अश्रोत् आभिमुख्येन अशृणोत् । अनुगानातीत्यर्थ । मानुषा भूलोकवर्तिन पुरुषा अबीभयन्त स्वय भीता सन्त अन्येषामपि भीतिमुत्पादितवन्त ॥ ६ ॥

आ वो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे ।
गन्ता॑ नू॒नं नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥ ७ ॥

आ । व॒ । म॒क्षु । तना॑य । कम् । रुद्राः॑ । अवः॑ । वृ॒णी॒म॒हे॒ । गन्त॑ । नू॒नम् । न॒ । अव॑सा । यथा॑ । पु॒रा । इ॒त्था । कण्वा॑य । बि॒भ्युषे॑ ॥ ७ ॥

स्कन्द० व युष्माकम् स्वभूतम् मक्षु क्षिप्रम्[9] इत्यर्थ । तनाय तनोत्यसाविति तन[10] पुत्रादिसन्तान, तदर्थम् । अथवा 'तना' (निघ २,१०) इति धननाम । धनार्थम् । कम् सुख हे रुद्रा ! रुद्रपुत्रा ! मरुत ! अव पालनम् आ वृणीमहे प्रार्थयामहे । युष्माभि पाल्यमाना पुत्रादिसन्तान धन वा प्राप्स्याम इत्येवमर्थं युष्मदीय पालन क्षिप्र प्रार्थयामहे इत्यर्थ । अत एतत ज्ञात्वा गत गच्छत[11] । नूनम् इति पदपूरण । न 'गत्यर्थकर्मणि द्वितीया०' (पा २ ३,१२) इत्येवमेषा कर्मणि चतुर्थी । एकवचनस्य स्थाने बहुवचनम् । मह्यम् । अवसा 'इत्थभूतलक्षणे' (पा २,३,२१) इत्यवमेषा तृतीया । पालनेन सम्बद्धा । यथा पुरा[12] पूर्वेषु कालेषु [13]इत्था इत्यम्[13] अमुतोऽन्तरिक्षात् कण्वाय बिभ्युषे [14]आशङ्कितयुष्मदागमनभीताय[14], [15]यथैव पुरा तद्वदिदानीमपि पालनदाता मा ‡कण्वमाशङ्कित युष्मदागमनभीत‡[15] इत्यमुतोऽन्तरिक्षादागच्छतेत्यर्थ ॥ ७ ॥

वेङ्कट० आ वृणीमहे युष्माकम् रुद्रपुत्रा ! रक्षणम् [16]पुत्राय । तथा सति गच्छत[16] सम्प्रति अस्मान्[17] रक्षणेन । यथा पुरा अन्येषामाह्वाने,[18] गतम्[19] बिभ्युषे कण्वाय गच्छतेति ॥ ७ ॥

---

१ युष्मदाग° अ कु २ बिभ्य°न कु ३ मनसा स्यु भ तथा कु, समनसार्था स्यु अ ४ उपायुग्ध्व वि° त्य; °युग्ध्वम् कु रवि ५ °युङ्ग्ध्वम् कु रवि[1,2], °युग्ध्वम् रवि ६ °भ्यति कु, °भ्यती वि° अ° ७ नास्ति वि ८ °न (पम् मूको ९ क्षिप्रं प्रार्थयामहे इत्यर्थ मूको १० तन पालन अ ११ गच्छत रवि १२ नास्ति अ कु १३-१३ इत्थम् अ कु, एथा रवि १४ °ह्नि युष्म° °दागमनभीतम् अ कु १५ १५ त्रुटितम् अ † पालनदाता रवि ‡-‡ °ह्नि युष्मदागमनभीतम् अ कु १६ १६ धनार्थं वा सन्तानाय वा पुत्रार्थं वा तथा गच्छत वि° अ° १७ अस्मान् वि°[1] इ, न अस्मान् वि° अ° १८ °ह्वाने कु, ह्वाने कुरेन वि° अ° १९ नास्ति वि°,

मुद्गल० हे रुद्रा ! रुद्रपुत्रा ! मरुत ! तनाय क्षम् अस्मदीयपुत्रार्थम् गन्तु शीघ्रम् व युष्मदीयम् अव रक्षणम् आ वृणीमहे सर्वत प्रार्थयामहे। पुरा पूर्वस्मिन् काले कर्मान्तरेषु न अवसा अस्मदीयरक्षणेन निमित्तेन यूय यथा प्रातवन्त, इत्था अनेन प्रकारेण विभ्युषे भीतियुक्ताय कण्वाय मेधाविने यजमानाय तदनुग्रहार्थम् नूनम् क्षिप्रम् गन्त प्राप्नुत ॥ ७ ॥

युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।
नि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ॥ ८ ॥

युष्माऽइषित । मरुत । मर्त्यऽइषित । आ । य । न । अभ्व । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभि । ऊतिऽभि ॥ ८ ॥

स्कन्द० हे मरुत ! 'युष्मेषित मर्त्येषित'[1] युष्मत्प्रेषितो मर्त्यप्रेषितो वा आ[2] य न अभ्व महत्ना-मैतत् (तु निघ ३,३)। महान् आ ईषते 'ईषति पणति' इति गतिकर्मसु पाठात् गत्यर्थोऽयम् (तु निघ २ १४)। आगच्छति । क । सामर्थ्यात् हिंसिता । 'वि तम् युयोत'[3] यौति पृथग्भावार्थं पृथक् कुरुत । तमस्मत्तोऽपनयतेत्यर्थ । केन । शवसा सेनालक्षणेन । वि तम् ओजसा[4] युयोत । वि युष्माकाभि ऊतिभि यौष्माकीणै[5] पालनैश्च वियुयोत । किञ्चित् सेनालक्षणेन बलेन, किञ्चित् स्वशरीरबलेन, किञ्चित् पालनमात्रेणैवेत्यर्थ ॥ ८ ॥

वेङ्कट० युष्माभि प्रेषित मरुत ! मर्त्यैर्वा प्रेषित य महान् अस्मान् 'आ हिनस्ति, तम् यूय शवसा अस्मत्त पृथक् कुरुत, ओजसा च। तथा यौष्माकीणै[6] परिरक्षणैश्च अस्मान्[6] अवतेति ॥ ८ ॥

मुद्गल० हे मरुत ! य य कश्चित् अभ्व शत्रु युष्मेषित युष्माभि प्रेषित मर्त्येषित मारकै रन्यैर्वा प्रेषित सन न अस्मान् प्रति आ ईषते आभिमुख्येन प्राप्नोति, तम् शत्रुम् शवसा बलेन वि युयोत विभक्त कुरुत। तथा ओजसा बलेन वि युयोत, युष्माकाभि ऊतिभि युष्म त्सम्बन्धिभि रक्षणैश्च वि युयोत ॥ ८ ॥

असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ॥ ९ ॥

असामि । हि । प्रऽयज्यव । कण्वम् । दद । प्रऽचेतस । असामिऽभि । मरुत । आ । न । ऊतिऽभि । गन्त । वृष्टिम् । न । विऽद्युत ॥ ९ ॥

स्कन्द० सामि अर्धम्। न सामि असामि समग्रम् । किं तत् । सामर्थ्यात् धनम् । प्रयज्यव ! प्रकर्षेण यष्टव्या मरुत[1]। कण्वम् चतुर्थ्यर्थे द्वितीयैषा । मह्य कण्वाय । दद दत्त । हे प्रचेतस![1] प्रवृद्धज्ञाना ! । किञ्च असामिभि समग्राभि हे मरुत ! न अस्मान् ऊतिभि पालनै सम्पदा आ गन्त आगच्छत । समग्रपालनहेतो अस्मान् प्रत्यागच्छतेत्यर्थ । कथम् । वृष्टिम् न विद्युत यथा वृष्टि मरुतो[7] व्याप्नुवत्यो[8] विद्युत आगच्छन्ति, तद्वत् ॥ ९ ॥

---

१ १ नास्ति भ कु २ नास्ति दवि ३ ३ न वियुयोत दवि ४ नास्ति भ कु ५ 'काने भ ६-६ नास्ति भ' वि' ६ 'कीणै कु ७ मरुता दवि ८ व्याप्नुवती भ कु

वेङ्कट० प्रकर्षेण यष्टव्या ! प्रकृष्टज्ञाना.[1] कण्वम् हि[2] महाम्[3] असाधारणै[4] "मनुष्येभ्यः, पाथि हि[5] इव। असाधारणैश्च पालनै[6] अस्मान् आ गच्छत, वृष्टिम् इव विद्युत शीघ्रम्[7] ॥ ९ ॥

मुद्गल० असामि हि सम्पूर्णमेव यथा भवति तथा प्रयज्यवः ! प्रकर्षेण यष्टव्याः ! प्रचेतसः ! प्रकृष्टज्ञानयुक्ताः ! हे मरुतः ! कण्वम् मेधाविनं यजमानम् ददः धारयत। हि यस्मात् यूयं कण्वमृषिं धारितवन्तः तस्मात् कारणात् असामिभिः ऊतिभिः सम्पूर्णैः रक्षणैः नः अस्मान् प्रति आ गन्त आगच्छत। दृष्टान्तः ! वृष्टिम् न विद्युतः यथा विद्युतो वृष्टिं गच्छन्ति तद्वत् ॥ ९ ॥

असा॒म्योजो॑ बिभृथा सुदान॒वोऽसा॑मि धूतयः॒ शवः॑ ।
ऋ॒षि॒द्विषे॑ मरुतः परिम॒न्यव॒ इषुं॒ न सृ॑जत॒ द्विष॑म् ॥ १० ॥

असा॑मि । ओजः॑ । बि॒भृ॒थ॒ । सु॒ऽदा॒न॒वः॒ । असा॑मि । धू॒त॒यः॒ । शवः॑ । ऋ॒षि॒ऽद्विषे॑ ।
म॒रु॒तः॒ । प॒रि॒ऽम॒न्यवे॑ । इषु॑म् । न । सृ॒ज॒त॒ । द्विष॑म् ॥ १० ॥

स्कन्द० असामि ओजः शारीरं बलम् बिभृथ[4] धारयथ हे सुदानवः ! दानुशब्दो दातृवचनो दानवचनो वा। शोभनदातारः ! शोभनदाना.[1] वा। न च केवलं शारीरमेव बलम्। किं तर्हि। असामि हे धूतयः ! कम्पयितारः ! शत्रूणाम् शवः सेनालक्षणमपि बलम्। द्विविधेनापि बलेन उपेताः स्थेत्यर्थः। यत एवम् अतो ब्रवीमि — ऋषिद्विषे मत्प्रभृतीनामृषीणां द्वेष्ट्रे हे मरुतः ! परिमन्यवे 'मन्युः' (निघ २,१३) इति क्रोधनाम। परिगतो मन्युर्येन स परिमन्युः, तस्मै परिमन्यवे क्रुद्धायेत्यर्थः। अथवा मन्युर्मन्यतेर्दीप्तिकर्मणः दीप्तिरप्रोच्यते। परिगतदीप्तये। स्वदीप्त्या ऐश्वर्यादिरूपया दीप्तायाऽपीत्यर्थः.[*]। इषुम् न यथा कश्चित् कस्मैचिदिषुं क्रुद्धः सृजेत् तद्वत् सृजत विसृजत क्षिपत। द्विषम् सर्वलोकद्वेष्टारम्। तमृषीणां द्वेष्टारं नित्यक्रुद्धम् ऐश्वर्यादि दीप्त्या वा दीप्तमपि सर्वलोकद्वेष्यं कुरुतेत्यर्थः ॥ १० ॥

वेङ्कट० असाधारणं बलम् बिभृथ[*] शोभनदानाः ! असाधारणं वेगं च कम्पयितारः !। 'कण्वं मां' यो द्वेष्टि तस्मै परितो मन्यमानाय शरम् इव द्वेषं विसृजतेति ॥ १० ॥

मुद्गल० हे सुदानवः ! शोभनदानोपेताः ! मरुतः ! असामि सम्पूर्णम् ओजः बलम् बिभृथ धारयथ। हे धूतयः ! कम्पनकारिणो मरुतः ! असामि सम्पूर्णम् शवः बलम्[*] परिमन्यवे कोपपरिवृताय ऋषिद्विषे ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थम् द्विषम् द्वेषकारिणं हन्तारम् सृजत। दृष्टान्तः। इषुम् न यथा शत्रोरुपरि बाणं मुञ्चन्ति तद्वत् ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये एकोनविंशो वर्गः ॥

---

१ नास्ति वि[१]. २ मम् मूको ३ "त्वमनु" वि[१]. ४ ४. नास्ति रूपं † वि कु. ५ नास्ति अ कु ६ "दिप्तयां" इति, दीप्तायां" अ कु ७ बिभर कु ८-८ तस्मात्ता अ[१] वि[१]. ९ नास्ति वि

## [ ४० ]

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥१॥

उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे । उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥ १ ॥

स्कन्द० 'सूक्तम् उद् ब्राह्मणस्पत्यम्'[1] (बृ. बृदे ३,१०७)। सूक्तम् उत्तिष्ठ इत्येतत् ब्रह्मणस्पतिदेवताकम्। यास्त्वन्यान्या मरुदाद्या देवताः श्रूयन्ते, ब्रह्मणस्पतिना सह यौगिकत्वमात्रविज्ञानेन नैवण्डुक्यस्ता बोद्धव्याः। अस्मद्यज्ञमागन्तुम् उत्तिष्ठ हे ब्रह्मणस्पते!। देवयन्तः देवानिच्छन्तो वयं त्वाम् ईमहे स्वयज्ञागमनं याचामहे। स्वयज्ञागमनमभ्यर्थयामह इत्यर्थः। त्वया च[1] सह उप प्र यन्तु मरुतः अपि सुदानवः शोभनदातारः शोभनदाना वा। त्वमपि हे इन्द्र! प्राशुः प्रकर्षेण क्षिप्रः भव सचा सह ब्रह्मणस्पतिना ॥ १ ॥

वेङ्कट० उत्तिष्ठ ब्रह्मणस्पते!। देवानिच्छन्तः त्वां याचामहे। त्वत्सहायाः मरुतः च उपगच्छन्तु सुदानाः। इन्द्र! त्वं च [2]क्षिप्रकारी भव सहायः[2] ॥ १ ॥

मुद्गल० [3]'उत्तिष्ठ' इत्यष्टर्चं पञ्चमं सूक्तम्। घोरपुत्रः कण्व ऋषिः। बृहती छन्दः। युजः सतोबृहत्यः। अयुजो बृहत्यः। ब्रह्मणस्पतिर्देवता[3]।

हे ब्रह्मणस्पते! देव! उत्तिष्ठ अस्मदनुग्रहाय त्वदीयनिवासात् उत्थानं कुरु। देवयन्तः देवान् कामयमाना वयम् त्वा त्वाम् ईमहे याचामहे। सुदानवः[4] शोभनदानयुक्ताः मरुतः उप प्र यन्तु समीपे प्रकर्षेण गच्छन्तु। हे इन्द्र! त्वम् सचा ब्रह्मणस्पतिना सह प्राशूः सोमस्य प्राशकः भव ॥ १ ॥

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥ २ ॥

त्वाम् । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते । सुऽवीर्यम् । मरुतः । आ । सुऽअश्व्यम् । दधीत । यः । वः । आऽचके ॥ २ ॥

स्कन्द० त्वाम् अपि इन्द्र! मर्त्यः उपब्रूते आत्मानमेव कण्वः परोक्षरूपेण प्रतिनिर्दिशति — अयं कण्वनामा मनुष्य उपगम्य ब्रूते। अस्मदीयं यज्ञम् ब्रह्मणस्पतिना सह आगच्छेरित्येवदभ्यर्थयत इत्यर्थः। धने हविराख्ये हिते निहिते। वेद्यां हविर्निधायेत्यर्थः। अथवा धने हिते इति निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। धने हिते निमित्तभूते। हितं धनं लब्धु-मित्यर्थः[5]। एतत् ज्ञात्वा यज्ञमागत्य सुवीर्यम् मरुतः आ स्वश्व्यम् मरुत इति साहचर्या-

---

1. नास्ति अ. २-२. 'कारी मेन सह भव अ' वि. ३-३. नास्ति वि मै'. ४. हे सुदा' मूको. ५. लब्धमि' अ.

दनुक्रान्ता ब्रह्मणस्पति मरुत इन्द्र सहसस्पुत्र इत्येते चत्वारोऽपि प्रतिनिर्दिश्यन्ते। आकार समुच्चये। स्वश्व्यमित्यस्मात्[1] परो द्रष्टव्य। हे मरुत्प्रभृतय[2]! [3]सुवीर्यं स्वश्व्य च[3] शोभनेन वीर्येणाश्वेनोपेतम् दधीत दधाति दानार्थे। लोट्, मध्यमपुरुषबहुवचन[4] चैतद् द्रष्टव्यम्। दत्त। कस्मै। य व आचके कामयते। योऽस्मदादिर्युष्मान् प्रार्थयत इत्यर्थ। अथवा दधीतेति दधाति धारणे एव। लिङश्चैतदेकवचनम्। सुवीर्यं स्वश्व्य च धन दधीत धारयेद्[5] यो व आचके इति। न याचकस्य धारण सम्भवतीत्यर्थात्[6] दानमेवानेन प्रार्थ्यते इति[7] ॥ २ ॥

वेङ्कट० त्वाम् एव सहस सूनो[1] मर्त्य उपस्तौति निहिते धने तद्रक्षार्थम्। मरुत! य युष्मान् आकामयते[8] मर्त्य, स सुवीर्यम् स्वश्व्यम् च धारयेत् ॥ २ ॥

मुद्गल० हे सहसस्पुत्र! बलस्य बहुपादक ब्रह्मणस्पते[1] मर्त्य मनुष्य हते शत्रुषु प्रक्षिप्त धने निमित्तभूते सति त्वाम् इत् त्वामेव उपब्रूते हि समीप प्राप्य स्तौति खलु। तद्धन सम्पादनाय प्रार्थयते इत्यर्थ। हे मरुत! य धनार्थी मर्त्य मनुष्य व युष्मान् ब्रह्मणस्पति सहितान आचके स्तौति स मर्त्य स्वश्व्यम्[10] शोभनाश्वयुक्तम् सुवीर्यम् शोभनवीर्ययुक्त च धनम् दधीत धारयेत् ॥ २ ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥

प्र । एतु । ब्रह्मण । पति । प्र । देवी । एतु । सूनृता । अच्छ । वीरम् । नर्यम् ।
पङ्क्तिऽराधसम । देवा । यज्ञम् । नयन्तु । न । ॥ ३ ॥

स्कन्द० प्र एतु प्रकर्षेणागच्छतु ब्रह्मणस्पति। तेन च सह प्र देवी एतु सूनृता वाक्। किमर्थम्? अच्छ आप्तुम् वीरम् वीरशिकर्तृकत्वात्[11] वीरपुत्रफलत्वाद्वा वीरोऽत्र यज्ञ उच्यते। वीरकर्तृक वीरपुत्र फलार्थं वा अस्मदीयम्। नर्यम् नृभ्यो हितम्। पङ्क्तिराधसम् राध साध ससिद्धौ। पङ्क्तिभि राध्यते[12] ससाध्यत इति पङ्क्तिराधा सोमयाग। स हि चतसृभि पङ्क्तिभि ससाध्यत हविष्पङ्क्त्या अक्षरपङ्क्त्या[13] नाराशसपङ्क्त्या सवनपङ्क्त्या च। 'धाना करम्भ परिवाप पुरोडाश पयस्या' इत्येषा हविष्पङ्क्ति, 'सुमत्पद्वदे' इत्येषाऽक्षरपङ्क्ति, 'द्विनाराशस प्रातस्सवन द्विनाराशस माध्यन्दिन सवन सकृन्नाराशस तृतीयसवनम्' इत्येषा नाराशसपङ्क्ति, 'पशूपवसथ त्रीणि सवनानि पशुरनूबन्ध्य[14]' इत्येषा सवनपङ्क्ति। एताश्च 'या वै यज्ञे हविष्पङ्क्ति' इत्युपक्रम्य ऐतरेयब्राह्मणे ( २,२४ ) दर्शिता। एताभि साध्यमानत्वात् सोमयाग पङ्क्तिराधा, त पङ्क्तिराधस ब्रह्मणस्पतिप्रसादात् देवा[15] अन्येऽपि सर्वा आत्मसमीपम् यज्ञम् नयन्तु न अस्माक स्वभूतम्। अन्येऽपि [16]धनमाप्नुवन्तु इत्यर्थ[16] ॥ ३ ॥

१ °ममित्व° भ. २ °णव स म. ३-३ नास्ति भ. ४ 'पुरुषे बहुव' भ कु. ५ °येत भ कु. ६ °र्थेत्यथ भ कु. ७ नास्ति कु. ८ य व त्वा आ°°° वि°° ९ वाग° कु. १० स्वश्व्य भ° वि°. ११ व°रिकर्तृत्वात् भ कु. १२ नास्ति मूको. १३ पङ्क्त्याऽक्ष° भ. १४ °नुबन्ध्य इति. १५ नास्ति वि. १६-१६ °धनमित्यर्थे भ कु.

वेङ्कट० प्रगच्छतु[1] ब्रह्मणस्पतिः। [2]प्र एतु[2] देवी वाक्। अभिनयन्तु[3] [4]अस्माकम् बलयुक्तं नृभ्यो हितम् हविष्पङ्क्त्यादिभिर्ब्राह्मणविहिताभिः पङ्क्तिभिः समृद्धम् यज्ञम् देवाः[4] ॥ ३ ॥

मुद्गल० ब्रह्मणस्पतिः देवः प्र एतु अस्मान् प्राप्नोतु। सूनृता देवी प्रियसत्यरूपा वाग्देवता प्र एतु अस्मान् प्राप्नोतु। देवाः ब्रह्मणस्पत्यादयो देवताः वीरम् शत्रुं निःशेषेण दूरे प्रेरयन्तु। तम् नर्यम् मनुष्येभ्यो हितम् पङ्क्तिराधसम् ब्राह्मणोक्तहविष्पङ्क्त्यादिभिः[5] समृद्धम् यज्ञम् प्रति नः अस्मान् अच्छ आभिमुख्येन नयन्तु ॥ ३ ॥

यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥ ४ ॥

यः। वाघते। ददाति। सूनरम्। वसु। सः। धत्ते। अक्षिति। श्रवः। तस्मै। इळाम्। सुऽवीराम्। आ। यजामहे। सुऽप्रतूर्तिम्। अनेहसम् ॥ ४ ॥

स्कन्द० 'यः वाघते' 'वाघतः' (निघ ३,१८) इत्यृत्विङ्नाम। सामर्थ्याच्चेहान्तर्णीतमत्वर्थो यजमाने वर्तते। यो देव वाघते[6] ऋत्विग्वते यजमानाय ददाति सूनरम् शोभनैर्नरैरुपेतम् वसु, सः धत्ते धारयति अक्षिति अक्षीणम् श्रवः कीर्तिम्। कीर्तिमान् भवतीत्यर्थः। वयमपि तस्मै एव इळाम् हविर्लक्षण-मन्नम् सुवीराम् शोभनाः वीराः कर्तारो यस्यास्तां सुवीराम्। शोभनैः ऋत्विग्भिरुपकल्पिता-मित्यर्थः। आ यजामहे दद्मः[7] सुप्रतूर्तिम् तूर्वतिः[10] हिंसार्थः। सुष्ठु प्रतूर्यन्ते[11] शत्रवो यया तां सुप्रतूर्तिम्। देवा हि हविरुपभोगाद्वीर्यमाप्नुवन्ति। तेन च वीर्येण शत्रून् घ्नन्ति। अत एवमुच्यते—सुप्रतूर्तिमिति। [12]अनेहसम् अपापाम्[12]। एतत् ज्ञात्वा ब्रह्मणस्पते! कीर्त्यपं हविरयं च धनमस्मभ्यं[13] देहीत्यर्थः ॥ ४ ॥

वेङ्कट० यः ऋत्विजे ददाति शोभननरोपेतं शोभनयानं[14] वा[15] धनम्, सः[8] धारयति अक्षीणमन्नम्। वयं च तस्मै मानवीम् इळाम् सुपुत्राम् आ यजामहे शोभनप्रतरणाम् उपद्रवरहिताम् ॥ ४ ॥

मुद्गल० यः यजमानः वाघते ऋत्विजे सूनरम् सुष्ठु नेतव्यम् वसु धनम् ददाति सः यजमानः ब्रह्मणस्पतेः प्रसादात् अक्षिति क्षयरहितम् श्रवः अन्नम् धत्ते धारयति। तस्मै तादृशाय यजमानाय इळाम् एतन्नामधेयां मनोः पुत्रीम् आ यजामहे वयम् ऋत्विजः सर्वतो यजामः। कीदृशीम् इळाम्। सुवीराम् शोभनैः वीरैः भटैर्युक्ताम् सुप्रतूर्तिम् सुष्ठु प्रकर्षेण हिंसाकारिणीम् अनेहसम् केनाप्यहिंस्याम् ॥ ४ ॥

---

१. गच्छतु वि[1] अ[1]. २-२. प्रगच्छतु वि[1] अ[2]. ३. अभिगमयन्तु वि[1]; अभिदन्तु रवि[1] ४-४. °स्म् वीरकर्मेऽ बलयुक्तं नृभ्यो हितं हविष्पङ्क्त्यादिभिः ब्राह्मणे दक्षिणाभिः पङ्क्तिभिः समृद्धं यज्ञे देवाः अभिनयन्तु आत्मसमीपं नयन्तु पङ्क्तिराधसम् पङ्क्तिभिः पङ्क्तिभिः राध्यते संस्क्रियते इति पङ्क्तिराधाः तं हविष्पङ्क्त्या ब्रह्मपङ्क्त्या नाराशंस-पङ्क्त्या स्तनराङ्क्त्या वि[1] अ[1]. ५. °हविष्पङ्क्त्यादिभिः मै[1]. ६-६. नास्ति रवि. ७. यजमानेन भ कु. ८. नास्ति रवि. ९. नास्ति भ कु. १०. तुर्वतिः मूको. ११ प्रतुर्वन्ते भ कु. १२-१२. °हसः अपापाः भ कु. १३. °अस्माकं रवि. १४. °नयनम् भ[1] कु रवि; °ने नयनम् भ[1] वि[1]". १५. नास्ति रवि.

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् । यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥ ५ ॥

स्कन्द० 'प्र नूनम् ब्रह्मणस्पतिः'[1] नूनमिति पदपूरणः । ब्रह्मणस्पतिः [2]स्तुतिलक्षणं मन्त्रम्[2] प्र[3] वदति वदतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । प्रवादयति । सर्वैस्तोतृभिरुच्चारयतीत्यर्थः । उक्थ्यम् प्रशस्यम् । कीदृशो[4] मन्त्रः । उच्यते । यस्मिन् मन्त्रे इन्द्रः वरुणः मित्रः अर्यमा अन्ये च मरुत्प्रभृतय. देवाः[5] नैघण्टुकवृत्त्या[6] ओकांसि स्थानानि चक्रिरे । यत्र[7] इन्द्रादयोऽपि नैघण्टुकवृत्त्या स्थिता इत्यर्थः ॥ ५ ॥

वेङ्कट० 'प्र वदति इदानीम्'[8] ब्रह्मणस्पतिः मन्त्रम् प्रशस्यम् । यस्मिन् मन्त्रे इन्द्रादयः स्थानानि चक्रिरे श्रवणार्थं यं मन्त्रमुपासत इति ॥ ५ ॥

मुद्गल० ब्रह्मणस्पतिः देवः उक्थ्यम् शस्त्रयोग्यम् मन्त्रम् नूनम् अवश्यम् प्र वदति होतृमुखे स्थितः सन् प्रब्रूते । यस्मिन् मन्त्रे इन्द्रादयश्च सर्वे देवाः ओकांसि स्थानानि चक्रिरे, तादृशं सर्वदेवप्रतिपादकं मन्त्रमिति पूर्वत्रान्वयः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये दशमो वर्गः ॥

तमिद् वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद् वामा वो अश्नवत् ॥ ६ ॥

तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

स्कन्द० यमीदृशं ब्रह्मणस्पतिरन्यैः स्तोतृभिः प्रवादयति वयमपि 'तम् इत् वोचेम' इच्छब्द एवार्थे । तमेव वोचेम उच्चारयेम' इत्याशास्महे । विदथेषु यज्ञेष्वास्मीयेषु शंभुवम् सुखस्य भावयितारं [9]"स्तुतिलक्षणम् मन्त्रम्"[9] हे ब्रह्मणस्पतिसहचारिणो मरुत्प्रभृतयो देवाः! अनेहसम् अपापम् । इमाम् च स्तुतिलक्षणाम् वाचम् प्रतिहर्यथ हर्यतिः कान्तिकर्मा ( द्र. निघ २,६ ) । ब्रह्मणस्पतिना सह कामयध्वम् । हे नरः! मनुष्याकाराः! । किञ्च विश्वा इत् वामा वः इच्छब्दः पदपूरणः । सर्वाणि वननीयानि धनानि वः युष्माकं स्वभूतेन प्रसादेन वा[10] अश्नवत् व्यत्ययेनायमुत्तमस्य स्थाने प्रथमपुरुषः । अश्नुयाम[11] प्राप्नुयाम[12] ॥ ६ ॥

---

१-१. नास्ति रवि. २-२. °क्षणमन्त्र अ. ३. नास्ति भ रवि. ४. मः की° अ ५. देवता मूको. ६. °वृत्त्या वृत्त्या अ कु. ७. यं कु. ८-८. प्रवद इदानी वि° अ°. ९. °स्थाम कु. १०-१०. °स्तुत्य° अ कु. ११. नास्ति रवि°°. १२. °याम् रवि.

वेङ्कट० तम् एव वोचेम वयम्[1] यज्ञेषु सुखस्य भावयितारम् मन्त्रम् देवा ! अपापम्। [2]ताम् च[2] इमाम् वाचम् देवाः नर ! यूय कामयध्वम्। अय च स्तोता युष्माक स्वभूतानि सर्वाणि धनानि अश्नोतु[3] ॥ ६ ॥

मुद्गल० हे देवा ! ब्रह्मणस्पतिप्रभृतय ! तम् इत् तमेव इन्द्रादिसर्वदेवताप्रतिपादकम् मन्त्रम् विदथेषु यज्ञेषु वोचेम वयम् ऋत्विजो ब्रवाम। कीदृशम्। शम्भुवम् सुखस्य भावयितारम् अनेहसम् अहिंसनीय दोषरहितम्। हे नर ! नेतारो देवा ! इमाम् अस्माभिरुच्यमाना मन्त्ररूपाम् वाचम् प्रतिहर्यथ च यूय कामयध्वे चेत् तर्हि विश्वा इत् सर्वापि वामा वननीया वाक् व युष्मान अश्नवत् व्याप्नुयात् ॥ ६ ॥

को दे॑व॒यन्त॑मश्नव॒ज्जनं॒ को वृ॒क्तब॑र्हिषम् ।
प्रप्र॑ दा॒श्वान् प॒स्त्या॑भिरस्थितान्त॒र्वाव॒त् क्षयं॑ दधे ॥ ७ ॥

क । दे॒व॒ऽयन्त॑म् । अ॒श्न॒व॒त् । जन॑म् । क । वृ॒क्तऽब॑र्हिषम् । प्रऽप्र॑ । दा॒श्वान् । प॒स्त्या॑भि ।
अ॒स्थि॒त॒ । अ॒न्त॒ऽवाव॑त् । क्षय॑म् । द॒धे॒ ॥ ७ ॥

स्कन्द० [4]क देवयन्तम्[4] क इति सामर्थ्याच्छत्रोर्निर्देश । क शत्रु देवयन्त ब्रह्मणस्पतिप्रभृतीन् देवान् यष्टुमिच्छन्तम् अश्नवत् व्याप्नोति[5] जनम् मनुष्यम्। न कश्चिदपि व्याप्तु शक्नोतीत्यर्थ । क वृक्तबर्हिषम् आस्तीर्णबर्हिष्कम्[6] । प्रवृत्तयागमेवेत्यर्थ[7] । प्रप्र दाश्वान् पस्त्याभि[8] अस्थित प्रैति[9] 'प्रसमुपोद पादपूरणे' ( पा ८,१,६ ) इत्येव द्विर्वचनम्। अस्थितेत्येतेन चाख्यातेन सम्बध्यते अयमुपसर्ग । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यो दाश्वान् यजमान पस्त्याभि 'पस्त्यम्' (निघ ३,४) इति गृहनाम। अत्र [10]तु तात्स्थ्यात् देवा, तत्प्रतिपादनात्[10] आहुतय, पस्त्या उच्यन्ते। [11]'इत्थंभूतलक्षणे' (पा २,३,२१) चैषा[11] तृतीया। [12]आहुतिभि सम्बद्ध । गृहीताहुतिक[12] इत्यर्थ । प्रास्थित प्रतिष्ठते। होमार्थमाहवनीय प्रति गच्छतीत्यर्थ[13] । स अन्तर्वावत् वातेर्गत्यर्थस्य[14] यङ्लुगन्तस्य[14] शतृप्रत्यये रूपमेतत्। अन्तरित्यर्थं गत लीनम् अप्रकाशम् क्षयम् दधे[8] धारयति। सर्वलोकप्रकाश महान्त परिक्षय न प्राप्नोतीत्यर्थ ॥ ७ ॥

वेङ्कट० क यजमानम् अश्नोतु[12] जनम्[15]। क वा छिन्नबर्हिषम्। प्र अस्थित यजमान त्रिष्टुभि[17] ऋत्विग्भि तेषां मध्ये ब्रह्मणस्पतिरागच्छन् निवास करोतीति[18] पूर्वार्द्धर्चस्योत्तरम्[19] ॥ ७ ॥

मुद्गल० देवयन्तम् देवान् कामयमानम् जनम् क अश्नवत् ब्रह्मणस्पतिव्यतिरिक्त को नाम देव व्याप्नुयात्[20] । तथा वृक्तबर्हिषम् अनुष्ठानाय छिन्नबर्हिषम् जनम् यजमानम् क नाम अन्यो देव अश्नवत्। दाश्वान् हविर्दत्तवान् यजमान पस्त्याभि मनुष्यैर्ऋत्विग्भि सह प्रप्र अस्थित देवयजनदेश प्रति प्रस्थितवान् । अन्तर्वावन् अन्त स्थितबहुधनोपेतम् क्षयम् निवासस्थान गृहम् दधे धृतवान् भवति ॥ ७ ॥

---

१ नास्ति म[1] वि[1,1] ह इपं   २-२ नास्ति म[1] वि[1]   ३ अश्नातु लप   ४-४ नास्ति रवि
५ प्राप्नो° कु   ६ °र्हिष म   ७ नास्ति रवि   ८ नास्ति म   ९ प्रैति म कु   १०-१० नास्ति म कु   ११-११ °र्त्थायैषा म कु   १२-१२ °तीभि सम्बद्धा गृहीताहुतय म कु   १३ गच्छन्ती° कु
१४ वातो° ग° म   १५ अश्नोति कु म[1] वि[1,1] रवि   १६. जन वि[1] कु रवि[1]   १७ भवि वि[1] विद्भि रवि
१८ नास्ति वि[1] हप   १९ °धरा° वि[1,1] म[1,1] ह   २० व्याप्नु° वि मे[1].

उप॑ क्ष॒त्रं पृ॑ञ्ची॒त हन्ति॒ राज॑भिर्भ॒ये चि॑त् सुक्षि॒तिं द॑धे ।
नास्य॑ व॒र्ता न त॑रु॒ता म॑हाध॒ने नार्भे॑ अस्ति व॒ज्रिण॑ः ॥ ८ ॥

उप॑ । क्ष॒त्रम् । पृ॒ञ्ची॒त । हन्ति॑ । राज॑ऽभिः । भ॒ये । चि॒त् । सु॒ऽक्षि॒तिम् । द॒धे॒ । न । अ॒स्य॒ । व॒र्ता । न । त॒रु॒ता । म॒हा॒ऽध॒ने । न । अर्भे॑ । अ॒स्ति॒ । व॒ज्रिण॑ः ॥ ८ ॥

स्कन्द० 'उप क्षत्रम्[1] 'क्षत्रम्' ( निघ २,१० ) इति धननाम । धनम् उप पृञ्चीत आत्मना संपर्कं नयति[1], धनं च लभत इत्यर्थः । हन्ति च शत्रून् राजभिः दीप्तैः ब्रह्मणस्पतिप्रभृतिभिः । तृतीयानिर्देशादनुगृहीता[2] इति शेषः । अथवा हन्तीति[3] हनिरत्रान्तर्णीतण्यर्थः[4] । घातयति शत्रून् दीप्तैर्ब्रह्मणस्पतिप्रभृतिभिः । भये चित् [5]भये अपि[5] सुक्षितिम्[7] शोभनमप्रच्युतिरूपं[8] निवासम् दधे धारयति । भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थः । किञ्च न अस्य वर्ता वर्तयिता न अपि तरुता हिंसयिता[9] महाधने संग्रामनामैतत् ( द्र. निघ २,१७ )। महति संग्रामे । न अपि अर्भे[10] अल्पे अस्ति भवति कश्चित्[4] वज्रिणः आयुधवतः सतः । नैनं कश्चित् स्वस्मात् स्थानादपकालयति । नाप्यल्पे महति वा[4] संग्रामे गृहीतायुधं हिनस्तीत्यर्थः ॥ ८ ॥

वेङ्कट० ब्रह्मणस्पतिर्धनं स्तोतॄणाम् उप [11]पृञ्चति । अयमपि वरुणादिभिः सहागत्य हन्ति । तथा[11] भये सति शोभननिवासं[12] गृहं[13] प्रयच्छति । ब्रह्मणस्पतेः अस्य [14]आयुधवतः महति अल्पे वा सङ्ग्रामे न अस्ति अभिगन्ता,[14] न च तारकः ॥ ८ ॥

मुद्गल० ब्रह्मणस्पतिः देवः क्षत्रम् बलम् उप पृञ्चीत स्वात्मनि संपृक्तं कुर्यात् । ततः राजभिः वरुणादिभिः सह हन्ति शत्रून् मारयति । भये चित् भीतिहेतौ युद्धेऽपि सुक्षितिम् दधे सुष्ठु निवासस्थैर्यं[15] धारयति, न तु पलायते । वज्रिणः वज्रायुधवतः अस्य ब्रह्मणस्पतेः महाधने प्रभूतधननिमित्ते युद्धे वर्ता प्रवर्तयिता अन्यः कोऽपि न अस्ति । स्वयमेव प्रवर्तते इत्यर्थः । 'तरुता तरणस्योल्लङ्घनस्य[16] कर्ता अन्यः कोऽपि न अस्ति । तथैव अर्भे स्वल्पे युद्धेऽप्यस्य प्रवर्तयिता न अस्ति ॥ ८ ॥

इति प्रथमाष्टके तृतीयाध्याये एकविंशो वर्गः ॥

[ ४१ ]

यं रक्ष॑न्ति॒ प्रचे॑तसो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा । नू चि॒त् स द॑भ्यते॒ जन॑ः ॥ १ ॥

यम् । रक्ष॑न्ति । प्रऽचे॑तसः । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । नु । चि॒त् । सः । द॒भ्य॒ते॒ । जन॑ः ॥ १ ॥

स्कन्द० [17]'†यं रक्षन्ति† नवर्चः । वरुणार्यममित्राणाम्' ( बृदे ३,१०७-१०८ ) 'यम् रक्षन्ति' इत्येते[17] नवर्चा वरुणार्यममित्राणां वेदितव्याः वरुणादिदेवताः‡ इत्यर्थः । 'मध्य आदित्यदेवता' । एतेषां द्वौ

---

१-१. नास्ति रवि. २. नयन अ कु. ३. °गृहीता. अ कु. ४. नास्ति रवि. ५. हन्तिरत्र° कु. ६-६. भयेऽपि(तौ) रवि. ७. °क्षिति' दधे अ रवि. ८. °नं प्रच्युति° कु. ९. °यिता न अपि अ रवि. १०. नास्ति कु. ११-११. प्रयच्छति अयमपि वरुणादिभिस्सहागत्य हन्ति अ° वि°. १२. शोभने निवासे वि° वर्त. १३. नास्ति वि°. १४-१४. युध्यतो महति अल्पे वा संग्रामे नाभ्यागन्ता न च हिंसिता च अ° वि°. १५. 'निवासं मं°. १६. °स्पर्धो° मूको. १७-१७. नास्ति अ. †-† नास्ति रवि. ‡ °वादित्यवा रवि

[1]मध्यमस्तृच द्वितीय स आदित्यदेवत, म[2] वरुणादिदेवत । यम् रक्षन्ति प्रचेतस प्रकृष्टज्ञाना[3] वरुण मित्र अर्यमा, नू चित् स दभ्यते जन नूचिदित्यय सामर्थ्यादत्र नैशब्दस्यार्थे । दभ्नोतिर्वधकर्मा ( तु निघ २,१९ ) । न स हन्यते केनचित् जनो मनुष्य. ॥ १ ॥

वेङ्कट० यम् वरुणादय प्रचेतस रक्षन्ति, क्षिप्रमेव स जन शत्रून् हिनस्ति [1]न हिंस्यते वा घातयितृभि[2] ॥ १ ॥

मुद्गल० "य रक्षन्ति" इति नवर्चं पञ्च सूक्तम् । घोरपुत्र कण्व ऋषि । गायत्री छन्द । आद्यन्त योस्तृचयोर्वरुणमित्रार्यमणो देवता । मध्यतृचस्य आदित्या देवता [3] ।

प्रचेतस प्रकृष्टज्ञानयुक्ता वरुणादयो देवा यम् यजमानम् रक्षन्ति स जन यजमान नू चित क्षिप्रमेव दभ्यते दभ्नोति शत्रून् हिनस्ति ॥ १ ॥

यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः । अरिष्टः सर्वं एधते ॥ २ ॥

यम् । बाहुताऽइव । पिप्रति । पान्ति । मर्त्यम् । रिष । अरिष्ट । मर्व । एधते ॥ २ ॥

स्कन्द० यम् बाहुतेव बाहुतेति तृतीयाद्विवचनस्थाय छान्दसस्तादेश । य बाहुभ्यामिव पिप्रति पृ पालनपूरणयो । वरुणादय पूरयन्ति । यथा [5]कश्चित् गर्तं बाहुभ्या पासून् सहरन् पूरयेत्[5] एव [6]यमनेन धनेन च पूरयन्तीत्यर्थं[6] । पान्ति रक्षन्ति च[7] मर्त्यम् रिष हिंसितु[8] सकाशात् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । स अरिष्ट शत्रुभिरहिंसित सर्व एधते वर्धते सर्ववृद्धिभि ॥ २ ॥

वेङ्कट० यम् धनादीनाम् बाहुतेव[9] वरुणादय पूरयन्ति पान्ति[9] च मर्त्यम् शत्रो[9] । स सर्व अहिंसित[10] वर्धते[11] ॥ २ ॥

मुद्गल० यम् यजमानम् पिप्रति वरुणादयो देवा धन पूरयन्ति । तत्र दृष्टान्त । बाहुतेव स्वकीयो बाहुवर्गोऽपेक्षित धनमानीय यथा पूरयति तद्वत् । तथा यम् मर्त्यम् मनुष्य यजमानम् रिष हिंसकात् पान्ति रक्षन्ति । स सर्व यजमान अरिष्ट केनापि अहिंसित सन् एधते वर्धते ॥ २ ॥

वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ॥ ३ ॥

वि । दु:ऽगा । वि । द्विषं । पुर । घ्नन्ति । राजान । एषाम् । नयन्ति । दु:ऽइता । तिर ॥ ३ ॥

स्कन्द० वि दुर्गा वीत्यय विविधमित्यर्थं[4] । विविध दुर्गाणि[12] घ्नन्ति । वि द्विष विविध घ्नन्ति द्वेष्टॄन् । पुर नगराणि च विविध घ्नन्ति राजान दीप्ता वरुणादय [12]एषाम् द्विषाम् । अयमन्वादेश । पुरा चैतद्विशेषणम्[13] । एषा द्विषा स्वभूता पुर इति । नयन्ति शुद्धोऽप्यय नयति सोपसर्गार्थ द्रष्टव्य । अपनयन्ति दुरिता पापानि स्तोतृणाम् तिर तिर[13] सत इति प्राप्तस्य नामनी ( तु निघ ३,२० ) । प्राप्तान्युत्पन्नानि सन्तीत्यर्थ ॥ ३ ॥

---

१ नास्ति कु २ प्रकृष्टज्ञाना रवि ३-३ हिंस्यते वा घातितृभि मूको ४-४ नास्ति वि अ[1] ५-५ कश्चित् बाहुभ्या पूरयेत् कु ६-६ यमनेन धनेन च पूरयतीत्य[6] अ यमनेन च धनेनच पूरयन्ती[0] कु ७ नास्ति रवि ८ बहु[0] वि[1,2] कु ल रवि[1], बाहुभ्यामिव वि[1] अ[1] ९ रक्षन्ति रवि; नास्ति अ[1] वि[1,2] ल १० हिंसित ल ११ वर्धयते वि[1] १२ दुर्गा अनु, नास्ति रवि. १३-१३ नास्ति रवि १४ नास्ति अ

वेङ्कट० [1]अमी वरुणादयो यान्[1] परिरक्षन्ति, एषां[2] दुर्गाणि शत्रून्[3] शत्रुपुराणि च [4]वि घ्नन्ति। दुरितानि च तिरः[4] नयन्ति ॥ ३ ॥

मुद्गल० राजानः वरुणादयः एषाम् स्वकीययजमानानाम् पुरः पुरस्तात् दुर्गा गन्तुं दुःशकानि[5] शत्रुनगराणि वि घ्नन्ति विशेषेण नाशयन्ति। तथा द्विषः शत्रूनपि वि घ्नन्ति। तथा दुरिता यजमानसम्बन्धीनि दुरितानि तिरः नयन्ति विनाशं प्रापयन्ति ॥ ३ ॥

सुगः पन्था अनृक्षर आदित्यास ऋतं यते। नात्रावखादो अस्ति वः ॥ ४ ॥

सुऽगः। पन्थाः। अनृक्षरः। आदित्यासः। ऋतम्। यते। न। अत्र। अवऽखादः। अस्ति। वः॥४॥

स्कन्द० [6]सुगः पन्थाः[6] सुखं गम्यते येन स सुगः पन्थाः। अनृक्षरः ऋक्षराः[7] कण्टकाः तद्वर्जितः। हे आदित्यासः! ऋतम् यते षष्ठ्यर्थे एषा चतुर्थी। यज्ञं गच्छतः। एतद् ज्ञात्वाऽऽगच्छतेत्यर्थः। न अत्र अवखादः अस्ति वः अत्रेति यज्ञः[8] प्रतिनिर्दिश्यते, न पन्थाः। अन्वादेशे सत्यनुदात्तत्वप्रसङ्गात्[9]। अवखाद इति खादिः सामर्थ्याद्धिंसार्थः। न चात्र अस्मद्यज्ञे कश्चिद्धिंसिता तिष्ठति[10] युष्माकमागतानां सतामित्यर्थः। [11]अथवा अत्रेति[11] प्रकृतत्वात् पन्थाः प्रतिनिर्दिश्यते। ततोऽवखादो[12] गर्त उच्यते। गर्तोऽप्यत्र पथि नास्ति युष्माकम्, यत्रागच्छन्तो यूयं प्रस्खलिष्यथ। एतद् ज्ञात्वाऽऽगच्छतेत्यर्थः ॥ ४ ॥

वेङ्कट० शोभनगमनः पन्थाः[13] आदित्याः! यज्ञं गच्छते[14] कण्टकवर्जितः अस्तु। अस्मिन् भवताम् अवखादः न अस्ति चरुपुरोडाशादिकं[15] [16]सर्वमेव भवतां भक्ष्यम्,[16] न किञ्चित् त्याज्यमिति ॥ ४ ॥

मुद्गल० हे आदित्यासः। आदित्याः! ऋतम् यते यज्ञं गच्छते भवत्समूहाय पन्थाः मार्गः सुगः सुखं गन्तुं शक्यः अनृक्षरः कण्टकरहितश्च। अत्र अस्मिन् कर्मणि वः युष्माकम् अवखादः अवमन्तव्यः खादो जुगुप्सितहविर्विशेषः न अस्ति, तस्मादिहाऽऽगन्तव्यमित्यर्थः ॥ ४ ॥

यं यज्ञं नयथा नर आदित्या ऋजुना पथा। प्र वः स धीतये नशत् ॥ ५ ॥

यम्। यज्ञम्। नयथ। नरः। आदित्याः। ऋजुना। पथा। प्र। वः। सः। धीतये। नशत्॥५॥

स्कन्द० यम् यज्ञम् नयथ आत्मसमीपं प्रापयथ। प्राप्त्यर्थो वा सामर्थ्यान्नयतिः। प्राप्नुथ। हे नरः! मनुष्याकाराः आदित्याः! ऋजुना पथा शीघ्रमित्यर्थम्। प्र वः सः धीतये नशत्। 'नशत्' (निघ २,१८) इति व्याप्तिकर्मा। प्रकर्षेण युष्मान् स व्याप्नोति धीतये यजमानस्य प्रज्ञायै। युष्मत्प्रसादेन प्रज्ञाभिवृद्ध्यर्थमित्यर्थः[17] ॥ ५ ॥

वेङ्कट० यम् मनुष्याम् यज्ञम् नयथ नरः! आदित्याः! ऋजुना पथा, प्र व्याप्नोतु सः भवतां कर्मणे[18] ॥ ५

---

१-१. अमी दीप्ता वरुणादयो यद् भ[1] वि[1]. २. तेषा कु. ३. नास्ति भ[1] वि[1]. ४-४. तिघ्नन्ति तिर प्रज्ञानि दुरितानि च भ[1] वि[1]; °रितानि परितो रवि[1]. ५. दुःशकानि वि. ६-६. नास्ति रवि. ७. ऋक्ष° भ. ८. यज्ञो कु. ९. °सङ्गात् प्र° भ. १०. भरिन रवि. ११-११. भथ स्तोत्रे रवि. १२. °खादो भ. १३. पन्था कण्टकवर्जितः वि[1] भ[1]. १४. °च्छते हे मादित्याः वि[1]. १५. पुरो° कु. १६-१६. पर्व वि[1] भ[1]. १७. प्रज्ञाभ्युदयमित्यर्थः भ रवि. १८. कर्मणि भ[1] वि[1].

मुद्गल० [1]हे नर ! नेतार [1] आदित्या ! यम् यज्ञम् ऋजुना पथा अविकलेन मार्गेण नयथ पार प्रापयथ, स यज्ञ व धीतये युष्मत्पानाय[1] उपभोगाय प्र नशत् प्राप्नोतु[2] ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये द्वाविंशो वर्ग ॥

स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥ ६ ॥

स । रत्नम् । मर्त्य । वसु । विश्वम् । तोकम् । उत । त्मना । अच्छ । गच्छति । अस्तृत ॥ ६ ॥

स्कन्द० 'स रत्नम्' इति तच्छब्दश्रुते [3]योग्यार्थसम्बन्धो[4] यच्छब्दोऽध्याहर्तव्य । यो युष्मान् स्तौति यजते च, स रत्न रमणीयम् मर्त्य वसु धनम् विश्वम् बहु च[5] तोकम् उत अपत्य च त्मना आत्मनैव अच्छ गच्छति अच्छाभेरर्थे । अभिगच्छति । प्राप्नोति । अस्तृत अहिंसित शत्रुभि ॥ ६ ॥

वेङ्कट० यो[6] भवता कर्मण्युद्युक्त, स रत्नम् मर्त्य वासयितृ व्याप्त पुत्र च आत्मनेव अभि गच्छति अहिंसित ॥ ६ ॥

मुद्गल० हे आदित्या ! स तादृशो भवद्भिरनुगृहीत मर्त्य मनुष्य यजमान अस्तृत केनाप्यहिंसित सन् रत्नम् रमणीयम् विश्वम् वसु सर्वं धनम् अच्छ आभिमुख्येन गच्छति प्राप्नोति । उत अपि च 'त्मना आत्मना' स्वेन सदृशम् तोकम् अपत्य गच्छति प्राप्नोति ॥ ६ ॥

कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥ ७ ॥

कथा । राधाम । सखाय । स्तोमम् । मित्रस्य । अर्यम्ण । महि । प्सर । वरुणस्य ॥ ७ ॥

स्कन्द० कथा केन प्रकारेण राधाम[7] राध साध ससिद्धौ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थ । ससाधयेम[8] हे सखाय ! ऋत्विज ! मत्पुत्रादय ! वा । स्तोमम् मित्रस्य अर्यम्ण वरुणस्य च[9] । कीदृशम् । महि महान्तम् प्सर रूपनामैतत् । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थम्[9] । रूपवन्तम् । अत्यन्त शोभनमित्यर्थ ॥ ७ ॥

वेङ्कट० [10]कथ राधयाम[10] सखाय ! स्तोमम्[11] मित्रस्य अर्यम्ण च । कथ वा महत् रूपम् वरुणस्य स्तुम ॥ ७ ॥

मुद्गल० हे सखाय ! सखिभूता ऋत्विज ! मित्रादीना त्रयाणाम् महि महत् प्सर रूपम् । अत तदनुरूपम् स्तोमम् स्तोत्रम् कथा केन प्रकारेण राधाम साधयाम ॥ ७ ॥

मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् । सुम्नैरिद् व आ विवासे ॥ ८ ॥

मा । व । घ्नन्तम् । मा । शपन्तम् । प्रति । वोचे । देवऽयन्तम् । सुम्नै । इत् । व । आ । विवासे ॥ ८ ॥

---

1-1 नास्ति वि । पालनाय मूको 2-2 नास्ति रवि 3 °युनेश्च भ कु 4 °म्बद्धा रवि 5 नास्ति रवि 6 यो मनुष्यान् देवान् कामयमानो भवति तं मा घ्नन्तं शपन्तं वि' लप 7 नास्ति भ 8 °साधयाम भ 9 °मत्वर्थ भ रवि 10-10 नास्ति लप वि' 11 °म हे ऋत्विग भ' वि'

स्कन्द० मा व युष्माकम् स्वभूतम् घ्नन्तम् अपि मा[1] शपन्तम् शप आक्रोशे। आक्रोशन्तमपि[2] प्रति वोचे प्रतिवोचमित्याशासे[3]। देवयन्तम् देवानिच्छन्तम्। यष्टारमित्यर्थः। एतदुक्तं भवति—एवमहमत्यन्तं युष्मद्भक्तः, येन युष्माकम् स्वभूतं यष्टारमपि घ्नन्तमप्याक्रोशन्तमपि [4]मा प्रतिवधिषं मा च प्रत्याक्रुक्षमित्येतदाशास इति। किञ्च सुम्नैः इत् 'सुम्नम्' (निघ ३,६) इति सुखनाम। इच्छब्दः पदपूरणः। सुखैः परिचरणैः व युष्मान् आ विवासे परिचरेयमित्याशासे परिचरामि वा[†][5] ॥ ८ ॥

वेङ्कट० यो युष्मान्[6] देवान् कामयमानो भवति, तम्[7] मा[8] घ्नन्तम्[9] शपन्तम् वा नाऽहम् प्रति हन्मि न[9] च प्रतिशपामि। [10]सुखानि[‡] उद्दिश्य[10] युष्मान् परिचराम्येव ॥ ८ ॥

मुद्गल० हे मित्रादयो देवाः! देवयन्तम् देवान् कामयमानं यजमानं यः शत्रुः हन्ति, घ्नन्तम् तादृशं शत्रुम् वः युष्मभ्यम् मा प्रति वोचे दुरुक्तकथनभीत्याहं न कथयामि। तथा यजमानं यः शत्रुः शपति तमपि शपन्तम् मा प्रतिवोचे। भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः। अहं तु सुम्नैः इत् धनैरेव वः युष्मान् आ विवासे सर्वत्र परिचरामि ॥ ८ ॥

## चतुरश्चिद् ददमानाद् बिभीयादा निधातोः। न दुरुक्ताय स्पृहयेत् ॥ ९ ॥

चतुरः। चित्। ददमानात्। बिभीयात्। आ। निऽधातोः। न। दुःऽउक्ताय। स्पृहयेत् ॥ ९ ॥

स्कन्द० किञ्च[11] [12]चतुरः चित्[12] चतुर इति सङ्ख्यापदं सामर्थ्यादक्षविषयं द्रष्टव्यम्। चिच्छब्द उपमायाम्। ददमानात् इति ददातिर्धारयतिकर्मा। आ निधातोः [13]इत्येतद्बिभ्युमानेन सम्बध्यते,[13] नोपमेयेन। यथा चतुरोऽक्षान् ददमानात् धारयतः कितवात् आ निधातोः आ निधानात् तेषामक्षाणां प्रति कितवो बिभेति। तदयं पातयिष्यति येन मा जेष्यतीति। एवं युष्माकम् वरुणादीनां प्रसादेन मादृशः सर्वः स्तोता बिभीयादित्याशासे। कुतो बिभीयात्। दुरुक्तात्[11]। कुत एतत्। उत्तरस्मिन् पादे दुरुक्तस्पृहाप्रतिषेधात्। न दुरुक्ताय स्पृहयेत् नशब्दोऽत्र माशब्दस्यार्थे। दुरुक्तमप्रियम्। स्पृहा अभिलाषः। माऽभिमभिलाषीत्। मा कश्चिदप्यप्रियं वोचदित्यर्थः ॥ ९ ॥

वेङ्कट० प्रसङ्गाद् दुरुक्तनिन्दां करोति—चतुरश्चित् इति[14]। चतुरः चित् अक्षान् धारयतः प्रतिकितवात् कितवो यथा बिभीयात् आ निधानात्। किमयं चतुरोऽक्षान् पातयति अयमयं न्यूनानिति[15]। इदाक्षेषु निहितेषु चतुरश्चतुरः[16] तान् विमनन्ति। तत्र यदा विभक्तेभ्योऽधिकास्त्रयो भवन्ति द्वावेको वा, न तदा जयो भवति। यदा चत्वारो भवन्ति तदा जयः। तस्मात् प्रतिकितवाद्[17] यथा बिभीयादेवं दुरुक्तात्[18] बिभीयात्। तदाह[19]—न[14] दुरुक्ताय स्पृहयेत् इति ॥ ९ ॥

---

१ मा वा भ, मा मा रवि २ °न्तं कु ३ °वाशासे° कु, °त्याशास्महे रवि ४-४ परिचरामि वा विद्र भ कु † व रवि ५ मनुष्यान् वि[1] लप ६ तद् वि[1] हर्न ७ नास्ति कु ८ °म् यजमानं घ्नन्तं मा प्रतिवोचे वि[1] अ[1] ९ नास्ति वि[1] अ[1] १०-१० सुखमुद्दिश्य हवी परिचरेत वि[1] अ[1] ‡ इत्यादि ह कु रवि वि[1] अ[1] लप ११ नास्ति भ कु १२-१२ नास्ति रवि १३-१३ इत्येते दस्युमानेन सम्बध्येते भ कु १४. चतुरश्चत् भ १५ नास्ति वि[1] अ[1] १६ न्यूनानि वि[1] अ[1] ए; भवता नेतीनि वि[1] अ[1] १७ कितवात् मूको १८ दुरुक्तय वि[1] अ[1] कु रवि दुरुक्त छन्दे १९ नास्ति मूको

मुद्गल० अन्तम् शपन्तं च मा प्रतिवोचे इति यदुक्तं तत्रोपपत्तिरुच्यते । दुरुक्ताय न स्पृहयेत् दुष्टं वाक्यं न कामयेत । किन्तु दुरुक्तात् बिभीयात् । तत्रावशिष्टो मन्त्रभागः सर्वोऽपि दृष्टान्तः । चित् उपमार्थे । अक्षद्यूतं कुर्वतोरुभयोर्मध्ये यः पुमान् चतुरः चतुःसंख्याकान् कपर्दकान् ददमानात् ददतो हस्ते धारयतः पुरुषात् आ निधातोः कपर्दकनिपातपर्यन्तं बिभीयात् अस्य जयो भविष्यति न भविष्यतीति अन्यो भीतिं प्राप्नुयात् । अत्र यथा भयं तथा दुरुक्ताद् भेतव्यमिति धर्मरहस्यम् । तस्मादहं अन्तं शपन्तं मा प्रति वोचे इत्यभिप्रायः ॥ ९ ॥

इति प्रथमाष्टके तृतीयाध्याये त्रयोविंशो वर्गः ॥

[ ४२ ]

सं पूषुन्नध्वनस्तिर् व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस्पुरः ॥ १ ॥

सम् । पूषुन् । अध्वनः । तिर् । वि । अंहः । विऽमुचः । नपात् । सक्ष्व । देव । प्र । नः । पुरः ॥ १ ॥

स्कन्द० 'पौष्णमेतत् सूक्तम्' । महान्तमध्वानमेष्यतः प्रतिभये 'वा जपे अस्य' विनियोगः[1] । हे पूषन् ! अध्वनः मार्गात् सम् तिर तिरतिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । संतारय अस्मान् । वि अंहः वीत्युपसर्गश्रुतेस्तिर[2] इत्याख्यातमनुषक्तव्यम् । वितर अंहः पापं च विनाशय । पापं चापगमयेत्यर्थः । हे विमुचो नपात् ! संहारकाले सर्वमिदं [3]ग्रसित्वा पुनः सृष्टिकाले विमुञ्चतीति विमुक् प्रजापतिः, तस्य पौत्रः । कथं पुनः पूषा प्रजापतेः पौत्रः । अद्भ्यः पूष्णः, अपाञ्च† प्रजापतेत उत्पत्तिश्रुतिषु उत्पत्तिश्रुतेः । अपत्यमात्रनाम वा‡ नपाच्छब्दः । प्रजापतेरपत्य ![4]§[4] । किञ्च सक्ष्व देव प्र सक्ष्वेति सश्चतेः सचतेर्वा गतिकर्मणो रूपम् ( तु. निघ २,१४ ) । प्रसक्ष्व प्रगच्छ हे देव ! नः अस्माकम् पुरः अग्रतः । महति [5]प्रतिभयेऽस्मिन् पथि अग्रतोगाम्यस्माकं भवेत्यर्थः[5] ॥ १ ॥

वेङ्कट० हे[6] पूषन् ! [7]दुर्गात् मार्गात्[7] सन्तारय, पापं च विनाशय । मेघादापो जायन्ते, 'अद्भ्यः पृथिवीति विमुचो नपात्' तदधिपतिः पूषा । प्रसक्तो भव जिगमिषूणाम्[9] अस्माकम् अग्रतः ॥ १ ॥

मुद्गल० [10]'सम् पूषन्' इति दशर्चं सप्तमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । पूषा देवता[10] ।

हे पूषन् ! जगत्पोषक ! पृथिव्यभिमानिदेव ! अध्वनः मार्गात्[11] सम् तिर अस्मान् अभीष्टस्थानं सम्यक् प्रापय । अंहः विघ्नहेतुं पाप्मानं वि तिर विनाशय । पूषा विशेष्यते— हे विमुचो नपात् ! जलविमोचनहेतोः[12] मेघस्य पुत्र ! हे देव ! पूषन् ! नः पुरः अस्माकम् पुरतः प्र सक्ष्व प्रत्यक्षो भव पुरतो गच्छेत्यर्थः ॥ १ ॥

यो नः पूषन्नघो वृको दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥ २ ॥

यः । नः । पूषन् । अघः । वृकः । दुःऽशेवः । आऽदिदेशति । अप । स्म । तम् । पथः । जहि ॥ २ ॥

---

१-१. वाजपेयस्य अ कु; वा जपेऽस्य रवि. २. तु. आप्र ३,७,१०. ३. °स्तिरद् अ कु. ४-४. प्रसितुरपत्य अ कु. † पञ्च मूको. ‡ नास्ति मूको. § °पत्यम् रवि. ५-५. °भयेऽस्मिन्नग्रतो भवागम्यास्माकमित्यर्थः अ. ६. नास्ति अ[1]² वि[1]³ ल रवि रुपं. ७-७. °र्गात् मार्गात् अ[1]³ वि[1]³ ल कु रुपं. ८-८. अ…मुचः वि[1]. ९. जिगीषूणां वि[1] अ[2]. १०-१०. नास्ति वि मै[1]. ११. मार्गान् मै[1]. १२. °मोचकहेतोः मूको.

स्कन्द० 'य न पूषन्' योऽस्मान् हे पूषन्' अघ पाप वृक कुक वृक आदाने इत्यस्य । स्तेननामैतत् (तु निघ ३,२४)। परस्वादानपरश्चोर । दु शेव कुत्सितसुख । अन्यायोपात्तेन हि धनेन यत् सुख जन्यते कुत्सित तत् । आदिदेशति सहायभूतेभ्यश्चोरेभ्य गच्छत कथयतीत्यर्थ । अप स्म तम् पथ जहि हन्तिरत्र गत्यर्थ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थ । अपजहि अपगमय त पथो मार्गात् । स्म इति पदपूरण ॥ २ ॥

वेङ्कट० य अस्माकम्[२] पूषन्! आहन्ता स्तेन [३]दु सुख | इहागन्तव्यमिति[३] वदति, तम् पथ अप जहि इति । [४]अस्या उत्तरा[४] भूयसे निर्वचनाय ॥ २ ॥

मुद्गल० हे पूषन्! य प्रतिपक्षी न अस्मान् आदिदेशति अनेन मार्गेण न गन्तव्यम् इत्यवमाज्ञापयति। कीदृश । अघ आहन्ता। वृक अस्मदीयस्य धनस्यादाता[५]। अपहर्तेत्यर्थ । दु शेव सेवितु दु शक । तम् तादृश प्रतिपक्षिणम् पथ मार्गात् अप जहि स्म अवश्यम् अपाकुरु ॥ २ ॥

## अप॒ त्यं प॑रिप॒न्थिनं॑ मुषी॒वाणं॑ हुर॒श्चित॑म् । दू॒रमधि॑ स्रु॒तेर॑ज ॥ ३ ॥

अप॑ । त्यम् । प॒रि॒ऽप॒न्थिन॑म् । मु॒षी॒वाण॑म् । हु॒र॒ऽचित॑म् । दू॒रम् । अधि॑ । स्रु॒तेः । अ॒ज॒ ॥ ३ ॥

स्कन्द० 'अप त्यम् परिपन्थिनम्' अपेत्युपसर्गो अन्त्येन[६] अज इत्येतेन[७] आख्यातेन सम्बन्धयितव्य । य पूर्वस्यामृचि उक्तस्त परिपन्थिन गमनप्रतिबन्धकरम्[८] मुषीवाणम् नैतत्[९] स्तेननाम, हुरश्चितम् इत्येतेन पौनरुक्त्यप्रसङ्गात् । किं तर्हि । क्रियाशब्दोऽयम् । मोषितारम् । हुरश्चितम् स्तेन नामैतत् (तु निघ ३,२४) चोरम् । दूरम् अधि स्रुते अधिशब्द 'अधिपरी अनर्थकौ' (पा १, ४,९३) इति कर्मप्रवचनीय पदपूरण[१०]। स्रूयते गम्यतेऽनयेति स्रुति पन्था । दूरमस्मात् पथ अप[११] अज अजतिर्गत्यर्थ । सामर्थ्याच्चान्तर्णीतण्यर्थ । अपाज अपगमय ॥ ३ ॥

वेङ्कट० अपगमय [१२]त गमनप्रतिबन्धकर परोक्ष हर्तार|[१२] प्रत्यक्षेण च [१३]हरन्तम्[|] आहरय[१३] च[१४] धनाना चेतार मार्गात् अधि[१५] दूरम् इति ॥ ३ ॥

मुद्गल० त्वम् तादृशम् पूर्वोक्तगुणयुक्तम् स्रुते मार्गात् अधि दूरम् अत्यन्तदूरदेश प्रति अप अज अपगमय । कीदृशम् । परिपन्थिनम् मार्गप्रतिबन्धकम् । मुषीवाणम् तस्कररूपम् । हुरश्चितम् कौटिल्यानां सञ्चेतारम् ॥ ३ ॥

## त्वं तस्य॑ द्वया॒विनो॒ऽघशं॑सस्य॒ कस्य॑ चित् । प॒दाभि ति॑ष्ठ॒ तपु॑षिम् ॥ ४ ॥

त्वम् । तस्य॑ । द्व॒या॒विनः॑ । अ॒घऽशं॑सस्य । कस्य॑ । चि॒त् । प॒दा । अ॒भि । ति॒ष्ठ॒ । तपु॑षिम् ॥ ४ ॥

स्कन्द० त्वम् तस्य द्वयाविन द्वयम्[१६] इह च राजभयम् परत्र[१७] चायुष्यम्, तद्वान्[१८] द्वयावी

---

१-१ नास्ति रवि २ अस्मान् अ[१] वि[१] ३-३ °रा ति वि[१] † इत्यस्य वि[१] एव ४-४ अस्ये उत्तरा अ[१] ए कु ५ धनस्य मै[१] ६ अन्त्येन मूको ७ नास्ति कु ८ °न्धक रवि ९ नेदं रवि १० °पूरणं कु ११ नास्ति अ रवि १२-१२ त र वि[१] अ[१] † इत्यार वि[१] एव १३-१३ नास्ति कु ‡ हरत ए अ[१] वि[१] हरं रवि[१] १४ नास्ति वि[१] अ[१] कु १५ अपज कु अ[१] वि[१] १६ द्वयं मयावीन अ कु; °यम् भयावीन रवि १७ भयत्र अ कु १८ स रवि

तस्य द्वयाविनः । अघशंसस्य स्तेननामैतत् ( तु. निघ ३,२४ )। चोरस्य कस्य अपि स्वभूतस्य। अथवा 'कम्' ( निघ ३,६ ) इति सुखनाम[1] । सुखस्यापि । त्वां परिचरतोऽपीत्यर्थः । पदा पदेन अभि तिष्ठ आक्राम[2] तपुषिम् तापयित्रीम् दु-खयित्रीम्[3]। काम् । सामर्थ्यात् 'इषुं शक्तिं' वा। क्रोधनाम वा तपुषिशब्दः ( तु. निघ २,१३ )। अस्मद्विषयं क्रोधम् ॥ ४ ॥

वेङ्कट० प्रत्यक्षपरोक्षहरणयुक्तस्य स्तेनस्य अन्यतरस्य अपि पादेन[4] अभि तिष्ठ बलम् ॥ ४ ॥

मुद्गल० हे पूषन्! त्वम् तस्य चोरस्य तपुषिम् परसन्तापकं देहम् पदा अभि तिष्ठ भवदीयेन पादेनाक्रम्य तिष्ठ । कीदृशस्य । द्वयाविनः प्रत्यक्षापहारः परोक्षापहारश्चेति यत् द्वयं तद्युक्तस्य । अघशंसस्य अस्मासु अघम् अनिष्टं शंसतः कस्य चित् अनिर्दिष्टविशेषस्यापि[5] ॥ ४ ॥

## आ तत् ते दस्र मन्तुमः पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥ ५ ॥

आ । तत् । ते । दस्र । मन्तुऽमः । पूषन् । अवः । वृणीमहे । येन । पितॄन् । अचोदयः ॥ ५ ॥

स्कन्द० आ तत् ते दस्र मन्तुमः तत् तव स्वभूतं हे दस्र! तमसां चोराणां वोपक्षपयितः![6] दर्शनीय! वा। मन्तुमः! मन्तुर्मननम्, 'तद्वन्! पूषन्! तव| अवः' पालनम् आ वृणीमहे प्रार्थयामहे। येन अस्मदीयान् पितॄन् अपि अचोदयः प्रेरितवान् । 'महत्सु प्रतिभयेषु' वा अध्वनि वा प्रेरितवानसीत्यर्थः ॥ ५ ॥

वेङ्कट० आ वृणीमहे तत्[10] रक्षणं [11]तव दर्शनीय![11] ज्ञानवन्! येन पितॄन् अङ्गिरसः पणिभिरपहृतासु गोषु अचोदयः ५ ॥

मुद्गल० हे मन्तुमः! ज्ञानवन्! दस्र! दर्शनीय पूषन्! ते त्वदीयम् तत् अवः तादृशं रक्षणम् आ वृणीमहे सर्वतः प्रार्थयामहे। येन रक्षणेन पितॄन् अङ्गिरःप्रभृतीन् पितृदेहान् अचोदयः प्रेरितवानसि। तद्रक्षणमिति पूर्वत्रान्वयः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये चतुर्विंशो वर्गः ॥

## अधा नो विश्वसौभग हिरण्यवाशीमत्तम । धनानि सुषणा कृधि ॥ ६ ॥

अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम । धनानि । सुऽसना । कृधि ॥ ६ ॥

स्कन्द० अध नः विश्वसौभग! । अध शब्दः पदपूरणः । अपिचेत्यस्य वा[12] अर्थे । अपि च नः अस्माकं हे विश्वसौभग! बहु शोभनं धनं यस्य स विश्वसौभगः, तस्य सम्बोधनं हे[13] विश्वसौभग!। हिरण्यवाशीमत्तम! 'वाशी' ( निघ १,११ ) इति वाङ्नाम । हिरण्यसदृशी प्रीतिकरी हिततमणा वाऽतिशयेन [14]वाक् यस्य स हिरण्यवाशीमत्तमः,[14] तस्य सम्बोधनं हे हिरण्यवाशीमत्तम!। धनानि सुषणा सुसंभजनीयानि[15] कृधि कुरु। यानि धनानि लब्धुं वयं प्रस्थिताः, तानि सुलभानि कुर्वित्यर्थः ॥ ६ ॥

---

१. °नामैतद् अ. २. आक्रम रवि. ३. नास्ति कु. ४-४. इषुशक्तिं अ कु. ५. पदेन अ[2] वि[1]. ६. °विशेषकस्यापि वि. ७. °क्षयितः मूको. ८-८. तद्वत् सुपूषन् यावः अ. † नास्ति रवि. ९-९. महत्सु° अ. १०. दद्! अ[1] वि[1] रूपं स. ११-११. त्रुटितम् वि[1] अ[2]. १२. नास्ति अ. १३. नास्ति रवि १४-१४. नास्ति अ; यस्य वाक् सः° कु. १५. सुलभानि कु; संभजनि अ.

वेङ्कट० अथ अस्माकम् निरवकल्याण[1] अतिशयेन[2] हिरण्यवाश्युक[3] धनानि सुदानानि कुरु ॥ ६ ॥

मुद्गल० हे विश्वसौभग! इक्षधनयुक्त[1] हिरण्यवाशीमत्तम[2] अतिशयेन सुवर्णमयायुधवन्[3] पूषन्[1] अथ पूर्वोक्तास्मदीयप्रार्थनानन्तरम् नः अस्माकम् धनानि सुवर्णमणिमुक्तादीनि सुषणा सुष्ठु दानयुक्तानि कृधि कुरु ॥ ६ ॥

अति नः सश्चतो नय सुगा नः सुपथा कृणु । पूषन्निह क्रतुं विदः ॥ ७ ॥

अति । नः । सश्चतः । नय । सुऽगा । नः । सुऽपथा । कृणु । पूषन् । इह । क्रतुम् । विदः ॥ ७ ॥

स्कन्द० अति नः सश्चत नय नः अस्मान् सश्चत गच्छत [1]अतिशयशोभनम् नय[1] प्रापय अभिप्रेत देशम्। न च येन केनचित् पथा। किं तर्हि। सुगा सुगमनेन। नः अस्मान् सुपथा शोभनेन[2] पथा कृणु करोति क्रियासामान्यवचन[3] सामर्थ्यादिह नयने वर्तते। नय। हे पूषन्! इह पथि क्रतुम् आत्मीय कर्म रक्षाख्यम् विद जानीहि। ज्ञानेन च अत्र करण प्रतिपाद्यते। कुर्वित्यर्थ। तव हीतत् कर्म यत् पथि रक्षणम् ॥ ७ ॥

वेङ्कट० चोरै[4] सक्तान् अस्मान् [5]अतिशयेन नय[5]। सुगमेन[6] शोभनेन[7] पथा[8] च अस्मान् कृणु। पूषन्! अध्वनि प्रज्ञान लम्भयेति ॥ ७ ॥

मुद्गल० सश्चत अस्मद्बाधनाय प्राप्नुवत शत्रून् नः अति अस्मान् अतिक्रम्य नय अन्यत्र प्रापय। नः अस्मान् सुगा सुष्ठु गन्तु शक्येन सुपथा शोभनमार्गेण कृणु गन्तॄन् कुरु। हे पूषन्! इह अध्वनि क्रतुम् प्रज्ञानम् अस्मद्रक्षणरूपम् विद जानीहि ॥ ७ ॥

अभि सूयवसं नय न नवज्वारो अध्वने । पूषन्निह क्रतुं विदः ॥ ८ ॥

अभि । सुऽयवसम् । नय । न । नवऽज्वारः । अध्वने । पूषन् । इह । क्रतुम् । विदः ॥ ८ ॥

स्कन्द० अभि सुयवसम् नय शोभनयवसम् अभि नय प्रापयास्मान् प्रति। देशमभ्यमित्यर्थ। यस्मात् न नवज्वार अध्वने ज्वरसदृशत्वात् ज्वारोऽत्र बुभुक्षोच्यते। सा नवा यस्य स नवज्वार, अत्यन्तबुभुक्षित। [10]अध्वने न समर्थ[10]। यस्मात् बुभुक्षितो नाध्वान गन्तु शक्नोतीत्यर्थ। अथवा नवनव ज्वरयति पुन पुन सन्तापयतीति नवज्वारोऽग्निरादित्यो वा उच्यते। नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यादुपमार्थीयो द्रष्टव्य। नवज्वारो न [11]अग्निरिव आदित्य इव वा[11]। यथाग्निरादित्यो वा प्रापयति तद्वदित्यर्थ। किमर्थम्। अध्वने मार्गार्थम्। पथ्यदनार्थमित्यर्थ। किञ्च पूषन् इह क्रतुम् विद। अथवा एवमन्यथा अस्या ऋचोऽर्थयोजना—शोभना यवसा अस्मिन् [12]स सुयवस[12] त सुयवस सन्त देश प्रापयास्मान नवज्वार इव। किञ्च अध्वने पूषन्निह। अध्वन इति सप्तम्यर्थे चतुर्थी। इहेत्यनेन समानाधिकरण। इह अध्वनि हे पूषन्! क्रतु रक्षणाख्यमात्म कर्म[13] विद ॥ ८ ॥

---

१ नास्ति वि[1] लपं २ °ण्यवाशीयुक कु रवि शोध, °ण्यवाशु क रवि[11] ३ ३ अति नय शोभ अ अतिन कु ४ सुगमेन कु ५ °वचन कु ६ नास्ति वि[1] अ[1] ७ ७ °शयेन य वि[1] लप अतिनय वि[1] अ[2], °शयेन सुग° अ ८ °गमनेन कु वि[1] अ[2] रवि ९ नास्ति वि[1] लपं १० १० स न अध्वने न समर्थो अध्वने कु ११ अति आदित्यो वा इव अ कु १२ १२ नास्ति रवि १३ रक्षणार्थमात्म° रवि

वेङ्कट० 'अभिनय अस्मान्, सुयवसम्[1] देशं प्रापय । न च[2] नवज्वालो दवाग्निः अध्वने भवतु[1] ॥ ८ ॥

मुद्गल० हे पूषन्! सुयवसम् शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् अभि नय अस्मान् अभितः प्रापय । अध्वने मार्गाय नवज्वारः नूतनः सन्तापः न भवत्विति शेषः । मार्गे गच्छतामस्माकम् इदानींतनः क्लेशः कोऽपि मा भूदित्यर्थः । पूषन्! इह "इत्यादि पूर्ववत्" ॥ ८ ॥

## श॒ग्धि पू॒र्धि प्र यं॑सि च शिशी॒हि प्रास्यु॒दर॑म् । पूष॑न्नि॒ह क्रतुं॑ विदः ॥ ९ ॥

श॒ग्धि । पू॒र्धि । प्र । यं॒सि॒ । च॒ । शि॒शी॒हि । प्रासि॑ । उ॒दर॑म् । पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ॥ ९ ॥

स्कन्द० शग्धि पूर्धि 'शग्धि' ( निघ ३,२० ) इति याच्ञाकर्मा । याच्ञया चात्र दानं लक्ष्यते । देहीति[4] । पूर्धि पूरय । बहु देहीत्यर्थः । मा च[5] निकृष्टम् । किं तर्हि । प्र यंसि च यच्छतिर्दानार्थः । लोडर्थे चात्र लट् । प्रयच्छ च । प्रकृष्टं च देहीत्यर्थः । दत्त्वा च शिशीहि श्यतिः संस्कारार्थः । संस्कुरु । सर्वार्थयोग्यं कुर्वित्यर्थः । प्रासि प्रा पूरणे । लोडर्थे चात्र लट् । प्राभिपूरय चास्मदीयम् उदरम् । जीवनोपायं चास्माकं कल्पयेत्यर्थः । किञ्च पूषन्! इह क्रतुम् विदः ॥ ९ ॥

वेङ्कट० शक्तो भव, पूरय कामान्, प्रयच्छ धनानि, संस्कुरु चास्मान्, पूरय च उदरम् ॥ ९ ॥

मुद्गल० हे पूषन्! शग्धि अस्माननुग्रहीतुं शक्तो भव । पूर्धि अस्मद्गृहं धनेन पूरय । किञ्च प्र यंसि च अन्यदपेक्षितं वसु प्रयच्छ । शिशीहि अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु । तेजस्विनः कुर्वित्यर्थः । उदरम् अस्मदीयम् प्रासि भृशान्नेन पूरय । पूषन्! इह "इत्यादि पूर्ववत्" ॥ ९ ॥

## न पू॒षणं॑ मेथामसि सू॒क्तैर॒भि गृ॑णीमसि । वसू॑नि द॒स्ममी॑महे ॥ १० ॥

न । पू॒षण॑म् । मे॒था॒म॒सि॒ । सु॒ऽउ॒क्तैः । अ॒भि । गृ॒णी॒म॒सि॒ । वसू॑नि । द॒स्मम् । ई॒म॒हे॒ ॥ १० ॥

स्कन्द० न पूषणम् मेथामसि 'मेथतिराक्रोशकर्मा' ( या ४,२ ) । नाक्रोशामः । नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः । किं तर्हि । सूक्तैः शोभनैः वचनैः अभि गृणीमसि अभिष्टुमः । अभिष्टुत्य च वसूनि धनानि दस्मम् चोराणां तमसां[7] चोपक्षपयितारं दर्शनीयं वा ईमहे याचामहे ॥ १० ॥

वेङ्कट० न वयम् पूषणम् आक्रोशामः[8], किन्तु सूक्तैः अभिष्टुमः, धनानि दर्शनीयं याचामहे ॥ १० ॥

मुद्गल० पूषणम् देवम् न मेथामसि वयं न निन्दामः । किन्तु सूक्तैः वेदगतैः अभि गृणीमसि स्तुमः । दस्मम् दर्शनीयं पूषणम् वसूनि धनानि ईमहे याचामहे ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये पञ्चविंशो वर्गः ॥

---

१-१. अभिनयसूय° अ[1] वि[1]; °सुय° कु. २. वा वि[1]. ३. नास्ति अ[1] वि[1]. ४-४. नास्ति मूको. ५. देहि अ कु. ६. नास्ति अ. ७. तमसां अ कु. ८. आक्रोशयामः वि[1] अ[1].

[४३]

कद् रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे ॥ १ ॥

कत् । रुद्राय । प्रऽचेतसे । मीळ्हुःऽतमाय । तव्यसे । वोचेम । शम्ऽतमम् । हृदे ॥ १ ॥

स्कन्द० 'पौष्णं समाप्य षड् रौद्रः.'[1] ( तु. बृदे ३,१०८ ) । 'सं पूषन्' इत्येतत् पौष्णं समाप्य 'कद्रुद्राय' इत्येताः षडृचो रुद्रदेवत्याः प्रत्येतव्याः । कत् रुद्राय प्रचेतसे प्रवृद्धज्ञानाय मीळ्हुष्टमाय 'मीळ्हु' ( निघ २,१० ) इति धननाम । तद्वान् मीढ्वान् । अथवा मिह सेचने इत्यस्य मीढ्वान् सेक्ता मध्यमस्थानत्वाद् वर्षिता रुद्रः । अतिशयेन मीढ्वान्[2] मीळ्हुष्टमः, तस्मै मीळ्हुष्टमाय । तव्यसे तवतिर्वृद्धिकर्मा ( तु. या ९,२५ ) । वृद्धाय । वोचेम शन्तमम् सुखतमम् हृदे हृदयस्य । मनसः प्रीतिकरमित्यर्थः । कम् । सामर्थ्यात् स्तोमम् ॥ १ ॥

वेङ्कट० [3]'कदा वयम् रुद्राय प्रचेतसे सेक्तृतमाय वृद्धाय† हृदयस्य शन्तमम् स्तोत्रम् वोचेम इति स्तोतुकामस्य वचनम्[3] ॥ १ ॥

मुद्गल० [4]'कद्रुद्राय' इति नवर्चमष्टमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । ‡'यास्ते प्रजा.'‡ इत्यन्त्याऽनुष्टुप् । रुद्रो देवता । 'यथा नो मित्रः' इत्येषा मित्रावरुणदेवताका च । 'अस्मे सोम' इत्यादिरन्त्यतृचस्तु सौम्य एव[4] ।

कत् कदा रुद्राय एतन्नामकाय देवाय शन्तमम् अतिशयेन सुखकरं स्तोत्रम् वोचेम वदेम । कीदृशाय । प्रचेतसे प्रकृष्टज्ञानयुक्ताय मीळ्हुष्टमाय सेक्तृतमाय । अभीष्टकामवर्षयितेत्यर्थः । तव्यसे अतिशयेन प्रवृद्धाय हृदे अस्मदीयहृदिस्थाय ॥ १ ॥

यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥२॥

यथा । नः । अदितिः । करत् । पश्वे । नृऽभ्यः । यथा । गवे । यथा । तोकाय । रुद्रियम् ॥२॥

स्कन्द० कथं[5] च पुनर्वोचेम । यथा नः अदितिः यथा नः अस्माकम् अदितिः अनुपक्षीणो रुद्रः करत् कुर्यात् । दद्यादित्यर्थः । किम् । पश्वे सर्वत्र द्वितीयार्थे चतुर्थी । पशुम् अश्वादिपशुजातम् नृभ्यः [6]नृन् परिचारकांश्च मनुष्यान् । यथा च गवे[7] गां गोजातम् । यथा च[6] तोकाय तोकमपत्यम् । कीदृशम् । रुद्रियम् रुद्राहम् । यद्रुद्र एव दातुमर्हति नान्यः कश्चिदित्यर्थः । अथवा पश्वे इत्याद्याः स्वार्थ एव [8]'तादर्थ्यचतुर्थ्यः'[8] । अदितिरिति, अदितिशब्दोऽनुपक्षयवचनः । द्वितीयार्थे चात्र प्रथमा । यथा नः अस्माकमदितिमनुपक्षयं कुर्यात् पश्वाद्यर्थमिति । यथाऽस्मदीयानां पश्वादीनामनुपक्षयं कुर्यादित्यर्थः । अथवा अदितिरिति स्वार्थ एव प्रथमा । नः[9] इत्यपि चतुर्थी । यत्[10] क्रियमाणम् तत् सामर्थ्यात् पालनम् । यथा अस्मदीयं पश्वाद्यर्थं च पालनं कुर्यादित्यर्थः[11] ।

---

१. षड् रौद्रम् अ कु. २. मीढ्वा कु; मीढ्वा अ. ३-३. नास्ति अ[1] वि[1]. † नास्ति वि[1]. ४-४. नास्ति वि मै[1]. ‡-‡ यस्ते प्रजा मूको. ५. यथा कु. ६. नास्ति रवि. ७. नास्ति कु; गवे अ. ८-८. तादर्थ्ये चतुर्थी अ रवि. ९. यथा न रवि. १०. नास्ति रवि. ११. कुर्यात्। यथाऽस्माकमस्मदीयानां पालनं कुर्यादित्यर्थः अ कु.

कीदृशाम् अनुपक्षयं पालनं वा । उच्यते । रुद्रियं रुद्राईमिति । यथा नोऽस्माकम्[1] अदितिः करत् पश्चादनुपक्षयपालनानाम् अन्यतमं[2] तथा कद्रुद्राय वोचेम शंतमं स्तोममित्येवमस्या[3] ऋचो यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यता ॥ २ ॥

वेङ्कट० [4]यथा अस्माकमियं पृथिवी भेषजं पश्वादिभ्यः कुर्यादिति[4] ॥ २ ॥

मुद्गल० अदितिः भूमिः नः अस्माकम् रुद्रियम् रुद्रसम्बन्धि भेषजम् यथा येन प्रकारेण सिध्यति तथा करत् करोतु । यथा येन प्रकारेण पश्वे अस्मदीयमहिषादिपशवे नृभ्यः अस्मदीयपुरुषेभ्यः विशेषेण गवे गोजातये हितम् रुद्रियं सिध्यति तथा [5]करोतु† । किञ्च तोकाय अस्मदीयापत्याय रुद्रियं यथा सिध्यति तथा करोतु[5] ॥ २ ॥

यथा॑ नो मि॒त्रो वरु॑णो॒ यथा॑ रु॒द्रश्चिके॑तति । यथा॒ विश्वे॑ स॒जोष॑सः ॥ ३ ॥

यथा॑ । नः॒ । मि॒त्रः । वरु॑णः । यथा॑ । रु॒द्रः । चिके॑तति । यथा॑ । विश्वे॑ । स॒ऽजोष॑सः ॥ ३ ॥

स्कन्द० 'तृतीया[6] न तु केवला । सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे । [7]द्वितीयेऽपि विश्वैर्देवैः[7]' । 'तृतीया इयमृक् न रौद्र्येव† केवला । किं तर्हि । सह मित्रावरुणाभ्यां रुद्रस्य‡ संस्तवः प्रथमेऽर्धे । द्वितीयेऽपि विश्वैर्देवैः' सह । कुत एतत् । ऋगक्षरेषु[8] दर्शनात्, बृहद्देवताकारस्य च[9] वचनात् । एवं ह्याह — 'तृतीया न तु केवला । मित्रेण वरुणेनाथ विश्वैर्देवैश्च संस्तवः' ( बृदे ३,१०८-१०९ ) इति । इहापि 'तृतीयायां[10] सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे' इत्येतावता सिद्धे 'तृतीया न तु केवला' इति वचनं [11]समस्तायां तृतीयायाम्[11] अकेवलरुद्रदेवत्यप्रतिपत्त्यर्थम् । तस्मात् द्वितीये ह्यर्धर्चे विश्वैर्देवैस्सह[12] संस्तव इति सिद्धम्[13] । यथा च नः अस्मान् मित्रः वरुणः च यथा च रुद्रः एव स्वयम् चिकेतति जानाति[1] यथा च विश्वे देवाः । किम् । साकाङ्क्षत्वात् चिकेतन्तीत्यनुषक्तव्यम्[14] । चिकेतन्ति जानन्ति । कीदृशाः । सजोषसः सम्प्रीयमाणाः । यथा मित्रादीनां देवानामपि प्रकाशा भवेम तथा कदा[15] रुद्राय वोचेम स्तोममित्यर्थः । एवमनयोरप्यृचोः[16] यथा नो अदितिः करत् पश्वाद्यनुपक्षयपालनानामन्यतमं,[17] यथा चापि मित्रादयो देवा अपि चिकेतन्ति, तथा कदा रुद्राय वोचेम शन्तमं हृदयस्य स्तोममिति यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यताभावात्,[18] तस्याश्च रुद्रप्राधान्यादनयोरपि रुद्रप्राधान्यमेवावगम्यते, नैघण्टुकत्वं मित्रादीनाम् । तत्र यद् भगवता शौनकेनोक्तम्—'तृतीया न तु केवला । सह मित्रावरुणाभ्याम् संस्तवः प्रथमेऽर्धर्चे' इति, तत् यथोक्तं[19] पर्येष्यम् ॥ ३ ॥

वेङ्कट० [20]यथा अस्मान् मित्रावरुणौ जानीतो रुद्रस्तुतिप्रवृत्तान्†, यथा वा स्वयम् रुद्रः, यथा वा सर्वे एव देवा एकीभूताः, तथा कदा वोचेमेति‡[21] ॥ ३ ॥

---

1. °स्मान् मूको. 2. °तमद् भ. 3. नास्ति भ. 4-4. नास्ति भ[2] वि[1]. 5-5. नास्ति वि. † कुरु मूको. 6. यथा नो मित्रो वरुणः तृती° रवि. 7-7. नास्ति रवि. 8-8. नास्ति भ. † रुद्रस्यैव कु. ‡ तस्य कु. 9. °तु च रवि. 10. नास्ति मूको. 11. तृतीया रवि. 12-12. °स्तायास्तृतीयायाः रवि. 13. °देवैः रवि. 14. मित्र° रवि. 15. चिकेतन्तीत्यनुषक्तव्यम् भ कु, चिकेतन्तीत्युषक्तव्यः रवि. 16. तथा कदा भ कु. 17. °नयोर्ऋचोरप्यृचोः कु. 18. °मन्यतमम् भ कु. 19. °क्यताभावा° भ कु. 20. नास्ति कु. 21-21. नास्ति भ[2] वि[1]. † रुद्रस्तु° कु; रुद्रः स्तु° भ. ‡ वोचा° भ.

मुद्गल० मित्र वरुण च न अस्मान् यथा येन प्रकारेण चिकेतति अनुग्राह्यत्वेन जानाति। रुद्र अपि यथा चिकेतति। सजोषस समानप्रीतय विश्वे सर्वे देवा यथा चिकेतन्ति। तथा भवत्विति शेष ॥ ३ ॥

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम्। तच्छंयोः सुम्नमीमहे ॥ ४ ॥

गाथऽपतिम्। मेधऽपतिम्। रुद्रम्। जलाषऽभेषजम्। तत्। शम्ऽयो। सुम्नम्। ईमहे ॥४॥

स्कन्द० गाथपतिम् मेधपतिम् गाथा स्तुतिलक्षणा वाक्, तस्या अधिपति स्वामिनम्। स्तुतिभि स्तुत्यमित्यर्थ[१]। मधपतिम् यज्ञाना स्वामिनम्। रुद्रम् जलाषभेषजम् 'जलाषम्' (निघ ३ ६) इति सुखनाम। तस्य भेषजमौषधभूतम्[२]। सुखस्योत्पादकमित्यर्थ। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो[३] यच्छब्दोऽध्याहार्य। यदत्यन्तोत्कृष्टम् तत् सुम्नम्[४] शयो सुखकामस्य[५] यजमानस्यात्मनो वा कण्वा रयस्य रूपरथाय ईमहे याचामहे ॥ ४ ॥

वेङ्कट० 'स्तोत्रपतिं यज्ञपतिम् रुद्रम् सुखकरभेषजं बार्हस्पत्यस्य शयो यत् प्रजाविषयं सुखम् तत् याचामहे[६] ॥ ४ ॥

मुद्गल० रुद्रम् अभिलक्ष्य वयम् शयो बृहस्पतिपुत्रस्य सम्बन्धि प्रसिद्ध सर्वप्रजाभ्यो हितम् सुम्नम् सुखम् ईमहे याचामहे। कीदृश रुद्रम्। गाथपतिम् स्तुतिपालकम्। मेधपतिम् यज्ञपालकम्। जलाषभेषजम् सुखरूपौषधोपेतम् ॥ ४ ॥

यः शुक्र इव सूर्यो हिरण्यमिव रोचते। श्रेष्ठो देवानां वसुः ॥ ५ ॥

य। शुक्रःऽइव। सूर्यः। हिरण्यम्ऽइव। रोचते। श्रेष्ठः। देवानाम्। वसुः ॥ ५ ॥

स्कन्द० य[७] रुद्र शुक्र इव सूर्य यथा[८] शुक्लवर्ण सूर्य। हिरण्यमिव यथा च हिरण्यम् रोचते तद्वद्रोचते दीप्यते। श्रेष्ठ च देवानाम् मध्ये वसु धनवान्[९] प्रशस्यो वा। [१०]यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्योत्तरयर्चैकवाक्यता योज्या§[१०] ॥ ५ ॥

वेङ्कट० य रुद्र[११] ज्वलन्निव सूर्य हिरण्यमिव रोचते श्रेष्ठ देवानाम् वासयिता। उत्तरत्र सम्बन्ध ॥ ५ ॥

मुद्गल० य रुद्र सूर्य इव शुक्र सूर्यवत् दीप्तिमान् हिरण्यमिव रोचते। यथा सर्वेषां प्राणिनां हिरण्य प्रीतिकरं भवति तथा रुद्रोऽपि। स च देवानाम् सर्वेषां मध्ये श्रेष्ठ वसु निवास हेतुश्च ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये षड्विंशो वर्ग ॥

---

१ स्तुत्यधमि° भ २ °मौषधे कु, °षधं भूतं भ ३. °म्बन्धा रवि ४ नास्ति मूको ५ सुखकामस्य भ कु ६ ६ नास्ति भ[१] वि[१] † °कर भे° छ भ[१] वि[१] ल्पं ‡ प्रजावि° कु वि[२] ७ य इत्र इव भ मूको ८ नास्ति रवि ९ धनं वा भ रवि १० १० °ध्याहृत्यैकवाक्यतया योज्या रवि § नास्ति भ ११ नास्ति भ[१] वि[१] छ कु रवि ल्पं

शं नः॑ करत्यर्व॑ते सुगं मे॒षाय॑ मे॒ष्ये॑ । नृभ्यो॒ नारि॑भ्यो॒ गवे॑ ॥ ६ ॥

शम् । न॒ । क॒र॒ति॒ । अर्व॑ते । सु॒ऽगम् । मे॒षाय॑ । मे॒ष्ये॑ । नृऽभ्यः॑ । नारि॑ऽभ्यः । गवे॑ ॥ ६ ॥

स्कन्द० स[1] शम् न करति शम्[1] सुखमस्माकं स्वभूताय करति करोतु[3]। अर्वते 'अर्वा' (निघ १,१४) इत्यश्वनाम। अश्वाय। सुगम् स्वधिगमम्। सुप्रियमित्यर्थ। अथवा शं[4] सुगमिति समुच्चीयमाने एते। सुखं च सुगं पन्थानं च अश्वाय[5] करोत्वित्यर्थः। न च केवलाय अर्वते[5]। किं तर्हि। मेषाय मेष्यै च[5] नृभ्यः नारिभ्यः च गवे च ॥ ६ ॥

वेङ्कट० सोऽस्माकम् अश्वादीनां शोभनगमनं[5] सुखं[6] करोतु ॥ ६ ॥

मुद्गल० नः अस्माकं सम्बन्धिभ्यः अर्वदादिभ्यः सुगम् सुष्ठु गम्यम् शम् सुखम् करति देवः करोति। अर्वते अश्वाय मेषाय मेषजातिपुरुषाय[7] मेष्यै तज्जातीयस्त्रियै नृभ्यः 'पुरुषेभ्यः नारिभ्यः'[8] स्त्रीभ्यः गवे गोजातये ॥ ६ ॥

अ॒स्मे सो॑म॒ श्रिय॒मधि॒ नि धे॑हि श॒तस्य॑ नृ॒णाम् । महि॒ श्रव॑स्तुविनृ॒म्णम् ॥ ७ ॥

अ॒स्मे इति॑ । सो॒म॒ । श्रिय॑म् । अधि॑ । नि । धे॒हि॒ । श॒तस्य॑ । नृ॒णाम् । महि॑ । श्रवः॑ । तु॒वि॒ऽनृ॒म्णम् ॥ ७ ॥

स्कन्द० "तिस्रः सौम्यः"[9] (बृदे ३,१११)। तिस्र एता ऋचः सोमदेवत्याः। अस्मे अस्मासु हे सोम! श्रियम् अधि नि धेहि अधिशब्दः 'अधिपरी अनर्थकौ' (पा १,४,९३) इति कर्मप्रवचनीयः पदपूरणः। निधेहि स्थापय। अस्मभ्यं देहीत्यर्थः। कियतीम्। उच्यते। शतस्य नृणाम् मनुष्यशतस्य योग्याम्। अत्यन्तमहतीमित्यर्थः। महि श्रवः महच्च यशः तुविनृम्णम् बहुबलोपेतम्। बलं च बह्वित्यर्थः ॥ ७ ॥

वेङ्कट० सौम्यस्तृचः। अस्मासु सोम! श्रियम् अधि नि धेहि मनुष्याणाम् शतस्य पर्याप्ताम्,[10] महच्च अन्नं बहुबलम् ॥ ७ ॥

मुद्गल० हे सोम! देव[1] नृणाम् पुरुषाणाम् शतस्य पर्याप्ताम् श्रियम् अस्मे अस्मासु अधि नि धेहि आधिक्येन स्थापय। तथा[12] महि महत् तुविनृम्णम् प्रभूतबलयुक्तम् श्रवः अन्नम् अधि नि धेहि ॥ ७ ॥

मा नः॑ सोमपरि॒बाधो॒ मारा॑तयो जुहुरन्त । आ न॑ इन्दो॒ वाजे॑ भज ॥ ८ ॥

मा । नः॒ । सो॒म॒ऽप॒रि॒बाधः॑ । मा । अरा॑तयः । जु॒हु॒र॒न्त॒ । आ । नः॒ । इ॒न्दो॒ इति॑ । वाजे॑ । भ॒ज॒ ॥ ८ ॥

स्कन्द० मा नः अस्मान् सोमपरिबाधः सोमस्य परिबाधितारः अपहर्तारो राक्षसादयः, मा च अरातयः शत्रवः जुहुरन्त हूर्च्छेर्वा ह्वयतेर्वा समोहनार्थस्यैतद्रूपम्। मा यज्ञेऽन्यत्र वा[13] समोहं प्रापिपन्नित्यर्थः। त्वमपि नः अस्मान् हे इन्दो! सोम[1] वाजे संग्रामनामैतत् (द्र निघ २,१७)। संग्रामस्थानीये[14] यज्ञे संग्राम एव वा आ भज सेवस्व ॥ ८ ॥

---

१ नास्ति रवि　२ नास्ति भ कु　३ करोति भ　४ शमिति रवि　५ शोभनाग° कु वि[2] रवि　६ शुभम् भ[1] वि[1]　७ जाति° वि　८-८ नास्ति वि　९ ९ सौम्यास्तिस्र भ　१० पर्याप्तं कु भ[1] वि[1] ल　११ नास्ति वि मै[2].　१३ च रवि　१४ संग्रामे संग्राम° भ कु

वेङ्कट० मा अस्मान् अपहर्तारः हिंसन्तु सोम!, मा च शत्रवः । त्वम् अस्मान् इन्दो! सङ्ग्रामे सेवस्व ॥ ८ ॥

मुद्गल० सोमपरिबाधः सोमस्य परितो बाधका यागरहिता नः अस्मान् मा जुहुरन्त मा हिंसन्तु। तथा अरातयः शत्रवः मा जुहुरन्त। हे इन्दो! सोम! वाजे बलविषये नः अस्मान् आ भज सर्वतः सेवस्व ॥ ८ ॥

यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न् धाम॑न्नृ॒तस्य॑ ।
मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ॥ ९ ॥

याः । ते॒ । प्र॒ऽजाः । अ॒मृत॑स्य । पर॑स्मिन् । धाम॑न् । ऋ॒तस्य॑ । मू॒र्धा । नाभा॑ । सो॒म॒ । वे॒न॒ ।
आ॒ऽभूष॑न्तीः । सो॒म॒ । वे॒दः॒ ॥ ९ ॥

स्कन्द० या ते प्रजाः षष्ठीनिर्देशात्[1] परिचारका इति वाक्यशेषः । याः ते तव परिचारकाः अस्मदाद्याः प्रजाः । अमृतस्य अमरधर्मणः । परस्मिन् धामन् वेद्याख्ये स्थाने । ऋतस्य गतस्य प्राप्तस्य । वेदिस्थस्य[2] सत इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ताः मूर्धा मूर्धनि प्रधानभूते। नाभा पृथिव्या नाभिस्थानीये उत्तरवेद्याख्ये स्थाने । हे सोम! वेन वेनतिः कान्तिकर्मा (तु निघ २,५)। कामयस्व। किञ्च आभूषन्तीः सोम! वेद आभूषन्तीरित्याङ् मर्यादायाम् । भूष अलङ्कारे । मर्यादया[3] स्वलङ्कुर्वती । हे सोम! वेद विद्धि । अथवा आभूषन्तीरिति भू सत्तायाम् इत्यस्यैव रूपम् । मर्यादया भवन्ती । [4]श्रुतिस्मृत्युदितायां मर्यादाया[4] वर्तमाना इत्यर्थः । हे सोम! वेद । विदित्वा च मत्प्रवणा एता न्यायवृत्ताश्चेति [5]मन्यमानः कामयस्वेत्यर्थः[5] ॥ ९ ॥

वेङ्कट० या ते सोम! प्रजा अमृतस्य तृतीये लोके स्थितस्य परिचरन्ति । तासां[6] तद्धवि सर्वेषां मुच्छ्रितस्त्वम् उत्तरवेदिनाभौ[7] कामयस्व । ता परिचरन्तीश्च ता जानीहीति[8] ॥ ९ ॥

मुद्गल० हे सोम! ते तव सम्बन्धिन्यः याः प्रजाः सन्ति ताः प्रजाः मूर्धा शिरस्थानीयत्वम् नाभा सन्नहनयुक्ते यज्ञगृहे वेन कामयस्व । कीदृशस्य ते । अमृतस्य मरणरहितस्य । परस्मिन् धामन् ऋतस्य उत्तमे स्थाने प्राप्तस्य । हे सोम! आ भूषन्तीः सर्वतः त्वाम् अलङ्कुर्वतीः प्रजाः वेद जानीहि ॥ ९ ॥

इति प्रथमाष्टके तृतीयाध्याये सप्तविंशो वर्गः ॥

इति प्रथममण्डले अष्टमोऽनुवाकः ॥

[ ४४ ]

अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य ।
आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुधः॑ ॥ १ ॥

---

1. °वेन रवि 2. नास्ति रवि 3. °दायाम् अ 4-4. °दितया मर्यादया कु 5-5. नास्ति अ
6. ता कु, तां रवि 7. °वेदीना° वि[1] [2]. एव कु 8. जानी° कु वि[1] अ[1].

अग्ने । विऽवस्वत् । उषसः । चित्रम् । राधः । अमर्त्य । आ । दाशुषे । जातऽवेदः । वह । त्वम् । अद्य । देवान् । उषःऽबुधः ॥ १ ॥

स्कन्द० [1]"अग्ने विवस्वत् इति प्रस्कण्वः काण्व उच्यते"[1] । प्रस्कण्वो नाम कण्वपुत्र ऋषिरुच्यते । 'आग्नेये प्रथमे[2] सूक्ते' । अग्निदेवत्ये द्वे एते सूक्ते । 'प्रागाथे प्रथमेऽश्विनौ सहोषसा लिङ्गभाजौ' ( तु. बृदे ३,१११ ) । यस्त्वयं प्रथमः प्रगाथः[3] । द्वयृच इत्यर्थः । अत्राश्विनौ सहोषसा लिङ्गभाजौ । गुणत्वभाजावित्यर्थः । अश्विनौ उषाश्चाग्नेर्गुणभूता अत्र स्तूयन्त इत्यर्थः । हे अग्ने ! विवस्वत् विवासनवद् । तमसां विवासनकरम्[4] । किं तत् । सामर्थ्याज्ज्योतिः । कस्य । उच्यते । उषसः । कीदृशम् । चित्रम् विचित्रं पूज्यं वा । राधः धननामैतत् ( तु. निघ २,१० ) । इह तु धनसादृश्यादौषसे ज्योतिषि वर्तते । उज्ज्वलत्वेन[5] प्रीतिकरत्वेन धनसदृशम् । हे अमर्त्य ! आ दाशुषे यजमानस्यार्थाय । हे जातवेद ! जातप्रज्ञान ! आ वह त्वम् अद्य न च केवलमौषसं ज्योतिः । किं तर्हि । अन्यानपि देवान् । कीदृशान् । उषर्बुधः यागगमनार्थमुषःकाले ये बुध्यन्ते ते उषर्बुधः, तान् । अथवा[6] विवस्वदित्यग्नेरेव सम्बोधनम् । छान्दसत्वात्तु नुमभावः । उषस इत्यपि द्वितीयाबहुवचनान्तमाहूयमानवचनम्[7] । चित्रं राध इत्यपि हविर्लक्षणं धनमभिप्रेतम् । द्वितीयानिर्देशाच्च कर्मप्रवचनीयप्रतिशब्दाध्याहारः । हे अग्ने ! [8]'विवस्वन् ! विवसनवन् ![8] तमसां विवासयितः ! उषसः[9] चित्रं हविर्लक्षणं धनं प्रति देवांश्च आ वह इति ॥ १ ॥

वेङ्कट० प्रस्कण्वः[10] काण्वः[11] । अग्ने ! परिचरणवन् उषसः पूज्यं धनम् अमर्त्य[12] ! यजमानाय आ[13] वह । जातधन ! त्वम् तथा उषर्बुधः च अद्य देवान् आ वह ॥ १ ॥

मुद्गल० [14]"नवमे अनुवाके सप्त सूक्तानि । तत्र 'अग्ने विवस्वद्' इति चतुर्दशर्चं प्रथमं सूक्तम् । कण्वपुत्रः प्रस्कण्व ऋषिः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रथमातृतीयाद्या अयुजो बृहत्यः । कृत्स्नं सूक्तम् आग्नेयम् प्रागाथम् । आद्ये द्वे अश्विदेवताके †उषोदेवताके च†[15] ।

हे अग्ने ! त्वम् उषसः उषोदेवतायाः सकाशात् राधः धनम् दाशुषे हविर्दत्तवते यजमानाय आ वह आनीय प्रापय । सोऽग्निः विशेष्यते । हे अमर्त्य ! मरणरहित ! जातवेदः ! जातानां वेदितः ! । कीदृशं राधः । विवस्वत् विशिष्टनिवासोपेतम् । चित्रम् नानाविधम् । किञ्च अद्य अस्मिन् दिने उषर्बुधः उषःकाले प्रबुद्धान् देवान् आ वह ॥ १ ॥

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ २ ॥

जुष्टः । हि । दूतः । असि । हव्यऽवाहनः । अग्ने । रथीः । अध्वराणाम् । सऽजूः । अश्विऽभ्याम् । उषसा । सुऽवीर्यम् । अस्मे इति । धेहि । श्रवः । बृहत् ॥ २ ॥

---

१-१. अग्ने वि° काण्व उच्यते । अग्ने विवस्वदित्यतः प्रभृति कु; काण्व उच्यते । अग्नेर्विवस्वतः प्रभृति भ. † अग्ने विवस्वद् । अग्ने रवि. २. नास्ति भ रवि. ३. प्रगाथः कु; नास्ति भ. ४. विवासनम् भ. ५. उज्ज्वलनत्वेन भ कु. ६. नास्ति रवि. ७. °वचनान्तं दृष° कु. ८-८. °स्वद् विवसनवद् भ कु. ९. उषस कु. १०. कण्वः वि[1] लर्प. ११. नास्ति वि[1] भ[1]. १२. °मर्त्येभ्य वि[1] भ[1]. १३. नास्ति वि[1] लर्प. १४-१४. नास्ति वि भै[1]. †-† नास्ति मूको.

स्कन्द० जुष्ट हि हिशब्दो यस्मादर्थे। यस्मात् जुष्ट प्रिय दूत च असि हव्यवाहन हविषा वोढा। हे अग्ने! रथी रथो यस्यास्ति स रथी सारथि तत्स्थानीयश्च अध्वराणाम् यज्ञानाम्। यस्मादिति वचनात् तस्मादित्यध्याहर्तव्यम्[1]। तस्मात् सजू सम्प्रीयमाण अश्विभ्याम् उषसा च सह सुवीर्यम् शोभनेन[2] वीर्येण सहितम् अस्मे अस्मभ्यम् धेहि देहि। श्रव धन यशोऽन्नं वा बृहत् महत् ॥ २ ॥

वेङ्कट० पर्याप्त हि दूत त्वम् असि हविषा वोढा अग्ने! रथी अध्वराणाम्। 'रथो ह वा एष भूतो देवेभ्यो हव्यं वहति' ( तु काश २,४,१,६ ) इति ब्राह्मणम्। स त्वम् अश्विभ्याम् उषसा च सहित शोभनवीर्यं महदन्नमस्मासु धेहि ॥ २ ॥

मुद्गल० हे अग्ने! त्वम् जुष्टत्वादिविशेषगुणयुक्त असि। जुष्ट सेवित दूत देवानां वार्ताहर हव्यवाहन हविषो वोढा अध्वराणाम् क्रतूनाम् रथी रथस्थानीय। तादृशस्त्वम् अश्विभ्याम् देवताभ्याम् उषसा देवतया च सजू सहितो भूत्वा सुवीर्यम् शोभनवीर्योपेतम् बृहत् प्रभूतम् श्रव अन्नम् अस्मे धेहि अस्मासु प्रक्षिप ॥ २ ॥

अ॒द्या दू॒तं वृ॑णीमहे॒ वसु॑म॒ग्निं पु॑रुप्रि॒यम् ।
धू॒मके॑तुं॒ भाऋ॑जीकं॒ व्यु॑ष्टिषु य॒ज्ञाना॑मध्वर॒श्रिय॑म् ॥ ३ ॥

अ॒द्य । दू॒तम् । वृ॒णी॒म॒हे॒ । वसु॑म् । अ॒ग्निम् । पु॒रु॒ऽप्रि॒यम् । धू॒मऽके॑तुम् । भाःऽऋ॑जीकम् । विऽउ॑ष्टिषु । य॒ज्ञाना॑म् । अ॒ध्व॒र॒ऽश्रिय॑म् ॥ ३ ॥

स्कन्द० अद्य दूतम् वृणीमहे वसुम् धनवन्त प्रशस्य वा। अग्निम् पुरुप्रियम् बहूनां यजमानानां प्रियम् धूमकेतुम् धूमेन य केत्यते ज्ञायते स धूमकेतु, त धूमकेतुम्। अथवा धूमस्य कर्ता धूमकेतु, त धूमकेतुम्। भाऋजीकम् ऋजुका[3] भा दीप्तिर्यस्य स भाऋजीक[4]। छान्दसमृजुकशब्दस्य उकारस्य ईत्वम्, भा शब्दस्य पूर्वनिपात। त भाऋजीकम् ऋजुभासम्। कस्यां वेलायाम्। उच्यते। व्युष्टिषु उषसां[5] व्युष्टिवेलायाम्। प्रभातकाल इत्यर्थ। यज्ञानाम् अध्वरश्रियम् ध्वरति हिंसाकर्मा। अध्वरा अहिंसिता श्रीर्येन 'सोऽध्वरश्री, तम् अध्वरश्रियम्'[6] कस्याध्वरश्रियम्। यज्ञानाम् अध्वरश्रियम्[7]। अहिंसकमित्यर्थ ॥ ३ ॥

वेङ्कट० अद्य दूतम् वृणीमहे वासयितारम् अग्निम् बहुप्रिय धूमप्रज्ञानं[8] प्रसिद्धभासम्, उषस व्युष्टिषु यज्ञानाम् योऽध्वरं श्रयति ॥ ३ ॥

मुद्गल० अद्य अस्मिन् दिने अग्निम् वृणीमहे प्रार्थयामहे। कीदृशम्। दूतम् वार्ताहरम्[9] वसुम् निवासहेतुम् पुरुप्रियम् बहूनां प्रियम् धूमकेतुम् धूमरूपध्वजयुक्तम् भाऋजीकम् प्रसिद्धभासामाहर्तारम् व्युष्टिषु उष कालेषु यज्ञानाम् यजमानानाम् अध्वरश्रियम् यागसेवितम् ॥ ३ ॥

---

1 ˚र्तव्य मु. 2 ˚भनेन वीर्यप्रदानेन इति ब. 3 नास्ति मूको. 4 ˚जीक ब˚. 5 ˚सा ॥ ६ स अध्वरश्रियम् ब इवि; सोऽध्वरश्री मु. 7 यज्ञानां श्रियं मु; श्रिय ब. 8. ˚प्रज्ञानं वि˚. 9 ˚हर वि˚.

श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥ ४ ॥

श्रेष्ठम् । यविष्ठम् । अतिथिम् । सुऽआहुतम् । जुष्टम् । जनाय । दाशुषे । देवान् । अच्छ । यातवे । जातऽवेदसम् । अग्निम् । ईळे । विऽउष्टिषु ॥ ४ ॥

स्कन्द० श्रेष्ठम्[1] प्रशस्यतमम् । यविष्ठम् युवतमम् । अतिथिम् अतिथिस्थानीयं यजमानानाम् । स्वाहुतम् सुष्ठ्वभिहुतं सर्वयजमानैः । जुष्टम् प्रियम् । जनाय दाशुषे षष्ठ्यर्थे चतुर्थी । यजमानस्य । देवान् अच्छ यातवे अभियातुम् । जातवेदसम् अग्निम् ईळे स्तौमि व्युष्टिषु उषसाम् । प्रभातकाल इत्यर्थः ॥४॥

वेङ्कट० प्रशस्यतमं युवतमं यजमानानाम् अतिथिम् सुष्ठ्वाहुतम्[2] पर्याप्तम् जनाय[3] यजमानाय[4] देवान् प्रति गन्तुं जातप्रज्ञम् अग्निम् स्तौमि प्रातःकालेषु ॥ ४ ॥

मुद्गल० व्युष्टिषु उषःकालेषु देवान् इतरान् सर्वदेवान् अच्छ आभिमुख्येन यातवे गन्तुम् अग्निम् देवम् ईळे स्तौमि । कीदृशम् । जातवेदसम् जातप्रज्ञम् श्रेष्ठम् अतिशयेन प्रशस्तम् यविष्ठम् युवतमम् अतिथिम् सततगमनक्षमम् स्वाहुतम् सुष्ठु आ समन्तात् होमाधिकरणम् दाशुषे हविर्दत्तवते जनाय[5] यजमानाय जुष्टम् प्रीतम् ॥ ४ ॥

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥ ५ ॥

स्तविष्यामि । त्वाम् । अहम् । विश्वस्य । अमृत । भोजन । अग्ने । त्रातारम् । अमृतम् । मियेध्य । यजिष्ठम् । हव्यऽवाहन ॥ ५ ॥

स्कन्द० स्तविष्यामि स्तोष्यामि त्वाम् अहम् हे विश्वस्य अमृत भोजन! विश्वस्येत्येतत् भोजनेत्येतेन सम्बध्यते । सर्वस्य हविर्लक्षणस्यान्नस्य भोक्तः! मरणवर्जित! हे अग्ने! । कीदृशम् । उच्यते । सर्वस्तोतॄणाम् त्रातारम्[6] अमृतम् । हे मियेध्य! यज्ञार्ह! । यजिष्ठम् यष्टृतमम् । हे हव्यवाहन! हविषां वोढः! ॥ ५ ॥

वेङ्कट० स्तोष्यामि[7] त्वाम्[8] अहम्[9] अमृत! सर्वस्य पुरुषस्य भोजयितः![10] अग्ने! रक्षितारम् अमृतम् यज्ञार्ह! । यष्टृतमं[11] हविषां वोढः! ॥ ५ ॥

मुद्गल० हे अमृत! मरणरहित! विश्वस्य भोजन! कृत्स्नस्य जगतः पालक! हव्यवाहन! हविषो वोढः! मियेध्य! यज्ञार्ह! एवंविध हे अग्ने! विश्वस्य त्रातारम् सर्वस्य जगतो रक्षकम् अमृतम् मरणरहितम् यजिष्ठम् अतिशयेन यष्टारम् त्वाम् अहम् अनुष्ठाता स्तविष्यामि स्तुतिं करिष्यामि ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये अष्टाविंशो वर्गः ॥

---

1. श्रेष्ठं यविष्ठं श्रेष्ठ अ रवि. 2. °हुतम् अ[2] वि[1]. 3. °नाय ये वि[1] लपं. 4. नास्ति वि[2]. 5. नास्ति मै[2]. 6. नास्ति अ रवि. 7. स्तविष्या° वि[1] लपं. 8. नास्ति अ[2] वि[1]. 9. अहं च अ[2] वि[1]. 10. °अयितार कु वि[2]; °अयितुः अ[2] वि[1]. 11. नास्ति वि[2] लपं.

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥ ६ ॥

सुऽशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः । प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे । नमस्य । दैव्यम् । जनम् ॥ ६ ॥

स्कन्द० सुशस बोधि सुशस इत्येतन्नामन्त्रितम् । प्रत्यक्षकृतश्चाय मन्त्र । अतो[1] यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्व सुशस सुस्तुत स[2] बोधि बुध्यस्व । शृण्वित्यर्थ । गृणते गृणत स्तुवतो मम । हे यविष्ठ्य! स्वार्थिको य[3] । यविष्ठ[3] युवतम[3] । मधुजिह्व मधुस्वादमाज्य मधु, तस्मिन् जिह्वा यस्य स मधुजिह्व । [4]नित्यमाहुतिलक्षणस्य आज्यस्य स्वादयितेत्यर्थ[4] । अथवा 'जिह्वा (निघ १,११) इति वाङ्नाम । मधुरवचनात्[5] मधुजिह्व । तस्य सबोधन हे मधुजिह्व![6] (?) । स्वाहुत सुष्ठ्वभिहुत सन् । किञ्च मम[2] प्रस्कण्वस्य प्रतिरन् प्रवर्धयन् आयु जीवसे चिरजीवनाय । नमस्य नमस्कुरु । दैव्यम् जनम् । सर्वदेवानित्यर्थ ॥ ६ ॥

वेङ्कट० सुस्तव बुध्यस्व स्तुवते युवतम! मादयितृजिह्व[7] स्वाहुत । प्रस्कण्वस्य मम जीवनाय आयु वर्धयन् नमस्कुरु सर्वान् देवान् ॥ ६ ॥

मुद्गल० हे यविष्ठ्य! युवतम! अग्ने! त्वम् गृणते स्तुवते यजमानार्थम् सुशस सुष्ठु शसनीय मधुजिह्व मन्दयितृज्वाल स्वाहुत सुष्ठु आभिमुख्येन हुत सन् बोधि अस्मदभिप्राय बुध्यस्व । किञ्च प्रस्कण्वस्य एतन्नामकस्य कण्वपुत्रस्य[8] महर्षे जीवसे जीवनार्थम् आयु प्रतिरन् प्रकर्षेण वर्धयन् दैव्यम् देवसम्बन्धिनम् जनम्[9] नमस्य पूजय ॥ ६ ॥

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥ ७ ॥

होतारम् । विश्वऽवेदसम् । सम् । हि । त्वा । विशः । इन्धते । सः । आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ॥ ७ ॥

स्कन्द० [10]'स आ वह इति' तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्य । य होतारम् होतारम् विश्ववेदसम् सर्वधनं सर्वप्रज्ञं[11] वा यम् हि त्वा विश इन्धते हिशब्द पदपूरण । त्वां विशो मनुष्या समिन्धते सन्दीपयन्ति । स त्वम्[12] आ वह हे पुरुहूत! बहुभिराहूत![12] प्रचेतस प्रकृष्टज्ञानान् हे अग्ने! देवान् इह द्रवत् क्षिप्रम् ॥ ७ ॥

वेङ्कट० होतारम् सर्वधनम्[13] यम् इन्धते हि त्वाम्[14] विश । [15]स त्वम्[15] आ वह पुरुहूत! प्रचेतस [16]अग्ने! देवान् इह! क्षिप्रम्[16] ॥ ७ ॥

---

१ नास्ति कु. २ नास्ति ह वि. ३ यविष्ठ्य स कु. ४-४ °स्वादयिता° कु. ५ °वचन वि. ६ मधुजिह्व हवि. ७ °जिह्व कु वि° ह्व. ८ कण्वस्य पुत्रस्य मै°. ९ नास्ति वि. १०-१० नास्ति अ कु. ११ °नं विज्ञानमिति ह वि. १२ नास्ति अ. १३ नास्ति मूको. १४ °जनन् वि° तवं °ध्वं अ° वि°. १५-१५ त अ° वि°. १५-१५ सर्वम् अ° वि°. १६-१६ नास्ति वि° ध्रु. [-] देवा द वि°.

**मुद्गल०** होतारम् होमनिष्पादकम् विश्ववेदसम् सर्वज्ञम् त्वा त्वाम् विशः प्रजाः राम् इन्धते हि सम्यक् दीपयन्ति खलु। हे पुरुहूत! बहुभिः आहूत! अग्ने! सः त्वम् प्रचेतसः प्रकृष्टज्ञानयुक्तान् देवान् इह कर्मणि द्रवत् क्षिप्रम् आ वह आभिमुख्येन प्रापय ॥७॥

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥ ८ ॥

सवितारम् । उषसम् । अश्विना । भगम् । अग्निम् । विऽउष्टिषु । क्षपः । कण्वासः । त्वा ।
सुतऽसोमासः । इन्धते । हव्यऽवाहम् । सुऽअध्वर ॥ ८ ॥

**स्कन्द०** कतमान्। उच्यते। सवितारम् उषसम् अश्विना भगम् आत्मानमेव च अग्निम् व्युष्टिषु क्षपः क्षपायाः रात्रेः। प्रभातकाल इत्यर्थः। किञ्च[1] कण्वासः त्वा कण्वपुत्रा मत्प्रभृतयः त्वाम् सुतसोमासः[2] कृतसोमाभिषवाः इन्धते दीपयन्ति हव्यवाहम्[3] हे स्वध्वर। सुयज्ञ! ॥ ८ ॥

**वेङ्कट०** [4]सवितृप्रभृतीन् अग्निं च यष्टव्यं राज्याः† व्युष्टिषु त्वमावह। कण्वपुत्राः अभिषुतसोमाः‡ त्वां दीपयन्ति हव्यवाहम् स्वध्वर![4] ॥ ८ ॥

**मुद्गल०** हे स्वध्वर! शोभनयागयुक्त! अग्ने! [5]क्षपः क्षपायाः[5] व्युष्टिषु उषःकालेषु सवित्रादीन् देवान् आवह इत्यनुवर्तते। स्वध्वर इत्याहवनीयाग्नेः सम्बोधनम्। अग्निम् इति हविष उद्देश्यं देवतान्तरम् उच्यते। सुतसोमासः[6] अभिषुतसोमाः कण्वासः मेधाविनः ऋत्विजः[7] हव्यवाहम् हविषः मापकम् आहवनीयम्[8] त्वा त्वाम्[9] इन्धते दीपयन्ति ॥ ८ ॥

BHARATIYA VIDYA BHAVAN BOMBAY-7 LIBRARY

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ ९ ॥

पतिः । हि । अध्वराणाम् । अग्ने । दूतः । विशाम् । असि । उषःऽबुधः । आ । वह ।
सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥ ९ ॥

**स्कन्द०** पतिः हि अध्वराणाम् हि-शब्दो यस्मादर्थे। यस्मात् पतिः स्वामी त्वम् अध्वराणाम्, हे अग्ने! दूतः विशाम् मनुष्याणाम् असि। यस्माद् इति वचनात् तस्माद् इत्यध्याहार्यम्। तस्मात् उषर्बुधः उषःकाले ये बुध्यन्ते त उषर्बुधः, तान् आ वह सोमपीतये देवान् अद्य। कीदृशान्। स्वर्दृशः स्वः आदित्यः द्यौर्वा, तद्वद् ये दृश्यन्ते, ये[10] तस्य द्रष्टारो वा,[10] ते स्वर्दृशः, तान्। आदित्यस्य दिवो वा सदृशान्[11], तद्दर्शिनो वेत्यर्थः ॥ ९ ॥

---

१. नास्ति रवि. २. कृत° अ. ३. °वाह अ. ४-४. नास्ति वि' लपं. † रात्र्यां त्रि' अ'. ‡ अभिषुत° त्रि' ह. ५-५. नास्ति मूको. ६. अभिषुत अभिषो सुत° मूको. ७. क्षपः रात्रि° मूको. ८. °नीये अध्वराणाम् मूको. ९. नास्ति वि. १०. नास्ति रवि ११. सदृशाः कु.

वेङ्कट० 'पतिः हि यज्ञानाम्[1], अग्ने! दूतः विशाम् असि । स त्वम् उषसि प्रबुद्धान् आ वह सोमपानाय [2]देवान् अद्य[2] सर्वस्य द्रष्टः ॥ ९ ॥

मुद्गल० हे अग्ने! विशाम् प्रजानां सम्बन्धिनो ये[3] अध्वरा यागाः तेषाम् अध्वराणाम्[4] पतिः पालकस्त्वम् दूतः असि हि[5] देवानां वार्ताहरो भवसि खलु । उषर्बुधः उषःकाले प्रबुद्धान् स्वर्दृशः सूर्यदर्शिनो देवान् अद्य अस्मिन् दिने सोमपीतये सोमपानार्थम् आ वह आभिमुख्येन प्रापय ॥ ९ ॥

अग्ने॒ पूर्वा॒ अनू॒षसो॑ विभावसो दी॒देथ॑ वि॒श्वद॑र्शतः ।
असि॒ ग्रामे॑ष्ववि॒ता पु॒रोहि॑तोऽसि य॒ज्ञेषु॒ मानु॑षः ॥ १० ॥

अग्ने॑ । पूर्वाः॑ । अनु॑ । उ॒षसः॑ । वि॒भा॒व॒सो॒ इति॑ विभाऽवसो । दी॒देथ॑ । वि॒श्वऽद॑र्शतः । असि॑ ।
ग्रामे॑षु । अ॒वि॒ता । पु॒रःऽहि॑तः । असि॑ । य॒ज्ञेषु॑ । मानु॑षः ॥ १० ॥

स्कन्द० हे[6] अग्ने! पूर्वा अनु उषसः अनुशब्दो[6] लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । एकस्या एव चोषसः[7] कालभेदापेक्षया पूर्वापरव्यपदेशः । अवयवापेक्षं च बहुवचनम् । पूर्वा उषसः प्रति अद्य एव । उषसः उदयकाले इत्यर्थः । हे विभावसो! विविधा भा धनं[8] यस्य स विभावसुः, तस्य सम्बोधनं हे विभावसो! । दीदेथ दीप्यस्व । विश्वदर्शतः सर्वस्य दर्शनीयः । सर्वजनप्रकाश इत्यर्थः । किं कारणम् । उच्यते । यस्मात् असि ग्रामेषु अविता जनपदनिवासस्थानानि ग्रामाः[9], तेषु रक्षिता त्वमसि । पुरोहितः असि यज्ञेषु च[10] । पूर्वस्यां दिश्याहवनीयात्मना स्थापितः[11], पुरोहितस्थानीयो वा असि । कः[12] । मानुषः मन्त्रज्ञाता[13] । अथवा मानुष इति षष्ठी । [14]मानुषस्य स्वभूतेषु[14] यज्ञेषु इति ॥ १० ॥

वेङ्कट० अग्ने! गतासु अपि उषःसु विभावसो! प्रज्वल सर्वस्य दर्शनीय । स त्वम् ग्रामेषु असि गृहेषु पुरो निहितः, रक्षिता[15] अरण्येषु[16] च, यज्ञेषु [17]पुरो निहितः[17] मनुष्यहितः ॥ १० ॥

मुद्गल० हे विभावसो! विशिष्टप्रकाशनरूपधनवन्[18] अग्ने! विश्वदर्शतः सर्वैर्दर्शनीयस्त्वम् पूर्वाः उषसः अनु अतीतान् उषःकालान् अनुलक्ष्य दीदेथ दीप्तवानसि । तादृशस्त्वम् ग्रामेषु जननिवासस्थानेषु अविता असि रक्षको भवसि । यज्ञेषु अनुष्ठेयकर्मसु पुरोहितः वेदेः पूर्वस्यां दिश्यवस्थितः मानुषः असि ऋत्विग्यजमानानां मनुष्याणां हितोऽसि ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः ॥

नि त्वा॑ य॒ज्ञस्य॒ साध॑नमग्ने॒ होता॑रमृ॒त्विज॑म् ।
म॒नु॒ष्वद् दे॑व धीमहि॒ प्रचे॑तसं जी॒रं दू॒तमम॑र्त्यम् ॥ ११ ॥

---

1-1 नास्ति वि[1], अ[1] २-२ नास्ति वि[1] अ[3]. ३ नास्ति मूको. ४ नास्ति मूको। ऋ ३,३२,९ टि ८ ५ अग्ने पूर्वा हे रवि. ६ °ब्दोपम° अ. ७. उषस रवि ८ धनस्य कु. ९ ग्राम कु. १० नास्ति रवि ११. स्थापितः कु. १२. नास्ति अ रवि. १३. मन्त्रा ज्ञाता रवि १४-१४ मानुष° अ, मनुष्यस्य° कु १५. नास्ति वि[1] अ[1]. १६ आरण्येषु कु. १७-१७ पुरोहित ए. १८. °धन वि

नि । त्वा । यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् । मनुष्वत् । देव । धीमहि ।
प्रऽचेतसम् । जीरम् । दूतम् । अमर्त्यम् ॥ ११ ॥

स्कन्द० त्वाम् यज्ञस्य साधनम् साधयितारं हे अग्ने! होतारम् ऋत्विजम् मनुष्वत् मनुष्यवत् हे देव! [1]नि धीमहि निदध्महे[1] । यज्ञे स्थापयाम इत्यर्थः । प्रचेतसम् जीरम् क्षिप्रनामैतत् ( द्र. निघ २,१५ ) । क्षिप्रम् दूतम् अमर्त्यम् ॥ ११ ॥

वेङ्कट० नि धीमहि त्वां यथा मनुर्निदधे क्षिप्रं[2] तद्वदिति ॥ ११ ॥

मुद्गल० हे अग्ने! देव![3] मनुष्वत् यथा मनुर्यागदेशे निदधाति तद्वद् वयम् त्वा त्वाम् नि धीमहि अत्र स्थापयामः । कीदृशम् । यज्ञस्य साधनम् यज्ञस्य निष्पादकम् होतारम् ऋत्विजम् ऋतौ वसन्तादिके यष्टारम् प्रचेतसम् प्रकृष्टज्ञानयुक्तम् जीरम् शत्रूणां वयोहानिकरम् दूतम्[4] देवानां दूतस्थानीयम् अमर्त्यम् मरणरहितम् ॥ ११ ॥

यद् देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।
सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥ १२ ॥

यत् । देवानाम् । मित्रऽमहः । पुरःऽहितः । अन्तरः । यासि । दूत्यम् । सिन्धोःऽइव ।
प्रऽस्वनितासः । ऊर्मयः । अग्नेः । भ्राजन्ते । अर्चयः ॥ १२ ॥

स्कन्द० यत्[5] यदा देवानाम् हे मित्रमहः! मित्राणां पूजयितः! पूज्य![6] वा । पुरोहितः पूर्वस्यां दिश्या-हवनीयात्मना स्थापितः अन्तरः सन्निकृष्टः । कस्य । सामर्थ्याद् देवानां यजमानानां वा । यासि दूत्यम् दूतकर्म । आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा सिन्धोरिव प्रस्वनितासः ऊर्मयः प्रकृष्टं स्वनितं[7] येषां ते प्रस्वनितासः । शब्दवन्त इत्यर्थः । यथा सिन्धोर्नद्याः महान्तः शब्दवन्त ऊर्मयो भ्राजेरन्, तद्वत् तव अग्नेः भ्राजन्ते अर्चयः ज्वालाः ॥१२॥

वेङ्कट० 'यत् देवानाम्' मित्राणां पूजयितः! मनुष्यैः पुरोहितः देवानां मनुष्याणां मध्ये वर्त्तमानः यासि दूत्यम् । तदानीं समुद्रस्येव महाशब्दाः 'वीचयस्तव अग्नेः' भ्राजन्ते दीप्तयः ॥ १२ ॥

मुद्गल० हे मित्रमहः! मित्राणां पूजक! अग्ने! यत् यदा पुरोहितः त्वम् वेदेः पूर्वस्यां दिशि स्थापितः अन्तरः देवयजनमध्ये वर्तमानः सन् देवानाम् दूत्यम् दूतकर्म यासि प्राप्नोषि । तदानीम् अग्नेः तव अर्चयः दीप्तयः भ्राजन्ते दीप्यन्ते । दृष्टान्तः । सिन्धोरिव यथा समुद्रस्य प्रस्वनितासः महाध्वनियुक्ताः ऊर्मयः तरङ्गाः भ्राजन्ते तद्वत् ॥ १२ ॥

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ १३ ॥

---

१-१. धीमहि दध्महे इति[11]. २. नास्ति वि[1] द. ३. नास्ति वि मं[1]. ४. नास्ति मं[2]. ५. नास्ति कु. ६. पूज्यः इति. ७. स्वनं कु. ८-८. नास्ति वि[1] दं, यदा दे[3] कु. ९-९. 'वचयस्तव वि[1] अ[1]; नास्ति वि[11] अ[2] द.

श्रुधि । श्रुतऽकर्ण । वह्निऽभिः । देवैः । अग्ने । सयावंऽभिः । आ । सीदन्तु । बर्हिषि । मित्रः । अर्यमा । प्रातःऽयावानः । अध्वरम् ॥ १३ ॥

स्कन्द० श्रुधि शृणु हे[1] श्रुत्कर्ण! श्रोतृकर्ण! वह्निभिः हविषां वोढृभिः अन्यैरग्निभिः[2] सह। कीदृशैः। देवैः दानादिगुणैः। हे अग्ने! सयावभिः हव्यं गृहीत्वा त्वया सह ये यान्ति ते सयावानः तैः सयावभिः। किं शृणवानि। उच्यते। त्वया आहूता[3] सन्तः आ सीदन्तु बर्हिषि मित्रः अर्यमा अन्ये च प्रातर्यावाणः प्रातर्गामिनो देवाः। अध्वरम् सप्तम्यर्थेऽत्र[4] द्वितीया। बर्हिषि इत्यस्य चेदं विशेषणम्। अस्मदीयेऽध्वरे यद् बर्हिस्तत्र इति[1] ॥ १३ ॥

वेङ्कट० शृणु श्रवणपरकर्ण! हविषां वोढृभिः[5] अन्यैः[6] त्वया सहैकगमनैः[7] देवैः[8] यश्च[9] प्रातर्गच्छद्भिः। तेऽस्मिन्[10] बर्हिषि आ सीदन्तु मित्रः अर्यमा चेति ॥ १३ ॥

मुद्गल० हे[11] श्रुत्कर्ण! श्रवणसमर्थाभ्यां कर्णाभ्यां युक्त! अग्ने! श्रुधि अस्मदीयं वचनं शृणु। यः मित्रः देवः यश्च अर्यमा ये चान्ये प्रातर्यावाणः प्रातःकाले देवयजनं गच्छन्तो देवाः ते[12], सर्वे सयावभिः आहवनीयाग्निना[13] त्वया समानगतिभिरन्यैः वह्निभिः वोढृभिः देवैः सह अध्वरम् क्रतुमुद्दिश्य बर्हिषि दर्भे आ सीदन्तु उपविशन्तु ॥ १३ ॥

शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ १४ ॥

शृण्वन्तु । स्तोमम् । मरुतः । सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः । पिबतु । सोमम् । वरुणः । धृतऽव्रतः । अश्विऽभ्याम् । उषसा । सऽजूः ॥ १४ ॥

स्कन्द० त्वयैव चाहूताः शृण्वन्तु स्तोमम् मरुतः सुदानवः शोभनदातारः शोभनदाना वा। अग्निजिह्वाः[14] अग्निः जिह्वास्थानीयो येषां ते अग्निजिह्वाः। सर्वेषामेव हि[1] देवानामग्निः जिह्वास्थानीयः। ऋतावृधः यज्ञस्य वर्धयितारः। पिबतु सोमम् वरुणः धृतव्रतः धृतकर्मा अपरित्यक्तस्वव्यापारः [15]अश्विभ्याम् उषसा च सजूः सह प्रीयमाणः[15] ॥ १४ ॥

वेङ्कट० त्वयाऽऽहूयमानाः शृण्वन्तु स्तोमम् मरुतः शोभनदानाः अग्न्यास्याः यज्ञस्य वर्धयितारः। पिबतु च[16] सोमम् वरुणः धृतकर्मा अश्विभ्याम् उषसा च सहितः ॥ १४ ॥

मुद्गल० मरुतः देवाः स्तोमम् अस्मदीयस्तोत्रम् शृण्वन्तु। कीदृशाः। सुदानवः सुष्ठुफलदातारः। अग्निजिह्वाः अग्निः जिह्वास्थानीयः मुख्यः येषु[17] मरुत्सु तादृशाः। ऋतावृधः सत्यस्य वर्धकाः। तथा धृतव्रतः गृहीतकर्मा वरुणो देवः अश्विभ्याम् देवाभ्याम् उषसा देवतया सजूः[18] सोमम् पिबतु ॥ १४ ॥

इति प्रथमाष्टके तृतीयाध्याये त्रिंशो वर्गः ॥

---

1 नास्ति रवि. 2 °रग्निभि भ. 3. हुता कु. 4 °म्यर्थे कु. 5 वोढृ वि¹ अ¹. 6 नास्ति वि¹ एप. 7 °ऐकगा° वि¹ एप. 8. नास्ति वि¹¹³ अ¹¹³ द. 9 नास्ति वि¹ अ¹. 10 अस्मिन् कु, तस्मिन् वि¹ ¹ अ¹¹³. 11 नास्ति वि. 12 ते मूको. 13 आहवनाग्नि मूको. 14 नास्ति कु. 15-15 नास्ति भ. 16 नास्ति वि¹¹³ द. 17 एषु मै. 18 नास्ति मै.

[ ४५ ]

त्वम॑ग्ने॒ वसूँ॑रि॒ह रु॒द्राँ आ॑दि॒त्याँ उ॒त । यजा॑ स्वध्व॒रं जनं॒ मनु॑जातं घृत॒प्रुष॑म् ॥ १ ॥

त्वम् । अ॒ग्ने॒ । वसू॑न् । इ॒ह । रु॒द्रान् । आ॒दि॒त्यान् । उ॒त । यज॑ । सु॒ऽअ॒ध्व॒रम् । जन॑म् । मनु॑ऽजातम् । घृ॒त॒ऽप्रुष॑म् ॥ १ ॥

स्कन्द० त्वम् हे अग्ने! वसून् देवान्[1] इह अस्मदीये[1] यज्ञे रुद्रान् अपि आदित्यान् अपि यज। अन्यं च स्वध्वरम् सुयज्ञं 'दैव्यम् जनम्[2] मनुजातम् मनोः प्रजापतेः सकाशात् जातम् घृतप्रुषम् 'घृतम्' ( निघ १,१२ ) इति उदकनाम । प्रुषिः क्षरणार्थः। उदकस्य क्षरितारम् । वर्षितारमित्यर्थः। अथवा आहुतिलक्षणं घृतं प्रति क्षरति इति[3] [4]घृतप्रुट्, तं[4] घृतप्रुषम् । सर्वयजमानानामाज्याहुतिभिर्यष्टव्यमित्यर्थः ॥ १ ॥

वेङ्कट० [5]त्वम् अग्ने![5] अस्मिन् यज्ञे वस्वादीन् यज। तद्व्यतिरिक्तमपि दैव्यम् जनम् सुयज्ञं[6] मनुष्येषु प्रादुर्भवन्तं घृतं प्रति गन्तारम् ॥ १ ॥

मुद्गल० [7]'त्वमग्ने वसून्' इति दशर्चं द्वितीयं सूक्तम् । प्रस्कण्व ऋषिः। अनुष्टुप् छन्दः। अग्निर्देवता। 'अयं सोमः' इत्यर्धर्चो देवदेवत्यः[7]।

हे अग्ने! त्वम् इह कर्मणि वस्वादीन् यज। उत अपि च जनम् अन्यमपि देवतारूपं प्राणिनं यज। कीदृशम्। स्वध्वरम् शोभनयागयुक्तम् मनुजातम् मनुना प्रजापतिना उत्पादितम् घृतप्रुषम् उदकस्य सेक्तारम् ॥ १॥

श्रु॒ष्टी॒वानो॒ हि दा॒शुषे॑ दे॒वा अ॑ग्ने॒ विचे॑तसः । तान् रो॑हिदश्व गिर्वण॒स्त्रय॑स्त्रिंशत॒मा व॑ह ॥ २ ॥

श्रु॒ष्टी॒ऽवानः॑ । हि । दा॒शुषे॑ । दे॒वाः । अ॒ग्ने॒ । विऽचे॑तसः । तान् । रो॒हि॒त्ऽअ॒श्व॒ । गि॒र्व॒णः॒ । त्रयः॑ऽत्रिंशतम् । आ । व॒ह॒ ॥ २ ॥

स्कन्द० हि शब्दः पदपूरणः। तान् रोहिदश्व इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः[8]। दाशुषे यजमानस्यार्थाय। ये[9] श्रुष्टीवानः 'श्रुष्टीति क्षिप्रनाम' (या ६,१२)। वन षण संभक्तौ । क्षिप्रं यजमानं सम्भक्तारः। अथवा श्रुष्टिशब्दोऽत्र श्रुतवचनः। श्रुतवन्तः श्रुष्टीवानः। बहुश्रुता इत्यर्थः। [10]देवाः हे[10] अग्ने! विचेतसः विविधप्रज्ञाः ऊहापोहसमर्थाः। तान् रोहिदश्व! रोहितवर्णा अश्वा यस्य स रोहिदश्वः, तस्य सम्बोधनं हे रोहिदश्व! गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः![11] त्रयस्त्रिंशतम् आ वह, 'अष्टौ वसवः एकादश रुद्राः द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च' ( ऐब्रा १,१० ) इत्येते त्रयस्त्रिंशद्देवाः, तान् त्रयस्त्रिंशतमावह ॥ २ ॥

वेङ्कट० क्षिप्रसम्भक्तारः[12] हि दाशुषे देवाः अग्ने! सुमतयः। तान् रोहिदश्व! गीर्भिर्वननीय! इह आ वह त्रयस्त्रिंशत्संख्याकान् ॥ २ ॥

---

१. नास्ति अ कु. २-२ देवजनं रवि; देवयजनं भ. ३. नास्ति रवि. ४-४. नास्ति अ कु. ५-५. नास्ति वि[1] लपं. ६. [*]यज्ञेषु वि[1] लपं. ७-७. नास्ति वि मै[2]. ८. [*]ध्याहर्तव्यः रवि. ९. नास्ति रवि. १०-१०. हे देवाः अ कु; देवाः हे देवाः रवि. ११. सम्भक्तयितः रवि. १२. क्षिप्रं सं° वि[1] भ[2].

मुद्गल० हे अग्ने! विचेतस विशिष्टप्रज्ञाना. देवा दाशुषे हविर्दत्तवते यजमानाय श्रुष्टीवान' हि श्रुष्टि फलस्य दान तद्वाज खलु'। हे रोहिदश्व! रोहिदाख्यकैरश्वैरुपेत' गिर्वण! गीर्भि स्तुतिभि वननीय! अग्ने' त्रयस्त्रिंशतम् अनया सख्यया सख्यातान् तान् देवान् आ वह इहानय ॥ २ ॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥ ३ ॥

प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेद । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥ ३ ॥

स्कन्द० प्रियमेधवत् प्रियमेधस्येव, अत्रिवत् अत्रेरिव, हे जातवेद ²! जातप्रज्ञ' अग्ने! विरूपवत्' विरूपस्येव च अङ्गिरस्वत्' अङ्गिरस इव हे महिव्रत! महाकर्मन्' मम प्रस्कण्वस्य श्रुधि हवम् ॥ ३ ॥

वेङ्कट० प्रियमेधादिचतुष्कस्येव महाकर्मन्' प्रस्कण्वस्य अपि ³शृणु ह्वानमिति³ ॥ ३ ॥

मुद्गल० हे महिव्रत। प्रभूतकर्मन्' जातवेद! जातप्रज्ञ' अग्ने' प्रस्कण्वस्य महर्षे हवम् आह्वानम् श्रुधि शृणु। चत्वारो दृष्टान्ता प्रियमेधात्रिविरूपाङ्गिरोनामका। एतेषाम् आह्वान यथा शृणोषि तद्वत् ॥ ३ ॥

महिकेरव ऊतये प्रियमेधा अहूषत । राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ॥ ४ ॥

महिऽकेरव । ऊतये । प्रियऽमेधा । अहूषत । राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥ ४ ॥

स्कन्द० महिकेरव महत. स्तोमस्य कर्तार। ऊतये पालनाय तर्पणाय वा आत्मन। प्रियमेधा प्रिययज्ञ। अहूषत आहूतवन्त आह्वयन्ति वा। राजन्ताम् राजतिरैश्वर्यकर्मा (द्र निघ २,२१)। ईशानम्। अध्वराणाम् यज्ञानाम्। अग्निम् शुक्रेण शोचिषा इत्थम्भूतलक्षणे एषा' तृतीया। शुक्लवर्णया² दीप्त्या सम्बद्धम्³। शुक्लवर्णया⁴ दीप्त्या दीप्तमित्यर्थ। अथवा शुक्रेण⁵ शोचिषा इत्येतत् राजन्तमध्वराणामित्येतेन सम्बध्यते। राजतिश्च दीप्त्यर्थ। शुक्रेण शोचिषा राजन्त दीप्यमानम्। ६। अध्वराणाम्। षष्ठीनिर्देशात् मध्य इति वाक्यशेष। यज्ञाना मध्ये। वेदिस्थमित्यर्थ ॥ ४ ॥

वेङ्कट० महाकर्माण ऊतये प्रियमेधा त्वाम् अहूषत⁷ ईशान यज्ञानाम् अग्निम् शुक्रेण तेजसा ॥ ४ ॥

मुद्गल० महिकेरव प्रौढकर्माण प्रियमेधा प्रियेण यज्ञेनोपेता ऋषय ऊतये रक्षार्थम् अग्निम् अहूषत आहूतवन्त। कीदृशम्। अध्वराणाम् यज्ञाना मध्ये शुक्रेण शोचिषा शुद्धेन⁸ प्रकाशेन राजन्तम् दीप्यमानम् ॥ ४ ॥

घृताहवन सन्त्येमा उ षु श्रुधी गिरः । याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा ॥ ५ ॥

घृतऽआहवन । सन्त्य । इमाः । ऊँ इति । सु । श्रुधि । गिरः । याभिः । कण्वस्य । सूनवः । हवन्ते । अवसे । त्वा ॥ ५ ॥

स्कन्द० घृतमाहूयते यस्मिन् स घृताहवन, तस्य सम्बोधनं हे घृताहवन!। सन्त्य! षणु दाने। दात!। इमा उ सु इत्येतद् पदपूरण। इमा¹⁰ सुष्ठु श्रुधि गिर, याभिः कण्वस्य सूनवः पुत्रा हवन्ते

१. नास्ति वि. २ नास्ति अ ३. नास्ति मूको. ४ नास्ति अ' वि'. ५ शुक्र' अ द्रु ६ तेषष अ ७. शुक्रेण अ द्रु, शुक्र" तस' अ ८. आमूष' वि', आमूष' अ'. ९ शुद्धेन मूको १०. नास्ति दवि.

आत्मन एव वा अथ परोक्षरूपेण[1] प्रतिनिर्देश । वय कण्वपुत्रा आह्वयाम इत्यर्थ । अवसे पालनाय तर्पणाय वा त्वा[2] त्वाम्[3] ॥ ५ ॥

वेङ्कट० प्रियघृतहविष्क[4] भजनशील[5] इमा स्तुती शृणु, याभि कण्वपुत्रा रक्षणाय त्वाम्[6] ह्वन्त ॥५॥

मुद्गल० हे घृताहवन! घृतेनाहूयमान[7] सत्य! फलप्रद[8] अग्ने[9] इमा उ गिर अस्माभि प्रयुज्यमाना अपि स्तोत्ररूपा वाच सु श्रुधि सुष्ठु शृणु । कण्वस्य महर्षे सूनव पुत्रा याभि गीर्भि अवसे स्वरक्षार्थम्[10] त्वा ह्वन्ते त्वाम् आह्वयन्ति ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये एकत्रिंशो वर्ग ॥

त्वां चित्रश्रवस्तम् हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाऽग्ने हव्याय वोळ्हवे ॥ ६ ॥

त्वाम् । चित्रश्रवःऽतम । हवन्ते । विक्षु । जन्तवः । शोचिःऽकेशम् । पुरुऽप्रिय । अग्ने । हव्याय । वोळ्हवे ॥

स्कन्द० त्वाम् हे चित्रश्रवस्तम[1] अतिशयेन पूज्य चित्रं वा[2] अन्न वा धन वा यशो वा यस्य स चित्रश्रवस्तम, तस्य सम्बोधन हे चित्रश्रवस्तम[1] । हवन्ते विक्षु मनुष्यनामैतत् ( द्र निघ २,३ ) । तेन तल्लोका अत्र लक्ष्यन्ते । मनुष्यलोकेषु । जन्तव मनुष्या । कीदृशम् । शोचिष्केशम् शोचिर्दीप्ति ज्वालाख्या, सा केशस्थानीया यस्य स शोचिष्केश, त शोचिष्केशम् । हे पुरुप्रिय! अग्ने[1] । किमर्थम् । हव्याय वोळ्हवे हवींषि वोढुम् ॥ ६ ॥

वेङ्कट० 'चित्रेण श्रवसा श्रुतेन योऽतिशेते तम् त्वाम्[8] स्तुतिभि मनुष्येषु जाता ह्वन्ते[8] ज्वालाकेश बहुप्रिय[9] अग्ने[1] हविष वहनाय ॥ ६ ॥

मुद्गल० हे चित्रश्रवस्तम! अतिशयेन विविधहवीरूपान्नयुक्त[1] पुरुप्रिय! बहूना यजमानाना प्रीतिकर[1] अग्ने! त्वाम् हव्याय वोळ्हवे हविर्वोढुम् विक्षु जन्तव प्रजासु स्थिता यजमाना हवन्त आह्वयन्ति । कीदृशम् । शोचिष्केशम् दीप्तिरूपकेशोपेतम्[11] ॥ ६ ॥

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् । श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥७॥

नि । त्वा । होतारम् । ऋत्विजम् । दधिरे । वसुवित्ऽतमम् । श्रुत्ऽकर्णम् । सप्रथःऽतमम् । विप्राः । अग्ने । दिविष्टिषु ॥ ७ ॥

स्कन्द० नि त्वा होतारम् ऋत्विजम् दधिरे दधति[11] स्थापयन्ति । वसुवित्तमम् धनाना लब्धृतमम् । श्रुत्कर्णम् श्रुतिशील कर्णौ यस्य स श्रुत्कर्णम्[13] । सप्रथस्तमम् 'आर्चन्नत्र मरुत सस्मिन्नाजौ' ( ऋ १,५२,१५ ) इत्यादिप्रयोगदर्शनात्[14] सशब्द सर्वशब्दपर्याय । सर्वत पृथु[15] सप्रथा ।

---

१ अपरो° कु रवि २ नास्ति मूको ३ माम्नि भ ४ घृताहविष्क वि[2] ५ त्वा वि[2] ६ °क्षार्थ सोमे वि भै[2] ७ अत्र रविशोध ८-८ चित्रश्रवस श्रवेन योऽतिशेते° रवि चित्रश्रवस्तमश्रवेन योऽतिशेषे य त्वा वि[2][13] अ[1] ल लप, चित्रं श्रवणीयमन्नेन योऽतिशेते तं त्वा वि[1] भ[2] ९ भजन्ते वि[1] ल, भवन्ति वि[3] १० नास्ति वि[1] लप, प्रिय ल ११ दीप्तरू° वि १२ नास्ति भ कु १३-१३ श्रुतिश्रवणशीलकर्णं भ रवि, °शील कर्णौ य° कु १४ इत्यादिदर्शनात् रवि १५ पृथु भ कु

अतिशयेन सर्वत पृथु[1] समयस्तमम्। विप्रा मेधाविनः । हे अग्ने! दिविष्टिषु दिवमिष्यत[2] याभिर्गन्तु ता दिविष्टय तासु । यागेष्वित्यर्थ ॥ ७ ॥

वेङ्कट० नि दधिरे त्वाम् होतारम् ऋत्विजम् अतिशयेन धनानां[3] लम्भयितारम् श्रुत्कर्णम् सर्वत[4] पृथुतम मेधाविन अग्ने! दिवसागमनेष्वहर्मुखेषु ॥ ७ ॥

मुद्गल० हे अग्ने! विप्रा मेधाविन दिविष्टिषु यागेषु त्वा त्वाम् नि दधिरे स्थापितवन्त । कीदृशम्। होतारम् आह्वातारम् ऋत्विजम् ऋतुषु यजनशीलम् वसुवित्तमम् अतिशयेन धनस्य लम्भयितारम् श्रुत्कर्णम् श्रवणयोग्यकर्णोपेतम् सप्रथस्तमम् अतिशयेन प्रख्यातम् ॥ ७ ॥

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।
बृहद् भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥ ८ ॥

आ । त्वा । विप्राः । अचुच्यवुः । सुतऽसोमाः । अभि । प्रयः । बृहत् । भाः । बिभ्रतः । हविः । अग्ने । मर्ताय । दाशुषे ॥ ८ ॥

स्कन्द० त्वाम्[4] विप्रा मेधाविन ऋत्विज आ[5] अचुच्यवु आच्यावयन्ति। आह्वयन्तीत्यर्थ । सुतसोमा कृतसोमाभिषवा । अभि प्रय सोमलक्षणमन्न प्रति। बृहद्भा बृहती भा दीप्तिर्यस्य तत् बृहद्भा तत्[6]। स्वदीप्त्या[7] अत्यन्तदीप्तम् । बिभ्रतो धारयन्त सोमलक्षणम् हवि । हे अग्ने! मर्ताय दाशुषे मनुष्यस्य यजमानस्यार्थाय ॥ ८ ॥

वेङ्कट० आ गमयन्ति त्वाम् अभिषुतसोमा[8] मेधाविन सोमलक्षणमन्नम् अभि बृहती[9] दीप्ती[10] हवि च[11] धारयन्त अग्ने! मर्ताय[12] यजमानाय होतार ॥ ८ ॥

मुद्गल० हे अग्ने! सुतसोमा अभिषुतसोमयुक्ता विप्रा मेधाविन ऋत्विज प्रय अभि हविर्लक्षणमन्नम् अभिलक्ष्य त्वा त्वाम् आ अचुच्यवु आगमयन्ति । कीदृशम्। बृहत् महान्तम् भा भासमानम्। कीदृशा[13] विप्रा । दाशुषे मर्ताय हविष्प्रदस्य यजमानस्य सम्बन्धि हवि बिभ्रत धारयन्त ॥ ८ ॥

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य ।
इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥ ९ ॥

प्रातःऽयाव्नः । सहःऽकृत । सोमऽपेयाय । सन्त्य । इह । अद्य । दैव्यम् । जनम् । बर्हिः । आ । सादय । वसो इति ॥ ९ ॥

स्कन्द० प्रातर्यजनार्[14] प्रति यान्ति गच्छन्ति ते देवा प्रातर्यावाण तान् प्रातर्याव्ण[15]। हे सहस्कृत! सहस[15] कृत! बलादुत्पादित! । प्राणादि बलात् मथ्यमानोऽग्नि जायते, तेनैवमामन्त्र्यते सहस्कृतेति। सोमपेयाय

1 पृथुतम अ कु 2 °ष्यन्ते कु 3 °नां लम्भयितारम् अ[1] वि[1] 4 त्वा त्वा रवि 5 नास्ति रवि 6 नास्ति मूको। 7 दीप्त्या रवि 8. °षिषुत° ह वि[1] ह 9 बृहती ह 10 दीप्ति वि[1] अ[1]। 11 नास्ति वि[1] अ[1]. 12° मर्ताय अ[1] वि[1] कु 13 कीदृश वि 14-14 प्रति गच्छन्ति ते देवा प्रात° मूको 15 सहस कु रवि.

सोमपानार्थम् । हे सन्त्य ! षणु दाने । दात ! । इह अस्मदीये यज्ञे अद्य दैव्यम् जनम् देवजनः अन्यमपि[2] । ये[3] प्रातर्यावाणो देवाः, ये च इतरे देवाः[4], सर्वान् तानित्यर्थः । बर्हिः आ सादय हे वसो ! प्रशस्य ! धनवन् ! वा ॥ ९ ॥

वेङ्कट० प्रातर्याव्णः देवान् मथनबलेन कृतः सोमपानार्थं भजनीयः अस्मिन् यज्ञे बर्हिः आ सादय दैव्यम् जनम् वासयितः । पूर्वार्धस्य[5] समह उत्तरः ॥ ९ ॥

मुद्गल० हे सहस्कृतः बलेन मथितः सन्त्य ! फलदातः ! वसो ! निवासहेतुभूत अग्ने ! इह देवयजनदेशे अद्य अस्मिन् दिने सोमपेयाय सोमपानार्थम् प्रातर्याव्णः प्रातरागच्छतः देवान् दैव्यम् जनम् अन्यमपि देवताजनम् बर्हिः आ सादय यज्ञं प्रापय ॥ ९ ॥

अ॒र्वाञ्चं॒ दैव्यं॒ जन॒मग्ने॒ यक्ष्व॒ सहू॑तिभिः ।
अ॒यं सोमः॑ सुदानव॒स्तं पा॑त ति॒रोअ॑ह्न्यम् ॥ १० ॥

अ॒र्वाञ्च॑म् । दैव्य॑म् । जन॑म् । अग्ने॑ । यक्ष्व॑ । सहू॑तिऽभिः । अ॒यम् । सोमः॑ । सु॒ऽदा॒न॒वः॒ । तम् । पा॒त॒ । ति॒रःऽअ॑ह्न्यम् ॥ १० ॥

स्कन्द० अर्वाञ्चम्[6] इति कर्मश्रुतेर्योग्यक्रियाध्याहारः । अर्वाञ्चम् अस्मदभिमुखम् आहूय दैव्यम् जनम् हे अग्ने ! यक्ष्व यज । कथमाहूय । सहूतिभिः साह्वानैः[7] । युगपदाहूयेत्यर्थः[8] । अथवा सहाह्वातारः[9] सहूतयः । सहयोगलक्षणा[10] चैषा तृतीया । सहाह्वातृभिरन्यैरग्निभिः सहाहूयेत्यर्थः । [11]अयम् सोमः सुदानवः[11] । 'अर्धर्चो देवदेवत्यः' (तु बृदे ३,११२) । 'अय सोमः इत्ययम्[12] अर्धर्चो देवदेवत्यः प्रत्येतव्यः । अयम् सोमः हे सुदानवः ! शोभनदातारः ! [13]शोभनदाना ! वा[13] । तम् पात पिबत । तिरोअह्न्यम् पार्तीयसवनिकः सोमविशेषः तिरोअह्न्य उच्यते, तं तिरोअह्न्यम् । अथवा तिरः सत इति प्राप्तस्य नामनी (तु या ३,२०) । प्राप्ते वर्तमाने यागाहे भवः तिरोअह्न्यः, तं तिरोअह्न्यम् इति[14] ॥ १० ॥

वेङ्कट० अस्मदभिमुखम् दैव्यम् जनम् अग्ने ! यज समानाह्वानैस्तत्तदनुचरैः [15]सह । अथ देवानाह— अयम्[15] सोमः अभिषुतः शोभनदानाः, तम् पिबत पूर्वस्मिन्नहनि[16] तिरोभूते जातम्[17] अथवा प्राप्तेऽहनि प्रादुर्भूतमिति ॥ १० ॥

मुद्गल० हे अग्ने ! अर्वाञ्चम् अभिमुखम् दैव्यम् जनम् देवतारूपं प्राणिनम् सहूतिभिः समानाह्वानैः देवान्तरैः सह यक्ष्व यज । हे सुदानवः ! सुष्ठुफलदातारो देवाः ! अयम् सोमः युष्मदर्थं सोमः पुरतो वर्तते, तम् सोमम् पात पिबत । कीदृशम् । तिरोअह्न्यम् एतन्नामकम् । पूर्वस्मिन्नह्नि अभिषुतो यः सोमः उत्तरेऽहनि हूयते तस्यैतन्नामधेयम् ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये द्वात्रिंशो वर्गः ॥

---

१ दैव्यं जन अ　२ °न्यदपि अ रवि[1]　३ ये च अ रवि　४ नास्ति अ कु　५ पूर्वार्धस्य वि[1]　६ अर्वाञ्च दैव्यं जनम् अर्वा° अ कु　७ सदाह्वाने रवि　८ °पदाह्वये° अ　९ सहह्वा° रवि　१० °लक्षणे रवि　११-११ नास्ति अ कु, °हे सुदा° रवि　१२ सुदानव अ　१३-१३ नास्ति रवि　१४ नास्ति कु　१५-१५ सहाय देवा° कु, सहायं देवानाहूय वि[1] अ[1]　१६ पूर्वस्मिन्नदोतारो हनि वि[1] लप.　१७ जातम् वि[1]

[४६]

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥ १ ॥

एषो इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥ १ ॥

स्कन्द० 'एषो आश्विनमुत्तमम्' (बृ दे ३,११२)। 'एषो उषा' इत्येतदाश्विनं सूक्तम् अध्यायस्योत्तमम्। एषो उषा अपूर्व्या यत 'पूर्वा अन्या' नास्ति सा अपूर्वा । सर्वप्रथमेत्यर्थः । अपूर्वैवापूर्व्या। स्वार्थिको यत् प्रत्ययः । वि उच्छति तमांसि विवासयति । उदितेत्यर्थः । प्रिया दिवः अत्यन्तसाहचर्यात्[2] दिवः प्रिया उषा इत्यभिधीयते । एतदुक्तं भवति—उदितेयमुषा उषस उदयकालश्चाश्विनोः स्तुतिकालः । अतः स्तुषे व्यत्ययेनायमुत्तमस्य स्थाने मध्यमः । स्तुषे स्तौमि । वाम् युवाम् [3]हे अश्विनौ ! बृहत् महत्[3], सुष्ठ्वित्यर्थः ॥ १ ॥

वेङ्कट० यत [4]पूर्वमन्यो न प्रादुर्भवति सा एषा अपूर्व्या प्रादुर्भवति । दिवः दुहितृत्वात् प्रिया। तदाह बृहता स्तोत्रेण वाम् अश्विनौ ! स्तौमि [5]भवतो काले[5] ॥ १ ॥

मुद्गल० [6]'एषो उषा' इति पञ्चदशर्चं तृतीयं सूक्तम् । प्रस्कण्व ऋषिः । गायत्री छन्दः । अश्विनौ देवते[6]।

एषो एषैव अस्माभिः परिदृश्यमाना प्रिया सर्वेषां प्रीतिहेतुः अपूर्व्या पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना न भवति, किन्तु इदानीन्तनी उषा उषोदेवता दिवः द्युलोकस्य सकाशात् आगत्य वि उच्छति तमो वर्जयति । हे अश्विना ! अश्विनौ ! वाम् युवाम् बृहत् प्रभूतं यथा भवति तथा स्तुषे स्तौमि ॥ १ ॥

या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ॥ २ ॥

या । दस्रा । सिन्धुऽमातरा । मनोतरा । रयीणाम् । धिया । देवा । वसुऽविदा ॥ २ ॥

स्कन्द० [7]"यौ कीदृशौ अत[7]" उच्यते । या दस्रा यौ दस्रौ दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामाऽपरः, तथापि साहचर्यादन्यतरनाम्नाऽपि[8] सर्वत्र उभयोर्व्यपदेशः । अथवा दसि दर्शनदंशनयोः । दर्शनीयौ । अथवा 'दसु उपक्षये, दसु च' । शत्रूणामुपक्षपयितारौ[9] । सिन्धुमातरा सिन्धवो नद्यः, तासां वृष्टिद्वारेण मातरौ निर्मातारौ । मनोतरा मन ज्ञाने । ज्ञातृतरौ । कस्य । रयीणाम् धनानाम् । अथवा[11] मनोतराविति मन्मह इत्यस्य याच्ञाकर्मणो रूपम् (द्र निघ ३,१९)। याचितारौ हविर्लक्षणानां धनानाम् । अथवा याच्ञयाऽत्र[12] पूर्वं दानं लक्ष्यते । दातृतरौ धनानामित्यर्थः । धिया देवा वसुविदा धियेत्येतत् वसुविदेत्येतेन सम्बध्यते । प्रज्ञया धनानां लब्धारौ । देवा देवौ दानादिगुणौ ॥ २ ॥

वेङ्कट० [13]यौ† दर्शनीयौ नदीनां निर्मातारौ धनानाम् अनुमन्तारौ कर्मणा देवौ वसूनां लम्भयितारौ तौ‡ स्तौमि[13] ॥ २ ॥

---

१-१. पूर्वं अन्य रवि. २ °चर्यादुषस अ रवि ३-३ बृहत् महत् अश्विनौ अ ४ एष वि[1] ५-५ देवौ वि[1] अ[2] ६-६ नास्ति वि मै[2] ७-७. कीदृशौ वाम् अ कु ८ °चर्यादन्यतर° अ ९-९ दसु उपक्षये रवि १० °क्षयितारौ रवि ११ नास्ति अ रवि[2] १२ या तत्र अ रवि[2] १३-१३ नास्ति वि[1] अ[2]. † नास्ति लप ‡ नास्ति वि[1] लप अ[1] रवि

मुद्गल० या देवा यौ उभौ अश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुषे इति पूर्वेणान्वयः । कीदृशौ । दस्रा दर्शनीयौ, सिन्धुमातरा समुद्रमातृकौ रयीणाम् धनानाम् मनोतरा मनसा तारयितारौ, धिया कर्मणा वसुविदा निवासस्थानस्य लम्भयितारौ ॥ २ ॥

वृच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद् वां रथो विभिष्पतात् ॥ ३ ॥

वृच्यन्ते । वाम् । ककुहासः । जूर्णायाम् । अधि । विष्टपि । यत् । वाम् । रथः । विऽभिः । पतात् ॥

स्कन्द० वच्यन्ते[1] वच्यतिर्गत्यर्थः[2] । गच्छन्ति वाम् युवयोः स्वभूता ककुहासः 'ककुह'( निघ ३,३ ) इति महन्नाम । महान्तोऽश्वाः । जूर्णायाम् अधि विष्टपि आदिसृष्टावुत्पन्नत्वाद् अत्यन्तचिरन्तनी द्यौः जूर्णे-त्युच्यते । अधीत्युपरिभावे । विष्टप इति[3] दिवोऽभिधानम्[4] । जीर्णाया[5] दिवः[3] उपरि । [6]कदा । उच्यते[6] । यत् यदा वाम् युवयोः स्वभूतः रथः विभिः पक्षिसदृशैरश्वैः पतात् पतति ॥ ३ ॥

वेङ्कट० वच्यन्ते युवयोः [7]स्तोत्राणि जीर्णाया[7] रात्रौ, अपररात्रे । 'विष्टप् रात्रिः, विष्टम्भनात्'[8] । यस्मिन्[9] काले युवयोः रथः अश्वैः[10] पतति ॥ ३ ॥

मुद्गल० हे अश्विनौ[1] वाम् युवयोः सम्बन्धी रथः जूर्णायाम् नानाशास्त्रैः स्तुतायाम् अधि विष्टपि स्वर्गलोके यत् यदा विभिः अश्वैः पतात् पतति गच्छति तदानीम् वाम् युवयोः ककुहासः स्तुतयः वच्यन्ते अस्माभिरुच्यन्ते ॥ ३ ॥

हविषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणिः ॥ ४ ॥

हविषा । जारः । अपाम् । पिपर्ति । पपुरिः । नरा । पिता । कुटस्य । चर्षणिः ॥ ४ ॥

स्कन्द० हविषा सोमलक्षणेन । जारः जरयिता । कस्य । अपाम्[11] । कोऽसौ । अग्निः । कुत एतत् । हविषाऽश्विनोः पूरणवचनादपां च जरयितृत्वात् इह हविषा पिपर्ति पपुरिः इति हविषाऽश्विनोः पूरणमुच्यते । होतृत्वाच्च हविषा देवतापूरणमग्नेः कर्म, नान्यस्य । अपाञ्च[12] जरयिताऽग्निः । कथम् । जाठरावस्थस्तावदशितपीतं जरयंस्तदन्तर्गता अपो जरयति [13]बाह्योऽपि सन्तापयन्नपो जरयति[13] अतोऽग्निर्भवत्यपां जारः । अथवा अपामित्येतत् हविषेत्येतेन सम्बध्यते । वसतीवर्यै-कधनालक्षणानामपां सम्बन्धिना सोमलक्षणेन । वसतीवर्यैकधनामिश्रेण[14] सोमेनेत्यर्थः । जारः आहारस्य जरयिताऽग्निः पिपर्ति । 'पॄ पालनपूरणयोः' । पूरयति । कम् । प्रकरणसामर्थ्याद्[15] युवामश्विनौ । बहुसोमं युवाभ्यामश्विभ्याम्[16] ददातीत्यर्थः । कीदृशोऽग्निः । उच्यते । पपुरिः पूरयिता सोमेन देवानाम् होतृत्वात् हि[17] सर्वदेवानामग्निः[18] सोमेन पूरयिता । हे [19]नरा[1] मनुष्याकारौ![19] अश्विनौ[1] पिता[20] पालयिता यज्ञस्य कृत्स्नस्य वा जगतः । कुटस्य चर्षणिः कुट कौटिल्ये इत्यस्य कुटः यमविभ्रमः उच्यते । स हि [21]श्रुतिविहितात् ऋजोर्मार्गादपेतश्च[21] ।

1 'न्ते वाम् अ कु 2 वच्यतिर्ग' अ कु 3 नास्ति अ 4 दिवाभिधेयं अ रवि 5 जूर्णाया रवि 6-6 नास्ति रवि 7-7 स्तोत्र त्रि[1] अ[2] 8-8 विष्टम्भिर्विष्ट' अ[2] त्रि[1], विष्टम्भनाय कु 9 अस्मिन् कु 10 'रश्वैस्ते अ 11 अपंस अ 12 अपा रवि 13-13 नास्ति अ कु 14 'कधनामि' अ कु 15 प्रकरणात् रवि 16 युवामश्वि' अ कु 17 अग्नि अ, नास्ति कु 18 'देवताना' अ 19-19 मनुष्याकारेण अ 20 पिता कुटस्य पिता मूको 21-21 'विहितमार्गादपेत रवि, 'पेतश्च अ कु

तस्य चर्षणि द्रष्टा । अथवा कुटिलचित्त कुट शठ पुमान्, तस्य द्रष्टा । भक्ताभक्तयो पुंसोर्विशेषज्ञ इत्यर्थ । अथवा कुटशब्द कृतशब्दपर्याय । कृतस्य पुण्यस्य पापस्य च द्रष्टेत्यर्थ[1]। यास्कस्तु 'जारो अपाम्' इत्यादिभि आदित्य उच्यते इति मन्यते । एव ह्याह—'पिता कृतस्य कर्मणश्चायिताऽऽदित्य'[2] ( या ५,२४ ) इति । तदनुपपन्नम् । हविषा[3] पिपर्ति पपुरिरिति सोमलक्षणेन हविषाऽश्विपूरणस्यादित्ये असम्भवात् । [4]होतृत्वाद्धि हविषा] देवतापूरणमग्ने कर्म, नाऽऽदित्यस्य । स्याद् वत् । 'हवि' ( निघ १,१२ ) इत्युदकनाम । हविषा उदकेन जारोऽपाम् आदित्य पिपर्तीति । तन्नो पपद्यते । वृष्टिकर्मणो ह्यादित्येऽसम्भवात्[5], रसानुप्रदानान्मध्यमस्य[6] अनाश्विनत्वप्रसङ्गाच । हवि षोदकेन अपा जार इत्यादिगुणयुक्त आदित्य, पिपर्तीत्यादित्यव्यापारप्रधानत्वादस्या ऋच सत्यपि नरेत्यश्विनो सम्बोधने 'अथापि प्रत्यक्षकृता हि स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि' ( या ७,२ ) इत्येवमादित्यदेवतेयमृक् प्राप्नोति, नाश्विनी । आश्विन[7] चैतत् सूक्तम् । न च यथाऽस्मदभिधानपक्षे सोमलक्षणेन हविषा अग्नि हे नरौ[8] युवां पूरयति इत्येवमश्विनो प्राधान्य श्रवणादाश्विनत्वम्[9] एवमादित्याभिधाने सम्भवति, उदकेनाश्विनोरपूर्यमाणत्वात् । आदित्यो हि मध्यम वोदकेन पूरयेद् भूमिं वा, नाश्विनौ । तस्मात् यथाव्याख्यातमपा जार इत्यादि भिरग्निरेव[9] उच्यते नादित्य इति । अपोह्यमेतद् यास्कवचनम्[10] ॥ ४ ॥

वेङ्कट० हविषा अपाम्[11] जरयिता[12], तेजसा[13] द्यावापृथिवी[14] नेतारौ[7] पूरयति[15] पूरयिता कृतस्य कर्मण पालयिता द्रष्टाऽऽदित्य , तत्र वा सोमीति ॥ ४ ॥

मुद्गल० हे नरा! अश्विनौ दस्रौ! अपां जार स्वकीयतापेनोदकानां जरयिता सूर्य हविषा अस्मदीयेन पिपर्ति देवान् पूरयति । उदिते सूर्ये हविष्प्रदानात् सूर्यस्य पूरकत्वं द्रष्टव्यम् । अत सूर्यो दयकाले युवाभ्याम् आगन्तव्यमित्यर्थ । कीदृशो जार । पपुरि उक्तक्रमेण पूरणस्वभाव [16]पिता पालक[16] कुटस्य चर्षणि कर्मणो द्रष्टा ॥ ४ ॥

आदारो वीं मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुया ॥ ५ ॥

आऽदार । वाम् । मतीनाम् । नासत्या । मतऽवचसा । पातम् । सोमस्य । धृष्णुऽया ॥ ५ ॥

स्कन्द० किमेतावन्मात्रगुण एवाग्नि । न, इत्युच्यते । किं तर्हि । आदारो वाम् । आदर इति व्यन्तस्य आदरिता रूपम् । वाम् मतीनाम् इति मन्यतेरर्चतिकर्मण । मतय स्तुतय इहोच्यन्ते । षष्ठी च[17] 'कर्तृकर्मणो कृति' ( पा २,३,६५ ) इत्येव कर्मणि द्रष्टव्या । प्रकृत्यर्थस्य चेदमादरणस्य कर्म ण्यन्तस्य । ओदनपाचयितेति यथा । आदरयिता युवयो स्तुतीनाम् । युष्मत्स्तुतीराद्रि यमाणानामृत्विजां प्रयोजक इत्यर्थ । अग्निर्हि दैव्यो होता तदधिष्ठितास्तु मानुषा स्तुवन्तीत्यत स्तुतीराद्रियमाणान्[18] ऋत्विज प्रति[19] प्रयोजकत्वम् । अथवा आदार इति त्वण्यन्तस्यैव[20] आदरिता रूपम् । वां मतीनामित्यपि मतयो बुद्धय[21] । आदरिता युवयोर्बुद्धीनाम् । अत्यन्तं युष्मद्विषया

1 दृष्टेति कु, द्रष्ट रवि. २. कुन्दस्य मूको ३ 'संगदत पान्यिताऽऽदित्य रवि ४ रवि म रवि[11], नरौ कु ५-७ नास्ति म कु, 'णोऽप्यादि' रवि[1] ६ 'नुप्रदानं म' भ ७ मश्विनौ म ८ 'अ' थवा' म रवि ९ 'रिरश्विनोरे' भ १०. इह निरुक्तव्याख्यानस्य (या ५ २४) स्कन्दभाष्यस्य च सारां विरोधं विमृश्य । पश्यम् ऋ १,८४,१५ इत्यत्रापि द्र ११ वां कु १२. जर° रि° ए, अर्य° रि° म'; बदवर्ता रि° त्यं १३ तेजसां कु १४ नास्ति कु १५ नास्ति ए १६-१६ नास्ति वि मं' १७ नास्ति रवि; एरि म १८. माद्रियमाणा म १९. नास्ति म २०. तदेव रवि, व्यन्त° म कु २१ नास्ति म रवि, वक्ष्यमाणनां कु° कु

परत्वात् मत्[1] युवा मनसा चिन्तयथ[2] तस्याप्यादरितेत्यर्थः । हे नासत्या[1] नासत्यनामानौ[1] । अथवा सत्यावेव[3] नासत्यौ । द्वौ प्रतिषेधौ प्रकृतिं गमयतः । सत्यावेव । मतवचसा ! । अभिमतवचनेन[4] एवरूपोऽग्निरावां सोमेन पूरयतीत्येतत् ज्ञात्वा पातम् पिबतम् सोमस्य सोमं सोमस्य वैकदेशं स्वांशलक्षणम् । धृष्णुया प्रथमाया अयं यादेशः । क्रियाविशेषणञ्चैतद् द्रष्टव्यम् । धृष्णु[5] धृष्टं प्रगल्भम् । निःशङ्कौ सर्वलोकप्रकाशं पिबतमित्यर्थः ॥ ५ ॥

वेङ्कट० तीव्रत्वादादारकः युवयोः बुद्धीनां सोमः नासत्यौ[1] प्रियस्तोत्रौ[6], तं सोमं पिबत[7] मनसो धर्षणम् ॥ ५ ॥

मुद्गल० हे मतवचसा ! अभिमतस्तोत्रौ[1] नासत्या[1] अश्विनौ[1] वाम् युवयोः मतीनाम् बुद्धीनाम् आदारः प्रेरको यः सोमोऽस्ति, सोमस्य तं सोमम् पातम् युवां पिबतम् । कीदृशं सोमम् । धृष्णुया धर्षणशीलम् । मदकरत्वेन तीव्रमित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये त्रयस्त्रिंशो वर्गः ॥

## या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषम् ॥ ६ ॥

या । नः । पीपरत् । अश्विना । ज्योतिष्मती । तमः । तिरः । ताम् । अस्मे इति । रासाथाम् । इषम् ॥ ६ ॥

स्कन्द० या नः अस्माकम् पीपरत् पृ पालनपूरणयोः इत्यस्यैतत्[8] ण्यन्तस्य रूपम् । पालयति । रक्षती त्यर्थः[9] । हे अश्विनौ ! ज्योतिष्मती ज्योतिषा[10] सारवती सर्वलोकप्रकाशा[11] वा । किं पीपरत् । उच्यते तमः तिरः तिरः सत् इति प्राप्तस्य नामनी[12] (द्र या ३,२०) । प्राप्तं मानसं तमः । येनानेन पुनदारपोषणाशक्तिप्रतिघातजेन मानसेन व्याप्ता [13]स्म, तदपनयने[13] समर्थेत्यर्थः[14] । अथवा न इति द्वितीया । या अस्मान्[15] पीपरत् पूरयति । तर्पयतीत्यर्थः । ज्योतिष्मती च[16] तमस्तिरः । कर्मोपसर्गश्रुतेरत्र[17] योग्यक्रियाध्याहारः । तमस्तिरस्करोति । तिरस्कारेण चात्र प्रकाशो लक्ष्यते । सर्वलोकप्रकाशा भवतीत्यर्थः । ताम् अस्मे रासाथाम् इषम् रासाथां दत्तम् इषमन्नम् ॥ ६ ॥

वेङ्कट० यदन्नम् अस्मान् उज्ज्वलम्[18] अश्विनौ[1] दारिद्र्यलक्षणात् तमसः अभ्यन्न पारयति तत् अन्नम् अस्मभ्य दत्तम् ॥ ६ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! ज्योतिष्मती रसवीर्यादिरूपज्योतिर्युक्ता या इट्[19] अन्नम् अस्मान् पीपरत् पारयेत् दुःखं प्रापयेत् । किं कृत्वा । तमः दारिद्र्यरूपम् अन्धकारम् तिरः अन्तर्हितं विनष्टं कृत्वा । ताम् इषम् तादृशमन्नम् अस्मे अस्मभ्यम् रासाथाम् युवां दत्तम् ॥ ६ ॥

## आ नो नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथम् ॥ ७ ॥

आ । नः । नावा । मतीनाम् । यातम् । पाराय । गन्तवे । युञ्जाथाम् । अश्विना । रथम् ॥ ७ ॥

---

१ नास्ति म कु २ °मन कु ३ नास्ति रवि ४ वचनेन अ रवि ५. धृष्णुया रवि, धृष्णु यद् अ कु ६ °थ रात्री वि[1] अ[2] ७ पिबत ल ८ इत्यनेतद् अ ९ °क्षति निर्वाय कु १० °तिया अ कु ११ °काशो कु १२ नाम कु १३-१३ स २१ येन मूको १४ सर्वेत्यप (?) रवि १५ यानस्मा° अ कु १६ नास्ति रवि १७ °श्रुते रवि १८ °ज्ज्वलम् वि[1] अ[2] १९ इषम् वि

स्कन्द० न[1] अस्मान् नावा आ यातम् । किमर्थम् । मतीनाम् पाराय गन्तव पारमन्तम् । 'गत्यर्थकर्मणि०' ( पा २,३,१२ ) इत्येनमेषा[2] कर्मणि चतुर्थी । अश्विनावागमिष्यत, तावागतौ यस्या मंहे, तावियौ कामान् न सम्पादयिष्यत —इत्येवमादिकामानामभिलापलक्षणानामस्मन्मतीना पारमन्त गन्तुम् । युष्मदागमनसम्बद्धानस्मदभिलापान् फलप्राप्तिपर्यन्तान्[3] कर्तुमित्यर्थ । फल प्राप्त्यन्ता हि सर्वाभिलापा । किञ्च अस्मान् प्रत्यागन्तुम् युञ्जाथाम्[4] हे अश्विनौ ! रथम् । यत्र नावाऽऽगन्तव्य जले तत्र नावा आयातम्[5], यत्र रथेन स्थले तत्र रथेनत्यर्थ ॥ ७ ॥

वेङ्कट० आ यातम् अस्माक[6] भवतो[7] नावा स्तोत्राणा पार गन्तुम् । 'जलमुत्तीर्य अश्विनौ आगच्छत[8] तत ऊर्ध्व[9] गमनार्थम् रथ च युञ्जाथाम् इति ॥ ७ ॥

मुद्गल० हे अश्विना ! अश्विनौ ! मतानाम् स्तुतीनाम् पाराय गन्तवे पार गन्तुम् नावा नौरूपण गमनसाधनेन न अस्मान प्रति आ यातम् समुद्रमध्यादागच्छतम् । भूमावागन्तुम् रथम् भवदीयम् युञ्जाथाम् साश्व कुरुतम् ॥ ७ ॥

अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवः ॥ ८ ॥

अरित्रम् । वाम् । दिव । पृथु । तीर्थे । सिन्धूनाम् । रथ । धिया । युयुज्रे । इन्दव ॥ ८ ॥

स्कन्द० अरित्रम्[10] अर्तिर्गत्यर्थ । गच्छति येन नौ तत् अरित्रम् । अपहलक[11] इत्यपभ्रंशेन यन्नाविकाना[12] प्रसिद्ध[13] तत् । वाम् युवयो स्वभूतम् । दिव अपि सकाशात् पृथु विस्तीर्णतरम् । तीर्थे उत्तरण प्रदेशे सिन्धूनाम् नदीनाम् रथ जल स्थले च गमनसाधन युवयोरस्तीत्यर्थ । धिया 'धी' ( निघ २,१ ) इति कर्मनाम । अभिषवादिसंस्कारकर्मणा । युयुज्रे[14] युक्ता । इन्दव सोमा । अभिषवादिभि संस्कारै संस्कृता इत्यर्थ । एवत् ज्ञात्वा गमनसाधनाना गमनप्रयोजनस्य पिपासितव्य सोमस्य च विद्यमानत्वात् आगच्छतमित्यर्थ ॥ ८ ॥

वेङ्कट० समुद्रगमनसाधन जलपात्रम् वाम्[15] दिव अपि [16]पृथु भवति[16] । अथ जलानाम् उत्तरणदेशे[17] रथ उपतिष्ठति[18] । कर्मणा नानाविधेन [19]यज्ञे सोमाश्च भवद्भ्या युज्यन्ते[1] ॥ ८ ॥

मुद्गल० हे अश्विनौ ! वाम् युवयो दिव पृथु द्युलोकादपि विस्तीर्णम् अरित्रम् गमनसाधनं नौरूपम् सिन्धूनाम् समुद्राणाम् तीर्थे अवतरणप्रदेशे विद्यत इति शेष । रथ च भूमौ गन्तु विद्यते । इन्दव सोमा धिया भवद्विषयेण कर्मणा युयुज्रे युक्ता बभूवु ॥ ८ ॥

दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे । स्वं वव्रिं कुह धित्सथः ॥ ९ ॥

दिव । कण्वास । इन्दव । वसु । सिन्धूनाम् । पदे । स्वम् । वव्रिम् । कुह । धित्सथ ॥ ९ ॥

1 आ नो नावा भ कु 2 शयनत रवि 3 °मिसम्बद्धान् कु °मिसम्बद्धान् स्थने भ °नान् सम्बन्धान् रवि 4 यज्ञानां भ 5 यातम् भ रवि 6 °स्मान् भ[1] वि[1], 7 नास्ति भ[1] वि[1] 8-8 नास्ति कु °तरतौ जले नावा स्थल रथेनेत्यर्थ वि[1] भ[1], 9 कध्वग° भ[1] वि[1] 10 नास्ति रवि °वयम् भ कु 11 भरत्र कु 12 नावि° रवि 13 °सद्ध भ 14 नास्ति भ 15 नास्ति वि[1] 16-16 प्रभुरस्ति वि[1] भ[1]; पृथक भ[1] वि[1] भ[1] ए 17 °देशे वि[1], °देशे भ[1] वि[1] भ[1] 18 उप° [illegible] वि[1] भ[1] 19-19 यज्ञार्थं सोमाश्च युज्यते सोमा वि[1] भ[1]

स्कन्द० दिव इत्यपादानपञ्चमीनिर्देशाद् योग्यक्रियाध्याहार । दिव आगतयोरश्विनो हे कण्वास[1] मत्पितु कण्वस्यापत्यभूता मत्पुत्रादय[1]। अथवा 'कण्व' ( निघ ३,१५ ) इति मेधाविनाम । मेधाविन[1] ऋत्विज[1] मत्पुत्रादय[1] वा। इन्दव वसु सोमधनम्[1]। धनतया चात्र तद्गत[2] स्वामित्व प्रतिपाद्यते। दिव आगतावश्विनौ सोमाना स्वामिनौ भविष्यत । दिव आगताभ्यामश्विभ्या वय सोम दास्याम इत्यर्थ. । क्व । सिन्धूनाम् पदे सिन्धवोऽत्र स्यन्दनादाहुतय उच्यन्ते, तासा पद स्थान यज्ञ तत्र । सर्वाहुतीना स्थानभूते यज्ञे इत्यर्थ । अथवा सिन्धवोऽत्र आप उच्यन्ते। 'नाभाकस्य प्रशस्तिभिर्य सिन्धूनामुपोदये' ( ऋ ८,४१,२ ) इति यथा[3] । तासा [4]पदे अन्तरिक्षे[4] । पञ्चम्यर्थे सप्तमी । अपा स्थानादन्तरिक्षात् दिवो वा आगतयोरित्यर्थ[5] । पर पाद प्रत्यक्षकृतो भिन्न वाक्यम् । हे अश्विनौ[1] स्वम् आत्मीयम् वव्रिम् रूपम्[6] कुह [7]क्व स्थाने[7] धित्सथ धारयितुमिच्छथ । 'क्व स्वशरीरेण वर्तेथे येनास्मद्यज्ञ नागच्छथ' इत्यर्थ ॥ ९ ॥

वेङ्कट० दिव पतन्ति हे कण्वा[1] दीप्ता रश्मय[1]। वासकमादित्याख्य तेजश्च[10] अपा[11] स्थाने[11] प्रादुर्भवति । तत्र युवाम् अश्विनौ[1] [12]स्वम् रूप कस्मिन् निधातुमिच्छथ[12] ॥ ९ ॥

मुद्गल० हे कण्वास[1] कण्वपुत्रा[1] अश्विनावित्थ पृच्छतेति शेष । कथमिति तदुच्यते । दिव द्युलोक सकाशात् इन्दव सूर्यरश्मय प्रादुर्भूता । सिन्धूनाम् अपाम् वृष्टिरूपाणा स्यन्दनस्वभावानाम् पदे स्थाने अन्तरिक्षे वसु अस्मदादिनिवासहेतुभूतम् उष कालीन ज्योतिराविर्भूतमिति शेष । अस्मिन्नवसरे युवाम् स्वम् वव्रिम् स्वकीय रूपम् कुह धित्सथ कुत्र स्थापयितुमिच्छथ । अत्रागत्य प्रदर्शयतमिति तात्पर्यार्थ ॥ ९ ॥

अभू॑दु भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ । व्य॑ख्यज्जि॒ह्वयाऽसि॑तः ॥ १० ॥

अभू॑त् । ऊँ॒ इति॑ । भा । ऊँ॒ इति॑ । अं॒शवे॑ । हिर॑ण्यम् । प्रति॑ । सूर्यः॑ । वि । अ॒ख्य॒त् । जि॒ह्वया॑ । असि॑तः ॥ १० ॥

स्कन्द० स्यादेतत्, किमेवमतित्वरितोऽसि इत्यत[14] आह । अभूत् भा उ उकारावुभावपि[15] पदपूरणौ । अभूत्[16] भा प्रभा । कस्य । अशव अंशवो रश्मय । षष्ठीबहुवचनस्य स्थान इद चतुर्थ्येकवचनम् । अंशूनाम् आदित्यरश्मीनाम् । हिरण्यम् प्रति सूर्य प्रतिशब्दोऽत्र सामर्थ्यादुपमाया द्रष्टव्य[17] । सूर्योऽपि हिरण्यमिव । सूर्योऽभ्युदयाभिमुखीभूत इत्यर्थ । उदयवेलायां हिरण्यसदृश सूर्यो भवति, हिरण्यसदृशी च भा । भूयश्च[18] वि अख्यत् विविध प्रकाशितवान् । किम् । सामर्थ्यात् त्रैलोक्य वा दिशो वा । केन । जिह्वया जिह्वास्थानीयत्वादत्र जिह्वा आदित्यदीप्तिरुच्यते । उद्यन् ह्यादित्यो रसानादत्ते[19]

---

१ सोमं धन रवि २ तद्गत कु ३ अथ अ कु ४ ४ पदमन्तरिक्षम् अ कु ५ अन्तरिक्षादागतयो° अ कु ६ भिदरूपम् अ ७ ७ स्वधा° अ कु ८ ८ स्वशरीरेण वर्तेथे येनास्मद्यज्ञनागा° मूको ९ °श्मयो वा वि[1,2] अ[1] रूप रवि १० तेज कु ११ आपदा रवि[1,2] १२ °ने अन्तरिक्षे त्रि[1] अ[2] १३ १३ स्वरूप क निधातु वि[1] अ[2] १४ इति तत अ रवि १५ नास्ति अ १६ नास्ति रवि १७ °व्यम् कु १८ अभूत्व अ कु १९ °दत्ते जिह्वया अ

जिह्वास्थानीयया दीप्त्येत्यर्थः । असित षिञ् बन्धने इत्यस्यैतद्रूपम् । तथा हि वामदेवोऽपि वक्ष्यति— 'अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न' (ऋ ४,१३,५) इति । क्वचिदप्यनिबद्ध इत्यर्थः ॥ १० ॥

वेङ्कट० अभूत् दीप्तिः[1] रश्मेरनन्तरमुदयवेलायाम् । [2]हिरण्यम् प्रति आसीत् सूर्यः । तत्सदृशोऽभवद् इत्यर्थः[2] । तदनन्तरम् जिह्वया [3]ज्वालया अबद्धः[3] प्रकाशयति सर्वं जगत् ॥ १० ॥

मुद्गल० भा उ सूर्यस्य दीप्तिस्तु अश्वे उप कालीनरश्मिसिद्ध्यर्थम् अभूत् उ प्रादुर्भूतैव[4] । सूर्यः च हिरण्यम् प्रति स्वकीयोदयेन हिरण्यसदृशोऽभूत् । अग्निः च असित स्वकीयदीप्ते सूर्यप्रवेशेन[5] स्वयं कृष्णो भूत्वा जिह्वया स्वकीयया ज्वालया वि अख्यत् प्रकाशितवान् । तस्मादद्य युवयोरागमनकाल[6] इत्यर्थः ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये चतुस्त्रिंशो वर्गः ॥

अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवः ॥ ११ ॥

अभूत् । ऊँ इति । पारम् । एतवे । पन्थाः । ऋतस्य । साधुऽया । अदर्शि । वि । स्रुतिः । दिवः ॥ ११ ॥

स्कन्द० किञ्च अभूत् उ पारम् एतवे गन्तुम् । पन्थाः पथिस्थानीयत्वात् आपतत्यनेन यज्ञ इति वा पन्था अहरनाभिप्रेत[7] । अहरपि प्रवृत्तमित्यर्थः । कस्य पारमेतवे । ऋतस्य यज्ञस्य । कीदृशमहः । साधुया साधु शोभनम् । कथं ज्ञायते । यतः[8] अदर्शि विविधं स्रुतिः दृश्यते[8] सूर्यालोकस्य[9] । एतदुक्तं भवति—अभूत् प्रभा आदित्यरश्मीनाम् । सूर्यः [10]अपि हिरण्यसदृश उदयाभिमुखोऽभूत् । यज्ञपरिसमाप्त्यर्थम् अहरपि प्रवृत्तम् । अतः परं भवतोर्योगकालोऽतिवर्तते । तेन त्वरमाणो ब्रवीमि† —'स वत्रि गृह निन्सथ' ( ऋ १, ४६ १ ) इति[11], येनासचन्[11] नागच्छथ इत्यर्थः ॥ ११ ॥

वेङ्कट० अपरां[13] दिशं प्रति[13] गन्तुमुद्युक्तस्य आदित्यस्य साधु अभवत् पन्थाः । दिवः मध्ये कश्चन [14]भागो वि अदर्शि, येन[14] सूर्यो गच्छति ॥ ११ ॥

मुद्गल० ऋतस्य सूर्यस्य पारम् एतवे रात्रेः पारभूतमुदयाद्रिं गन्तुम् पन्थाः मार्गः साधुया समीचीनः अभूत् उ निष्पन्न एव । दिवः द्योतनात्मकस्य सूर्यस्य स्रुतिः प्रसृता दीप्तिः[15] वि अदर्शि विशेषेण दृष्टा । तस्मात् अश्विनौ[1] युवाभ्याम् आगन्तव्यम् ॥ ११ ॥

तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतोः ॥ १२ ॥

तत्ऽतत् । इत् । अश्विनोः । अवः । जरिता । प्रति । भूषति । मदे । सोमस्य । पिप्रतोः ॥ १२ ॥

---

१ °दीप्तः° वि॰. २-२ °क्ष्यम् इत्यमीद, सूर्यस्तादृशोऽभवदित्यर्थ । तस्याद्युना रश्मीनां मध्ये हिरण्मयी अभूत् वि॰ अ॰ ३-३ °ज्वालो बद्ध एपं, °ज्वाला अबद्धा वि॰; °ज्वाला बद्ध. कु वि॰ । ४. °दुर्भूत मै॰ ५ °सूर्यस्य प॰ मूको ६ °रागमकाल मै॰ ७ °प्रेतम् अ ८ नास्ति कु ९ से मूको १० °र्थं को॰ अ. सूर्ये° कु ११-११. नास्ति अ † ब्रवीमि कु १२. °पराक्रम् अ १३ परां कु, अपरं वि॰. १४ नास्ति अ॰ वि॰ १५-१५ °गौडी भद्° ए वि॰ इति अ॰, °द्यो'ये° अ॰ वि॰ एप १६ नास्ति वि मै॰

स्कन्द० 'तत्तत् इत्'[1] तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो[2] यच्छब्दोऽध्याहर्तव्यः।[1] प्रति इत्ययं च कर्मप्रवचनीयः अवः इत्येतेन सम्बन्धयितव्यः। यद्यदुत्कृष्टम् तत्तत् अश्विनोः अवः पालनं प्रति जरिता स्तोता भूषति भवति। मदे सोमस्य सोममदे सति। सोमेन मत्तयोः सतोरित्यर्थः। विप्रतोः पूरयतोः[3]। कम्। सामर्थ्यात् स्तोतारमेव। एतदुक्तं भवति—यदीयेन सोमेनाश्विनौ आत्मानं तर्पयतः तं यद्यदुत्कृष्टं पालनं तेनतेन पालयत इति ॥ १२ ॥

वेङ्कट० उपभि[4] तत्तत् एव अश्विनोः आश्रितविषयं रक्षणं स्तोता अलङ्करोति प्रकाशयति, यद् रक्षणम् सोमस्य मदे पूरयतोरभूदिति ॥ १२ ॥

मुद्गल० जरिता स्तोता अश्विनोः सम्बन्धि तत्तत् इत् पुनःपुनः कृतं सर्वमपि अवः अस्मद्विषयं रक्षणम् प्रति भूषति प्रत्येकमलङ्करोति। तदातदा प्रशंसतीत्यर्थः। कीदृशयोः अश्विनोः। मदे हर्षे निमित्तभूते सति सोमस्य विप्रतोः सोमस्य पालकयोः[5] ॥ १२ ॥

वावसाना विवस्वति सोमस्य पीत्या गिरा। मनुष्वच्छंभू आ गतम् ॥ १३ ॥

वावसाना। विवस्वति। सोमस्य। पीत्या। गिरा। मनुष्वत्। शंभू इति शम्ऽभू। आ। गतम् ॥ १३ ॥

स्कन्द० वावसाना[6] नेदमामन्त्रितम्। प्रत्यक्षकृतश्चायं मन्त्रः। अतो यत्तच्छब्दावध्याहृत्य "एकवाक्यता नेया[7]। येन युवां वावसाना। ताच्छील्येऽयं चानश्[8]। अत्यर्थं[9] वसनशीलौ व्यवस्थानशीलौ। क्व[10]। विवस्वति यजमाननामधेयमेतत् शाकपूणिना पठितम्। तेन चात्र[11] स्वगृहं[11] प्रतिपाद्यते। यजमानगृह इत्यर्थः। केन हेतुना। सोमस्य पीत्या पानेन गिरा वाचा च स्तुतिलक्षणया। सोमपानार्थं स्तुत्यर्थं चेत्यर्थः। तेन मनुष्वत् मनुष्यवत् शंभू! सुखस्य भावयितारौ! अस्मद्गृहम् आ गतम् आगच्छतम् ॥ १३ ॥

वेङ्कट० वसनशीलौ यजमाने सोमपानेन स्तोत्रेण च[11] हेतुना सुखस्य भावयितारौ! नरवदिह आ गतम्, अपि वा मनोरिव यज्ञे ॥ १३ ॥

मुद्गल० हे शम्भू! सुखस्य भावयितारौ! अश्विनौ! मनुष्वत् मनौ इव विवस्वति परिचरणवति यजमाने वावसाना निवासशीलौ युवाम् सोमस्य पीत्या सोमपाननिमित्तम् [12]"गिरा स्तुतिनिमित्तं च[12] आ गतम् आगच्छतम् ॥ १३ ॥

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत्। ऋता वनथो अक्तुभिः ॥ १४ ॥

युवोः। उषाः। अनु। श्रियम्। परिऽज्मनोः। उपऽआचरत्। ऋता। वनथः। अक्तुऽभिः ॥ १४ ॥

स्कन्द० युवो.[14] इत्येतत् अनु इत्येतेन सम्बध्यते। अनु-शब्दश्च पश्चाद्भावे। युवयोः पश्चात्। कीदृशयोः। परिज्मनो. अजतेर्गत्यर्थस्येदं रूपम्। सर्वतोगामिनोः। उषाः श्रियम् ज्योतिर्लक्षणम् उपाचरत् उपागच्छति[16] प्रतिपद्यते। अश्विनोर्ह्यूर्ध्वं मध्यरात्रात् कालः। ततः परः[17] उपसः। अथवा

१-१. नास्ति रवि. २. °थोगार्थ° कु. ३. °यित्रे. कु. ४. नास्ति कु. ५. नास्ति वि. ६. °ना विवस्वति कु. ७-७. °कृता नेयम् रवि. ८. शानप् कु अ. ९. °त्यर्थं° रवि. १०. नास्ति अ कु. ११. °त्र ना ··· मिन्दा रवि[13]. १२. स्व गृ° अ रवि. १३. नास्ति अ° वि[1]. १४-१४. नास्ति वि. १५. युवोरुषा युवोः कु. १६. उपग° अ रवि. १७. परम् रवि.

युवोरित्येतत्[1] श्रियम् इत्येतेन सम्बध्यते। युवयोः श्रियमुषाः अनूपाचरत् अनुगच्छति। युवयोः श्रिया सहेत्यर्थः। किञ्च ऋता यज्ञान्[2] युवाम् वनथः सम्भजथः। कीदृशान्। अक्तुभिः 'अक्तुः' (निघ १,७) इति रात्रिनाम। रात्र्या च तस्याः पर्याया लक्ष्यन्ते। इत्थंभूतलक्षणा एषा तृतीया। रात्रिपर्यायैः सम्बद्धानित्यर्थः[3]। अथवा अक्तुशब्दोऽत्र सोमवचनः[4]। 'होतारमक्तोरतिथिं विभावसुम्' (ऋ १०,९२,१) इति यथा। सोमैः सम्बद्धान्[5]। सोमयागानित्यर्थः ॥ १४ ॥

वेङ्कट० युवयोः[6] श्रियम् उषाः अनु उपाचरत् पश्चाद् युवयोरागच्छति परितो गन्त्रोः। यज्ञान् युवां रात्रिभिर्गच्छन्तीभिः सह सम्भजथः ॥ १४ ॥

मुद्गल० हे अश्विनौ! परिज्मनोः परितो गन्त्रोः युवोः युवयोरुभयोः श्रियम् अनु आगमनरूपां शोभामनुसृत्य उषाः उपाचरत् उषःकालदेवता इहागच्छत्[7]। युवयोरागतयोः सतोः पश्चादागतेत्यर्थः। युवाञ्च अक्तुभिः रात्रिभिः ऋता यज्ञगतानि हवींषि वनथः कामयेथे सम्भजेथे ॥ १४ ॥

उभा पिबतमश्विनोभा नः शर्म यच्छतम्। अविद्रियाभिरूतिभिः ॥ १५ ॥

उभा। पिबतम्। अश्विना। उभा। नः। शर्म। यच्छतम्। अविद्रियाभिः। ऊतिऽभिः ॥ १५ ॥

स्कन्द० 'उभा पिबतम्' उभौ युवां पिबतं सोमं हे अश्विनौ!। पीत्वा उभौ नः अस्मभ्यम् शर्म सुखं गृहं वा यच्छतम्। दत्तमित्यर्थः। अविद्रियाभिः दृ विदारणे। सहयोगलक्षणा चैषा तृतीया। अविदारणीभिः अविनाशिनीभिः ऊतिभिः पालनैस्सह। स्थिराणि च पालनानीत्यर्थः ॥ १५ ॥

वलभीविनिवासैतामृगर्थागमसंहृतिम्।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
तृतीयोऽध्यायः ॥

वेङ्कट० उभौ सोमम् अश्विनौ! पिबतम्। उभौ च अस्मभ्यं सुखम् यच्छतम् रक्षणपरैः 'गमनैः इति' ॥१५॥

इत्थं तृतीयमध्यायं व्याकरोत् प्रथमेऽष्टके।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके तृतीयोऽध्यायः ॥

मुद्गल० हे अश्विना! अश्विनौ! युवाम् उभा उभौ पिबतम् सोमपानं कुरुतम्। तत ऊर्ध्वम् उभौ युवामुभौ अविद्रियाभिः प्रशस्ताभिः ऊतिभिः रक्षाभिः नः अस्मभ्यम् शर्म सुखम् यच्छतम् ॥ १५ ॥

—※—

इति प्रथमाष्टके तृतीयाध्याये पञ्चत्रिंशो वर्गः ॥
इति ऋग्वेदे सभाष्ये प्रथमाष्टके तृतीयोऽध्यायः समाप्तः ॥

---

१. युवये रि° अ. २. यज्ञम् अ. ३. सम्बन्धानि° अ. ४. सोमः अ. ५. सम्बन्धान् अ. ६. युवोः वि. ७. 'गच्छत् वि मै°. ८-८. नास्ति वि. ९-९. अविनाशिनीभिः पालनैः सह अ° वि°.

[ ४७ ]

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ १ ॥

अयम् । वाम् । मधुमत्ऽतमः । सुतः । सोमः । ऋतऽवृधा । तम् । अश्विना । पिबतम् ।
तिरःऽअह्न्यम् । धत्तम् । रत्नानि । दाशुषे ॥ १ ॥

स्कन्द० 'आश्विनं प्रथमं सूक्तम्' । आश्विनमेतदध्यायस्य प्रथमं सूक्तम् । तम् अश्विना इति तच्छब्द-श्रुतेर्यच्छब्दोऽध्याहर्तव्यः । अयम् वाम् तादर्थ्ये एषा चतुर्थी । युवयोरर्थाय मधुमत्तमः मधुर-स्वादुतमः[1] सुतः सोमः । हे ऋतावृधा ! यज्ञस्य वर्धयितारौ[2] ! [3]तं सुतं सोमं[3] हे अश्विनौ ! पिबतम् । तिरोअह्न्यम् तार्तीयसवनिकः[4] सोमविशेषः तिरोअह्न्य उच्यते । तं तिरोअह्न्यम् । अथवा तिरः सतः इति प्राप्तस्य नामनी ( तु. या ३,२० ) । प्राप्तयागाहे[5] भवः तिरोअह्न्यः, तं तिरो-अह्न्यम् । पीत्वा च धत्तम् दत्तम् रत्नानि धनानि दाशुषे यजमानाय ॥ १ ॥

वेङ्कट० *अयं वा मधुमत्तमः माधवो व्याचिकीर्षति ।
प्रदर्शयन् समस्तानां स्वरव्यत्यासकारणम् ॥ १ ॥

आद्युदात्ताः समासस्था अन्तोदात्ता भवन्ति च ।
अन्तोदात्ताश्चाद्युदात्तास्त्वयजन्तः प्राकृतं स्वरम् ॥ २ ॥

विश्वशब्द[6] आद्युदात्तो 'विश्वे देवासो अस्रिधः'[7] ।
'विश्वं समत्रिणं दह'[8], 'पतिर्विश्वस्य भूमनः'[9] ॥ ३ ॥

अन्तोदात्तः समासस्थो 'विश्वामित्रस्य रक्षति'[10] ।
[11]'अग्निं च'[11] विश्वशंभुवमापश्च विश्वभेषजीः'[12] ॥ ४ ॥

तत्राऽऽहुः कारणमिदं विश्वार्थः केवलं स्फुटः[13] ।
समस्ते तु [14]प्रत्ययार्थः प्रकृत्यर्थोपसर्जनः[14] ॥ ५ ॥

दर्शयेदसमस्तार्थमयं न्यास इतीदृशम् ।
मित्रं न्यासस्य सर्वस्य [15]समस्तेऽर्थं प्रदर्शयेत्[15] ॥ ६ ॥

---

१. मधुरः स्वादु° अ, °स्वादु° कु ति. २. नास्ति ति. ३-३. सुतं ति कु; तम अ. ४. °सवनिकसोम° ति. ५. प्राप्ते यागाहे ति. * इतः प्रभृति आऽष्टकम् अनुक्रमणीश्लोका न सन्ति वि[1] अ[1]. ६. विश्वं श° वेङ्कम. ७. ऋ १,३,९; °सोऽस्रिधः वेङ्कम. ८. ऋ १,३६,१४. ९. ऋ ९,१०१,७. १०. ऋ ३,५३,१२. ११-११. अग्निश्च वेङ्कम. १२. ऋ १,२३,२०. १३. स्फुटम् वि[1] अपं. १४-१४. प्रकृत्यर्थः प्रत्ययार्थोप° वेङ्कम; °र्थोपसर्जनम् वि[1] अपं; °पदर्शन. अ[1]. १५-१५. समर्थेऽर्थ प्रदर्शयन् वि[1] अपं.

अन्तोदात्तो वीरशब्द "स घा वीरो न रिष्यति"[२] ।
आद्युदात्तो बहुव्रीहौ 'रयिं धत्त सुवीरम्'[३] ॥ ७ ॥
अमित्रान् वीरयत्येष इत्यर्थे केवले भवेत् ।
कल्याणवीरमित्यर्थे[४] समस्तस्य प्रदर्शयेत् ॥ ८ ॥
तात्पर्यं यदि पूर्वस्मिंस्तदा तत्र स्वरो भवेत् ।
'सुप्रवीरस्य बृहत'[५] इति तत्र निदर्शनम् ॥ ९ ॥
सर्वेष्वेषु समासेषु कार्या सूक्ष्मेक्षिका बुधैः ।
पदेषु चासमस्तेषु शुद्धमर्थमभीप्सुभिः ॥ १० ॥
प्रकृतौ प्रत्यये वाऽपि स्वरो यत्र व्यवस्थितः ।
तात्पर्यं तत्र शब्दस्य स्थापयेदिति निर्णयः ॥ ११ ॥

प्रस्कण्व । अयम् शुभयो सुत सोम, तम् पिबतम् इति ॥ १ ॥

मुद्गल० 'अयं वाम्' इति दशर्चं चतुर्थं सूक्तं प्रागाथम् । कण्वपुत्रः प्रस्कण्व ऋषिः । प्रथमा तृतीयाद्या अयुजो बृहत्यः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । अश्विनौ देवते ।[१]

हे ऋतावृधा । यज्ञस्य वर्धयितारौ[२] अश्विना । अश्विनौ । वाम् शुभयो अयम् पुरोवर्ती सोमः सुतः अभिषुतः । कीदृशः । मधुमत्तमः अतिशयेन माधुर्यवान् । तिरोअह्न्यम् तिरोभूते पूर्वस्मिन् दिने[३] अभिषुतम् तम्[४] सोमम् पिबतम् । दाशुषे हविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि धत्तम् प्रयच्छतम् ॥ १ ॥

त्रि॒व॒न्धु॒रेण॑ त्रि॒वृता॑ सु॒पेश॑सा॒ रथे॒ना या॑तमश्विना ।
कण्वा॑सो वां॒ ब्रह्म॑ कृण्व॒न्त्य॑ध्व॒रे तेषां॒ सु शृ॑णुतं॒ हव॑म् ॥ २ ॥

त्रि॒ऽव॒न्धु॒रेण॑ । त्रि॒ऽवृता॑ । सु॒ऽपेश॑सा । रथे॑न । आ । या॒त॒म् । अ॒श्वि॒ना॒ । कण्वा॑सः । वा॒म् । ब्रह्म॑ । कृ॒ण्व॒न्ति॒ । अ॒ध्व॒रे । तेषा॑म् । सु । शृ॒णु॒त॒म् । हव॑म् ॥ २ ॥

स्कन्द० त्रिवन्धुरेण त्रीणि सारथिस्थानानि वन्धुर उच्यते । त्रयो वन्धुरा यस्मिन् स त्रिवन्धुरः, तेन त्रिवन्धुरेण । त्रिवृता त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्, तेन त्रिवृता । सुपेशसा 'पेश' (निघ ३,७) इति रूपनाम । सुरूपेण । रथेन आ यातम् हे अश्विनौ[१] । किं कारणम् । उच्यते । [illegible] कण्वपुत्रा [illegible] वाम् युवयोः स्तुतिलक्षणम् [illegible] कृण्वन्ति अध्वरे यज्ञे तेषाम् सु [illegible] हवम् आह्वानम् ॥ २ ॥

---

१ [illegible] २ ऋ १,१८,४ ३ ऋ १,१४,११ [illegible] ५ ऋ १,५१,२१ [illegible] ६ [illegible] ७ [illegible] ८ [illegible] [illegible]

वेङ्कट० त्रयो यस्य बन्धुरास्तेन त्रिकोणेन सुरूपेण रथेन आ यातम् अश्विनौ!, कण्वाः[1] युवयोः स्तोत्रं कुर्वन्ति यज्ञे, तेषाम् सुष्ठु[2] शृणुतम् ह्वानम् ॥ २ ॥

मुद्गल० हे अश्विना! अश्विनौ त्रिबन्धुरेण उन्नतानतरूपेण त्रिविधबन्धनकाष्ठयुक्तेन त्रिवृता अप्रतिहतगतितया लोकत्रये वर्तमानेन सुपेशसा शोभनसुवर्णयुक्तेन रथेन आ यातम् इहागच्छतम्। कण्वासः कण्वपुत्राः वाम् युवयोः अध्वरे यागे ब्रह्म स्तोत्ररूपं मन्त्रम् कृण्वन्ति कुर्वन्ति, तेषाम् कण्वानाम् हवम् आह्वानम् सु शृणुतम् सुष्ठु आदरेण शृणुतम् ॥ २ ॥

अश्वि॑ना॒ मधु॑मत्तमं पा॒तं सोम॑मृतावृधा ।
अथा॒द्य द॑स्रा॒ वसु॒ बिभ्र॑ता॒ रथे॑ दा॒श्वांस॒मुप॑ गच्छतम् ॥ ३ ॥

अश्वि॑ना । मधु॑मत्ऽतमम् । पा॒तम् । सोम॑म् । ऋ॒त॒ऽवृ॒धा॒ । अथ॑ । अ॒द्य । द॒स्रा॒ । वसु॑ । बिभ्र॑ता । रथे॑ । दा॒श्वांस॑म् । उप॑ । ग॒च्छ॒त॒म् ॥ ३ ॥

स्कन्द० अश्विना[1]! हे अश्विनौ! मधुमत्तमम् पातम् पिबतम् सोमम् हे ऋतावृधा!। अथ अथेत्यानन्तर्ये। पानानन्तरं च अद्य हे दस्रा! वसु यजमानाय यदीप्सितं धनं तत् बिभ्रता धारयन्तौ आत्मीये रथे दाश्वांसम् यजमानं दानार्थम् उप गच्छतम्। उपगम्य यजमानाय धनं दत्तमित्यर्थः ॥३॥

वेङ्कट० सोमपानानन्तरम् दाश्वांसम् धनेन "सह उप गच्छतम् इति" ॥ ३ ॥

मुद्गल० हे ऋतावृधा! यज्ञस्य वर्धकौ! अश्विना! अश्विनौ! मधुमत्तमम् अतिशयेन माधुर्योपेतम्[4] सोमम् पातम्[5] पिबतम्। हे दस्रा! अश्विनौ! "अथ सोमपानार्थम्" अस्मदाह्वानानन्तरम् अद्य अस्मिन् दिने रथे स्वकीये वसु बिभ्रता अस्मदुपयुक्तं धनं धारयन्तौ दाश्वांसम् हविष्प्रदं यजमानम् उप गच्छतम् समीपे प्राप्नुतम् ॥ ३ ॥

त्रि॒ष॒ध॒स्थे ब॒र्हिषि॑ विश्ववेदसा॒ मध्वा॑ य॒ज्ञं मि॑मिक्षतम् ।
कण्वा॑सो वां सु॒तसो॑मा अ॒भिद्य॑वो यु॒वां ह॑वन्ते अश्विना ॥ ४ ॥

त्रि॒ऽस॒ध॒स्थे । ब॒र्हिषि॑ । वि॒श्व॒ऽवे॒द॒सा॒ । मध्वा॑ । य॒ज्ञम् । मि॒मि॒क्ष॒त॒म् । कण्वा॑सः । वा॒म् । सु॒तऽसो॑माः । अ॒भिऽद्य॑वः । यु॒वाम् । ह॒व॒न्ते॒ । अ॒श्वि॒ना॒ ॥ ४ ॥

स्कन्द० त्रिषधस्थे सह तिष्ठन्ति येषु देवतास्तानि सधस्थानि सवनान्यत्र अभिप्रेतानि। तानि त्रीणि यस्मिन् तत् त्रिषधस्थं सौमिकवेदिस्तरणं[8] बर्हिः। अथवा आहवनीयादयोऽग्नयः सधस्थाः सहस्थानात् त्रयो यस्मिन् तत्त्रिषधस्थम्। तस्मिन् त्रिषधस्थे बर्हिषि सप्तमीनिर्देशात् व्यवस्थितमिति शेषः। हे विश्ववेदसा! सर्वज्ञौ!। अथवा 'विश्वम्' (निघ ३,१) इति बहुनाम। 'वेदः' (निघ ३,१०) इत्यपि धननाम। विश्ववेदसा! बहुधनौ![9]। मध्वा उदकनामैतत् (तु. निघ १,१२)। उदकेन अस्मदीयम् यज्ञम् मिमिक्षतम् मिह सेचने। सेक्तुमिच्छतम्। अभिवर्षितुमिच्छतमित्यर्थः। किं कारणम्। उच्यते।

१-१. कण्वानोऽश्विनौ हैरमानेपि रथान्मुदकस्य वनी त्रिबन्ध सोमं यजस्य वर्धयितारौ सुपुरा सुप्रासे दस्रा वैश्रवणाय इदासे रूपे. २. सु रि'. ३. नास्ति भ. ४-४ स्यात उपग' वि' रूपं, सदोगा' वि' कु. ५. मधुरिमम् मूको. ६. नास्ति वि ७-७. सोमपानार्थम मूको. ८. °मिक वदिस्त° भ, सौमिकस्तरि° कु ९. °धनेन भ.

यस्मात् कण्वासः वाम् युवयोरर्थाय सुतसोमाः[1] कृतसोमाभिषवाः अभिद्यवः द्युशब्दो[2] दिवेर्दीप्त्यर्थस्य दीप्तिवचनः। अभिगता दीप्तिर्यैस्ते अभिद्यवः। आह्वया दीप्त्या दीप्ता इत्यर्थः। [3]अथवा 'द्यु.'[3] (निघ १,९) इत्यहर्नाम। [4]अत्यन्तदुष्प्रापः प्राप्तः[4] यागाहो[5] यैस्ते अभिद्यवः। युवाम् हवन्ते अश्विना! हे अश्विनौ! ॥ ४ ॥

वेङ्कट० यस्मिन् बर्हिषि त्रयाणां धातूनां सह्रावस्थाने तत्राऽऽसीनौ सर्वज्ञौ मधुना इमम् यज्ञम् सेक्तुमिच्छतम्। कण्वाः वाम् अभिषुतसोमाः[6] स्तोत्रादभिषवाच्च अभिगतदीप्तयः अश्विनौ! हवन्ते। पादान्तरे[7] युवाम्[8] इति प्रयुक्तम्[9] ॥ ४ ॥

मुद्गल० हे विश्ववेदसा! सर्वज्ञौ![10] अश्विनौ! त्रिषधस्थे कक्ष्यात्रयेणास्तीर्णतया त्रिषु स्थानेषु अवस्थिते बर्हिषि दर्भे स्थित्वा मध्वा मधुरेण रसेन यज्ञम् मिमिक्षतम् सेक्तुमिच्छतम्। हे अश्विना! अश्विनौ! वाम् युष्मदर्थम् सुतसोमाः अभिषुतसोमयुक्ताः अभिद्यवः अभिगतदीप्तयः कण्वासः युवाम् उभौ हवन्ते आह्वयन्ते ॥ ४ ॥

याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।
ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥ ५ ॥

याभिः। कण्वम्। अभिष्टिऽभिः। प्र। आवतम्। युवम्। अश्विना। ताभिः। सु। अस्मान्। अवतम्। शुभः। पती इति। पातम्। सोमम्। ऋतऽवृधा ॥ ५ ॥

स्कन्द० अत्रेतिहासमाचक्षते—कण्व ऋषिरन्धो बभूव। स चक्षुष्कामोऽश्विनौ तुष्टाव। तस्मा अश्विनौ चक्षुर्ददतुरिति। तदेतत् कक्षीवान् वक्ष्यति —'युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा' (ऋ १,११८,७) इति। तदेवेहाप्युच्यते—'याभिः कण्वम्' इत्यादिना। याभिः अस्मत्पितरम् कण्वम् अभिष्टिभिः इषेरेतद्रूपम्। युष्मदभ्येषणशीलाभिः युष्मदन्वेषणपराभिः स्तुतिभिरित्यर्थः। प्र आवत चक्षुःप्रदानेन प्रकर्षेण रक्षितवन्तौ स्थः युवम् हे अश्विनौ!। ताभिः एव सुष्ठु[11] अस्मान् अपि अवतम् हे शुभस्पती! उदकस्य स्वामिनौ!। पातम् चास्मदीयेषु यज्ञेषु सोमम् हे ऋतावृधा! ॥ ५ ॥

वेङ्कट० यैः कण्वम् अभिगमनैः प्र आवतम् युवाम्[12] अश्विनौ!। तैः अस्मानपि[13] रक्षतम् उदकस्य पती!। पिबतञ्च सोमम् यज्ञस्य वर्धयितारौ!। [14]सु इति पदपूरणः[14] ॥ ५ ॥

मुद्गल० हे अश्विना! अश्विनौ![15] युवम् युवाम् उभौ याभिः अभिष्टिभिः अपेक्षिताभिः रक्षाभिः कण्वम् महर्षिम् प्र आवतम् रक्षितवन्तौ। हे शुभस्पती! शोभनस्य कर्मणः पालकौ! ताभिः रक्षाभिः[15] अस्मान् अनुष्ठातॄन् सु अवतम् सुष्ठु रक्षतम्। स्पष्टमन्यत् ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये प्रथमो वर्गः ॥

---

१. इत° मु. २. द्वि° अ वि. ३-३. नास्ति मूको. ४-४. °ष्प्राप्तं कु. ५. यैगाहो वि. ६. °भिष्पुतसो° वि[1]. ७. पदा° वि[1,2] लभ. ८. वाम् मूको. ९. °युक्तः वि[1] अ[1]. १०. सर्वज्ञौ मूको. ११. नास्ति भ. १२. युवम् वि[1] अ[1] कु. १३. °नपि च वि[1] अ[1]. १४-१४. सु° पूरणः वि[1,2] अ[1] कु ए. १५. नास्ति वि.

सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना ।
रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ॥ ६ ॥

सुऽदासे । दस्रा । वसु । बिभ्रता । रथे । पृक्षः । वहतम् । अश्विना । रयिम् । समुद्रात् । उत ।
वा । दिवः । परि । अस्मे इति । धत्तम् । पुरुऽस्पृहम् ॥ ६ ॥

स्कन्द० अत्रेतिहासमाचक्षते—सुदाः नाम पैजवनो राजा। यस्य विश्वामित्र ऋषिः पुरोहितो बभूव । स यष्टुकामः सारवत् प्रभूतं च धनमन्नं चाश्विनौ ययाचे। तस्मै रथेन आनीय अश्विनौ धनमन्नं च ददतुरिति । तदेतदिहोच्यते—'सुदासे दस्रा' इति । सुदासो राज्ञोऽर्थाय हे दस्रा! वसु बिभ्रता रथे पृक्षः अन्नानि च वहतम् प्रापितवन्तौ स्थः हे अश्विनौ! । तदेतत् कुत्सोऽपि वक्ष्यति—'याभिस्सुदास ऊहथुः सुदेव्यम्' (ऋ १,११२,१९) इति । परस्त्वर्धर्चो याच्ञार्थत्वात् भिन्नं वाक्यम् । यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या। यौ सुदासे वहतं तौ रयिम् धनम् समुद्रात् 'समुद्रः' (निघ १,३) इत्यन्तरिक्षनाम। अन्तरिक्षात् । उत वा दिवः अपि वा द्युलोकात् । पञ्चमीनिर्देशादाहृत्येति वाक्यशेषः । परि-शब्दस्तु 'अभिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः[1]। अस्मे अस्मभ्यम् धत्तम्[1] दत्तम् । कीदृशम् । पुरुस्पृहम् बहूनां स्पृहणीयम् ॥ ६ ॥

वेङ्कट० पैजवनाय[1] सुदासे दर्शनीयौ ! धनम् रथे[2] बिभ्रतौ अश्विनौ! अन्नं च आवहतम् । अस्मभ्यम् अपि[4] अन्तरिक्षात् 'दिवः वा आहृत्य[1] बहुभिः स्पृहणीयम् रयिम् धत्तम्[7] ॥ ६ ॥

मुद्गल० हे दस्रा! दर्शनीयौ![8] अश्विना! अश्विनौ! सुदासे शोभनदानयुक्ताय राज्ञे पिजवनपुत्राय[1] रथे वसु बिभ्रता युवाम् पृक्षः अन्नम् वहतम् प्रापितवन्तौ। समुद्रात् अन्तरिक्षात् उत वा दिवः परि अथवा स्वर्गात् पर्याहृत्य पुरुस्पृहम् बहुभिः स्पृहणीयम् रयिम्[10] धनम् अस्मे धत्तम् अस्मासु स्थापयतम् ॥ ६ ॥

यन्नासत्या परावति यद् वा स्थो अधि तुर्वशे ।
अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥ ७ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे । अतः । रथेन । सुऽवृता ।
नः । आ । गतम् । साकम् । सूर्यस्य । रश्मिऽभिः ॥ ७ ॥

स्कन्द० यत् शब्दोऽत्र यदिशब्दस्यार्थे । यदि हे नासत्या! परावति दूरे। अमुष्मिन् लोक इत्यर्थः । यदि वा स्थः अधि तुर्वशे अधिशब्दः 'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः[11]। 'तुर्वशे' (निघ २,१६) इत्यन्तिकनाम । अन्तिके सन्निकृष्टे । अस्मिन्नेव लोके इत्यर्थः । अतोऽस्माद् दूरात् अन्तिकाद्वा रथेन सुवृता सुगतिना नः अस्मान् प्रति आ गतम् आगच्छतम्[12] [13]साकम् सूर्यस्य[13] रश्मिभिः । सहयोगित्वमात्रमत्र रश्मीनाम्, अश्विनोरेव तु प्राधान्यम् ॥ ७ ॥

---

१. नास्ति ति. २. धने भ; दद्य ति. ३. वैज॰ स्तं भ॰. ४. रथेन भ॰ वि॰. ५. नास्ति भ॰. ६-६. दिवा वा॰ वि॰ ए॰; 'वाहृत्य वि॰; 'वाहृत्य वि॰ भ॰. ७. धनम् वि॰ भ॰. ८. सुदर्शौ॰ वि. ९. °पुत्राय रयिन् मूको. १०. नास्ति मूको. ११. °णः । तुर्वशे मूको. १२. नास्ति भ. १३-१३. त्रुटितम् ति.

वेङ्कट० यदि नासत्यौ! दूरे भवथ[१], यत् वा स्थ[२] अन्तिके। ततः रथेन[३] सुवर्तनेन अस्मान् आगच्छतम् सह सूर्यस्य रश्मिभिः उषसि[४] प्रादुर्भूते ॥ ७ ॥

मुद्गल० हे नासत्या! असत्यरहितौ! अश्विनौ! यत् यदि युवाम् परावति दूरदेशे स्थ वर्तेथ। यत् वा अथवा अधि तुर्वशे अधिके समीपे स्थ। अतः अस्मात् दूरात् समीपाद्वा [५]सूर्यस्य रश्मिभिः[५] साकम् सूर्योदयकाले सुवृता शोभनवर्तनयुक्तेन रथेन नः अस्मान् प्रति आ गतम् आगच्छतम् ॥ ७ ॥

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ ८ ॥

अर्वाञ्चा । वाम् । सप्तयः । अध्वरऽश्रियः । वहन्तु । सवना । इत् । उप । इषम् । पृञ्चन्ता । सुऽकृते । सुऽदानवे । आ । बर्हिः । सीदतम् । नरा ॥ ८ ॥

स्कन्द० अर्वाञ्चा वाम् अस्मदभिमुखौ[६] युवाम् सप्तयः 'सप्तिः' (निघ १,१४) इति अश्वनाम। अश्वाः। अध्वरश्रियः अध्वरं सश्रयन्ति इत्यध्वरश्रियः[७]। यज्ञसम्बद्धाः[८] इत्यर्थः। अथवा अध्वर इति ध्वरतेः हिंसाकर्मणः क्रियावचनः। अनुपहिंसिता श्रीर्येषां तेऽध्वरश्रियो लक्ष्मीवन्तः। दर्शनीया इत्यर्थः। वहन्तु सवना इत् उप सवनशब्दो यज्ञनाम वा तदवयवप्रातस्सवनमाध्यन्दिनसवनतृतीयसवनवचनो वा। इच्छब्दः पदपूरणः। सवना उप। यज्ञाना वा तदवयवाना प्रातस्सवनादीना वा समीपे इत्यर्थः। ऊढौ च सन्तौ युवाम् इषम् अन्नम् पृञ्चन्ता पृचिरत्र सामर्थ्याद्दानार्थः। ददतौ तस्मै सुकृते सुदानवे शोभनाना स्तुतीना[९] कर्त्रे शोभनाना च हविषा दात्रे यजमानाय आ बर्हिः सीदतम् आसीदतमिदं बर्हिः हे नरा! ॥ ८ ॥

वेङ्कट० अभिमुखौ वाम् अश्वाः[१०] यज्ञं ये[११] श्रयन्ति, ते सवनाना[१२] समीपे वहन्तु अन्नं[१३] युवां कुर्वते शोभनदानाय यजमानानाय [१४]संयोजयन्तौ आ सीदतम् बर्हिः[१४] नेतारौ! ॥ ८ ॥

मुद्गल० हे अश्विनौ! अध्वरश्रियः यागसेविनः सप्तयः अश्वाः सवना इत् उप अस्मदनुष्ठेयानि त्रीणि सवनान्येव उपलक्ष्य अर्वाञ्चा अभिमुखौ वाम् युवाम् वहन्तु प्रापयन्तु। हे नरा! अश्विनौ! सुकृते सुष्ठु कर्मकारिणे सुदानवे शोभनदानयुक्ताय यजमानाय इषम् अन्नम् पृञ्चन्ता संयोजयन्तौ युवाम् बर्हिः आ सीदतम् दर्भं प्राप्नुतम् ॥ ८ ॥

तेन नासत्या गतं रथेन सूर्यत्वचा ।
येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥ ९ ॥

तेन । नासत्या । आ । गतम् । रथेन । सूर्यऽत्वचा । येन । शश्वत् । ऊहथुः । दाशुषे । वसु । मध्वः । सोमस्य । पीतये ॥ ९ ॥

---

१ भवत्थ कु वि[१]. २. स्थ कु वि[१] अ[१]. ३ अश्वे(रथे)न वि[१] अ[१]. ४ उषसि वि[१]. ५-५ सूर्यरश्मि[१] मूको. ६ °भिमुखा मूको. ७ °श्रियः अ. ८ °द्धाः अ. ९ स्तुतीना कु. १० अश्वौ कु, अश्वाः वि[१] अ[१]. ११ ये कु. १२ °नाना अ[१] वि[१]. १३ अन्नं युवां कुर्वते अ[१] वि[१]. १४-१४ °संयोजयन्तौ आ सीदतम् बर्हिः वि[१] अ[१].

स्कन्द० तेन नासत्या! हे नासत्यौ[1]! आ गतम् रथेन सूर्यत्वचा सूर्यसदृशवर्णेन । हिरण्यखचितत्वाद्दीप्यन्तोज्ज्वलेनेत्यर्थः। येन शश्वत् बहुनामैतत् (द्र. निघ ३,१)। बहु ऊहथुः प्रापितवन्तौ स्थः । दत्तवन्ताविव्यर्थः । दाशुषे वसु । किमर्थम् । मध्वः सोमस्य पीतये मधुस्वादस्य सोमस्य पीतये पानाय ॥ ९ ॥

वेङ्कट० तेन नासत्यौ! आगच्छतम् रथेन सूर्यसदृशरूपेण, येन बहु धनम् ऊहथुः यजमानाय मधुसदृशं सोमं पातुम् ॥ ९ ॥

मुद्गल० हे नासत्या! अश्विनौ! सूर्यत्वचा सूर्यसंवृतेन तेन[2] प्रसिद्धेन रथेन आ गतम् आगच्छतम्। दाशुषे हविर्दत्तवते यजमानाय वसु धनम् शश्वत् सर्वदा येन रथेन ऊहथुः प्रापितवन्तौ। तेन रथेनेति पूर्वत्रान्वयः। किमर्थम् आगतमिति। तदुच्यते । मध्वः मधुरस्य 'सोमस्य पीतये' सोमपानार्थम् ॥ ९ ॥

उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।
शश्वत् कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥ १० ॥

उक्थेभिः । अर्वाक् । अवसे । पुरुवसू इति पुरुऽवसू । अर्कैः । च । नि । ह्वयामहे । शश्वत् ।
कण्वानाम् । सदसि । प्रिये । हि । कम् । सोमम् । पपथुः । अश्विना ॥ १० ॥

स्कन्द० उक्थेभिः अर्वाक् स्तोत्रैः शस्त्रैश्च अर्वाक् अस्माभिमुखम् अवसे सोमेन तर्पणाय पुरुवसू बहुधनौ अर्कैः च मन्त्रैश्चान्यैरपि यजुर्लक्षणैः[3] नि ह्वयामहे नियतं ह्वयामः। किं कारणम्। उच्यते। यस्मात् शश्वत् नित्यपर्यायोऽयं शश्वच्छब्दः। नित्यमस्माकम् कण्वानाम् स्वभूते सदसि प्रिये इष्टे। कस्य। सामर्थ्यात् युवयोरश्विनोरस्माकमेव वा कण्वानाम्। हि शब्दस्तु पदपूरणः। कम् सुखम् सोमम् पपथुः हे अश्विनौ!। यस्मात् पूर्वेष्वपि कालेषु नित्यमस्मदीयेषु सदस्सु सोमान् पीतवन्तौ स्थः, तस्मादुत्पन्नप्रणयत्वादिदानीमपि नियतं ह्वयाम इत्यर्थः ॥ १० ॥

वेङ्कट० स्तोत्रशस्त्रैः रक्षणाय अस्मदभिमुखं[4] बहुधनावश्विनौ[5] "नि ह्वयामहे"। नित्यं हि कण्वानाम् सदसि प्रिये यज्ञे अश्विनौ! युवां खलु सोमम् पीतवन्ताविति ॥ १० ॥

मुद्गल० पुरुवसू प्रभूतधनौ अश्विनौ अवसे अस्मद्रक्षणार्थम् उक्थेभिः[6] उक्थैः[7] शस्त्रैः अर्कैः च [8]अर्चनसाधनैः स्तोत्रैश्च[9] अर्वाक् अस्मदाभिमुख्येन नि ह्वयामहे नितरामाह्वयामः। हे अश्विना! अश्विनौ! कण्वानाम् कण्वपुत्राणाम् प्रिये सदसि यज्ञस्थाने शश्वत् सर्वदा[10] सोमम् पपथुः हि कम् युवां पीतवन्तौ खलु ॥ १० ॥

इति प्रथमाष्टके चतुर्थाध्याये द्वितीयो वर्गः ॥

---

१. °त्या क. २. नास्ति मूको. ३-३. सोमपौ° मूको. ४. यजुल° क. ५. अभि° वि लप. ६. बहुयजधनाविश्विनौ वि[1] लपं; °विनौ! ल. ७-७. ह्वया° वि[1] अ[1]; विह° अ[2]. ८. नास्ति वि. ९. उक्थैः मै. १०-१०. °साधनस्तो° वि. ११. सदा वि.

[ ४८ ]

सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥ १ ॥

सह । वामेन । न । उषः । वि । उच्छ । दुहितः । दिवः । सह । द्युम्नेन । बृहता ।
विभाऽवरि । राया । देवि । दास्वती ॥ १ ॥

स्कन्द० 'उपस्थे हे' । एते सूक्ते उषोदेवत्ये । वामम् अत्राक्षमभिप्रेतम् । सह वामेन वननीयेनात्यन्तोत्कृष्टेनान्नेन न अस्माकमर्थाय हे उषः । वि उच्छ विविध तमांसि विवासय । प्रकाशं कुर्वित्यर्थः । हे दुहितः दिवः । आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता । तेनैवमामन्त्र्यते—हे दिवो दुहितः ! इति । न च केवलेनान्नेन[1] । किं तर्हि । सह द्युम्नेन द्युम्न द्योतते[2], यश इहाभिप्रेतम् । यशसा च सह । कीदृशेन । बृहता महता । हे विभावरि ! दीप्तिमति ![3] राया धनेन च हे देवि ! दास्वती दानवती । अन्नयशोधनानि[4] अस्मभ्य ददती व्युच्छेत्यर्थः ॥ १ ॥

वेङ्कट० सह वननीयेन अस्माकम् उषः वि उच्छ दिवः[5] दुहितः ! । सह अन्नेन[6] महता 'दीप्तिमति !' धनेन[7] च[8] देवि ! दानवति ! । 'अन्नं धनं' च वाममिति[9] ॥ १ ॥

मुद्गल० [10]'सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः । बार्हतत्वात् अयुजो बृहत्यः । युजः सतोबृहत्यः । उषा देवता[10] ॥

हे दुहितः दिवः ! द्युदेवतायाः पुत्रि ! उषः ! उषःकालदेवते ! न अस्मदर्थम् वामेन रम्येण धनेन सह वि उच्छ[11] प्रभातं कुरु । हे विभावरि ! उषोदेवते ! बृहता प्रभूतेन द्युम्नेन अन्नेन सह व्युच्छ । हे देवि ! त्वम् दास्वती दानयुक्ता सती राया यशोलक्षणेन धनेन सह व्युच्छ ॥ १ ॥

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥ २ ॥

अश्वऽवतीः । गोऽमतीः । विश्वऽसुविदः । भूरि । च्यवन्त । वस्तवे । उत् । ईरय । प्रति ।
मा । सूनृताः । उषः । चोद । राधः । मघोनाम् ॥ २ ॥

स्कन्द० अश्वावतीः अश्वैस्तद्वत्य उषसः गोमतीः गोभिश्च तद्वत्यः । [12]"अश्वान् गाश्च"[12] स्तोतृभ्यो ददत्य इत्यर्थः । विश्वसुविदः सर्वस्य भूतजातस्य सुष्ठु वेदयित्र्यः । प्रकाशिका इत्यर्थः । स्वयमेव वा वेदित्र्यः । भूरि बहु च्यवन्त च्यवतिर्गतिकर्मा ( द्र निघ २,१४ ) । गतवत्यः । समस्तं त्रैलोक्यं व्याप्तवत्य[13] इत्यर्थः[14] । किमर्थम् । वस्तवे वस आच्छादने । स्वज्योतिषा तमसामाच्छादनाय । प्रकाशनायेत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । उत् ईरय प्रेरय

1 °श्रेन भ. २. नास्ति कु ३ अर्थं य° भ ४ नास्ति वि[1] ल ५. अन्नेन कु ६-६ °विनति धन वि[1] अ[2]; °भा° कु ७ नास्ति वि[1] अ[2] ८-८ इत्यन्न दानं वि[1] ए ९ नावमिति वि[1]; नास्ति ए वि[1] रुपं अ[2] १०-१० नास्ति वि मै[2]. ११ °च्छ हे देवि मै[2]. १२-१२ अश्वा भ १३ व्याप्नुव° भ, माप्तवत्य कु १४ नास्ति वि.

प्रति मा मां प्रति सूनृताः अपठितमपि वाङ्नामैतत् । स्तुतिलक्षणा वाचः । मम वाचं[1] प्रेरय येनाहं त्वां प्रभूताभिः स्तुतिभिः स्तौमीत्यर्थः । अथवा 'सूनृता' ( निघ १,८ ) इति उषोनाम । यत्तच्छब्दावध्याहृत्य पूर्वेणार्धर्चेन सहैकवाक्यता एवं योज्या—या अश्वावतीत्यादिगुणा भूरि च्यवन्त वस्त्वै तास्त्वमुदीरय मां प्रति सूनृताः प्रकाशरूपा उषसः । हे उषः! प्रकाशरूपाणामुषसाम् अधिष्ठात्र्या अधिदेवताया इदमुषश्शब्देन सम्बोधनम् । चोद राधः । धनं[2] च देहीत्यर्थः । मघोनाम् धनवतामयष्टॄणां[3] स्वभूतम् । ये धनवन्तो न यजन्ते तेभ्योऽपहृत्येत्यर्थः । अथवा मघशब्दोऽत्र हविर्लक्षणे धने वर्तते । षष्ठीनिर्देशाद्[4] योग्यमिति शेषः । हविर्लक्षणेन धनेन धनवतामस्मादृशां योग्यम् । यष्टॄणां यद्योग्यमित्यर्थः ॥ २ ॥

वेङ्कट० अश्ववत्यः[5] गोमत्यः विश्वस्य धनस्य सुष्ठु वेदयित्र्य[6] अत्यन्तं दिवः च्यवन्त दिवसकरणाय । इदानीं मां प्रति 'सूनृता वाचः[6] उत् ईरय । उषः![7] चोदय धनम् आढ्यानां तत 'आहृत्य भिक्षुभ्यः[8] ॥२॥

मुद्गल० अश्वावतीः[9] बह्वश्वोपेताः गोमतीः बहुभिर्गोभिर्युक्ताः विश्वसुविदः कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्य उषोदेवता वस्तवे प्रजानां निवासाय भूरि प्रभूतं यथा भवति तथा च्यवन्त प्रासाः । हे उषोदेवते! मा प्रति मामुद्दिश्य सूनृताः प्रियहितवाचः उत् ईरय मृहि । मघोनाम् धनवतां सम्बन्धि राधः धनम् चोद अस्मदर्थे प्रेरय ॥ २ ॥

उवासोषा उच्छाच्च नु देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ ३ ॥

उवास । उषाः । उच्छात् । च । नु । देवी । जीरा । रथानाम् । ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ॥ ३ ॥

स्कन्द० उवास उषाः प्रागपररात्रात् उवास रात्र्या सहोषितवत्युषाः । रात्र्यावेवाऽनुप्रविष्टाऽदृश्यरूपाऽभवदित्यर्थः । उच्छात् च व्युष्टवती चापररात्रे । नु क्षिप्रम् । कीदृशी । देवी दानादिगुणा । जीरा रथानाम् जीर इति क्षिप्रनाम ( तु. निघ २,१५ ) । रथो रंहतेर्गतिकर्मणः, गन्तेहाभिप्रेतः । निर्धारणे च षष्ठी । क्षिप्रा गन्तॄणां मध्ये । अथवा रथानामिति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः । क्षिप्रा रथानामपि सकाशात् । कस्य उवासोषा उच्छाच्च । उच्यते । ये अस्याः आचरणेषु दध्रिरे आ इत्येष परीत्येतस्य स्थाने । परिचरणेषु दध्रिरे आत्मानं धारितवन्तः । परिचर्यायां स्थिता इत्यर्थः । कथम् । समुद्रे न श्रवस्यवः 'श्रवः' (निघ २,१०) इति धननाम । तत्कामाः श्रवस्यवः वणिजः । यथाऽत्यन्तधनाशया समुद्रे वणिजो व्यवतिष्ठन्ते तद्वत् । य एवोषसं परिचरन्ति तेषामेव सा उवास उच्छाच्च तत्कार्यकरत्वात्, नेतरेषामयष्टॄणामित्यर्थः[10] ॥ ३ ॥

वेङ्कट० पुराऽपि[11] व्युष्टवती, सम्प्रति च व्यौच्छत् क्षिप्रम् उषाः[12] क्षेप्त्री रथानाम् । ये रथाः उषस आगमनेषु तिष्ठन्ति अश्वमाजिहीर्षन्त समुद्रे इव नाविकाः ॥ ३ ॥

१. वाचः प्रति अ कु. २. चोदय धनं वि. ३. °वता मयष्टॄ° अ कु. ४. °निर्देशाच्च अ वि. ५. अश्वाः वि[1]. ६-६. °सूनृता° वि[1] अ. ७. नास्ति वि[1] अ[1]. ८-८. °हृत्य दिम्यः वि[1] अ[1]. ९. नास्ति वि. १०. °रेषा यष्टॄणां कु वि. ११. पुरोऽपि सर्वं, पुरा वि[1] अ[1]. १२. उषा वि[1].

मुद्गल० उषा देवी उवास पुरा निवासमकरोत्। प्रभातं कृतवतीत्यर्थः। च नु अद्यापि[1] उच्छात् व्युच्छति प्रभातं करोति। कीदृशी देवी। रथानाम् जीरा प्रेरयित्री। उषःकाले हि रथाः प्रेर्यन्ते। अस्या उषस आचरणेषु आगमनेषु ये रथा दध्रिरे धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वेणान्वयः। रथप्रेरणे दृष्टान्तः। श्रवस्यवः धनकामाः समुद्रे न यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् ॥ ३ ॥

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः।
अत्राह तत् कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥ ४ ॥

उषः। ये। ते। प्र। यामेषु। युञ्जते। मनः। दानाय। सूरयः। अत्र। अह। तत्। कण्वः। एषाम्। कण्वऽतमः। नाम। गृणाति। नृणाम् ॥ ४ ॥

स्कन्द० उषो ये त हे उषः! ये ते तुभ्यम् यामेषु यज्ञेषु प्र[2] युञ्जते आत्मीयम् मनः हविषाम् दानाय। ये तुभ्यं यज्ञेषु हवींषि ददतीत्यर्थः। सूरयः स्तोतारः। अत्र पृथिव्यामसन्निहिताया अपि प्रतिनिर्देशः। अत्र पृथिव्याम्। अह अहशब्दो विनिग्रहार्थीयः एवशब्दस्यार्थे कण्वशब्दात् परो द्रष्टव्यः। तत् एषाम् नृणाम् इति समानाधिकरणावुभौ निर्धारणषष्ठ्यन्तौ। तेषामेषां मनुष्याणां मध्ये कण्व एव कण्वतमः नाम गृणाति कण्व इति सोऽयमित्यभिसम्बन्धात् पितृशब्दः पुत्रे[3] प्रयुज्यते। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेणाऽभिधानम्। कण्वतम इति कण्वशब्दो मेधाविनाम (द्र॰ निघ ३.१५)। अतिशयेन मेधावी कण्वतमः। अयं कण्वपुत्रः प्रस्कण्वो नाम मेधाविनमस्त्वं नाम स्तौतीत्यर्थः। नामस्तुत्या चात्र नामवत्तामेव[4] स्तुतिं प्रतिपद्यते। त्वां स्तौतीत्यर्थः। ये[6] स्तोतारस्तुभ्यं यज्ञेषु हवींषि ददति समस्तायामेतस्यां पृथिव्यां तेषां मध्ये अहमेव कण्वपुत्रस्त्वामतिशयेन स्तौमि, नान्यः कश्चिदिति समस्तार्थः ॥ ४ ॥

वेङ्कट० उषसि शयने[7] शयानः प्रस्कण्व उदाराणां नामान्यस्तावसाविति सूत इति समुदायार्थः। उषः! तव आगमनेषु ये प्राज्ञाः[8] मनः दानाय प्रायुञ्जत[9]। अत्र एव कण्वानां वरिष्ठः कण्वपुत्रः एषाम् नृणाम् तत् नाम उच्चारयति ॥ ४ ॥

मुद्गल० हे उषः! ते तव यामेषु गमनेषु सत्सु ये सूरयः विद्वांसः दानाभिज्ञाः दानाय धनादिदानार्थम् मनः स्वकीयम् प्र युञ्जते प्रेरयन्ति। दानशीला उदारा प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः। एषाम् दातुमिच्छताम् नृणाम् तत् नाम दानविषये लोकप्रसिद्धं नाम कण्वतमः अतिशयेन मेधावी कण्वो महर्षिः अत्र अह अत्रैव उषःकाले गृणाति उच्चारयति। यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तौ उभौ अपि उषःकाल एव तथा कुरुत इत्युषसः स्तुतिः ॥ ४ ॥

आ घा योषेव सूनर्युषा याति प्रभुञ्जती।
जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥ ५ ॥

---

1 अद्यापि मूको. 2 °मध्येन मे°. 3 नास्ति कु. 4 पुत्रेषु वि. 5 °नव दव अ वि. 6 नास्ति कु ये वि. 7 शयने ए. 8 प्र° अ° वि° एव°. 9 प्रयुञ्जते कु.

आ । घ । योषाऽइव । सूनरी । उषाः । याति । प्रऽभुञ्जती । जरयन्ती । वृजनम् । पत्ऽवत् । ईयते । उत् । पातयति । पक्षिणः ॥ ५ ॥

स्कन्द० आ घा योषेव आ इत्युपसर्गो यातीत्याख्यातेन सम्बध्यते । घेति पदपूरणः । योषेव यथा काचित् स्त्री एवम् सूनरी शोभना नरा यस्याः स्तोतृत्वेन पतृत्वेन च सन्ति सा सूनरी उषाः आ याति आगच्छति । उदितेरित्यर्थः । प्रभुञ्जती भुज पालनाभ्यवहारयोः । स्वेन ज्योतिषा इत्स्नं जगत् प्रकर्षेण पालयन्ती । जरयन्ती वृजनम् बलं कालेन हि प्राणिनां जीर्यति । कालं चैषा अतिपातयति । अत एवमुच्यते– जरयन्ती वृजनमिति । कथं पुनरायाति । उच्यते । पद्वत् ईयते शुद्धोऽप्ययमीयतिः[1] सोपसर्गार्थो द्रष्टव्यः । यथा कश्चित् पादवानागच्छेत्तद्वदागच्छति । उत्पातयति च चटकप्रभृतीन् पक्षिणः । चटकादयो हि पक्षिणः उषउदयवेलायां[2] स्वेभ्य आवासकेभ्य उत्पतन्ति । अतस्तानुषा[3] एवोत्पातयति इत्युच्यते ॥ ५ ॥

वेङ्कट० आ याति उषा. स्त्रीव प्रकर्षेण रक्षन्ती सूनरी 'सूनरी' ( निघ १,८ ) इत्यप्युषोनाम । शोभननरेति । मनुष्याणाम् उपद्रवम् जरयन्ती । उपस्यागतायां पद्वत् पुरुषादिकं[4] चलति । पक्षिणः चैषम् उद्गमयति ॥ ५ ॥

मुद्गल० उषाः देवी प्रभुञ्जती प्रकर्षेण सर्वं पालयन्ती आ याति च प्रतिदिनमागच्छति खलु । दृष्टान्तः । सूनरी सुष्ठु गृहकृत्यस्य नेत्री योषा इव गृहिणीव । कीदृश्युषाः । वृजनम् गमनशीलम् जङ्गमं प्राणिजातं जरयन्ती जरां प्रापयन्ती । असकृदुपस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवन्ति । किञ्च उषःकाले पद्वत् पादयुक्तं प्राणिजातम्[5] ईयते निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति । किञ्च इयम् उषाः पक्षिणः उत्पातयति पक्षिणो ह्युषःकाले[6] समुत्थाय सर्वतश्च गच्छन्ति ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये तृतीयो वर्गः ॥

वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥ ६ ॥

वि । या । सृजति । समनम् । वि । अर्थिनः । पदम् । न । वेति । ओदती । वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥ ६ ॥

स्कन्द० वि या सृजति या विसृजति विसर्गो ह्यनुज्ञा । अनुजानाति । किम् । समनम् संग्रामनामैतत् ( द्र. निघ २,१७ ) । संग्रामम् । उषउदयोत्तरकालं ह्युक्षादयो योद्धारो युध्यन्ते । अत उषा एव संग्राममनुजानातीत्युच्यते । अथवा[7] समनमिति संपूर्वस्य अनेर्वा प्राणार्थस्य अनेर्वा 'प्राणार्थस्य रूपम्[8] । प्राणं प्राण चेत्यर्थः । उभयमपि ह्येतदुषउदयोत्तरकाले प्रवर्तते ।

---

१. °दिदन्तिः अ; °मियन्तिः द्रु वि. २. °वोदय° अ. ३. °त्रुर अ. ४. °दि वि° अ°. ५. °तिस्वरित्नम् मै°. ६. उषःकाले वि. ७. नास्ति अ. ८-८. °नार्थस्य° अ.

न च केवल समनम् । 'किं तर्हि'[1] । वि अर्थिन अर्थिन । कार्यवन्त । कार्यवन्तश्च कार्येषु विसृज्यन्ते[2] । सर्वे हि कार्यवन्त स्वकार्येषूषउदयोत्तरकाल प्रवर्तन्ते । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । सा पद न वेति वेतिर्गतिकर्मा । यथा कश्चिदेक पद गच्छेत् तद्वत् क्षणेन गच्छति । का । ओदती उषोनामैतत् ( तु निघ १,८ ) । उषा । परोऽर्धर्च प्रत्यक्षकृतो भिन्न वाक्यम् । वयो नकिष्टे पतिवास पक्षिवास इति ताच्छील्ये प्रसुर्द्रष्टव्य । पक्षिण पतनशीला तव व्युष्टौ स्वेष्वावासकेषु न आसते । त्वदुदयवेलायां स्वेभ्य आवासकेभ्य उत्पतन्तीत्यर्थ । हे वाजिनीवति! उषोनामैतत् । उष ! ॥ ६ ॥

वेङ्कट० वि सृजति या सङ्ग्राम युयुत्सून् प्रेरयति[3] या च भिक्षून् । सा पदम् इव[4] निदधाति शनै शनैरागच्छन्ती[5] उषा इति रश्म्यभिप्रायम्[6] । पक्षिणो न[7] केचन पतनशीला वृक्षेषु आसते तव व्युच्छन्त्यां[8] उष ! ॥ ६ ॥

मुद्गल० या देवता समनम् समीचीनचेष्टावन्त पुरुषम् वि सृजति प्रेरयति । गृहारामादिचेष्टाकुशलान् पुरुषान् उष काले शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम् । किञ्च उषा अर्थिन याचकान् वि सृजति । तेऽपि उष काले समुत्थाय स्वकीयदातृगृहे गच्छन्ति । ओदती उषो देवता पदम् स्थानम् न वेति न कामयते । उष काल शीघ्र गच्छतीत्यर्थ । हे वाजिनीवति! उषोदेवते! ते व्युष्टौ त्वदीये प्रात काले पतिवास पतनयुक्ता वय पक्षिण नकि आसते न तिष्ठन्ति । किन्तु स्वस्वनीडात् विनिर्गत्य गच्छन्तीत्यर्थ ॥ ६ ॥

ए॒षायु॑क्त परा॒वत॒: सूर्य॑स्यो॒दय॑ना॒दधि॑ ।

श॒तं रथे॑भिः सु॒भगो॒षा इ॒यं वि या॑त्य॒भि मानु॑षान् ॥ ७ ॥

ए॒षा । अ॒यु॒क्त॒ । प॒रा॒ऽवत॑ । सूर्य॑स्य । उ॒त्ऽअय॑नात् । अधि॑ । श॒तम् । रथे॑भि । सु॒ऽभगा॑ । उ॒षा । इ॒यम् । वि । या॒ति॒ । अ॒भि । मानु॑षान् ॥ ७ ॥

स्कन्द० एषा अयुक्त युक्तवती अश्वान् रथेषु । युक्त्वा च परावत दूरनामैतत् ( तु निघ ३,२६ ) । दूरात्[10] । उत । सूर्यस्योदयनात् 'कृत्यल्युटो बहुलम्' ( पा ३,३,११३ ) इति अपादानेऽर्थे ल्युट् द्रष्टव्य । यत स्थानात् सूर्य उदेति तत । अधि शब्दस्तु 'अधिपरी अनर्थकौ' (पा १,४,९३) इति कर्मप्रवचनीय पदपूरण । शतं रथेभि शतमिति तृतीयार्थे द्वितीया । शतेन रथै । सुभगा सुधना । उषा इयम् वि याति विविधं गच्छति । अभि मानुषान् मनुष्यान् प्रति । इतश्चेतश्च पार्थिवे लोके स्वभासा व्याप्नोतीत्यर्थ ॥ ७ ॥

वेङ्कट० एषा उयुक्ता दूरात्[11] सूर्यस्य [12]उदयनाद् दिव[13] शतम् रथानधिरूढ़ा सुधना उषा० मानुषान् अभि विविधम् याति ॥ ७ ॥

मुद्गल० एषा उषोदेवता शतम् अयुक्त स्वकीयानां रथानां शत योजितवती । सुभगा सौभाग्ययुक्ता

1 1 नास्ति भ. 2 'अन्ति मूको 3 °न्ती वि' एर्प 4 तव येति गच्छति वि' अ', ५ °दति मु 6 °भिप्रायवचनम् ध कु 7 इव ध वि' 8 °च्छने ए 9 नास्ति वि मं' 10 नास्ति लि. 11 भवात् वि', 12-13. °न्दिव वि'.

इयम् उषाः परावतः दूरस्थात् सूर्यस्य उदयनात् अधि सूर्योदयस्थानात् अधिकात् द्युलोकात् मानुषान् अभि मनुष्याननुद्दिश्य रथेभिः शतसंख्याकैः युक्तैः रथैः वि याति विशेषेण गच्छति ॥ ७ ॥

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥ ८ ॥

विश्वम् । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी । अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ॥ ८ ॥

स्कन्द० विश्वम् अस्याः विश्वं सर्वमस्याः ननाम प्रणतम् चक्षसे दर्शनाय जगत् । सर्वस्य जगतः एतदायत्तं दर्शनमित्यर्थः[1] । ज्योतिः चेयम् कृणोति सूनरी । किञ्च द्वेषः सर्वप्राणिद्वेष्यं तमः मघोनी धनवती दुहिता दिवः उषाः [2]अप उच्छत्[3] अपोच्छति । तमश्च विवासयतीत्यर्थः । न च केवलं तमः । किं तर्हि । अप स्रिधः स्रेधतिः क्षयार्थः शोषणार्थो वा । क्षपयितॄन् शोषयितॄन् वा । कान् । सामर्थ्यात् नक्तंचरान् रक्षआदीन्[3] । रक्षआदीनपि विवासयतीत्यर्थः ॥ ८ ॥

वेङ्कट० अस्याः[4] उषसः दर्शनाय सर्वमेव[5] जगत् शिरो नमयति[6] । ज्योतिः च कृणोति उषाः । सा दिवः दुहिता सर्वान् द्वेष्टॄन् क्षपयितॄंश्च[7] तिरस्कुर्वती[8] प्रादुर्भवतु ॥ ८ ॥

मुद्गल० विश्वम् सर्वम् जगत् जङ्गमं प्राणिजातम् अस्याः उषसः चक्षसे प्रकाशनाय ननाम प्रह्वीभवति । रात्रौ तमसि निमग्नाः सर्वे जनाः तन्निवारयित्रीम् उषसम् उपलभ्य नमस्कुर्वन्तीत्यर्थः । कुतः । यस्मादेषा सूनरी सुष्ठु नेत्री अभिमतफलस्य प्रापयित्री उषाः ज्योतिः कृणोति सर्वं प्रकाशयति । किञ्च मघोनी मघवती धनवती दिवः दुहिता द्युलोकसकाशादुत्पन्ना उषाः द्वेषः द्वेष्टॄन् अप उच्छत् अपवर्जयति । किञ्च स्रिधः हिंसकान् अप उच्छत् । तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूताम्[9] उषोदेवतां विश्वं जगत् नमस्करोतीत्यर्थः ॥ ८ ॥

उप आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥ ९ ॥

उप । आ । भाहि । भानुना । चन्द्रेण । दुहितः । दिवः । आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउच्छन्ती । दिविष्टिषु ॥ ९ ॥

स्कन्द० हे उषः ! आ भाहि दीप्यस्व भानुना दीप्तिर्भानुरुच्यते, तेन भानुना । चन्द्रेण चदि आह्लादे[10] । आह्लादयित्रा । सुखकरेणेत्यर्थः । हे दुहितः दिवः । कथं च पुनराभाहि । आवहन्ती आनयन्ती भूरि बहु अस्मभ्यम् अस्मदर्थम् सौभगम् शोभनं धनम् । प्रभूतमस्मभ्यं शोभनं धनं ददतीत्यर्थः[11] । व्युच्छन्ती च[12] दिविष्टिषु दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः[13] तासु । अस्मदीयेषु यज्ञेष्वित्यर्थः ॥ ९ ॥

---

१. °र्शनमभि° कु.　२-२. नास्ति कु.　३. र(रा)क्षसा° भ.　४. नास्ति कु ल तथं वि[११] भ[१].
५. सर्वमेव कु.　६. नमयति वि[१] भ[१]; न नमयति वि[१] तथं.　७. °यतॄंश्च° कु.　८. °ति अपोच्छति वि[१] भ[१];
°न्ती ल कु.　९. °निष्टपरिहार° वि मै[१].　१०. आह्लादे मूको.　११. ददती° मूको.　१२. नास्ति भ.
१३. °ष्टय इष्टयः भ.

वेङ्कट० उषः! अभिमुखम्[1] भाहि[2] तेजसा ह्लादकेन दिवः दुहितः! आवहन्ती बहु धनम् अस्मभ्यम् प्रादुर्भवन्ती दिवसानामन्वेषणेषु ॥ ९ ॥

मुद्गल० हे दिवः दुहितः! द्युलोकस्य पुत्रि! उषः! उषोदेवते! चन्द्रेण सर्वेषामाह्लादकेन भानुना प्रकाशेन आ समन्तात् भाहि प्रकाशस्व। किं कुर्वती। दिविदिष्टिषु दिवसेषु भूरि प्रभूतम् सौभगम् सौभाग्यम् अस्मभ्यम् आ वहन्ती सम्पादयन्ती तथा व्युच्छन्ती तमांसि वर्जयन्ती ॥ ९ ॥

विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि ।
सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ १० ॥

विश्वस्य । हि । प्राणनम् । जीवनम् । त्वे इति । वि । यत् । उच्छसि । सूनरि । सा । नः । रथेन । बृहता । विभाऽवरि । श्रुधि । चित्रऽमघे । हवम् ॥ १० ॥

स्कन्द० विश्वस्य हि हिशब्दः पदपूरणः। सर्वस्य प्राणिजातस्य प्राणनम् जीवनम् च त्वे त्वयि त्वदायत्तम्। सर्वे प्राणिनस्त्वत्प्रसादात् प्राणन्ति जीवन्ति चेत्यर्थः। [3]या त्वं किं करोषि[3]। उच्यते। वि यत् उच्छसि यत् या त्वं व्युच्छसि तमांसि विवासयसि हे सूनरि!। या चैवंरूपाऽसि सा नः अस्माकम् रथेन बृहता तृतीयानिर्देशादत्र आगन्तुमिति शेषः। महता रथेन अस्मान् प्रत्यागन्तु हे विभावरि! दीप्तिमति! श्रुधि शृणु। हे चित्रामघे![4] हे चित्रधने! उषः! उषोनामैव वा चित्रामघाशब्दः[5] ( द्र निघ १,८ )। हवम् आह्वानम् ॥ १० ॥

वेङ्कट० विश्वस्य हि प्राणिनः[6] प्राणनम् जीवनम् च त्वयि भवति यदा त्वम् वि उच्छसि उषः! प्रकाशं कुर्वती[7] सा अस्माकम् रथेन बृहता आगता[8] दीप्तिमति! शृणु चित्रधने! ह्वानम् ॥ १० ॥

मुद्गल० [9]हे सूनरि! उषोदेवि! विश्वस्य सर्वस्य प्राणिजातस्य प्राणनम् चेष्टनम् जीवनम् प्राणधारणं च त्वे हि त्वय्येव वर्तते। यत् यस्मात् त्वम् वि उच्छसि तमो वर्जयसि[9]। हे विभावरि! विशिष्टप्रकाशयुक्ते! सा तादृशी त्वम् नः अस्मान् प्रति बृहता प्रौढेन रथेन आयाहीति शेषः। तथा हे चित्रामघे! विचित्रधनयुक्ते! उषोदेवते! अस्मदीयम् हवम् आह्वानम् श्रुधि शृणु ॥ १० ॥

इति प्रथमाष्टके चतुर्थाध्याये चतुर्थो वर्गः ॥

उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥ ११ ॥

उषः । वाजम् । हि । वंस्व । यः । चित्रः । मानुषे । जने । तेन । आ । वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा । गृणन्ति । वह्नयः ॥ ११ ॥

---

१. [ मुखम् वि[1] अ[1] २. भाहि वि[1] अ[1]. ३-३. यान्त्वं किं करोषि अ, किं करोषि मु कि. ४. चित्रमघे कि ५. मघश° मु. ६. नास्ति वि[1] अ[1]. ७. कुर्वती मू. ८. आगता वि[1] अ[1]; गता मु. ९-९ नास्ति वि.

स्कन्द० हे उषः! वाजम् अन्नम् हि-शब्दस्तु पदपूरणः। वंस्व सामर्थ्यात् 'वस्वा नो वार्या पुरु' (ऋ ८,२३,२७) इत्यादिप्रयोगदर्शनाच्च वनिरत्र दानार्थः। देहि। कीदृशो वाजः[1]। उच्यते। यः चित्रः पूज्यः मानुषे जने, मनुष्यलोके। तेन दत्तेन उप आ वह सुकृतः शोभनान्नान् स्वर्गादिफलावाप्तिकरणान्[2] अध्वरान् यज्ञान्। कस्य। ये त्वा गृणन्ति स्तुवन्ति वह्नयः स्तुतीनां वोढारो मनुप्रभृतयः। यच्छब्दश्रुते[3] तेषामित्यध्याहार्यः। तेनान्नेन स्तोतॄन् यज्ञकरणसमर्थान् कुर्वित्यर्थः। अथवा तेनेति हेतौ तृतीया। तेन हविर्भूतेन हेतुना[4]। तदन्नं हविर्भूतमुपभोक्तुमित्यर्थः। आ वह। कान्। आत्मसहचारिणो[4] विश्वान् देवान्। 'कुत एतत्[5]। 'विश्वान् देवान् आ वह' इत्युत्तरस्यामृचि दर्शनात्। कीदृशान्। सुकृतः शोभनकर्मकारिणः। क्व,। अध्वरान् उप उपशब्दः सामर्थ्यात् प्रतिशब्दस्यार्थे। यज्ञान् प्रति। यज्ञेष्वित्यर्थः। कस्य स्वभूतेषु। उच्यते। ये त्वा गृणन्ति वह्नयः तेषाम् ॥ ११ ॥

वेङ्कट० उषः! हि अन्नं देहि[7], यः पूजनीयः मनुष्येषु भवति। अथ तेन अन्नेन सुकर्मणः यज्ञान् उप आ वह ये त्वां स्तुवन्ति स्तोतारः ॥ ११ ॥

मुद्गल० हे उषः! वाचम् हविर्लक्षणमन्नम् हि श्रुतिषु प्रसिद्धम् वंस्व याचस्व। स्वीकुर्वित्यर्थः। यः वाजः चित्रः चायनीयः[8] मानुषे मनुष्ये जने यजमाने वर्तते तं वाजमिति पूर्वत्रान्वयः। तेन कारणेन सुकृतः[9] सुष्ठु कृतवतो[10] यजमानान् अध्वरान् हिंसारहितान् यागान् उप आ वह प्रापय। ये यजमानाः वह्नयः यज्ञनिर्वाहकाः त्वा त्वाम् गृणन्ति स्तुवन्ति तान् सुकृत इति पूर्वेण सम्बन्धः ॥ ११ ॥

विश्वा॑न् दे॒वाँ आ व॑ह॒ सोम॑पीतये॒ऽन्तरि॑क्षादु॒षस्त्वम् ।
सास्मासु॑ धा॒ गोम॒दश्वा॑वदु॒क्थ्य१॒॑मुषो॒ वाजं॑ सु॒वीर्य॑म् ॥ १२ ॥

विश्वा॑न् । दे॒वान् । आ । व॒ह॒ । सोम॑ऽपीतये । अ॒न्तरि॑क्षात् । उ॒षः॒ । त्वम् । सा । अ॒स्मासु॑ । धाः॒ । गोऽम॑त् । अश्व॑ऽवत् । उ॒क्थ्य॑म् । उषः॑ । वाज॑म् । सु॒ऽवीर्य॑म् ॥ १२ ॥

स्कन्द० विश्वान् देवान् आत्मसहचारिणो विश्वान् देवान् आ वह सोमपीतये अन्तरिक्षात् हे उषः! त्वम्। उषस एवात्र प्राधान्यम्। सहचारित्वमात्रं विशेषो देवानाम्। सा अस्मासु इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यां त्वामेवमवोचाम सा अस्मासु धाः स्थापय। अस्मभ्यं देहीत्यर्थः। गोमत् अश्ववत् च[11] उक्थ्यम् प्रशस्यं[12] हे उषः! वाजम् अन्नम् सुवीर्यम् शोभनवीर्यसहितं शोभनवीर्यं वा ॥ १२ ॥

वेङ्कट० विश्वान्[13] देवान् आ वह सोमपानाय अन्तरिक्षात् उषः! त्वम्। सा अस्मासु धेहि गोमत् अश्ववत् प्रशस्यम् उषः! वाजम् शोभनवीर्यम् ॥ १२ ॥

---

१. यो वाज. भ ति. २. °कारणात् ति. ३. °च्छब्दनात् भ. ४. नास्ति भ. °हचारिणो वि. ५-६. नास्ति ति. ७. देहि भ° वि[11] ल. ८. चायनीयः मूको. ९. कृतः मूको. १०. तवन्तो मूको. ११. नास्ति भ कु. १२. °शस्तं भ. १३. नास्ति वि[1] छपं.

मुद्गल० हे उषः ! त्वम् सोमपीतये सोमपानार्थम् अन्तरिक्षात् अन्तरिक्षलोकात् विश्वान् सर्वान् देवान्[1] आ वह अस्मदीयं देवयजनदेशं प्रापय। हे उषः ! सा तादृशी त्वम् गोमत् गोमन्तम् बहुभिर्गोभिर्युक्तम् अश्वावत् अश्वैरुपेतम् उक्थ्यम् प्रशस्यम् सुवीर्यम् शोभनवीर्योपेतम् वाजम् अन्नम् अस्मासु धाः निधेहि स्थापयेत्यर्थः ॥ १२ ॥

यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥ १३ ॥

यस्याः । रुशन्तः । अर्चयः । प्रति । भद्राः । अदृक्षत । सा । नः । रयिम् । विश्वऽवारम् । सुऽपेशसम् । उषाः । ददातु । सुग्म्यम् ॥ १३ ॥

स्कन्द० [2]। सुपेशसम् 'पेश इति रूपनाम' (या ८,११)। सुरूपम् उषा ददातु सुग्म्यम्[3] सुखनामैतत् ( द्र. निघ ३, ६ )। सुखं च[3]। अथवा रय्येरेवैतत् विशेषणम्। सुखकरं रयिम्[3] ॥ १३ ॥

वेङ्कट० यस्या दीप्यमाना अर्चयः प्रति अदृक्षत[4] कल्याणाः। सा नः रयिम् सर्ववरणीयं सुरूपम् उषा ददातु सुखकरम् ॥ १३ ॥

मुद्गल० यस्याः उषसः अर्चयः प्रकाशाः रुशन्तः शत्रून्[5] हिंसन्तः भद्राः कल्याणाः प्रति अदृक्षत प्रतिदृश्यन्ते। सा तथाभूता उषाः नः अस्मभ्यम् रयिम् ददातु। कीदृशं रयिम्। विश्ववारम् विश्वस्य वारकम् सुपेशसम् शोभनरूपोपेतम् सुग्म्यम् सुष्ठु गन्तव्यम् ॥ १३ ॥

ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥ १४ ॥

ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि । सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥ १४ ॥

स्कन्द० सा[6] नः इति तच्छब्देन उषसः प्रतिनिर्देशात्, ये इति यच्छब्द उषोविषयो द्रष्टव्यः। व्यत्ययेन पुंलिङ्गता। द्वितीयैकवचनस्य स्थाने प्रथमाबहुवचनम्। चित् शब्दः पदपूरणः। याम् त्वाम् ऋषयः पूर्वे ऊतये अवितरि[7] गत्यर्थे। स्वयज्ञान् प्रति गमनाय जुहूरे हूतवन्तः अवसे तर्पणाय हविर्भिः हे महि महति![8] सा नः स्तोमान् अभि गृणीहि[9] अभिष्टुहि राधसा धनेन। धनं दत्वेत्यर्थः। धनदानेन तुष्टिप्रकाशनात्[10] स्तोमा अभिष्टुता भवन्ति। न च केवलेन राधसा। किं तर्हि। हे उषः! [11]शुक्रेण शोचिषा शुक्रवर्णया च त्वदीप्त्या। नित्यं यास्याद् प्रति शुक्रेण ज्योतिषा[11] स्तुहीत्यर्थः। अथवा 'ये चिद्धि त्वाम्', 'सा नः स्तोमान्' इति द्वयो यच्छब्द-तच्छब्दौ परस्परसम्बन्धाभावाद्योग्यार्थसम्बन्धौ भवतो यच्छब्दतच्छब्दावध्याहृत्य निराकाङ्क्षीकर्तव्यौ।

---

१ १. °वान् सर्वान् वि. २. पादत्रयस्य भाष्यांशः त्रुटितः मूको. ३. नास्ति भ. ४. °दृक्षत वि. भ. ५. शत्रून् वि. ६. ये चिद्धि हि त्वां सा मूको. ७. नास्ति ति. ८. मह इति वि. ९. नास्ति भ. १०. °दान नि. ११-११. नास्ति नि भ.

ये त्वामृषयः पूर्वं जुहुरे तेषामिव मां त्वामस्तोष्म[1] सा त्वम् नः अस्माकमपि[2] स्तोमान् अभिगृणीहि राधसेति ॥ १४ ॥

वेङ्कट० ये चित् हि त्वाम् ऋषयः पूर्वे रक्षणाय आहूतवन्तः महति![3] । सा अस्माकम् स्तोमान् अभि गृणीहि धनेन उषः! शुक्रेण तेजसा युक्तेति ॥ १४ ॥

मुद्गल० हे महि! महिते! पूजनीये! वा उषोदेवते! त्वाम् ये चित् हि ये खलु प्रसिद्धाः पूर्वे चिरन्तनाः ऋषयः मन्त्रद्रष्टारः ऊतये रक्षणाय अवमे अन्नाय च जुहूरे जुह्विरे आहूतवन्त[4], सूक्तरूपैः मन्त्रैः स्तुतवन्त[4] इत्यर्थः। हे उषः! सा तादृशी त्वम् राधसा अस्माभिर्दत्तेन हविर्लक्षणेन धनेन शुक्रेण शोचिषा दीप्तेन तमो निवारयितुं समर्थेन तेजसा चोपलक्षिता सती तेषाम् ऋषीणामिव नः अस्माकम् स्तोमान् अभि स्तुतीः अभिलक्ष्य गृणीहि सम्यक् स्तुतमिति शब्दय ॥ १४ ॥

उषो यदद्य भानुना वि द्वारावृणवो दिवः ।
प्र नो यच्छतादवृकं पृथु च्छर्दिः प्र देवि गोमतीरिषः ॥ १५ ॥

उषः । यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः । प्र । नः । यच्छतात् । अवृकम् ।
पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ॥ १५ ॥

स्कन्द० उषः यत् हे उषः! [5]या त्वम्[5] अद्य स्वेन भानुना द्वारौ[6] पूर्वापरे[7] द्वे अपि द्वारे वि ऋणवः ऋणु गतौ। विविधं गच्छसि। कस्य[8] द्वारौ। दिवः द्युलोकस्य। कृत्स्नां दिवं स्वज्योतिषा व्याप्नोषीत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। सा प्र नः यच्छतात् प्रयच्छतात्। प्रयच्छ अस्मभ्यम्। अवृकम् वृक वृक आदने, परैरनादेयम्। पृथु विस्तीर्णम्। छर्दिः गृहम्। न च केवलम्। किं तर्हि। प्रयच्छ हे देवि! गोमतीः इषः गोसंयुक्तानि अन्नान्यपि ॥ १५ ॥

वेङ्कट० उषः! यत्[9] अद्य तेजसा दिवः द्वारौ पूर्वापरे सूर्य्येव विवृतवती। तदानीं प्र यच्छ अस्मभ्यं स्तेनरहितं विस्तीर्णं गृहम् प्र यच्छ[9] च[10] देवि! गोमन्ति अन्नानि ॥ १५ ॥

मुद्गल० हे उषः! त्वम्[11] अद्य अस्मिन् प्रभातसमये यत् यस्मात् भानुना प्रकाशेन दिवः अन्तरिक्षस्य द्वारौ द्वारभूतौ पूर्वापरदिग्भागौ अन्धकारेण आच्छादितौ वि ऋणवः विश्लिष्य प्राप्नोषि। तस्मात् त्वम् नः अस्मभ्यम् छर्दिः [12]तेजस्वि गृहम् प्र यच्छतात् देहि। कीदृशं छर्दिः[12]। अवृकम् हिंसकरहितम् पृथु विस्तीर्णम्। अपि च हे देवि! देवनशीले! गोमतीः बहुभिर्गोभिर्युक्ता इषः अन्नानि। प्र इत्युपसर्गस्य आवृत्तेः यच्छतात् इत्यनुषज्यते। प्र यच्छतात् देहि ॥ १५ ॥

सं नो राया बृहता विश्वपेशसा मिमिक्ष्वा समिळाभिरा ।
सं द्युम्नेन विश्वतुरोषो महि सं वाजैर्वाजिनीवति ॥ १६ ॥

---

१. °स्तोष्ट वि; स्तोष्म. कु अ. २. अस्माकमिति नास्ति वि. ३. महि तेषामिव वि[1] अ[1]. ४. स्तुवन्तः मूको. ५-५. सा त्वम् मूको. ६. द्वारेव कु. ७. °परो अ वि. ८. कस्य कु वि. ९. °यच्छ वि[1]. १०. नास्ति वि[1]. ११. नास्ति मूको. १२-१२. नास्ति मूको.

सम् । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सम् । इळाभिः । आ । सम् । द्युम्नेन । विश्वऽतुरा । उषः । महि । सम् । वाजैः । वाजिनीऽवति ॥ १६ ॥

स्कन्द० सम् नः राया न: अस्मान् प्रति राया बृहता विश्वपेशसा बहुरूपेण सर्वरूपेण वा । सम् मिमिक्ष्व म्यक्षतेर्गतिकर्मणः ( द्र. निघ २, १४ ) एतद्रूपम् । सामर्थ्याच्चात्र म्यक्षतिरन्तर्णीतण्यर्थो द्रष्टव्य । सङ्गमय सम्बन्धय । धनमस्मभ्यं देहीत्यर्थः । न च केवलेन राया । किं तर्हि । सम् इळाभिः आ 'इळा' ( निघ २, ७ ) इत्यन्ननाम । आकारः समुच्चयार्थः । 'देवेभ्यश्च पितृभ्य आ' ( ऋ १०, १६,११ ) इति यथा । अन्नैश्च संमिमिक्ष्व[1] । सम् द्युम्नेन द्युम्नं द्योततेः, यश इहाभिप्रेतम् । यशसा च संमिमिक्ष्व । कीदृशेन । विश्वतुरा तुर्वतिः[2] हिंसार्थः । सर्वशत्रूणां हिंसित्रा । अन्तकर्त्रेत्यर्थः । हे उषः ! महि ! सम् वाजैः वाजशब्दोऽत्र बलवचनः । बलैश्च संमिमिक्ष्व । हे वाजिनीवति । उषोनामैतत् ( द्र. निघ १, ८ ) । उषः ! । प्रत्युपसर्गं चाख्यातानुषङ्गादाख्यातभेदाच्च वाक्यभेदाद् वाजिनीवतीरयेतस्योष इत्येतेन [3]सह पर्यायत्वेऽप्यपुनरुक्तत्वम्[3] । सम्बन्धिशब्दो वोषस एव विशेषणम् । वाजिनीशब्दोऽश्वनामधेयम् । [4]'अश्ववती । अथवा[4] 'वाजी' ( निघ १,१४ ) इत्यश्वनाम । तस्मात् स्त्रियामीकारः । वाजिन्यो[5] वडवास्तद्वती वाजिनीवती ॥ १६ ॥

वेङ्कट० संयोजय अस्मान्[6] धनेन महता[7] सर्वरूपेण[8] । सम् मिमिक्ष्व च गोभिः । सम् योजय यशसा सर्वशत्रूणां हिंसकेन[9] । सम् योजय अश्वैश्च अश्ववति ! ॥ १६ ॥

मुद्गल० हे उष ! नः अस्मान् राया धनेन सम् मिमिक्ष्व संसिञ्च । संयोजयेत्यर्थः । कीदृशेन धनेन । बृहता प्रभूतेन विश्वपेशसा बहुविधरूपयुक्तेन । तथा इळाभिः आ गोभिश्च अस्मान् सम् मिमिक्ष्व । [10]आकारः समुच्चये । किं च हे महि ! महनीये ! उषोदेवते । द्युम्नेन यशसा सम् मिमिक्ष्व[10] । कीदृशेन द्युम्नेन । विश्वतुरा सर्वेषां शत्रूणां हिंसकेन । तथा हे वाजिनीवति ! अश्वसाधनभूतक्रियायुते ! वाजैः अन्नैः अस्मान् सम् मिमिक्ष्व ॥ १६ ॥

इति प्रथमाष्टके चतुर्थाध्याये पञ्चमो वर्गः ॥

[४९]

उषो भद्रेभिरा गहि दिवश्चिद् रोचनादधि । वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥ १ ॥

उषः । भद्रेभिः । आ । गहि । दिवः । चित् । रोचनात् । अधि । वहन्तु । अरुणऽप्सवः । उप । त्वा । सोमिनः । गृहम् ॥ १ ॥

स्कन्द० हे उषः । भद्रेभिः कल्याणैरश्वैः आ गहि आगच्छ । कुतः । दिवः चित् रोचनात् अधि चिच्छब्दः पदपूरणः । रोचनशब्दो दीप्तिवचनः । अधीत्युपरिभावे, दिव इत्यनेन[11] च सम्बध्यमानः ।

1. °मिक्ष्व हे वाजिनीवति उषो अ. 2. तुर्वतिः मूको. 3-3. सह पुनरु° अ; सह पर्यायत्वेऽप्य° मू. 4-4. वा अ; नास्ति वि. 5. °न्यो वा अ वि. 6. अस्माकम् अ[1] वि[1]. 7. नास्ति वि[1] अ[1]. 8. बहु° वि[1] अ[1]. 9. नाशकेन वि[1] अ[1]. 10-10. नास्ति वि मू[1]. 11. °दिवेत अ[1].

दिवोऽधि दिव उपर्यवस्थिताद्रोचनात् दीप्तादादित्यमण्डलादागच्छ । किञ्च वहन्तु अरुणप्सवः अरुणः आरक्तो वर्णः । 'प्सुः'[१] ( निघ ३,७ ) इति रूपनाम । आरक्तरूपा अश्वाः । कम्[२] । त्वा त्वाम् । क । उप सोमिन गृहम् उपशब्दः प्रतिशब्दस्यार्थे, गृहमित्यनेन च सम्बन्धयितव्यः । सोमवतो यजमानस्य गृहं प्रति ॥ १ ॥

वेङ्कट० उषः ! भद्रैः आगच्छ [३]'दीप्तात् लोकात्'[३] । उप वहन्तु त्वाम् अरुणरूपा अश्वाः सोमिनः गृहम् ॥ १ ॥

मुद्गल० [४]"उपो भद्रेभि.' इति चतुर्ऋचं षष्ठं सूक्तम् । कण्वपुत्रः प्रस्कण्व ऋषिः । अनुष्टुप् छन्दः । उषा देवता[४] ॥

हे उष.! उषोदेवते! भद्रेभिः भन्दनीयैः शोभनैर्मार्गैः दिवः अन्तरिक्षलोकात् [५]रोचनात् रोचमानात् दीप्यमानात् अधि उपरि वर्तमानात् चित् पूजितात् एवंविधादन्तरिक्षलोकात्[५] आ गहि आगच्छ । हे उषः! अरुणप्सवः अरुणवर्णा गावः सोमिनः सोमयुक्तस्य यजमानस्य गृहम् देवयजनरूपं यज्ञगृहम् त्वा त्वाम् उप वहन्तु प्रापयन्तु ॥ १ ॥

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् । तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥ २ ॥

सुऽपेशसम् । सुऽखम् । रथम् । यम् । अधिऽअस्थाः । उषः । त्वम् । तेन । सुऽश्रवसम् । जनम् ।
प्र । अव । अद्य । दुहितः । दिवः ॥ २ ॥

स्कन्द० सुपेशसम् सुरूपम् सुखम् च रथम् यम् अध्यस्थाः अधिष्ठितवती आरूढवती असि । हे उषः! त्वम् तेन सुश्रवसम् 'श्रव.' ( निघ २,७ ) इत्यन्ननाम । शोभनं हविर्लक्षणमन्नं यस्य स सुश्रवाः, तं सुश्रवसं सुहविष्कं यजमानम् जनम् प्र अव प्रकर्षेण आगच्छ अद्य हे दुहितः दिवः! ॥ २ ॥

वेङ्कट० सुरूपं सुद्वारम् रथम् यम् अध्यस्थाः उषः! त्वम् । तेन शोभनान्नं हविष्मन्तम् यजमानम् अद्य प्ररक्ष दिवः दुहितः! ॥ २ ॥

मुद्गल० हे उषः! त्वम् यम् रथम् अध्यस्थाः अधितिष्ठसि । कीदृशं रथम् । सुपेशसम् शोभनावयवम् । सुखम् शोभनेन [६]'खेन आकाशेन'[६] युक्तम् । विस्तृतमित्यर्थः । हे दिव. दुहितः! द्युलोकसकाशात् उत्पन्ने उषोदेवते! तेन रथेन अद्य अस्मिन् काले सुश्रवसम्[७] शोभनहविर्युक्तम् जनम् यजमानम् प्र अव प्रकर्षेण गच्छ ॥ २ ॥

वयश्चित् ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३ ॥

वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुऽनि । उषः । प्र । आरन् । ऋतून् ।
अनु । दिवः । अन्तेभ्यः । परि ॥ ३ ॥

---

१. नास्ति ति. २. किंच कम् अ. ३-३. 'धात् लोकात् वि' अ'. ४-४. नास्ति वि मै'. ५-५ नास्ति मै'. ६-६. खेनाशकेन मूको ७. नास्ति वि.

स्कन्द० वय चित् ते चिच्छब्दोऽत्र उपमायाम् । वय इव पक्षिण इव ते तव स्वभूता । पतत्रिण. पतनशीला गमनशीला[1] अश्वा । द्विपत् चतुष्पत् द्विपात् चतुष्पाश्च[2] । हे अर्जुनि ! अर्जुन शुक्लो वर्ण उच्यते । शुक्लवर्णे ! हे उष ! प्रारन् अर्तिर्गत्यर्थ । प्रकर्षेण गच्छन्ति । ऋतून् अनु[3] ऋतुशब्द कालवचन । अनुशब्दो लक्षणे कर्मप्रवचनीय प्रतिशब्देन समानार्थ । कालान् प्रति । यो यो गमनकालस्तत्र तत्रेत्यर्थ । कुत प्रारन् । उच्यते— दिव अन्तेभ्य द्युलोकस्यान्तेभ्य । परि शब्दस्तु 'अधिपरी अनर्थकौ' ( पा १,४,९३ ) इति कर्मप्रवचनीय पदपूरण । अथवा परिशब्दोऽन्तशब्दात् पूर्वो द्रष्टव्य । अकृतसमासोऽपि च कृतसमासार्थ । दिव पर्यन्तेभ्य प्रारन्[4] ॥ ३ ॥

वेङ्कट० पक्षिण पत्रयुक्ता द्विपाच्च चतुष्पाच्च उष ! शुक्लवर्णे ! तव आगमनकालान्[5] प्रति प्रगच्छन्ति[6] अन्तरिक्षपर्यन्तेभ्य ॥ ३ ॥

मुद्गल० हे अर्जुनि ! शुभ्रवर्णे ! उष ! उषोदेवते ! ते तव ऋतून् अनु गमनानि अनुलक्ष्य द्विपत् द्विपात् मनुष्यादिकम् चतुष्पत्[7] चतुष्पात् गवादिक तथा पतत्रिण पतत्रवन्त पक्षोपेता वय चित् पक्षिणश्च दिव अन्तेभ्य आकाशप्रान्तेभ्य परि उपरि प्र अरन् प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूता सर्वे प्राणिन त्वदागमनानन्तर चेष्टावन्तो भवन्तीत्यर्थ ॥ ३ ॥

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् । तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥

विऽउच्छन्ती । हि । रश्मिऽभि । विश्वम् । आऽभासि । रोचनम् । ताम् । त्वाम् । उष । वसुऽयव । गी ऽभि । कण्वा । अहूषत ॥ ४ ॥

स्कन्द० व्युच्छन्ती हि हिशब्द पदपूरण[8] । तां त्वाम् इति च तच्छब्दाद्यच्छब्दोऽध्याहर्तव्य । 'या त्वं' व्युच्छन्ती आत्मीयै रश्मिभि विश्वम् आभासि । अन्तर्णीतण्यर्थोऽय[10] भाति सामर्थ्याद् द्रष्टव्य । सर्व जगदाभासयसि । प्रकाशयसीत्यर्थ । रोचनम् प्रकाशस्वभावकम् । ताम् त्वाम् हे उष ! वसूयव धनकामा गीर्भि स्तुतिलक्षणाभि गीर्भि कण्वा कण्वपुत्रा अहूषत आहूतवन्त । आत्मन एवेद परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अह कण्वपुत्र प्रस्कण्वनामा आहूतवानित्यर्थ ॥ ४ ॥

वेङ्कट० व्युच्छन्ती हि रश्मिभि सर्वं लोक भासयसि । ताम् त्वाम् उष ! धनकामा गीर्भि कण्वा आहूतवन्त ॥ ४ ॥

मुद्गल० हे उष ! व्युच्छन्ती तमो वर्जयन्ती त्वम् रश्मिभि स्वकीयै तेजोभि विश्वम् सर्वं भूतजातम् रोचनम् रोचमानम् प्रकाशयुक्त यथा भवति तथा आ भासि आ समन्तात् प्रकाशसे । हि यस्मादेव तस्मात् ताम् तादृशीम् त्वाम् वसूयव वसुकामा कण्वा मेधाविन ऋत्विज गीर्भि स्तुतिलक्षणै वचोभि अहूषत आहूतवन्त । स्तुतवन्त इत्यर्थ ॥ ४ ॥

इति प्रथमाष्टके चतुर्थाध्याये षष्ठो वर्ग ॥

---

१ नास्ति भ २ °श्च प्रति मूको ३ नास्ति कु ४ प्रारन्निति भ ५ °लान् वि' लों ६ गच्छ° वि' भ' कु ७ नास्ति वि ८. पाद° ति ९ ९ यां त्वां मूको १० °र्थो नास्ति भ

[ ५० ]

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १ ॥

उत् । ऊँ इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ॥ १ ॥

स्कन्द० 'उदु त्यम् नौर्यमुत्तरम्' ( तु बृदे ३,११२ ) । सूर्यदेवतमुत्तर सूक्तम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यं । य सर्वप्राणिनो मनस्यन्ति । त्यम्[१] तम् । जातवेदसम् जातप्रज्ञानम् देवम् दानादिगुणम् । उत् वहन्ति ऊर्ध्वं वहन्ति । के । सामर्थ्यादश्वा । कीदृशा । केतव 'केतु' ( निघ ३,९ ) इति प्रज्ञानाम । प्रज्ञानसत्त्वा[२] । सूर्यस्य हि स्वयं प्रज्ञानसत्त्वत्वाद्[३] अश्वैरपि प्रज्ञानसत्त्वैरेव[४] भवितव्यम् । अथवा केतवो रश्मय । प्रज्ञानसत्त्वत्वात्[५] ते उद्वहन्ति । किमर्थम् । दृशे द्रष्टुम् । दर्शनार्थमित्यर्थ । कस्य[६] । विश्वाय षष्ठ्यर्थं एषा चतुर्थी । सर्वस्य भूतजातस्य । उदिते हि सूर्ये सर्वं भूतजात द्रष्टु समर्थं भवति, नानुदिते । कमुद्वहन्ति । सूर्यम् ॥ १ ॥

वेङ्कट० उत् वहन्ति तम् जातवेदसम् [७]केतव अश्वा[७] रश्मयो वा सर्वेषा भूताना दर्शनाय ॥ १ ॥

मुद्गल० "उदु त्यम्' इति त्रयोदशर्चं सप्तम सूक्तम् । कण्वपुत्र प्रस्कण्व ऋषि । आदौ नव गायत्र्य । शिष्टाश्चतस्रोऽनुष्टुभ । सूर्यो देवता[८] ।

केतव प्रज्ञापका सूर्याश्वा सूर्यम् आदित्यम् उत् उ वहन्ति ऊर्ध्वं वहन्ति । उ पूरण । उक्त च—'मिताक्षरेष्वनर्थका कमीमिद्विति' ( या १, ९ ) । किमर्थम् । विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुम् । यथा सर्वे जना सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थ । कीदृश सूर्यम् । त्यम् त प्रसिद्धम् जातवेदसम् जाताना प्राणिना वेदितारम् देवम् द्योतमानम् ॥ १ ॥

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ २ ॥

अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥ २ ॥

स्कन्द० त्ये इति नक्षत्रसामानाधिकरण्याद् व्यत्ययेन पुँल्लिङ्गता । तानीत्यर्थं । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यं । यानि रात्रावदृश्यन्त तानि तायव यथा 'तायु' ( निघ ३,२४ ) इति स्तेननाम । चोरा इव । नक्षत्राणि अप यन्ति अपगच्छन्ति । अदृश्यता प्रतिपद्यन्त इत्यर्थ । न च केवलानि । किं तर्हि । अक्तुभि 'अक्तु' ( निघ १, ७ ) इति रात्रिनाम । सहयोगलक्षणा चैषा[९] तृतीया । रात्रिभिस्सह । कुतोऽपयन्ति । सूराय सूरशब्द सूर्यपर्याय । पञ्चम्यर्थे चतुर्थी । सूर्यात् । सूर्योदयोत्तरकाल हि नक्षत्राणि रात्र्यश्च न दृश्यन्ते । कीदृशात् सूर्यात् । विश्वचक्षस स्वज्योतिषा सर्वस्य दर्शयितुर्द्रष्टुर्वा ॥ २ ॥

वेङ्कट० [१०]अप यन्ति[१०] नक्षत्राणि रात्रिभि सहाऽऽगच्छन्तीभि[११], अमी[१२] स्तेना इव, सूर्यम् विश्वस्य द्रष्टारं दृष्ट्वा[१३] ॥ २ ॥

---

१ नास्ति ति २ सत्ता भ, सत्वनत्त्वा कु, सत्व त्वा ति ३ °नसत्त्वनाद° ति, °न सत्त्वाद° भ कु. ४ °ज्ञानसत्त्वै° भ ५ °न सत्त्वतात् ति ६ तस्य ति ७-७ अश्वा केतव ए वि[१] भ[२] ८-८ नास्ति वि मै[२] ९ नास्ति भ १०-१० अवय° वि[२] ११ सह ग° वि[१] एप, °भि अमीभि वि[२] १२ नास्ति कु १३ नास्ति भ[२] वि[१].

मुद्गल० त्ये तायवः यथा प्रसिद्धाः तस्करा इव नक्षत्रा[1] नक्षत्राणि देवगृहरूपाणि अक्तुभिः रात्रिभिः सह अप यन्ति अपगच्छन्ति । विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य[2] सूराय सूर्यस्य आगमनं[3] दृष्ट्वेति शेषः । तस्करा नक्षत्राणि च रात्रिभिः सह सूर्यं आगमिष्यतीति भीत्या पलायन्त इत्यर्थः ॥२॥

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ ३ ॥

अदृश्रम । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥ ३ ॥

स्कन्द० अदृश्रम् लडर्थेऽयं लुङ्[4] । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति । कर्मणि च प्रथमपुरुषबहुवचनस्य स्थाने व्यत्ययेनेदमुत्तमपुरुषैकवचनम् । दृश्यन्त इत्यर्थः । कुत एतत् । केतवः इत्यादिष्वभिहितकर्मत्वनिमित्तायाः प्रथमाया दर्शनात् । के दृश्यन्ते । उच्यते । अस्य सूर्यस्य स्वभूताः केतवः प्रज्ञानसत्त्वा[5] रश्मयः । वि-शब्दस्तु भ्राजन्तः इत्येतेन सम्बन्धयितव्यः । क्व दृश्यन्ते । जनान् मनुष्यान् अनु[6] प्रति । मनुष्यान् व्याप्य अवस्थिता[7] इत्यर्थः । विभ्राजन्तः विविधं भ्राजमाना[8] दीप्यमानाः । कथम् । अग्नयः यथा अग्नय इव । अथवा अदृश्रमित्युत्तमपुरुषश्रुतिसामर्थ्यात् रश्मीनां च दर्शनकर्मत्वात् केतव इत्यादिषु द्वितीयार्थे व्यत्ययेन प्रथमा । अदर्शमहमस्य केतून् रश्मीन् जनाननु विभ्राजमानानग्नीनिव[9] ॥ ३ ॥

वेङ्कट० अदर्शम्[10] अहम् अस्य केतून् । विभवन्ति जनान् प्रति रश्मयः भ्राजन्तः अग्नयः इव दीप्यमाना इति ॥ ३ ॥

मुद्गल० अस्य सूर्यस्य केतवः प्रज्ञापकाः रश्मयः दीप्तयः जनान् अनु वि अदृश्रम् जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते । सर्वं जगत् प्रकाशयन्तीत्यर्थः । दृष्टान्तः । भ्राजन्त दीप्यमाना अग्नयः यथा अग्नय इव ॥ ३ ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ ४ ॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचनम् ॥ ४ ॥

स्कन्द० तरणिः[11] 'तरणिः' (निघ २,१५) इति क्षिप्रनाम । क्षिप्रः[12] विश्वदर्शतः सर्वस्य हि दर्शनीयो द्रष्टा वा । ज्योतिष्कृत् ज्योतिषश्च कर्ता त्वम् असि । हे सूर्य! विश्वम् आ भासि सर्वं च जगदाभासयसि । रोचनम् प्रकाशस्वभावकम्[13] ॥ ४ ॥

वेङ्कट० क्षिप्रगन्ता[14] विश्वस्य दर्शकः ज्योतिषः कर्ता असि सूर्य !, विश्वम् च दिवं प्रकाशयसि ॥ ४ ॥

मुद्गल० हे सूर्य! त्वम् तरणिः तरिता अन्येन गन्तुम् अशक्यस्य महतोऽध्वनो गन्ता असि । तथा विश्वदर्शतः विश्वैः सर्वैः प्राणिभिः दर्शनीयः । तथा ज्योतिष्कृत् प्रकाशस्य कर्ता । विश्वम् सर्वं दृश्यजातम् रोचनम् रोचमानं दीप्यमान यथा भवति तथा आ भासि प्रकाशयसि ॥ ४ ॥

---

१. नास्ति वि. २. °शस्य मूको. ३. सूर्यस्योदाग° वि. ४. लुङ् मूको. ५. °ज्ञापका कु लि. °ज्ञ सत्त्वो भ. ६. नास्ति भ. ७. व्याप्य भ लि; स्थितम् भ. ८. भ्राजन्तो भ. ९. °निवेति भ लि. १०. अद्रुभम् कु. ११. नास्ति मूको. १२. क्षिप्रगतं कु लि. १३. °कम्: भ; °पकः लि. १४. क्षिप्रगन्ता वि[1] भ[2].

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ॥ ५ ॥

प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषान् । प्रत्यङ् । विश्वम् । स्वः । दृशे ॥५॥

स्कन्द० प्रत्यङ्[1] इत्येतस्य उदेषि इत्येतेन सम्बन्धः । उदेतुश्चेदं सूर्यस्य विशेषणं नोदयतिक्रियायाः । कुत एतत् । पुंलिङ्गत्वात् प्रतीच्यां च दिशि सूर्योदयस्यासंभवात् । '[2]प्रत्यङ् उदेषि[2]' प्राच्यां दिशि पश्चान्मुखः स्थित्वा त्वमुदेषीत्यर्थः । किमर्थम् । देवानाम् विशः साकाङ्क्षत्वाद् दृशे इत्येतद् पुरस्ताच्छ्रुतं सर्वत्रानुषक्तव्यम् । दृशेशब्दश्च द्रष्टुमित्यस्यार्थे वर्तते । 'दृशे विख्ये च' (पा ३, ४, ११) इति तुमर्थे निपातनात् । देवानां स्वभूता या विशः ता[3] दृशे द्रष्टुम् । पुरस्तादुदितस्य भवतः पश्चादवस्थितान् सर्वदेवान् द्रष्टुमित्यर्थः । न च देवविश एव केवलाः । किं तर्हि । प्रत्यङ् उदेषि मानुषान् मनुष्यानपि द्रष्टुम् । प्रत्यङ् विश्वम् सर्वं जगत् द्रष्टुम् । स्वः दृशे स्वर्शब्दोऽत्र द्युनाम । द्युलोकं च द्रष्टुम् । यावदिदं किञ्चित् सर्वं पश्चादवस्थितं द्रष्टुं सर्वतः पूर्वं[4] पश्चान्मुखः त्वमुदेषीति समस्तार्थः ॥ ५ ॥

वेङ्कट० 'तस्मात् सर्व एव[5] मन्यते मां[6] प्रत्युदगात्' (तै ६,५,४,२) इति ब्राह्मणम् । देवानाम् विशः देवानित्यर्थः[7] । देवान् मनुष्यांश्च त्वम् अभिमुखः उदेषि । किं बहुना । सर्वं जगद् अपि[8] प्रत्यङ् उदेषि सर्वस्य पदार्थस्य दर्शनाय ॥ ५ ॥

मुद्गल० हे सूर्य! त्वम् देवानाम् विशः मरुन्नामकान् देवान् प्रत्यङ् उदेषि प्रतिगच्छन् उदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा मानुषान् मनुष्यान् प्रत्यङ् उदेषि । तेऽपि अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा विश्वम् व्याप्तम् स्वः स्वर्लोकम् दृशे द्रष्टुम् प्रत्यङ् उदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये सप्तमो वर्गः ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥ ६ ॥

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु । त्वम् । वरुण । पश्यसि ॥ ६ ॥

स्कन्द० येन हे पावक! पावयितः! चक्षसा दर्शनेन ज्योतिराख्येन भुरण्यन्तम् भुरण्यतिर्गतिकर्मा (तु. निघ २, १४) । गच्छन्तं सूर्यं जनान् अनु मनुष्यान् प्रति । मनुष्यलोकं भासयन्त-मित्यर्थः । त्वं हे वरुण! पश्यसि । यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः[9] । साकाङ्क्षत्वाच्च वाक्यस्य तेनाद्य[10] वयं स्तुम इति वाक्यशेषः । एवमत्र सत्यपि वरुणस्यामन्त्रणे 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि' (या ७, २) इत्येतेन न्यायेन सूर्यस्यैव प्राधान्यं न वरुणस्य । सौर्यं हीदं सूक्तम्, न वारुणम् । अथवा सूर्यस्य सूक्तभाक्त्वाद् वरुण इति

---

१. प्रत्यङ्दे प्रत्यङ् अ. २-२. प्रतीच्या च दिशि अ. ३. तान् कु. ४. पूर्वः अ ति ५. एव कु. ६. मा वि[1] लपं. ७. °नित्यर्थः कु; °नित्य··· वि[1]. ८. नास्ति वि[1] अ[1]. ९. नास्ति अ ति. १०. तदस्य अ ति.

क्रियाशब्देन सूर्यस्यैवामन्त्रणम् । भुरण्यच्छब्दस्तु क्षिप्रकारिवचनः । क्षिप्रनामसु भुरण्युनाम-शब्दस्य पाठात् ( तु. निघ २,१५ )। सर्वनाम्नां चाक्यातजत्वात् भुरण्यतिः[1] क्षिप्रत्वार्थोऽपि न गतिकर्मैवेति गम्यते । येन हे पावक! चक्षसा अनुग्रहात्मकेन दर्शनेन भुरण्यन्तं क्षिप्र यागान् स्तुतीश्च कुर्वन्तं मनुष्यं जनान् अनु मनुष्यान् प्रति वर्तमानम् । मनुष्यमध्यगतमि-त्यर्थः । त्वं हे वरुण! ज्योतिषा कृत्स्नस्य जगत आवरितः! सूर्य! पश्यसि । साकाङ्क्षत्वाद् वाक्यस्य पूर्ववत् तेनाद्य[2] वयं स्तुम इति वाक्यशेषः । आशिर्यों वा वाक्यशेषोऽध्याहर्तव्यः । तेनास्मानपि पश्यतेति । अथवा यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या[3] । येन चक्षसा भुरण्यन्तं पश्यसि तेन प्रत्यङ्ङुदेषीति । परथा वा येन चक्षसा भुरण्यन्तं पश्यसि तेन वि द्यामेषीति ॥ ६ ॥

वेङ्कट० येन शोधयितः! तेजसा[4] जनान् मर्त्यार्थं गच्छन्तम् त्वम् आच्छादयितः! पश्यसि । 'तत् ते वयं स्तुम इति वाक्यशेषः' इति यास्कः ( १२,२२ ) ॥ ६ ॥

मुद्गल० हे पावक! सर्वस्य शोधक! वरुण! अनिष्टवारक सूर्य! त्वम् जनान् प्राणिनः भुरण्यन्तम् धारयन्तम् इमं लोकम् येन चक्षसा प्रकाशेन अनु पश्यसि अनुक्रमेण प्रकाशयसि, तं प्रकाशं स्तुम इति शेषः ॥ ६ ॥

वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑ । पश्य॒ञ्जन्मा॑नि सूर्य ॥ ७ ॥

वि । द्याम् । ए॒षि॒ । रजः॑ । पृ॒थु । अहा॑ । मिमा॑नः । अ॒क्तुऽभिः॑ । पश्य॑न् । जन्मा॑नि । सू॒र्य॒ ॥ ७ ॥

स्कन्द० द्याम् द्युलोकम् वि एषि विविधं गच्छसि । रजः पृथु विस्तीर्णं चान्तरिक्षलोकम् । अहा अहानि मिमानः निर्मिमाणः[5] कुर्वन् । केन । अक्तुभिः अक्तुशब्दोऽयं ज्योतिर्वचनः । 'अक्तुनाऽह्ना वयुनानि साधन्' ( ऋ २,१९,३ ) इति यथा । आत्मीयैः ज्योतिर्भिः रश्मिभिर्हि सूर्योऽहानि करोति । अथवा अक्तुशब्दो रात्रिनामैव ( तु. निघ १,७ )। सहयोगलक्षणा च तृतीया । अहानि निर्मिमाणोऽक्तुभिः[6] रात्रिभिः सह । केन निर्मिमाणः[7] । स्वोदयास्तमयाभ्याम् । उदयेन हि सूर्योऽहानि करोति अस्तमयेन रात्रीः[8] । पश्यन् अनुग्राह्यतया । अनुगृह्णन्नित्यर्थः । जन्मानि जननधर्माणि भूतजातानि हे सूर्य! ॥ ७ ॥

वेङ्कट० 'पृथु रजः अन्तरिक्षम् रात्रिभिः सह अहानि [कुर्वन् द्याम् अन्तरिक्षं] च पश्यन् सर्वाण्येव जातानि वि एषि मध्ये गच्छसि'[9] ॥ ७ ॥

मुद्गल० हे सूर्य! त्वम् पृथु विस्तीर्णम् रजः लोकम् द्याम्[10] अन्तरिक्षलोकम् वि एषि विशेषेण गच्छसि । किं कुर्वन् । अहा अहानि अक्तुभिः रात्रिभिः सह मिमानः उत्पादयन् । आदित्यगत्यधीनत्वाद् अहोरात्रविभागस्य । तथा जन्मानि जननवन्ति भूतजातानि पश्यन् प्रकाशयन् ॥ ७ ॥

---

१. भुरण्युरिति भ ति.　२. तथैव भ; ते ति, तेन कु.　३. प्रयोज्या भ.　४. °जना भुरण्यन्तं क्षिप्र यागान् स्तुतीश्च कुर्वन्तं वि° भ°.　५. सन्मिमानः भ, नमिमानः कु; मितिमानः ति.　६. निर्मिमाणो° ति, °माणो° भ कु.　७. °माण° मूको.　८. रात्रिम् भ कु.　९-९. नास्ति वि° स्प°.　[-] कुर्वाणः अन्तरिक्षं कु.　१०. नास्ति मे°.

सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ ८ ॥

सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिःऽकेशम् । विऽचक्षण ॥ ८ ॥

स्कन्द० सप्त त्वा सप्तसंख्याकास्त्वाम् हरितः हरिच्छब्दो[1] हरितशब्दपर्यायो नीलवर्णवचनः । 'हरितवर्णा वडवाः[2] रथे सप्तमीनिर्देशात् अत्र स्थितमिति वाक्यशेषः । रथे स्थितम् वहन्ति हे देव! सूर्य! । कीदृशम् । शोचिष्केशम् शोचिर्दीप्तिः रश्म्याख्या, सा[3] केशस्थानीया यस्य स शोचिष्केशः तं शोचिष्केशम् । दीप्तरश्मिकमित्यर्थः । हे विचक्षण! सर्वस्य द्रष्टः! ॥ ८ ॥

वेङ्कट० [4]सप्त त्वाम् † वडवाः रथे‡ आरोप्य वहन्ति देव! सूर्य! ज्वलद्रश्मिं§ विद्रष्टः!। 'केशा रश्मयः' इति यास्कः[4] ( १२,२५ ) । केशसादृश्यादिति ॥ ८ ॥

मुद्गल० हे सूर्य! देव! विचक्षण! सर्वस्य प्रकाशयितः! सप्त सप्तसंख्याकाः हरितः अश्वाः त्वा त्वाम् वहन्ति प्रापयन्ति । कीदृशम् । रथे अवस्थितमिति शेषः । तथा शोचिष्केशम् शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तम् ॥ ८ ॥

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥ ९ ॥

अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः । ताभिः । याति । स्वयुक्तिऽभिः ॥ ९ ॥

स्कन्द० ताभिः याति इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । या[5] अयुक्त युक्तवान् सप्त सप्तसंख्याका वडवाः शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्, तस्य स्वभूताः । आत्मन एव स्वभूता इत्यर्थः । अथवा उदकचरो मरुन्नाम यश्शकुनिः स शुन्ध्युरुच्यते । द्वितीयाबहुवचनान्तं[6] चेदम् । मरुत्सदृशीरित्यर्थः[7] । क्रियाशब्दो वा शुन्ध्युशब्दः । शोधयित्रीः शुन्ध्युवः । कोऽयुक्त । उच्यते । सूरः सूर्यः । रथस्य नप्त्यः नपाच्छब्दस्यापत्यनाम्नोऽयं नप्त्यादेशः । रथस्यापत्यभूताः । अत्र चेतिहासमाचक्षते — 'पुरा किलानश्वः सूर्यरथ आसीत् । सोऽह्नाऽस्तं[8] गन्तुं नाशक्नोत् । तं सूर्योऽह्नाऽस्तं गन्तुमैच्छत् । तस्मात् रथात् सप्त हरितवर्णा वडवा अजायन्त । ता एनमह्नाऽस्तमनयन्' इति । तदेतदुच्यते — रथस्य नप्त्य इति । 'अथवा नप्त्य' इति तु नप्तृशब्दपर्यायः प्रथमैककवचनान्तं सूर्यस्य विशेषणम् । नप्ता सूर्य इति । कस्य नप्ता । सामर्थ्यादपाम् । अन्तयो हि वैद्युतात्मना अग्निर्जायते, अग्नेः सूर्यः । 'अग्नेर्वा आदित्योऽजायत' इति श्रुतेः[10] । अथवा नप्त्य इति क्रियाशब्दो द्वितीयाबहुवचनान्तो वडवानामेव विशेषणार्थः । न न पतन्ति पतन्त्येव यास्ता नप्त्यः । सततगामिनीरित्यर्थः । ताभिः याति । कीदृशीभिः । स्वयुक्तिभिः स्वयमेव या रथे युज्यन्ते ताः स्वयुक्तयः, ताभिः स्वयुक्तिभिः ॥ ९ ॥

वेङ्कट० युक्तवान् सप्त वडवाः सूरः रथस्य नेत्रीः, ताभिः याति स्वेन युज्यमानाभिः । शोधनादश्वाः शुन्ध्युवः ॥ ९ ॥

---

१. हरिश° अ. २. °वर्णा च एव अ; °वर्णा वडवाश्च ति. ३. नास्ति अ. ४-४. नास्ति वि[1] लपं. † त्वा वि[1] अ[2]. ‡ रथम् अ[1] कु. § °रश्मीन् वि[1] अ[2]. ५. नास्ति कु ति. ६. °चनं मूको. ७. °दृशमित्य° अ कु; अभासदृशीत्य° ति. ८. °स्तं यदद् अ; °स्तद् ति. ९-९. नास्ति अ ति. १०. श्रुतिः कु.

मुद्गल० सूर सर्वस्य प्रेरक सूर्य शुन्ध्युव शोधिका अश्वस्त्रिय तादृशी सप्तसंख्याका[१] अयुक्त स्वरथे योजितवान् । कीदृशी । रथस्य नप्त्य न पातयित्र्य । याभिर्युक्ताभि रथो याति न पतति तादृशीरित्यर्थ । एवभूताभि ताभि अश्वस्त्रीभि स्वयुक्तिभि स्वकीययोजनया रथे सम्बद्धाभि याति यज्ञगृह प्रत्यागच्छति । अत[२] तस्मै हविर्दातव्यमिति वाक्यशेष[३] ॥ ९ ॥

उद्वयं तम॑स॒स्परि॒ ज्योति॒ष्पश्य॑न्त॒ उत्त॑रम् । दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम् ॥१०॥

उत् । व॒यम् । तम॑स । परि॑ । ज्योति॑ । पश्य॑न्त । उत्ऽत॑रम् । दे॒वम् । दे॒व॒ऽत्रा । सूर्य॑म् । अग॑न्म । ज्योति॑ । उ॒त्ऽत॒मम् ॥ १० ॥

स्कन्द० उत् इत्युपसर्ग अगन्म इत्याख्यातेन सम्बन्धयितव्य[४] वयम् तमस परि तमोऽभिभूय व्यवस्थितमित्यर्थ । सौर्यम् ज्योति पश्यन्त[५] उत्तरम् उद्गततरमत्यन्तोत्कृष्टम् । पश्यन्त इति चायम् 'लक्षणहेत्वो क्रियाया (पा ३,२,१२६) इत्येव शतृप्रत्ययो हेतौ द्रष्टव्य । 'सौर्यस्य ज्योतिषोऽत्यन्तोत्कृष्टस्य दर्शनेन हेतुनेत्यर्थ । देवम् देवत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा ५,४,५६) इत्येतमथ निर्धारणसप्तम्या द्रष्टव्य[६] । देवेषु देवाना मध्ये सूर्यम् उदगन्म ऊर्ध्वं गता प्राप्ता । सूर्येण सहैकात्मकता सूर्यलोक वा प्राप्ता स्म इत्यर्थ । प्रासिद्धत्वोभ्य दर्शनस्य भूतकालत्वात् प्राप्तेर्वाच 'हेतुभूतकालयोरप्रेषित वाद्वा' (पावा ३,३,१३३) इत्येव भूतकालप्रत्ययेनापदेश । 'देवश्चेद् वर्षिष्यति सम्पन्ना शालय' इति यथा । कीदृशम् सूर्यम् । उच्यते । ज्योति उत्तमम् उत्तम हि ज्योतिर्भगवान् सूर्य । तथाहि वाजसनेयिनाम् इयमेका ऋक् अवभृथब्राह्मणे पठ्यते— 'उद्वयं तमसस्परि' इति पाप्मा वै तम । पाप्मानमेव तमोऽपहते । स्व पश्यन्त उत्तरम् इति अय वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति । देव देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् इति स्वर्गो वै लोक । सूर्यो ज्योतिरुत्तम स्वर्ग एव लोकेऽन्तत प्रतितिष्ठति अनवेक्षमाणा अभ्यवयन्त्यपराजित' (माश १२,९,२,८) इति ॥ १० ॥

वेङ्कट० 'उत् अगन्म' वयम् तम विहाय उपरि स्थितम् ज्योति पश्यन्त[७] । किं तज्ज्योतिरित्याह— दीप्यमानम् देवेषु सूर्यम्[८] ज्योति उत्तमम् इति ॥ १० ॥

मुद्गल० वयम् अनुष्ठातार तमस परि तमस उपरि रात्रेरूर्ध्वं वर्तमानम् ज्योति तेजस्विनम् उत्तरम् उद्गततरम् देवत्रा देवेषु मध्ये देवम् दानादिगुणयुक्तम् सूर्यम् पश्यन्त स्तुतिभिर्हविर्भिश्चोपासीना सन्त उत्तमम् उत्कृष्टतमम्[१०] ज्योति सूर्यरूपम् उत् अगन्म प्राप्नवाम[९] ॥ १० ॥

उ॒द्यन्न॒द्य मि॑त्रमह आ॒रोह॒न्नुत्त॑रां॒ दिव॑म् । हृ॒द्रो॒गं मम॑ सूर्य हरि॒माणं॑ च नाशय ॥११॥

उ॒त्ऽयन् । अ॒द्य । मि॒त्र॒ऽम॒ह॒ । आ॒ऽरोह॑न् । उत्ऽत॑राम् । दिव॑म् । हृ॒त्ऽरो॒गम् । मम॑ । सू॒र्य॒ । ह॒रि॒माण॑म् । च॒ । ना॒श॒य॒ ॥ ११ ॥

---

१ °सप्तसंख्याका मै[?] २ तत वि ३ नास्ति वि मै[?] ४ उदित्यस्य पश्यन्त इत्यनेनान्वय माधीय स्यात् (द्र वे १,१९०) ५ पश्यन्तु वि. ६ ६ नास्ति कु ७ ७ नास्ति म ८-८ वरम्न कु ९ °वाम् माम्न मूको १० °मम् मूको.

स्कन्द० 'उद्यन्नद्येत्युपनिषत्'। 'उद्यन्नद्य' इत्ययं तृच उपनिषत्। उपनिषदिति विद्योच्यते। रोगघ्नी चेयं विद्याऽभिप्रेता। [1]'तथा ह्यैतिहासिकास्तावदाचक्षते[1] —'हृद्रोगदुर्वर्णतामापन्नः प्रस्कण्वस्तृचमपश्यन्' इति। बृहद्देवताकारोऽप्याह—'रोगघ्नस्तृच उत्तमः' ( बृदे ३,११३ ) इति। उद्यन् उद्गच्छन् अद्य हे मित्रमहः! मह पूजायाम्। मित्राणां [2]'पूजयितः! पूज्य! वा[2]। आरोहन् च उत्तराम् उदात्ततराम् ऊर्ध्वाम् दिवम् हृद्रोगम् हृदयरोगम् मम हे सूर्य! हरिमाणम् च हरितवर्णं च नाशय ॥ ११ ॥

वेङ्कट० उद्यन् अद्य मित्राणां पूजयितः![3] आरोहन् उद्गततरां[4] च द्याम् मम[5] [6]'हृदयस्य रोगम्[6] त्वचि हरिमाणम् च नाशय। दुर्वर्णत्वं प्राप्तः त्वचि[7] प्रस्कण्वः तृचमपश्यदिति ॥ ११ ॥

मुद्गल० हे सूर्य! सर्वस्य प्रेरक! मित्रमहः! सर्वेषामनुकूलदीप्तियुक्त! अद्य अस्मिन् काले उद्यन् उदयं गच्छन् उत्तराम् उन्नततराम् दिवम् अन्तरिक्षम् आरोहन् आभिमुख्येन प्राप्नुवन्। एवंविधस्त्वम् मम हृद्रोगम् हृदयगतम्[8] आन्तरं रोगम् हरिमाणम् च शरीरगतकान्तिहरणशीलं बाह्यरोगं तदुभयमपि नाशय। मां स्तोतारमुभयविधात् रोगात् मोचयेत्यर्थः ॥ ११ ॥

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि। अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥

शुकेषु। मे। हरिमाणम्। रोपणाकासु। दध्मसि। अथो इति। हारिद्रवेषु। मे। हरिमाणम्। नि। दध्मसि॥

स्कन्द० शुकेषु मे मम त्वग्गतम् 'हरिमाणम् रोपणाकासु' रोपणाकाः नाम हरितचटकाः[10] तासु च दध्मसि धाधिपि लिङर्थेऽयं लट्[11] द्रष्टव्यः। निधेयास्म[12] इत्याशास्महे। अथो हारिद्रवेषु हारिद्रवा नाम अत्यन्तशीघ्रगामिनः पक्षिणः। अथोशब्दश्चार्थे। हारिद्रवेषु च मे मम हरिमाणम् नि दध्मसि ॥१२॥

वेङ्कट० हरितवर्णेषु शुकेषु[13] रोपणाकासु[14] च मदीयमपि हरिमाणम् वयं निदध्मः। [15]अपि च[15] हारिद्रवेषु पक्षिषु। सर्वेऽमी[16] मदर्थमपि हरिताः भवन्त्वित्यर्थः। 'शिहे मे मन्युर्व्याघ्रे मेऽन्तरामयः' ( बौश्रौ २,५,१ ) इति मन्त्रः ॥ १२ ॥

मुद्गल० मे मदीयम् हरिमाणम् शरीरगतं हरिद्वर्णस्य भावम् शुकेषु तादृशं वर्णं कामयमानेषु पक्षिषु तथा[17] रोपणाकासु शारिकासु पक्षिविशेषेषु दध्मसि स्थापयामः। अथो अपि च हारिद्रवेषु तादृग्वर्णवत्सु मे मदीयम् हरिमाणम् नि दध्मसि निदधीमहि[18]। स च हरिमा सुखेन तत्रैवा-स्ताम्, अस्मान् मा[19] बाधिष्टेत्यर्थः ॥ १२ ॥

उदगादयमादित्यो विश्वेन सहसा सह। द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधम् ॥१३॥

उत्। अगात्। अयम्। आदित्यः। विश्वेन। सहसा। सह। द्विषन्तम्। मह्यम्। रन्धयन्। मो इति। अहम्। द्विषते। रधम् ॥ १३ ॥

---

१-१. तथा ह्याचक्षते भ. २-२. पूजयिता पूज्यो मूको. ३. °यिता वि[1]. ४. °ततरं ल वि[1]. ५. मे वि[1] अ[3]. ६-६. हृदयरो° कु. ७. नास्ति ल. ८. हृद्गत° वि. ९-९. नास्ति भ. १०. हरितचटिका मूको. ११. लड् मूको. १२. निधेयाम् मूको. १३. नास्ति वि[1] अ[1]. १४. रोपणाका नाम हरितवटीका विपचटिकासु वि[1] अ[1]; विचटिकासु वि[1] दपं; विपटिकासु वि[3]; पटिकासु अ[1]; विपटिकासु कु; नास्ति ल. १५-१५. नास्ति वि[1] अ[3]. १६. सर्वेऽपि दपं १७. नास्ति वि मे[1]. १८. निधीम° मूको. १९. नास्ति वि.

स्कन्द० उत् अगात् उद्गतः । अयम् आदित्यः अदितेः पुत्रः । विश्वेन सर्वेण[1] सहसा[2] रश्मिसमूहलक्षणेन[3] बलेन सह । अथवा ये यक्षगन्धर्वादयः आदित्यमण्डले निवसन्ति तत्समूहलक्षणमत्र सहोऽभिप्रेतम्[4] । यक्षादिभिः परिवृत[5] इत्यर्थः । द्विषन्तम् शत्रुम् मह्यम् रन्धयन् 'रध्यतिर्वशगमने' (या ६,३२) । मम वशं नयन्नित्यर्थः । मो अहम् द्विषते रधम् अस्य भगवतः [6]प्रसादान्माऽहं शत्रो[6] वशं गमम्[7] ॥ १३ ॥[8]

वेङ्कट० उदितः अयम् आदित्यः सर्वेण बलेन सह द्विषन्तम् मह्यम् वशीकुर्वन् । मैव अहम् द्विषते[9] वशो[10] भवामीति ॥ १३ ॥

मुद्गल० अयम् पुरोवर्ती आदित्यः अदितेः पुत्रः सूर्यः विश्वेन सहसा सर्वेण बलेन सह उत् अगात् उदयं प्राप्तवान् । किं कुर्वन् । मह्यम् द्विषन्तम् रन्धयन् ममोपद्रवकारिणं रोगं हिंसन्[11] । अपि च अहम् द्विषते अनिष्टकारिणे रोगाय मो रधम् मैव[12] हिंसां करोमि । सूर्य एव रोगं नाशयत्वित्यर्थः ॥ १३ ॥

इति प्रथमाष्टके चतुर्थाध्याये अष्टमो वर्गः ॥

इति प्रथमे मण्डले नवमोऽनुवाकः ॥

[ ५१ ]

अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ॥ १ ॥

अभि । त्यम् । मेषम् । पुरुऽहूतम् । ऋग्मियम् । इन्द्रम् । गीःऽभिः । मदत । वस्वः । अर्णवम् ।
यस्य । द्यावः । न । विऽचरन्ति । मानुषा । भुजे । मंहिष्ठम् । अभि । विप्रम् । अर्चत ॥ १ ॥

---

१ नास्ति अ. २ सहसा° ति. ३. समूह° अ. ४. नास्ति अ, अभिप्रे° कु. ५. वृतमि° अ, °वृतमि° कु. ६-६. नास्ति अ. ७. गच्छेयम् कु.

८. भाष्यान्ते सव्याख्याः खिलमन्त्राः (खि १,१,१-३) —

समैक्षिष्योर्ध्वमहस आदित्येन सहीयसा । अहं यशस्विनां यशो विश्वा रूपाण्या ददे ॥ १ ॥
उपयच्छ वि नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो धेहि सूर्य ॥ २ ॥
उद्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ ३ ॥

समैक्षिष्यो० । [illegible] एतावतिकल्प [illegible] । समैक्षिषि । ईक्ष दर्शने । आशिषि च लिङ्लोटौ [illegible] प्रत्ययः । [illegible] सम्यग्द्रष्टुमेव प्राप्नोमि । केन । ऊर्ध्वमहसा । ऊर्ध्वम् भवन्ति तमन्यतम (?) । मन्त्रे महो महत्वं यस्य स ऊर्ध्वमहा, तेन ऊर्ध्वमहसा । सर्वेन उत्कृष्ट [illegible] सर्वं । आदित्येन सहीयसा [illegible] । किं च अहं यशस्विनां स्वजनानां यशः सर्वाणि च रूपाणि यान्यादानयोग्यानि [तानि] आ ददे आदेयासम् ॥ १ । उपयच्छ मम वि नो भज विभक्तारमावम् । यावद् यस्य योग्यं तावत्तस्मै देहीत्यर्थः । किं तद् । सामर्थ्याद् धनम् । यथा पिता पुत्रेभ्यो यथा । किं च दीर्घायुत्वस्य चिरजीवितस्य । ह इति पदपूरणः । त्वम् ईशिषे । तस्य द्वितीयार्थे षष्ठी । तद् नः अस्मभ्यं धेहि हे सूर्य ॥ २ ॥ उद्यन्तं त्वां हे मित्रमहः । ऊर्ध्वं च आरोहन्तं हे विचक्षण ! चिरं पश्येम शरदः शतम् । शरच्छब्दः संवत्सरवचनः । वर्षशतं पश्येमेत्याशास्महे ॥ ३ ॥ अ ति. ९. °ते कु. १०. नास्ति वि अ°. ११. हिंसन् वि मै°. १२. मैव मूको.

स्कन्द० 'इच्छन्निन्द्रसमं पुत्रमभ्यध्यादङ्गिरा ऋषिः । '[1]सव्योऽभीतीन्द्र'[1] एवास्य पुत्रोऽस्मादभ्यजायत[2]' (तु. बृदे ३,१३५) । इन्द्रतुल्यं पुत्रं कामयमानोऽभिध्यानमकरोदङ्गिरा ऋषिः । तस्य सव्यो नाम 'अभि त्यं मेषम्' इत्येवमादेर्द्रष्टा इन्द्र एव योगबलेन तस्मादभिध्यानात् पुत्रोऽजायत । पुत्रतामापन्न इत्यर्थः । तस्येन्द्रस्य सव्यतामापन्नस्यैतदार्षम् । 'ऐन्द्रः सव्यः शतर्चिषु' 'प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः' (बृदे ३, ११४; ११६) इति । प्रथमे मण्डले ऋषयः शतर्चिन उच्यन्ते । निर्धारणे चैषा सप्तमी द्रष्टव्या । शतर्चिनां मध्ये सव्यसंस्तव ऐन्द्रः प्रत्येतव्यः । अभि इत्युपसर्गो मदत इत्याख्यातेन सम्बन्धयितव्यः । त्यम् मेषम् इत्यत्रेतिहासमाचक्षते— मेध्यातिथिः किलेन्द्रमुवाच मेष रूपो भूत्वा मामुपागच्छेति । स तं मेषो भूत्वा उपजगाम । तद्वक्ष्यति— 'इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् । मेषो भूतोऽभि यन्नयः' (ऋ ८,२,४०) इति । [3]तदिदमत्रोच्यते मेषइतीन्द्रस्याभिधानम्[3] । तं मेषं मेषरूपम् पुरुहूतम् बहुभिर्यजमानैराहूतम् ऋग्मियम् ऋच स्तुतौ । अर्चनम् ऋक् स्तुतिः, तद्वन्तं ऋग्मियम्, अर्चनीयं वा । इन्द्रम् गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभि मदत "[4]मन्दति × × × मदति रसति[4]" (निघ ३,१४) इत्यर्चतिकर्मसु पाठादर्चतिकर्माऽयम् । पुत्रादीनां वाऽयं प्रैषः, सहायानां वा ऋत्विजाम् । मया सहाभिष्टुत हे मत्पुत्रादयः! ऋत्विजः! वा । कीदृशम् । वस्वः धनस्य अर्णवम् समुद्रस्थानीयम् । समुद्रवत् धनानामाश्रयमित्यर्थः । तस्य[5] इन्द्रस्य किमुच्यते । यस्य द्यावः द्युलोकाः न विचरन्ति न विगच्छन्ति । नातिक्रामन्तीत्यर्थः । किम् । मानुषा मननानि ज्ञानानि अभिप्रायलक्षणानि । यस्य '[6]सर्वो द्युलोको वशवर्ती[6]' इत्यर्थः । [7]अथवा द्यावो न इति नशब्द उपरिष्टादुपचार उपमार्थीयः । मानुषशब्दोऽपि मनुष्यजातिवचनः । यस्य स्वभूतानि वस्तूनि मानुषाणि द्यावो न द्युलोका इव । यथा द्युलोका दीप्तिमन्त एवं दीप्तियुक्तानि विचरन्ति । समस्तायां पृथिव्यां परिभ्रमन्तीत्यर्थः । किमर्थमभिष्टवाम । उच्यते । भुजे पालनायात्मनः । मंहिष्ठम् मंहतिर्दानकर्मा (तु. निघ ३,२०) दातृतमम् । विप्रम् मेधाविनम् । अभि अर्चत अभिष्टुत[7] ॥ १ ॥

वेङ्कट० सव्य आङ्गिरसः । अभि मदत तं मेधातिथेः मेषम् पुरुहूतम् ऋग्मियम् इन्द्रम् स्तुतिभिः धनस्य आकरम् । यस्य रश्मयः इव[8] इतस्ततश्चरन्ति मनुष्यहितानि कर्माणि भोगाय, तम् अभिष्टुत मेधाविनम् । अत्र शाट्यायनकम् 'अथ मैधातिथम् । मेधातिथिगृहपतयो वै[9] विभिन्दुकीयाः सत्रमासत[10] । तेषां दृढच्युत् आगस्तिरुद्गातासीद्, गौरीवितिः[11] प्रस्तोता, अच्युतच्युत् प्रतिहर्ता, नगुभयो होता, सनकनवकौ काव्यावध्वर्यू[12] । पशुकामो मेधातिथिः, अन्नकामौ सनकनवकौ । यथाकामा इतरे तत्कामाः । नानाकामाः "[13]ह स्म वै[13]" पुरा सत्रमासते । ते ह स्म नानैव कामान् ऋद्ध्वाभ्युत्तिष्ठन्ति । तेषां ह स्मेन्द्रो मेधातिथेर्मेषस्य रूपं कृत्वा सोमं प्रतयति । तं ह स्म बाधन्ते । मेधातिथेर्नो मेषः सोमं प्रनयतीति । स उ ह स्मैषां स्वमेव रूपं[14] कृत्वा सोमं प्रनयति । ततो ह वा इदमर्वाचीनं मेधातिथेर्मेष इत्याचक्षन्ति' (तु. जैमि ३,२३४) इति ।

---

1-1. सव्यो हीन्द्र म. 2. °स्मादजायत म लि. 3-3. "दमत्र मेषमिन्द्र" म लि 4-4. मन्दति मदति रसन्ति" लि, "मदति रसति म कु. 5. कस्य मूको. 6-6. सर्वो द्युलोके वशवर्ती मूको. 7-7. नास्ति म लि. 8. व वि[1] स्पे. 9. नास्ति वि[11] स अ[12] 10. °मासते स वि[1] अ[1]. 11. गौरिवीतिः वि[1]; गौरितिः अ[1]. 12. °ध्वर्यू स. 13-13. ह वै स्म अ[1] वि[11] स. 14. स्वरूपम् वि[1].

मुद्गल० [1]दशमेऽनुवाके सप्त सूक्तानि। तत्र 'अभित्यम्' इति पञ्चदशर्चं प्रथम सूक्तम्। सव्य † आङ्गिरस ऋषि। चतुर्दशी पञ्चदशी च त्रिष्टुभौ। शिष्टा जगत्य। इन्द्रो देवता। अङ्गिरा इन्द्रतुल्य पुत्रमिच्छन् अभ्यध्यायत्, सव्य इतीन्द्र एवास्य पुत्रोऽजायतेतीतिहास [1] ॥

त्यम् त प्रसिद्धम् मेषम् शत्रुभि स्पर्धमानम्। [2]यद्वा कण्वपुत्र मेधातिथि यजमानम्[2] इन्द्रो मेषरूपेणागत्य तदीय सोम पपौ। स ऋषि त मेष इत्यवोचत्। अत इदानीमपि मेष इति इन्द्रोऽभिधीयते[3]। पुरुहूतम् बहुभिर्यजमानैराहूतम्[4]। ऋग्मियम् ऋग्भि विक्रियमाणम् स्तूयमानमित्यर्थ। स्तुत्या हि देवता विक्रियन्ते। तम् वस्व अर्णवम् धनानामावासभूमिम्। एवगुणविशिष्टम् इन्द्रम् हे स्तोतार ! गीर्भि स्तुतिभि अभि मदत आभिमुख्येन हर्षं प्रापयत। यस्य इन्द्रस्य कर्माणि मानुषा मनुष्याणा हितानि विचरन्ति विशेषेण वर्तन्ते। दृष्टान्त। द्यव न यथा सूर्यरश्मय सर्वेषा हितकरा। भुजे भोगाय मंहिष्ठम् अतिशयेन प्रवृद्धम् विप्रम् मेधाविन तथाविधमिन्द्रम् अभि अर्चत अभिपूजयत ॥ १ ॥

अ॒भीम॑वन्वन्त्स्वभि॒ष्टिमू॒तयो॑ऽन्तरिक्ष॒प्रां तवि॑षीभि॒रावृ॑तम् ।
इन्द्रं॒ दक्षा॑स ऋ॒भवो॑ मद॒च्युतं॑ श॒तक्र॑तुं॒ जव॑नी सू॒नृतारु॑हत् ॥ २ ॥

अ॒भि । ई॒म् । अ॒व॒न्व॒न् । सु॒ऽअ॒भि॒ष्टिम् । ऊ॒तय॑ । अ॒न्त॒रि॒क्ष॒ऽप्राम् । तवि॑षीभि । आऽवृ॑तम् ।
इन्द्र॑म् । दक्षा॑स । ऋ॒भव॑ । म॒द॒ऽच्युत॑म् । श॒तऽक्र॑तुम् । जव॑नी । सू॒नृता॑ । आ । अ॒रु॒ह॒त् ॥ २ ॥

स्कन्द० [1]ईम् शब्द एनमित्यस्यार्थे। एनम् अभि अवन्वन् वनते सम्भक्त्यर्थस्यैतद्रूपम्। सम्भक्तवन्त। सेवितवन्त इत्यर्थ। स्वभिष्टिम् यजेरिषेर्वैतद्रूपम्। सुष्ठु अभियष्टव्य सुष्ठु वाऽभ्येषण शील शत्रूणाम्। ऊतय ऊतिशब्दोऽत्र पालनाद् गमनाद्वा मरुदादिसेनासु[2] प्रवर्तते[3]। मरुदादिसेना। अन्तरिक्षप्राम् प्रा पूरणे। स्वबलेनान्तरिक्षस्य पूरयितारम्। तविषीभि अन्यैरपि बलै आवृतम् परिवृतम्। कम्। इन्द्रम्। न च केवला ऊतय। किं तर्हि। दक्षास ऋभव दक्षति रुत्साहार्थोऽयं (नु या १ ७)। उत्साहिन ऋभव। अथवा दक्षशब्दोऽत्रात्मपर्याय। 'अयामि दक्षं मनसा जगृभ्यात्' (ऋ १०,३१,२) इति यथा। सामर्थ्याच्चान्तर्णीतमत्वर्थ। आत्मवन्त। आत्मवत्तया चात्र यत्नवत्ता लक्ष्यते। सर्वार्थेषु यत्नवन्त ऋभव इत्यर्थ। मदच्युतम् मद सोम मदकरत्वात्, त प्रति च्यवते गच्छतीति मदच्युत्, त मदच्युतम्। अथवा मदो गर्व। च्यवतिरपि सामर्थ्यादन्तर्णीतण्यर्थ। शत्रूणां मदस्य गर्वस्य च्यावयितारम्। किञ्च शतक्रतुम् बहुकर्माण बहुप्रज्ञं वा इन्द्रम् जवनी वेगवती गन्त्री सूनृता स्तुतिलक्षणा वाक् स्तोतुम् आ अरुहत[7] आरोहति आरूढवती वा। अथवा सूनृता माध्यमिका वाक्। सा इन्द्रमारुहत्, मेघवधकाले व्याप्नोतीत्यर्थ ॥ २ ॥

---

१ १ नास्ति वि मै°. † नास्ति मूको २ २ नास्ति मूको ३ नु पता १,१ ४ पुरुहूतम् मै° ५-५ नास्ति भ नि ६ वर्तते दु. ७ आरोहत् भ नि

वेङ्कट० अभ्यसेवन्त एनं सुष्ठु शत्रूणामन्वेष्टारं[1] मरुतः अन्तरिक्षस्य पूरयितारं बलैः आवृतम् इन्द्रम् वृद्धाः ऋभवश्च । शत्रुमदस्य च्यावयितारं तमिमम् शतक्रतुम् वेगस्य कारयित्री स्तुतिः आरोहति ॥ २ ॥

मुद्गल० ऊमयः अवितारो रक्षितारः दक्षाः दक्षयितारः प्रवर्धयितारः[2] ऋभवः मरुतः इन्द्रम् अभि ईम् अवन्वन् आभिमुख्येन खलु अभजन्त । वृत्रेण सह युध्यमानमिन्द्रं सर्वे देवाः पर्यत्यजन्[3] । मरुतस्तु तथा न पर्यत्याक्षुः । कीदृशम् इन्द्रम् । स्वभिष्टिम् शोभनाम्येषणवन्तं शोभनाभिगमनमित्यर्थः[4] । अन्तरिक्षप्राम् अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीति अन्तरिक्षप्राः तम् । तविषीभिः आवृतम् बलैरावृतम् । अतिबलिनमित्यर्थः । अत एव मदच्युतम् शत्रूणां मदस्य गर्वस्य च्यावयितारम् । किञ्च शतक्रतुम् शतसंख्यानां क्रतूनामाहर्तारं पूर्वोक्तं तम्[5] इन्द्रम् जवनी वृत्रवधं प्रति प्रेरयित्री सूनृता तैः मरुद्भिः प्रयुक्ता 'प्रहर भगवो जहि वीरयस्व' ( ऐब्रा ३,२० ) इति ब्राह्मणोक्तरूपा प्रियसत्यात्मिका वाक् आरुहत् आरूढवती । वृत्रवधं प्रति सा वाक् इन्द्रस्योत्साहकारिणी अभूदित्यर्थः ॥ २ ॥

त्वं गो॒त्रमङ्गि॑रोभ्यो॒ऽवृणो॒रपो॒ताय॑ ये श॒तदु॑रेषु गातु॒वित् ।
स॒सेन॑ चिद् विम॒दाया॑वहो॒ वस्वा॒जावद्रिं॑ वावसा॒नस्य॑ न॒र्तय॑न् ॥ ३ ॥

त्वम् । गो॒त्रम् । अङ्गि॑रःऽभ्यः । अ॒वृ॒णोः । अप॑ । उ॒त । अत्र॑ये । श॒तऽदु॑रेषु । गा॒तु॒ऽवित् ।
स॒सेन॑ । चि॒त् । वि॒ऽम॒दाय॑ । अ॒व॒हः॒ । वसु॑ । आ॒जौ । अद्रि॑म् । वा॒व॒सा॒नस्य॑ । न॒र्तय॑न् ॥ ३ ॥

स्कन्द० त्वम्[1] गोत्रम् मेघनामैतत् (तु. निघ १,१०) । त्वं गोत्रम् अङ्गिरोभ्यः अङ्गिरसामर्थाय अवृणोः अप अपावृणोः उद्घाटितवान्[2] । उत अत्रये, अत्रेतिहासमाचक्षते— 'अत्रिमसुरा शतमोहनद्वारेषु यन्त्रगृहेषु[3] प्राक्षिपन् । तत्र मूढो निर्गन्तुमशक्नुवन्निन्द्रमस्तौत् । तमिन्द्रो निरगमयत्' इति । तदेवदुच्यते—उतात्रये । अत्रेरप्यर्थाय । शतदुरेषु शतं दुराणि[4] मोहनद्वाराणि येषु तानि शतदुराणि तेषु । गातुवित् गातुर्निर्गमनमार्गः[5] । "विद्विर्लाभार्थो ज्ञानार्थो" वा । निर्गमनमार्गस्य लब्धा ज्ञाता वा । अथवा शतदुराः सोमयागा अत्रोच्यन्ते । तेषु हि प्राग्वंशसदोहविर्धानसम्बन्धीनि बहूनि द्वाराणि । गातुविदित्यपि गातुशब्दो गमनवचनः । अत्र स्वभूतेषु शतदुरेषु बहुद्वारेषु सोमयागेषु गातुवित् गमनस्य[6] अनुभूतगमनः । नित्यगमन इत्यर्थः । किञ्च ससेन चित् 'ससम्' ( निघ २,७ ) इत्यन्ननाम । सहयोगलक्षणा चैषा तृतीया । चिच्छब्दः पदपूरणः चार्थे वा । अन्नेन च सह । विमदाय ऋषये अवहः प्रापितवान् । दत्तवानित्यर्थः । वसु धनम् । आजौ सङ्ग्रामे: शत्रुभिस्सह सङ्ग्रामे । अद्रिम् अद्रिविकारत्वात् अद्रिवज्रः अत्राभिप्रेतः । पाषाणमयं वज्रम् वावसानस्य दृढबलेनाऽऽच्छादयतः आत्मन एव "स्वभूतम् नर्तयन्" हस्तवल्स्यमुत्पातयन्नित्यर्थः ॥ ३ ॥

वेङ्कट० त्वम् बलं[7] मेघरूपम्[8] अङ्गिरसामर्थाय अप अवृणोः उद्घाटितवान्[9] पशूनामर्थम् । अपि च असुरैः

---

१. गन्तृणाम्° वि[1] अ[1]. २. नास्ति वि. ३. पर्यत्यजन् मूको. ४. 'मिनभिगमनमि' मूको. ५. नास्ति वि भै[1]. ६. ११ गोत्र मन ११ अ. ७. °ब्दारि° कु. ८. यन्त्र° कु. ९. नास्ति मूको. १०. °ग्ने मा° अ वि. ११-११. °मर्थे इत्यर्थे अ वि. १२. नास्ति वि. १३-१३. नास्ति वि. १४. रूपं मूको. १५. ११ मेघ° वि[1]. १६. नास्ति वि[11] अ[1] च कु.

शतद्वारेषु यन्त्रगृहेषु[1] प्रक्षिप्ताय अत्रये मार्गस्य लम्भयिता । तथा अन्नेन सह ऋपये धन च अवह । युद्धे वर्तमानस्य विमदस्यार्थाय वज्र भ्रामयन् ॥ ३ ॥

मुद्गल० हे इन्द्र ! त्वम् गोत्रम् अव्यक्तशब्दवन्तम् वृष्ट्युदकस्यावरक[2] मेघम् अङ्गिरोभ्य अङ्गिरसामृषी णामर्थाय अप अवृणो अपवरण कृतवानसि । वृष्टेरावरक मेघं वज्रेणोद्घाट्य वर्षण कृतवानित्यर्थ । उत अपि च अत्रये महर्षये । कीदृशाय । शतदुरेषु शतद्वारेषु यन्त्रेषु असुरै पीडार्थं[3] प्रक्षिप्ताय गातुमित् मार्गस्य लम्भयिता तथा विमदाय चित् विमदनाम्ने महर्षयेऽपि सरोन अन्नेन युक्तम् वसु धनम् अवह प्रापितवान् । तथा आजौ सङ्ग्रामे जयार्थम् ववसानस्य निवसतो वर्तमानस्यान्यस्यापि[4] स्तोतु अद्रिम् वज्रम् नर्तयन् रक्षण कृतवानसीति शेष । अतस्तव महिमा केन वर्णयितु शक्यत इति भाव ॥ ३ ॥

त्वम॒पाम॑पि॒धाना॑ऽवृणो॒रपाधा॑रयः॒ पर्व॑ते॒ दानु॑मद्॒ वसु॑ ।
वृ॒त्रं यदि॑न्द्र॒ शव॒साऽव॑धी॒रहि॒मादित्॒ सूर्यं॑ दि॒व्यारो॑हयो दृ॒शे ॥ ४ ॥

त्वम् । अ॒पाम् । अ॒पि॒ऽधाना॑ । अ॒वृ॒णो॒ । अप॑ । अधा॑रयः । पर्व॑ते । दानु॑ऽमत् । वसु॑ । वृत्रम् । यत् । इ॒न्द्र॒ । शव॑सा । अव॑धीः । अहि॑म् । आत् । इत् । सूर्य॑म् । दि॒वि । आ । अ॒रो॒ह॒यः॒ । दृ॒शे ॥ ४ ॥

स्कन्द० त्वम् मेघस्थानाम् अपाम् अपिधाना निर्गमनविलच्छादनानि [5]अवृणो अप अपावृणो[5] उद्घाटित वान् । अधारय[6] "धारितवानसि । पर्वतो[†] मेघनामैतत् (द्र निघ १, १०) । मेघे दानुमत् दानुरत्र माध्यमिका[7] वाक्, तद्वत् । वसु वृष्ट्युदकलक्षण धनम् । यथाकालमुदकनिर्गमनार्थं त्वमेव मेघस्य द्वाराणि अपावृणो, त्वमेव च 'मेघे उदकम् धारय[8] इत्यर्थ । अथवा अधारय पर्वत इति पर्वतोऽत्र शिलोच्चय एवाभिप्रेत । धारितवानस्यात्मीये[9] दुर्गपर्वते । किम् । दानुमत् वसु । दानुर्नामासुराणा माता, सा यस्मिन् अन्वर्गता अस्ति तदिद दानुमत् । वसु धनम् । असुरान् पराजित्य तेषा मातर धन च स्वर्गे निहितवानित्यर्थ । "किं च वृत्रम् यत् इन्द्र," अत्रेतिहासमाचक्षते—'वृत्र किल महत्तम ननाह । तमसाऽऽवृतं सर्वमन्धमप्रज्ञातं[10] बभूव । तदिन्द्रो वृत्र हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकारेति' । तदेतदुच्यते—"वृत्रं यद् यदा हे इन्द्र"। शवसा बलेन अवधी हत वानसि । अहिम् अहन्तव्यमन्येन हन्तुमशक्यम् । आत् इत् यदेति वचनादाच्छब्दोऽत्र तदर्थ स्यार्थे । इच्छब्द पदपूरण । सूर्यम् दिवि आ रोहय[11] दृशे सर्वप्राणिना दर्शनाय[11] । तदेतन्मधुच्छन्दसाऽप्युक्तम् । 'इन्द्रो दीर्घाय चक्षसे आ सूर्यं रोहयद्दिवि' (ऋ १,७,३ ) इति ॥ ४ ॥

वेङ्कट० त्वम् मेघस्थानाम् अपाम् अपिधानानि[12] अप अवृणो । तथा शिलोच्चय असुरसम्बन्धि वसु धारितवान्[13] मेघे[13] वा । वृत्रम् [14]यत् इन्द्र[14] बलेन अवधी, अहिम् च । अनन्तरम् एव सूर्यम् दिवि आरोहय सर्वेषा दर्शनाय ॥ ४ ॥

---

१ यन्त्रगृ° ए २ °स्यावरक मूको ३ °पीडार्थं मै° ४ °मानस्यापि वि ५-५ आवृणोरवृणो भ अवृणो कु ६ अपाधारय कु ७-७ त्रुटितम् वि † सर्वत्र अ ८-८ मेघमुदक° भ ९ °स्यात्मीये भ १० सर्वं धर्मप्रज्ञाने भ; सर्वमन्धं प्रज्ञातं कु ११ रोहयथा वि १२ नास्ति वि १३ नास्ति वि° लन्द १४ धृतवान् कु वि° भ° १५-१५ यदीन्द्र भ°.

मुद्गल० हे इन्द्र! त्वम् अपाम् उदकानाम् अपिधाना[1] अपिधानानि आच्छादकान् मेघान् अप अवृणोः अपावरीष्ठाः । तथा पर्वते पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने दानुमत् दानुमतो हिंसायुक्तस्य तादृशस्य वृत्रादेः वसु धनम् अप अधारयः । शत्रून् जित्वा तदीयं धनम् अपहृत्य स्वगृहे न्यक्षिक्षिपः इत्यर्थः । हे इन्द्र! त्वम् यत् यदा शवसा बलेन वृत्रम् त्रयाणां लोकानाम् आवरीतारम् अहिम् आ समन्तात् हन्तारम् असुरम् अवधीः वधं प्रापयः । आत् इत् अनन्तरमेव दिवि द्युलोके दृशे द्रष्टुम् सूर्यम् आ अरोहयः । वृत्रेणावृते सूर्ये तस्मात् वृत्रात् अमूमुचः इत्यर्थः ॥ ४ ॥

त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत ।
त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ॥ ५ ॥

त्वम् । मायाभिः । अप । मायिनः । अधमः । स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत । त्वम् ।
पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानम् । दस्युऽहत्येषु । आविथ ॥ ५ ॥

स्कन्द० त्वम् स्वाभिः मायाभिः मायिनः मायावतोऽसुरान् अप अधमः स्वस्थानेभ्यो निष्कासितवान् । 'ते किमकुर्वन्[2] । उच्यते । ये[2] स्वधाभिः 'स्वधा' (निघ २,७) इत्यन्ननाम । अधि[3] 'अधिपरी अनर्थकौ' (पा १,४,९३) इति कर्मप्रवचनीयः पदपूरणः । शुप्तौ[4] शुप्तिशब्द आस्यवचनः । आत्मीये आस्ये अजुह्वत प्रक्षिप्तवन्तः । स्वशरीरभोगपरा इत्यर्थः । किञ्च त्वम् पिप्रोः पिप्रुनाम्नोऽसुरस्य स्वभूताः । [5]हे नृमणः! नृषु मनो यस्य[5] स नृमणाः, तस्य सम्बोधनं हे नृमणः! । प्र अरुजः [6]'रुजिः भङ्गे' । प्रकर्षेण[6] भग्नवानसि । पुरः नगराणि । तच्च कुर्वन् ऋजिश्वानम् ऋजिश्वनामानमृषिं वैदथिनः पुत्रम् दस्युहत्येषु दस्यवो हन्यन्ते येषु ते दस्युहत्याः सङ्ग्रामाः तत्काला वा तेषु प्र आविथ प्रकर्षेण रक्षितवान् । तदेतद् वामदेवोऽपि वक्ष्यति— 'त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः' (ऋ ४,१६,१३ ) इति ॥ ५ ॥

वेङ्कट० त्वम् [7]'कृत्रिमैः कृत्रिमान् अप[7] अधमः । ये अन्नैर्देवानपहाय[8] वयमेव देवा इति स्वस्मिन् आस्ये होमं कृतवन्तः[9] । त्वम् पिप्रोः असुरस्य हे नृमणः! नृषु मनो यस्य[10] । पुराणि प्र अरुजः । प्ररक्षितवानसि ऋजिश्वानम् च सङ्ग्रामेषु ॥ ५ ॥

मुद्गल० हे इन्द्र! त्वम् मायाभिः जयोपायज्ञानैः मायिनः कपटलक्षणमायोपेतान् वृत्रादीनसुरान् अप अधमः अजयः । ये असुराः स्वधाभिः हविर्लक्षणैरन्नैः शुप्तौ अधि शोभमाने स्वकीये मुख एव अजुह्वत अहौषुः नाग्नौ, तानसुरानिति पूर्वेण सम्बन्धः । तथा हे नृमणः! नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्त! त्वम् पिप्रोः पूरयितुः एतन्नाम्नोऽसुरस्य पुरः पुराणि निवासस्थानानि प्र अरुजः प्राभाङ्क्षीः । एवं कृत्वा तेनासुरेणोपद्रुतम् ऋजिश्वानम् ऋजुगमनम् एतत्संज्ञकं स्तोतारं

---

१. नास्ति वि. २-२. ये किं° भ; किं कुर्वन् कु; ये किं कुर्वन् ति. ३. नास्ति मूको. ४. नास्ति भ. ५-५. हे नृमणस्य ति; हे नृमणः यस्य भ कु. ६-६. नास्ति भ. ७-७. कृत्रिमा मायिनः मायावतोऽसुरान् कृत्रिमैरेव वि[1] अ[2]. ८. °नपहाय वि[2]. ९. कृतवन्तः स्वशरीरभोगपरा इत्यर्थः वि[1] अ[2]. १०. यस्य ल.

दस्युहत्येषु दस्यूनाम् उपक्षपयितृणा हननयुक्तेषु सङ्ग्रामेषु प्र आविथ प्रकर्षेण ररक्षिथ ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये नवमो वर्गः ॥

त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम् ।
महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥ ६ ॥

त्वम् । कुत्सम् । शुष्णऽहत्येषु । आविथ । अरन्धयः । अतिथिऽग्वाय । शम्बरम् । महान्तम् । चित् । अर्बुदम् । नि । क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ॥ ६ ॥

स्कन्द० त्वम् कुत्सम् कुत्सनामानमृषिम् शुष्णहत्येषु शुष्णो नामासुरः तस्य हननेषु सङ्ग्रामेषु तत्कालेषु वा आविथ रक्षितवान् । अरन्धय 'रध्यतिर्वशगमने'[1] ( या ६,३२ )। वशं च नीतवानसि। [2]अतिथीन् प्रति परिचारकतया गच्छतीति[†] अतिथिग्वो दिवोदासः । कुत एतत् ? 'दिवोदासमतिथिग्वं यत्' ( ऋ ४,२६,३ ) इत्यादिषु दर्शनात् । तस्मै अतिथिग्वाय[3] शम्बरम् शम्बरनामानमसुरम् । महान्तम् चित् चिच्छब्दः पदपूरणः चार्थे वा । महान्तं च अर्बुदम् अर्बुदनामानमसुरम् [3]नि क्रमी[3] "नि इत्येष" आ इत्येतस्य स्थाने । आक्रान्तवान् पदा पदेन। किं बहुना । सनात् एव सनाच्छब्दश्चिरादित्यस्यार्थे । पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः । चिरादेव प्रभृति दस्युहत्याय दस्युहननाय जज्ञिषे जातस्त्वम् । जन्मन एव प्रभृति त्वं शत्रून् घ्नसीत्यर्थः ॥ ६ ॥

वेङ्कट० त्वम् कुत्सम् तस्य शत्रोः शुष्णासुरस्य सङ्ग्रामेषु रक्षितवानसि । तथा अतिथिग्वाय दिवोदासाय शम्बरम् असुरम् वशमनयः । तथा महान्तम् अर्बुदासुरम्[4] पदा [5]नि क्रमी[5] । किं बहुना । चिरात् एव आरभ्य दस्युहननाय आयासी[6] ॥ ६ ॥

मुद्गल० हे इन्द्र[7] त्वम् कुत्सम् कुत्ससंज्ञकम्[7] ऋषिम् शुष्णहत्येषु शुष्णः शोषयिता । एतन्नाम्नोऽसुरस्य हननयुक्तेषु सङ्ग्रामेषु आविथ ररक्षिथ । तथा अतिथिग्वाय अतिथिभिर्गन्तव्याय दिवोदासाय[8] शम्बरम् एतन्नामानमसुरम् अरन्धय हिंसां प्रापय । तथा महान्तम् चित् अतिप्रवृद्धमपि अर्बुदम् एतत्संज्ञकम्[10] असुरम् पदा नि क्रमीः नितरामाक्रमिताऽभूः । यस्मादेव तस्मात् सनात् एव चिरकालादेवारभ्य दस्युहत्याय उपक्षपयितृणा हननाय जज्ञिषे उत्पन्नोऽसि । सर्वदा त्वं दस्युहन्तेत्यर्थः ॥ ६ ॥

त्वे विश्वा तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या ॥ ७ ॥

त्वे इति । विश्वा । तविषी । सध्र्यक् । हिता । तव । राधः । सोमऽपीथाय । हर्षते । तव । वज्रः । चिकिते । बाह्वोः । हितः । वृश्च । शत्रोः । अव । विश्वानि । वृष्ण्या ॥ ७ ॥

---

१. रध्यति° वि; रधति° अ मु. २-२. नास्ति वि. † गच्छति स. ३-३. निक्रमी अ, निक्रमी वि. ४-४. नि° वेद अ. ५. °सुरम् पदे वि° अ°. ६-६. न्यक्रमी मु वि°. ७. नास्ति ह वि°° मु अ°°. ८. °र्बुदम् वि. ९. दैवोदा° मूको. १०. °शिनय° वि

स्कन्द० त्वे त्वयि विश्वा सर्वा तविषी बलम् सध्र्यक् सहाञ्चति गच्छतीति सध्रीचीति स्त्रीलिङ्गता तविषीसामानाधिकरण्यात् । सध्र्यगिति व्यत्ययनात्र नपुंसकता । सध्र्यक् सध्रीची सर्वैरवयवैः सहगामिनी । पिण्डितेत्यर्थः । हिता निहिता । यावत् किंचित् बलं सर्वं पिण्डीकृत्य त्वयि निहितमित्यर्थः । किञ्च तव राधः सोमलक्षणं धनम् सोमपीथाय सोमपानाय हर्यते इन्द्रो मा पास्यतीति अति प्रीत्या[1] हृष्यतीव । किञ्च तव वज्र चिकित शत्रुहननेन ज्ञायते बाह्वो हित निहित । निहित वज्र गृहीत्वा शत्रून् प्रत्न् निर्व्यापारो न तिष्ठसीत्यर्थः । य ईदृशोऽसि स त्वम् वृश्च शत्रो अव अववृश्च अवच्छिन्धि[2] आत्मीयस्यास्मदीयस्य वा शत्रो विश्वानि सर्वाणि वृष्ण्या अपठितमपि बलनामैतत् द्रष्टव्यम् । बलानि ॥ ७ ॥

वेङ्कट० त्वयि सर्वाणि बलानि सह निहितानि । तव धनम् सोमपानार्थं[3] हृष्यति बहु भवति । तव वज्र प्रख्यात आसीत् बाह्वो निहित । स त्वम् शत्रो सर्वाणि वीर्याणि "अव वृश्च" ॥ ७ ॥

मुद्गल० हे इन्द्र ! त्वे त्वयि विश्वा तविषी सर्वं बलम् सध्र्यक् सध्रीचीनम् अपराङ्मुखं यथा भवति तथा हिता निहितम् । तथा तव राधः धनं सोमपीथाय सोमपानाय हर्यते हृष्यति । किञ्च तव बाह्वो हस्तयो हित सवस्थित वज्र चिकित अस्माभिर्ज्ञायते[4] । अत शत्रो शातयितु वैरिणः विश्वानि सर्वाणि वृष्ण्या वृष्ण्यानि वीर्याणि अव वृश्च छेदनं कुरु ॥ ७ ॥

वि जानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।
शाकी भव यजमानस्य चोदिता विश्वेत् ता ते सधमादेषु चाकन ॥ ८ ॥

वि । जानीहि । आर्यान् । ये । च । दस्यवः । बर्हिष्मते । रन्धय । शासत् । अव्रतान् । शाकी ।
भव । यजमानस्य । चोदिता । विश्वा । इत् । ता । ते । सधऽमादेषु । चाकन ॥ ८ ॥

स्कन्द० वि जानाहि आर्यान् साधुवृत्तान् । यागपरानित्यर्थः । ये च दस्यव "यच्छब्दश्रुतेस्तच्छब्दो ऽध्याहार्य"[†] । ये च दस्यव[5] देवानां शत्रुभूता "अयागपरास्तान् । यष्टॄनयष्टॄंश्च"[6] विजानीहीत्यर्थः । ज्ञात्वा च बर्हिष्मते यजमानाय रन्धय वशं गमय । शासत् अनुशासत् । निगृह्णन्नित्यर्थः । कान् । अव्रतान् अकर्मण यागकर्मवर्जितान् । अयष्टॄनित्यर्थः । किञ्च शाकी भव 'शग्धि पूर्धि' (निघ ३, १९) इति याच्ञाकर्मसु पाठात् शकिरिह याच्ञाकर्मा । याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते । दाता भवेत्यर्थः । कस्मै । सामर्थ्याद् यजमानाय । न च दातैव केवलम् । किं तर्हि । यजमानस्य यागकर्मणि चोदिता चोदयिता[7] प्रेरयिताऽपि भव । यानि चैतानि मयोक्तानि विश्वा इत् ता इच्छब्द पदपूरण । सर्वाणि तानि । ते तव स्वभूतानि सधमादेषु सह माद्यन्ति येषु देवता ते सधमादा यज्ञा तेषु । आत्मनोऽप्यर्थायाह चाकन कान्तिकर्माऽयम् ( द्र निघ २,६ ) । कामय[8] प्रार्थये[9] इत्यर्थः ॥ ८ ॥

---

१ प्रीत्या कु २ अवच्छिन्धि म, अवच्छिन्धि कु ति ३ °नाय ट° ४ ४ अप° ह, उप° वि° र्पप ५ °णायेन मूको ६ ६ नास्ति ति † °ध्याहार्य म ७ ७ °स्तानयष्टॄ° म, °स्तान् यष्टॄ° कु ८ नेर° कु ९ कामये मूको १० प्रार्थये म कु

वेङ्कट० विविच्य जानीहि आर्यान् दस्यून् च[1] । तत्र अव्रतान् अनुशासत्[2] त्वं यजमानाय वशं नय । सहाय भव यजमानस्य धनस्य चोदयिता । सर्वाणि एव तानि यज्ञेषु वन्नुमहे कामितवानस्मि ॥ ८ ॥

मुद्गल० हे इन्द्र[1] त्वम् आर्यान् विदुषः अनुष्ठातॄन् वि जानीहि विशेषेण बुध्यस्व । ये च दस्यवः तेषामनुष्ठातॄणाम् उपक्षपयितारः[3] शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च बर्हिष्मते बर्हिषा यज्ञेन युक्ताय यजमानाय अव्रतान् कर्मविरोधिनः तान् दस्यून् रन्धय हिंसां प्रापय । किं कुर्वन् । शासत् दुष्टानामनुशासनं निग्रहं कुर्वन् । अतः[4] शाकी शक्तियुक्तः त्वं यजमानस्य चोदिता प्रेरकः भव । यज्ञविघातकान् असुरान् निगृह्य[5] यज्ञान् यजमानैः[6] सम्यगनुष्ठापयेति भावः । अहमपि स्तोता ते तव[7] ता तानि पूर्वोक्तानि कर्माणि विश्वा इत् सर्वाण्येव सधमादेषु सहमदनयुक्तेषु यज्ञेषु स्तोतुम् चाकन कामये ॥ ८ ॥

अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः ।
वृद्धस्य चिद् वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥ ९ ॥

अनुऽव्रताय । रन्धयन् । अपऽव्रतान् । आऽभूभिः । इन्द्रः । श्नथयन् । अनाभुवः । वृद्धस्य ।
चित् । वर्धतः । द्याम् । इनक्षतः । स्तवानः । वम्रः । वि । जघान । सम्ऽदिहः ॥ ९ ॥

स्कन्द० 'अनुव्रताय' अनुव्रतशब्दो भक्तपर्यायः[8] । अनुव्रताय भक्ताय रन्धयन् अपव्रतान् अपगतयागकर्मणः । अभक्तानित्यर्थः । आभूभिः आभूशब्दोऽपठितः सर्वत्र महन्नाम द्रष्टव्यः । कर्मणि चैषा तृतीया सहयोगलक्षणा वा । 'महद्भिः प्रहारैः[†] महद्भिर्वा मरुद्भिस्सह इन्द्रः[9] श्नथयन् बाधयन् अनाभुवः अमहतः वृद्धस्य चित् वर्धतः वृद्धस्यापि पुनरतिशयेन वर्धमानस्य शत्रोः । कियत्या वृद्ध्या । उच्यते । द्याम् इनक्षतः 'इन्वति नक्षति' (निघ २,१८) इत्यस्य व्याप्तिकर्मसु पठितस्य [10]"नक्ष व्याप्तौ[10]" गतौ इत्यस्य वा गत्यर्थस्य इनक्षतः । अयमिकारश्छान्दस आगमो द्रष्टव्यः । व्याप्नुवतः गच्छतो वेत्यर्थः । स्तवानः स्तूयमानः । [11]"वम्रः इत्यनामैतद् द्रष्टव्यम्[11]" । 'वम्रः' (निघ ३,२) इति हि स्वार्थीकृतम् । ह्रस्वनामसु पठितम्, ह्रस्वोऽपि परिमाणतः । वि जघान विविधं हन्ति हतवान् वा । संदिहः । दिहः[12] उपचये । उपचयान्[11] । एतदुक्तं भवति—ये तावदभक्ता अमहान्तः तान् महद्भिः प्रहारैर्महद्भिर्वा मरुद्भिस्सह बाधयन् [13]"ये चाभक्ता अत्यन्तमहान्तस्तेषामपि[13]" भवेः स्तूयमानः उपचयान्[11] विहन्तीति ॥ ९ ॥

वेङ्कट० अनुगतकर्मणे यजमानाय वशं नयन् अयजमानान्[14] आभवद्भिर्वर्धमानैः विपरीतान् शिथिलयन् इन्द्रः वृद्धस्य च[15] वर्धमानस्य च[16] शत्रोः दिवम् व्याप्नुवतः स्तूयमानः वम्रिणः[17] विहन्ति समुपचयान् ॥ ९ ॥

1 यजनाय वि[1] अ[1] 2 °शासन् कु; °शीनं निगृह्णन् वि[1] अ[1] 3 °क्षपिता° मूको. 4 अत वि 5 निगृह्य मै[1] 6 °मान वि 7 नास्ति मै[1] ८-८. नास्ति अ ९-९ नास्ति कु † प्रहारै न वि 10-10 नक्ष व्या° कु 11-11 नास्ति° अ 12 नास्ति कु 13 °भक्ता मूको. 13-13 अत्य° अत्यन्त° मूको. 14 यजमानान् वि[1]. 15 नास्ति कु 16 नास्ति वि[1]

मुद्गल० यः इन्द्रः अनुव्रताय अनुकूलकर्मणे यजमानाय अपव्रतान् अपगतकर्मणः[1] अयजमानान्[2] रन्धयन् हिंसयन्, तथा आभूभिः आभिमुख्येन भवन्तीति आभुवः स्तोतारः तैः अनाभुवः तद्विपरीतान् श्नथयन् हिंसयन् वर्तते। वृद्धस्य चित् वर्धतः पूर्वंवृद्धस्यापि पुनर्वर्धमानस्य द्याम् इनक्षतः स्वर्गं प्राप्नुवतः तस्येन्द्रस्य स्तवानः स्तुतिं कुर्वाणः वम्रः स्तुत्युद्गिरणशील एतत्संज्ञक ऋषिः संदिहः सम्यगुपचिताः पृथिव्याः वल्मीकवपाः वि जघान। परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसंभारम् आहार्षीदित्यर्थः ॥ ९ ॥

तक्षद् यत् त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः ।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥ १० ॥

तक्षत् । यत् । ते । उशना । सहसा । सहः । वि । रोदसी इति । मज्मना । बाधते । शवः ।
आ । त्वा । वातस्य । नृऽमनः । मनःऽयुजः । आ । पूर्यमाणम् । अवहन् । अभि । श्रवः ॥ १० ॥

स्कन्द० तक्षत् 'तक्षतिः करोतिकर्मा' ( या ४,१९ )। शुद्धोऽपि चात्र ··· ··· ··· ॥ १० ॥

वेङ्कट० यदा तव बलम् उशना स्तुतिबलेन समस्करोत्। तदा महत्तया 'द्यावापृथिव्यौ वि बाधते'[3]। तदानीं त्वामश्वाः वातस्य श्रवणम् अभि आ वहन् बलेन आ पूर्यमाणम् नृमणः! मनोवेगाः[4]। शुष्णान्महान्[5] वातो निर्गतस्तमभ्यावहन्निति[6] ॥ १० ॥

मुद्गल० हे इन्द्र! यत् यदा उशना काव्यः सहसा आत्मीयेन बलेन ते सहः त्वदीयं बलम्[7] तक्षत् तनूकृतवान्। सम्यक् तीक्ष्णमकार्षीदित्यर्थः। तदा शवः त्वदीयं बलम् मज्मना सर्वस्य शोधकेन स्वतैक्ष्ण्येन रोदसी द्यावापृथिव्यौ वि बाधते। ते भीते इत्यर्थः। हे नृमणः! नृषु रक्षितव्येषु यजमानेषु अनुग्रहबुद्धियुक्त! इन्द्र! आ पूर्यमाणम् पूर्वोक्तेन बलेन आ समन्तात् पूर्यमाणम् त्वा त्वाम् मनोयुजः मनोव्यापारमात्रेण युक्ताः वातस्य वायोः सम्बन्धिनः। तद्वद्वेगेन गच्छन्त[8] इत्यर्थः। एवंभूता अश्वाः श्रवः अभि हविर्लक्षणमन्नमभिलक्ष्य आ अवहन् आभिमुख्येन प्रापयन्तु ॥ १० ॥

इति प्रथमाष्टके चतुर्थाध्याये दशमो वर्गः ॥

मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराऽधि तिष्ठति ।
उग्रो ययिं निरपः स्रोतसाऽसृजद् वि शुष्णस्य दृंहिता ऐरयत् पुरः ॥ ११ ॥

मन्दिष्ट । यत् । उशने । काव्ये । सचा । इन्द्रः । वङ्कू इति । वङ्कुऽतरा । अधि । तिष्ठति ।
उग्रः । ययिम् । निः । अपः । स्रोतसा । असृजत् । वि । शुष्णस्य । दृंहिताः । ऐरयत् । पुरः ॥ ११ ॥

---

१. अपधृत° मूको. २. यजमा° मूको. ३-३. °व्यानबाधत वि[1]^२ लपं. [ अप° कु. ४. महावेगाः वि[1] छ लपं. ५. °हान् वको ज्योतिषः कर्तासि सूर्यं विश्वश्च दिवं प्रकाशयासि प्रत्यङ् देवानां तस्माद् सर्वं इव मन्यसे लपं. ६. °मभ्यवह° वि[1] अ[2] कु. ७. नास्ति मूको. ८. गच्छन्तः मूको.

स्कन्द० ॥ ११ ॥

वेङ्कट० कविपुत्रे उशनसि स्तोत्रेण यदा सहाय इन्द्र मन्दिष्ट[1], तदानीम् इन्द्र वङ्कू[2] वङ्कुतरौ[3] अश्वौ[4] गमनार्थम् अध्यतिष्ठत् । अथ उद्गूर्णं इन्द्र मेघरूप शुष्णासुरम् स्रोतसा अप[5] निरगमत् । नि ऐरयत् शुष्णासुरस्य शिलासद्‌यदिता[6] पुर ॥ ११ ॥

मुद्गल० यत् यदा इन्द्र उशने कामयमाने काव्ये सचा सह मन्दिष्ट स्तुतोऽभूत् । तदानीम् वङ्कू वङ्कुतरा अतिशयेन कुटिल गच्छन्तावश्वौ अधि तिष्ठति । रथे संयोज्य तमारोहतीत्यर्थ । उग्र उद्गूर्णं तादृश इन्द्र ययिम् गमनयुक्ताद् मेघात् स्रोतसा प्रवाहरूपेण अप नि अष्रक् जलानि निरगमयत् । तथा शुष्णस्य सर्वस्य शोषयितु असुरस्य दृहिता प्रवृद्धा पुर नगराणि निवासस्थानानि वि ऐरयत् विविध प्रेरितवान् ॥ ११ ॥

आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।
इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥ १२ ॥

आ । स्म । रथम् । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृता । येषु । मन्दसे । इन्द्र । यथा । सुतऽसोमेषु । चाकनः । अनर्वाणम् । श्लोकम् । आ । रोहसे । दिवि ॥ १२ ॥

स्कन्द० ॥ १२ ॥

वेङ्कट० आ तिष्ठसि रथम् सोमपानार्थम् । शार्यातस्य "अनिन्द्र सोमम्" आनिहीर्षतो हविर्धानात् प्रभृता[7] सोमा । येषु त्वम् मन्दसे । ततो रथमास्थितवानसि । तत्र यथाऽन्येषु सुतसोमेषु सोम[8] कामितवानसि, एवं तत्रापि कामितवानसि । तत्ताद्धमस्खलितम्[10] श्लोकम् दिवि[11] आरोहयस्त्रापि पानादिति ॥ १२ ॥

मुद्गल० अत्र कौषीतकिन इतिहासमाचक्षते — शार्यातनाम्नो राजर्षे यज्ञे भृगुगोत्रोत्पन्न च्यवनो[12] महर्षि आश्विन ग्रहमगृह्णात् । इन्द्रस्तम् दृष्ट्वा क्रुद्धोऽभूत् । तमिन्द्रमनुनीय[13] पुन सोम तस्मै प्रादादित्ययमर्थोऽत्र[14] प्रतिपाद्यते ।

हे इन्द्र! त्वम् वृषपाणेषु वृष्ण सेचनसमर्थस्य सोमस्य पानानि वृषपाणानि तेषु निमित्तभूतेषु[15] रथम् आ तिष्ठसि स्म । [16]स्वयमेव रथमारुह्य[16] गच्छसि, नत्वन्य कश्चिद् प्रवर्तयतीति भाव । एवं च सति येषु सोमेषु त्वम् मन्दसे हर्षं प्राप्नोषि, तादृशा[17] सोमा शार्यातस्य एतन्नाम्नो राजर्षे सम्बन्धिन प्रभृता प्रकर्षेण सम्पादिता । अभिषवादिसंस्कारै संस्कृता[18] इत्यर्थ । अत सुतसोमेषु अभिषुतसोमयुक्तेषु अन्यदीयेषु यज्ञेषु यथा चाकन यथा कामयसे एवमस्यापि शार्यातस्य सोमान् कामयस्व । तथा सति दिवि द्युलोक अनर्वाणम् गमनरहित स्थिरम् श्लोकम् स्तोत्रलक्षण वच आ रोहसे प्राप्नोषि ॥ १२ ॥

---

1 अमन्दिष्ट कु. 2 वङ्कू ऊ वि[1], वङ्कु अ[1,2] वि[1,2] कु. 3 वङ्कू (°ङ्कू ऊ°) तरौ स्थ, वङ्कुतरं अ[1,2] वि[1,2] कु. 4 चाश्वौ मूको. 5 नास्ति वि[1] अ[1]. 6 भूता वि[1]. 7-7 इन्द्र कु, अदि (°नि) इदानीम् वि[1]. 8 प्रहृता वि[1] अ[1]. 9 सोमान् वि[1] अ[1] कु. 10 °तौरवास्थित मूको. 11 नास्ति कु. 12 चवनो मूको. 13 °नुनीय मूको. 14 °त्यर्थे वि. 15 नास्ति वि. 16-16 नास्ति वि मै[1]. 17 °दृश वि. 18 संस्कृत वि.

अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।
मेनाऽभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥ १३ ॥

अददाः । अर्भाम् । महते । वचस्यवे । कक्षीवते । वृचयाम् । इन्द्र । सुन्वते । मेना । अभवः । वृषणश्वस्य । सुक्रतो इति सुऽक्रतो । विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या ॥ १३ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ १३ ॥

वेङ्कट० दत्तवानसि कन्याम् महते[1] स्तुतिवच[2] इच्छते कक्षीवते वृचयाम् नाम भार्याम्[3] इन्द्र ! सुन्वते । तथा मेना च अभवः वृषणश्वस्य सुक्रतो ! । विश्वानि तानीमानि ते यज्ञेषु प्रवाच्यानि । अत्र शाट्यायनकम् — 'वृषणश्वस्य मेने इति । वृषणश्वस्य [4]ह मेना भूत्वा मघवा कुल उवास' (जैमि २,७९) इति । अथ ताण्ड्यकम्† — वृषणश्वस्य[4] मेने इति । वृषणश्वस्य ह[5] मेनस्य[6] मेनका नाम दुहिताऽऽस । ता हेन्द्रश्चकमे[7] (पञ्चा १,१) इति । वृषणश्वस्य राज्ञो मेना नाम दुहिता त्वमभवः स्वांशेन । अथ तां चकमे चेन्द्र इत्यर्थः ॥ १३ ॥

मुद्गल० अत्रेयमाख्यायिका — अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभिर्योषिद्भिः सह गङ्गायां जलक्रीडां चक्रे । तस्मिन् समये दीर्घतमा नाम ऋषिः स्वभार्यया पुत्रभृत्यादिभिश्च[8] दुर्बलत्वात् किमपि कर्तुं न शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे । स च ऋषिः केनचित् प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम । स च राजा सर्वज्ञं तम् ऋषिमवगत्य प्रसादयतायैवमवोचत् । हे भगवन् ! मम पुत्रो नास्ति, एषा महिषी, अस्यां[9] कञ्चित् पुत्रमुत्पादयेति । स च तथेत्यब्रवीत् । सा महिषी तु राजानं प्रति तथेत्युक्त्वाऽयं वृद्धतरो[10] जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयामुशिक्संज्ञां दासीं प्राहैषीत् । तेन च सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणाऽभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान्नाम ऋषिः । स एव राज्ञः पुत्रोऽभूत् । स च बहुविधेन[11] राजसूयादिना ईजे । तस्मै राज्ञे तत्कृतैर्यज्ञैः परितुष्ट इन्द्रो वृचयाख्यां तरुणीं योषितं प्रादात्[12] । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे इन्द्र ! त्वम् महते प्रवृद्धाय वचस्यवे त्वदीयस्तोत्रलक्षणं वच आत्मन इच्छते सुन्वते त्वद्देवताकेषु यज्ञेषु सोमाभिषवं कुर्वते कक्षीवते एतन्नाम्ने राज्ञे वृचयाम् वृचयाख्याम् अर्भाम् अल्पाम् । युवतिमित्यर्थः । एवंभूतां स्त्रियम् अददाः दत्तवानसि । तथा सुक्रतो ! शोभनकर्मन् ! हे इन्द्र ! त्वम् वृषणश्वस्य एतदाख्यस्य राज्ञः मेना अभवः मेना नाम कन्यका अभूः । तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे[13] । अतः[14] उक्तरूपाणि [15]यानि कर्माणि[15] त्वया कृतानि, ते ता त्वदीयानि तानि विश्वा इत् सर्वाण्येव सवनेषु यज्ञेषु प्रवाच्या प्रकर्षेण वक्तव्यानि । स्तुतिभिः स्तोतव्यानीत्यर्थः ॥ १३ ॥

---

१. इच्छते वि[1] अ[2]; नास्ति छ वि[1,2] लप. २. स्तुतिपते छ, स्तुतवत्त वि[2] लपं; स्तुतिमने कु; स्तुति (१°नि) वचः वि[1]. ३. भार्याम् ल. ४-४. नास्ति वि[1] अ[2]. † ताण्डकम् वि[1] लपं कु. ५. नास्ति वि[1] लपं; हि कु. ६. नास्ति वि[2] लपं. ७. मेवेन्द्रश्चकाम वि[1]. ८. पुत्रभृत्यादिभिश्च मूको. ९. अस्माकम् मूको. १०. वृद्धो मूको. ११. विशेषेण मूको. १२. तु. मभा १,११२. १३. तु. पञ्चा १,१. १४. नास्ति वि मे[1]. १५-१५. नास्ति वि.

इन्द्रो॑ अश्रायि सु॒ध्यो॑ निरे॒के प॒ज्रेषु॒ स्तोमो॒ दुर्यो॒ न यूप॑: ।
अ॒श्व॒युर्ग॒व्यू रथ॒युर्व॑सू॒युरिन्द्र॒ इद्रा॒यः क्ष॑यति प्रय॒न्ता ॥ १४ ॥

इन्द्र॑ । अ॒श्रा॒यि॒ । सु॒ऽध्य॑: । नि॒रे॒के । प॒ज्रेषु॑ । स्तोम॑: । दुर्य॑: । न । यूप॑: । अ॒श्व॒ऽयुः । ग॒व्युः ।
र॒थ॒ऽयुः । व॒सु॒ऽयुः । इन्द्र॑: । इत् । रा॒यः । क्ष॒य॒ति॒ । प्र॒ऽय॒न्ता ॥ १४ ॥

स्कन्द० मे । स यथा स्वत्वनार्हो वेदिद्वारे भवो यूपो वेदि यत्र वाश्रित तद्वदङ्गिरसो हीन्द्रस्य सहाया । तथाहि[1] सरमा[2] इन्द्रमङ्गिरसश्च तुल्यवद् प्रसख्यार्थं वक्ष्यति—'नाह वेद भ्रातृत्व नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोरा' ( ऋ १०,१०८,१० ) इति । तस्मादुपपन्नमिन्द्रस्य सङ्ग्रामेष्वङ्गिरभाश्रयत्वम् । अथवैवमन्यथाऽस्यार्धर्चस्य अर्थयोजना । अश्रायि इति चिण्[4] स्वार्थे एव कर्मणि । श्रयति शुद्धोऽपि सामर्थ्यादुत्पूर्वार्थे । उदश्रायि । अतिशयवद्गुणाभिधानेन गुणैरुच्छ्रित· कृत इत्यर्थ । क्व । सुध्य सुप्रज्ञस्य सुकर्मणो वा मम स्तमूत निरेके रमेरिदम् । नियमेन रम्यते येन यत्र वा तन्निरमण निरेक स्तोत्रमिहाभिप्रेतम् । तत्र । कथमुदश्रायि । उच्यते । पज्रेषु स्तोम अङ्गिरस ऋत्विजो वा पज्रा[5] अभिप्रेता । लुप्तोपम चेद द्रष्टव्यम् । पज्रेष्विव स्तोम । दुर्य न यूप द्वारि भव इव च यूप । यथाङ्गिरस ऋपय ऋत्विजो वा उच्छ्रित महान्त स्तोम कुर्वन्ति, यथा च यूपमुच्छ्रित कुर्वन्ति तद्वदित्यर्थ । कीदृश इन्द्र । उच्यते । अश्वयु गव्यु रथयु वसूयु अन्यत्रेच्छाया क्यच्विधानात् तदन्तात् 'क्याच्छन्दसि' ( पा ३,२,१७० ) इति कर्तर्युकारविधानाद्[6] युशब्द[7] एपितृवचन । इह तु देवतानां पर्याप्तकामत्वात्[8] एपणाऽसभवाद् युशब्द[9] सामर्थ्यान्मत्वर्थे । अश्वैर्गोभीरथैर्धनैश्च[10] तद्वानित्यर्थ । किञ्च इन्द्र इत् इच्छब्द एवार्थे । इन्द्र एव राय [11]यावत् किंचित्[11] धैरोवदे धन [12]तस्य सर्वस्य[12] क्षयति ईष्टे[13] । प्रयन्ता दाता च स्तोतृभ्य ॥ १४ ॥

वेङ्कट० इन्द्र स्तोतृभि आश्रीयते[14] । सुकर्मणामस्य निर्गमने[15] पज्रकुलजातेष्विन्द्रस्य स्तोम दुर्य [16]यूप इवोच्छ्रितस्तिष्ठति । दुर्यभवो दुर्यो[16] यजस्थ । 'अङ्गिरस पज्रा', 'पज्रो वाऽऽङ्गिरस पशुकामस्त पोऽतप्यत' इति च[17] शाट्यायनकम् । अश्वादीन् [18]स्तोतृभ्य इच्छन्[18] इन्द्र एव धनस्य प्रदाता निवसति ॥ १४ ॥

मुद्गल० इन्द्रः देव[19] सुध्य शोभनकर्मणो यजमानान निरेके नैर्धन्ये निमित्तभूते सति तान् रक्षितुम् अश्रायि असेविष्ट । पज्रेषु अङ्गिरस्सु यजमानेषु स्तोम स्तोत्र निश्चरे तिष्ठति । दुर्ये न यूप द्वारि निखाता स्थूणेव । तान् सुध्य इति पूर्वेणान्वय । तस्मादिदानीमपि राय प्रयन्ता[20] धनस्य प्रदाता इन्द्र इत् इन्द्र एव यजमानाना दातुम् अश्वयु अश्वान् इच्छन् तथा गव्यु गा इच्छन् रथयु रथानिच्छन् वसूयु एवमन्यदपि यद्धनमस्ति तदपीच्छन् क्षयति वर्तते ॥ १४ ॥

---

१. नास्ति ति २. °रमा कु ३ प्रसंख्या मूको ४ चीण अ; चिण् कु ५ नास्ति अ, वर वि; प्रज्ञा कु ६ कर्तरि एका° कु ति ७ यशब्द कु ति ८ °कामकामत्वा° अ ति; °काम° कु ९ यशब्द कु १० धनै रथै° ति. ११-११ नास्ति अ १२-१२ सर्वस्य ताव अ १३ नास्ति ति १४. अश्रयत वि° अ°. १५ °मने निरेके स्तोमन् वि° अ°. १६-१६. नास्ति कु, 'दुर्यो भवो' अ° वि°; °दुर्येभवो° अ अ° वि° ° सर्वे १७ नास्ति वि°[11] अ° वर्जे कु १८-१८ स्तोत्र (त्रे) इच्छन् (वि° अ° ? ) वि°. १९ देवे मि°, २०. °वरी वि, °यता मि°

इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि ।
अस्मिन्निन्द्र वृजने सर्ववीराः स्मत् सूरिभिस्तव शर्मन्त्स्याम ॥ १५ ॥

इदम् । नमः । वृषभाय । स्वऽराजे । सत्यऽशुष्माय । तवसे । अवाचि । अस्मिन् । इन्द्र । वृजने । सर्वऽवीराः । स्मत् । सूरिऽभिः । तव । शर्मन् । स्याम ॥ १५ ॥

स्कन्द० इदम् नमः इत्यन्तेन[1] सूक्तेन नमः स्तुतिलक्षणम् वृषभाय वर्षित्रे स्वराजे[2] स्वयमेव दीप्ताय सत्यशुष्माय सत्यबलाय तवसे सु[3] वृद्धौ । वृद्धाय अवाचि उक्तमस्माभिः । यत एवमतो ब्रूमः । अस्मिन् हे इन्द्र! वृजने बलनामैतत् ( तु. निघ २,९ ) । सामर्थ्याच्चान्तर्णीतमत्वर्थः । बलवति संसारे सङ्ग्रामे वा । अथवा वर्ज्यते यत्र वैगुण्यं स वृजनो यज्ञ इहाभिप्रेतः, तत्र । सर्ववीराः सर्वैः पुत्रैः पौत्रैश्चोपेताः । स्मत्[4] सूरिभिः स्मच्छब्दोऽत्र[5] सहार्थे । सह सर्वैः स्तोतृभिः । तव[6] शर्मन् शरणे[7] वा गृहे वा सुखे वा स्याम । त्वया[8] दत्तं शरणं गृहं सुखं वा प्राप्नुयामेत्यर्थः[9] ॥१५॥

वेङ्कट० इदम् नमनसाधनं[1] स्तोत्रम्[10] वृषभाय स्वयमेव सर्वेषामीश्वराय सत्यबलाय वृद्धायास्माभिः उक्तम् । अस्मिन् इन्द्र! उपद्रवे सर्वैर्वीरैर्युक्ता अस्माकं स्तोतृभिश्च सह[11] तव सुखे कल्याणे[11] स्याम ॥१५॥

मुद्गल० इदम् पुरोवर्ति नमः स्तुतिलक्षणं वचः हे इन्द्र! तुभ्यम् अवाचि अस्माभिः प्रयोजि । कीदृशाय । वृषभाय वर्षणशीलाय स्वराजे स्वकीयेन तेजसा राजमानाय सत्यशुष्माय शत्रूणां शोषकत्वात् अवितथबलयुक्ताय तवसे [12]अत्यन्तप्रवृद्धाय । यस्मादेवं तस्मात् अस्मिन् वृजने वर्जनवति सङ्ग्रामे सर्ववीराः सर्वैर्भटैरुपेता वयम् । स्मत् इति निपातः सुशब्दार्थः । तव स्मत् शर्मन् त्वया दत्ते शोभने गृहे सूरिभिः विद्वद्भिः[13] पुत्रादिभिः सह स्याम भवेम निवसेमेत्यर्थः ॥ १५ ॥

इति प्रथमाष्टके चतुर्थोऽध्याये एकादशो वर्गः ॥

[ ५२ ]

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥

त्यम् । सु । मेषम् । महय । स्वःऽविदम् । शतम् । यस्य । सुऽभ्वः । साकम् । ईरते । अत्यम् । न । वाजम् । हवनऽस्यदम् । रथम् । आ । इन्द्रम् । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

स्कन्द० त्यम् तम् इन्द्रम् मेषम् मेषरूपम् सु महय अर्चतिकर्मायम्[14] ( तु. निघ ३,१४ ) । आत्मन एव वायमन्तरात्मनः प्रैषः ऋत्विगन्तरस्य वा । सुष्ठु स्तुहि हे अन्तरात्मन्! ऋत्विग्! वा ।

---

१. तेन सूक्ते. २. स्वराज्ये वि. ३. ष्टुवि कु. ४. स्म वि. ५. स्मशब्दो[2] वि. ६. भव वि. ७. शर्णैः वि. ८. तया वि. ९. °र्थामित्य° कु. १०. अत्रमा° वि[1] अ[2]. ११. नास्ति वि[2]. १२. कन्धात् ल. १३-१३. नास्ति वि. १४. °कर्मा वि.

निघ २,९ )। तृतीयार्थे चात्र सप्तमी । शारीरैः सामर्थ्यलक्षणैर्बलैः । वावृधे अवर्धिष्ट वर्धते वा । अथवा 'स पर्वतो न' इति पर्वतः शिलोच्चय एवाभिप्रेतः । अच्युतः इत्येतस्य लिङ्गमुपमानम् । यथा पर्वतोऽच्युतः स्थिरस्तद्वद्योऽच्युत इति । धरुणेष्वित्यपि[1] 'यस्य च भावेन०' ( पा २,३,३७ ) इत्येवं सप्तमी । तच्छुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । उदकेषु प्राप्तव्येषु । उदकार्थमित्यर्थः । किं करोति । उच्यते । सहस्रमूतिस्तविषीषु वावृधे । कः । उच्यते । इन्द्रः । कदा । उच्यते । यत् यदा वृत्रम् मेघम् अवधीत् हतवान् हन्ति वा । नदीवृतम् नद्यः शब्दकारिण्य आपः, तासामावरीतारम्[2] । उब्जन् अजूनि[3] कुर्वन् । भूमिपाताभिमुखानि कुर्वन्नित्यर्थः । कानि । अर्णांसि मेघस्थान्युदकानि । जर्हृषाणः अत्यर्थं हृष्यन् । केन । अन्धसा सोमलक्षणेन अन्नेन ॥ २ ॥

वेङ्कट० सः शिलोच्चयः इव उदकधारासु अक्षीणः बहुरक्षणः[4] शत्रुबलेषु प्रविष्टः ववृधे इन्द्रः, [5]यत् वृत्रम् अवधीत् नदीनाम् आवरीतारं† वृत्रनिरुद्धानि उदकानि तेजोभिः विध्यन् हृष्यन् सोमेन[5] ॥२॥

मुद्गल० अन्धसा सोमलक्षणेनान्नेन जर्हृषाणः अत्यर्थं हृष्यन् इन्द्रः यत् यदा वृत्रम् त्रयाणां लोकानामावरितारम् असुरम् अवधीत् हतवान् । कीदृशं वृत्रम् । नदीवृतम् नदनात् नद्य आपः । तासामावरितारम् । किं कुर्वन्निन्द्रः । अर्णांसि जलानि उब्जन् अधः पातयन् । तदानीं स इन्द्रः पर्वतः न पर्ववान्[6] शिलोच्चय इव धरुणेषु सर्वस्य धारकेषूदकेषु मध्ये अच्युतः चलनराहित्येन स्थितः सहस्रमूतिः बहुविधरक्षणवान्[7] तविषीषु बलेषु वावृधे प्रवृद्धो बभूव ॥ २ ॥

स हि द्व॒रो द्व॒रिषु॑ व॒व्र ऊध॑नि च॒न्द्रबु॑ध्नो॒ मद॑वृद्धो मनी॒षिभिः॑ ।
इन्द्रं॒ तम॑ह्वे स्वप॒स्यया॑ धि॒या मंहि॑ष्ठराति॒ स हि पप्रि॒रन्ध॑सः ॥३॥

सः । हि । द्व॒रः । द्व॒रिषु॑ । व॒व्रः । ऊध॑नि । च॒न्द्रऽबु॑ध्नः । मद॑ऽवृद्धः । म॒नी॒षिऽभिः॑ । इन्द्र॑म् । तम् । अ॒ह्वे॒ । सु॒ऽअ॒प॒स्यया॑ । धि॒या । मंहि॑ष्ठऽरातिम् । सः । हि । पप्रिः॑ । अन्ध॑सः ॥३॥

स्कन्द० हि-शब्दः पदपूरणः[8] । सः इन्द्रः द्वरः द्वरिषु द्वृ वरणे[9] । [10]शुद्धोऽपि चात्र आङ्पूर्वार्थे[10] द्रष्टव्यः । द्वरिष्विति च निर्धारणे सप्तमी । आवरीतॄणां[11] मध्ये । यावन्तः [12]केचन आवरीतारः[12] तेषां सर्वेषां मध्येऽविशेषेण आवरीतेत्यर्थः[11] । ततः अत्यर्थं च वरणीयः याचितव्यः । किम् । सामर्थ्याद् पद्यदिष्टम् । क्व । ऊधनि सोमलक्षणरसानुप्रदानसामान्याद्यज्ञोऽत्र[13] ऊध उच्यते, तत्र । कीदृशः । चन्द्रबुध्नः [14]चन्द्रः† चन्दतेः कान्तिकर्मणः कान्तिरुच्यते । बुध्नमन्तरिक्षं निवासस्थानतया यस्य सम्भूतं स चन्द्रबुध्नः[14] । मदवृद्धः सोममदेन परिवृद्धः सन् । केन वव्रः । मनीषिभिः मेधाविभिः ऋत्विग्भिर्वा । इन्द्रम् तम् अह्वे आह्वयामि स्वपस्यया [15]शोभनकर्मेच्छया युक्तः[15] धिया प्रज्ञया । कीदृशम् । मंहिष्ठरातिम् मंहतिः पूजार्थोऽत्र[16] । पूज्यतमदानम् । किं कारणम् । उच्यते । सः हि

---

१. धरुणेरीत्यपि कु. २. °रिता° कु. ३. ऋजून् मूको. ४. स्वर° लपं, रक्षणम् वि[1] अ[2]. ५-५. यदा ... वि[1] अ[2]. † °वरिता° वि[1] लपं कु. ६. पर्वत° वि. ७. °धरक्षणवान् मूको. ८. पद° ति. ९-९ नास्ति अ; °पु दृ वर° ति. १०-१०. शुद्धेऽपि चा° कु; °चात्राणू° ति. ११. आवरि° कु, °आवरीतातॄणा ति. १२-१२. केचनावरितारः ति १३. °वरिते° कु. १४. °लक्षणे रसानु° मूको. १५-१५. नास्ति ति. † नास्ति अ. १६-१६. कर्मेच्छया युक्तः मूको, १७. °र्थो मदती अत्र अ.

पात्र अधस हिन्दादोऽत्र यस्मादर्थे । पृणातिश्च दानार्थ । यस्मात् स दाता अन्नस्य ॥ ३ ॥

वेङ्कट० [1]स हि इन्द्रः[1] वारयिता[2] वारयितृणां [3]मध्ये वरणीयः[3] [4]श्रद्धेयेऽपि अर्थे[4] कमनायपुण्यः सोऽस्तृद्धः मनीषिभिः । तम् इन्द्रम् अहम् शोभनकर्मेच्छया बुद्ध्या ह्वयामि पूज्यतमदानम् । स हि अन्नेन मा पूरयति ॥ ३ ॥

मुद्गल० स पूर्वोक्तगुणविशिष्टः[4] इन्द्रः द्वरिषु आवरीतृषु[6] शत्रुषु[6] द्वर हि अतिशयेनावरीता खलु । शत्रुनयशील इत्यर्थः । यस्मात् ऊधनि उद्भूतजलवति अन्तरिक्षे यत्र सम्भक्तः व्याप्य वर्तते । अत एव चन्द्रबुध्नः सर्वासां प्रजानामाह्लादकमूलः अन्तरिक्षस्य सर्वाह्लादकत्वात् । मदवृद्धः[7] सोमैर्वर्धितः । एवमूतं य इन्द्रः महिव्रातिम् प्रवृद्धधनम् तम् इन्द्रम् मनीषिभिः प्राज्ञैः ऋत्विग्भिः सह स्वपस्यया धिया शोभनकर्मयोग्यबुद्ध्या अहं आह्वयामि । हि यस्मात् स इन्द्रः अन्धसः अन्नस्य अस्मदपेक्षितस्य पप्रिः पूरयिता ॥ ३ ॥

आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः ।
तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अहुतप्सवः ॥ ४ ॥

आ । यम् । पृणन्ति । दिवि । सद्मऽबर्हिषः । समुद्रम् । न । सुऽभ्वः । स्वाः । अभिष्टयः । तम् । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इन्द्रम् । अवाताः । अहुतऽप्सवः ॥ ४ ॥

स्कन्द० आ यम् पृणन्ति यमापृणन्ति[9] आपूरयन्ति । दिवि व्यवस्थितम्[10] । के । सद्मबर्हिः सद्म सदनं बर्हिर्येषां ते सद्मबर्हिषः सोमाः । कथमापृणन्ति । समुद्रम् न समुद्रमिव सुभ्वः महत्यो नद्यः स्वाः आत्मीयाः । कस्य । सामर्थ्यात् समुद्रस्य । कीदृश्यः । अभिष्टय इषिर्गत्यर्थः[11] इच्छार्थो वा । अभिगन्त्र्यः अभिकामिन्यो वा । तम् वृत्रहत्ये वृत्रहननकाले अनु तस्थुः तिष्ठतिरत्र सामर्थ्यात् गत्यर्थः । अनुगतवत्यः[12] अनुगच्छन्ति वा । अथवा 'तं वृत्रहत्ये अनु' इति अनु शब्दः 'तृतीयार्थे' (पा १,४,८५) इत्येव कर्मप्रवचनीयः । तेन सह वृत्रहननकाले स्थिता इत्यर्थः । काः । उच्यते[13] । ऊतयः सेना मरुदादीनाम् । शुष्माः बलनाम तत् (द्र निघ २,९) । अन्तर्णीतमत्वर्थं च । बलवत्यः । क तम् । उच्यते । इन्द्रम् । कीदृश्यः । [14]अवाताः वातरहिताः[14] । अथवा [15]अविद्यमानो निमित्तौ वातो[15] यासां ता अवाताः । वायुनापि निरोद्धुमशक्याः[16] इत्यर्थः । अहुतप्सवः अहिंसितरूपाः ॥ ४ ॥

वेङ्कट० आ पूरयन्ति यम् दिवि स्थितं सोमाः उदधिम् इव शोभनभवनाः आत्मीयाः नद्यः[17] । तम् वृत्रहनने अनु तस्थुः मरुतः शोषकाः इन्द्रम् गमनरहिताः अपरापयितारः[18] अहिंसितरूपाः[19] ॥ ४ ॥

मुद्गल० सद्म सदनं स्थानं बर्हिः तद्दोपलक्षितो यज्ञो येषां सोमानां ते सोमाः । दिवि स्वर्गे व्यवस्थितम् यम् इन्द्रम् आ पृणन्ति आ समन्तात् पूरयन्ति ।

1-1. तुन्नि वि¹ अ¹ † नास्ति कु २. आवार° वि¹ अ¹ ३-३. मध्ये मद्देस्य° वि¹ अ¹ ४-४. श्रद्देयो° कु अ¹, नास्ति वि¹ अ¹ ५. 'त गुण° मं¹ ६. परिषु मं¹ ७. नास्ति वि ८. °र वि ९. °न्ति आपूरयन्ति आ° वि १०. मरु° वि ११. इषिर° अ वि १२. °वत्यो वि १३. नास्ति अ उच्यन्ते वि १४-१४. नास्ति अ वि १५-१५. °तानेति निवाता का वि १६. एद्व° कु १७. °नः इव कु १८. पापयि° वि¹ मत्र अपराजयि° वि¹ कु अपराजयि° अ¹, अपराजयित्या वि¹ अ¹ १९. हिंसित° अ वि¹¹ अ¹°

नद्य समुद्रम् न । यथा नद्य समुद्रं प्रत्ययन्ति तद्वद् इत्यर्थ । कीदृश्यो नद्य । स्वा समुद्रस्य स्वभूता अभिष्टय आभिमुख्येन गमनपरय । कतम भवितारो मरत वृत्रहत्ये वृत्रहनने निमित्तभूत सति तम् इन्द्रम् अनु तस्य अनुलक्ष्य स्थिता बभूवु । कीदृशा मरत । शुष्मा दाम्नूणा शोषयितार । अवाता यान्ति प्रातिकूल्येन गच्छन्तीति वाता शत्रव तद्रहिता[१] । अह्रुतप्सव अकुटिलरूपा । शोभनावयवा इत्यर्थ ॥ ४ ॥

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।
इन्द्रो यद् वज्री धृषमाणो अन्धसा भिनद् वलस्य परिधीँरिव त्रितः ॥ ५ ॥

अभि । स्वऽवृष्टिम् । मदे । अस्य । युध्यत । रघ्वीःऽइव । प्रवणे । सस्रु । ऊतय । इन्द्र । यत् । वज्री । धृषमाण । अन्धसा । भिनत् । वलस्य । परिधीन्ऽइव । त्रित ॥ ५ ॥

स्कन्द० अभि इत्युपसर्ग सस्रु इत्याख्यातेन सम्बन्धयितव्य । स्वा वृष्टिर्यस्य स स्ववृष्टि वृष्टे स्वामी । कोऽसौ । इन्द्र । मदे इति 'यस्य च भावेन' (पा २,३,३७) इत्येव[२] सप्तमी । तच्छक्तेश्च लक्षणभूतयोग्यक्रियापदाध्याहार । अस्य युध्यत इति अस्य-शब्देनानुदात्तेन प्रकृतत्वा दिन्द्रस्यानुदेश । स्ववृष्टिम इत्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी । सोममदे प्राप्ते स्ववृष्टिमिममिन्द्र युध्यमानम् । रघ्वीरिव प्रवणे प्रवणशब्दो निम्नवचन । यथा निम्ने प्रदेशे रघ्वी लघुगामिन्य आप अभिगच्छयु तद्वद् अभि सस्रु अभिगतवत्य अभिगच्छन्ति वा ऊतय मरुद्वाग्निसना । कदा । उच्यते । यत् यदा वज्री गृहीतवज्र धृषमाण हृपेरय[३] छान्दसो धकार । हृष्यन् अन्धसा सोमलक्षणनान्नेन । सोमेन जन्यमानहर्ष सन्नित्यर्थ । भिनत् भिन्नवान् भिनत्ति वा । वलस्य मेघनामैतत् (द्र निघ १,१०) । द्वितीयार्थे चात्र षष्ठी । मेघम् । कथम् । 'परिधीन् इव त्रित[४]' यथा परिधीन् त्रित[५] भिन्नवान् तद्वत् । अत्रेतिहासमा चक्षत—'त्रित यजन्त रक्षास्यभिदुद्रुवु । सोऽभिमुवाच । अहोतानीति । तान्यभिर्न शशाक हन्तुम् । स[६] क्रुद्धोऽग्ने परिधीन् भङ्क्त्वा तैस्तानि रक्षांसि जघान' इति । तदेतदिहोच्यते— 'परिधीँरिव त्रित' इति । अथवा वलस्येति स्वार्थ एव षष्ठी । परिधीनिति तृणस्तम्भानि परिधय उच्यन्ते सर्वतो निधीयमानत्वात् । मेघस्योत्तम्भनान्यभिनदित्यर्थ । इव-शब्दस्तूप मार्थीय अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग' (द्र या ७,३१) इति पदपूरण । त्रित इत्यपि त्रिशब्दात् आद्यादित्वात् सप्तम्यान्तसि । त्रिषु प्रदेशेषु अग्रमध्यमूलेषु अभिनदित्यर्थ[७] । अथवा त्रित इति प्रथमान्तमिन्द्रविशेषणम् । त्रितस्त्रिस्थान इन्द्र[८] ॥ ५ ॥

वेङ्कट० स्वा वृष्टिर्यस्य त सोममदे[९] युध्यत इन्द्रस्य अस्य साहाय्यार्थं यथा प्रवणे आपो यन्ति एवम् अभि सस्रु मरुत । इन्द्र यदा वज्री सोमेन धर्षयन् वलम् अभिनत्, पापानीव[१०] त्रित आप्त्य ॥ ५ ॥

---

१ नास्ति वि　२ नास्ति अ　३ हृषेरयं कु　४-४ परिधिमिव यथा अ　५ त्रित ऋषि अ　६ स° अ　७ °न्निति क　८ इन्द्र इति अ　९ सोमम् मदे ल, सोममदे कु, मदे वि° अ°　१० °तेव ल

मुद्गल० ऊतयः मरुतः मदे सोमपानेन हर्षे सति अस्य इन्द्रस्य युध्यतः वृत्रेण सह युध्यमानस्य पुरतः स्वृष्टिम् स्वभूतवृष्टिमन्तं वृत्रम् अभि आभिमुख्येन सद्यः जग्मुः। रथ्यीरिव प्रवणे यथा गमनस्वभावाः आपः निम्नदेशे गच्छन्ति। यत् यदा अन्धसा सोमलक्षणेनान्नेन पीतेन धृष्णाणः प्रगल्भः सन् वज्री वज्रवान् इन्द्रः वलस्य संवृण्वतः[1] एतत्संज्ञमसुरम् भिनत् व्यदारयत्[2]। दृष्टान्तः। त्रितः परिधीन् इव देवानां हविर्लेपनिघर्षणाय अग्नेः सकाशाद् अप्सु एकतो द्वितस्त्रित इति त्रयः पुरुषा जज्ञिरे[3]। तत्र उदकपानार्थं प्रवृत्तस्य कूपे पतितस्य त्रितस्य[4] प्रतिरोधाय असुरैः परिधयः परिधायकाः कूपस्याऽऽच्छादकाः[5] स्थापिताः। तान् यथा सः अभिनत् तद्वत् ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये द्वादशो वर्गः ॥

परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत् ।
वृत्रस्य यत् प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ॥ ६ ॥

परि । ईम् । घृणा । चरति । तित्विषे । शवः । अपः । वृत्वी । रजसः । बुध्नम् । आ । अशयत् । वृत्रस्य । यत् । प्रवणे । दुःऽगृभिश्वनः । निऽजघन्थ । हन्वोः । इन्द्र । तन्यतुम् ॥ ६ ॥

स्कन्द० परि ईम् घृणा ईम् इति[6] पदपूरणः। परि चरति[7] लिडर्थेऽयं लट् परिचचार। सर्वतो भ्रान्तवतीत्यर्थः। का। घृणा दीप्ता स्तनयित्नुलक्षणा त्वदीया वाक्। तित्विषे दीप्तवच्च शवः बलं[8] त्वदीयं मरुल्लक्षणम्। कदा। उच्यते। अपः वृत्वी इत्यादि। अत्रैकवाक्यता-प्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। यः अपः उदकानि वृत्वी आवृत्य रजसः अन्तरिक्षलोकस्य बुध्नम् अधोभागम् आ अशयत् शेतिरिह स्थानार्थः। आश्रितवान्। तस्य वृत्रस्य मेघस्य असुरस्य वा यत् यदा प्रवणे निम्ने प्रदेशे। कीदृशस्य वृत्रस्य। उच्यते। दुर्गृभिश्वनः दुर्गृभिशब्दो दुर्ग्रहवचनः[9]। 'आशु' इति च 'शु' इति च क्षिप्रनामनी (तु. निघ २.१५)। श्वा क्षिप्रश्वासः दुर्ग्रहो[10] यस्य स दुर्गृभिश्वा। दुस्सहश्वास इत्यर्थः। शु अननं तस्य दुर्गृभिश्वनः। दुस्सहश्वासताप्रतिपादनाय चात्र ब्राह्मणपठितमितिहासमाचक्षते—'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत्। अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति। तथेति तं हनिष्यन्त आद्रवन्। सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति। हन्तेमान् भीषया इति। तानभिप्राश्वसीत्। तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्' (ऐब्रा ३.२०) इति। निजघन्थ हन्तिरत्र गत्यर्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। नियमेन गमितवानसि। हन्वोः हनुप्रदेशे हे इन्द्र। तन्यतुम् विस्तीर्णं शब्दकारिणं वा वज्रम् ॥ ६ ॥

वेङ्कट० परि चरति वृत्रम् दीप्तिः। बलं च तस्य दीप्तम्। अपः आवृत्य अन्तरिक्षलोकस्य बुध्नम् अपां मूलमावृत्य आ अशयत्। वृत्रस्य यदा प्रवणे दुर्ग्रहश्वासस्य निहतवान्[10] हन्वोः असिं[11] इन्द्र। वज्रं शब्दकारिणम् ॥ ६ ॥

---

1. वृण्वतः वि. 2. विदारयत् मूको. 3. तु. तैब्रा ३,२,८,१०-११. 4. नास्ति वि.
5. °च्छादयिकाः मूको. 6. नास्ति अ. 7. चरतिरपि कु लि. 8. नास्ति मूको. 9. 'दुर्ग्र' मूको.
10. निरि° कु त्रि° एपं. 11. उपरि कु; भीसि छ.

मुद्गल० यो वृत्रः अपः वृत्वी उदकान्यावृत्य रजसः बुध्नम् अन्तरिक्षस्योपरिप्रदेशम् आ अशयत् आश्रित्याशेत, तस्य वृत्रस्य प्रवणे प्रकर्षेण वननीये अन्तरिक्षे वर्तमानस्य दुर्गृभिश्वनः दुर्ग्रह-व्यापनस्य । तस्य हि व्यापनं न[1] केनापि ग्रहीतुं शक्यते । एवंभूतस्य वृत्रस्य हन्वोः मुखपार्श्वयोः हे इन्द्र ! यत् यदा तन्यतुम् प्रहारं विस्तारयन्तं वज्रम् । तृतीयार्थे द्वितीया । तन्यतुना वज्रेण निजघन्थ नितरां प्रजहर्थ । तदानीम् ईम् एनं त्वामिन्द्रम् घृणा शत्रुजयलक्षणा दीप्तिः परि चरति परितो व्याप्नोति । त्वदीयम् शवः बलं च तित्विषे प्रदिदीपे ॥ ६ ॥

ह्रदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।
त्वष्टा चित् ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ॥ ७ ॥

ह्रदम् । न । हि । त्वा । निऽऋषन्ति । ऊर्मयः । ब्रह्माणि । इन्द्र । तव । यानि । वर्धना ।
त्वष्टा । चित् । ते । युज्यम् । ववृधे । शवः । ततक्ष । वज्रम् । अभिभूतिऽओजसम् ॥ ७ ॥

स्कन्द० ह्रदम् न हि हिशब्दः पदपूरण.[2] । ऊर्मयः इत्येतत् ह्रदं इत्यनेनोपमानेन सम्बध्यते । ह्रदमिवोर्मयः । यथा ह्रदं प्रभूता उदकोर्मयो न्यृषेयु.[3] तद्वत् त्वा नि ऋषन्ति ऋष गतौ[4] । नियमेन गच्छन्ति । ब्रह्माणि स्तुतिलक्षणानि । हे इन्द्र ! तव यानि वर्धना[5] वर्धनानि वृद्धिकराणि । स्तूयमाना: हि देवताः वीर्येण वर्धन्ते । अत एवमुच्यते—तव यानि वर्धना इति । किञ्च[6] त्वष्टा चित् त्वष्टाऽपि देवशिल्पी ते तव युज्यम्[7] योग्यम् ववृधे वर्धितवान् शवः बलम्, ततक्ष कृतवांश्च[8] वज्रम् अभिभूत्योजसम् अभिभवितृबलयुक्तम्[9] ॥ ७ ॥

वेङ्कट० ह्रदम् ऊर्मयः इव त्वाम् तव वर्धनानि[10] स्तोत्राणि इन्द्र![11] नि ऋषन्ति तवोपरि चलन्ति । त्वद्विषये[12] पुनःपुन. प्रवर्तन्ते । त्वष्टा च तव सदृशं बलं वर्धितवान् । अकरोत् वज्रम् अभिभवितृबलम् ॥ ७ ॥

मुद्गल० हे इन्द्र ! यानि ब्रह्माणि स्तोत्रशस्त्ररूपाणि मन्त्रजातानि तव वर्धना वर्धयितॄणि तानि त्वा त्वाम्[13] नि ऋषन्ति हि नितरां प्राप्नुवन्त्येव । दृष्टान्तः । ऊर्मयः जलप्रवाहाः ह्रदम् न यथा जलाशयं प्राप्नुवन्ति तद्वत् । त्वष्टा चित् त्वष्टा च देवः ते तव युज्यम् योग्यम् शवः बलम् ववृधे प्रावर्धयत् । अपि च अभिभूत्योजसम् शत्रूणामभिभवितृणा[14] ओजसा बलेन युक्तम् वज्रम् ततक्ष तीक्ष्णीचकार ॥ ७ ॥

जघन्वाँ उ हरिभिः सम्भृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः ।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥ ८ ॥

---

1. नास्ति वि मे[१]. 2. पाद° वि. 3. दृषेयुः कु; न्यृषेयुः अ; धृषेयुः वि. 4. गमने कु वि. 5. नास्ति मूको. 6. किम् कु. 7. यजमानः अ. 8. °वान् शतत् अ. 9. °युक्तं वधन्य वि. 10. °नानीच्छन् त्रि[१]. 11. नास्ति कु वि[१] अ[१]. 12. °ग्रेषु वि[१]. 13. नास्ति वि. 14. °भवि-तॄणाम् मूको.

जघन्वान् । ऊँ इति । हरिऽभिः । सम्भृतक्रतो इति सम्भृतऽक्रतो । इन्द्र । वृत्रम् । मनुषे । गातुऽयन् । अपः । अयच्छथाः । बाह्वोः । वज्रम् । आयसम् । अधारयः । दिवि । आ । सूर्यम् । दृशे ॥

स्कन्द० जघन्वान् इति शत्रर्थे वसुः[1] । उ इति तु पदपूरणः । [2]हन् हरिभिः आत्मीयैरश्वैः । तृतीयानिर्देशात्[2] गत्वेति शेषः । हे सम्भृतक्रतो ! सम्भृतकर्मन् ! सम्भृतप्रज्ञ ! वा इन्द्र ! । कं घ्नन् । उच्यते । वृत्रम् । किमर्थम् । मनुषे मनो राज्ञ ऋषेर्वा मनुष्यस्य वाऽर्थाय । गातुयन् गमनमिच्छन् । कस्य । अपां वृष्टिलक्षणानामुदकानाम् । अयच्छथाः निबद्धवानसि । बाह्वोः बाहुभ्याम् । अत्र सम्बन्धात्कर्तरि लक्ष्येते । हस्ताभ्यां गृहीत्वा नयसीत्यर्थः । किम् । वज्रम् । कीदृशम् । आयसम् लोहमयम् । किञ्च अधारयः धारितवान् स्थापितवानसि दिवि द्युलोके । आकारो मर्यादायाम् । कम् । सूर्यम् । दृशे दर्शनाय । तदेतत्पुरस्तादपि उक्तम्—'वृत्रं यदिन्द्र शवसा वधीरहिमादित्सूर्यं दिव्यारोहयो दृशे' ( ऋ १, ५१,४ ) इति ॥ ८ ॥

वेङ्कट० जघन्वान् अश्वैः गत्वा[3] सम्भृतप्रज्ञ ![3] इन्द्र ![4] वृत्रम् मनुष्यार्थम् अपः गमयितुमिच्छन् अग्रही[5] बाह्वोः आयसम् आयुधम् । अथ त हत्वा सर्वेषाम् दर्शनाय दिवि सूर्यम् आ[7] अधारयः ॥ ८ ॥

मुद्गल० हे सम्भृतक्रतो ! सम्पादितकर्मन् ! इन्द्र ! मनुषे जनाय गातुयन् गातु मार्गमिच्छन् वृत्रम् असुरम् हरिभिः अश्वैर्युक्तस्त्वम् जघन्वान् उ हतवान् खलु । तदनन्तरम् अपः वृष्ट्युदकानि प्रावर्तय इत्यध्याहारः । बाह्वोः त्वदीययोर्हस्तयोः आयसम् अयोमयम् वज्रम् अयच्छथाः अग्रहीः । आकारः समुच्चयार्थः । सूर्यम् च दिवि द्युलोके दृशे द्रष्टुं सर्वेषामस्माकं दर्शनाय अधारयः स्थापयाञ्चकृषे ॥ ८ ॥

बृहत् स्वश्चन्द्रममवद् यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः ।
यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥ ९ ॥

बृहत् । स्वऽचन्द्रम् । अमऽवत् । यत् । उक्थ्यम् । अकृण्वत । भियसा । रोहणम् । दिवः । यत् । मानुषऽप्रधनाः । इन्द्रम् । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् । अनु ॥ ९ ॥

स्कन्द० बृहत् महत् परिमाणतः सारतो वा । स्तुतिरूपम् स्वश्चन्द्रम् चन्द्रं चन्दतेः कान्तिकर्मणः स्वयमेव कान्तम् । अमवत् अमशब्द आत्मपर्याय । तेन चात्र प्रयत्नो[8] लक्ष्यते । आत्मवत् प्रयत्नवत् । महता प्रयत्नेनेत्यर्थः । यत् उक्थ्यम् प्रशस्यम्[9] । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तत् अकृण्वत कृतवन्तोऽस्मदीया ऋत्विजः पुत्रपौत्राद्यो वा । भियसा परिचर्यावैगुण्यभयेन । कीदृशम् । रोहणम् दिवः द्युलोकारोहणसमर्थम् । साद्गुण्यात्कृतविध्वंसकैरसुरैः रक्षोभिर्वाऽन्तराऽवलोपनम् अकुर्वद्भिः सम्पन्नसर्वगुणमित्यर्थः । कदा । उच्यते— यत् यदा मानुषप्रधनाः मनुष्यार्थो मानुषः । 'प्रधन इति संग्रामनाम' ( या९,२३ ) । असुरैर्मेघैर्वा[10] सह मनुष्यार्थः संग्रामो येषां ते मानुषप्रधनाः । इन्द्रम् इत्येतत्तु अनन्तरेण अनुशब्देन सह सम्बन्धयितव्यम्[11] । कीदृशाः[12] । ऊतयः अवितारः । रक्षितारो

1. वसुर् मूको. 2-2. निर्देशाद् भ. 3. नास्ति ल वि[11] अ[1] दु. 4. °तव्र वि[1]. 5 नास्ति दु 6. भग्रहीद् वि[1] ल. 7. नास्ति वि[1] अ[1]. 8. प्रयोगो भ 9. °शस्ये भ 10. °र्वा लोकस्मार्थे भ लि 11. °तव्य मूको. 12. कीदृशः लि.

गन्तारो वेत्यर्थ । स्व सर्वपर्यायोऽयम् । सर्वे नृपाच नृभिर्ये सेव्यन्ते सेवन्ते वा नॄन् वृष्टिप्रदानादिना ते नृपाच । के ते । उच्यते । मरुत । किं कृतवन्त । उच्यते । अमदन् इन्द्रम् अनु 'तृतीयार्थे' (पा १, ४, ८५) इत्ययमनु कर्मप्रवचनीय । सहार्थश्चात्र तृतीयार्थ । सोमेन मत्ता इन्द्रेण सहेत्यर्थ ॥ ९ ॥

वेङ्कट० बृहत् साम स्वयमेव कान्त बरयत् यदा प्रशस्यम् अनुर्वत भयेन स्तोतार[1] दिव रोहणनिमित्तम् । यदा वा मनुष्यहितसङ्ग्रामा इन्द्रम् मरुत[2] स्व दिवि स्थित देवा सन्त मनुष्यान् सेवमाना अनु अमदन् । उत्तरत्र सम्बन्ध ॥ ९ ॥

मुद्गल० बृहत् बृहत्साम स्तोतारो यजमाना भियसा वृत्रभयेन यत् यदा उक्थ्यम्[3] उक्थार्हम् स्तोत्रयोग्यम् अकृण्वत अकुर्वन् । कीदृश बृहत्साम । स्वश्चन्द्रम् स्वकीयेन चन्द्रेण आह्लादकेन तेजसा युक्तम् अमवत् अमति शत्रून् रुजत्यनेनेति अमो बल तद्युक्तम् । दिव स्वर्गस्य रोहणम् आरोहणहेतुभूतम् । एवंविधेन स्तोत्रेण वृत्राक्रीता[4] इन्द्रम् अस्तोषतेत्यर्थ । यत् यदा मानुषप्रधना मनुष्यहितसङ्ग्रामा ऊतय स्व द्युलोकस्य रक्षितार मरुत नृपाच प्राणरूपेण नॄन् सेवमाना भूत्वा इन्द्रम् अपि तेनैव रूपेण अनु अमदन् आनुपूर्व्येण हर्षं प्रापयन् । तदानीं स इन्द्र वृत्रवध प्रति उद्युक्तो बभूवेति शेष ॥ ९ ॥

द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र ते ।
वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥ १० ॥

द्यौः । चित् । अस्य । अमऽवान् । अहेः । स्वनात् । अयोयवीत् । भियसा । वज्रः । इन्द्र । ते । वृत्रस्य । यत् । बद्बधानस्य । रोदसी इति[5] । मदे । सुतस्य । शवसा । अभिनत् । शिरः ॥

स्कन्द० द्यौ चित्[6] चिच्छब्दोऽप्यर्थ । द्यौरपि, किमुतान्ये देवा । कीदृशी द्यौ । अमवान् आत्मवान् प्रयत्नवान् । किं कृतवान् । उच्यते । अस्य अहे अहन्तव्यत्वान्येन हन्तुमशक्यस्य वृत्रस्य स्वभूतात् स्वनात् आसशब्दात् अयोयवीत् यौति पृथग्भावार्थ । पृथग्भूत । नष्ट इत्यर्थ । कम्पनार्थो वा यौति सामर्थ्यात् । अकम्पतेत्यर्थ । भियसा भयेन । वृत्रत्रासात् बिभ्यतस्त्वद्दूरं सर्वे देवा नष्टा इत्यर्थ । अत्र "च ब्राह्मणम्—'××इति" तानभि प्राश्वसान् । तस्य श्वसथादीषमाणा विश्वे देवा अजहुन्' (ऐब्रा ३.२०) इत्ययमितिहासो दर्शयितव्य । कदा पुनरयोयवीत् । उच्यते[7] । यत्र हे इन्द्र ! ते तव स्वभूत वृत्रस्य यत् यदा बद्बधानस्य बाधतेरिदम् । अभ्यस्तानामुपधाह्रस्वत्वम् । अपि इत्यत्र इत्यरम् । वृष्टिप्रतिबन्धकरणेनात्यर्थं बाधमानस्य । रोदसी उभे अपि द्यावापृथिव्यौ । रोदसी इति धातुपाठस्वपमिद्धर्थं व्यत्ययेन द्वितीयाया स्थाने आमन्त्रितप्रथमा द्रष्टव्या । मदे सुतस्य मद इति 'यस्य च भावेन' (पा २, ३, ३७) इत्येव सप्तमी । तच्छब्दश्च लक्षणभूतवाक्यक्रियापदाध्याहार । सुतस्य सोमस्य सम्बन्धिनि मदे मास । सोमेन मत्तस्य सततस्वैरेत्यर्थ । शवसा बलेन अभिनत्

1 स्तोतृ मूको. 2 नाभि वि[1] अ[2] 3 नाभि वि 4 वृत्राक्रो[3] मूको 5 वैर १,१६०.१८ सोष द्र 6 चित् भयस मूको. 7-7 भ्रष्टा नास्ति; "ते तै कु 8 शुष्यते नास्ति

भिन्नवान् । किम् । शिरः मूर्धानम् । अस्यामृच्यप्रकृतत्वात् अहेरस्येत्येतस्यान्वादेशत्वासम्भवा च्छान्दसमनुदात्तत्वं व्याख्येयम् । अन्वादेशार्थं वोत्तरोऽर्धर्चः पूर्वं योजयितव्यः । पश्चात् पूर्वः । यदा त्वदीयो वज्रो वृत्रस्य शिरोऽभिनत्तदास्याहेः स्वनादिति ॥ १० ॥

वेङ्कट० द्यौः अपि बलवान् अस्य अहेः स्वनात् तदानीं[1] भयेन अयोयवीत् अकम्पत[2] । यदा द्यावापृथिवी बाधमानस्य सोमस्य मदे तव वज्रः बलेन वृत्रस्य शिरः अभिनत्[3], तदा अयोयवीदिति। वृत्र एवाहननादहिरुक्तः[4] ॥ १० ॥

मुद्गल० अमवान् बलवान् द्यौः चित् द्युलोकोऽपि अस्य अहेः वृत्रस्य स्वनात् शब्दात् भियसा भयेन अयोयवान् अत्यर्थं पृथग्भूत आसीत् । अकम्पतेत्यर्थः । हे इन्द्र! ते तव सुतस्य अभिषवादिभिः संस्कृतस्य सोमस्य पानेन मदे हर्षे जाते सति त्वदीयः वज्रः रोदसी द्यावापृथिव्यौ बद्धधानस्य बाधनशीलस्य वृत्रस्य शिरः यत् यदा शवसा बलेन अभिनत् अच्छिनत्, तदानीं द्युलोको भयादित्थं न निश्चलो बभूवेति शेषः ॥ १० ॥

इति प्रथमाष्टके चतुर्थाध्याये त्रयोदशो वर्गः ॥

यदिन्न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः
अत्राह ते मघवन् विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ॥ ११ ॥

यत् । इत् । नु । इन्द्र । पृथिवी । दशऽभुजिः । अहानि । विश्वा । ततनन्त । कृष्टयः । अत्र । अह । ते । मघऽवन् । विऽश्रुतम् । सहः । द्याम् । अनु । शवसा । बर्हणा । भुवत् ॥ ११ ॥

स्कन्द० यत् इत् नु इन्द्र यच्छब्दो यदिशब्दस्यार्थे। इत् नु इति पदपूरणौ[5]। यदिशब्दश्रुतेश्च[6] तत्सम्बन्धयोग्यक्रियापदाध्याहारः । यदि स्यात् हे इन्द्र[1] पृथिवी दशभुजिः दशाभोगा[7]। दशगुणेत्यर्थः । अहानि च विश्वा सर्वाणि ततनन्त एकत्र समात्य विस्तारयेयुः कृष्टयः मनुष्याः । अत्र यदिति प्रमान्तरत्वादपीत्यस्यार्थे[8]। अह ते अहेति विनिग्रहार्थीयः एवशब्देन समानार्थः तेशब्दात् परो द्रष्टव्यः । ते अह तवैव हे[1] मघवन्! विश्रुतम् विख्यातम् सहः सनात्क्षणं बलम् द्याम् अनु दिवं प्रति । द्युलोके व्यवस्थितः सन्नित्यर्थः । शवसा सामर्थ्यलक्षणेन बलेन बर्हणा परिवृढम् भुवत् भवेत्। दशगुणायाः पृथिव्याः सर्वेभ्यश्च सङ्गतेभ्योऽहोभ्यः सकाशात् तवैव महत्तरं बलमिति समस्तार्थः ॥ ११ ॥

वेङ्कट० यदि एव इयम् इन्द्र! पृथिवी दशगुणा भवति, [9]यदि[†] च[10] अहानि सर्वाण्येव विस्तारयेयुः, मनुष्याः सर्वदा द्युवाणाश्चरेयुः । अत्र एव[11] ते मघवन्! त्वत्कृतं सर्वं कर्म विश्रुतम् भवति। तत्र बलेनागतं शत्रुहिंसने द्युसदृशं भवति महत्त्वेनेति ॥ ११ ॥

मुद्गल० यत् इत् नु[12] यदा खलु पृथिवी दशभुजिः दशगुणिता भवेत्, यदि वा कृष्टयः प्रजाः विश्वा

---

1 तदा वि[1] अ[3]   2 अकम्पयत् वि[1] अ[3]   3 अच्छिनत् वि[1] अ[3]   4 °हिरुक्तो कु   5 °पूरणे अ, पूरणम् कु   6 नास्ति अ   7 दशभोगा कु   8 °त्वादसत्शब्दोऽत्र यस्या (°र्थ अ) स्थाने। सर्वार्थेदं अ कु   9 नास्ति अ कु   10 10 नास्ति वि[1] अ[3].   † यदा च वि[1] उप   11 एवं तवापि वि[1] अ[3]   12 नास्ति वि.

सर्वाणि अहानि कर्माणि ततनन्त विस्तारयेयुः । हे मघवन्! धनवन्! इन्द्र! अत्र अह अत्रैव पूर्वोक्तेष्वेव देशकालकर्तृकेषु ते त्वदीयम् सहः वृत्रवधादिकारणं बलम् विश्रुतम् विख्यातम् । शवसा त्वदीयेन बलेन कृता बर्हणा वृत्रादेर्वधरूपा क्रिया द्याम् अनु भुवत् अनुभवति । यथा द्यौर्महती तथा त्वत्कृतं वृत्रादेर्हिंसनमपि महदिति भावः ॥ ११ ॥

त्वम॒स्य पा॒रे रज॑सो॒ व्यो॑मनः॒ स्वभू॑त्योजा॒ अव॑से धृषन्मनः ।
च॒कृ॒षे भूमिं॑ प्रति॒मान॒मोज॑सो॒ऽपः स्वः॑ परि॒भूरे॒ष्या दिव॑म् ॥ १२ ॥

त्वम् । अ॒स्य । पा॒रे । रज॑सः । विऽओ॑मनः । स्वभू॑तिऽओजाः । अव॑से । धृ॒ष॒त्ऽम॒नः॒ । च॒कृ॒षे । भूमि॑म् । प्र॒ति॒ऽमान॑म् । ओज॑सः । अ॒पः । स्व॒रिति॑ स्वः॑ । प॒रि॒ऽभूः । ए॒षि॒ । आ । दिव॑म् ॥१२॥

स्कन्द० त्वम् अस्य पारे पारमन्तम् । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । त्वमस्य पारे अन्ते तिष्ठसि । रजसः लोकस्य व्योमनः व्योम्नः अन्तरिक्षाख्यस्य । कीदृशः । स्वभूत्योजाः स्वभूतिः स्वसामर्थ्यं, सा ओजो बलं यस्य स स्वभूत्योजाः । किमर्थम् । अवसे तुमर्थे[1] सेन्प्रत्ययः[2] । अवितुम् । कृत्स्नं जगत् वृष्टिप्रदानद्वारेण पालयितुमित्यर्थः । हे धृषन्मनः! शत्रुधर्षणचित्त! शत्र्वभिभवशील! इत्यर्थः । किञ्च चकृषे कृतवानसि । भूमिम् प्रतिमानम् उपमानम् ओजसः आत्मीयस्य बलस्य । अपः अन्तरिक्षं च । 'आपः' इति[3] बहुवचनान्तोऽप्छब्दोऽन्तरिक्षनामसु[4] पठितः ( तु. निघ १, १२ ) । स्वः दिवं च । त्रयो लोकाः समुदिताः तव बलस्योपमा भवति । परिभूः परिपूर्वो भवतिः सर्वत्र[5] परिग्रहे । यावत् किंचित् सर्वस्य परिग्रहीता[6] त्वम् एषि आ आगच्छसि च सोमं पीत्वा पृथिवीतः दिवम् द्युलोकम् ॥ १२ ॥

वेङ्कट० त्वम् अस्य अन्तरिक्षलोकस्य[7] अन्ते[8] स्थितः सन् स्वभूतबलः रक्षणार्थं शत्रूणामभिभवनशीलचित्त![9] तिष्ठसि । चकृषे कृतवानसि च[10] भूमिम्[11] । [12]बलवतां बलस्य[12] [13]प्रतिद्वन्द्वी त्वम्[13] । अन्तरिक्षं सर्वं परिभवन् आ गच्छसि दिवम् इति ॥ १२ ॥

मुद्गल० हे धृषन्मनः! शत्रूणां धर्षकमनोयुक्त! इन्द्र! अस्य अस्माभिः परिदृश्यमानस्य व्योमनः व्याप्तस्यान्तरिक्षस्य रजसः लोकस्य पारे उपरिप्रदेशे वर्तमानः स्वभूत्योजाः स्वभूतबलस्त्वम् अवसे अस्मद्रक्षणार्थम् भूमिम् भूलोकम्[14] चकृषे कृतवानसि । किञ्च ओजसः बलवतां बलस्य प्रतिमानम् प्रतिनिधिरभूः । तथा स्वः सुष्ठु अरणीयं गन्तव्यम् अपः अन्तरिक्षलोकम् आ दिवम् द्युलोकञ्च परिभूः परिग्रहीता परिग्रहणार्थम् एषि प्राप्नोषि ॥ १२ ॥

त्वं भु॒वः प्र॑ति॒मानं॑ पृथि॒व्या ऋ॒ष्ववी॑रस्य बृह॒तः पति॑र्भूः ।
विश्व॒माप्रा॑ अ॒न्तरि॑क्षं महि॒त्वा स॒त्यम॒द्धा नकि॑र॒न्यस्त्वावा॑न् ॥ १३ ॥

त्वम् । भु॒वः । प्र॒ति॒ऽमान॑म् । पृ॒थि॒व्याः । ऋ॒ष्वऽवी॑रस्य । बृ॒ह॒तः । पतिः॑ । भूः॒ । विश्व॑म् । आ । अ॒प्राः॒ । अ॒न्तरि॑क्षम् । म॒हि॒ऽत्वा । स॒त्यम् । अ॒द्धा । नकिः॑ । अ॒न्यः । त्वाऽवा॑न् ॥ १३ ॥

---

१. °मर्थे अव भ. २. से प्र° अ कु. ३. इति द्वि अ वि. ४. °न्तोऽपच्छन्दो° कु; °न्तोऽप्छन्दो° वि. ५. अग्र भ. ६. °गृहीता (°ता क) अ वि. ७. °स्य लो° वि[1]. ८. अन्त वि[1] लपं. ९. °शील ल; °शीलचित्तः वि[1]. १०. नास्ति वि[1] अ[1]. ११. भूमीम् लपं. १२-१२. बलस्य बलवताम् वि[1] अ[1]. १३-१३. तु. ऋ १,१०२,८; °न्द्वलम् वि[1] अ[1]; °न्द्विलम् ल वि[1,2] अ[1] लपं; °न्द्रि त्वम् कु. १४. लोकम् वि.

स्कन्द० त्वम् भुव भवसि प्रतिमानम् पृथिव्या पृथिव्यपि त्वयोपमीयते, किं पुनरन्यान्युपमेयानि। सर्वत[1] त्वमुत्कृष्ट इत्यर्थ । किञ्च ऋष्ववीरस्य 'ऋष्व' ( निघ ३, ३ ) इति महन्नाम। वीरशब्द शूरपर्याय । महान्तो वीरा यस्मिन् सैन्ये तदृष्ववीर तस्य[2] । बृहत महत पति स्वामी भू भवसि त्वम् । महद्भि [3]शूरैरुपेत तव महत्सैन्यमित्यर्थ[3] । किञ्च विश्वम् आ अप्रा आपूरयसि अन्तरिक्षम् महित्वा महत्त्वेन। किं बहुना। सत्यम् अद्धा द्वे अप्येते सत्यनामनी ( द्र निघ ३ १० )। 'अभ्यासे भूयांसमर्थं मन्यन्ते, यथा अहो दर्शनीय अहो दर्शनीय' ( या १०,४२ ) इत्येवमर्थभूयस्त्वेनापुनरुक्ति[4] । अत्यन्तसत्यमेतत् । नकि न कश्चिदन्यस्त्रैलोक्य त्वावान् 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' ( पावा ५,१,३९ ) इत्येवमथ सादृश्ये वतुप्प्रत्यय । त्वत्सदृश इत्यर्थ ॥ १३ ॥

वेङ्कट० [5]त्वम् भुव[5] प्रतिमानम्[6] पृथिव्या, दर्शनीयवीरस्य [7]स्वर्गस्य च†[7] पति अभव । विश्वम् आपूरितवान् असि अन्तरिक्षम् महत्तया। सत्यम् अद्धा इति सत्यनामनी[8] । सत्यं तथैव, न त्वत्सदृश[9] कश्चिदस्तीति ॥ १३ ॥

मुद्गल० हे इन्द्र! त्वम् पृथिव्या विस्तीर्णाया भूमे प्रतिमानम् भुव प्रतिनिधिर्भवसि । यथा भूलोको महान् अचिन्त्यशक्तिरेव त्वमपीत्यर्थं । तथा ऋष्ववीरस्य ऋष्वा दर्शनीया वीरा दृश्य यस्य स तस्य बृहत बृहितस्य प्रवृद्धस्य स्वर्गलोकस्य पति भू पालयितासि । तथा अन्तरिक्षम् अन्तरा क्षान्त[10] द्यावापृथिव्योर्मध्ये वर्तमानम् आकाशम् विश्वम् सर्वमपि महित्वा महत्त्वेन सत्यम् आ अप्रा निश्चयेन आ समन्तात् अपूरय । अत त्वावान् त्वत्सदृशोऽन्य कश्चित् नकि अस्ति नास्तीति यदेतत् तत् अद्धा सत्यमेव ॥ १३ ॥

न यस्य॒ द्यावा॑पृथि॒वी अनु॒ व्यचो॒ न सिन्ध॑वो॒ रज॑सो॒ अन्त॑मान॒शुः ।
नोत स्ववृ॑ष्टिं॒ मदे॑ अस्य॒ युध्य॑त॒ एको॑ अ॒न्यच्च॑कृषे॒ विश्व॑मानु॒षक् ॥ १४ ॥

न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । अनु॑ । व्यच॑ । न । सिन्ध॑व । रज॑स । अन्त॑म् । आ॒न॒शु ।
न । उ॒त । स्वऽवृ॑ष्टिम् । मदे॑ । अ॒स्य॒ । युध्य॑त । एक॑ । अ॒न्यत् । च॒कृ॒षे । विश्व॑म् । आ॒नु॒षक् ॥ १४ ॥

स्कन्द० न यस्य द्यावापृथिवी नेति प्रतिषेधे । यस्य तव न द्यावापृथिवी अनु व्यच [ia] सितामेवत् शाकपूणिना पठितम् । व्याप्तिम्[11] आनशाते[11] । न च सिन्धव स्यन्दनात् सिन्धव आदित्यरश्मय इहोच्यन्ते । के रजस । 'ज्योती रज उच्यते' ( या ४,१९ ) । ज्योतिषस्तेजस अन्तम् अनु आनशु अनु प्राप्नुवन्ति । यतो व्याप्त्या[11] द्यावापृथिव्यौ न्यूनतरे[12], न तेजसा आदित्यरश्मय इत्यर्थ । अथवा 'सिन्धव' ( निघ १,१३ ) इति नदीनाम । रज इत्युदकमुच्यते ( द्र या ४,१९ )। यतो व्याप्त्या[12] द्यावापृथिव्यौ न्यूनतर। यस्य च स्वभूतस्य वृष्टिलक्षणस्योदकस्यान्ते

---

१ सर्वत कु २ नास्ति म ३-३ 'शैरुपेतैर्महत्' म ४ °रुक्ते ति; °रुक्ते म ५-५ नास्ति वि[1 3] अ[1] ६ नास्ति वि[1] अ[1] ७-७ महत वि[1] अ[1]. † नास्ति कु ८ °मनी भवत त्वमेव वि[1] अ[1]. ९ °दृश[2] वि[1] १० शान्तम् मूको ११ व्याप्ति अ वि १२ नास्ति मूको १३ व्याप्त मूको १४ न्यूनतरम् कु. १५ व्यासे कु.

नद्यो न व्याप्नुवन्ति। वृष्टयेकदेशेन ह्रियन्ते। न सर्वां वृष्टिं प्रति गच्छन्तीत्यर्थः। अथवैवमन्यथाऽस्यार्धर्चस्यार्थयोजना। द्यावापृथिवी अनु व्यचः इति अनुशब्दः 'हीने' ( पा १,४,८६ ) इत्येवं कर्मप्रवचनीयः। 'अन्वर्जुनं[1] योद्धारः' इति यथा। द्यावापृथिवी इति कर्मप्रवचनीययोगलक्षणद्वितीयान्तम्। व्यच इत्यपि प्रथमान्तम्। यस्य तव द्यावापृथिव्योः '[2]सकाशान्न न्यूना'[2] व्याप्तिरित्यर्थः। 'न सिन्धवो रजसो अन्तमानशुः' इत्ययं तु पादो द्विधा पूर्ववद्व्याख्येयः। न उत स्ववृष्टिम् मदे अस्य युध्यतः उतशब्दोऽप्यर्थे। स्वा वृष्टिर्यस्य स स्ववृष्टिः, वृष्टेः स्वामी, तं स्ववृष्टिम्। मदे इति 'यस्य च भावेन॰' ( पा २,३,३७ ) इत्येवं सप्तमी। तच्छ्रुतेश्च लक्षणयोग्यक्रियाऽध्याहारः। अस्य युध्यत इति प्रकृतत्वादिन्द्रस्यायमन्वादेशः। स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी। नापि यं व्याप्नुवन्ति वृष्टेः स्वामिनं सोममदे प्राप्ते भवन्तमेनं युध्यमानमित्यर्थः। के न व्याप्नुवन्ति। सामर्थ्यात् शत्रवः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। स त्वम् एकः सहायवर्जितः अन्यत् विश्वम् सर्वम् चकृषे करोषि कृतवान् वा। आनुषक् आनुपूर्व्येणात्मानुगुणम्, स्ववशवर्तीत्यर्थः॥ १४॥

वेङ्कट॰ 'यस्य इन्द्रस्य द्यावापृथिवी[1] व्याप्तिम् न अनु आनशाते। न[2] नद्योऽपि[3] तेजसः अन्तम् आपुः। न अपि च शत्रवः[4] सोममदे युध्यतः अस्य तेजसोऽन्तम् आनशुः[5]। किं बहुना। एकः एव त्वम् अन्यत् सर्वम् अनुस्यूतं कृतवानसि॥ १४॥

मुद्गल॰ यस्य इन्द्रस्य व्यचः व्यापनम् द्यावापृथिवी द्यावापृथिव्यौ न अनु आनशाते प्राप्तुमसमर्थे[6] बभूवतुः। तथा रजसः अन्तरिक्षलोकस्योपरि सिन्धवः स्यन्दनशीला आपो यस्येन्द्रस्य तेजसः अन्तम् अवसानम् न आनशुः न प्रापुः। उत अपि च सोमपानेन मदे हर्षे सति स्ववृष्टिम् स्वीकृतवृष्टिं वृत्रादिम् युध्यतः युध्यमानस्य अस्य इन्द्रस्य बलस्य अन्तं वृत्रादयो न प्रापुः। अतः हे इन्द्र! एकः त्वम् अन्यत् स्वव्यतिरिक्तम् विश्वम् भूतजातम् आनुषक् आनुपक्तम् चकृषे। सकलमपि भूतजातं त्वदधीनमभूदिति भावः॥ १५॥

आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा।
वृत्रस्य यद् भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ॥ १५॥

आर्चन्। अत्र। मरुतः। सस्मिन्। आजौ। विश्वे। देवासः। अमदन्। अनु। त्वा। वृत्रस्य। यत्। भृष्टिऽमता। वधेन। नि। त्वम्। इन्द्र। प्रति। आनम्। जघन्थ॥ १५॥

स्कन्द॰ आर्चन् अर्चतिः स्तुत्यर्थः। स्तुवन्ति स्तुतवन्तो[9] वा मरुतः ऋत्विङ्नामैतत् (द्र. निघ ३, १८)। ऋत्विजः। अत्र सस्मिन्[10] सर्वशब्दस्यायमेकाक्षरलोपः[11] पर्यायान्तरं वा। सर्वस्मिन् आजौ सङ्ग्रामनाम (द्र. निघ २,१७)। सङ्ग्रामस्थानीये दुस्तरे यज्ञे। यावान् कश्चिदयं पृथिव्यां यज्ञः तत्र सर्वत्रेत्यर्थः। अथवा 'य उग्रा अर्कमानृचुः' (ऋ १,१९,४) इति मरुतो

---

1. अन्वर्जुनं दु; अन्वर्जनं भ. 2-2. °शान्न्यूना मूको. 3. °धिव्यावपि कु. 4. नास्ति वि[2]. 5. °ऽपि आदित्यरश्मयो वा वि[1] अ[3]. 6. पूर्वं अ[1,2] वि[1,2] कु रु. 7. नानशुः रु; नानशुः वि. 8. नास्ति मूको. 9. स्तुवन्तः मूको. 10. नास्ति भ. 11. °मेकाक्षरो लोपः लि.

मोतृत्वदर्शनात् इन्द्रसखा[1] देवा एवात्र मरुत उच्यन्ते। आजिरित्यपि सङ्ग्राम एवोच्यते, न तत्स्थानीयो यज्ञः। 'प्रहर भगवो जहि वीरयस्व' (ऐब्रा ३,२०) इत्येवमादिभिर्वचनैः अत्र[2] सर्वस्मिन् सङ्ग्रामे मरुतस्त्वां स्तुतवन्त[3] इत्यर्थः। विश्वे देवासः 'सर्वे च देवाः'[4] अमदन् सोमेन माद्यन्ति मत्ता वा। अनु त्वा 'तृतीयार्थे' (पा १, ४, ८५) इत्येवमयमनुशब्दः कर्मप्रवचनीय। सहार्थश्चात्र तृतीयार्थः। त्वया सहेत्यर्थः। कस्मात् कदा वा आर्चन्[5]। उच्यते। वृत्रस्य यद् यस्मात् यदा वा सृष्टिमता भृष्टिशब्दोऽभिवचनः[6]। अभिमता[7] वधेन यज्ञनामैतत् (द्र. निघ २, २०)। वज्रेण त्वम् हे इन्द्र! आनम् प्राणम् नि प्रति जघन्थ प्रतिशब्दोऽत्र धात्वर्थानुवादी[8]। नियमेन हतवान् हंसि वा ॥ १५ ॥

वेङ्कट० 'प्रहर भगवो जहि वीरयस्व' इति सर्वस्मिन् अस्मिन् सङ्ग्रामे मरुतः इन्द्रम् आर्चन्[9]। त्वया मरुतो देवाः त्वाम् अनु अमदन् मदिः सकर्मकश्च भवति। वृत्रस्य यदा अभिमता[10] वज्रेण नि जघन्थ त्वम् इन्द्र! हननसाधनेन[11] मुखं प्रति[12] ॥ १५ ॥

मुद्गल० हे इन्द्र! त्वाम् मरुतः अन अस्मिन् आजौ सङ्ग्रामे आर्चन् आपूजयन्। तस्मिन् तस्मिन् विश्वे देवासः ते सर्वे दानादिगुणयुक्ता मरुतः त्वा त्वाम् अनु अमदन् अनुक्रमेण हर्षं प्रापयन्। हे इन्द्र! त्वम् यत् यदा सृष्टिमता भ्रंशयति शत्रूनिति भृष्टिः अश्रिः, तद्वता वधेन हननसाधनेन वज्रेण वृत्रस्य आनम् प्रति आननं मुखं प्रति नि जघन्थ नितरां प्राहार्षीः ॥ १५ ॥

इति प्रथमाष्टके चतुर्थाध्याये चतुर्दशो वर्गः ॥

## [ ५३ ]

न्यू३ षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः ।
नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥ १ ॥

नि । ऊँ इति । सु । वाचम् । प्र । महे । भरामहे । गिरः । इन्द्राय । सदने । विवस्वतः । नु । चित् । हि । रत्नम् । ससताम्ऽइव । अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥ १ ॥

स्कन्द० नि प्र इत्युपसर्गौ भरामहे इत्याख्यातेन सम्बन्धयितव्यौ। उ सु इति पदपूरणौ। शब्दलक्षणाम् वाचम् महे महते नि प्र भरामहे इत्येतदिदम्। 'हग्रहोर्भश्छन्दसि हस्य' (पावा ८,२,३२) इति भत्वम्। नियमेन प्रहरामः प्रापयामः[13]। उच्चारयाम[14] इत्यर्थः। न च केवलां[15] शब्दलक्षणां वाचम्। किं तर्हि। अन्या अपि गिरः लौकिकस्तुतिलक्षणाः यजुस्सामलक्षणा वा वाचः[16]। कर्म। इन्द्राय। क। सदने यज्ञगृहे विवस्वतः यजमाननामैतत्परिचर्याकर्तृगिना परिचर्य। यजमानस्य स्वभूते। कस्मात्[17]। उच्यते। नू[18] चित् हि 'नु' (निघ २,१५) इति क्षिप्रनाम।

1. इन्द्राय स° अ. 2. अत्र तु; अथवा वि. 3. स्तुतवन्तः मूको. ४-४. सर्वेति अ. 5. अनर्चन् वि. 6. °ऽभिवचनः अ. 7. अभिमता मूको. 8. °नुवादिनि वि. 9. आर्चन् वि°. 10. °ता वि.¹ अ°-¹ मु° छ. 11. साधन° मूको. 12. नास्ति वि¹ अ². 13. प्रापयामः मूको. 14. °यामो वि. 15. केवल अ. 16. वाचं वि. 17. नास्ति वि. 18. नास्ति अ.

चित्-शब्दः पदपूरणः[1]। हि-शब्दो यस्मादर्थे। यस्मात् क्षिप्रमिन्द्रः रत्नम् धनम् ससतामिव स्वपतामिव अत्यन्तनिष्प्रतिकाराणां[2] [3]शत्रूणाम् अविदत् विन्दतेरिदं† रूपम्। अविन्दत्[3] लब्धवान्। [4]प्रभूतं धनं लब्धवानित्यर्थः[4]। यस्माच्चेन्द्रस्य न दुष्टुतिः कुत्सिता स्तुतिः केषुचिदपि द्रविणोदेषु ऋत्विजोऽत्र द्रविणोदा उच्यन्ते, यजमाना वा। हविर्लक्षणस्यैव धनस्य दातृत्वात्[5] (तु· या ८,२)। तेषु शस्यते शस्त्रधर्मेण क्रियते। यस्माच्चास्य न कश्चिदपि ऋत्विक् यजमानो वा मयोग्यां स्तुतिं करोतीत्यर्थः ॥ १ ॥

वेङ्कट० सु नि प्र भरामहे स्तोत्रं महते इन्द्राय। यजमानस्य गृहे स्तुतयः इन्द्राय भवन्ति। नु[6] क्षिप्रम् एव[7] हि शत्रूणाम् रत्नम्[8], स्वपतामिव धनं चोरः, इन्द्रः विन्दति, ततः प्र भरामहे[9]। तत्र च धनप्रदेषु दुष्टुतिः न[10] प्र शस्यते, तस्मात् सुष्टु प्र भरामहे ॥ १ ॥

मुद्गल० [11]'न्यू षु' इति एकादशर्चं तृतीयं सूक्तम्। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टा नव जगत्यः। सव्य ऋषिः। इन्द्रो देवता[11] ॥

महे महते इन्द्राय सु वाचम् शोभनां स्तुतिम् नि प्र भरामहे नितरां प्रयुञ्ज्महे। उः पूरणः। यतः विवस्वतः परिचरतो यजमानस्य सदने यज्ञगृहे इन्द्राय गिरः स्तुतयः क्रियन्ते। हि यस्मात् स[12] इन्द्रः नू चित् क्षिप्रमेव रत्नम् रमणीयम् असुराणां धनम् अविदत् विन्दति। दृष्टान्तः। ससतामिव यथा स्वपतां पुरुषाणां धनं चोराः क्षिप्रं लभन्ते तद्वत्। अतोऽस्मभ्यं धनं दातुं शक्त इति भावः। द्रविणोदेषु धनस्य दातृषु पुरुषेषु दुष्टुतिः असमीचीना स्तुतिः न शस्यते नाभिधीयते। अतः सुवाचं निप्रभरामहे इति पूर्वेण सम्बन्धः ॥ १ ॥

दुरो अश्व॑स्य दुर इ॑न्द्र॒ गोर॑सि दुरो यव॑स्य॒ वसु॑न इ॒नस्पतिः॑ ।
शि॒क्षा॒न॒रः प्र॒दिवो॒ अका॑मकर्शनः॒ सखा॒ सखि॑भ्य॒स्तमि॒दं गृ॑णीमसि ॥ २ ॥

दुरः॑ । अश्व॑स्य । दुरः॑ । इ॒न्द्र॒ । गोः । अ॒सि॒ । दुरः॑ । यव॑स्य । वसु॑नः । इ॒नः । पतिः॑ । शि॒क्षा॒न॒रः । प्र॒ऽदिवः॑ । अका॑मऽकर्शनः । सखा॑ । सखि॑ऽभ्यः । तम् । इ॒दम् । गृ॒णी॒म॒सि॒ ॥ २ ॥

स्कन्द० सर्वस्तोतॄणाम् दुरः द्वारं निमित्तभूमिः। दातेत्यर्थः। कस्य। अश्वस्य जात्याभिप्रायमेतदेकवचनम्। अश्वानां न केवलानाम्। किं तर्हि। दुरः इन्द्र! गोः असि गवां च द्वारमसि हे इन्द्र!। दुरः यवस्य यवानां च द्वारमसि। वसुनः[13] धनस्य च सर्वस्य इनः ईश्वरस्त्वमसि। पतिः पालयिता च कृत्स्नस्य जगतः। शिक्षानरः शिक्षतिर्दानकर्मा (तु. निघ ३, २०)। छान्दसश्चात्र चतुर्थीसमासः पूर्वनिपातश्च। नरेभ्यो दाता धनानां शिक्षानरः। न चेदानीन्तनः। किं तर्हि। प्रदिवः पुराणनामैतत् (तु. निघ ३,२७)। चिरन्तनः। एवं न चाल्पदः। किं तर्हि। अकामकर्शनः कामानामकर्शयिता अतनूकर्ता। यावान्[14] काम्यते ततोऽधिकस्य दातेत्यर्थः। सखा चासि सखिभ्यः सखीनां यजमानानाम्। तम् भवन्तमेवंरूपं वयम् इन्द्रम् गृणीमसि। स्तुम इत्यर्थः ॥ २ ॥

---

१. पार° ति. २. °निष्प्रतीकारा° ति. ३-३. नास्ति ति. † विन्दते भ. ४-४. प्रभूतवा° मूको. ५. स्वदातृ° ति. ६. नास्ति कु. ७. इव वि[1]. ८. चरन्तं वि[2]; नास्ति वि[1]. ९. प्रभराः कुर्महे अ[2]. १०. नास्ति वि[1] अ[2]. ११-११. नास्ति वि भै[2]. १२. नास्ति वि. १३. वसु धनं भ; वसु लि. १४. यान् मूको.

वेङ्कट० दाता अश्वस्य दाता इन्द्र! गो च असि। दुर यवस्य धनस्य ईश्वर पालयिता शिक्षया नेता शासिता सर्वेषा पुराण कामानामकर्शिता[1] सखा सखिभ्य । तम् वयम् इदम् स्तुम ॥ २ ॥

मुद्गल० हे इन्द्र! त्वम् अश्वस्य दुर दाता असि तथा गो पश्वादे दुर दाता असि। [2]तथा यवस्य यवादेर्धान्यजातस्य दुर दाता असि[2]। वसुन निवासहेतोर्धनस्य इन स्वामी पति सर्वेषा पालयिता शिक्षानर शिक्षाया दानस्य नर नेतासि। प्रदिव पुराण। प्रगता दिव दिवसा यस्मिन् स तथोक्त ।अकामकर्शन अकामनाशन । हविर्दत्तवता यजमानाना कामान् पूरय तीत्यर्थ । सखिभ्य समानख्यानेभ्य[3] ऋत्विग्भ्य सखा सखिवद्रतयन्त[4] प्रिय । एवभूतो य इन्द्र तम् प्रति इदम् स्तोत्रलक्षण वच गृणीमसि ब्रूमहे ॥ २ ॥

शचीव इन्द्र पुरुकृद् द्युमत्तम तवेदिदमभितश्चेकिते वसु ।
अत संगृभ्याभिभूत आ भर मा त्वायतो जरितु काममूनयी ॥ ३ ॥

शचीऽव । इन्द्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदम् । अभित । चेकिते । वसु ।
अत । सम्ऽगृभ्य । अभिऽभूते । आ । भर । मा । त्वाऽयत । जरितु । कामम् । ऊनयी ॥ ३ ॥

स्कन्द० शचीव! कर्मवन् प्रज्ञावन्[5] वा इन्द्र! पुरुकृत्! बहूना वृत्रवधादीना कर्मणा कर्त! द्युमत्तम! अतिशयेन दीप्तिमन्! तव इत् इदम् इत्यन्द पदपूरण । यदिद तव अभित[6] उभयत दक्षिणे वामे च पार्श्वे चेकिते ज्ञायते। दृश्यते इत्यर्थ । वसु प्रभूत[7] धनम्। अत संगृभ्य गृहीत्वैकदेश हे अभिभूत! अभिभवित![8] शत्रूणाम् आ भर आहर। देहीत्यर्थ[9]। मा च त्वायत[10] त्वामिच्छत जरितु स्तोतु मम कामम् इच्छाम् ऊनयी न्यूनीकार्षी । यावदहमिच्छामि तावद्देहि मा स्तोकमित्यर्थ ॥ ३ ॥

वेङ्कट० प्रज्ञावन्[11] इन्द्र![10] बहूना[11] कर्त! अतिशयेन दीप्तिमन्! तव एव[12] इदम् अभित [13]वसु ज्ञायत । अत वसुन[13] संगृह्य अभिभवित! शत्रूणा मह्य आ[14] देहि । मा त्वामिच्छत स्तोतु कामम् ऊनयी[15] ऊनीकार्षी ॥ ३ ॥

मुद्गल० शचीव! हे प्रज्ञावन्! इन्द्र! पुरुकृत! प्रभूतस्य वृत्रवधादे कर्त! द्युमत्तम! अतिशयेन दीप्तिमन्! अभित सर्वत्र वर्तमानम् वसु धनं यदस्ति तत्[16] इदम् तव इत्, तवैव स्वभूतमिति चेकिते भृशमस्माभिर्ज्ञायते । अत कारणात् धनम् संगृभ्य सम्यक् गृहीत्वा अभिभूते शत्रूणामभिभवित! आ भर अस्मभ्यमाहर। देहीत्यर्थ । त्वायत त्वाम् आत्मन इच्छत जरितु स्तोतु कामम् अभिलाषम् मा ऊनया परिहीन मा कार्षी । पूरयेत्यर्थ ॥ ३ ॥

एभिर्द्युभि सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषस समिषा रभेमहि ॥ ४ ॥

---

१ °कर्शिता वि॰ अ॰. २-२ नास्ति मूको ३ °ख्यानेभ्य वि ४ °रतिम् मं॰. ५ °प्रज्ञावन् वि ६ °भितु वि ७ महत्वर्थ वि ८ त्वायत वि ९. प्रज्ञावन् ए १० इन्द्र वि॰ ११ °ना कर्मन् वि॰ अ॰ १२. नास्ति वि॰ अ॰ १३-१३ ज्ञायते वसु तत वि॰ अ॰. १४ नास्ति मू॰ १५ नास्ति मू॰ अ॰ वि॰ १६ तव मूको

एभिः । द्युऽभिः । सुऽमनाः । एभिः । इन्दुंऽभिः । निऽरुन्धानः । अमतिम् । गोभिः । अश्विना ।
इन्द्रेण । दस्युम् । दरयन्तः । इन्दुंऽभिः । युतऽद्वेषसः । सम् । इषा । रभेमहि ॥ ४ ॥

स्कन्द० एभिः द्युभिः सप्तम्यर्थे तृतीयैषा । द्युः इति च अह्नो नामधेयम् (तु. निघ १,९)। एतेष्वहस्सु । साम्प्रतमेवेत्यर्थः । सुमनाः उत्तरार्धर्चस्थैः भूयोभिर्बहुवचनान्तैः सामानाधिकरण्याद् बहुवचनान्तस्य स्थान इदमेकवचनम् । सुमनसः । प्रीतियुक्ताः सन्त इत्यर्थः । एभिः इन्दुभिः सोमैः निरुन्धानः इदमपि बहुवचनान्तस्यैव स्थान एकवचनम् । निरुन्धानाः प्रतिबध्नन्तः अमतिम् अज्ञानम् । अथवा मन्यतेरर्चतिकर्मणः कर्तर्ययं किन् । इन्द्रस्यास्तोतारमात्मीयं शत्रुम् । गोभिः अश्विना अश्वि-त्ववचनादश्वशब्दादयमिनिर्द्रष्टव्यः[१] । स्वार्थिको वा । बहुवचनस्य स्थान एकवचनम् । तृतीयानिर्देशाच्च युक्ता इति वाक्यशेषः । गोभिरश्वैः[२] युक्ता इत्यर्थः । इन्द्रेण दस्युम् आत्मीयशत्रुम् दरयन्तः दारयन्तः । केन । इन्दुभिः सोमैः । सोमैर्मत्तेनेन्द्रेण स्वशत्रून् घातयन्त इत्यर्थः । युतद्वेषसः यौतिः पृथग्भावार्थः । अत्र द्वेष शब्दो द्वेषवचनो द्वेष्टृवचनो वा । पृथग्भूतद्वेषसः । अपगतजनद्वेषा[१] वा अपगतजनद्वेष्टृका वेत्यर्थः । सम् इषा रभेमहि लभेरिदम् । कपिलादित्वात् रत्वम् । सम्यक् लभेमहीत्याशास्महे । किम् । सामर्थ्याद् धनं यशो वा । न च केवलम् । किं तर्हि । इषा अन्नेन सह । अथवा इषेति द्वितीयार्थे तृतीया । इषं सम्यक् लभेमहि[४] ॥ ४ ॥

वेङ्कट० एभिः यागदिवसैः एभिः च सोमैः प्रीयमाणः स्तोतॄणामर्थाभावजनिताम्[५] अमतिम् गोभिः अश्ववता च धनेन निरुन्धानः[६] इन्द्रो भवति । वयं तेन इन्द्रेण उपक्षपयितारम् दस्युम् दरयन्तः मत्तैः[७] सोमैः पृथक्कृतद्वेष्टारः[८] अन्नेन संरब्धा भवेम ॥ ४ ॥

मुद्गल० हे इन्द्र! एभिः अस्माभिः दत्तैः द्युभिः दीप्तैः चरुपुरोडाशादिभिः एभिः इन्दुभिः पुरोवर्तिभिः तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वम् अस्माकम् अमतिम् दारिद्र्यम् गोभिः त्वया दत्तैः पशुभिः अश्विना अश्वयुक्तेन धनेन[९] च निरुन्धानः निवर्तयन् सुमनाः शोभनमनाः भव । वयम् इन्दुभिः अस्माभिर्दत्तैः सोमैः प्रीतेन इन्द्रेण दस्युम् उपक्षपयितारं[१०] शत्रुम् दरयन्तः हिंसन्तः अत एव युतद्वेषसः पृथग्भूतशत्रुका भूत्वा इषा इन्द्रदत्तेनान्नेन सम् रभेमहि [११]संरब्धा भवेम,[११] संगच्छेमहीत्यर्थः ॥ ४ ॥

समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥ ५ ॥

सम् । इन्द्र । राया । सम् । इषा । रभेमहि । सम् । वाजेऽभिः । पुरुऽचन्द्रैः । अभिद्युऽभिः ।
सम् । देव्या । प्रऽमत्या । वीरऽशुष्मया । गोऽअग्रया । अश्वऽवत्या । रभेमहि ॥ ५ ॥

स्कन्द० सम् इन्द्र । राया पुनःपुनः संरब्धमेतः प्रतिसंरब्धम् रभेमहि इत्याख्यातमनुषज्यम् । सम्

---

१-१. °श्वादश्वेभ्योर्थे (°भ्यो कु.) अश्वि° अ कु. २. गौरश्वैः मूको. ३. °न्द्रेन्दसार मूको. ४. लभेमहीति अ. ५. °णां मार्थ (! °र्थ) भाव° वि॰. ६. प्रतिधानः वि॰ अ॰. ७. प्रत्तैः वि॰. ८. °तद्वेष्ट° वि॰. ९. °नेन वि मै॰. १०. °क्षयिता° मूको. ११-११. नास्ति वि मै॰.

रभेमहि सम्यक् लभेमहीत्याशास्महे। हे इन्द्र[१] राया। द्वितीयार्थे सर्वत्रात्र तृतीया। सह योगलक्षणा वा तृतीया। तैर्वा सुतं वा गृहं वा[१] यशो वा पूजा वेति वाक्यशेषः। धन धनेन वा सह सुखादीनां किञ्चित्। सम् इषा रभेमहि सम्यग्लभमहि इषमन्नम् अन्नेन वा सह सुखादीना किञ्चित्। सम् वाजेभिः इषत्यनेनान्नस्य उपात्तत्वाद् वाजशब्दोऽत्र बलवचनः। सम्यग्लभेमहि बलानि बलैर्वा सह सुखादीना किञ्चित्। कीदृशैर्वाजेभिः। उच्यते[२]। पुरुश्चन्द्रैः बहूनां कान्तैः अभिद्युभिः अभिगतदीप्तिभिः। स्वदीप्त्या दीप्तिरित्यर्थः। सम् देव्या दाव्यति द्योतनार्थः। स्वदीप्त्या द्योतमाना द्योतमानया वा[३] सह सुखादीना किञ्चित्। कया इयम्। उच्यते। प्रमत्या प्रकृष्टया मत्या ज्ञानेन। कादृश्या। वीरशुष्मया वीरा पुत्रा, ते शुष्मं बलं यस्या सा वीरशुष्मा, तया। बलवत्पुत्रसहितया[४]। गोअग्रया गावोऽग्रभूता यस्या सा गोअग्रा प्रधानभूताभिर्गोभिस्सहिता, तया। अश्वावत्या अश्वसहितया। स रभेमहि सम्यग्लभेमहीत्याशास्महे ॥ ५ ॥

वेङ्कट० इन्द्र[१] धनेन सरब्धा भवेम अन्नेन[८] च। सम् रभेमहि[१] च बले बहूनां स्पृहणीये आभिगत दीप्तिभिः। सम् रभेमहि[१] च देव्या प्रमत्या[७] यस्या वीरा बल भवन्ति तया[१] 'गोमुखया अश्वयुक्तया' ॥५॥

मुद्गल० हे इन्द्र[१] राया धनेन वयम् सम् रभेमहि सगच्छेमहि। तथा इषा अन्नेन सम् रभेमहि। तथा वाजैः बलैः सम् रभेमहि। कीदृशैः वाजैः। पुरुश्चन्द्रैः पुरूणां बहूनाम् आह्लादकैः। अभिद्युभिः अभितो दीप्यमानैः। किञ्च देव्या द्योतमानया प्रमत्या त्वदीयया प्रकृष्टबुद्ध्या सम् रभेमहि। कीदृश्या। वीरशुष्मया वीरं विशेषेण शत्रूणा क्षेपणसमर्थं शुष्मं बलं यस्या सा तथोक्ता तया[१]। गोअग्रया स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्या सा तथोक्ता तया[१]। अश्वावत्या अश्वैरुपेतया ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये पञ्चदशो वर्गः ॥

ते त्वा मदा अमदन् तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते।
यत् कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥ ६ ॥

ते। त्वा। मदाः। अमदन्। तानि। वृष्ण्या। ते। सोमासः। वृत्रऽहत्येषु। सत्ऽपते। यत्। कारवे। दश। वृत्राणि। अप्रति। बर्हिष्मते। नि। सहस्राणि। बर्हयः ॥ ६ ॥

स्कन्द० ते त्वा[१] त्वां सुरालक्षणा मदा अमदन्। तानि वृष्ण्या बलान्यपि अस्माभिः... [illegible]। ते[१] सोमासः वृत्रहत्येषु वृत्रहननेषु [१०]हे सत्पते[१०] सतां पालयितः। यत् यं कारवे [११]कारुः (निघ ३,१६) इति[११] स्तोतृनाम। स्तोत्रर्थाय। दश वृत्राणि वृत्रशब्दः शत्रुवचनः। सहस्राणि इत्यनेन चास्य सम्बन्धः। सहस्रशब्दस्योभयवचनं। उभयवचनत्वेऽपीह समानाधिकरणो

1. नास्ति अ 2 नास्ति अ दु 3 नास्ति मूको 4 °तया तया मूको 5 °बल अन्ने° वि[१] श[१] 6 सम् दु; ति च वि[१]. 7 म या श 8 8 मथ (अ वि[१]; °भा श्वे.) गुणाव °गुणव° (°मा वि[१].) श्र श्व वि[१] वि[१] 9 न लि 10 10 नास्ति स 11 11 कार्विति दु

न संख्येयवचनः। कुत एतत्। दशेत्येतेन सामानाधिकरण्यात्। दशसंख्यया च[1] सहस्रसंख्या परिच्छिद्यते, न तत्संख्येयाः। अतोऽत्र सहस्रशब्दस्य संख्यामात्रवचनत्वात् वृत्राणीत्येतस्य च तत्संख्येयप्रतिनिर्देशार्थत्वात्[2] षष्ठ्यर्थे द्वितीया। वृत्राणां शत्रूणाम्। अप्रति वृत्राणामिदं विशेषणम्, इन्द्रस्य वा। प्रतिशब्दश्चायमुपसर्गः। उपसर्गाश्च पुनरेवमात्मकाः यत्र कश्चित् क्रियावाची [3]शब्दः प्रयुज्यते[3] तत्र क्रियाविशेषणमाहुः। यत्र खलु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः। अतोऽत्रावतिष्ठतेर्धातोर्वा ससाधनस्यार्थे प्रतिशब्दः। अप्रत्यवतिष्ठमानोऽप्रतिपद्यमानो चेत्यर्थः। कस्मै कारवे। उच्यते। बर्हिष्मते यजमानाय। कानि दश। उच्यते। सहस्राणि नि बर्हयः बधकर्मोऽयम् ( द्र. निघ २,१९ )। हतवानसि ॥ ६ ॥

वेङ्कट० ते त्वा[4] सोमाः अमदन्। तानि वर्षणनिमित्तानि[5]। के ते इत्याह — ते सोमासः वृत्रहननेषु सतां पते!। यदा त्वं स्तोत्रे दश सहस्राणि[6] उपद्रवाणाम् नि बर्हयसि यजमानाय शत्रुभिः अप्रतिगतः[7] ॥ ६ ॥

मुद्गल० हे सत्पते! सतां पालयितः! इन्द्र! वृत्रहत्येषु वृत्रहननेषु निमित्तभूतेषु सत्सु ते पूर्वोक्ताः मदाः मदकारकाः मरुतः त्वा त्वाम् अमदन् अमदयन्[8] हर्षं प्रापयन्। तानि पूर्वोक्तानि वृष्ण्या वृष्णः सेचनसमर्थस्य तव सम्बन्धीनि चरुपुरोडाशादीनि[9] हवींषि त्वाममदन्[10]। ते सोमासः प्रसिद्धाः सोमाश्च त्वाममदन्। यत् यदा कारवे स्तुतिकर्त्रे बर्हिष्मते यज्ञवते यजमानाय दश सहस्राणि अपरिमितानि वृत्राणि आवरकाणि उपद्रवजातानि अप्रति शत्रुभिरप्रतिगतस्त्वम् नि बर्हयः न्यवधीः। तदानीमिति पूर्वेण सम्बन्धः ॥ ६ ॥

युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा।
नम्या यदिन्द्र सख्या परावति निबर्हयो नमुचिं नाम मायिनम् ॥ ७ ॥

युधा। युधम्। उप। घ। इत्। एषि। धृष्णुऽया। पुरा। पुरम्। सम्। इदम्। हंसि। ओजसा। नम्या। यत्। इन्द्र। सख्या। पराऽवति। निःऽबर्हयः। नमुचिम्। नाम। मायिनम् ॥

स्कन्द० युधा युद्धेन युधम् प्रतियोद्धारम् उप घ इत् एषि भूते अत्र[11] लट्। उपैषि उपगतवानसि। घ इत् इति द्वौ पदपूरणौ। कथञ्च पुनरुपैषि। धृष्णुया प्रथमैकवचनस्यायं याऽऽदेशः। धृष्णुः प्रगल्भः। निरशङ्कस्सन्नित्यर्थः। न च केवलं युधा युधम्। किं तर्हि। पुरा पुरम् पुरशब्दः[12] शरीरवचनः। शरीरेण च शरीरम्। यो योद्धा अस्त्रवान् अस्त्रयुद्धेनोपगन्तव्यः तं तेनोपगतवानसि, यो बाहुयुद्धार्थं [13]शरीरेण तं[13] शरीरेणेत्यर्थः। एवम् इदम् शत्रुबलम् सम् हंसि भूतेऽत्रापि लट्। सम्यग्घतवानसि, ओजसा आत्मीयेन बलेन। कदा। उच्यते। नम्या इन्द्रं प्रति प्रणतत्वात् नमी मरुद्गण इहोच्यते। 'प्रावन्नमीं साप्यम्' ( ऋ ६, २०, ६ ) इति यथा। प्रणतेन मरुद्गणेन सह यत् यदा सख्या स्वसखेन परावति दूरे स्थितम् निबर्हयः हतवानसि नमुचिम् नाम असुरम् मायिनम् मायावन्तम् ॥ ७ ॥

---

१. हि वा ति. २. °त्यथा प्रति° कु. ३-३. नास्ति वा कु. ४. त्वाम् कु. ५. वर्षति° वि[१]. ६. °स्रम् वि[१]. ७. °हतः वि[१]. ८. नास्ति वि मै[२]. ९. च पुरो° मै[२]. १०. त्वामदन् मै[२]. ११. नास्ति कु १२. पूरेन्द्रः कु. १३-१३. नास्ति कु.

वेङ्कट० युद्धेनानुस्यूतमन्यत् युद्धम् उपगच्छसि धृष्णुः[1]। पुरेण च पुरम् शत्रूणां सह इदम् विनाशयसि बलेन। [2]अनुगुणेन इन्द्र![2] नम्रङ्गणेन दूरे[3] नमुचिम् नाम असुरम् मायाविनम् निरर्हय तदानीम्[4] ॥ ७ ॥

मुद्गल० हे इन्द्र! धृष्णुया शत्रूणां धर्षकस्त्वम् युधा युद्धेन सम्बद्धम्[5] युधम् युद्धम् उप घ इत् एषि उपैव गच्छसि। सर्वदा युद्धशीलो भवसीत्यर्थः। घः पादपूरणः। शत्रूणामसुराणाम् पुरा पुरेण नगरेण सह इदम् पुरोवर्ति पुरम् शत्रुनगरम् ओजसा बलेन सम् हंसि सम्यग्विनाशयसि। शत्रूणां पुराण्यभैत्सीरित्यर्थः। हे इन्द्र! त्वम् नम्या शत्रुषु[6] [7]नमनशीलेन सख्या सहायभूतेन वज्रेण परावति दूरदेशे। नमुचिम् नाम अनया संज्ञया प्रसिद्धम् मायिनम् मायाविनमसुरम् यत् यस्मात् निबर्हय नितराम्[7] अहिंसीः। अतः त्वमेवं स्तूयसे इत्यर्थः ॥ ७ ॥

त्वं कर॑ञ्जमु॒त प॒र्णयं॑ वधी॒स्तेजि॑ष्ठयाऽतिथि॒ग्वस्य॑ वर्त॒नी ।
त्वं श॒ता वङ्गृ॑दस्याभिन॒त् पुरो॑ऽनानु॒दः परि॑षूता ऋ॒जिश्व॑ना ॥ ८ ॥

त्वम्। कर॑ञ्जम्। उ॒त। प॒र्णय॑म्। व॒धीः। तेजि॑ष्ठया। अ॒ति॒थि॒ऽग्वस्य॑। व॒र्त॒नी। त्वम्। श॒ता। वङ्गृ॑दस्य। अ॒भि॒न॒त्। पुरः॑। अ॒न॒नु॒ऽदः। परि॑ऽसूताः। ऋ॒जिश्व॑ना ॥ ८ ॥

स्कन्द० 'त्वम् करञ्जम्' करञ्जनामानमेकमसुरम्[8] उत पर्णयम्' पर्णयनामानमपरम्[9] वधीः[10] तेजिष्ठया तीक्ष्णतमया वर्तनी वर्तन्या धारया। कस्य। सामर्थ्याद्वज्रस्य। कस्यार्थाय। उच्यते। अतिथिग्वस्य अतिथीन् प्रति परिचारकतया गच्छतीत्यतिथिग्वो दिवोदास इहोच्यते। कुत एतत्। 'दिवोदासम् अतिथिग्वम्' ( ऋ ४,२६,३ ) इत्यादिषु दर्शनात्। षष्ठीनिर्देशाच्चार्थायेति वाक्यशेषः। तादर्थ्यचतुर्थ्यर्थे वा षष्ठी। अतिथीनां परिचरितुर्दिवोदासनाम्नो राज्ञोऽर्थायेत्यर्थः। किञ्च त्वम् शता द्वितीयैकवचनस्यायमाकार आदेशः। शतम् वङ्गृदस्य वङ्गृदनाम्नोऽसुरस्य स्वभूता अभिनत् भिन्नवानसि। का। पुरः नगराणि। कीदृशोऽहम्[11]। उच्यते। अननुदः अनुददातीत्यनुदः, अविद्यमानोऽनुदो यस्य सोऽननुदः। यदीयं दानं प्राभूत्यादन्योऽनुकर्तुमपि न शक्नोतीत्यर्थः। कीदृशी पुरः। उच्यते। परिषूताः षूङ् प्रेरणे। सर्वतः प्रेरिताः स्वेभ्यः स्थानेभ्यः। भयेनेतश्चेतश्च[12] प्रणाशितलोकाः सन्तीत्यर्थः। केन परिषूताः। उच्यते। ऋजिश्वना ऋजिश्वा नाम राजा विदथिन[13] पुत्र। यस्य मन्त्रान्तरेष्वपि दर्शनम्—'त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः'। ( ऋ ४,१६,१३) इति। तेन। अथवा ऋजिश्वनेति तादर्थ्यचतुर्थ्यर्थे तृतीया। ऋजिश्वनो राज्ञोऽर्थाय त्व वङ्गृदस्याभिनच्छत पुर इति[14] ॥ ८ ॥

वेङ्कट० त्वम् करञ्जम् अपि च पर्णयम् अवधीः तेजिष्ठया शक्त्या दिवोदासस्य रक्षार्थम्। तथा [15]त्वमृजिश्वन. शतौ वङ्गृदस्य बह्वीः पुरः अभिनः। या ऋजिश्वना राजा परिगताः। ऋजिश्वन[15]

---

१. धृष्णुम् म; धृष्णु वि॰ हर्ष, धृष (धृष) वि॰. २-२. मनुगुणेन वि॰ अ॰. ३. दूरेन स वि॰ अ॰. ४ °र्तर्गति वि॰ अ॰ क. ५. °म्बन्धम् वि. ६. नास्ति वि मै॰. ७-७. नास्ति वि | नास्ति मै॰. ८-८. नास्ति कु वि. ९. ¹तं करञ्जनामानमेकम° क कु, तं करञ्जनमेकम° वि. १०. पर्णयनामानं वि. ११. अवधीः कु. १२. °शोऽयम् कु. १३. भयेनेतश्च क कु. १४. विदथिन क. १५ नास्ति कु. १६-१६. ऋजिश्वनं उत्सृज वि॰ अ॰.

शत्रुपुराण्यवष्टभ्यावस्थितस्य[1] साहाय्यं कृतवान् असि[2] 'अनानुद अपश्चाद्भावस्य दातेति'[3] ॥ ८ ॥

मुद्गल० हे इन्द्र! त्वम् करञ्जम् एतत्सञ्ज्ञकमसुरम् उत अपि च पर्णयम् एतन्नामानमसुरम् अतिथिग्वस्य एतत्सञ्ज्ञस्य राज्ञः प्रयोजनाय तेजिष्ठया अतिशयेन तेजस्विन्या वर्तनी वर्तन्या शत्रुप्रेरणकुशलया शक्त्या वधीः हतवानसि । तथा अनानुदः अनु पश्चात् द्यति खण्डयतीति अनुद अनुचरः, न[4] तादृशः । अनुचररहित एक एव त्वम् ऋजिश्वना एतत्सञ्ज्ञेन राज्ञा परिभूता परितोऽवष्टब्धा शता शतसङ्ख्याका वङ्गृदस्य एतत्सञ्ज्ञस्यासुरस्य[5] पुरः पुराणि अभिनत् बिभिदिथ ॥ ८ ॥

त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥

त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा । उपऽजग्मुषः । षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥ ९ ॥

स्कन्द० त्वम् एतान् जनराज्ञः आत्मीयानां जनानां राज्ञः । स्वराज्येषु प्रतिष्ठितान् सत इत्यर्थः । कियतः । द्विः दश द्विरावृत्तान्[1] दश । विंशतिमित्यर्थः । कान् । अबन्धुना द्वितीयार्थे तृतीयैषा । अबन्धून् बन्धुवर्जितान् । वैरिणोऽसुरानित्यर्थः[2] । सुश्रवसा 'श्रव' ( निघ २,१० ) इति धननाम । शोभनेन धनेन उपजग्मुषः कर्मण्ययं[3] व्यत्ययेन वसुर्द्रष्टव्यः । उपगतान् अन्वितान् । धनेन समृद्धान् सत इत्यर्थः । अथवा 'अबन्धुना सुश्रवसा' इति द्वे अपि तृतीयान्ते समानाधिकरणे । 'बन्धु' (निघ २,१०) इति तु धननाम । 'श्रव' (निघ २,७) इत्यन्ननाम । उपजग्मुषः इत्यपि स्वार्थे कर्तर्येव वसुः । धनवर्जितेन शोभनेनान्नेनोपगतान् । पलाशमात्रेण[4] वा फल्गुना करेणोपगतान् । सुवर्णरजतमाणिक्यमौक्तिकादिधन[5] सारभूतं करमददत इत्यर्थः । न च विंशतिमेव केवलान् । किं तर्हि । षष्टिम् सहस्रा सहस्राणि नवतिम् च नव च । श्रुतः विख्यातस्त्वम् चक्रेण रथ्या सूर्यरथस्यावयवभूतेन दुष्पदा पदिर्गत्यर्थः । दुर्गमेन । तीक्ष्णधारित्वात् दुस्सहेनेत्यर्थः । नि अवृणक् 'वृणक्ति' ( निघ २,१९ ) इति वधकर्मा । नियमेनावधीरित्यर्थः । अत्रेतिहासमाचक्षते— 'असुराः किल ब्रह्मणा दत्तवरत्वाद्शस्त्रस्यावध्या आसन् । तानिन्द्रः सूर्यरथाच्चक्रमपहृत्य तेनाहन्' इति । तदत्र दिहोच्यते— 'नि चक्रेण रथ्या' इति । मन्त्रान्तरेऽपि चैतद् दृश्यते 'प्रमोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम्' ( ऋ ४,३०,४ ) इत्यादौ ॥ ९ ॥

वेङ्कट० त्वम् एतान् जनपदानां राज्ञः विंशतिं बन्धुवर्जितेन सुश्रवसा राज्ञा उपजग्मुषः युद्धार्थं तदनुचराणां भटानामपि सङ्ख्या षष्टिम् इति । विश्रुतस्त्वम् न्यवधीः चक्रेण दुष्पतनेन रथ्यायाम् ॥ ९ ॥

---

१ °गस्या° वि° २ भस्य कु ३ ३ °नुद पश्चा° ए; °नु° पश्चाद्गन्तस्य म न्ना° ए शोध ४ नास्ति मूको ५ °जाग्र° वि मै° ६ °पुरं कु वि, °पुरा म ७ वैरान्नु° म ८ भयं कर्माणि म ९ °मात्रे मूको १० °माणिक्यमुक्ता° मूको

मुद्गल० हे इन्द्र! श्रुतः विश्रुतः[1] प्रख्यातः त्वम् द्विः दश विंशतिसंख्याकान् अबन्धुना बन्धुरहितेन सहायरहितेन सुश्रवसा एतत्संज्ञकेन राज्ञा युद्धार्थम् उपजग्मुषः उपगतवत एतान् एवंविधान् जनराज्ञः जनपदानामधिपतीन्। षष्टिम् इत्यादिना तेषां राज्ञामनुचरसंख्योच्यते। षष्टिम् सहस्रा सहस्राणाम् षष्टिम् नवतिम्[2] नव नवसंख्योत्तरां[3] नवतिं यान् राज्ञ ईदृक्संख्याकान् अनुचरांश्च रथ्या रथसम्बन्धिना दुष्पदा दुष्प्रपदेन। शत्रुभिः प्राप्तुमशक्येनेत्यर्थः। ईदृशेन चक्रेण नि अवृणक् न्यवर्जयः। त्वाम् स्तुवतः[4] सुश्रवसो राज्ञः जयार्थं त्वमागत्य तदीयान्[5] शत्रून् अजैषीरित्यर्थः ॥ ९ ॥

त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिन्द्र॒ तूर्व॑याणम् ।
त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे राज्ञे॒ यूने॑ अरन्धनायः ॥ १० ॥

त्वम् । आ॒वि॒थ॒ । सु॒ऽश्रव॑सम् । तव॑ । ऊ॒तिऽभिः॑ । तव॑ । त्राम॑ऽभिः । इ॒न्द्र॒ । तूर्व॑याणम् । त्वम् । अ॒स्मै॒ । कुत्स॑म् । अ॒ति॒थि॒ऽग्वम् । आ॒युम् । म॒हे । राज्ञे॑ । यूने॑ । अ॒र॒न्ध॒ना॒यः॒ ॥ १० ॥

स्कन्द० त्वम् आविथ पालितवानसि सुश्रवसम् नाम राजानम् तव योग्याभिः ऊतिभिः पालनैः। किञ्च त्वं न केवलं सुश्रवसम्। किं तर्हि। तव योग्यैः त्रामभिः पालनैः हे इन्द्र! तूर्वयाणम् नामापरं राजानम्। किञ्च त्वम् अस्मै तूर्वयाणस्यायमन्वादेशः। तादर्थ्ये चात्र चतुर्थी। अस्य तूर्वयाणस्यार्थाय स्ववशम् कुत्सम् नाम ऋषिम् अतिथिग्वम् अतिथीन् प्रति परिचरितृत्वेनोपगन्तारं दिवोदासं नाम राजानम् आयुम् च उर्वश्याः पुत्रम्। कीदृशायास्मै। उच्यते। महे महते राज्ञे यूने तरुणाय। अरन्धनायः 'रध्यतिर्वशगमने'[6] (या ६,३२)। आत्मनो वशमनैषीः। तूर्वयाणस्य कार्येषु नियोगार्थं कुत्सादीनपि[7] स्ववशेऽकार्षीरित्यर्थः ॥ १० ॥

वेङ्कट० त्वम् अरक्षः सुश्रवसम् राजानम् तव ऊतिभिः। तथा तव त्राणैः इन्द्र! तूर्वयाणम् च त्वम् अस्मै सुश्रवसे महते राज्ञे यूने कुत्सादीन् त्रीन् वशमनयः[8] ॥ १० ॥

मुद्गल० हे इन्द्र! त्वम् तव ऊतिभिः त्वदीयैः पालनैः सुश्रवसम् पूर्वोक्तं राजानम् आविथ ररक्षिथ। तथा तूर्वयाणम् एतन्नामानं राजानम् तव त्रामभिः त्वदीयैः त्रायकैः पालकैः ररक्षिथेति शेषः। किञ्च त्वम् महे महते यूने तरुणाय अस्मै सुश्रवसे राज्ञे कुत्सादीन् त्रीन् राज्ञः अरन्धनायः वशमनयः ॥ १० ॥

य उ॒दृची॑न्द्र दे॒वगो॑पाः॒ सखा॑यस्ते शि॒वत॑मा असा॑म ।
त्वां स्तो॑षाम॒ त्वया॑ सु॒वीरा॒ द्राघी॑य॒ आयुः॑ प्रत॒रं दधा॑नाः ॥ ११ ॥

ये । उ॒त्ऽऋचि॑ । इ॒न्द्र॒ । दे॒वऽगो॑पाः । सखा॑यः । ते॒ । शि॒वऽत॑माः । असा॑म । त्वाम् । स्तो॒षा॒म॒ । त्वया॑ । सु॒ऽवीराः॑ । द्राघी॑यः । आयुः॑ । प्र॒ऽत॒रम् । दधा॑नाः ॥ ११ ॥

---

1. नास्ति वि. 2. नास्ति मै. 3. °संख्यो° मूको. 4. स्तुवतः वि मै. 5. तदीयान् मूको. 6. अरन्धयति° वि; अरन्धति° कु; रध्यति° अ. 7. °दीनपि अ. 8. °नय° वि°, अ°.

स्कन्द० ये वयम् उक्थि ऋच स्तुतौ। उद्गता स्तुतिर्यस्मिन् स उदग् यज्ञ, तत्र। अथवा 'सुन्तु सुवीर्यं[1] यज्ञम्यागुर उदचम्' ( खि ५, ७, ४, १६ ) इति प्रैषेषु प्रयोगदर्शनात् उदकचन्द समाप्तिवचन[2]। उदचि समाप्तौ। कस्य। सामर्थ्याद् यज्ञस्य[3] वा स्तुतीना वा। हे इन्द्र! देव गोपा देवा गोप्तारो येषा ते देवगोपा। सर्वैर्देवै पाल्यमाना इत्यर्थ। सखाय ते तव[4] शिवतमा सुखतमा। सुखकरीणा स्तुतीना कर्तार इत्यर्थ। असाम भवाम। यच्छन्दश्रुते स्तच्छन्दोऽध्याहार्य। ते त्वाम् स्तोषाम नित्य त्वा स्तुयाम[5] इत्याशास्महे। त्वया हेताविय तृतीया। त्वया हेतुना सुवीरा शोभनैर्वीरैर्युक्ता[6]। त्वदनुग्रहाच्छोभनै पुत्रै पौत्रैश्च युक्ता इत्यर्थ। द्राघीय अतिशयेन दीर्घम् आयु जीवितम् प्रतरम् प्रकृष्टतर श्लाघ्यम् दधाना धारयन्त। चिर श्लाघ्य च जीवन्त इत्यर्थ ॥ ११ ॥

वेङ्कट० ये[7] वयम् उदर्के देवैर्गुप्ता सहाया[8], ते अत्यन्त कल्याणा[9] अभूम। ते वयम् त्वाम्[10] स्तुयाम[11]। त्वया सुपुत्रा दीर्घतर च आयु प्रकृष्टतरम् दधाना इति। अवपुत्रयोराशासनम्[12] ॥ ११ ॥

मुद्गल० हे इन्द्र! देवगोपा देवेन त्वया रक्षिता[13] ये त वयम् सखाय[14] उदचि उत्कृष्टेनोदति त्वयि शिवतमा अतिसुखिन असाम भवाम। किञ्च त्वया सुवीरा सुपुत्रवन्त सन्त त्वाम् स्तोषाम स्तवाम[15]। कीदृशा वयम्। द्राघीय आयु प्रतरम् दधाना दीर्घतर जीवन प्रकृष्टतर धारयन्त ॥ ११ ॥

इति प्रथमाष्टके चतुर्थाध्याये षोडशो वर्ग ॥

[ ५४ ]

मा नो॑ अ॒स्मिन् म॑घवन् पृ॒त्स्वंह॑सि न॒हि ते॒ अन्तः॒ शव॑सः परी॒णशे॑ ।
अक्र॑न्दयो न॒द्यो॒३॒॑ रोरु॑व॒द् वना॑ क॒था न क्षो॒णीर्भि॒यसा॒ समा॑रत ॥ १ ॥

मा । न॒ । अ॒स्मिन् । म॒घ॒ऽव॒न् । पृ॒त्ऽसु । अंह॑सि । न॒हि । ते॒ । अन्त॑ । शव॑स । प॒रि॒ऽनशे॑ ।
अक्र॑न्दय । न॒द्य॑ । रोरु॑वत् । वना॑ । क॒था । न । क्षो॒णी । भि॒यसा॑ । सम् । आ॒र॒त॒ ॥ १ ॥

स्कन्द० मा न[16] मेति प्रतिषेधात् न इति च कर्मश्रुतेर्योग्यक्रियाध्याहार। मा त्याक्षी न अस्मान्। अस्मिन् हे मघवन्! पृत्सु सङ्ग्रामनामैतत् ( द्र निघ २,१७ )। एकवचनस्य स्थानेऽत्र बहुवचनम्। सङ्ग्राम अहसि पापे अत्यन्तभयानके। कि कारणम्। उच्यते। नहि ते अन्त शवस बलस्य पराणशे नशिर्व्याप्तिकर्मा ( द्र निघ २, १८ )। कृत्यार्थे षाय कनप्रत्यय। शक्यार्थश्चात्र कृत्यार्थ। व्याप्तु शक्य इत्यर्थ। किञ्च अक्रन्दय शब्दवतीर करो अकार्षीर्वा नद्य गङ्गाद्या नदी। रोरुवत् स्तनयित्नुलक्षण शब्द कुर्वन् वना 'वनम्'

---

१ सुवीर्यं मूको　२ °वचने ति　३ यज्ञस्य मूको　४ नास्ति कु　५ स्तुयाम मूको. ६ °वीरैर्यु° अ　७ वस्तुतिर्यस्मिन् स उद्यज्ञ यो वै अ[2]　८ सखाय वि[1] अ[1] कु　९ °स्या सुखतमास्सुखकरीणां स्तुतिनां कर्तारं वि[1] अ[2]　१० त्वा वि[1]　११ स्तुय° वि[1,1] ल अ[2].　१२ °पाशेष्मन् कु　१३ रक्षा मूको　१४ नास्ति मूको　१५ स्तुवेम मूको　१६ न अस्मिन् मूको

(निघ १,१२) इत्युदकनाम। तृतीयाबहुवचनाद्यायमाकार[1] आदेशः। वनैरुदकैर्गर्जन्। वृष्टिलक्षणैरुदकैरापूरयन् शब्दवतीः[2] नदीस्करोः करोषि वेत्यर्थः। एतच्च कर्म कुर्वतो भवतः कथा कथम् न क्षोणीः माध्यमिका वाचः[3]। भियसा[4] भयेन सम् आरत समित्येप निरित्येतस्य स्थाने। [5]अर्तिर्गत्यर्थः। मेघान्निर्गताः निर्गच्छन्ति वेत्यर्थः†। अथवा समित्येप स्वार्थ एव। सामर्थ्यात्त्वन्येन सह सङ्गतिरभिप्रेता। कथमन्येन सह ‡न सङ्गताः‡। कथं त्वत्तो न नष्टा न नश्यन्ति वेत्यर्थः[5] ॥ १ ॥

वेङ्कट० मा अस्मान् अस्मिन् सङ्ग्रामेषु जायमाने उपद्रवेऽत्याक्षीः। नहि[6] ते बलस्य पर्यन्त[7] केनचिदपि व्याप्तुं शक्यः[8]। स त्वं नदीः वना उदकानि क्रन्दयसि रोरूयमाणः। कथं न[9] पृथिव्यस्तिस्रः तव भयेन सङ्गच्छन्ते। भयाद्धीन्द्रस्य भूमयो विष्टतास्तिष्ठन्ति ॥ १ ॥

मुद्गल० [10]'मा नः' इत्येकादशर्चं चतुर्थं सूक्तम्। पञ्चम्यष्टमीनवम्येकादश्यः त्रिष्टुभः। शिष्टाः सप्त जगत्यः। सव्य ऋषिः। इन्द्रो देवता[10] ॥

हे मघवन्! धनवन्! इन्द्र! अस्मिन् परिदृश्यमाने अंहसि पापे पृत्सु पृतनासु पापफलभूतेषु सङ्ग्रामेषु च नः अस्मान् मा प्रक्षैप्सीरिति शेषः। यस्मात् ते तव शवसः बलस्य अन्तः अवसानम् परीणशे परितो व्याप्तुम् नहि शक्यते। सर्वोऽपि जनः त्वदीयबलमतिक्रमितुं न शक्नोतीत्यर्थः। तस्मात्त्वम् अन्तरिक्षे वर्तमानः रोरुवत् अत्यर्थं शब्दं कुर्वन् नद्यः नदीः वना तत्सम्बन्धीन्युदकानि च अक्रन्दयः शब्दयसि। क्षोणीः क्षोण्यः। 'क्षोणी' (निघ १,१) इति पृथिवीनाम। तदुपलक्षिताः त्रयो लोकाः भियसा त्वद्भयेन कथा कथम् न सम् आरत न सङ्गच्छन्ते। त्वदीयबलमवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः ॥ १ ॥

अर्चा॑ श॒क्राय॑ शा॒किने॒ शची॑वते शृ॒ण्वन्त॒मिन्द्रं॑ म॒हय॑न्न॒भि ष्टु॑हि ।
यो धृ॒ष्णुना॒ शव॑सा॒ रोद॑सी उ॒भे वृषा॑ वृष॒त्वा वृ॑ष॒भो न्यृ॒ञ्जते॑ ॥ २ ॥

अर्च॑ । श॒क्राय॑ । शा॒किने॑ । शची॑ऽवते । शृ॒ण्वन्त॑म् । इन्द्र॑म् । म॒हय॑न् । अ॒भि । स्तु॒हि॒ । यः । धृ॒ष्णुना॑ । शव॑सा । रोद॑सी॒ इति॑ । उ॒भे इति॑ । वृषा॑ । वृ॒ष॒ऽत्वा । वृ॒ष॒भः । नि॒ऽऋ॒ञ्जते॑ ॥ २ ॥

स्कन्द० [11]अर्च इत्यात्मन एवान्तरात्मनः प्रैषः[11] ऋत्विगन्तरस्य वा। स्तुहि हे अन्तरात्मन्! ऋत्विग्! वा। शक्राय द्वितीयार्थे एताश्चतुर्थ्यः। शक्तमिन्द्रम् शाकिने शक्तिमन्तम् शचीवते कर्मवन्तं वा प्रज्ञावन्तं वा। मा च [12]विप्रकृष्टं निरादरं[12] वा। किं तर्हि। शृण्वन्तम् इन्द्रम्। सन्निकृष्टं सादरं [13]वा शृण्वन्तमित्यर्थः[13]। स्वयमपि च मा निरादरः। किं तर्हि। महयन् मह पूजायाम्। नमस्काराञ्जलिपुटकरणादिना पूजयन्[14] अभि स्तुहि। यः इन्द्रः किं करोति। उच्यते। यः[15] धृष्णुना शत्रूणामभिभवित्रा शवसा बलेन[15] रोदसी उभे अपि वृषा वर्षिता वृषत्वा वर्षितृत्वेन। वृष्टिप्रदानेनेत्यर्थः। न च सकृद्वर्षिता[16]। किं तर्हि। वृषभः पुनःपुनर्वर्षिता। [17]वर्षणशील इत्यर्थः[17]। न्यृञ्जते 'ऋजतिः

1. तृतीयाबहुवचनस्या° ति. 2. शब्दवारिभिः भ. 3. वाङ् मूको. 4. °वना वनेनैं भ. 5-5. नास्ति ति. † नास्ति भ. ‡ नास्ति भ कु. 6. न कु. 7. पर्यन्तं कु. 8. शक्यं कु. 9. नः वि°. 10-10. नास्ति वि मै. 11-11. नास्ति भ. 12-12. विप्रकृष्टाभिरा° ति. 13-13. शृण्वन्त° वि. 14. पूजन् भ. 15. नास्ति कु ति. 16. °र्षितः ति. 17-17. वर्षणशील° भ.

प्रसाधनकर्मा' (या ६,२१)। प्रसाधनं च भूषणं वशीकरणं वा। नियमेन प्रसाधयति। भूषयति व्यक्तो वा कुरुते इत्यर्थः। उभयमपि होतत् वृष्टिप्रदानेन द्यावापृथिव्योरिन्द्रः करोति ॥ २ ॥

वेङ्कट० उच्चारय[1] स्तोत्रम् दानाय सहायाय[2] प्रज्ञावते, शृण्वन्तम् इन्द्रम् पूजयन् अभि स्तुहि। यः शत्रूणामभिभविता[3] बलेन उभे द्यावापृथिव्यौ प्रसाधयति[4] वर्षणशीलः वृषभः वृषत्वेन चेति ॥ २ ॥

मुद्गल० हे अध्वर्यो! शाकिने शक्तियुक्ताय शचीपते प्रज्ञावते दानाय इन्द्राय अर्च पूर्वविधम् इन्द्रं पूजय। किञ्च स्तुतीः शृण्वन्तम् समीचीना इयं स्तुतिरिति जानन्तं तम् इन्द्रम् [4]महयन् पूजयन् अभि स्तुहि आभिमुख्येन तस्य स्तोत्रं कुरु। य इन्द्रः[5] धृष्णुना शत्रूणां धर्षकेण शवसा बलेन उभे रोदसी द्यावापृथिव्यौ न्यृषते नितरां प्रसाधयति। स इन्द्रः वृषा सेचनसमर्थः वृषत्वा वृषत्वेन अनेनैव सेचनसामर्थ्येन वृषभः वर्षिता कामानाम् ॥ २ ॥

अर्चा दिवे बृहते शूष्यं१ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥ ३ ॥

अर्च । दिवे । बृहते । शूष्यम् । वचः । स्वऽक्षत्रम् । यस्य । धृषतः । धृषत् । मनः । बृहत्ऽश्रवाः । असुरः । बर्हणा । कृतः । पुरः । हरिऽभ्याम् । वृषभः । रथः । हि । सः ॥ ३ ॥

स्कन्द० अर्च अर्चतिरत्र सामर्थ्यादुच्चारणार्थः। आत्मन एव वायमन्तरात्मन प्रैषः। उच्चारय हे अन्तरात्मन्[1]। दिवे बृहते तावुभावेव चतुर्थ्यौ वेते। दीप्तस्य महतश्चेन्द्रस्यार्थाय। शूष्यम् बलस्य निमित्तम्। बलवृद्धिकरमित्यर्थः। वचः स्तुतिलक्षणम्। स्तूयमाना हि देवता वीर्येण वर्धन्ते[2]। अत एवमुच्यते—उच्चारय इन्द्राय शूष्यं वच इति। यस्य इन्द्रस्य। किम्। उच्यते। स्वभनम् क्षत्रमित्यपगतिमपीह बलनाम द्रष्टव्यम्। स्ववशं परानाश्रितम्। यस्य धृषतः शत्रूनभिभवतः धृषत् धृष्टं प्रगल्भम् मनः। यस्य बलेन शत्रून् प्रतो[3] न कुतश्चिन्मनो[4] बिभेतीत्यर्थः[5]। बृहच्छ्रवा 'रथो हि ष' इति तच्छन्दश्रुतेर्यच्छन्दोऽध्याहार्यः। यो बृहच्छ्रवा 'श्रव' (निघ २,१०) इति धननाम। महाधनः असुरः वृत्रः अन्यो वा कश्चित् बर्हणा कृतः बर्हिर्वृद्धयर्थः। इन्द्रस्य चेदं विशेषणम्। परिवृद्धेनेन्द्रेण कृतः। अथवा बर्हणा हिंसोच्यते। निबर्हयतेर्वधकर्मत्वात् (द्र निघ २,१९)। बर्हणया हिंसया कृतः। कदा। उच्यते। पुरः हरिभ्याम् प्राक् हरिप्रसरप्रासेन तदीयं स्थानम्। स्वस्थानस्थनैव[10] स्थितेत्यर्थः। कीदृशः। उच्यते। वृषभः वर्षिता। करदः इत्यर्थः। न च केवलं करदः। किं तर्हि। रथः हि सः रथो रहतेर्गतिकर्मणो गन्ता इहोच्यते। हिशब्दश्चार्थे। रहिता च स कृतः। आत्मनोऽनुगन्ता च स कृत इत्यर्थः। अथवा रूढिबलाद्रथशब्दो रथवचन एवान्तर्णीतमत्वर्थः[11]। रथवांश्च स कृतः। रथेन च स सेवकः कृत इत्यर्थः। अथवा बृहच्छ्रवा इति श्रूयमाणत्वाच्छ्रव[12] स्तनयित्नुलक्षणः शब्द इहाभिप्रेतः। असुर इत्यपि प्रज्ञावत्त्वात् प्राणवत्त्वाद्वा मेघ उच्यते। बर्हणाशब्दो वधवचनः[13], निबर्हयतेर्वधकर्मत्वात्। येनेन्द्रेण

1 हे अन्तरात्मन् उच्चा° वि[1] अ[2] 2 अशहाया° कु 3 °िता वि[1,2] लप कु °भवता अ[1] 4 °यति स्ववशे कुरुते वि[1] अ[2] 5-5 नास्ति वि 6 वर्धते अ ति 7 धान् मूको 8 °मनसा मूको 9 बिभेमी° अ कु 10 स्वस्थान स्वेनैव मूको 11 °थस्तु अ 12 °णच्छ्रव कु 13 विविधवचन मूको

महान् स्तनयित्नुलक्षणशब्दो मेघो वधेन प्राक् हरिमासे दूरस्थेनैव सता वृषभ इव। वृष्टिप्रद इत इत्यर्थ। मा च मस्था कियानय पुरुषकार इति। किं कारणम्। रथो हि स हि-शब्दो यस्मादर्थे। 'यस्मात् रथो रंहिता[1] गन्ता नष्टा स मेघ[2]। नष्टृत्वात् च दुर्हण इत्यर्थ ॥ ३ ॥

वेङ्कट० उच्चारय दीप्ताय महते बलनिमित्तम्[3] वच अनाश्रितपरबलम् यस्य शत्रून् धर्षयत धृष्टम् मन। महाकीर्ति शत्रूणाम् असिता शत्रुपरिबर्हणार्थं तस्येन्द्रस्य रथ कामाना वर्षिता अश्वाभ्या पुरस्क्रियते स्तोतॄणामिति[4] ॥ ३ ॥

मुद्गल० हे स्तोत! दिव दीप्ताय बृहते महते इन्द्राय शूष्यम् 'शूषम्' ( निघ २,६ ) इति सुखनाम। तत्र साधु शूष्यम्। तादृश स्तुतिलक्षणम् वच अर्च उच्चारय। यस्य इन्द्रस्य धृषत शत्रून् धर्षयत स्वधनम् स्वभूतबलवत् मन धृषत् धृष्टं भवति। हि स स हि खल्विन्द्र बृहच्छ्रवा प्रभूतयशा असुर शत्रूणा निरसिता बर्हणा शत्रूणा निबर्हयिता हरिभ्याम् अश्वाभ्याम् पुरस्कृत पूजित वृषभ कामाना वर्षिता रथ रंहणशील ॥ ३ ॥

त्वं दि॒वो बृ॑ह॒तः सानु॑ कोपयोऽव॒ त्मना॑ धृष॒ता शम्ब॑रं भिनत् ।
यन्मा॒यिनो॑ व्र॒न्दिनो॑ म॒न्दिना॑ धृ॒षच्छि॒तां गभ॑स्तिम॒शनिं॑ पृत॒न्यसि॑ ॥ ४ ॥

त्वम्। दि॒वः। बृ॒ह॒तः। सानु॑। को॒प॒य॒। अव॑। त्मना॑। धृ॒ष॒ता। शम्ब॑रम्। भि॒न॒त्। यत्। मा॒यिनः॑। व्र॒न्दिनः॑। म॒न्दिना॑। धृ॒ष॒त्। शि॒ताम्। गभ॑स्तिम्। अ॒शनि॑म्। पृ॒त॒न्यसि॑ ॥ ४ ॥

स्कन्द० त्वम् दिव यद्यसुरा अपि द्युलोकैकदेशवासिन एव ततोऽत्र द्युशब्दो द्युलोकवचन एव। अथ न, ततो दीप्तवचन। त्व द्युलोकस्य दीप्तस्य वाऽसुरपुरस्य बृहत महत[5] सानु समुच्छ्रितं प्रदेशम् कोपय भ्रमयसि। 'किञ्च त्मना[6] आत्मनैव त्वम् धृषता धृष्टेन निरशङ्केन मनसा शम्बरम् नाम असुरम् अव भिनत् अवाभिनत्[7] अवभिन्नवान्। चूर्णीकृतवानित्यर्थ। कदा। उच्यते। यत् यदा मायिन मायावत 'व्रन्दिन 'व्रन्दा व्रन्दतेर्मृदुभावकर्मण[8] ( या ५,१५ )। अत्यन्तबल बलात् परबलाना मृदूकर्तु। मायावत अत्यन्त च बलवत शम्बरस्य स्वभूतामित्यर्थ। मन्दिना मन्दतिरर्चतिकर्मा (द्र या ३, १४)। स्तुतिमता स्तुत्येन यज्ञेण मनसा वा। धृषत् धृष्ट त्वं शत्रून् शिताम् निशितां तीक्ष्णाम् गभस्तिम्' बाहुनामैतद् ( द्र निघ २,४ )। तात्स्थ्यात्तद्व्यपदेशाऽशनौ वर्तते। बाहुस्थाम् अशनिम् शक्तिम् पृतन्यसि अपृतन्य योधितवान्। यदाऽशनिहस्तेन शम्बरेण सहायुध्यथा[10] इत्यर्थ ॥ ४ ॥

वेङ्कट० त्वम् दिव महत समुच्छ्रित मेघम् अकोपय। अवभिन्नवान् आत्मनैव धर्षयिता[11]

---

१-१ यस्मादिन्द्र हिता अ, यस्मात् इन्द्र रंहिता कु यस्मात् इन्द्र हिता वि २ मेघा॑ कु० ३ 'बल' मम्युदितम् वि॰ अ॰ ४ स्तोतॄणा॰ वि॰ अ॰. ५ नास्ति कु ६-६ किम्। त्मना कु किञ्चात्मना अ वि ७. नास्ति अ वि ८-८ वृन्दिन। वृन्दी वृन्द॰ कु ९ ॰तिनम् तत्र अ. १० सहयुध्या अ कु; सहाध्या वि ११ ॰यिता वि॰ अ॰ कु लो॰

शम्बरम् असुरम्। यदा मायावतोऽन्यान् स्वबलेन मृदूकर्तुं[1] हृष्टेन मनसा धृष्ट तीक्ष्णा शत्रूणा गृहीताम्[2] अशनिम् अयोधय । तदानीमिति यद्वा बाहुमशनिं[3] चेति ॥ ४ ॥

मुद्गल० हे इन्द्र! त्वम् बृहत महत दिव द्युलोकस्य सानु समुच्छ्रितम् उपरिप्रदेशम् कोपय अकम्पय। धृष्णुना शत्रूणा धर्षयित्रा त्मना आत्मना स्वयमेव शम्बरम् एतत्संज्ञम् असुरम् अवाभिनत् अवधीः। यत् यदा मन्दिन शत्रून् जेतु मृदुभाव प्रापयन् मायिन मायाविनोऽसुरान् मन्दिना हृष्टेन धृषन् धृषता प्रागल्भ्य प्राप्नुवता मनसा युक्तस्त्वम् शिताम् तीक्ष्णाकृताम् गभस्तिम् हस्तेन गृहीताम् अशनिम् वज्रम् पृतन्यसि तान् असुरान् जेतु पृतनारूपणच्छसि। तान् प्रति प्रेरयसीत्यर्थ । तदानीं बृहतो दिव सानु कोपय[4] इति पूर्वेणान्वय ॥ ४ ॥

नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद् वना ।
प्राचीनेन मनसा बर्हणावता यदद्या चित् कृणवः कस्त्वा परि ॥ ५ ॥

नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रन्दिनः । रोरुवत् । वना ।
प्राचीनेन । मनसा । बर्हणाऽवता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥ ५ ॥

स्कन्द० यत् यस्मात् नि वृणक्षि 'धूर्वति, वृणक्ति' इति वधकर्मसु पाठात् वधार्थोऽयम् (तु निघ २, १९)। लट् भूते काल द्रष्टव्य । नियमेन हतवानसि। श्वसनस्य श्वासकारिण । महाश्वासस्येत्यर्थ । मूर्धनि द्वितीयार्थे सप्तम्येषा। मूर्धानं मस्तकम् । कस्य। उच्यते। शुष्णस्य शुष्णनाम्नोऽसुरस्य। चित् शब्दस्तु पदपूरण । कीदृशस्य। व्रन्दिन अत्यन्तबलवत्त्वात् परबलाना मृदूकर्तु । अत्यन्तबलवत इत्यर्थ । रोरुवत् शब्द कुर्वन्। वना 'नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति' (ऋ ८ १०२, १९) इत्यादिप्रयोगदर्शनात् वनशब्दस्तीक्ष्णवचन । तृतीयैकवचनस्य चायम् [4]आ आदेशो[5] द्रष्टव्य । तीक्ष्णेन वज्रेण। वधवचनो वा[6] सामर्थ्याद्वनशब्द । वधेन[7] प्रहारेणेत्यर्थ । किञ्च प्राचीनेन प्रागञ्चितेन गतेन अपराङ्मुखेन[8]। उत्साहवतेत्यर्थ । केन। मनसा। कीदृशेन। बर्हणावता वृद्धिमता हिंसावता वा। यत् यस्मात् अद्य चित् अद्यापि कृणव करोषि ईदृशानि कर्माणि। यस्मादिति वचनात् तस्मादित्यध्याहार्य[9]। तस्मात् क त्वा परि परिशब्दोऽध्यर्थे। कस्त्वाधिक अन्य, क[10] तवोपरि। सर्वस्य त्वमुपरीत्यर्थ ॥ ५ ॥

वेङ्कट० नि. वृणक्षि, यदा, शब्दकारिण. शुष्णस्य. आदित्यस्य शोषयितु. मूर्धनि. मृदूकर्तुं[11] स्थितानि उदकानि रोरूयमाण शत्रुभिभवमुखेन वृद्धिमता मनसा यत् इदानीम् अप्येतत् कृणोषि शुष्णादुदकाहरणम्,[12] त त्वाम्[13] क परिभवति ॥ ५ ॥

मुद्गल० हे इन्द्र! त्वम् रोरुवत् भृशं रवं कुर्वन् इत्यर्थं शब्दयन् श्वसनस्य अन्तरिक्षे श्वसितीति श्वसनो वायु, तस्य व्रन्दिन स्वकीयकिरणै आम्रफलादीन् मृदुभाव प्रापयत शुष्णस्य चित् रसाना शोषयितुरा दित्यस्यापि मूर्धनि उपरिप्रदेशे वना वनानि उदकानि यत् यस्मात् नि वृणक्षि आवर्जयसि

१ मृदूकतु ल भ[1] भ[2]　२ °हीतां° वि[1] लप °हानी° वि[1]　३ बाहुमशनि ल वि[2-1] भ[1]
४ कोप मूको　५-५ आदेशो भ या आदेश कु ति　६ नास्ति मूको　७ वनेन भ　८ अपराङ्मुखेन ति　९ °हार्यम् ए दोध　१० नास्ति कु सि　११ मृदूकर्तुं वि[1] लप कु भ[2]　१२ नास्ति कु　१३ त्वा वि[1] लप

प्रापयसीत्यर्थः । वायुना सूर्यकिरणैश्च वृष्टा आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते । तदेवावस्थापनमिन्द्रः करोतीत्युपचर्यते । प्राचीनेन प्रकर्षेण गन्त्रा । अपराङ्मुखेनेत्यर्थः । बर्हणावता बर्हणा शत्रूणां हिंसा तद्वता । एवंभूतेन मनसा युक्तस्त्वम् यत् यस्मात् अद्य चित् अद्यापि कृणवः घर्मकाले सूर्यस्योपरि भौमान् रसान् अवस्थापयसि वर्षासु च वर्षयसीति । यस्मादेतत् कुरुषे तस्मात् कारणात् त्वा त्वाम् परि उपरि कः वर्तते, न कोऽपीत्यर्थः । अतस्त्वमेव सर्वाधिक इति भावः ॥५॥

इति प्रथमाष्टके चतुर्थाध्याये सप्तदशो वर्गः ॥

त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।
त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं द॑म्भयो॒ नव॑ ॥ ६ ॥

त्वम् । आ॒वि॒थ॒ । नर्य॑म् । तु॒र्वश॑म् । यदु॑म् । त्वम् । तु॒र्वीति॑म् । व॒य्य॑म् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।
त्वम् । रथ॑म् । एत॑शम् । कृत्व्ये॑ । धने॑ । त्वम् । पुरः॑ । न॒व॒तिम् । द॒म्भ॒यः॒ । नव॑ ॥ ६ ॥

स्कन्द० त्वम् आविथ पालितवानसि । नर्यम् नरेषु भवं साधुं वा । मनुष्यं मनुष्यहितं वेत्यर्थः । कम् । तुर्वशम् नाम राजानम् ऋषिं वा । यदुम् च । त्वम् एव तुर्वीतिम् नाम राजानमृषिं वा असुरैः अगाध उदके प्रक्षिप्तं गाधकरणेन पालितवानसि । तदेतत्तथा अपि वक्ष्यति— 'तुर्वीतये गाधं तुर्वणिः कः (ऋ १, ६१, ११) इति । त्वमेव वय्यम् नामापरं राजानमृषिं वा पालितवानसि हे शतक्रतो! । त्वम् रथम् एतशम् । अत्रेतिहासमाचक्षते— 'संग्रामेऽसुराः सूर्यस्य रथं भङ्क्तुमैच्छन् अश्वं चापहर्तुम् । ताविन्द्रो रक्षितवान्' इति । तदेतदुच्यते— त्वमेव रथं चैतशं च पालितवानसीति । 'एतशः' (निघ १, १४) इत्यश्वनाम । कस्य । सूर्यस्य । कुत एतत् । इतिहासात् । 'प्रैतशं सूर्ये पस्पृधानम्' (ऋ १, ६१, १५) इति मन्त्रान्तरे दर्शनात् । किमर्थम् । कृत्व्ये 'कृत्वी' (निघ २,१) इति कर्मनाम । कर्मणि । धने निमित्ते एषा सप्तमी । धनार्थं यत् कर्मेत्यर्थः । कतमत् पुनस्तत् । सङ्ग्रामः । सङ्ग्रामार्थमश्वरथौ पालितवानित्यर्थः । अथवा कृत्व्यशब्दः कर्तव्यवचनः । सप्तमी चैषा । धनार्थं यः कर्तव्यः सङ्ग्रामः तत्रेत्यर्थः । त्वम् एव पुरः नगराणि दम्भयः दम्नातिर्वधकर्मा (द्र निघ २,१९) । स्वार्थे च णिच् छान्दसत्वात् । विशुनष्टितो हतवानसि । कियतीः । नवतिम् च नव च । कस्य स्वभूताः । शम्बरस्य । कुत एतत् । 'इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्' (ऋ ७, ९९, ५) इति मन्त्रान्तरेषु दर्शनात् ॥ ६ ॥

वेङ्कट० त्वम् अरक्षः नर्यादीन् त्रीन् पञ्च शतकर्मन्! । तथा कर्मार्हधननिमित्तम् त्वम् एतशस्य रथम् एतशम् चावः । त्वम् पुरः नव नवतिम् चापि अनाशयः । एतेषां रक्षणप्रकारमितरत्रौ वक्ष्यन्ति ऋषयः इति ॥ ६ ॥

मुद्गल० हे इन्द्र! त्वम् नर्यादीन् राज्ञः आविथ ररक्षिथ । तथा हे शतक्रतो! बहुविधकर्मन्! त्वम् वय्यम् वय्यकुलजम् तुर्वीतिम् तुर्वीतिनामानं राजानम् आविथेत्येव । अपि च त्वम् रथम्

१-१. नास्ति वि. २-२. इत्यपे कर्मणे स कृ; °ण्ये···र्थं इत्ये° वि. ३. °ध्वं चने निमित्ते वि. ४. नास्ति वि. ५. आरक्ष वि¹ºº एर्न. ६. नर्यादि धन° एर्न. ७. नर्व वि°. ८. नास्ति वि¹ एर्न. ९. °त्रो वि°. १० नास्ति मूको.

रंहणस्वभावमेतत्संज्ञम् ऋषिम् एतशम् एतत्संज्ञकम् धने धननिमित्ते सङ्ग्रामे कृत्ये कर्तव्ये सति आविथेति शेषः। तथा त्वम् शम्बरस्य नवतिम् नव नवोत्तरनवतिसंख्याकाः पुरः पुराणि दम्भयः व्यनीनशः ॥ ६ ॥

स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।
उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ॥ ७ ॥

सः । घ । राजा । सत्ऽपतिः । शूशुवत् । जनः । रातऽहव्यः । प्रति । यः । शासम् । इन्वति ।
उक्था । वा । यः । अभिऽगृणाति । राधसा । दानुः । अस्मै । उपरा । पिन्वते । दिवः ॥७॥

स्कन्द० सः राजा सत्पतिः सतां पालयिता शूशुवत्[1] सर्वाभिर्वृद्धिभिः वर्धते। जनः 'पञ्च जनाः' इति मनुष्यनामसु पाठान्मनुष्यनामैतत् (तु. निघ २,३)। अन्यो वा मनुष्यः। रातहव्यः दत्तहविष्कः। यः प्रति शासम् ईश्वरस्य जगतः [2]शासितृत्वाच्छास इन्द्रः[2] तं प्रति इन्वति[3] इन्वतिर्गतिकर्मा व्याप्तिकर्मा वाऽयम् (तु. निघ २, १४; १८)। गच्छति व्याप्नोति वा। य इन्द्रं दत्तेन हविषा उपसर्पति व्याप्नोति वेत्यर्थः। [4]उक्था वा[4] उक्थशब्दः स्तोत्रवचनः। तृतीया-बहुवचनस्यायमाकारः। स्तोत्रैः वा यः अभिगृणाति अभिष्टौति। न च शूशुवदेव केवलम्। किं तर्हि। राधसा दानुः अस्मै राधसा इतीत्थम्भूतलक्षणे[5] तृतीया। तृतीयानिर्देशाद्वा योग्यक्रिया-ध्याहारः। दानुरिति स्तनयित्नुलक्षणा माध्यमिका वागुच्यते। धनेन युक्तायासौ माध्यमिका वाक्। उपरा मेघनामैतत् (तु. निघ १, १०)। द्वितीयाबहुवचनस्यायमाकारः। मेघान् पिन्वते पिन्विः[6] सेचनार्थोऽन्तर्णीतण्यर्थश्च द्रष्टव्यः। सेचयति। प्रक्षालयतीत्यर्थः। दिवः द्युलोकात्। धनं चास्य भवति, [7]मेघाश्च गर्जन्तो वर्षन्तीत्यर्थः[7] ॥ ७ ॥

वेङ्कट० सः खलु जनः राजा सतां च पतिः वर्धते दत्तहविष्कः, यः शासितारमिन्द्रम् प्रति गच्छति प्रीणयति वा। [8]य वा[8] उक्थानि अभिवदति सह[9] हविषा[10], दाता अस्मै दिवः सकाशात् अभ्राणि दोग्धि ॥ ७ ॥

मुद्गल० सः घ स खलु जनः जातः राजा राजमानः सत्पतिः सतां पालयिता यजमानः शूशुवत् आत्मानं वर्धयति, यः इन्द्रम् प्रति रातहव्यः दत्तहविष्कः सन् शासम् इन्द्रकर्तृकमनु-शासनम् इन्वति व्याप्नोति। उक्था वा उक्थानि शस्त्राणि वा यः स्तोता राधसा हविर्लक्षणेन अन्नेन सह अभिगृणाति तस्याभिमुखीकरणाय[11] शंसति, अस्मै स्तोत्रे दानुः अभिमतफलप्रदातेन्द्रः उपरा उपरान् मेघान् दिवः सकाशात् पिन्वते सेचयति दोग्धीति यावत् ॥ ७ ॥

असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे ।
ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च ॥ ८ ॥

---

१. नास्ति अ.　२-२. °च्छास शासितुः अ.　३. नास्ति कु.　४-४. नास्ति कु ति.　५. °णे ना कु ति.　६. पिन्विः अ; पिपिः ति.　७-७. मेघागर्जन्तो वर्षन्ती° ति.　८-८. नास्ति कु.　९. सः ल लपे　१०. हविषां म° वि¹ ² ल लपं; हविषा यज्ञना वि³ अ².　११. °मुखे क° वि.

असमम् । क्षत्रम् । असमा । मनीषा । प्र । सोमऽपाः । अपसा । सन्तु । नेमे । ये । ते ।
इन्द्र । ददुषः । वर्धयन्ति । महि । क्षत्रम् । स्थविरम् । वृष्ण्यम् । च ॥ ८ ॥

स्कन्द० असमम्[1] अतुल्यमन्यैर्मनुष्यैः क्षत्रम् धनम् । असमा मनीषा प्रज्ञा च । प्र उपसर्गोऽयम् । उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः । प्रपचन्ति[2] प्रकरोतीति । यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधना तत्र क्रियामाहुः । अतोऽत्र शुद्धोऽपि प्रशब्दः प्रवृद्धशब्दार्थः । प्रवृद्धाश्च पुत्रादिभिः । सोमपाः सोमस्य पातारः । यष्टार इत्यर्थः । केन प्रवृद्धा उच्यते । अपसा यागकर्मणा । सन्तु भवन्तु । धनप्रज्ञे ममामतुल्ये स्ताम्, पुत्रादिभिश्च प्रवृद्धा यागेन यष्टारः सन्त्वित्यर्थः । किं सर्वे । न । किं तर्हि । नेमे अर्धाः । कतमे । उच्यते । ये ते हे इन्द्र ! ददुषः धनानि दत्तवतः[3] वर्धयन्ति महि क्षत्रम् हविराख्यं धनम् स्थविरम् वृष्ण्यम् च परिवृद्धं च । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अतोऽत्र बलवर्धनेन तत्कारणं[4] स्तुतिकरणं[5] प्रतिपाद्यते । ये तव धनदानोत्तरकाले हवींषि वर्धयन्ति स्तुतीश्च कुर्वन्तीत्यर्थः ॥ ८ ॥

वेङ्कट० असमम् बलम् । असमा प्रज्ञा । प्रभवन्तु सोमस्य पातारः कर्मणा । नेमशब्दोऽर्धवचनः । केचनेत्यर्थः । तानाह— ये[6] तव इन्द्र ! ददिवांसः वर्धयन्ति महत् बलं प्रवृद्धं पुंस्त्वं च ॥ ८ ॥

मुद्गल० इन्द्रस्य क्षत्रम् बलम् असमम् न केनचित्समम् । सर्वाधिकमित्यर्थः । तथा मनीषा बुद्धिश्च असमा न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । नेमे इति सर्वनामशब्दः एतच्छब्दसमानार्थः । नेमे सोमपाः एते सोमस्य पातारो यजमाना अपसा कर्मणा प्र सन्तु प्रवृद्धा भवन्तु । हे इन्द्र ! ते तव ददुषः हविर्दत्तवन्तः[7] ये त्वदीयम् महि महत् क्षत्रम् बलम् स्थविरम् स्थूलं प्रवृद्धम् वृष्ण्यम् वृषत्वं पुंस्त्वम् च वर्धयन्ति प्रवृद्धं कुर्वन्ति ॥ ८ ॥

तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः ।
व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व ॥ ९ ॥

तुभ्य॑ । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इन्द्रऽपानाः । वि । अश्नुहि । तर्पय । कामम् । एषाम् । अथ । मनः । वसुऽदेयाय । कृष्व ॥ ९ ॥

स्कन्द० तुभ्य इति तादर्थ्ये चतुर्थी । त्वदर्थं एते बहुलाः बहवः अद्रिदुग्धाः अभिषवग्रावभिः क्षारिताः चमूषदः अधिषवणफलके अत्र चमूशब्देनोच्येते । 'उच्छिष्टं चम्वोर्भर' (ऋ १ २८,९) इति यथा । तत्सादिनः । अधिषवणफलकयोरभिषुता इत्यर्थः । चमसाः 'तात्स्थ्यात् ताच्छब्द्यम्'[8] । चमसस्थाः । के ते । सामर्थ्यात् सोमाः । अथवा चम्यमानत्वाच्चमसाः सोमाः

1 असमम् धनम् भ 2 प्रपचन्ति कु भ 3 दत्तव- मूको 4 तत् कार॰ कु 5 °तिकरण॰ भ
6 ६ विद् दि॰ भ॰. 7 °वन्त मे॰ 8 ८ °स्थ्या (स्थ्या भ) ताच्छब्द्यं (शब्द्य ए कु) तद् मूको

पवोष्यन्ते । ते हे इन्द्र! पाना पानार्हा । सम्यक् संस्कृता इत्यर्थ । एतत् ज्ञात्वा वि अश्नुहि विविधमेतान्[1] आप्नुहि । पिबेत्यर्थ । मा चाल्पान् । किं तर्हि । तर्पय आत्मीयम् कामम् । एषाम् तृतीयार्थे षष्ठ्येषा, एतै । यावदिच्छम् एतान् पिबेत्यर्थ । पीत्वा च अथ अनन्तरम् आत्मीयम् मन वसुदेयाय धनदानाय । धनदानाभिमुखमित्यर्थ । कृष्व कृणुष्व । धन मह्य देहीत्यर्थ ॥ ९ ॥

वेङ्कट० तुभ्यम् एव एते बहव ग्रावदुग्धा चमससादिन सोमा इन्द्रस्य तव पानार्हा[2] । तानिमान् व्याप्नुहि । तर्पय आत्मीय कामम् एतै । अथ[3] आत्मन मन[4] वसुदानाय कुरु ॥ ९ ॥

मुद्गल० हे इन्द्र[1] तुभ्य इत् तुभ्यमेव एते चमसा[5] चम्यन्ते भक्ष्यन्ते इति[6] चमसा सोमा । एते सोमा त्वदर्थं सम्पादिता । कीदृशा । बहुला प्रभूता । अद्रिदुग्धा अद्रिभि ग्रावभि अभिषुता । चमूषद चमूषु चमसेषु अवस्थिता इन्द्रपाना इन्द्रस्य पानेन[7] सुखकरा । अत त्व तान् वि अश्नुहि व्याप्नुहि । व्याप्य च एषाम् त्वदीयानामिन्द्रियाणाम् कामम् अभिलाष तै तर्पय पूरयेति यावत् । अथ अनन्तरम् वसुदेयाय अस्मभ्यमभिमतधनप्रदानाय त्वदीयम् मन कृष्व कुरुष्व ॥ ९ ॥

अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः ।
अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥ १० ॥

अपाम् । अतिष्ठत् । धरुणऽह्वरम् । तमः । अन्तः । वृत्रस्य । जठरेषु । पर्वतः । अभि । ईम् । इन्द्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥ १० ॥

स्कन्द० अपाम् इति षष्ठीनिर्देशात् निरोधाय इति वाक्यशेष. । एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ[8] । यत् वृष्टिलक्षणानामपा निरोधाय अतिष्ठत् लडर्थे लङ् । तिष्ठति । धरुणह्वरम् 'धरुणम्' ( निघ १,१२ ) इति उदकनाम । ह्वृ कौटिल्येऽन्यत्र । इह तु सामर्थ्यात् निरोधसामर्थ्ये[9] । उदकस्य ह्वारकम् । निरोधसमर्थमित्यर्थ । [10]अथवा 'बभस्ति[†] ह्वरति' इत्यत्तिकर्मसु पाठात् ह्वरतिरिह भक्षणार्थे (तु निघ २,८ ) । उदकस्य भक्षयितृ । ‡स्वोदर प्रक्षेपकमित्यर्थ ‡[10] । किं तत् । उच्यते । मेघलक्षणम् तम । तस्य अन्त मध्ये वृत्रस्य मेघनामैतत् (तु निघ १,१० ) । मेघाख्यस्य तमस[11] अन्त । कुत्र[12] । उच्यते । जठरेषु जठरमुदरम् । एकवचनस्य स्थाने बहुवचनमेतत् । उदरे । पर्वत वज्र इह पर्ववत्त्वात् पर्वतशब्देनोच्यते । 'अभि नहि रक्षस पर्वतेन' ( ऋ ७ १०४, १९ ) इति यथा । साकाङ्क्षत्वात् चातिष्ठदिति पुनरेवाख्यातमनुषक्तव्यम् । अत्रापि वज्रोऽतिष्ठत् । वृष्टिनिरोधायावस्थितस्य मेघस्योदर इन्द्रो वज्र क्षिपतीत्यर्थ । [13]अभि ईम्[13] अभीत्युपसर्गो निघ्नते इत्याख्यातेन सम्बध्यते । ईम् एवमित्यस्यार्थे । एवम् इन्द्र नद्य शब्दकारिणीरप वव्रिणा

---

१ °मसानि मूको २ पाना वि° ३ नास्ति कु ४ नास्ति लप ५ च नाम° वि
६ नास्ति वि. ७ पाने मै° ८ °च्छब्दावनाध्या° ति ९ °सामर्थ्यात् अ १०-१० नास्ति अ कु.
† बभ्धा ति ‡-‡ सोदरे प्रक्षेपमि° ति ११ °स वन ति १२ क्व ति १३-१३ नास्ति अ.

आवरणशीलेन मेघेन हिता विश्वा सर्वा यह्वीर्वा अनुष्ठा अपामिदं विशेषणं द्वितीयाबहुवचनान्तम्। इन्द्रस्य वा प्रथमैकवचनान्तम्[1]। वृत्रादीनाम्[2] अनुष्ठातेरिव। अनुपरोधादानाम्[3] अनुष्ठातेन्द्र। प्रवणेषु निम्नेषु प्रदेशेषु[4] अभि निघ्नते, हन्तिरत्र गत्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः। छान्दसत्वाच्च एकवचनस्य स्थाने बहुवचनम्। अभिहन्ति अभिगमयति। पातयतीत्यर्थः। अथवा निघ्नत इति हन्तिर्वधार्थ एव। 'अधि सानौ नि निघ्नते' (ऋ १,८०,६) इति यथा। प्रवणेष्विति तु सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः। निम्नेषु मेघप्रदेशेषु स्थिता अप अभिनिघ्नते अभिहन्ति। पातयतीत्यर्थः ॥ १० ॥

वेङ्कट० अपाम् अतिष्ठत् धारकगह्वरयुक्तम् तमः। एतदेवाह[5]—वृत्रासुरस्य जठरेषु मेघोऽतिष्ठद् इति[6]। अभि निघ्नते एनम् पर्वत[7] वारकेण मेघेन निहिता विश्वा नद्यः अनुतिष्ठन्त्यः[8] प्रवणेषु इन्द्र। अभिनिघ्नते इति द्विकर्मको निक्षेपो[9] हन्तेरर्थः[10] ॥ १० ॥

मुद्गल० अपाम् वृष्ट्युदकानाम् धरुणह्वरम् धारानिरोधकम् तमः अन्धकारम् अतिष्ठत्। अयमेवार्थः स्पष्टीक्रियते—वृत्रस्य लोकत्रयस्यावरितुरसुरस्य जठरेषु उदरप्रदेशेषु अन्तः मध्ये पर्वतः पर्ववान् मेघोऽभूत्। अतः तमोरूपेण वृत्रेण[11] मेघस्यावृतत्वात् वृष्ट्युदकमप्यावृतमित्युच्यते। ईम् इमाः पूर्वोक्ता नद्यः नदीरपः वत्रिणा आवरकेण वृत्रेण हिता पिहिता विश्वाः व्यापिनीः अनुष्ठाः अनुक्रमेण तिष्ठन्तीरेवंविधा[12] अपः इन्द्रः प्रवणेषु निम्नेषु भूप्रदेशेषु अभि निघ्नते अभिगमयति ॥१०॥

स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम्।
रक्षा च नो मघोनः पाहि सूरीन् राये च नः स्वपत्या इषे धाः ॥ ११ ॥

सः। शेऽवृधम्। अधि। धाः। द्युम्नम्। अस्मे इति। महि। क्षत्रम्। जनाषाट्। इन्द्र। तव्यम्। रक्ष। च। नः। मघोनः। पाहि। सूरीन्। राये। च। नः। सुऽअपत्यै। इषे। धाः ॥

स्कन्द० यः उक्तगुणोऽसि सः शेवृधम् शेवशब्दस्य सुखनाम्नः अत्र वकारलोपो द्रष्टव्यः। शेवपर्यायो वा शेशब्दः। सुखस्य वर्धयितृ। अधि धाः अधिशब्दः 'अधिपरी अनर्थकौ' (पा १,४,९३) इति कर्मप्रवचनीयः[13] पदपूरणः। दधातिर्दानार्थः। देहि। द्युम्नम् अन्नम्। अथवा 'शवृधम्' (निघ ३,६) इति सुखनाम। सुखं च द्युम्नं च देहि। अस्मे अस्मभ्यम्। महि क्षत्रम् महच्च धनम् जनाषाट् शत्रुजनस्याभिभवितृ। हे इन्द्र। तव्यम् तवतेर्वृद्धिकर्मणस्तवो वृद्धिः। तस्य[14] निमित्तं तव्यम्। वृद्धिकरमित्यर्थः। रक्ष च नः अस्मान् मघोनः धनवतः। न च केवलानस्मान्। [14]किं तर्हि[14]। पाहि रक्ष। सूरीन् स्तोतृन् नः अस्माकं स्वभूतान्। राये च द्वितीयार्थे सर्वत्रात्र चतुर्थी। [15]धनं च[15]। स्वपत्यै इषे शोभनापत्ययुक्तं चान्नम् धाः देहि अस्मदीयेभ्यः स्तोतृभ्यः ॥ ११ ॥

वेङ्कट० सः सुखे वर्धमानं सुखकरम् अन्नम् अस्मासु आ धेहि। महच्च धनं जनस्याभिभवितृ

1 °धमादबुर° अ कु 2 वृत्रा° मूको 3 °नुपरोधा° मूको 4 भूप्रदे° वि 5 [illegible] वि[1] अ[2], [illegible] शब्देनदेवाह अ[1] वि[3][4] [illegible] 6 नास्ति वि[1] [illegible] 7 पर्वत [illegible] 8 °तिष्ठ° मूको 9 निक्षेपो वि[1] अ[2]. 10 हन्तेरिव अ[1] 11 नास्ति वि. 12 तिष्ठन्ति° वि 13 नास्ति अ 14 तस्मा वि. 15-15 नास्ति कु 16-16 नास्ति अ

वृद्धम्[१]। रक्ष च अस्मान् शत्रुभ्यो हविष्मत । पाहि स्तोतॄन्। 'धनाय शोभनापत्याय'[२] अन्नाय च अस्मान् कुर्विस्यन्न[३] पुन चाशास्ते ॥ ११ ॥

मुद्गल० हे इन्द्र! स त्वम् अस्मे अस्मासु द्युम्नम् यश अधि धा अधिनिधेहि । कीदृशम्। शंऽयम् श शमनम् । रोगाणा शमने सति यद्वर्धते तादृशम्। तथा महि महत् जनाषाट् शत्रुजना नामभिभवितृ तव्यम् प्रवृद्धम् क्षत्रम् बल च अधि धा इति शेष । किञ्च हे इन्द्र[१] न अस्मान् मघोन धनवत कृत्वा रक्ष पालय । सूरीन् विदुष अन्यानपि पाहि पालय। तथा राये धनाय न स्वपत्यै शोभनपुत्रयुक्ताय इषे अन्नाय च न अस्मान् धा धेहि स्थापय ॥ ११ ॥

इति प्रथमाष्टके चतुर्थाध्याये अष्टादशो वर्ग ।

[ ५५ ]

दिवश्चिदस्य वरिमा नि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति ।
भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥ १ ॥

दिव । चित् । अस्य । वरिमा । वि । पप्रथे । इन्द्रम् । न । मह्ना । पृथिवी । चन । प्रति ।
भीम । तुविष्मान् । चर्षणिऽभ्य । आऽतप । शिशीते । वज्रम् । तेजसे । न । वंसग ॥ १ ॥

स्कन्द० दिव चित्[१] चिच्छब्दोऽप्यर्थे । दिव इति षष्ठीनिर्देशात् सकाशादिति वाक्यशेष । द्युलोकस्यापि सकाशात्[२] अस्य इन्द्रस्य वरिमा उरुत्वम् वि पप्रथे विविधं प्रथितम् । 'इन्द्रम् प्रति न मह्ना'[३] महत्त्वेन पृथिवी चन चनशब्दोऽप्यर्थे । पृथिव्यपि । उभे अपि द्यावापृथिव्याविन्द्रान्महत्त्वेन न्यूनतरे इत्यर्थ । किञ्च भीम भयानक शत्रूणाम् तुविष्मान् तुविशब्दस्य बहुनाम्नोऽय सकार आगमो द्रष्टव्य । पर्यायान्तर वा। बहुभि बलैस्तद्वान्। चर्षणिभ्य षष्ठ्यर्थे एषा चतुर्थी। शत्रुभूताना मनुष्याणाम् आतप आतापयिता[४] सन्तापकर शिशीते निश्यति वज्रम् तेजसे तेजनाय। तीक्ष्णत्वायेत्यर्थ । हिंसावचनो वा सामर्थ्यात् तेजति । शत्रूणा हिंसनायेत्यर्थ । कथ पुन शिशीते । उच्यते । न वंसग वननीयगमनत्वाद्वंसगो वृषभ उच्यते। नशब्दश्च पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीय । वृषभ इव। यथा नदीकूलेऽन्यत्र वा वृषभोऽवस्किरमाण स्वशृङ्गे द्वे निश्येत् तद्वदित्यर्थ ॥ १ ॥

वेङ्कट० द्युलोकात् अपि इन्द्रस्य उरुत्व विस्तीर्णमासीत् । इन्द्रम् न महत्त्वेन[८] पृथिवी अपि प्रति भवति। भयङ्कर वृद्धिमान् मनुष्यरक्षार्थम् वज्रम्[९] तीक्ष्णीकरोति शत्रूणामातापयिता, यथा ऋषभ शृङ्गे तैक्ष्ण्यार्थं निश्यति ॥ १ ॥

मुद्गल० [१०]'दिवश्चिदस्य' इत्यष्टर्चं पञ्चमं सूक्तम् । सव्य ऋषि । जगती छन्द । इन्द्रो देवता[१०]।

अस्य इन्द्रस्य वरिमा उरुत्व प्राभवम्[११] दिव चित् द्युलोकादपि वि पप्रथ विस्तीर्णं बभूव।

---

१ नास्ति वि[१] लप　२ २ शोभनाश याय धनाय (°नाय च कु) मूको　३ कुर्व नि　४ चित् अस्य मूको　५ नास्ति मूको　६ ६ नास्ति अ　७ आत° अ　८ महत्त्वेन ल, त्वेऽपि वि[१]
९ वज्रम् वि[१]　१० नास्ति वि मै[२]　११ प्रभावम् मूको

पृथिवी चन पृथिव्यपि च महा महिम्ना महत्त्वेन इन्द्रम् न प्रति भवति। भूमिरपीन्द्रस्य प्रतिनिधिर्न भवति। ततोऽपि स गरीयानित्यर्थः। भीमः शत्रूणां भयङ्करः तुविष्मान् प्रज्ञावान् चर्षणिभ्यः मनुष्येभ्यः स्तोतृभ्यः तेषामर्थाय शत्रूणाम् आतपः आ समन्तात्तापकारी एवंविधः स इन्द्रः वज्रम् वर्जनशीलमायुधम् तनसे तैक्ष्ण्याय शिशीते तनूकरोति तीक्ष्णीकरोति। दृष्टान्तः। वंसगः न वननीयगतिमान् वृषभो यथा स्वशृङ्गे युद्धार्थं तीक्ष्णीकरोति तद्वत् ॥ १ ॥

सो अ॒र्ण॒वो न न॒द्यः॑ समु॒द्रियः॒ प्रति॑ गृभ्णाति॒ विश्रि॑ता॒ वरी॑मभिः ।
इन्द्रः॒ सोम॑स्य पी॒तये॑ वृषायते स॒नात् स यु॒ध्म ओज॑सा पनस्यते ॥ २ ॥

सः । अ॒र्ण॒वः । न । न॒द्यः॑ । स॒मु॒द्रियः॑ । प्रति॑ । गृ॒भ्णा॒ति॒ । विऽश्रि॑ताः । वरी॑मऽभिः । इन्द्रः॑ । सोम॑स्य । पी॒तये॑ । वृ॒ष॒ऽय॒ते॒ । स॒नात् । सः । यु॒ध्मः । ओज॑सा । प॒न॒स्य॒ते॒ ॥ २ ॥

स्कन्द० यः उक्तगुणः इन्द्रः सः अर्णवः न[1] नद्यः समुद्रियः अर्णवानुदकवानुच्यते। समुद्रिय इति घप्रत्ययः स्वार्थे द्रष्टव्यः। समुद्र एव समुद्रियः। यथोदकवान्[2] पार्थिवः समुद्रो नदीः तद्वत् प्रति गृभ्णाति। किम्। सामर्थ्यात् स्तुतीः। कीदृशीः। उच्यते। विश्रिताः विविधं श्रिताः। केन। वरीमभिः। प्रत्ययोऽत्र भावे इमनिन्[3] द्रष्टव्यः। वरणैः। विविधं वरणीया इत्यर्थः। किञ्च इन्द्रः सोमस्य पीतये वृषायते[4] सनात् चिरपर्यायोऽयम्। पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः। चिरात्प्रभृति। स इन्द्रः युध्मः योद्धा ओजसा स्वेनैव बलेन। परमनाधित्येत्यर्थः। पनस्यते स्तूयते च स्तोतृभिः ॥ २ ॥

वेङ्कट० स समुद्र इव समुद्रपत्नीः[5] नदीः प्रति गृह्णाति विविधं श्रिताः सेनाः उरुत्वैः। इन्द्रः सोमस्य पानाय वृष इवाचरति। चिरादेवारभ्य स योद्धा बलमहत्तया स्तोतृभिः स्तूयते[6] ॥ २ ॥

मुद्गल० स इन्द्रः समुद्रियः समुद्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षलोकः। तत्र भवः समुद्रियः। एवम्भूतः सन् वरीमभिः स्वकीयैः संवरणैः विश्रिताः व्याप्ताः नद्यः नद्यो शब्दकारिणीः वृत्रेण आवृताः[7] अपः अर्णवः न समुद्र इव प्रति गृभ्णाति। स्वीकृत्य वर्षयतीति भावः। स च इन्द्रः सोमस्य पीतये पानाय वृषायते वृष इवाचरति। हर्षयुक्तो वर्तत इत्यर्थः। तथा स इन्द्रः युध्मः योद्धा सनात् चिरादेव ओजसा बलकृतेन वृत्रवधादिरूपेण कर्मणा पनस्यते पनः स्तोत्रम् इच्छति ॥ २ ॥

त्वं तमि॑न्द्र॒ पर्व॑तं॒ न भोज॑से म॒हो नृ॒म्णस्य॒ धर्म॑णामिरज्यसि ।
प्र वी॒र्ये॑ण दे॒वताऽति॑ चेकिते॒ विश्व॑स्मा उ॒ग्रः कर्म॑णे पु॒रोहि॑तः ॥ ३ ॥

त्वम् । तम् । इ॒न्द्र॒ । पर्व॑तम् । न । भोज॑से । म॒हः । नृ॒म्णस्य॑ । धर्म॑णाम् । इ॒र॒ज्य॒सि॒ । प्र । वी॒र्ये॑ण । दे॒वता॑ । अति॑ । चे॒कि॒ते॒ । विश्व॑स्मै । उ॒ग्रः । कर्म॑णे । पु॒रःऽहि॑तः ॥ ३ ॥

---

१ मास्ति अ. २ °वान् वा ति. ३ मनिन् कु, मनिप् अ; मनि ति. ४ °तो वर्षि° [illegible] सोम पानार्थ [illegible] ति. ५ °पत्नीः° अ कु; °पत्नी° अ°; °इमाः°पत्नी वि°. ६ स्तूयते वि° अ°. ७ वृत्रा वृतो. ८ वर्षतीति वि.

**स्कन्द॰** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्य । य स्तोतार इच्छन्ति 'तम् त्वम्' हे इन्द्र[1] पर्वतम् मेघनामैतत् (तु निघ १,१०) । मेघम् । न शब्दस्तूपरिष्टादुपचारादुपमार्थे । उपमार्थत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग' (तु या ७,३१) इति पदपूरण । भोजसे भोजनाय । साकाङ्क्षत्वात् करोषीति वाक्यशेष । य स्तोतार इच्छन्ति त[2] मेघ वृष्टिप्रदानेन तेषा भोग्य करोषीत्यर्थ । अथवा पर्वत इह शिलोच्चय एवाभिप्रेत । उपमार्थीय एव च न शब्द । तमिति तु शत्रो मेघस्य वा प्रतिनिर्देश । य स्तोतार इच्छन्ति त शत्रु मेघ वा पर्वतमिव फलादिना तेषा भोग्य करोषीत्यर्थ । किञ्च मह महत नृम्णस्य बलस्य धर्मणाम् धारयितॄणा मरुत्प्रभृतीनाम् इरज्यसि ईशिषे त्वम् । परोक्षकृत परोऽर्धर्च । वीर्येण देवता इत्थम्भूतलक्षणतृतीयान्ते[3] एते । वीर्येण देवतात्वेन[4] च युक्त इन्द्र अति प्र चेकिते सुष्ठु प्रज्ञायते । वीर्यवान् देवश्च नेन्द्रसदृशोऽपरोऽस्तीत्येव सुष्ठु प्रज्ञायत इत्यर्थ । अथवा देवतेति प्रथमैवैषा । इन्द्राख्या देवता वीर्यवतीत्येव सुष्ठु प्रज्ञायत इत्यर्थ । किञ्च विश्वस्मै कर्मणे विश्वशब्द सर्वपर्यायो बहुनाम वा (तु निघ ३,१) । सर्वस्य बहुनो वा वृत्रवधादे कर्मणोऽर्थाय उग्र अप्रसह्य इन्द्र पुरोहित पुरो निहित अग्रत कृत । सर्वाणि बहूनि वा वृत्रवधादीनि कर्माणि कर्तुं[5] प्रधानीकृत इत्यर्थ । केन[6] । सामर्थ्यात् देवै ॥ ३ ॥

**वेङ्कट॰** त्वम् तम् इन्द्र! स्तोतार धनप्रदानेन मेघमिव मनुष्याणा भोगाय करोषि । त्वम् महत[7] धनस्य धारकाणा कर्मणाम् ईशिषे । सोऽयमिन्द्र 'देवतासु वीर्येण' अति प्र चेकिते । विश्वस्मै कर्मणे 'अयम् उद्गूर्णो' यजमानै पुरो निधीयते ॥ ३ ॥

**मुद्गल॰** हे[8] इन्द्र! त्वम् भोजसे भोजनाय पर्वतम् पर्ववन्तम् तम्[9] मेघम् न अकार्षी । [10]नहि हतो भुङ्क्ते[10] । इन्द्रो हि वर्षणार्थं मेघ वज्रेण हन्ति । तथा मह महत नृम्णस्य धनस्य धर्मणाम् धारयितॄणा कुबेरादीनाम् इरज्यसि ईशिषे । स इन्द्र देवता वीर्येण अति अतिशयित इति प्र चेकित प्रकर्षेणास्माभिर्ज्ञातो बभूव[11] । स च उग्र उद्गूर्ण इन्द्र विश्वस्मै सर्वस्मै वृत्रवधादिरूपाय कर्मणे देवै सर्वै पुरोहित पुरस्तादवस्थापित ॥ ३ ॥

स इद् वने॑ नम॒स्युभि॑र्वचस्यते॒ चारु॒ जने॑षु प्रब्रु॒वाण इ॑न्द्रि॒यम् ।
वृषा॒ छन्दु॑र्भवति हर्य॒तो वृषा॒ क्षेमे॑ण॒ धेना॑ म॒घवा॒ यदिन्व॑ति ॥ ४ ॥

स । इत् । वने॑ । न॒म॒स्युऽभि॑ । व॒च॒स्य॒ते । चारु॑ । जने॑षु । प्र॒ऽब्रु॒वा॒ण । इ॒न्द्रि॒यम् । वृषा॑ । छन्दु॑ । भ॒व॒ति॒ । ह॒र्य॒त । वृषा॑ । क्षेमे॑ण । धेना॑म् । म॒घऽवा॑ । यत् । इन्व॑ति ॥ ४ ॥

**स्कन्द॰** इत् शब्द एवार्थे । स एवेन्द्र वने वननीये यज्ञे नमस्युभि[12] पूजयितृभि वचस्यते स्तुत्यर्थोऽत्र द्रष्टव्य । स्तूयते चारु शोभनम् । जनेषु मनुष्येषु प्रब्रुवाण लुप्तोपममतद् द्रष्टव्यम् । तैस्तैर्वृत्रवधादिभि वीरकर्मभि प्रब्रुवन्निव इन्द्रियम् वीर्यमात्मीयम् । किञ्च वृषा वर्षणशी-

---

१ १ त्वं तं कु ति  २ नास्ति ति  ३ °भूते तृती° श  ४ देवत्वेन ति  ५ कर्तु अ कु
६ को भ  ७ अत रप  ८ ८ देवता सुरी° वि[2]  ९ ९ °उद्गूर्णो वि[1] अ[2], सुष्मद्गूर्णो वि[4]
१० नास्ति वि  ११ नास्ति वि मै[2],  १२-१२ नाङ्गुला भुङ्क्ते मूको  १३ नास्ति मै[2]  १४ नास्ति
ति

इन्द्र छन्दु छन्दतिरर्चतिकर्मा ( तु निघ ३,१४ )। स्तुत्य । अथवा 'मन्यते, छन्मत्, चाकनत्' ( निघ २,६ ) इति कान्तिकर्मसु पाठात्, 'तदिन्म छन्त्सद्वपुष'[१] ( ऋ १०,११,२ ) इति च प्रयोगदर्शनात् छन्दति कान्त्यर्थ । कामयिता हविषा स्तुतीना वा भवति । हर्यत वृषा[२] हर्यति कान्त्यर्थ ( तु निघ २,८ )। कामयमानस्य यजमानस्य वर्षिता भवति। वष्णा मर्याय वर्षतीत्यर्थ । कदा । [३]उच्यते। क्षेमेण[३] अविघ्नेन धेनाम्[४] धेट् पाने इत्यस्य धेना आहुतिरुच्यते स्तुतिर्वा । ताम् मघवा इन्द्र यत् यदा इन्वति व्याप्नोति । यदा इज्यते स्तूयते वेत्यर्थ ॥ ४ ॥

वेङ्कट० स एव अरण्ये नमस्युभि[५] स्तूयते जनपदेऽपि शोभनम् इन्द्रियम्[६] जनेषु प्रकुर्वाण [७]प्रकाशयन्निव । आप्नुवान[७] एव वर्षिता 'उपच्छन्दयिता भवति इच्छत, वर्षिता[८] क्षेम कुर्वन् यजमानानाम् मघवा यदा[८] स्तुतिवचन प्राप्नोति ॥ ४ ॥

मुद्गल० स इत् स एवेन्द्र वने अरण्ये नमस्युभि नमसा स्तोत्रेण पूजयितृभि ऋषिभि वचम्यत वच इच्छन् क्रियते । स्तूयत इत्यर्थ । स चेन्द्र आत्मीयेषु जनेषु इन्द्रियम् स्ववीर्यम् प्रकुर्वाण प्रकटयन् चारु वर्तत । किञ्च स वृषा कामाना वर्षक हर्यत प्रेप्सावत्त वियक्षत[१०] छन्दु उपच्छन्दयिता भवति । वियक्षताम् पुरुषाणा यागे रुचिमुत्पादयतीति भाव । वृषा हविषां वर्षयिता । हवि प्रदातेत्यर्थ । मघवा धनवान् एवम्भूतो यजमान क्षेमेण इन्द्रकृतेन रक्षणेन युक्त सन् यत् यदा धेनाम् स्तुतिलक्षणा वाचम् इन्वति प्रेरयति। तदानीं छन्दुर्भवतीति पूर्वेणान्वय ॥४॥

स इन्मुहानि समिथानि मुज्मना कृणोति युध्म ओजसा जनेभ्यः ।
अधा चुन श्रद् दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ॥ ५ ॥

स । इत् । महानि । सम्ऽइथानि । मज्मना । कृणोति । युध्म । ओजसा । जनेभ्य । अध ।
चन । श्रत् । दधति । त्विषिऽमते । इन्द्राय । वज्रम् । निऽघनिघ्नते । वधम् ॥ ५ ॥

स्कन्द० स इत् महानि[११] समिथानि 'समिथे' ( निघ २,१७ ) इति सङ्ग्रामनाम । [१२]"स एव"[१२] वृत्रादिभि सह महत सङ्ग्रामान्[१३] मज्मना बलेन सेनाख्येन कृणोति भूतेऽय लट् । कृतवान् । युध्म युद्धशील ओजसा स्वेन[१४] बलेन जनेभ्य मनुष्याणामर्थाय । अध चन अधशब्द एतस्मादित्य स्यार्थे द्रष्टव्य । चनशब्द एवार्थे। एतस्मादेव कारणात् श्रत् दधति सत्यतया प्रतिपद्यन्ते । त्विषीमते इन्द्राय षष्ठ्यर्थे[१५] चतुर्थ्येषा । दीप्तिमत इन्द्रस्य वज्रम् तृतीयार्थे द्वितीयैषा । वज्रेण निघनिघ्नते यङ्लुगन्तोऽयम् । अत्यर्थं निघ्नता वधम् हननार्हम् । यस्मात्[१६] मनुष्याणामर्थाय वृत्रादिभि सह महत सङ्ग्रामान कृतवान्। तस्मादन्यमपि[१७] वधार्हं वज्रेण निघ्नत इन्द्रस्य नि सशयमय हन्तीत्येव श्रद्दधतीति समस्तार्थ ॥ ५ ॥

---

१ °पुष पपुष° ति २ वा अ ३-३ नास्ति ति ४-४ नास्ति अ ५ नमस्यति वि[१] अ[१]. ६ °ई° वि[१] लप ७-७ °प्रकाशयन्निव आ° वि[१] अ[१], °प्रकाश° वि[१] लप, °क्षिप मु° कु ८-८ नास्ति वि[१] अ[१] ९ वहि वि[१] अ[१] म एव कु १० पचन मूको ११. °वानि स एव महानि वि १२-१२ नास्ति मूको. १३ सग्रामान् ति १४ नास्ति अ कु १५ पष्ठ्यर्थे ति १६ यस्मात् अ कु १७ °न्यमपि ति

वेङ्कट० सः [1]एव महतः सङ्ग्रामान् बलेन करोति योद्धा [†]बलेन जनार्थम्[1]। यदा अयं[1] शत्रुषु हन्तारम् वज्रम् निहन्ति अथास्मै, दीप्तिमते इन्द्राय श्रद्दधते[1] सत्यमसौ बलवानिति ॥ ५ ॥

मुद्गल० सः इत् स एव इन्द्रः युध्मः योद्धा महानि समिथानि महतः सङ्ग्रामान् मज्मना सर्वस्य शोधकेन ओजसा बलेन कृणोति करोति। किमर्थम्। जनेभ्यः स्तोतृजनार्थम्। यदा इन्द्रः वधम् हननसाधनम् वज्रम् आयुधं मेघेषु निघनिघ्नते निहन्ति, अध च अनन्तरमेव त्विषीमते दीप्तिमते इन्द्राय सर्वे जनाः श्रद्दधति 'श्रत्' (निघ ३,१०) इति सत्यनाम। इन्द्रो बलवानिति यदुच्यते तत् सत्यमिति सर्वे प्रतिपद्यन्ते ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये एकोनविंशो वर्गः ॥

स हि श्र॑व॒स्युः सद॑नानि कृ॒त्रिमा॑ क्ष्म॒या वृ॑धा॒न ओज॑सा वि॒ना॒शय॑न् ।
ज्योतीं॑षि कृ॒ण्वन्न॑वृ॒काणि॑ यज्य॒वेऽव॑ सु॒क्रतु॑ः सर्त॒वा अ॒पः सृ॑जत् ॥ ६ ॥

सः । हि । श्र॒व॒स्युः । सद॑नानि । कृ॒त्रिमा॑ । क्ष्म॒या । वृ॒धा॒नः । ओज॑सा । वि॒ऽना॒शय॑न् ।
ज्योतीं॑षि । कृ॒ण्वन् । अ॒वृ॒काणि॑ । यज्य॑वे । अव॑ । सु॒ऽक्रतु॑ः । सर्त॑वै । अ॒पः । सृ॒ज॒त् ॥ ६ ॥

स्कन्द० सः हि हिशब्दः पदपूरणः[2]। स इन्द्रः श्रवस्युः 'श्रव' (निघ २,७) इति अन्ननाम। तस्य हविर्लक्षणस्य कामयिता श्रवस्युः। हविरिच्छन्नित्यर्थः। क्ष्मया वृधानः 'क्ष्मा' (निघ १,१) इति पृथिवीनाम। पृथिरप्यन्तर्णीतण्यर्थः[3]। समस्तया पृथिव्या वर्ध्यमानः[4]। यावन्तः[7] केचन पृथिव्यां पदार्थाः तैः सर्वैः स्तुतिभिः हविर्भिश्च वर्ध्यमान[8] इत्यर्थः। दुर्भिक्षनिमित्तानां[9] रक्षःपिशाचादीनाम् सदनानि स्थानानि कृत्रिमा कृत्रिमाणि ओजसा बलेन विनाशयन् हेतावयं शतृप्रत्ययः। प्रयोजनस्य च हेतुत्वेन विवक्षा। दुर्भिक्षनिमित्तरक्षःपिशाचादिस्थानविनाशार्थ-मित्यर्थः[10]। ज्योतींषि च[11] ऐश्वर्यलक्षणानि कृण्वन् अयमपि पूर्ववद्धेतावेव शतृप्रत्ययः। ऐश्वर्याणि च कर्तुमित्यर्थः। कीदृशानि। अवृकाणि वृक वृक आदाने। आदानवर्जितानि। अनपहार्याणी-त्यर्थः। यज्यवे यष्टृणामर्थाय। यष्टॄन् च[12] अनपहार्यैरैश्वर्यैरीश्वरान् कर्तुमित्यर्थः। सुक्रतुः सुप्रज्ञः सुकर्मा वा। सर्तवै पृथिवीं प्रति गमनाय। वृष्टिलक्षणाः अपः अव सृजत् अधः क्षिपति पातयति। वर्षतीत्यर्थः ॥ ६ ॥

वेङ्कट० सः हि अन्नमिच्छन् असुरपुराणि कृत्रिमाणि ओजसा विनाशयन् भोगसाधनभूतया[13] पृथिव्या वर्धमानः ज्योतींषि कृण्वन् स्तेनवर्जितानि यजमानाय सुप्रज्ञः[14] अवसृजति[15] सरणाय उदकानि ॥ ६ ॥

मुद्गल० श्रवस्युः अन्नम् आत्मन इच्छन् कृत्रिमा कृत्रिमाणि "क्रियया निर्वृत्तानि" सदनानि असुरपुराणि ओजसा बलेन विनाशयन् क्ष्मया भूम्या समानम् वृधानः वर्धनशीलः शत्रूणामभिभविता

१. एव अस्मै महतस्संग्रामान् सेनाख्येन बलेन करोति रवेण बलेन जनार्थम् मनुष्याणामर्थाय वि[1] अ[1]. † नास्ति वि[1] लसं. २. नास्ति लसं. ३. श्रद्दते कु, श्रद्दधे वि[1] लसं. ४. पाद° वि. ५. °रप्यन्तर्णी° भ. ६. वर्धयमान मूको. ७. यावन्तः भ वि. ८. वर्धयमान कु वि; वर्धमान भ. ९. °निमित्तानां १०. °मित्यर्थः° कु भ. ११. नास्ति कु. १२. वा कु. १३. °भूतया° वि[1]. १४. नास्ति एं अ[1] कु. १५. °ति पृथिवी प्रति वि[1] अ[1]. १६-१६. अवसृजति° वि मं[1]; °सृजति° मं[1].

वशेनेत्यर्थः । ज्योतींषि सूर्यादीनि वृत्रेणावृतानि अगूढानि वृत्रेणावरकेण तेन रहितानि कुर्वन् कुर्वन् सुक्रतुः शोभनकर्मसहितः एवंविधः स हि सः खलु इन्द्रः यजध्यै यष्टुं यजमानाय तदर्थम् सर्तवै सरणाय अपः वृष्टिलक्षणानि उदकानि अव सृजत् वृष्टिं कृतवानित्यर्थः ॥ ६ ॥

दा॒नाय॒ मनः॑ सोमपाव॒न्नस्तु॑ ते॒ऽर्वाञ्चा॒ हरी॒ वन्द॑नश्रु॒दा कृ॑धि ।
यमि॑ष्ठासः॒ सार॑थयो॒ य इ॑न्द्र ते॒ न त्वा॒ केता॒ आ द॑म्नुवन्ति॒ भूर्ण॑यः ॥ ७ ॥

दा॒नाय॑ । मनः॑ । सो॒म॒ऽपा॒व॒न् । अ॒स्तु॒ । ते॒ । अ॒र्वाञ्चा॑ । हरी॒ इति॑ । व॒न्द॒न॒ऽश्रु॒त् । आ । कृ॒धि॒ ।
यमि॑ष्ठासः । सार॑थयः । ये । इ॒न्द्र॒ । ते॒ । न । त्वा॒ । केताः॑ । आ । द॒म्नु॒व॒न्ति॒ । भूर्ण॑यः ॥ ७ ॥

स्कन्द० दानाय अस्मान् प्रति दानाय मनः हे सोमपावन्[1] सोमानां पातः[1] अस्तु ते, अर्वाञ्चा अस्मदभिमुखौ च[2] हरी हे वन्दनश्रुत्[1] स्तुतीनां श्रोतः[1] आ कृधि करोतिरत्रान्तर्णीतण्यर्थः । मर्यादया कारय । केन । उच्यते । यमिष्ठासः अतिशयेन यन्तारः सारथयः ये[3] हे इन्द्र[1] ते तव स्वभूताः यच्छन्दश्शुवेस्तैरिति वाक्यशेषः । किं कारणम् । उच्यते । न यस्मात् न त्वाम् क्वा कित ज्ञाने । ज्ञातारोऽप्यसुरा आ दम्नुवन्ति वधकर्मायम् (द्र निघ २,१९) । हिंसन्ति । भूर्णयः भ्रमणशीलाः । यस्माज्जानन्तोऽप्यनवस्थायिनोऽपि च सन्तोऽसुरा न त्वामागच्छन्त[4] हिंसितुं शक्नुवन्ति, तस्मादागमनार्थमर्वाञ्चौ हरी कारयेत्यर्थः ॥ ७ ॥

वेङ्कट० दानाय मनः सोमस्य पातः[1] अस्तु तव । अस्मदभिमुखौ अश्वौ स्तुतीनां श्रोतः[1] आकुरुष्व । यमयितारः सारथयः ये भवन्ति इन्द्र! त्वदीयाः । न त्वां[5] शत्रूणाम् अभिमननानि[6] भ्रमणशीलानि "आ दम्नुवन्ति" ॥ ७ ॥

मुद्गल० हे सोमपावन्! सोमस्य पातः! इन्द्र! ते त्वदीयम् मनः दानाय अस्मदभिमतफलप्रदानाय अस्तु भवतु । हे वन्दनश्रुत्! वन्दनानां स्तुतीनां श्रोतः! हरी त्वदीयावश्वौ अर्वाञ्चा अस्मदभिमुखौ आ कृधि आभिमुख्येन कुरु । हे इन्द्र! ते तव स्वभूताः ये सारथयः सन्ति ते यमिष्ठासः अतिशयेन यन्तारः । अश्वनियमनकुशला इत्यर्थः । यस्मादेव तस्मात् केताः प्रातिकूल्यज्ञातारः भूर्णयः स्वकीयायुधादीनां भर्तारः त्वा त्वाम् न आ दम्नुवन्ति न हिंसन्ति ॥ ७ ॥

अप्र॑क्षितं॒ वसु॑ बिभर्षि॒ हस्त॑यो॒रषा॑ळ्हं॒ सह॑स्त॒न्वि॑ श्रु॒तो द॑धे ।
आवृ॑तासो॒ऽव॒तासो॒ न क॒र्तृभि॑स्त॒नूषु॑ ते॒ क्रत॑व इन्द्र॒ भूर॑यः ॥ ८ ॥

अप्र॑ऽक्षितम् । वसु॑ । बि॒भ॒र्षि॒ । हस्त॑योः । अषा॑ळ्हम् । सहः॑ । त॒न्वि॑ । श्रु॒तः । द॒धे॒ । आऽवृ॑तासः । अ॒व॒तासः॑ । न । क॒र्तृऽभिः॑ । त॒नूषु॑ । ते॒ । क्रत॑वः । इ॒न्द्र॒ । भूर॑यः ॥ ८ ॥

स्कन्द० अप्रक्षितम् अप्रक्षीणम् वसु बिभर्षि धारयसि हस्तयोः । अक्षय धन तवास्तीत्यर्थः । अषाळ्हम्

---

[1] नास्ति वि मं[1] [2] नास्ति कु ति [3] ३ ये सारथय क [4] "गच्छ" कु [5] त्वा वि मं [6] अभिमननानि वि [7] ७. अभिमननानि दर्भ

सहः अनभिभूतं च बलम् तन्वि स्वशरीरे श्रुतः विख्यात.[1] त्वम् दधे व्यत्ययेनाप्रमुत्तमपुरुषः। धारयसि । स्वशरीरेण धानभिभूतपूर्वबलयुक्तोऽसीत्यर्थः[1]। किञ्च आवृतासः परिवृताः। के। सामर्थ्यात् त्वदर्थाः सोमाः । कथम् । अवतासः न कूपा इव उदकार्थिभिः। केन परिवृता। उच्यते। कर्तृभि. ऋत्विग्भिः । त्वदर्थान् संस्कुर्वान् सोमान् परिवृता ऋत्विजः त्वत्प्रतीक्षा आसते इत्यर्थः। किञ्च तनूषु व्यत्ययेनेदं बहुवचनम्। शरीरे ते तव क्रतवः प्रज्ञाः कर्माणि वा हे इन्द्र! भूरय बहवः। स्वशरीरेण च त्वं बहुप्रज्ञो बहुवृत्रवधादिकर्मयुक्तो वेत्यर्थः॥ ८॥

वेङ्कट० अप्रक्षीणम् धनम् बिभर्षि हस्तयोः। अनभिभूतम्[1] बलम् शरीरे विश्रुतः इन्द्र. धारयति। यथा उदकोद्धरणपरैः कूपाः परिवृता[4] भवन्ति एवं तव अङ्गेषु तानि तानि बहूनि [5]कर्माणि परिवृतानि[5]। अत्र ताण्ड्यकम्[6]—'इन्द्रं सर्वाणि भूतान्यस्तुवन्[7] तस्यर्थ्यं[8] एकमङ्गमस्तुतमचायत' (तांब्रा ५, ४,१४) इति॥ ८॥

मुद्गल० हे इन्द्र! त्वम् अप्रक्षिनम् प्रक्षपरहितम् वसु धनम् हस्तयोः बिभर्षि स्तोतृभ्यो दातुं धारयसि। तथा श्रुतः प्रख्यातो भवान् तन्वि आत्मीये शरीरे अषाळ्हम् शत्रुभिरनभिभूतम् सहः बलम् दधे धारयति। त्वदीयास्तनवः[9] कर्तृभिः वृत्रादेरसुरस्य वधं कुर्वद्भिः बलकृतैः कर्मभिः आवृतासः आवृताः। बलकृतानि सर्वाणि कर्माण्येतस्य शरीरमावृत्यावतिष्ठन्ते। दृष्टान्तः। अवतासः न 'अवत.' (निघ ३,२३) इति कूपनाम। यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणिभिरावियन्ते तद्वत्। यस्मादेवं तस्मात् हे इन्द्र! ते तव तनूषु शरीरेषु क्रतव· कर्माणि भूरयः बहूनि विद्यन्ते॥ ८॥

इति प्रथमाष्टके चतुर्थाध्याये विंशो वर्गः॥

## [ ५६ ]

एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः।
दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम्॥ १॥

एषः। प्र। पूर्वीः। अव। तस्य। चम्रिषः।अत्यः। न। योषाम्। उत्। अयंस्त। भुर्वणिः।
दक्षम्। महे। पाययते। हिरण्ययम्। रथम्। आऽवृत्य। हरिऽयोगम्। ऋभ्वसम्॥ १॥

स्कन्द० एष प्र तच्छब्दश्रुतेर्यच्छब्दमध्याहृत्यैषशब्दो द्वितीये पादे योजयितव्य.। प्रशब्दस्तूपसर्गः पाययते[10] इत्याख्यातेन [11]सम्बन्धयितव्यः। अव इत्युपसर्गं उदयस्त इत्याख्यातेन सम्बन्धयितव्य। य एष इन्द्रः अत्य.न योषाम् 'अत्यः' (निघ १.१४) इत्यश्वनाम। योषा स्त्री। यथाऽश्वो मैथुनकाले वडवां स्त्रियं तद्वत्। अव उत् अयंस्त अवदित्येव नीत्येतस्य स्थाने। अत्रान्ययेन अधो नियच्छत्यारमन·। किम्। अनिर्देशात् इत्थं जगत्। भुर्वणिः भुर्वतेरत्तिकर्मण † इदं रूपम्। सोमभक्षणशील·‡। पूर्वी. पूर्वीः चम्रिषः चम्यन्ते ताःS इति चम्रिष.[11]

1. °ख्यात अ. 2. धानुभू° अ. 3. अमभि (१°नि) भू° वि॰ अ॰. 4. °वृता एव वि॰. 5-5. नास्ति वि॰ एवं. 6. ताण्ड्यम् वि[11] एवं कु अ[11]. 7. नास्ति ए. 8. तस्य कु ए वि[11] अ॰ लं. 9. °स्तनवः मूको. 10. पाययितव्य अ. 11-11. नास्ति लि. † भुवो° अ ‡ °शीलाः मूको. S नास्ति मु.

¹सोमाः‡ इहाभिप्रेताः । पूर्वस्मिंस्तावत्काले ये सोमाः ते तस्येत्यर्थः । न च केवलाः । किं तर्हि । इदानीमपि दक्षम् दक्षशब्द इहात्मवचनः । 'श्रेयांसं दक्षं मनसा जगृभ्यात्' (ऋ १०, ३१,२) इति यथा । आत्मानम् मंहे महते । कस्मै । सामर्थ्यात् सद्मामाय पाययते हिरण्ययम् हिरण्मयसदृशं सोमम् । किं‡ पुनः सोमहिरण्मययोः सादृश्यम्§ । उज्ज्वलत्वं प्रियता वा¹ ...... ॥१॥

वेङ्कट० अयम् तस्य यजमानस्य प्रोयच्छति² अवस्थितानि चमसादिषु³ बहूनि अन्नानि⁴ । अथ यथा अश्वां मैथुनायाधःस्थितां वडवां⁵ परिगृह्योपयच्छति । भुर्वणिः भर्ता⁶ भुर्वं(?)तिकर्मणः⁷ प्रवृद्धं सोममात्मानम् पाययते महते वृत्रहननकर्मणे हिरण्मयम् रथम् आवृत्य⁸ हरिभ्यां युक्तं दीप्तम् ॥ १ ॥

मुद्गल० ⁹"एष प्र पूर्वीः' इति षडृचं षष्ठं सूक्तम् । सव्य ऋषिः । जगती छन्दः । इन्द्रो देवता⁹ ॥

भुर्वणिः भर्ता एषः इन्द्रः तस्य यजमानस्य पूर्वीः प्रभूताः चम्रिषः चमूषु चमसेष्ववस्थिता¹ सोमलक्षणा इषः प्र अव उत् अयंस्त प्रकर्षेण पानार्थमुद्धरति । दृष्टान्तः । अत्यः न योषाम् यथा ऽश्वो वडवां क्रीडार्थमुपयच्छति । स चेन्द्रः हिरण्ययम् सुवर्णमयम् हरियोगम् अश्वाभ्यां युक्तम् ऋभ्वसम् उरुभासमानम् रथम् आतृय अवस्थाप्य मंहे महते वृत्रवधादिरूपाय कर्मणे दक्षम् प्रवृद्धम् आत्मानं सोमम् पाययते पानं कारयति ॥ १ ॥

तं गूर्तयो॑ नेमन्निषः॒ परी॑णसः समु॒द्रं न सं॒चर॑णे सनि॒ष्यवः॑ ।
पतिं॒ दक्ष॑स्य वि॒दथ॑स्य॒ नू सहो॑ गि॒रिं न वे॒ना अधि॑ रोह॒ तेज॑सा ॥ २ ॥

तम् । गू॒र्तयः॑ । ने॒मन्ऽइ॑षः । परी॑णसः । स॒मु॒द्रम् । न । स॒म्ऽचर॑णे । स॒नि॒ष्यवः॑ । पति॑म् । दक्ष॑स्य । वि॒दथ॑स्य । नु । सहः॑ । गि॒रिम् । न । वे॒नाः । अधि॑ । रो॒ह॒ । तेज॑सा ॥ २ ॥

स्कन्द० ...... ॥ २ ॥

वेङ्कट० तम् त्वाम् उद्युक्ताः गमनमिच्छन्तो ¹⁰मनुष्याः सश्रद्धाः प्रतीक्षन्ते, समुद्रम् इव सञ्चरणकाले द्वीपान्तराद्धनमिच्छन्तो वणिजः पतिम् बलस्य यज्ञस्य च । †क्षिप्रं बलं† त्वमिन्द्र !¶ गिरिम् इव §कान्तः सिंहः तेजसा युक्तः§¹⁰ अधि तिष्ठ ॥ २ ॥

मुद्गल० गूर्तयः स्तोतारः नेमन्निषः नमस्कारपूर्वं गच्छन्तः परीणसः परितो व्याप्नुवन्तः, एवंगुणविशिष्टास्ते यजमानाः तम् इन्द्रम् स्तुतिभिः अधिरोहन्ति । स्तुवन्ति इत्यर्थः । दृष्टान्तः । सनिष्यवः सनिं धनम् आत्मन इच्छन्तो वणिजो धनार्थम् सञ्चरणे सञ्चारे निमित्तभूते सति समुद्रम् न यथा नावा समुद्रमधिरोहन्ति एवं स्तोतारोऽपि स्वाभिमतधनलाभाय¹² इन्द्रं स्तुवन्तीति भावः । हे स्तोतः ! त्वं च दक्षस्य प्रवृद्धस्य ¹³विदथस्य यज्ञस्य पतिम् पालयितारम् सहः सहस्वन्तं बलवन्तमिन्द्रम् तेजसा देवताप्रकाशकेन¹³ स्तोत्रेण नु क्षिप्रम् अधि रोह

1-1 नास्ति ति. † सोमाः म. ‡ किन्तु भ. § सामर्थ्यात् भ. २. प्रोयच्छच° वि² ह्रौ ३. चमसादीनि मूको. ४. °आनि च वि¹ अ³. ५. ईर्ष्ण कु. ६. भर्ता च वि³. ७. पर्वतैरतिक° वि¹; मंत्रैरे° कु अ¹. ८. प्रविष्टे वि¹ अ¹. ९. °इत्य परस्य वि¹ अ¹. १०-१०. नास्ति वि मै¹. ११-११. नास्ति ऐप. †-† °तं बल वि¹. ¶ त्वम् वि¹ अ¹. §-§ कान्ताः सत्यतेजसा युक्ता: ल कोष°. १२. °धनलाभा° वि मै¹. १३-१३. नास्ति मूको.

स्तुहीति यावत्। दृष्टान्तः। वेनाः कान्ताः स्त्रियः गिरिम् न यथा पर्वतं स्वाभिमत-पुष्पोपचयार्थम् अधिरोहन्ति ॥ २ ॥

स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥ ३ ॥

सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः । येन । शुष्णम् । मायिनम् । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ॥ ३ ॥

स्कन्द० ... ... ... ... ... ॥ ३ ॥

वेङ्कट० सः क्षिप्रः[1] महान् च । तस्य वीरकर्मणि रेणुवर्जितं शुद्धं बलं शिलोच्चयस्य सानुः इव पृथग्भूतं विस्पष्टं राजते । शत्रूणां हिंसया[2] बलं प्रकाशं भवति । येन शवसा शुष्णम् असुरम् मायाविनम् दृढशरीर इन्द्रः सोममदे दुर्धरः आत्मीयप्रदेशेषु कारागृहे निगडे[3] अत्यन्तम् आरमयत्[4] ॥ ३ ॥

मुद्गल० सः इन्द्रः तुर्वणिः शत्रूणां हिंसिता महान् प्रवृद्धश्च[5] भवति । तस्येन्द्रस्य शवः बलम् पौंस्ये वीरैः पुरुषैः कर्तव्ये सङ्ग्रामे अरेणु अनवद्यम् तुजा[6] शत्रूणां हिंसकं सत् भ्राजते दीप्यते। दृष्टान्तः। गिरेः पर्वतस्य भृष्टिः न शृङ्गमिव। तद्यथा उन्नतं सत् दीप्यते तद्वत् आयसः अयोमयकवचयुक्तदेहः दुध्रः दुष्टानां शत्रूणां धर्ता अवस्थापयिता एवंभूत इन्द्रः मदे सोम-पानेन हर्षे सति येन बलेन शुष्णम् सर्वस्य शोषकमसुरम् मायिनम् मायाविनम् आभूषु कारा-गृहेषु दामनि बन्धके निगडे नि रमयत् न्यवासयत्। तद्बलमिति पूर्वेणान्वयः ॥ ३ ॥

देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः ।
यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥ ४ ॥

देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इन्द्रम् । सिसक्ति । उषसम् । न । सूर्यः । यः । धृष्णुना । शवसा । बाधते । तमः । इयर्ति । रेणुम् । बृहत् । अर्हरिऽस्वनिः ॥ ४ ॥

स्कन्द० ... ... ... ... ... ॥ ४ ॥

वेङ्कट० देवम्[7] यदि बलं त्वां वर्धयत्[8] तव रक्षणार्थम् इन्द्रम् सेवते उषसम् इव सूर्यः। यः इन्द्रः धृष्णुना बलेन[9] सङ्ग्रामस्थम् तमः बाधते स[10] इन्द्रः स्तोतः! स्वदर्पे[11] सङ्ग्राम-मागत्य महत् रेणुम् उत्थापयति शत्रूणां हरणशीलस्तनः ॥ ४ ॥

मुद्गल० यः इन्द्रः धृष्णुना धर्षकेण शवसा बलेन तमः तमोरूपं वृत्रादिमसुरम् बाधते हिनस्ति

1. क्षिप्रः वि[1]. 2. हिंसा[°] वि[11] लपं. 3. °गडे कु ल. 4. °मयद् वि[11] छ कु. 5. प्रवृद्धम् मे[1]. 6. नास्ति वि. 7. देवं कु. 8. °यन् कु. 9. नास्ति वि[1] भ[1]. 10. नास्ति वि[1] लपं. 11. तदर्पं वि[1] अ[1].

ऊतये रक्षणाय न्वावृता त्वया स्तोत्रा वर्धित तम् इन्द्रम् देवी तविषी द्योतमान त्वम् याद यदा सिषक्ति समवैति। सूर्य उपसम् न यथा उषोदेवता सेवते। नित्य तत्सम्बद्धो भवतीत्यर्थ । तदानीम् अर्हरिष्वणि गच्छन्तो हरन्तीति अर्हरय शत्रव तेषा न्यग्भावकार नेन स्तनयिता शब्दयिता इन्द्र॰ रेणुम् रेपण हिंसनम् बृहत् प्रभूतम् इयर्ति शत्रून् गमयति ॥ ४ ॥

वि यत् तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याहन् वृत्रं निरपामौब्जो अर्णवम् ॥ ५ ॥

वि । यत् । तिरः । धरुणम् । अच्युतम् । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा । स्वःऽमीळ्हे । यत् । मदे । इन्द्र । हर्ष्या । अहन् । वृत्रम् । निः । अपाम् । औब्जः । अर्णवम् ॥

स्कन्द॰ .. ॥ ५ ॥

वेङ्कट॰ वृत्र हत्वाऽपोऽवासृज[1] इति समुदायार्थ । यदा[2] त्वम् [3]तिर भूत्वा[3] जगत धारकम्[4] अक्षीणम् उदकम् अन्तरिक्षात् दिक्षु विविध स्थापितवानसि परिवर्हणया मेघस्य। यदा च उदकार्थे[6] सङ्ग्रामे सोमस्य मदे सति हृष्टया बुद्धया वृत्रम् असुर हतवानसि। तदा त्वम् इन्द्र[10] अपाम् पूर्णम् अर्णव 'मेघमध स्थित' रश्मिभि हतवानसि। अर्ण (निघ १,१२) इत्युदकनाम। तदस्यास्तीति[7] सोऽर्णव इति ॥ ५ ॥

मुद्गल॰ यत् यदा तिर वृत्रेण तिरोहितम् धरुणम् सर्वस्य प्राणिजातस्य धारकम् अच्युतम् विनाशरहितम् रज उदकम् दिव द्युलोकात् आतासु विस्तृतासु दिक्षु हे इन्द्र! बर्हणा हन्त्वा त्वम् वि अतिष्ठिप विविध स्थापयाञ्चकृषे। तथा यत् यदा स्वर्मीळ्हे स्व सुष्ठु गत त्य मीळ्ह धन यस्मिन् तस्मिन् सङ्ग्रामे मदे तव सोमपानेन हर्षे सति हर्ष्या हृष्टया शक्त्या वृत्रम् आवारकमसुरम्[10] अहन् त्वम् अवधी । तदानीम् अपाम् पूर्णम् अर्णवम् मेघम् नि औब्ज वर्षणाभिमुखम्[11] अधोमुखम् अकार्षी । वृष्टेरावारक वृत्रं हत्वा वृष्टिनदेन भूमिं न्यसैक्षीरिति तात्पर्यार्थ ॥ ५ ॥

त्वं दिवो धरुणं धिष ओजसा पृथिव्या इन्द्र सदनेषु माहिनः ।
त्वं सुतस्य मदे अरिणा अपो वि वृत्रस्य समया पाष्यारुजः ॥ ६ ॥

त्वम् । दिवः । धरुणम् । धिषे । ओजसा । पृथिव्याः । इन्द्र । सदनेषु । माहिनः । त्वम् । सुतस्य । मदे । अरिणाः । अपः । वि । वृत्रस्य । समया । पाष्या । अरुजः ॥ ६ ॥

स्कन्द॰ . .. ... ॥ ६ ॥

---

१ °मपो वि २ °वद् कु ३ यदा कु ४-४ मन्तरिक्षे भू° कु, तरिते भूर वि° हरा ५ धारम् वि° अ° ६ °दार्थे° वि° अ° ७ मासि कु ए ८-८ °मपि स्थि° वि° अ°, °थ विरन्द वि° ९ °मर्णस वि° अ°, १०-१० नास्ति वि अ°

वेङ्कट० त्वम् दिवः उदकं प्रयच्छसि बलेन पृथिव्याः इन्द्र। तेषुतेषु स्थानेषु[1] महान्। त्वम् सोमस्य मदे गमयसि[2] अपः। तथा त्वम् वृत्रशरीरेण तुल्यया शिलया वृत्रम् [3]वि अरुजः[3] हिंसार्थयोगे कर्मणि षष्ठी[4] दृष्टेति[5] स्तुतिमात्रम्। एषं[6] भवति सूक्तेनाशीः[7] ॥ ६ ॥

मुद्गल० हे इन्द्र! माहिनः प्रवृद्धः त्वम् दिवः द्युलोकात् पृथिव्याः सदनेषु प्रदेशेषु ओजसा बलेन धरुणम् सर्वस्य जगतो धारकं वृष्टिजलम् धिषे दधिषे स्थापयसि। यस्मात् त्वम् सुतस्य सोमस्य पानेन मदे हर्षे सति अपः जलानि[8] अरिणाः मेघात् निरगमयः, वृत्रस्य आवरकं वृत्रं च समया वृष्ट्या[9] पाष्या शिलया वि अरुजः विशेषेणाऽभाङ्क्षीः ॥ ६ ॥

इति प्रथमाष्टके चतुर्थाध्याये एकविंशो वर्गः।

[ ५७ ]

प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे।
अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ॥ १ ॥

प्र। मंहिष्ठाय। बृहते। बृहत्ऽरये। सत्यऽशुष्माय। तवसे। मतिम्। भरे। अपाम्ऽइव। प्रवणे। यस्य। दुःऽधरम्। राधः। विश्वऽआयु। शवसे। अपऽवृतम् ॥ १ ॥

स्कन्द० ... ... ... ... ... ॥ १ ॥

वेङ्कट० दातृतमाय महते महाधनाय सत्यबलाय वृद्धाय स्तुतिं प्र भरामि। येन स्तोतॄणां प्रदीयमानं धनं स्तोतृभिः दुर्धरम् भवति, अपामिव वेग[10] प्रवणाभिमुखः। सर्वगामि धनं स्तोतॄणां बलाय विवृतद्वारम् ॥ १ ॥

मुद्गल० [11]'प्र मंहिष्ठाय' इति षडृचं सप्तमं सूक्तम्। सव्य ऋषिः। जगती छन्दः। इन्द्रो देवता[11] ॥

मंहिष्ठाय दातृतमाय बृहते गुणैर्महते बृहद्रये महाधनाय सत्यशुष्माय अवितथबलाय तवसे आकारतः प्रवृद्धाय एवंगुणविशिष्टेन्द्राय मतिम् मननीयां स्तुतिम् प्र भरे प्रकर्षेण सम्पादयामि। यस्य इन्द्रस्य बलम् दुर्धरम् अन्यैर्धर्तुमशक्यम्। दृष्टान्तः। प्रवणे निम्नप्रदेशे अपामिव यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत्। तथा राधः धनम् विश्वायु सर्वेषु व्याप्तम् शवसे स्तोतॄणां बलाय येन इन्द्रेण अपावृतम् अपगतावरणं क्रियते। तस्येन्द्रस्येति पूर्वेण सम्बन्धः ॥ १ ॥

अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः।
यत् पर्वते न समशीत हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ॥ २ ॥

---

१. नास्ति वि[1] अ[1].　२. गमयसि कु.　३-३. व्यरुज[0] ल वि[1] अ[1,2].　४. षष्ठ्यो[1] वि[1] अ[1]　५. दृष्टेति वि[1].　६. एव म[1] कु वि[1,2] ल एवं.　७. [0]नाशीभिः वि[1].　८. जलानि मूको.　९. वृष्ट्या मूको ला.　१०. [0]गम ल.　११-११. नास्ति वि मे[1].

अर्ध । ते । विश्र्वम् । अनु । ह । असत् । इष्टये । आपः । निम्नाऽइव । सवना । हविष्मतः । यत् । पर्वते । न । सम्ऽअशीत । हर्यतः । इन्द्रस्य । वज्रः । श्नथिता । हिरण्ययः ॥ २ ॥

स्कन्द० ॥ २ ॥

वेङ्कट० 'सर्वमिद जगदनन्तरमेव'[1] क्रमेण तव यागाय अभवत् । तथा यजमानस्य सवनानि च त्वामेव आपः निम्नानि इव अभिगच्छन्ति । यदा[2] इन्द्रस्य विदारणस्य कर्ता हिरण्मय वज्रः शिलोच्चये न समशीत सहावस्थान[3] नाकरोत् । भित्त्वा निर्गत इत्यर्थः । प्रेप्साकर्मा हर्यतिः ( द्र या ७,१७ ) । कामयमानस्य शिलोच्चयभेदमिति[4] ॥ २ ॥

मुद्गल० अध ह अनन्तरमेव हे इन्द्र ! विश्वम् सर्वमिद जगत् ते तव सम्बन्धिने इष्टये यागाय अनु असत् अन्वभवत् । हविष्मत यजमानस्य सवना सवनानि यज्ञजातानि निम्नेव निम्नानि भूस्थलानि आपः इव त्वा सभजन्ते इति शेष । हर्यत शत्रुवध प्रेप्सत इन्द्रस्य हिरण्यय हिरण्मय श्नथिता शत्रूणा हिंसनशील वज्र पर्वते पर्ववति शिलोच्चये यत् यदा न समशीत ससुप्तो नाभवत्, किन्तु जागरित सन् अवधीदित्यर्थ । यदा इन्द्रेण प्रेरितो वज्र अप्रतिहत सन् वृत्रमवधीत् तदाप्रभृत्येव त सर्वे यजमाना प्रावर्तिषतेति भाव ॥ २ ॥

अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।
यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ॥ ३ ॥

अस्मै । भीमाय । नमसा । सम् । अध्वरे । उषः । न । शुभ्रे । आ । भर । पनीयसे । यस्य । धाम । श्रवसे । नाम । इन्द्रियम् । ज्योतिः । अकारि । हरितः । न । अयसे ॥ ३ ॥

स्कन्द० ॥ ३ ॥

वेङ्कट० उषः ! शुभ्रे ![5] अस्मै भीमाय इन्द्राय अस्मात् यज्ञे अन्नेन संसृज[6] स्तुत्या सखी स्तुत्यतमाय । सम्प्रत्यर्थीयो नकार । यस्य इन्द्रस्य शरीरम् नाम च श्रवणाय अकारि, बल च[7] ज्योतिः च कृत गमनाय, यथा अश्वा गच्छन्ति तद्वदिति ॥ ३ ॥

मुद्गल० हे उषः ! उषोदेवते ! शुभ्रे ! शोभने ! त्वम् भीमाय शत्रूणा भयङ्कराय पनीयसे अतिशयेन स्तोतव्याय अस्मै इन्द्राय अध्वरे हिंसारहितेऽस्मिन् यागे न सम्प्रत्यर्थे । सम्प्रति इदानीम् नमसा नम हविर्लक्षणमन्नम् सम् आ भर सम्यक् सम्पादय । धाम सर्वस्य धारकम् नाम स्तोतॄणु नमनशीलम् इन्द्रियम् इन्द्रत्वस्य परमैश्वर्यस्य लिङ्गं यस्य इन्द्रस्य एवंविधम् ज्योतिः श्रवसे अन्नाय हविर्लक्षणान्नलाभार्थम् अयसे इतस्ततो गमनाय अकारि क्रियते, हरितः न । यथा अश्वान् सादिन स्वाभिलषितदेश गमयन्ति तद्वत् इन्द्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भाव ॥ ३ ॥

---

१-१ सर्वं वि गद्दनन्तरमिव वि[1] अ[1] २ सदैव वि[1] अ[1] ३ सहाय॰ क इय वि[1] [2] अ[1] ४ °षेन मे[1] ए, °यसे न भेद इति कु, °यमे (°भे)द° वि अ[1]; शिलोच्चयस्य भे° ए शोध ५ शुभ्रे वि[1] अ[1] ६ युन वि[1] अ[1], ७ नास्ति वि[1] ।

इमे त॑ इन्द्र॒ ते व॒यं पु॑रुष्टुत॒ ये त्वा॒रभ्य॒ चरा॑मसि प्रभूवसो ।
न॒हि त्वद॒न्यो गि॑र्वणो॒ गिर॒: सघ॑त् क्षो॒णीरि॑व॒ प्रति॑ नो हर्य॒ तद् वच॑: ॥ ४ ॥

इ॒मे । ते॒ । इ॒न्द्र॒ । ते । व॒यम् । पु॒रु॒ऽस्तु॒त॒ । ये । त्वा॒ । आ॒ऽरभ्य॑ । चरा॑मसि । प्र॒भु॒व॒सो॒ इति॑ प्रभुऽवसो । न॒हि । त्वत् । अ॒न्यः । गि॒र्व॒णः॒ । गिरः॑ । सघ॑त् । क्षो॒णीःऽइ॑व । प्रति॑ । नः॒ । ह॒र्य॒ । तत् । वचः॑ ॥ ४ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ ४ ॥

वेङ्कट० ते[1] इमे वयम् इन्द्र! तव स्वभूताः बहुभिः स्तुत! ये त्वाम् आरभ्य चरामः बहुधन!। नहि त्वत्तः अन्यः गीर्भिर्वननीय! स्तोतॄणां स्तोत्राणि [2]सहते। नहि दरिद्रः स्तोत्राणि[2] सोढुं शक्नोति। पृथिवी इव सर्वद्रव्याणि अस्माकं स्तुतीः प्रति कामय ॥ ४ ॥

मुद्गल० हे इन्द्र! प्रभूवसो! प्रभूतधनवन्! अत एव पुरुष्टुत! पुरुभिर्यजमानैः स्तुत! ये च वयम् त्वा त्वाम् आरभ्य आश्रयतयाऽवलम्ब्य[3] चरामसि चरामः यागे[4] वर्तामहे ते इमे वयम् ते तव[5] स्वभूताः। हे गिर्वणः! गीर्भिर्वननीय! इन्द्र! त्वत् अन्यः त्वत्तोऽन्यः कश्चिदपि गिरः स्तुतीः नहि[6] सघत् नहि प्राप्नोति। अतः त्वम् नः अस्माकम् तत् वचः स्तुतिलक्षणम् प्रति हर्य कामयस्व। क्षोणीरिव यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते ॥ ४ ॥

भूरि॑ त इन्द्र वी॒र्यं१॒॑ तव॑ स्मस्य॒स्य स्तो॒तुर्म॑घव॒न् काम॒मा पृ॑ण ।
अनु॑ ते॒ द्यौर्बृ॑ह॒ती वी॒र्यं॑ मम इ॒यं च॑ ते पृथि॒वी ने॑म॒ ओज॑से ॥ ५ ॥

भूरि॑ । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । तव॑ । स्म॒सि॒ । अ॒स्य । स्तो॒तुः । म॒घ॒ऽव॒न् । काम॑म् । आ । पृ॒ण॒ । अनु॑ । ते॒ । द्यौः । बृ॒ह॒ती । वी॒र्य॑म् । म॒मे॒ । इ॒यम् । च॒ । ते॒ । पृ॒थि॒वी । ने॒मे॒ । ओज॑से ॥ ५ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ ५ ॥

वेङ्कट० बहु ते इन्द्र! वीर्यम्, तव[6] वयं स्मः[7]। त्वम् अस्य सम्यक्त्वं[8] स्तोतुः मघवन्! आपूरय कामम्। इन्द्र! अनु ममे बृहती द्यौः तव वीर्यम् स्वकीयाद् वीर्यादीना गीयते[9]। इयम् च ते पृथिवी तव [10]ओजसे नेमे अर्द्धं[10] भवति। [11]इयं भूयसी न वेति[11] सन्देहे ओजसोऽर्द्धं[12] भवति ओजस्तु पूर्णमेवेति ॥ ५ ॥

मुद्गल० हे इन्द्र! ते तव वीर्यम् सामर्थ्यम् भूरि बहु। न केनापि अवच्छेत्तुं[13] शक्यते। तादृशस्य तव [14]वयम् स्मसि स्वभूताः भवामः। हे मघवन्! धनवन्! इन्द्र! त्वम् अस्य स्तोतुः त्वां स्तुवतो यजमानस्य कामम् अभिलाषम् आ पृण आपूरय। बृहती द्यौः महान् द्युलोकोऽपि ते तव[14] वीर्यम् अनु ममे अन्वमंस्त। इन्द्रेण सहावस्थानात् इयम् च इयमपि पृथिवी ते तव ओजसे बलाय नेमे प्रह्वीबभूव। त्वद्बलाधीना सती अध एव वर्तते इति भावः ॥ ५ ॥

---

१. नास्ति कु. २-२. नास्ति वि[1] अ[1]. ३. आश्रित्य मूको. ४. यागे वि मै[1]. ५. नास्ति मूको. ६. तव स्वभूताः वि[1] अ[1]. ७. स्मः ष (? मातः) वि[1]. ८. सर्वस्य अ[1] वि[12] ल भु एवं. ९. मनीयत कु. १०-१०. ओजसेऽर्धं कु अ[1]. ११-११. इदं भूयात् अ[1] वि[1] ल सर्पः इदं भूयाद्विशाम्यमिति (?) कु. १२. °सेऽर्द्धं मूको. १३. मायोर्धं मूको. १४-१४. नास्ति वि मै[1].

त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन् पर्वशश्चकर्तिथ ।
अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ॥ ६ ॥

त्वम् । तम् । इन्द्र । पर्वतम् । महाम् । उरुम् । वज्रेण । वज्रिन् । पर्वऽश । चकर्तिथ । अव । असृज । निऽवृता । सर्तवै । अप । सत्रा । विश्वम् । दधिषे । केवलम् । सह ॥ ६ ॥

स्कन्द० ॥ ६ ॥

वेङ्कट० पूर्वोक्तस्य[1] समर्थनम् । त्वम् तम् इन्द्र![2] मेघ महान्तं विस्तीर्णम् वज्रेण वज्रिन्! पर्वशः खण्डीकृतवानसि । अप अव असृज च निरुद्धा अप सरणाय । सत्यमेव व्याप्त धारयसि असाधारण बलम् । इति सर्वानुक्तान कामान्[3] आशास्ते सूक्तेनेति ॥ ६ ॥

मुद्गल० हे वज्रिन्! वज्रवन्[1] इन्द्र! त्वम् तम् प्रसिद्धम् महाम् आयामतो महान्तम् उरुम् विस्तीर्णम् पर्वतम् पर्ववन्त मेघम् वज्रेण आयुधेन पर्वश पर्वणि पर्वणि चकर्तिथ शकलीचकर्थ । तेन मेघेन निवृता आवृता अप सर्तवै सरणाय गमनाय अव असृज अवाङ्मुखमस्राक्षी । अतस्त्व मेव केवलम् विश्वम् व्याप्तम् सह बलम् दधिषे धारयसि नान्य कश्चिदिति यदुक्त तत् तथा सत्यमेव ॥ ६ ॥

इति प्रथमाष्टके चतुर्थाध्याये द्वाविंशो वर्ग ॥

इति प्रथममण्डले दशमोऽनुवाक ॥

## [ ५८ ]

नू चित् सहोजा अमृतो नि तुन्दते होता यद् दूतो अभवद् विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥ १ ॥

नु । चित् । सहःऽजा । अमृत । नि । तुन्दते । होता । यत् । दूत । अभवत् । विवस्वत । वि । साधिष्ठेभि । पथिऽभि । रज । ममे । आ । देवऽताता । हविषा । विवासति ॥ १ ॥

स्कन्द० ॥ १ ॥

वेङ्कट० नोधा आङ्गिरस । क्षिप्रम् एव मथनेन[1] जात मरणवर्जित निश्चलति[4] । होता यदा दूत[3] भवति यजमानस्य । साधुतमै रक्षोभि[*] अनुपहतै मार्गै अन्तरिक्ष परिच्छिनत्ति । परिचरति यज्ञे हविषा देवानिति ॥ १ ॥

मुद्गल० 'एकादशानुवाके सप्त सूक्तानि । तत्र 'नू चित्' इति नवर्चं प्रथम सूक्तम् । गौतमो नोधा ऋषि । आद्या पञ्च जगत्य । शिष्टाश्चतस्रस्त्रिष्टुभ । अग्निर्देवता' ॥

१ मतं पूर्वो° वि[1] अ[3] २ इन्द्र वि[3] लपे ३ नास्ति वि[1] अ[3] ४ मथनाद् वि[1] अ[1], गमनेन लप ५ निचलति कु अ[1]; निश्चलनाति चलति वि[1,2] लप ६ दूत वि[1] लप, दूत वि[3] ७ पथिभि कु ८-८ नास्ति वि मे[1].

सहोना सहसा बलेन जात । अग्निर्हि बलेन मथ्यमानोऽरण्यो सकाशात् जायते । अमृत मरणरहित । एवमूतोऽग्निः नू चित् क्षिप्रमेव नि तुन्दते नितरां व्यथयति, उत्पन्नमात्रस्याग्ने स्प्रष्टुमशक्यत्वात् । यत्[1] यदा होता देवानाम् आह्वाता अयमग्नि विवस्वत परिचरतो यजमानस्य देवान् प्रति हविर्वहनाय[2] दूत अभवत् हविर्वहने[3] नियुक्तो भवति । तदानीम् साधिष्ठेभि समीचीनै पथिभि मार्गैर्गच्छन् रज अन्तरिक्षलोकम् वि ममे निर्ममे । पूर्वं विद्यमानमप्यन्तरिक्षम् असत्कल्पमभूत् । इदानीं तस्य तेजसा प्रकाशमान सदुत्पन्नमिव दृश्यते । किञ्च, देवताता देवतातौ यज्ञे हविषा चरुपुरोडाशादिलक्षणेन[4] देवान् आ विवासति परिचरति ॥ १ ॥

आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।
अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥ २ ॥

आ । स्वम् । अद्म । युवमान । अजर । तृषु । अविष्यन् । अतसेषु । तिष्ठति ।
अत्य । न । पृष्ठम् । प्रुषितस्य । रोचते । दिव । न । सानु । स्तनयन् । अचिक्रदत् ॥ २ ॥

स्कन्द० ॥ २ ॥

वेङ्कट० आ तिष्ठति स्वम् अन्न तृणगुल्मादिकम् आत्मना[5] सम्मिश्रयन् अजर क्षिप्र सर्वं भक्षयन् काष्ठेषु[6] । "वनस्थे[7] काष्ठे उक्षितस्याग्ने[7] पृष्ठम् अश्व इव रोचते इतस्तत शीघ्रगमनात् । तथाऽसौ स्तनयन् दिव सानु[8] मेघ इव शब्दं करोति ॥ २ ॥

मुद्गल० अजर जरारहितोऽयमग्नि स्वम् स्वकीयम् अद्म अदनीयं तृणगुल्मादिकम् युवमान स्वकीयज्वालया सम्मिश्रयन्[9] तदनन्तरं च अविष्यन् भक्षयंश्च । एवम्भूतोऽग्नि तृषु क्षिप्रमेव अतसेषु काष्ठेषु आ तिष्ठति[10] आरोहति । प्रुषितस्य दग्धुमितस्तत प्रवृत्तस्याग्ने पृष्ठम् उपर्यवस्थित ज्वालाजालम् अत्य न रोचते । यथा सततगमनशीलोऽत्योऽश्व इतस्ततो गच्छन् शोभते । एवमग्नेर्ज्वालाऽपि सर्वतो गच्छन्ती शोभते इति भाव । तदानीम् दिव द्युलोकस्य सम्बन्धि सानु समुच्छ्रितमभ्रम् स्तनयन् न शब्दयन्निव अचिक्रदत् गम्भीरशब्दम्[11] आत्मानमचीकरत् ॥ २ ॥

क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।
रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥ ३ ॥

क्राणा । रुद्रेभि । वसुऽभि । पुरःऽहित । होता । निऽसत्त । रयिषाट् । अमर्त्य ।
रथ । न । विक्षु । ऋञ्जसान । आयुषु । वि । आनुषक् । वार्या । देव । ऋण्वति ॥ ३ ॥

स्कन्द० ॥ ३ ॥

---

१ नास्ति वि २ "र्वहनाय" मूको ३ "र्वहने मूको ४ च पुरो" वि मै' ५ "आस्येन वि' अ' ६ काष्ठे ल वि'' अ' कु लप ७ ७ "स्थेषु तिष्ठति वक्षितस्य रसन वि' अ' ८ सानु वि' लप, सानु ल कु अ' ९ मिश्रयेत् वि १० मुदित मै' ११ गम्भीर" मै'

वेङ्कट० कुर्वाण रुद्रादिभि पुरो निहित होता यज्ञे निषण्ण शत्रुधनानामभिभविता[1] अमर्त्य रथ इवाश्वार्थम् मनुष्येष्वाघारादिभि प्रसाध्यमान प्रक्षिपति अनुपक्तम् धनानि देव[2] ॥ ३ ॥

मुद्गल० काणा हविर्वेदन[3] कुर्वाण रुद्रेभि 'रुद्रै वसुभिश्च' पुरोहित पुरस्कृत होता दवानामाह्वाता निषत्त हवि स्वीकरणाय देवयजने निषण्ण रयिषाट् रयीणां शत्रुधनानाम् अभिभविता अमर्त्य मरणरहित । एवभूत देव द्योतमानोऽग्नि विक्षु प्रजासु लौकिकजनेषु रथ न रथ इव[4] आयुषु यजमानलक्षणेषु मनुष्येषु ऋञ्जसान स्तूयमान[5] वार्या वार्याणि सम्भजनीयानि धनानि आनुषक् आनुषक्त यथा भवति तथा वि ऋण्वति विशेषेण प्रापयति ॥ ३ ॥

वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।
तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥ ४ ॥

वि । वातऽजूत । अतसेषु । तिष्ठते । वृथा । जुहूभि । सृण्या । तुविऽस्वनि ।
तृषु । यत् । अग्ने । वनिन । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ॥ ४ ॥

स्कन्द० ॥ ४ ॥

वेङ्कट० वि तिष्ठते[6] वातप्रेरित अतसेषु अनायासेन हूयमानै काष्ठै ज्वालालक्षणताङ्कुशेन च युक्त महास्वन । क्षिप्र यदा त्वम् अग्ने! वृक्षान् प्रति 'वृषा इवाचरसि'। दहसीत्यर्थ । तदानीं तव गमनमार्ग[7] कृष्णो भवति श्वेतज्वालासङ्घ[8] अजर! ॥ ४ ॥

मुद्गल० वातजूत वायुना प्रेरित तुविष्वणि महास्वन । एवम्भूतोऽग्नि जुहूभि स्वकीयाभिर्जिह्वाभि सृण्या सरणशीलेन तेज समूहेन च[10] युक्त सन् वृथा अनायासेनैव तृषु क्षिप्रमेव अतसेषु वनसेषु वृक्षेषु वि तिष्ठते विशेषेण तिष्ठति । हे अग्ने! यत् यदा वनिन वनसम्बन्धान्[11] वृक्षान् दग्धुम् वृषायसे वृषवदाचरसि । दहसीत्यर्थ । हे रुशदूर्मे! दीप्तज्वाल[12] अजर! जरारहित[1] अग्ने[1] ते तव[13] एम गमनमार्ग[14] कृष्णम् कृष्णवर्णो भवति ॥ ४ ॥

तपुर्जम्भो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः ।
अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥ ५ ॥

तपुःऽजम्भ । वने । आ । वातऽचोदित । यूथे । न । सह्वान् । अव । वाति । वंसग ।
अभिऽव्रजन् । अक्षितम् । पाजसा । रजं । स्थातु । चरथम् । भयते । पतत्रिणं ॥ ५ ॥

स्कन्द० ॥ ५ ॥

---

१ °विताऽभूद् वि' भ' २ नास्ति वि' ३ हविर्वेदन मूको ४ ४ नास्ति वि ५ नास्ति वि ६ तिष्ठ° वि ७ नास्ति वि' ८-८ श्वेतान' ल वि' रूप; श्वेत गृहेष्वाच° वि' भ' ९ °नाय मार्ग वि' भ' १० नास्ति वि मै', ११ °न्धान् वि १२ दीप्ते ज्वाले मूको १३ नास्ति वि १४ गगनमार्ग वि

वेङ्कट० तापयितृज्वालादंष्ट्रः वृक्षेषु[1] वातेन प्रेरितः ज्वालासङ्घे न[2] [3]सहनशीलोऽग्निः अव आ वाति[3] वन-नीयगमनोऽधो गच्छति[4]। अक्षीणमप्यरण्यमध्यस्थमपि[5] उदकं ज्वालया अभिगच्छन् [6]अव आ वाति[6]। तस्मादग्नेः स्थावरं जङ्गमञ्च बिभेति, पक्षिणश्च ॥ ५ ॥

मुद्गल० तपुर्जम्भः तपूंषि ज्वाला एव जम्भा आयुधानि यस्य स तथोक्तः वातचोदितः वायुना प्रेरितः एवंभूतोऽग्निः यूथे ज्वालासमूहे सति अक्षितम्[7] अक्षीणम् रजः आर्द्रवृक्षान्तर्गतमुदकम् पाजसा तेजोबलेन अभिव्रजन् आभिमुख्येन गच्छन् वने अरण्ये साह्वान् सर्वमभिभवन् आ[8] आभिमुख्येन अव वाति व्याप्नोति। दृष्टान्तः। वंसगः न यथा वननीयगतिर्वृषः गोयूथे सर्वमभिभवन् वर्तते तद्वत्। यस्मादेवं तस्मात् पतत्रिणः परानयतोऽग्नेः सकाशात् स्थातुः स्थावरम् चरथम् चरत् जङ्गमञ्च भयते बिभेति ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः ॥

द॒धुष्ट्वा॒ भृग॑वो॒ मानु॑षे॒ष्वा र॒यिं न चारुं॑ सु॒हवं॒ जने॑भ्यः ।
होता॑रमग्ने॒ अति॑थिं॒ वरे॑ण्यं मि॒त्रं न शेवं॑ दि॒व्याय॒ जन्म॑ने ॥ ६ ॥

द॒धुः । त्वा॒ । भृग॑वः । मानु॑षेषु । आ । र॒यिम् । न । चारु॑म् । सु॒ऽहव॑म् । जने॑भ्यः ।
होता॑रम् । अ॒ग्ने॒ । अति॑थिम् । वरे॑ण्यम् । मि॒त्रम् । न । शेव॑म् । दि॒व्याय॑ । जन्म॑ने ॥ ६ ॥

स्कन्द० ··· ·· ··· ··· · ··· ॥ ६ ॥

वेङ्कट० आ दधुः त्वाम् भृगवः मानुषेषु धनम् इव[8] शोभनं स्वाह्वानं जनानाम् होतारम् अग्ने! अतिथिम् वरणीयम् मित्रम् इव सुखकरं दिवि जाताय देवगणाय ॥ ६ ॥

मुद्गल० हे अग्ने! त्वा त्वाम् मानुषेषु मनुष्येषु मध्ये भृगवः एतत्संज्ञा महर्षयः दिव्याय जन्मने देवत्वप्राप्तये चारुम् रयिम् न शोभनं धनमिव आ दधुः आधानसम्भारेषु मन्त्रैः स्थापनेन[9] समस्कुर्वन्[10]। कीदृशं त्वाम्। जनेभ्यः सुहवम् यजमानार्थमाह्वातुं सुशकम् होतारम् देवानामाह्वातारम् अतिथिम् अतिथिवत् पूज्यम् वरेण्यम् वरणीयम् मित्रम् न शेवम्। यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ॥ ६ ॥

होता॑रं स॒प्त जु॒ह्वो॒३॒॑ यजि॑ष्ठं॒ यं वा॒घतो॑ वृ॒णते॑ अध्व॒रेषु॑ ।
अ॒ग्निं विश्वे॑षामर॒तिं वसू॑नां सप॒र्यामि॒ प्रय॑सा यामि॒ रत्न॑म् ॥ ७ ॥

होता॑रम् । स॒प्त । जु॒ह्वः॑ । यजि॑ष्ठम् । यम् । वा॒घतः॑ । वृ॒णते॑ । अ॒ध्व॒रेषु॑ ।
अ॒ग्निम् । विश्वे॑षाम् । अ॒र॒तिम् । वसू॑नाम् । स॒प॒र्यामि॑ । प्रय॑सा । यामि॑ । रत्न॑म् ॥ ७ ॥

---

१. मजेषु वि[1] अ[1]. २. °लासंयुक्तः कु; °लासङ्घेन वि[1] अ[1]. ३-३. °भिरव वाति कु; °भिरिव वाति वि[1,2] अ[1] छ लपं; °लोनिर्यवाति वि[1] अ[1]. ४. °नीयाग° वि[1] लपं. ५. °यमरण्य° कु. ६-६. इव वाति वि[1] अ[1]; अभवाति लपं; अववाति° कु. ७. नास्ति वि. ८. व वि[1] अ[1]. ९. स्थापितवन्तः मूको. १०. नम-स्कुर्वन् मूको.

स्कन्द० ॥ ७ ॥

वेङ्कट० होतारम् मनुताहुतीनां सप्त होतार यष्टृतमम् यम् ऋत्विज सप्त वृणते यज्ञेषु। अग्निम् विश्वेषाम् अभिगन्तार धनानां परिचरामि अन्नेन, याचे च रत्नम् ॥ ७ ॥

मुद्गल० सप्त सप्तसङ्ख्याका जुह्व होतार वाघत ऋत्विज अध्वरेषु यागेषु यजिष्ठम् यष्टृतमम् होतारम् देवानामाह्वातारम् यम् अग्निम् वृणते सम्भजन्ते, विश्वेषाम् सर्वेषाम् वसूनाम् अरतिम् प्रापयितार तमग्निम् प्रयसा हविर्लक्षणेनान्नेन सपर्यामि परिचरामि, रत्नम् रमणीय कर्मफलञ्च यामि याचामि ॥ ७ ॥

अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ।
अग्ने गृणन्तमंहस उरुष्योर्जो नपात् पूर्भिरायसीभिः ॥ ८ ॥

अच्छिद्रा । सूनो इति । सहस । न । अद्य । स्तोतृऽभ्य । मित्रऽमह । शर्म । यच्छ ।
अग्ने । गृणन्तम् । अंहस । उरुष्य । ऊर्जं । नपात् । पूःऽभि । आयसीभि ॥ ८ ॥

स्कन्द० ॥ ८ ॥

वेङ्कट० अच्छिद्र गृहम् सहस पुत्र! अस्मभ्यम् अद्य स्तोतृभ्य मित्राणा पूजयित! प्रयच्छ। अग्ने! स्तुवन्तम् अनर्थे[3] रक्ष अन्नस्य पुत्र! आयसै पुरै। 'गर्भो अस्योषधीनाम्' (तै ४,२,३,२) इति मन्त्र ॥ ८ ॥

मुद्गल० हे सहस सूनो! बलस्य पुत्र! बलेन हि मथ्यमानोऽग्निर्जायते। मित्रमह! अनुकूलदीप्तिमन्! अग्ने! न अस्मभ्यम् स्तोतृभ्य अद्य अस्मिन् कर्मणि अच्छिद्रा अच्छिद्राणि शर्म शर्माणि सुखानि यच्छ देहि। किञ्च हे ऊर्जं नपात्! अन्नस्य पुत्र! भुक्तेनान्नेन जठराग्नेः प्रवर्धनात् अग्नेरन्नपुत्रत्वम्। एवंविध! अग्ने! गृणन्तम् त्वां स्तुवन्तम् आयसीभि व्याप्तै पूर्भि पालनै अंहस पापात् उरुष्य रक्ष ॥ ८ ॥

भवा वरूथं गृणते विभावो भवा मघवन् मघवद्भ्यः शर्म।
उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥

भव । वरूथम् । गृणते । विभाऽव । भव । मघऽवन् । मघवत्ऽभ्य । शर्म ।
उरुष्य । अग्ने । अंहस । गृणन्तम् । प्रात । मक्षु । धियाऽवसु । जगम्यात् ॥ ९ ॥

स्कन्द० ॥ ९ ॥

वेङ्कट० भव गृहं स्तुवते दीप्तिमन्[1]। भव धनवन्![2] [4]हविष्मद्भ्य गृहम्[5]। रक्ष अग्ने! स्तुवन्तम्

---

१ °वृणा° भु, °ना होतार अ°°° वि°°° छ सर्प २ भव वि° ३ अर्थे भु ४ नास्ति वि
५-५ °द्भ्यो गृहम् वि° अ°.

भवतें । प्रात एवाग्नि कर्मणा वासयिता इह आगच्छतु इति देवाग्नेर्गृहं[1] सूक्तेनाऽऽशास्ते ॥ ९ ॥

मुद्गल० हे विभाव ! विशिष्टप्रकाश ! अग्ने ! गृणते त्वां स्तुवते यजमानाय वरूथम् अनिष्टनिवारक गृहम् भव । हे मघवन् ! धनवन् ! अग्ने ! मघवद्भ्य हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्य शर्म सुख यथा भवति तथा भव । हे अग्ने ! गृणन्तम् स्तुवन्तम् अहस पापकारिण शत्रो उरुष्य रक्ष । धियावसु कर्मणा प्राप्तधनोऽग्नि प्रात इदानीमिव परेद्युरपि मक्षु शीघ्रम् जगम्यात् आगच्छतु ॥ ९ ॥

इति प्रथमाष्टके चतुर्थाध्याये चतुर्विंशो वर्ग ॥

[ ५९ ]

व॒या इद॑ग्ने अ॒ग्नय॑स्ते अ॒न्ये त्वे विश्वे॑ अ॒मृता॑ मादयन्ते ।
वैश्वा॑नर॒ नाभि॑रसि क्षिती॒नां स्थूणे॑व॒ जनाँ॑ उप॒मिद् य॑यन्थ ॥ १ ॥

व॒या । इत् । अ॒ग्ने॒ । अ॒ग्नय॑ । ते॒ । अ॒न्ये । त्वे इति॑ । विश्वे॑ । अ॒मृता॑ । मा॒द॒य॒न्ते॒ ।
वैश्वा॑नर । नाभि॑ । अ॒सि॒ । क्षि॒ती॒नाम् । स्थूणा॑ऽइव । जना॑न् । उ॒प॒ऽमित् । य॒य॒न्थ॒ ॥ १ ॥

स्कन्द० ॥ १ ॥

वेङ्कट० 'ओषधीषु मनुष्येषु [1]भूम्याम्[†] सवत्सरे[2] तथा । [3]पचन् यो वर्तते[3] सोऽग्निर्वैश्वानर इति[4] स्मृत' । शाखा एव अग्ने तव अन्ये अग्नय । त्वयि सर्वे देवा माद्यन्ति । वैश्वानर ! नाभिस्थानीय असि प्रजानाम् । यथोत्तम्भनार्थमुपमीयमाना[5] स्थूणा वशान् धारयति, एवं त्वम् जनान् अदधा[6] ॥ १ ॥

मुद्गल० [7]"वया" इति सप्तर्चं द्वितीय सूक्तम् । नोधा ऋषि । त्रिष्टुप् छन्द । वैश्वानरत्वगुणक[†] अग्निर्देवता[7] ॥ हे अग्ने ! ये अन्ये अग्नय सन्ति ते सर्वेऽपि ते तव वया इत्[8] शाखा एव । अतस्त्वत्तोऽन्ये न सन्तीति भाव । किञ्च त्वे त्वयि सति विश्व सर्वे अमृता अमरणधर्माणो[9] देवा मादयन्ते हृष्यन्ति । नहि त्वद्व्यतिरेकेण तैर्जीवितु शक्यते । हे वैश्वानर ! [10]"विश्वेषा नराणा[10] जाठररूपेण सम्बन्धिन् ! अग्ने ! क्षितीनाम् मनुष्याणाम् नाभि सन्नद्धा[11] असि अवस्थापको भवसि । अतस्त्वम् उपमित् उपस्थापयिता सन् जनान् ययन्थ अधारय । [12]"पक्षे उपमिदिति दृष्टान्तविशेषणम्[12]" । उपमित् उपनिखाता स्थूणा इव वशाधारणार्थं निखातस्तम्भो यथा गृहोपरिस्थ वश धारयति तद्वत् ॥ १ ॥

मू॒र्धा दि॒वो नाभि॑र॒ग्निः पृ॑थि॒व्या अथा॑भवदर॒ती रोद॑स्योः ।
तं त्वा॑ दे॒वासो॑ऽजनयन्त दे॒वं वैश्वा॑नर॒ ज्योति॒रिदार्या॑य ॥ २ ॥

---

१ °से गृ° एप वि[1] अ[1], देवस्याग्नेर्गृहं कु  २-२ भूवत्सरे एप वि[1]  † भूमौ कु अ[1]  ३ पचदये- वर्तते वि[1] अ[1]  ४ नास्ति त वि[1] अ[1]  ५ °नीयमा° वि[1] अ[1] कु  ६ °यच्छथा वि[1] अ[1] त कु एपं, अव(१°द)धा वि[1] अ[1]  ७-७ नास्ति वि मै[1], † °नद्गु° मै[1] सा  ८ नास्ति वि मै[1]  ९ अमरध° वि  १०-१० °णा देवानाम् मै[1]  ११ सनद्ध मूको  १२-१२ पुक्ष दृष्टान्त विशेषणम् मूको

मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः ।
तम् । त्वा । देवासः । अजनयन्त । देवम् । वैश्वानर । ज्योतिः । इत् । आर्याय ॥ २ ॥

स्कन्द० ॥ २ ॥

वेङ्कट० उच्छ्रित स्वर्गस्य नहनम् अग्नि पृथिव्या, अथ अभवत् अरति द्यावापृथिव्यो इतस्तत्र गच्छति ततोऽस्वामित्यर्थं । अपि वा[1] द्यावापृथिव्योर्मध्ये गच्छत्यादित्य सन् । तम् त्वाम्[2] देवास अजनयन्त देवम् वैश्वानर! ज्योतिर्भूतम् आर्याय[3] मनवे ॥ २ ॥

मुद्गल० अयम् नाम दिवः द्युलोकस्य मूर्धा शिरोवत् प्रधानभूतो भवति । पृथिव्या भूमेश्च नाभिः सनाहक । रक्षक इत्यर्थ । अथ अनन्तरम् रोदस्यो द्यावापृथिव्योरयम् अरति अधिपति[4] अभवत् । हे वैश्वानर! तम् तादृशम् देवम् दानादिगुणयुक्तम् त्वा त्वाम् देवासः सर्वे देवा आर्याय विदुषे मनवे ज्योतिः इत् ज्योतीरूपमेव अजनयन्त उदपादयन्[5] ॥ २ ॥

आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥

आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना । वसूनि ।
या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि । तस्य । राजा ॥ ३ ॥

स्कन्द० ॥ ३ ॥

वेङ्कट० आ दधिरे सूर्ये इव रश्मीन् ध्रुवान् असुरे सह निरपसुपयन्तो देवा अग्नौ वैश्वानर । यानि[6] पर्वतादिषु वसूनि[7], यानि च[8] मानुषेषु[9] तस्य सर्वस्य[10] ईश्वरस्त्वम्[11] भवसि ॥ ३ ॥

मुद्गल० वैश्वानरे अस्मिन् अग्नौ या यानि वसूनि धनानि आ दधिरे आहितानि स्थापितानि वसुषु [illegible] । ध्रुवास निश्चला रश्मय किरणा सूर्ये न यथा सूर्ये[12] आधीयन्ते तद्वत् । [illegible] पर्वतादिषु या यानि धनानि विद्यन्ते तस्य धनजातस्य राजा असि अधिपतिर्भवसि ॥ ३ ॥

बृहती इव सुनवे रोदसी गिरो होता मनुष्यो न दक्षः ।
स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥ ४ ॥

बृहती इवेति बृहतीऽइव । सुनवे । रोदसी इति । गिरः । होता । मनुष्यः । न । दक्षः ।
स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ॥ ४ ॥

स्कन्द० ॥ ४ ॥

---

१ वा वि[1] अ[1] २ त्वा वि[1] अ[1] मु ३ [illegible] वि[1] अ[1] ४ [illegible]
५ [illegible] मूको ६ [illegible] मु ७ [illegible] वि[1] अ[1] मु ८ [illegible] ९ [illegible]
वि[1] अ[1] १० [illegible] वि[1] अ[1] ११ [illegible] वि[1], [illegible] अ[1]. १२ सूर्ये मूको

वेङ्कट० आत्मनः सूनवे वैश्वानराय तदर्थम् महती इव भवतः द्यावापृथिव्यौ इति पादान्तः[१]। गिरः होता मनुष्य. च समर्थः सर्ववते सत्यबलाय यह्वीः वैश्वानराय नेतृतमाय महतीः[२] प्रयुङ्क्ते ॥ ४ ॥

मुद्गल० [३]रोदसी द्यावापृथिव्यौ सूनवे स्वपुत्राय वैश्वानराय[३] बृहती इव प्रभूते इव अभूताम्। महतो वैश्वानरस्यावस्थानाय[४] द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः। किञ्च भयम् होता दक्षः समर्थः पूर्वी. बहुविधाः यह्वीः महतीः गिरः स्तुतीः वैश्वानराय अग्नये प्रायुङ्क्त इति शेषः। कीदृशाय। स्वर्वते शोभनतामनयुक्ताय सत्यशुष्माय अवितथबलाय नृतमाय अतिशयेन सर्वेषां नेत्रे। दृष्टान्तः। मनुष्यः न यथा मनुष्यो लौकिको बन्दो दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत् ॥ ४ ॥

दिवश्चित् ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् ।
राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥ ५ ॥

दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वम् ।
राजा । कृष्टीनाम् । असि । मानुषीणाम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ५ ॥

स्कन्द० ... ... ... ... ... ... ॥ ५ ॥

वेङ्कट० दिवः अपि ते महतः[५] जातवेदः! वैश्वानर![६] प्र रिरिचे महत्त्वम्[७]। [८]राजा भवसि मानुषीणाम् विशाम्[८]। मनुष्याणामित्यर्थः। युद्धेन[९] देवेभ्यः च धनम् चकर्थ ॥ ५ ॥

मुद्गल० हे जातवेदः! जातानां वेदितः! वैश्वानर! अग्ने! ते तव महित्वम् माहात्म्यम् बृहतः महतः दिवः चित् द्युलोकादपि प्र रिरिचे प्रववृधे। किञ्च त्वम् मानुषीणाम् मनोर्जातानाम् कृष्टीनाम् प्रजानाम् राजा असि अधिपतिः भवसि। तथा[१०] वरिवः[११] असुरैरपहृतं धनम् युधा युद्धेन देवेभ्यः चकर्थ देवाधीनमकार्षीः ॥ ५ ॥

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते ।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत् काष्ठा अव शम्बरं भेत् ॥ ६ ॥

प्र । नु । महिऽत्वम् । वृषभस्य । वोचम् । यम् । पूरवः । वृत्रऽहनम् । सचन्ते ।
वैश्वानरः । दस्युम् । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः । अव । शम्बरम् । भेत् ॥ ६ ॥

स्कन्द० ... ... ... ... ... ... ॥ ६ ॥

---

१. पादान्तः वि[१३] अ[१] लपं; पदान्तरे ल शोधः. २. महतीः वि[२] अ[२]. ३-३. नास्ति वि. ४. °स्थानाय मै[२]. ५. °हतः हे वि[२] अ[२]. ६. °रः वि[१३] अ[१३] ल. ७. °हित्वम् वि[१३] लपं. ८-८. सना भवति मानुषीणामित्यर्थः. वि[१] अ[१]. ९. युद्धे तद् वि[१] अ[१]. १०. नास्ति मै[१]. ११. हरिवः मूको

वेङ्कट० प्र ब्रवीमि तत्[1] महित्वम् माहाभाग्य[2] क्षिप्र वर्षितुरपाम्। यम् [3]पूरयितव्या मनुष्या[3] मेघहन[4] सेवन्ते[5] वर्षकामा । वैश्वानर अग्नि उपक्षपयितार प्रन् [6]अव अधूनोत्[6] [7]काष्ठा अप.[7], अवाभिनच्च मेघम् ॥ ६ ॥

मुद्गल० अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते। पूरव मनुष्या यम् वृत्रहणम् आवरकस्य मेघस्य हन्तार वैश्वानरम् सचन्ते वर्षार्थिन सेवन्ते। तस्य वृषभस्य अपां वर्षितु वैश्वानरस्य महित्वम् माहात्म्यम् नु क्षिप्रम् प्र वोचम्[8] प्रब्रवीमि। किं तदित्यत आह—अयम् वैश्वानर अग्नि दस्युम् रसानामुपक्षपयितार राक्षसादिकम् जघन्वान् हतवान्। तथा काष्ठा अप वृष्ट्युदकानि अधूनोत् अधोमुखान्यपातयत्, शम्बरम् त निरोधकारिणं मेघम् अव भेद् अवाभिनत् ॥ ६ ॥

वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।
शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान् ॥ ७ ॥

वैश्वानर । महिम्ना । विश्वऽकृष्टि । भरत्ऽवाजेषु । यजत । विभाऽवा ।
शातऽवनेये । शतिनीभि । अग्नि । पुरुऽनीथे । जरते । सूनृताऽवान् ॥ ७ ॥

स्कन्द०　　　॥ ७ ॥

वेङ्कट० वैश्वानर महत्तया सर्वमनुष्य [10]सर्वा प्रजा[10] अस्य भरद्वाजेषु यष्टव्य[11] दीप्तिमान्। शतवनो नाम कश्चित्, तस्य पुत्र[12] पुरणीथस्तस्मिन् अयम् अग्निः शतसङ्ख्याभि स्तुतिभि[13] स्तूयते सत्यकर्मा। वैश्वानरास्ते स्तुतिमात्रमिति ॥ ७ ॥

मुद्गल० वैश्वानर अग्नि[14] महिम्ना महत्त्वेन विश्वकृष्टि विश्वे सर्वे मनुष्या यस्य स्वभूता स तथोक्त । भरद्वाजेषु पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु यजत यष्टव्य विभावा विशेषेण प्रकाशयिता। सूनृतावान् सूनृता प्रिया सत्या वाक् तद्युक्त । एवम्भूतोऽग्नि शातवनेये शतसङ्ख्याकान् भक्तान्[15] वनति सम्भजत इति शतवनि, तस्य पुत्र शातवनेय, तस्मिन् पुरुणीथे बहूनां नेतरि एतत्सञ्ज्ञके राजनि च शतिनीभि बहुभि[16] स्तुतिभि जरते स्तूयते ॥ ७ ॥

इति प्रथमाष्टके चतुर्थाध्याये पञ्चविंशो वर्ग ॥

[ ६० ]

वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।
द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद् भृगवे मातरिश्वा ॥ १ ॥

---

1 तत् वि[1] अ[3]. 2 महा[०] ऊ वि[२] अ[1,3] एर्प 3-3 पूरयितु [१पूरयि] तव्या मनुष्या सेवन्ते वि[1] अ[3]. 4 [०]हनने वि[2,3] अ[1,3] ऊ एप 5 नास्ति वि[1] अ[3] 6-6 अवाधुनो[०] वि[1] एर्प 7-7 अप काष्ठा (वा वि[3].) ऊ वि[2,3] अ[1] ए एर्प, मका (१[०]च ) काष्ठा वि[1] अ[3] 8. [०]चम् यं वि 9 [०]मुचिना[०] मूको 10-10 सर्वा एव प्रजा वि[1] एप 11 यष्टीयो अ[1] ड 12 नास्ति ए वि[2,3] अ[1] एर्प 13 नास्ति वि[1] एप 14 वीऽग्नि मूको 15 भक्तान् वि मै[1]. 16 नास्ति वि

वह्निम् । युशसंम् । विदथस्य । केतुम् । सुप्रऽअव्यम् । दूतम् । सद्यःऽअर्थम् ।
द्विऽजन्मानम् । रयिम्ऽईव । प्रऽशस्तम् । रातिम् । भरत् । भृगवे । मातरिश्वा ॥ १ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ १ ॥

वेङ्कट० वोढारमग्निं यशस्विनं यज्ञस्य ध्वजभूतं[1] सुष्ठु प्रकर्षेण रक्षणीयम् दूतम् सद्यो गन्तारं द्वयोररण्योर्जायमानं धनमिव प्रशस्तम् [2]बन्धुम् भरत[2] भृगवे दिव [3]आहृत्य मातरिश्वा[3] ॥ १ ॥

मुद्गल० [4]'वह्निम्' इति पञ्चर्चं तृतीयं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता[4] ॥

वह्निम् हविषां वोढारम् यशसम् यशस्विनम्[5] विदथस्य केतुम् यज्ञस्य प्रकाशयितारम् सुप्राव्यम् सुष्ठु प्रकर्षेण रक्षितारम् दूतम्[6] देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तम् सद्योअर्थम् यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान् गन्तारम् [7]द्विजन्मानम् द्वयोर्द्यावापृथिव्योर्जायमानम्[7] रयिमिव धनमिव प्रशस्तम् प्रख्यातम् । एवंभूतमग्निम् मातरिश्वा वायुः भृगवे एतत्संज्ञकाय महर्षये रातिम् भरत मित्रमहरत्, अकरोदित्यर्थः ॥ १ ॥

अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।
दिवश्चित् पूर्वो न्यसादि होताऽऽपृच्छ्यो विश्पतिर्विक्षु वेधाः ॥ २ ॥

अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः । उशिजः । ये । च । मर्ताः ।
दिवः । चित् । पूर्वः । नि । असादि । होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥ २ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ २ ॥

वेङ्कट० अस्य शासनम्[8] उभये सेवन्ते हविष्मन्तः[9] उशिजः देवाः । उशिक् वष्टेः कान्तिकर्मणः । ये च मर्ताः[10] । सोऽयम्[11] दिवः अपि प्रत्नः होता आप्रष्टव्यः[12] विशां स्वामी नृषु स्थापितो मातरिश्वना विधाता इति ॥ २ ॥

मुद्गल० शासुः शासितुः अस्य अग्नेः उभयासः उभयेऽपि देवा मनुष्याश्च इममग्नि शासितारम् सचन्ते सेवन्ते । उशिजः कामयमानाः देवाः हविष्मन्तः हविषा युक्ता ये च मर्ताः मरणधर्माणो यजमानाः । किञ्च अयम् होता होमनिष्पादकोऽग्निः दिवः चित् आदित्यादपि पूर्वं उषस्सु वर्तमानो भूत्वाऽग्निहोत्रहोमार्थम् विक्षु यजमानेषु नि असादि अध्वर्युणाऽन्यायतने न्यधायि स्थाप्यते । कीदृशो होता । आपृच्छ्यः आप्रष्टव्यः । पूज्य इत्यर्थः । विश्पतिः प्रजानां पालयिता वेधाः विधाता अभिमतफलस्य कर्ता ॥ २ ॥

तं नव्यसी हृद आ जायमानमस्मत् सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥ ३ ॥

---

1. भूतं वि[1]. २. नास्ति कु. ३-३. आमरत् कु. ३-३. नास्ति वि[1] अ[2]. ४-४. नास्ति वि मै[2]. ५. मुदितम् मै[1]. ६. नास्ति वि मै[1]. ७-७. द्वि··· नं[0] मै[1]. ८. शासनम् छपं; शासन् वि[1], ९. नास्ति वि[1]. १०. मर्त्यो कु ११. नास्ति वि[1]. १२. अष्टयः ल कु.

तम् । नव्य॑सी । हृदः । आ । जाय॑मानम् । अ॒स्मत् । सु॒ऽकी॒र्तिः । मधु॑ऽजिह्वम् । अ॒श्याः ।
यम् । ऋ॒त्विजः॑ । वृ॒जने॑ । मानु॑षासः । प्रय॑स्वन्तः । आ॒यवः॑ । जीज॑नन्त ॥ ३ ॥

स्कन्द० • ॥ ३ ॥

वेङ्कट० तम् अग्निम् जायमानम् मत्तो हृदयाद्विर्गम्य नवतरा[1] सुष्टुतिः कीर्त्यमाना मादयितृजिह्वम् व्याप्नोतु, यम् ऋत्विजः उपद्रवे मनुष्येषु जाता हविष्मन्तः गच्छन्तस्तत्परिहारार्थमरण्यो जनयन्ति ॥ ३ ॥

मुद्गल० नव्यसी नवतरा सुकीर्तिः सुष्ठु कीर्तयित्री अस्मत् अस्माकं स्तुतिः हृदः हृद्यवस्थितात् प्राणात् जायमानम् उत्पद्यमानम् । अग्निर्हि वायोरुत्पद्यते, वायुश्च प्राण एव, 'यः प्राणः स वायुः' इति आम्नातत्वात्[2] । मधुजिह्वम् मादयितृज्वालम् । एवम्भूतम् तम् अग्निम् आ अश्याः आभिमुख्येन व्याप्नोतु । वृजने सङ्ग्रामे प्राप्ते सति आयवः मनुष्याः यम् अग्निम् जीजनन्त यज्ञार्थमुदपादयन्[3] । कीदृशा मनुष्याः । ऋत्विजः ऋतौ काले यष्टारः मानुषासः मनुपुत्राः प्रयस्वन्तः हविर्लक्षणान्नोपेताः ॥ ३ ॥

उ॒शिक् पा॑व॒को वसु॒र्मानु॑षेषु॒ वरे॑ण्यो॒ होता॑धायि वि॒क्षु ।
दमू॑ना गृ॒हप॑ति॒र्दम॒ आँ अ॒ग्निर्भु॑वद्र॒यिप॑ती रयी॒णाम् ॥ ४ ॥

उ॒शिक् । पा॒व॒कः । वसुः॑ । मानु॑षेषु । वरे॑ण्यः । होता॑ । अ॒धा॒यि॒ । वि॒क्षु ।
दमू॑नाः । गृ॒हऽप॑तिः । दमे॑ । आ । अ॒ग्निः । भु॒व॒त् । र॒यि॒ऽप॑तिः । र॒यी॒णाम् ॥ ४ ॥

स्कन्द० •• ॥ ४ ॥

वेङ्कट० कामयिता शोधयिता मानुषेषु[4] वासयिता देवः सन् वरणीयः होता[5] निहितः निविष्टेषु । दममनाः गृहे गृहपतिः सोऽयम् अग्निः भवति रयीणाम् रयिपतिः[6] ॥ ४ ॥

मुद्गल० उशिक् कामयमानः पावकः शोधकः वसुः निवासयिता वरेण्यः वरणीयः । एवंभूतः होता अग्निः विक्षु यज्ञगृहं प्रविष्टेषु मानुषेषु यजमानेषु अधायि "स्थाप्यते । सः" च अग्निः दमूनाः रक्षसां दमकेन मनसा युक्तः गृहपतिः गृहाणां पालयिता च सन् दमे यज्ञगृहे रयिपतिः धनाधिपः आ भुवत् आ समन्तात् भवति । न केवलमेकस्य रयेः, अपि तु सर्वेषामित्याह रयीणाम् इति ॥ ४ ॥

तं त्वा॑ व॒यं पति॑मग्ने रयी॒णां प्र शं॑सामो म॒तिभि॒र्गोत॑मासः ।
आ॒शुं न वा॑जंभ॒रं म॒र्जय॑न्तः प्रा॒तर्म॒क्षू धि॒याव॑सुर्जगम्यात् ॥ ५ ॥

---

1 °तरा मरकर् वि[१]. २. म तु मैत्र १,९,२,१. ३. °तादयन् मूको ४ मनुष्येषु इ[?] ५ नास्ति कु वि[१] अ[१] ६ °णाम् हविर्लक्षणान्नम् वि[१] अ[१]. ७-७. स्व मै°

दृष्टान्तः प्रयः न प्रय इत्यन्ननाम। यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति तद्वत्। कीदृशं स्तोमम्[1]। ओहम् वहनीयम्। अत्यन्तोत्कृष्टमित्यर्थः। न केवलं स्तोमम्। किं तर्हि। ब्रह्माणि हविर्लक्षणान्यन्नानि। कीदृशानि। राततमा पूर्वैर्यजमानैरतिशयेन दत्तानि। इन्द्रं स्तुत्या हविषा च परिचरेमेति भावः ॥ १ ॥

अ॒स्मा इदु॒ प्रय॑ इव॒ प्र यं॑सि॒ भरा॑म्याङ्गू॒षं बाधे॑ सुवृ॒क्ति ।
इन्द्रा॑य हृ॒दा मन॑सा मनी॒षा प्र॒त्नाय॒ पत्ये॒ धियो॑ मर्जयन्त ॥ २ ॥

अ॒स्मै। इत्। ऊँ इति॑। प्रयः॑ऽइव। प्र। यं॒सि॒। भरा॑मि। आ॒ङ्गू॒षम्। बाधे॑। सु॒ऽवृ॒क्ति।
इन्द्रा॑य। हृ॒दा। मन॑सा। म॒नी॒षा। प्र॒त्नाय॑। पत्ये॑। धियः॑। म॒र्ज॒य॒न्त॒ ॥ २ ॥

स्कन्द० ... ... ... ... ... ... ॥ २ ॥

वेङ्कट० अस्मै एव अन्नमिव[1] [2]स्तोत्रं प्रयच्छामि[2]। भरामि [3]स्तोत्रं बाधित्रे[3] सुप्रवृत्तम्[4] इति प्रथमपादोक्तमेवोक्तम्[5]। इन्द्राय हृदादिभिः पुराणाय पालयित्रे कर्माणि संस्कुर्वन्ति ॥ २ ॥

मुद्गल० अस्मै इत् अस्मै एव उ इन्द्राय प्रयः इव अन्नमिव प्र यंसि प्रयच्छामि। तदेव स्पष्टीक्रियते। बाधे शत्रूणां बाधनाय समर्थम् सुवृक्ति सुष्ठु आवर्जकम्[6] आङ्गूषम् स्तोत्ररूपमाघोषम् भरामि संपादयामि। अन्येऽपि स्तोतारः प्रत्नाय पुराणाय पत्ये स्वामिने इन्द्राय हृदा हृदयेन मनसा तदन्तर्वर्तिनाऽन्तःकरणेन मनीषा मनीषया[7] तज्जन्येन ज्ञानेन च धियः स्तुतीः मर्जयन्त मार्जयन्ति संस्कुर्वन्ति ॥ २ ॥

अ॒स्मा इदु॒ त्यमु॑प॒मं स्व॒र्षां भरा॑म्याङ्गू॒षमा॒स्ये॑न ।
मंहि॑ष्ठ॒मच्छो॑क्तिभिर्मती॒नां सु॑वृ॒क्तिभिः॑ सू॒रिं वा॑वृ॒धध्यै॑ ॥ ३ ॥

अ॒स्मै। इत्। ऊँ इति॑। त्यम्। उ॒प॒ऽमम्। स्वः॒ऽसाम्। भरा॑मि। आ॒ङ्गू॒षम्। आ॒स्ये॑न।
मंहि॑ष्ठम्। अच्छो॑क्तिऽभिः। म॒ती॒नाम्। सु॒वृ॒क्तिऽभिः॑। सू॒रिम्। व॒वृ॒धध्यै॑ ॥ ३ ॥

स्कन्द० ... ... ... ... ... ... ॥ ३ ॥

वेङ्कट० अस्मै एव तम् उपमानभूतं सर्वस्य दातारम् [8]भरामि आङ्गूषम् स्तोत्रम्[8] आस्येन। दातृतमम् [10]अभिमुखोक्तिभिः स्तुतीनां[10] सुप्रवृत्तैः[11] प्राज्ञं वर्धयितुमाङ्गूषं भरामीति[12] ॥ ३ ॥

मुद्गल० अस्मै इत् उ अस्मै एवेन्द्राय त्यम् तं प्रसिद्धम् उपमम् उपमानहेतुभूतम् स्वर्षाम् सुष्ठु भरणीयस्य धनस्य दातारम् सूरिम् विपश्चितमिन्द्रम् वावृधध्यै वर्धयितुम् सुवृक्तिभिः सुष्ठु आवर्जकैः। समर्थैरित्यर्थः। मतीनाम् स्तुतीनां सम्बन्धिभिः अच्छोक्तिभिः स्पर्धंक्तिभिः मंहिष्ठम् अतिशयेन महत्तम्। पूर्वलक्षणम् आङ्गूषम् आघोषम् आस्येन मुखेन भरामि। करोमीत्यर्थः ॥ ३ ॥

---

१. नास्ति वि. २. अन्नम् वि[1]. ३-३. नास्ति वि[1]. ४-४. नास्ति वि[1]. ५. इत्युक्तम् वि[1].
६. °र्जकम् वि[1]. ७. मनीषया मूको. ८. मनसोऽपरया मूको. ९-९. स्तोत्रं भरामि वि[1]. † नास्ति मूको
१०-१०. स्तुतीनामभिमुखोक्तिभिः कु. ११. °वृत्तैः वि[1] अ[1]. १२. भरामि वि[1].

दष्टान्त प्रय न प्रय इत्यन्ननाम। यथा बुभुक्षिताय पुरपाय कश्चिदन्नं प्रहरति तद्वत्। कीदृश स्तोमम्[१]। ओहम् वहनीयम्। अत्यन्तोत्कृष्टमित्यर्थ । न केवलं स्तोमम्। किं तर्हि। ब्रह्माणि हविर्लक्षणान्यन्नानि। कीदृशानि। राततमा पूर्वैर्यजमानैरतिशयेन दत्तानि। इन्द्र स्तुत्या हविषा च परिचरेमेति भाव ॥ १ ॥

अस्मा इदु प्रय इव प्र यंसि भराम्याङ्गूषं बाधे सुवृक्ति ।
इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त ॥ २ ॥

अस्मै । इत् । ऊँ इति । प्रयःऽइव । प्र । यंसि । भरामि । आङ्गूषम् । बाधे । सुऽवृक्ति ।
इन्द्राय । हृदा । मनसा । मनीषा । प्रत्नाय । पत्ये । धियः । मर्जयन्त ॥ २ ॥

स्कन्द० ॥ २ ॥

वेङ्कट० अस्मै एव अन्नमिव[२] [३]स्तोत्रं प्रयच्छामि[३]। भरामि [४]स्तोत्रं बाधित्रे[४] सुप्रवृत्तम्[५] इति प्रथम पादोक्तमेवोक्तम्[६]। इन्द्राय हृदादिभि पुराणाय पालयित्रे कर्माणि संस्कुर्वन्ति ॥ २ ॥

मुद्गल० अस्मै इत् असौ एव उ इन्द्राय प्रय इव अन्नमिव प्र यंसि प्रयच्छामि। तद्व स्पष्टी क्रियते। बाध शत्रूणा बाधनाय समर्थम् सुवृक्ति सुष्ठु आवर्जकम्[७] आङ्गूषम् स्तोत्ररूप माघोषम् भरामि संपादयामि। अन्येऽपि स्तोतार प्रत्नाय पुराणाय पत्ये स्वामिने इन्द्राय हृदा हृदयेन मनसा तदन्तर्वर्तिनाऽन्तःकरणेन मनीषा मनीषया[८] तज्जन्येन ज्ञानेन च धिय स्तुती मर्जयन्त मार्जयन्ति संस्कुर्वन्ति ॥ २ ॥

अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।
मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥ ३ ॥

अस्मै । इत् । ऊँ इति । त्यम् । उपऽमम् । स्वःऽसाम् । भरामि । आङ्गूषम् । आस्येन ।
मंहिष्ठम् । अच्छोक्तिऽभि । मतीनाम् । सुवृक्तिऽभि । सूरिम् । ववृधध्यै ॥ ३ ॥

स्कन्द० ॥ ३ ॥

वेङ्कट० अस्मै एव तम् उपमानभूतं सर्वस्य दातारम् [९]भरामि आङ्गूषम्[†] स्तोत्रम्[९] आस्येन। दातृतमम् [१०]अभिमुखोक्तिभि स्तुतीनां[१०] सुप्रवृत्तै[११] प्राज्ञं वर्धयितुमाङ्गूष भरामीति[१२] ॥ ३ ॥

मुद्गल० अस्मै इत् उ असौ एवेन्द्राय त्यम् तं प्रसिद्धम् उपमम् उपमानहेतुभूतम् स्वर्षाम् सुष्ठु अरणीयस्य धनस्य दातारम् सूरिम् विपश्चितमिन्द्रम् ववृधध्यै वर्धयितुम् सुवृक्तिभि सुष्ठु आवर्जकै । समर्थैरित्यर्थ । मतीनाम् स्तुतीनां सम्बन्धिभि अच्छोक्तिभि स्वरैर्वाणीभि मंहिष्ठम् अतिशयेन प्रवृद्धम्। एवंलक्षणम् आङ्गूषम् आघोषम् आस्येन मुखेन भरामि। करोमीत्यर्थ ॥३॥

---

१ नास्ति वि २ प्रन्नम् वि[१]. ३ ३ नास्ति वि[१]. ४ ४ नास्ति वि[१] ५ सुवृत्तम् वि[१]
६ "शेषम् वि[१] ७ आवर्जकम् मूको ८ मननसाधनया मूको ९ ९ स्तोत्रं भरामि वि[१] † नास्ति मूको
१० १० स्तुतिभिरभिमुखोक्तिभि, मु ११ "वृत्तै वि[१] अ[१]. १२ भरामि वि[१]

दृष्टान्त प्रय न प्रय इत्यन्ननाम। यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति तद्वत्। कीदृशं स्तोमम्[1]। ओहम् वहनीयम्। अत्यन्तोत्कृष्टमित्यर्थः। न केवलं स्तोमम्। किं तर्हि। ब्रह्माणि हविर्लक्षणान्यन्नानि। कीदृशानि। राततमा पूर्वैर्यजमानैरतिशयेन दत्तानि। इन्द्रं स्तुत्या हविषा च परिचरेमेति भावः ॥ १ ॥

अ॒स्मा इदु॒ प्रयं इव॒ प्र यं॑सि॒ भरा॑म्याङ्गू॒षं बाधे॑ सुवृ॒क्ति ।
इन्द्रा॑य हृ॒दा मन॑सा मनी॒षा प्र॒त्नाय॒ पत्ये॒ धियो॑ मर्जयन्त ॥ २ ॥

अ॒स्मै । इत् । ऊँ इति॑ । प्रय॑ऽइव । प्र । य॒सि॒ । भरा॑मि । आ॒ङ्गू॒षम् । बाधे॑ । सु॒ऽवृ॒क्ति ।
इन्द्रा॑य । हृ॒दा । मन॑सा । म॒नी॒षा । प्र॒त्नाय॑ । पत्ये॑ । धियः॑ । म॒र्ज॒य॒न्त॒ ॥ २ ॥

स्कन्द० ॥ २ ॥

वेङ्कट० अस्मै एव अन्नमिव[1] स्तोत्रं प्रयच्छामि[2]। भरामि स्तोत्रं बाधित्रे[3] सुप्रवृत्तम्[4] इति प्रथमपादोक्तमेवोक्तम्[5]। इन्द्राय हृदादिभिः पुराणाय पालयित्रे कर्माणि संस्कुर्वन्ति ॥ २ ॥

मुद्गल० अस्मै इत् अस्मै एव उ इन्द्राय प्रय इव अन्नमिव प्र यंसि प्रयच्छामि। तदेव स्पष्टीक्रियते। बाधे शत्रूणां बाधनाय समर्थम् सुवृक्ति सुष्ठु आवर्जकम्[6] आङ्गूषम् स्तोत्ररूपमाघोषम् भरामि सम्पादयामि। अन्येऽपि स्तोतारः प्रत्नाय पुराणाय पत्ये स्वामिने इन्द्राय हृदा हृदयेन मनसा तदन्तर्वर्तिनाऽन्तःकरणेन मनीषा मनीषया[7] तज्जन्येन ज्ञानेन च धियः स्तुतीः मर्जयन्त मार्जयन्ति संस्कुर्वन्ति ॥ २ ॥

अ॒स्मा इदु॒ त्यमु॑प॒मं स्व॒र्षां भरा॑म्याङ्गू॒षमा॒स्ये॑न ।
मंहि॑ष्ठ॒मच्छो॑क्तिभिर्मती॒नां सु॑वृ॒क्तिभिः॑ सू॒रिं वा॑वृ॒धध्यै॑ ॥ ३ ॥

अ॒स्मै । इत् । ऊँ इति॑ । त्यम् । उ॒प॒ऽमम् । स्व॒ऽसाम् । भरा॑मि । आ॒ङ्गू॒षम् । आ॒स्ये॑न ।
मंहि॑ष्ठम् । अच्छो॑क्तिऽभिः । म॒ती॒नाम् । सु॒वृ॒क्तिऽभिः॑ । सू॒रिम् । व॒वृ॒धध्यै॑ ॥ ३ ॥

स्कन्द० ॥ ३ ॥

वेङ्कट० अस्मै एव तम् उपमानभूतं सर्वस्य दातारम् भरामि आङ्गूषम्[8] स्तोत्रम्[9] आस्येन। दातृतमम्[10] अभिमुखोक्तिभिः स्तुतीनाम्[11] सुप्रवृत्तैः[11] प्राज्ञं वर्धयितुमाङ्गूषं भरामीति[12] ॥ ३ ॥

मुद्गल० अस्मै इत् उ अस्मै एवेन्द्राय त्यम् तं प्रसिद्धम् उपमम् उपमानहेतुभूतम् स्वर्षाम् सुष्ठु अरणीयस्य धनस्य दातारम् सूरिम् विपश्चितमिन्द्रम् वावृधध्यै वर्धयितुम् सुवृक्तिभिः सुष्ठु आवर्जकैः। समर्थैरित्यर्थः। मतीनाम् स्तुतीनां सम्बन्धिभिः अच्छोक्तिभिः स्वर्द्धंकानि मंहिष्ठम् अतिशयेन मंहनीयम्। पूज्यतमम्। आङ्गूषम् आघोषम् आस्येन मुखेन भरामि। करोमीत्यर्थः ॥ ३ ॥

1 नास्ति वि 2 यच्छाम् वि[1]. 3-3 नास्ति वि[1]. 4-4. नास्ति वि[1] 5 दृष्टव्यं वि[1]
6 °र्जकम् वि[1] 7 मार्जकम् मूको 8 मननरूपया मूको 9-9 स्तोत्रं भरामि वि[1] † नास्ति मूको
10-10. स्तुतीनामभिमुखोक्तिभिः. ग्र. 11 °वृत्तैः वि[1] म[1] 12. भराणि वि[1].

अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।
गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ॥ ४ ॥

अस्मै । इत् । ऊँ इति । स्तोमम् । सम् । हिनोमि । रथम् । न । तष्टाऽइव । तत्ऽसिनाय ।
गिरः । च । गिर्वाहसे । सुऽवृक्ति । इन्द्राय । विश्वम्ऽइन्वम् । मेधिराय ॥ ४ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ ४ ॥

वेङ्कट० [1]अस्मै एवाहं[1] स्तोत्रं संप्रेरयामि[2] रथम् इव संस्कर्ता [3]निष्कृतम् अन्ते[3] तत्सिनाय तेन यो [4]बध्यते तस्मै स्वामिने[4] । गिरः च केवलाः[5] गीर्भिरुह्यमानाय[6] [7]सुप्रवृत्ताः सम् हिनोमि इन्द्राय सर्वस्य प्रीणनं हविश्च यज्ञार्हाय[7] ॥ ४ ॥

मुद्गल० अस्मै इत् उ अस्मै एव इन्द्राय स्तोमम् शस्त्ररूपं स्तोत्रम् सम् हिनोमि प्रेरयामि । दृष्टान्तः । तत्सिनाय तेन रथेन सिनम् अन्नं यस्य स तथोक्तः, तस्मै रथस्वामिने तष्टा इव तष्टा तक्षको रथनिर्माता रथम् न यथा रथं प्रेरयति तद्वत् । इव 'इति पादपूरणम्' । तथा गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमानाय इन्द्राय गिरः च शस्त्रसम्बन्धिनीः केवला ऋचश्च सुवृक्ति शोभनमावर्जनं यथा भवति तथा प्रेरयामि । तथा मेधिराय मेधाविने इन्द्राय विश्वमिन्वम् विश्वव्यापकं सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषङ्गः ॥ ४ ॥

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥ ५ ॥

अस्मै । इत् । ऊँ इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे ।
वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ॥ ५ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ ५ ॥

वेङ्कट० अस्मै एव [9]अश्वमिव अन्नेच्छया[9] इन्द्राय[10] स्तोत्रं वाचा संश्लेषयामि । [11]वीरम् दाननिलयम् असुरपुराणां दारयितारं वन्दितुम् उद्गूर्णान्नम्[†] सम् अञ्जे इति[11] ॥ ५ ॥

मुद्गल० अस्मै इत् उ अस्मै एवेन्द्राय अर्कम् स्तुतिरूपं मन्त्रम् श्रवस्या श्रवस्यया अन्नेच्छया जुह्वा आह्वानसाधनेन वागिन्द्रियेण सम् अञ्जे समक्तं करोमि । एकीकरोमीत्यर्थः । दृष्टान्तः । सप्तिमिव यथान्नलाभाय गन्तुकामः पुमान् अश्व रथेनैकीकरोति तद्वत् । एकीकृत्य च वीरम् शत्रुक्षेपण-कुशलम् दानौकसम् दानानामेकनिलयम् गूर्तश्रवसम् प्रशस्यान्नम् पुराम् असुरपुराणाम् दर्माणम्

---

१-१. नास्ति वि[1]. २. [°]मि इव शब्दोपमार्थे प्रयोग इति पदपूरणम् वि[1] अ[2]. ३-३. नास्ति वि[1] अ[2]. ४-४. [°]ध्यन स ··· ने वि[1]; बाधते[°] कु. ५. च यजुर्लक्षण वि[1] अ[2]. ६. गीर्भिः केवलारिरह्य[°] वि[1] अ[2]. ७-७. [°]वृक्त ··· इ विरच हविश्च यज्ञवते वि[1]; [°]वृक्त· · इविश्च यज्ञवते अ[2]. ८-८. पूरणम् मूको. ९-९. अन्नेच्छया अश्वमिव वि[1] अ[2]. १०. नास्ति वि[1,2] अ[1,2] क कर्प. ११-११. नास्ति वि[1]. † उद्गूर्णान्नम् ऋत्विग्भिरभ्युद्यतहविर्लक्षणान्न वि[1] अ[2].

विदारयितारम्। एवंगुणविशिष्टमिन्द्रम् वन्दध्यै वन्दितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः ॥ ५ ॥

इति प्रथमाष्टके चतुर्थाध्याये सप्तविंशो वर्गः ॥

अस्मा इदु त्वष्टा तक्षद् वज्रं स्वपस्तमं स्वर्यं१ रणाय ।
वृत्रस्य चिद् विदद् येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥ ६ ॥

अस्मै । इत् । ऊँ इति । त्वष्टा । तक्षत् । वज्रम् । स्वपःऽतमम् । स्वर्यम् । रणाय ।
वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥ ६ ॥

स्कन्द ··· ··· ··· ··· ··· ··· ॥ ६ ॥

वेङ्कट० [1]अस्मै एव त्वष्टा अकरोत् वज्रम् अतिशयेन[1] शोभनकर्मयुक्ततमच्छतया शब्दकुशलं युद्धाय। वृत्रस्य चित् विदत् येन वज्रेण [2]मुरुस्थानं हिंसन् ईश्वरः हिंसित्रा वज्रेण[2] कियतो बलस्य धारयितेति बलवन्तमाहेति ॥ ६ ॥

मुद्गल० त्वष्टा विश्वकर्मा अस्मै इत् उ अस्मा एवेन्द्राय वज्रम् वर्जकमायुधम् रणाय युद्धार्थम् तक्षत् तीक्ष्णमकरोत्। कीदृशं वज्रम्। स्वपस्तमम् अतिशयेन शोभनकर्माणम्, स्वर्यम् सुष्ठु शत्रुषु प्रेर्यम्। तुजन् शत्रून् हिंसन् ईशानः ऐश्वर्यवान् कियेधाः बलवान्। एवंगुणविशिष्ट इन्द्रः वृत्रस्य चित् आवरकस्यासुरस्य मर्म मर्मस्थानम् तुजता हिंसता येन वज्रेण विदत् प्राप्नोदित्यर्थः ॥ ६ ॥

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।
मुषायद् विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता ॥ ७ ॥

अस्य । इत् । ऊँ इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु ।
अन्ना । मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥७॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ ७ ॥

वेङ्कट० अस्य एवेन्द्रस्य जगतः निर्मातुः स्वभूतेषु[3] सवनेषु सद्यः एव महत् पानीयं सोमम् पपिवान्, चारूणि च अन्नानि पशुपुरोडाशादीनि[4] भक्षयित्वा मुषितवान् वराहरूपः विष्णुः पचतम् अन्नमसुरपुराणां स्वभूतम्। [5]बलवान् (? °वत्तरः) सन्[5] वराहम् अविध्यदिन्द्रः तिरः वज्रम् क्षेप्ता। वराहो मेघो वराह एव वा। 'वराहोऽयं वाममोषः[6]। सप्तानां गिरीणां परस्तात् वित्तं वेद्यमसुराणां बिभर्ति' (तै ६,२,४,२) इति ब्राह्मणमध्वर्युभ्योऽवगन्तव्यमिति[7] ॥ ७ ॥

मुद्गल० इत् उ[8] [9]इति पादपूरणम्[9]। मातुः सृष्टिद्वारेण[10] सर्वस्य जगतो निर्मातुः महः महतः अस्य यज्ञस्य सवनेषु अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु[11] पितुम् सोमलक्षणमन्नम् सद्यः

---

१-१. ष्टैवेन वि[1] छप. २-२. पुराधान. अभिलषित हिंसा पुरधाने विदन् ईश्वरः वज्रेण वि[1] अ[1]. ३. स्वभूतेषु वि[1] अ[1]. ४. पशु° च वि[1] अ[1]. ५-५. दर्श वा कु. ६. वा मदिरः कृ; वानुचार अर. ७. 'गच्छमिति वि[1] अ[2]. ८. च वि मै[1]. ९-९. पूरणम् मूको. १०. वृष्टि° वि. ११. °षु मा वि.

पवित्रान् यदाऽग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः। तथा चारु अन्ना चारूणि शोभनानि धानाकरम्भादिहविर्लक्षणान्यन्नानि भक्षितवानिति शेषः। किञ्च विष्णुः सर्वस्य जगतो व्यापकः पचतम् परिपक्वमसुराणां धनं यदस्ति तत् मुषायत् अपाहरत्। सहीयान् अतिशयेन शत्रूणामभिभविता अद्रिम् अस्ता अद्रेर्वज्रस्य क्षेपकः। एवंभूत इन्द्रः तिरः प्राप्तः सन् वराहम् मेघम् विध्यत् अताडयत् ॥ ७ ॥

अस्मा इदु ग्नाश्चिद् देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः ।
परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥ ८ ॥

अस्मै। इत्। ऊँ इति। ग्नाः। चित्। देवऽपत्नीः। इन्द्राय। अर्कम्। अहिऽहत्ये। ऊवुरित्यूवुः।
परि। द्यावापृथिवी इति। जभ्रे। उर्वी इति। न। अस्य। ते इति। महिमानम्। परि। स्तः इति स्तः ॥८॥

स्कन्द० ··· ·· ··· ··· ··· ··· ॥ ८ ॥

वेङ्कट० 'असौ एव[1] स्त्रियः देवपत्न्यः इन्द्राय स्तोत्रम् अहिहनने[1] अरक्षन्। अस्तुवन्नित्यर्थः। सोऽयं[2] तेजसा द्यावापृथिवी परिहरति[3]। न अस्य ते महत्त्वम् परितः भवतः[4] ॥ ८ ॥

मुद्गल० अस्मा इत् उ अस्मै एव इन्द्राय अहिहत्ये अहेर्वृत्रस्य हनने निमित्तभूते सति ग्नाः चित् गमनस्वभावा[5] अपि स्थिताः देवपत्नीः देवानां पालयित्र्यः गायत्र्याद्याः देवताः अर्कम् अर्चनसाधनं स्तोत्रम् ऊवुः समतन्वत। चक्रुरित्यर्थः। स च इन्द्रः उर्वी विस्तृते द्यावापृथिवी द्यावापृथिव्यौ परि जभ्रे स्वतेजसा परिजहार। अतिचक्रामेत्यर्थः। अस्य इन्द्रस्य महिमानम् ते द्यावापृथिव्यौ न परि स्तः न परिभवतः[6] ॥ ८ ॥

अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।
स्वराळिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥ ९ ॥

अस्य। इत्। एव। प्र। रिरिचे। महिऽत्वम्। दिवः। पृथिव्याः। परि। अन्तरिक्षात्।
स्वऽराट्। इन्द्रः। दमे। आ। विश्वऽगूर्तः। सुऽअरिः। अमत्रः। ववक्षे। रणाय ॥ ९ ॥

स्कन्द ··· ··· ··· ··· ··· ··· ॥ ९ ॥

वेङ्कट० अस्य एव महत्त्वं त्रिभ्योऽपि लोकेभ्यः प्रकर्षेण अतिरिक्तमासीत्। परिः[8] पञ्चम्यर्थं स्फुटीकरोति। स्वयमेव राजा इन्द्रः गृहे च[9] सर्वैराहूतः[10] शोभनारिः अमत्रः महान् गच्छति युद्धार्थम्[11] ॥ ९ ॥

मुद्गल० अस्य इत एव इत् इति पदपूरणः। अस्यैवेन्द्रस्य महित्वम् माहात्म्यम् प्र रिरिचे अतिरिच्यते।

---

१-१. नास्ति वि[1] अ[3]. २. अभिह° वि[1,3] ह्रपं अ[1]. ३. °ऽय इन्द्रः वि[1] अ[1]. ४. °रति स्म सर्वतः प्राप्नोति यत्र कामयते वि[1] अ[1]. ५. भवतं कु. ६. °भने स्व° वि. ७. विद मूको. ८. परितः वि[1] अ[1]. ९. नास्ति वि[1] अ[3]. १०. °हुतः छ. ११. °द्यार्थः वि[1] अ[1].

अधिक भवतीत्यर्थ । दिव द्युलोकात् पृथिव्याः भूलोकात् अन्तरिक्षात् द्यावापृथिव्योर्मध्ये वर्तमानादन्तरिक्षलोकाच्च[1] परि उपरि इत्यर्थ । त्रीन् लोकानतीत्य उपरि प्ररिरिचे[2] इत्यर्थ । दमे दमयितव्ये विषये स्वराट् स्वेनैव तेजसा राजमान विश्वगूर्त विश्वस्मिन् कार्ये[3] उद्गूर्ण समर्थ स्वरि शोभनशत्रुक शोभने शत्रौ हन्तव्ये सति हन्ता[4] वीर्यवत्तम इति गम्यते। अमत्र. युद्धादिषु गमनकुशल । एवभूत इन्द्र रणाय रणं युद्धम् आ ववक्षे [5]आवहति मयान् प्रापयति[5] । मेघै परस्परं युद्ध कारयित्वा वृष्टि चकारेति भाव. ॥ ९ ॥

अस्येदेव शवसा शुषन्तं वि वृश्चद् वज्रेण वृत्रमिन्द्रः ।
गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥ १० ॥

अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण । वृत्रम् । इन्द्रः ।
गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि । श्रवः । दावने । सऽचेताः ॥ १० ॥

स्कन्द० ॥ १० ॥

वेङ्कट० अस्य एव बलेन शुष्यन्तम् वि वृश्चत् वज्रेण वृत्रम् इन्द्र । गा इव संवृता नदीर्वृत्रात्[6] अभि अमुञ्चत् इम लोक प्रत्यपातयत् अन्नस्य दानाय मनुष्याणाम् सचेता सुमति[7] ॥ १० ॥

मुद्गल० अस्य इत् एव इत् इति पदपूरण । अस्यैवेन्द्रस्य शवसा बलेन शुषन्तम् शुष्यन्तम् वृत्रम् इन्द्र वज्रेण वि वृश्चत् व्यच्छिनत् । तथा गा न चोरैरपहृता गा इव व्राणा वृत्रेण आवृता[8] अवनी रक्षणहेतुभूता अप अमुञ्चत् अवर्षीत् । तथा दावने हविर्दात्रे यजमानाय सचेता येन यजमा नेन समानचित्त सन् श्रव कर्मफलभूतमन्नम् अभि आभिमुख्येन ददातीति शेष ॥ १० ॥

इति प्रथमाष्टके चतुर्थाध्याये अष्टाविंशो वर्ग ॥

अस्येदु त्वेषसा रन्त सिन्धवः परि यद् वज्रेण सीमयच्छत् ।
ईशानकृद् दाशुषे दशस्यन् तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥

अस्य । इत् । ऊँ इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् । वज्रेण । सीम् । अयच्छत् ।
ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधम् । तुर्वणिः । करिति कः ॥ ११ ॥

स्कन्द० ॥ ११ ॥

वेङ्कट० अस्य एव दीप्तेन बलेन [9]कूलयोरन्त नद्यो न[9] गच्छन्ति । यस्मादसौ वज्रेण नदी सर्वत [10]परि अयच्छन्[10] । [11]ऐश्वर्यम् कुर्वन्[11] यजमानाय [12]दर दातुमिच्छन्[12] तुर्वीतये अगाध[13] उदक स्थिताय [14]आपय स्थल कृतवान् शत्रूणा[14] दारक ॥ ११ ॥

मुद्गल० अस्य इत् उ अस्यैवेन्द्रस्य त्वेषसा दीप्तेन बलेन सिन्धव समुद्रा रन्त स्वे स्वे स्थाने रमन्ते ।

---

१. 'दिवे लो' वि २ उपरि च वि ३ कार्ये वि ४ हन्ति मूको ५-५ 'वहति मेघान् प्रापयति वि ६ 'वृत्र लप, वृत्रान् वि[1], वृत्रात् वि[2] ७ मतिरिति कु, शमिति अ[1] ८ वृत्रा मूको ९-९. कूलयोरन्त न अ[1], कुह इलयो रन्त नगन वि[1] लप; कूलयोरन्त न वि[1], कूलयोरगाधो वि[1] अ[1], पुदितम् ल. १०-१० अयच्छन् कु. ११-११. ऐश्वर्यम् वि[1] अ[1] ल कु लप. १२-१२. परमिच्छन् कु, दर्ग मदातु" वि[1] अ[1]. १३ गोध वि[1] अ[1] । गाध ल अ[1]. १४-१४. 'पे यु' ल, 'य स्थलीकृतवान् यु' वि[1] लप; 'पे स्थलकृतवान् यु' वि[1] अ[1].

यत् यस्मात् अयमिन्द्रः वज्रेण सीम् एनान् सिन्धून् वज्रेण परि अयच्छत् परितो नियमितवान्। अपि च ईशानकृत् वृत्रादिशत्रुवधेन आत्मानम् ऐश्वर्यवन्तं कुर्वन् इन्द्रः[1] दाशुषे हविर्दत्तवते यजमानाय फलम् दशस्यन् प्रयच्छन् तुर्वणिः तूर्णसम्भजनः[2]। एवंभूत इन्द्रः तुर्वीतये एतत्संज्ञकाय उदके निमग्नाय ऋषये गाधम् अवस्थानयोग्यम् धिष्ण्यप्रदेशम् कः अकार्षीत् ॥ ११ ॥

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ १२ ॥

अस्मै । इत् । ऊँ इति । प्र । भर । तूतुजानः । वृत्राय । वज्रम् । ईशानः । कियेधाः ।
गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपाम् । चरध्यै ॥ १२ ॥

स्कन्द ··· ··· ··· ··· ··· ··· ॥ १२ ॥

वेङ्कट० अस्मै इत् उ प्र भर[1] त्वरमाणः वृत्राय वज्रम् ईशानः कियतो बलस्य धारयिता[2]। गोः[3] इव पर्वाणि वि रद तिरश्चीनं वृत्रं प्रेरयन् [4]उदकमार्गान् अपाम् चरणाय[5] ॥ १२ ॥

मुद्गल० तूतुजानः त्वरमाणः ईशानः ईश्वरः सर्वेषाम् कियेधाः कियतः अनवधृतपरिमाणस्य बलस्य धाता हे इन्द्र!। एवंभूतस्त्वम् अस्मै वृत्राय वज्रम् प्र भर। इमं वृत्रं वज्रेण प्रहरेत्यर्थः। प्रहृत्य च अर्णांसि वृष्टिजलानि इष्यन् तस्मात् वृत्रात्[7] गमयन् त्वम् अपाम् चरध्यै तासाम् अपां चरणाय भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य पर्व पर्वाणि अवयवसन्धीन् तिरश्चा तिर्यगवस्थितेन वज्रेण वि रद विलिख। छिन्धीत्यर्थः। दृष्टान्तः। गोः न यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत्। इत् उ [8]इति पदपूरणौ[8] ॥१२॥

अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।
युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥ १३ ॥

अस्य । इत् । ऊँ इति । प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः ।
युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ॥ १३ ॥

स्कन्द० ··· ··· ··· ··· ··· ··· ॥ १३ ॥

वेङ्कट० [9]अस्य एव प्र ब्रूहि स्तोतः! प्रत्नानि क्षिप्रस्य[9] कर्माणि, स्तुत्योऽयम् उक्थैः। यदाऽयं[10] युद्धाय आयुधानि प्रेरयन् शत्रून् हिंसन् [11]युद्धात् गमयति, तदा प्र ब्रूहीति[11] ॥ १३ ॥

मुद्गल० उक्थैः शस्त्रैः नव्यः स्तुत्यो य इन्द्रः अस्य इत् उ अस्यैव तुरस्य युद्धार्थं त्वरमाणस्य इन्द्रस्य पूर्व्याणि पुराणानि कर्माणि पूर्वकृतानि बलकर्माणि हे स्तोतः! प्र ब्रूहि प्रब्रूहि।

---

१. नास्ति वि. २. त्वम° वि. ३. हर वि[1] अ[2]. ४. धारयति वि[1] अ[2] क लुप्तं. ५. गोः वि[1] अ[2] कु. ६-६. उदकानि अपां गमय वि[1] अ[2]; °मार्गाद्‌या° कु. ७. नास्ति मै[1]. ८-८. पूरणौ मूको. ९-९. नास्ति वि[1] अ[2]. १०. यदा वि[1] अ[2]. ११-११. युद्धं गच्छति तदा प्र ब्रूहि हे अन्तरात्मन् विस्तृतानि अस्य कर्माणि इन्द्रस्य प्र ब्रूहि स्तुत्य उक्थैर्हिंसितुं युद्धेऽपि कुर्वन् आयुधानि तैश्च सन् निमित्तानि शत्रून् गच्छति वि[1] अ[2].

यत् यदा युधे योधनाय आयुधानि वज्रादीनि इष्णान आभीक्ष्ण्येन[1] प्रेरयन् शत्रून् ऋघायमाण हिंसश्च इन्द्र निरिणाति अभिमुख गच्छति। तदानीं प्र ब्रूहीति[2] पूर्वेण सम्बन्ध ॥ १३ ॥

अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।
उपो वेनस्य जोगुवान ओणिं सद्यो भुवद् वीर्याय नोधाः ॥ १४ ॥

अस्य। इत्। ऊँ इति। भिया। गिरयः। च। दृळ्हा। द्यावा। च। भूम। जनुषः। तुजेते इति। उपो इति। वेनस्य। जोगुवानः। ओणिम्। सद्यः। भुवत्। वीर्याय। नोधाः ॥ १४ ॥

स्कन्द० ॥ १४ ॥

वेङ्कट० अस्य एव भयेन पर्वता च दृढा स्वस्थान तिष्ठन्ति। द्यावाभूमी च प्रादुर्भूतात् कम्पेते। कान्तस्येन्द्रस्य रक्षणम् उपोच्चारयन् सद्य एव भवतु[3] वीर्याय नोधा[4] ॥ १४ ॥

मुद्गल० अस्य इत् उ अस्यैवेन्द्रस्य भिया पक्षच्छेदभयेन गिरय च पर्वता अपि दृळ्हा निश्चला स्वस्वदेशे अवतिष्ठन्ते। जनुष प्रादुर्भूतात् अस्मादेवेन्द्रात् भीत्या द्यावा भूम च द्यावापृथिव्यावपि तुजेते। कम्पेत इत्यर्थ। किञ्च वेनस्य कान्तस्य ओणिम् दुःखस्यापनायक रक्षणम् उपो जोगुवान अनेकै सूक्तै पुन पुन उपशब्दयन्। उपश्लोकयन्नित्यर्थ। एवम्भूत नोधा[5] ऋषि सद्य तदानीमेव वीर्याय भुवत् वीर्यवान् भवेत् ॥ १४ ॥

अस्मा इदु त्यदनु दाय्येषामेको यद् वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥ १५ ॥

अस्मै। इत्। ऊँ इति। त्यत्। अनु। दायि। एषाम्। एकः। यत्। वव्ने। भूरेः। ईशानः। प्र। एतशम्। सूर्ये। पस्पृधानम्। सौवश्व्ये। सुस्विम्। आवत्। इन्द्रः ॥ १५ ॥

स्कन्द० ॥ १५ ॥

वेङ्कट० अस्मै एव तत् स्तोत्रम् एषाम्[6] स्वभूतम् अनु अदायि। यस्मादयम् एक एव धन प्रयच्छति भूरे ईश्वर। प्र आवत् एतशम् नाम सूर्य स्पर्धमान स्वश्वपुत्रे[7] अभिषोतारम् इन्द्र ॥ १५ ॥

मुद्गल० एक एक एव शत्रून् जेतु समर्थ भूरे बहुविधस्य धनस्य ईशान स्वामी यत् स्तोत्रम् वव्ने यथाचे। एषाम् स्तोतॄणा सम्बन्धि त्यत् तत् प्रसिद्ध स्तोत्रम् अस्मै इन्द्राय अनु दायि। प्रकारीत्यर्थ। उत्तरार्धस्य इयमाख्यायिका—स्वश्वो नाम कश्चिद्राजा। स च पुत्रकाम सूर्य मुपासाञ्चक्रे। तस्य च सूर्य एव पुत्रो बभूव। तेन सह एतशनाम्नो महर्षे युद्ध जातमिति। वदेतदिहोच्यते। अयम् इन्द्र सौवश्व्ये स्वश्वपुत्रे सूर्ये पस्पृधानम् स्पर्धमानम् सुष्विम् सोमानाम् अभिषोतारम् एतशम्[8] एतत्सञ्ज्ञमृषिम् प्र आरक्षत्। इत् उ 'इति पदपूरणौ'[8] ॥ १५ ॥

---

१ आभक्ष्णेन मूको २ ब्रूहि वि ३. भति वि[1] अ[3], ४ "धा भवम् वि[3], भवं नोधा कु. स्वगतः वि[3] अ[3], ५. नामि वि ६. "षाम् अस्मानर्ता वि[3] अ[3] ७. स्वश्वस्य पुत्रे कु. ८ ८. पूरणौ मूको

एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।
ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥

एव । ते । हारिऽयोजन । सुऽवृक्ति । इन्द्र । ब्रह्माणि । गोतमासः । अक्रन् ।
आ । एषु । विश्वऽपेशसम् । धियम् । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १६ ॥

स्कन्द० ... ... ... ... ... ... ॥ १६ ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
चतुर्थोऽध्यायः ॥

वेङ्कट० एवम् ते हरी प्रापयितारौ यस्य तस्य सुप्रवृत्तानि इन्द्र[1] । स्तोत्राणि गोतमाः अक्रन्[2] । [3]कृतेषु च एतेषु[3] विश्वरूपां बुद्धिम् [4]आ धाः । प्रायेण[4] स्तुतिमात्रं सूक्तमिति ।

इत्थं चतुर्थमध्यायं व्याकरोत् प्रथमेऽष्टके ।
अष्टकस्य कुले जातो माधवो वेङ्कटात्मजः ॥ १६ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके चतुर्थोऽध्यायः ॥

मुद्गल० हारियोजन! हर्योः अश्वयोः योजनं यस्मिन् रथे स तथोक्तः । तस्य स्वामित्वेन सम्बन्धी हारियोजनः । हे इन्द्र! गोतमासः गोतमगोत्रोत्पन्ना ऋषयः सुवृक्ति सुष्ठु आवर्जकानि अभिमुखीकरणकुशलानि ब्रह्माणि स्तुतिरूपाणि मन्त्रजातानि ते तवैव अक्रन् अकुर्वत । एषु स्तोतृषु विश्वपेशसम् बहुविधरूपयुक्तम् धियम् धिया लभ्यत्वात् धीर्धनमुच्यते । आ धाः धेहि स्थापय । प्रातः इदानीमिव परेद्युरपि प्रातःकाले धियावसुः बुद्ध्या प्राप्तधन इन्द्रः मक्षु शीघ्रम् जगम्यात् अस्मद्रक्षणार्थमागच्छतु ॥ १६ ॥

इति प्रथमाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थोऽध्यायः समाप्तः ॥

१. इन्द्रस्य वि[1]. २. अकुर्वन् वि[1] अ[2]. ३-३. एव कृतेषु वि[1] अ[2]. ४-४. नास्ति वि[2]; आधाः प्राणे ल.

[६२]

प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् ।
सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १ ॥

प्र । मन्महे । शवसानाय । शूषम् । आङ्गूषम् । गिर्वणसे । अङ्गिरस्वत् ।
सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम । अर्कम् । नरे । विऽश्रुताय ॥ १ ॥

स्कन्द० *द्वि[1] इन्द्रदेवत्ये[2] । प्र मन्महे इति यद्यपि याच्ञाकर्मा पठित[3], तथापीह याच्ञाया असम्भवात्[1] मन्यतेरर्चतिकर्मण† इद रूपम् । प्रकर्षेण स्तुम इत्यर्थ । किम् । उच्यते । शवसानाय शूषम् शवसानायेति शवतेर्गतिकर्मण अयम् शसानच्प्रत्यय[4] । 'छन्दस्यसानच् शुजृभ्याम्' (पाउ २,८६) इति । षष्ठ्यर्थे चतुर्थी । शत्रून् प्रति गन्तुरिन्द्रस्य स्वभूत सेनालक्षण बलम् । अथवा 'शव' (निघ २,९) इति बलनाम । सामर्थ्याच्चेहान्वर्णी तमिच्छति । बलवानिवाचरति शवस्यते । ताच्छील्ये चानश्[5] । छान्दसत्वात् चार्धधातुक । शवसानस्य शूषम् । बल्वता यदाचरण तच्छीलस्येन्द्रस्य स्वभूत बलमित्यर्थ । कन । आङ्गूषम् तृतीयार्थे द्वितीयैषा आङ्गूषेण स्तोत्रेण । कीदृशस्येन्द्रस्य । उच्यते । गिर्वणस इयमपि षष्ठ्यर्थे एव चतुर्थी । स्तुतिभिर्वननीयस्य । कथम् । अङ्गिरस्वत् अङ्गिरस[6] इव ऋषय[7] । न केवल शूषम् । किं तर्हि । स्वयमपि सुवृक्तिभि स्तुवते कर्मण्यय व्यत्ययेन शतृप्रत्यय । सर्वत्र द्वितीयार्थे चतुर्थी । दोषैर्वर्जिताभि स्तुतिभिरन्यैरपि स्तोतृभि स्तूयमानम् ऋग्मियाय ऋग्मिय स्तुत्यर्ह स्तुतिमन्त वा अर्चाम स्तुम अर्कम् देवं नर मनुष्याकार विश्रुत विख्यात सर्वत्र । अथवा स्तुवते इत्याद्यास्तादर्थ्ये स्वार्थे एव चतुर्थ्य । अर्चतिस्तु सामर्थ्यादु च्चारणार्थ । 'पितुर्मदर्चता वच' (ऋ १,१०१,१) इति यथा । अर्कशब्दोऽपि मन्त्रवचन । स्तूयमानत्वादिगुणस्येन्द्रस्यार्थाय उच्चारयाम. स्तुतिलक्षण मन्त्रमित्यर्थ ॥ १ ॥

वेङ्कट० 'अथ 'प्र मन्महे' अध्याय माधवो व्याचिकीर्षति ।
अवग्रहविहीनानामादावर्थं प्रदर्शयन् ॥ १ ॥

पदकार. पदानीह भावगूढानि कानिचित् ।
तेषामपि स्वरेणैव कुर्यादर्थविनिर्णयम् ॥ २ ॥

निर्विवक्षेद् बहुव्रीहेरर्थमादौ स्वरो यदि ।
अथ तत्पुरुषस्यार्थमन्ते तिष्ठति चेद् स्वर ॥ ३ ॥

†'जुष्टो दमूना 'अतिथिर्दुरोण'ऽस्य द्वये मन ।
'इषा यातु शवीर्यो'‡ तु यस्या प्रेरण तया' ॥ ४ ॥

* इत आरभ्य १, ६९, २ इति मन्त्रभाष्यस्थस्य 'ज्वालाभ्ना कुटिलस्तन्' इति पर्यन्त त्रुटितम् वि
१. नास्ति भ. २. द्र निघ ३,१९ ३ ३ नास्ति भ † द्र निघ ३,१४. ४ 'शानच्'
मूको ५. ० भ ६. °रसे मूको ७ ऋषये मूको ८. ९ १५७ ## द. ९ ९. भविविद्ये यद
दा°षो । द्वयोरेषा तु यस्या स्वार्थेऽनपेक्षणाभा वेङ्कम. † ऋ ५,४,५. ‡ ऋ १,१०,१७

'भराम्याङ्गूषमास्येन'[1] स्वरात् तत्पुरुषो भवेत् ।
पर्योहो घोष आङ्गूषो घस्थाने गश्च दृश्यते ॥ ५ ॥

'प्रज्ञार्थ घोषदसि'[2] इति यजुः केचिदधीयते ।
कठाः [3]"गोषदसि"† इत्येवं गकारादिमधीयते[3] ॥ ६ ॥

विशेषेण पनायन्तः 'तद्विप्रासो विपन्यवः'[4] ।
कल्लती [5]'कृत्तदन्तो 'वामं देवः'[5] कल्लती[6] ॥ ७ ॥

बहुव्रीहेः स्वरं पश्यध्वं तत्पुरुषस्य च ।
अर्थे दृष्टे स्वरं जह्याद् 'वरुणं चो रिशादसम्'‡[7] ॥ ८ ॥

नोधा.[8] । प्र ब्रूमः[9] बलाचरणशीलाय बलकरणं[10] स्तोमं गीर्भिर्वननीयाय अङ्गिरोवत् । स्तोत्रैः स्तुवते पुरुषाय, यः[11] ऋग्मिः स्तुत्यो भवति तस्मै, ब्रूमः स्तोत्रं नृषु प्रसिद्धाय ॥ १ ॥

मुद्गल० [12]प्रथमे मण्डले एकादशेऽनुवाके चत्वारि सूक्तानि गतानि । 'प्र मन्महे' इति त्रयोदशर्चं पञ्चमं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता[12] ॥

शवसानाय 'शवः' ( निघ २,९ ) इति बलनाम । तदिवाचरते । यथा बलं शत्रून् हन्ति तथा शत्रूणां हन्तेत्यर्थः । गिर्वणसे गीर्भिः स्तुतिलक्षणैर्वचोभिः सम्भजनीयाय । 'गिर्वणा देवो भवति, गीर्भिरेनं वनयन्ति' इति यास्कः ( ६,१४ ) । एवम्भूतायेन्द्राय शूषम् सुखहेतुभूतम् आङ्गूषम् स्तोत्रम् अङ्गिरस्वत् अङ्गिरस इव प्र मन्महे वयं स्तोतारः प्रकर्षेणावगच्छामः । अवगत्य च सुवृक्तिभिः सुष्ठु आवर्जकैः स्तुत्याभिमुखीकरणसमर्थैः स्तोत्रैः स्तुवते स्तोत्रं कुर्वते ऋषये ऋग्मियाय य इन्द्र ऋग्मियोऽर्चनीयो भवति तस्मै नरे सर्वेषां नेत्रे विश्रुताय यष्टव्यतया विशेषेण प्रख्याताय । एवम्भूताय तस्मै अर्कम् मन्त्ररूपं स्तोत्रम् अर्चाम पूजयाम । उच्चारयामेत्यर्थः ॥ १ ॥

प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्यं॑ शवसा॒नाय॒ साम॑ ।
येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन् ॥ २ ॥

प्र । वः॒ । म॒हे । महि॑ । नमः॑ । भ॒रध्व॒म् । आ॒ङ्गू॒ष्य॑म् । श॒व॒सा॒नाय॑ । साम॑ ।
येन॑ । नः॒ । पूर्वे॑ । पि॒तरः॑ । प॒द॒ऽज्ञाः । अर्च॑न्तः । अङ्गि॑रसः । गाः । अवि॑न्दन् ॥ २ ॥

स्कन्द० वः इति प्रथमार्थे द्वितीया । पुत्रस्य पौत्रस्य चायं प्रतिनिर्देशः । ऋत्विजां वा । हे मदीयाः पुत्राः! पौत्रा.! च ऋत्विजो! वा यूयम् महि नमः सोमलक्षणमन्नम् महे महते इन्द्राय प्र भरध्वम् प्रापयत । दत्तेत्यर्थः । आङ्गूष्यम् स्तोमार्हम् शवसानाय । न च केवलं नमः । किं तर्हि । साम वचो मन्त्रलक्षणम् । कीदृशम् । उच्यते । येन नः अस्माकम् पूर्वे पितरः पदज्ञाः पदमत्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मा उच्यते । तज्ज्ञाः । अर्चन्तः इन्द्रं स्तुवन्तः अङ्गिरसः ऋषयः पणिभिरपहृतास्सतीः गाः अविन्दन् प्रतिलब्धवन्त. ॥ २ ॥

---

१. ऋ १,६१,१. २. तै १,१,२,१. ३-३. "घद...गद्य" वि[1]; "घद्सि इत्येवङ्गकं" वि[2,3] अ[1] क कर्,[?] † कठ १,२. ४. ऋ १,२२,२१. ५-५. "वन्दे वामदेवः वेंकम. ६. ऋ ४,१०,२४. ७-७. नास्ति वि[1]. ‡ ऋ ५,६४,१. ८. नास्ति कु. ९. यदुन शत्रून् प्रति गच्छते बला" वि[1] अ[1]. १०. "करं वि[1] अ[1]. ११. नास्ति वि[1] अ[1]. १२-१२. नास्ति मे[1].

मुद्गल० अत्रेदमाख्यानम्—सरमा देवशुनी। पणिभिर्गोष्वपहृतासु तद्गवेषणाय तां सरमामिन्द्रः प्राहैषीत्। यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत्। सा च सरमैवमवोचत्। हे इन्द्र! अस्मदीयाय शिशवे तद्गोसम्बन्धिक्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामीति। स तथेत्यब्रवीत्। ततो गत्वा गवां स्थानम् अज्ञासीत्। ज्ञात्वा चास्मै न्यवेदयत्। तथा निवेदितासु गोषु तमसुरं हत्वा गाः स इन्द्रोऽलभत' इति। अयमर्थोऽस्यां प्रतिपाद्यते। इन्द्रस्य अङ्गिरसाम् ऋषीणाम् च इष्टौ प्रेषणे सति सरमा देवशुनी तनयाय स्वपुत्राय धासिम् अन्नम् विदत् अविन्दत्। तथा गोषु निवेदितासु बृहस्पतिः बृहतां देवानामधिपतिरिन्द्रः अद्रिम् अत्तारमसुरम् भिनत् अवधीत्। तेनापहृताः गाः विदत् अलभत। ततः नरः नेतारो देवाः उस्रियाभिः गोभिः सह सम् वावशन्त भृशं हर्षशब्दमकुर्वन्॥ ३॥

स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः।
सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः॥ ४॥

सः। सुऽस्तुभा। सः। स्तुभा। सप्त। विप्रैः। स्वरेण। अद्रिम्। स्वर्यः। नवऽग्वैः।
सरण्युऽभिः। फलिऽगम्। इन्द्र। शक्र। वलम्। रवेण। दरयः। दशऽग्वैः॥ ४॥

स्कन्द० य उक्तगुणोऽसि सः सुष्टुभा स्तोभतिरर्चतिकर्मा (तु. निघ ३.१४)। शोभनया स्तुत्या। सः एव स्तुभा[1] स्तुतिमात्रेण सप्त सप्तभिः। कैः। सामर्थ्याद् ऋषिभिः। कतमैः। ये एवैते सर्वलोकप्रसिद्धाः सप्तर्षयः। 'सप्तर्षयो[1] भरद्वाजः कश्यपो गौतमोऽत्रिः। विश्वामित्रो जमदग्निर्वसिष्ठः सप्तमः स्मृत.' इति। कीदृशैः। विप्रैः मेधाविभिः। [2]स्वरेण 'स्वरति, वेनति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात् स्वरशब्द इह स्तोतृवचनः। अन्येन च स्तोत्रा जनेन। स्वर्यः स्तुत्यः। नवग्वैः[3] नवा सर्वदैव अभत्वर्जिता गतिर्येषां ते नवग्वाः। नवनीते वा गतिरभिलाषो येषां ते नवग्वाः। [3]अङ्गिरसः। कुत एतत्। 'अङ्गिरसो नः पितरो नवग्वा.' (ऋ १०,१४,६), 'अयास्यो अङ्गिरसो नवग्वा.' (ऋ १०,१०८,८) इत्यादिषु नवग्वा इत्यस्याङ्गिरस्सु प्रसिद्धत्वात्। तैश्च कीदृशैः। सरण्युभिः सरणकामैः। सखित्वात् सर्वत्र त्वया सह सरणकामैः इत्यर्थः[3]। अद्रिम् दुर्गं पर्वतं तत्स्थं च फलिगम् असुरम्। हे इन्द्र! शक्र! शक्त! वलम् च वलम्[4] नामासुरम् रवेण शब्देनैव महता दरयः विदारितवानसि। दशग्वैः दशभिर्मासैः[5] सिद्धिं गतत्वात् दशग्वा भृगव उच्यन्ते। स्वर्य इत्येतेन चास्य सम्बन्धः। भृगुभिश्च स्तुत्यः। यस्त्वं सुष्टुभा स्तुत्यः, स्तुतिमात्रेण च सप्तभिश्चान्येन च स्तोत्रा जनेन अङ्गिरोभिश्च भृगुभिश्च स्तुत्यः, सोऽद्रिं 'फलिगं वलं' महता शब्देनैव व्यदारय इति [6]समस्तार्थः। अथवा 'स सुष्टुभा स स्तुभा' इति तृतीयानिर्देशात् स्तुत[1] सन्निति वाक्यशेषः। सप्त विप्रैरित्याद्याश्च सहयोगलक्षणास्तृतीयाः[7]। स्वरेण स्वर्य इत्येतावपि स्वृ शब्दोपतापयोः 'इत्यस्य उपतापयितृवचनौ। यस्त्वं स्वर्यं उपतापयिता शत्रूणां[1] सुष्टुभा[8] स्तुतिमात्रेण च स्तुतः[1] सन् सप्तर्षिभिरङ्गिरोभिर्भृगुभिश्च सह स्वरेण शत्रूणामुपतापयित्रा वज्रेण रवेण शब्देन च महता अद्रिं [9]व्यदारय इति। तथा च योद्धॄनृषीनपि समरमादर्शयिष्यति—'एह गमन्नृषयः[1] सोमशिताः' (ऋ १०,१०८,८) इति, 'बृहस्पतिर्यो अविन्दन्निगूळ्हाः सोमो

1. °ये इति मै[1]. 2. ‥भा भ. 3-3. नास्ति भ. 4. वलं भ. 5. दशमासै. कु. 6-6. फलिगमात् भ; फलिगं कु. 7. °ऽथा तृतीया कु. 8. सिष्टुभाः भ. 9. व्यदारयः कु.

ग्रावाण ऋषयश्च विप्राः' ( ऋ १०,१०८,११ ) इति च ॥ ४ ॥

वेङ्कट० सः इन्द्रः स्तोत्रेण शोभनेन [1]सप्तभिः ऋषिभिः[1] प्रयुज्यमानेन आगतबलः सिंहनादेन अद्रिम् स्वरणकुशलः[2] अङ्गिरोभिः सह दारयति[3] । तदनुसरणमिच्छद्भिः[4] दशग्वैः अङ्गिरोभिर्वृष्टिकारम् फलिगम् मेघाकारम् वलम्[5] असुरम् इन्द्र! शक्र! दारितवानसि । नवभिर्मासैरङ्गिरसः सत्रमासीनेषु केचन पशूनलभन्त, दशभिरपरे । ततो नवग्वा दशग्वाश्चोच्यन्ते । [6]यास्कस्त्वाह— 'नवगतयो नवनीतगतयो वा' ( या ११,१९ ) इति[6] ॥ ४ ॥

मुद्गल० अङ्गिरसो द्विविधाः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गताः ते नवग्वाः । ये तु दशभिर्मासैः समाप्य जग्मुः ते दशग्वाः । तादृशैरुभयविधैः विप्रैः मेधाविभिः सरण्युभिः सरणं शोभनां गतिमिच्छद्भिः सप्त सप्तसंख्याकैः । सप्त ह्यत्र मेधातिथिप्रमुखा येऽङ्गिरसो दृश्यन्ते । एवम्भूतैरङ्गिरोभिः सुष्टुभा शोभनस्तोभयुक्तेन[7] स्वरेण उदात्तादिस्वरयुक्तेन[8] 'स्तुभा स्तोत्रेण' स्वर्यः सुष्ठु प्राप्यः सः त्वम् हे शक्र! शक्तिमन्! इन्द्र! । एवम्भूतः सः त्वम् अद्रिम् आदरणीयम् । वज्रेण छेत्तव्यमित्यर्थः । फलिगम् फलं प्रतिबिम्बम्, तदाश्रिनत्तीति[9] फलि स्वच्छमुदकम्, तद् गच्छत्याधारत्वेनेति फलिगः । एवम्भूतम् वलम् मेघम्[11] रवेण आत्मीयेन शब्देन दरयः अभीपयः । त्वदीयशब्दश्रवणमात्रेण[12] मेघो बिभेतीत्यर्थः ॥ ४ ॥

गृ॒णा॒नो अङ्गि॑रोभिर्दस्म॒ वि व॑रु॒षसा॒ सूर्ये॑ण॒ गोभि॒रन्धः॑ ।
वि भूम्या॑ अप्रथय इन्द्र॒ सानु॑ दि॒वो रज॒ उप॑रमस्तभायः ॥ ५ ॥

गृ॒णा॒नः । अङ्गि॑रःऽभिः । द॒स्म॒ । वि । व॒रिति॑ व॒ः । उ॒षसा॑ । सूर्ये॑ण । गोभिः॑ । अन्धः॑ ।
वि । भूम्याः॑ । अ॒प्र॒थ॒यः॒ । इ॒न्द्र॒ । सानु॑ । दि॒वः । रजः॑ । उप॑रम् । अ॒स्त॒भा॒यः॒ ॥ ५ ॥

स्कन्द० गृणानः स्तूयमानः अङ्गिरोभिः हे दस्म! शत्रूणाम् [13]उपक्षपयितः! वि वः विवृतमकार्षीः । केन । उषसा सूर्येण च । गोभिः रश्मयः[13] अत्र गाव उच्यन्ते । 'यत्र गावो भूरिशृङ्गाः' ( ऋ १,१५४,६ ) इति यथा । [14]रश्मिभिश्च । अन्धः तमोऽत्रान्ध उच्यते[14] । गवामदर्शनाय यत्पणिभिः कृतं तमस्तत् । सर्वैर्ज्योतिर्भिः [15]प्रकाशमकार्षीरित्यर्थः । अथवा वः इति उषसा सूर्येणेति[15] एताभ्यामेव द्वाभ्यां सम्बध्यते । गोभिरित्येतत्तु गृणान इत्येतेन सम्बध्यते । गोशब्दश्च स्तुतिवचनः । [16]'गोभिर्यदीमन्ये अस्मत्' ( ऋ ८,२,६ ) इति यथा । स्तुतिभिः[16] स्तूयमान इत्यर्थः । [17]अथवा गोशब्दः साधादिमद्वचन एव । सहयोगलक्षणा तु तृतीया । 'अन्धः' (निघ २, ७) इति अन्ननाम । दुर्लभं यत् पणीनामन्नं तदपहृताभिर्गोभिः सह प्रकाशमकार्षीरित्यर्थः । एतस्मिन्नर्थे उषसा सूर्येण इति तृतीया सहयोगलक्षणापि सम्भवति । उषसा[17] सूर्येण च[14] सह विवृतमकार्षीः[15] इति । किञ्च वि भूम्याः[16] अप्रथयः विशब्दोऽत्र विगमे । पणीनां स्वभूतायाः भूमेः वि अप्रथयः विगतप्रथनमकरोः । हे इन्द्र! सानु उच्छ्रितं प्रदेशम्[18] । पणीनामुच्छ्रितानि गिरिदुर्गाणि पातितवानसीत्यर्थः । किञ्च दिवः रजः उपरम् रजः[19] लोकः । उपरि भवति इति[20] उपरः ।

1-1. सप्तऋषिभिः वि[1] अ[2]. 2. °णे कु° वर्प. 3. दरयति ष; दरयसि वि[1] अ[1]. 4. °नुसरण° वि[1] अ[1] कु वर्प. 5. नास्ति वि[1] अ[1]. 6-6. नास्ति वि[1] अ[1]. 7. शोभनस्तु° मूको. 8. °दिस्व° मे°. 9-9. नास्ति मूको. 10. तदिव° मूको. 11. °ये स्तुभा मूको. 12. °श्रवण° मे°. 13-13. नास्ति भ. 14-14. °भिश्चान्धं तमो° भ. 15. नास्ति भ. 16. °द्युः भ. 17. भूम्या भ.

दिव उपरि भवो लोकः महआख्यः तपआख्यो वा । तमपि त्वमेव अस्तभायः स्तभ्नातिः[१] प्रतिबन्धार्थः । सोऽपि त्वत्प्रतिबन्ध एवेत्यर्थः ॥ ५ ॥

वेङ्कट० 'उपस्तूयमानः अङ्गिरोभिः उपक्षपयितः! विदारितवानसि† उपसा सूर्येण च सहायाभ्याम्[२]। पशुनिमित्तम् अन्धकारम् भूम्याः च उच्छ्रितं देशम् वि अप्रथयः विषमां[३] समीचकर्थ । दिवः लोकस्य मूलम् अधः स्थित्वा[४] अस्तभ्नाः[५] ॥ ५ ॥

मुद्गल० हे दस्म! दर्शनीय! शत्रूणामुपक्षपयित.! वा इन्द्र! त्वम् अङ्गिरोभिः ऋषिभिः गृणानः स्तूयमानः सन् उपसा सूर्येण च सह गोभिः किरणैः अन्धकारम् वि वः व्यवृणोः । व्यनाशय इत्यर्थः । तथा हे इन्द्र! त्वम् भूम्याः पृथिव्याः सानु समुच्छ्रितप्रदेशम् वि अप्रथयः विशेषेण विस्तीर्णमकरोः । विषमामिमां समीकृतवानित्यर्थः । तथा दिव. अन्तरिक्षस्य रजः रजसो लोकस्य उपरम् उपरं मूलप्रदेशम् अस्तभायः अस्तम्नाः[६] । यथा अन्तरिक्षस्य मूलं दृढं भवति तथाऽकार्षीरित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये प्रथमो वर्गः ॥

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रः ॥ ६ ॥

तत् । ऊँ इति । प्रयक्षऽतमम् । अस्य । कर्म । दस्मस्य । चारुऽतमम् । अस्ति । दंसः ।
उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ॥ ६ ॥

स्कन्द० तत् उ उकार एवार्थे । तदेव प्रयक्षतमम्[७] यक्ष पूजायाम् । प्रकर्षेण 'पूज्यतमम् अस्य' इन्द्रस्य कर्म दस्मस्य शत्रूणामुपक्षपयितुः चारुतमम् अस्ति दंसः । एकवाक्यताप्रसिद्ध्यर्थं यदपि तदपीत्येतद्द्वयमप्यत्राध्याहर्तव्यम् । यदपि चारुकर्म शोभनतममन्यदस्ति दंसः कर्म असुरवधादि तथापि[८] त्रैलोक्यस्थितिहेतुत्वात्तदेव प्रयक्षतममस्येति । कतमत् । उच्यते— उपह्वरे ह्वरतिरत्तिकर्मा (द्र. निघ २, ८) । ह्वरो भक्षः । तस्य समीपे उपह्वरे । हविर्भक्षणानन्तरं सोमपानानन्तरं चेत्यर्थः[९] । [१०]अथवा उपह्वरोऽन्तरिक्षप्रदेशः[१०] तत्र । यत् उपराः मेघनामैतत् (द्र. निघ १, १०) । आश्रयापेक्षं चात्र स्त्रीलिङ्गम् । मेघनाडीः[११] अपिन्वन् अन्तर्णीतण्यर्थोऽत्र पिन्विर्द्रष्टव्यः । अपिन्वयत् असेचयत् । क्षारितवान् [१२]इत्यर्थः । कीदृशीः । मध्वर्णसः[१२] मधुरोदकाः नद्यः शब्दकारिणीः चतसः चतुस्संख्याकाः । अथवा चतस्रः इति कर्मप्रवचनीययोगलक्षणा द्वितीया । तच्छ्रुतेश्च [१३]कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः[१३] । चतस्रो दिशः प्रति । चतसृष्वपि दिक्ष्वित्यर्थः ॥ ६ ॥

वेङ्कट० तत् एव पूज्यतमम् अस्य कर्म । दर्शनीयस्य कल्याणतमम् अस्ति कर्म । किं तदित्याह— उपह्वरे इति, चतस्रः दिशः मधूदकाः नदीः मनुष्यसमीपे अदुहत्[१४] दिग्भ्यो नदीर्मनुष्यान् प्रापयति ॥ ६ ॥

---

१. स्तभ्नो[०] भ. २-२. नास्ति वि[१] अ[१]. † विदारि[०] अ[१]; दारि[०] कर्प. ३. विषमा वि[११] कर्प; विषमं छ लोभ. ४. [०]वा इन्द्र स्तोत्रेण शोभनेन्द्रस्तवानाः वि[१] अ[१]. ५. मस्तभ्नः छर्प. ६. मस्तभाय मूको. ७. [०]तमः दक्षभो भ. ८-८. पूजनीयस्य भ. ९. नास्ति भ. १०-१०. [०]देशे[०] भ. ११. [०]नाडिः कै. १२-१२. नास्ति भ. १३-१३. [०]नीयमविशब्दाध्याहार. भ. १४. वदाहन् वि[१] अ; भदुह कर्प,

मुद्गल० अस्य दस्मस्य दर्शनीयस्य इन्द्रस्य तत् उ तदेव कर्म अत्यक्षतमम् अतिशयेन पूज्यम् दंसः कर्म चारुतमम् अतिशयेन शोभनम् अस्ति। किं तदित्यत आह—अयमिन्द्रः उपह्वरे उपह्वर्तव्ये गन्तव्ये पृथिव्याः सम्बन्धिनि समीपे देशे उपराः उम्राः स्थापिताः[१]। मध्वर्णसः मधुरोदकाः चतस्रः नद्यः प्रधानभूताः गङ्गानदीः अपिन्वत् असिञ्चत् इति। यत् एतत् कर्म तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः ॥ ६ ॥

द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः।
भगो न मेने परमे व्योमन्नधारयद् रोदसी सुदंसाः ॥ ७ ॥

द्विता। वि। वव्रे। सनऽजा। सनीळे इति सऽनीळे। अयास्यः। स्तवमानेभिः। अर्कैः।
भगः। न। मेने इति। परमे। विऽओमन्। अधारयत्। रोदसी इति। सुऽदंसाः ॥ ७ ॥

स्कन्द० द्विता[२] द्विताशब्दो द्विधाशब्दस्यार्थे। वि-शब्दश्चात्रानेकत्वप्रतिपादनमात्रपरः। अनेकधाऽपि वव्रे सम्भक्तवान्[३]। सनजा सनशब्दश्चिरपर्यायः [४]चिरजाते। के। सामर्थ्यात् द्यावापृथिव्यौ। कीदृश्यौ। सनीळे समानस्थाने सृष्टिकालोत्पत्ते। एकस्मिन् कारणात्मनि व्यवस्थिते उभे अपि द्यावापृथिव्यावनेकधा सम्भक्तवानित्यर्थः। कीदृशः। उच्यते—अयास्यः अयास्यो नामाङ्गिरसोऽभिप्रेत.[४]†। कथमवगम्यते। 'एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः' (ऋ १०, १०८, ८) इति दर्शनात्। स्तवमानेभिः प्रथमार्थे तृतीयैषा। इन्द्रं स्तुवन्[५] अर्कैः मन्त्रैः। इन्द्रप्रसादादित्यर्थः। अथवा आनेतुमशक्यत्वादयास्य[६] इन्द्र एवोच्यते। स्तवमानेभिरिति तु कर्मणि शानच् प्रत्ययो[७] द्रष्टव्यः। मन्त्रैः स्तूयमान इन्द्र उभे अपि द्यावापृथिव्यौ सम्भक्तवान् इत्यर्थः। किञ्च, भगः न मेने भग आदित्यः। मेने स्त्रियौ रात्र्युषसाविहाभिप्रेते। यथा आदित्यो रात्र्युषसोः तदायत्तत्वात् तत्स्थितेः। एवम् परमे व्योमन् स्थाने कारणात्माख्ये। अधारयत् रोदसी सुदंसाः सुकर्मा इन्द्रः। कृत्स्नस्य हि जगतो धारणं धर्मायत्तम्। धर्माधर्मौ वृष्टिद्वारकत्वादिन्द्रायत्तौ। अत एतदुच्यते। अधारयद्रोदसी सुदंसाः इति ॥ ७ ॥

वेङ्कट० द्वैधम् वि वव्रे चिरजाते[८] एकाधारे[९] द्यावापृथिवी स्तूयमानैः[१०] स्तोत्रैरिन्द्रः गमनकुशलः। भग इव अहोरात्रे परमे व्योम्नि अन्तरिक्षे द्यावापृथिव्यौ धारयति सुकर्मा ॥ ७ ॥

मुद्गल० अयास्यः यासः प्रयत्नः तत्साध्यो यास्यः, न यास्यः अयास्यः। सुकरैः प्रयत्नैः साधयितुमशक्य इत्यर्थः। कथं साध्य इत्यत आह—स्तवमानेभिः स्तोत्रं कुर्वद्भिः पुरुषैः। अर्कैः स्तुतिरूपैर्मन्त्रैः स्तूयमानः सन्निन्द्रः सुसाध्यो भवति। सनजा सनेति निपातो नित्यार्थः। नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः। 'प्रथमभावविकारवाचिना जनिना[११] द्वितीयो भावविकारः सत्ता लक्ष्यते। यथा 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति औत्पत्तिकनित्य इत्यर्थः इति शबरभाष्यम्[१२] (१, १, ५)। सनीळे समाने नीळं निवासस्थानं ययोस्ते। संलग्ने इत्यर्थः। एवंविधे द्यावापृथिव्यौ द्विता द्विधा वि वव्रे विवृते अकरोत्। भेदेनास्थापयदित्यर्थः। मेने मननीये परमे उत्कृष्टे व्योमन् व्योमनि विविधरक्षणे नभसि वर्तमानः भगः न

१. स्थापिताः मूको. २. नास्ति भ. ३. सेभुक्त° मूको. ३-४. नास्ति भ. † °प्रेतः. मूको. ५. स्तुवन् भ. ६. आनेतु° द्र. ७. तत्र° द्र; शानच्° भ. ८. चरिता° भ°; प्रतिपा वि°. ९. °रूढौ वि°. १०. °स्तुवद्भिः द्र लोप; °मानतो° वि°. ११. जनितार् मूको. १२. शबरस्य मूको मा.

सूर्य इव सुदंसाः शोभनकर्मा इन्द्रः रोदसी द्यावापृथिव्यौ अधारयत् अपोषयत् ॥ ७ ॥

सनाद् दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।
कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥ ८ ॥

सनात् । दिवम् । परि । भूम । विरूपे इति विऽरूपे । पुनःऽभुवा । युवती इति । स्वेभिः । एवैः ।
कृष्णेभिः । अक्ता । उषाः । रुशत्ऽभिः । वपुःऽभिः । आ । चरतः । अन्याऽअन्या ॥ ८ ॥

स्कन्द० सनाद् इति पञ्चमीनिर्देशात् प्रभृतीति वाक्यशेषः, चिरात्प्रभृति । दिवम् परि द्युलोकं प्रति । [1]भूमशब्दोऽत्र भूतजातवचनः । 'द्यावा च भूमा जनुषस्तुजेते' ( ऋ १,६१,१४ ) इति यथा । सर्वं भूतजातम्[1] । विरूपे पुनर्भुवा पुनःपुनर्भाविन्यौ[2] । युवती सर्वदैव तरुण्यौ जरावर्जिते । नित्ये इत्यर्थः । स्वेभिः एवैः अवतेर्गत्यर्थस्य एवानि आगमनान्यत्राभिप्रेतानि । आत्मीयैर्नियतकाले-रागमनैः । कृष्णेभिः अक्ता शुद्धोऽपि चात्रानुपूर्व्यार्थे[3] द्रष्टव्यः । कृष्णैरनुगता[4] । काऽसौ । सामर्थ्याद्रात्रिः । उषाः रुशद्भिः दीप्तैः शुक्लैः अनुगता । कैः । वपुर्भिः रूपनामैतत् ( तु. निघ ३,७ ) । तमो-लक्षणैः ज्योतिर्लक्षणैश्च रूपैः । आ चरतः गच्छतः । न केवलं । दिवं भूतजातं च प्रति । किं तर्हि । अन्यान्या अन्योन्यञ्च । रात्रिर्हि तमोलक्षणेन रूपेणोपसं[5] प्रत्यागच्छति, उषःकालेऽपि तमसोऽनुगमनदर्शनात् । उषा अपि ज्योतिर्लक्षणेन रूपेण 'रात्रिं प्रत्यागच्छति', रात्रावपि कियतश्चित् प्रकाशस्याऽनुगमदर्शनादिति । चिरादेव प्रभृति विरूपत्वादिगुणे राज्युषसौ कृष्ण-शुक्लाभ्यां तमोज्योतीरूपाभ्यामनुगते नियतकालैः आत्मीयैरागमनैर्दिवं सर्वं च भूतजातमन्योन्यञ्च प्रत्यागच्छतः इति समस्तार्थः । एवमियमृक् [6]स्वरूपेणैव राज्युषःकर्मकीर्तनमात्ररूपत्वाद्राज्युषो-देवतां[7] प्राप्नोति । ऐन्द्रं चेदं सूक्तम् । अतो यत्तच्छब्दावध्याहृत्य पूर्वयर्चा एकवाक्यता योज्या परया वा । ये विरूपत्वादिगुणे राज्युषसौ दिवं भूतजातमन्योन्यं[8] च प्रत्यागच्छतस्ते अप्यधारयत्, न केवले रोदसी—इत्येवं पूर्वयैकवाक्यता । परया तु ये विरूपत्वादिगुणे राज्युषसौ दिवं भूतजातमन्योन्यं[9] च प्रत्यागच्छतस्ताभ्यां सहेति ॥ ८ ॥

वेङ्कट० चिरादारभ्य दिवम्[10] भूमिञ्च लक्ष्यीकृत्य[11] नानारूपे पुनःपुनर्जायमाने तरुणे स्वैः गमनैः अहोरात्रे चरतः । रात्रिः कृष्णैः वर्णैश्चरति, [12]श्वेतैः अहः । एवम्[12] अन्यान्या[13] आ चरतः एकस्या उपर्यन्या तस्या उपर्यन्येति ॥ ८ ॥

मुद्गल० विरूपे शुक्लकृष्णतया विषमरूपे पुनर्भुवा पुनःपुनः प्रतिदिवसं जायमाने युवती तरुण्यौ राज्युषसोः सर्वदैकरूप्यात् । एवंभूते राज्युषसौ दिवम् द्युलोकम् भूम भूमिञ्च सनात् चिरकाला-दारभ्य स्वेभिः एवैः स्वकीयैर्गमनैः परि चरतः पर्यावर्तेते । अयमेवार्थः स्पष्टीक्रियते । अक्ता रात्रिः कृष्णेभिः अन्धकाररूपैर्वर्णैरुपलक्षिता उषाः च रुशद्भिः दीप्यमानैः वपुर्भिः स्वशरीरभूतैस्ते-जोभिरुपलक्षिता अन्यान्या परस्परव्यतिहारेण आ चरतः आवर्तेते । हे इन्द्र! एतत्सर्वं त्वयैव कार्यते, त्वदधीनत्वात् सर्वासां देवतानामित्यर्थः ॥ ८ ॥

---

१-१. नास्ति अ. २. नास्ति अ. ३. °न्योर्थे अ. ४. °नुरक्ता कु. ५. °पसः अ. ६-६. स्वरूपेणैव राज्युषःकर्म अ. ; ७. देवता मूको. ८ भूतमन्यो° अ. ९. °जातं अ. १०. °वं भूतजातं च वि[१] अ[१]. ११. °लीकृ° अ[१२] वि[१]. १२-१२. श्वेतैश्चैरहरहरं' अ[२]; श्वेतैर्वर्णैरहरे' वि[१]. १३. अन्या च° वि[१] अ[१].

सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।
आमासु चिद् दधिषे पक्वमन्तः पयः कृष्णासु रुशद् रोहिणीषु ॥ ९ ॥

सनेमि । सख्यम् । सुऽअपस्यमानः । सूनुः । दाधार । शवसा । सुऽदंसाः ।
आमासु । चित् । दधिषे । पक्वम् । अन्तरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ॥ ९ ॥

स्कन्द० सनेमि[1] 'सनेमि' ( निघ ३,२७ ) इति पुराणनाम । चिरन्तनम् सख्यम् स्वपस्यमानः शोभनानि 'कर्माणि येषां ते स्वपसः† स्थितप्रकृतयोऽत्यन्तमहात्मानः, तद्वदाचरन्[2] स्वपस्यमानः । आत्मीययोर्मातापित्रोः सूनुः पुत्रः दाधार धारयति शवसा स्वेन बलेन सुदंसाः सुकर्मा । इन्द्रः शत्रुघोर्भ्यां सह पूर्वप्रवृत्तं सख्यं न जहातीत्येवमिह[3] व्याख्यातव्यम्[4] । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । आमासु चित् आममपक्वम् । अपक्वास्वपि अभक्षयोग्यास्वपि सतीष्वित्यर्थः । दधिषे वृष्टिद्वारेण त्वं[5] धारयसि पक्वम् भक्षयोग्यम् अन्तः मध्ये पयः क्षीरम् कृष्णासु अपि गोषु रुशत् दीप्तम् । शुक्लमित्यर्थः । रोहिणीषु रोहितासु च । एवदुक्तं भवति— सर्वत्र कारणानुरूपं कार्यम् । भवतस्त्वेतन्माहात्म्यादभक्ष्यासु 'कृष्णासु रोहितासु' च गोषु भक्ष्यं शुक्लञ्च पय इति ॥ ९ ॥

वेङ्कट० पुराणम् सख्यम् शोभनानि कर्माणीच्छन् शवसा स्तूयमान इति । इन्द्रं बलवत्तयाह— 'ओजसो जातमुतमन्य एनम्' ( ऋ १०,७३,१० ) इति मन्त्रः । सुकर्मा त्वम् आर्द्रासु कृष्णासु "रोहिणीषु च" गोषु पक्वम् श्वेतं पयः अन्तः धारयसि[6] ॥ ९ ॥

मुद्गल० स्वपस्यमानः स्वपः शोभनं कर्म, तदिवाचरन् शवसा शवसो बलस्य सूनुः पुत्रः । अतिबलवानित्यर्थः । सुदंसाः शोभनयागादिकर्मयुक्तः । एवम्भूतः इन्द्रः सख्यम् यजमानानां सखित्वम् सनेमि पुराणम् दाधार धारयति । पोपयतीत्यर्थः । किञ्च आमासु चित् आर्द्रासु अपरिपक्वासु गोषु च अन्तः मध्ये पक्वम् परिपक्वम् पयः दधिषे धारयसि । तथा कृष्णासु कृष्णवर्णासु रोहिणीषु लोहितवर्णासु च गोषु तद्विपरीतम् रुशत् दीप्यमानं श्वेतवर्णं पयो दधिषे ॥ ९ ॥

सनात् सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः ।
पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम् ॥ १० ॥

सनात् । सऽनीळाः । अवनीः । अवाताः । व्रता । रक्षन्ते । अमृताः । सहःऽभिः ।
पुरु । सहस्रा । जनयः । न । पत्नीः । दुवस्यन्ति । स्वसारः । अह्रयाणम् ॥ १० ॥

स्कन्द० सनात् चिरादेव प्रभृति सनीळाः समानमिन्द्राख्यं स्थानं यासां ताः सनीळाः । केवलेन्द्रविषया इत्यर्थः । काः पुनस्ताः । स्तुतयः । कीदृश्यः । अवनीः अवतेः प्रीत्यर्थस्येदं रूपम् ।

---

1. नास्ति मूको. २-२. नास्ति भ. † स्वप. मूको. ३. 'ताविमिह भ; 'त्यमिवे' कु. ४. 'व्यम्. मूको. ५. नास्ति कु. ६-६. 'ष्णासु' कु. ७-७. '[illegible] न [illegible]'; '[illegible]' करे. ८. '[illegible]' कु.

प्रीतिजनन्यः अवाताः वातिर्गतिकर्मा (तु. निघ २,१४) । अगतपूर्वा अन्यत्र स्तुत्ये । व्रता वृत्रवधादीनीन्द्रस्य कर्माणि । रक्षन्ते [1]अमृताः नित्याः[1] सहोभिः बलैः सह । अकीर्त्यमानानि हीन्द्रस्य कर्माणि च बलानि च विस्मरणाद् विलयं गच्छेयुः । तानि कीर्तयन्त्यः स्तुतयो रक्षन्तीत्युच्यते । कियत्यः स्तुतयो व्रतानि वा । उच्यते । पुरु सहस्रा बहूनि सहस्राणि । कथं पुना रक्षन्ति । उच्यते । जनयः न पत्नीः अनिशब्दोऽत्र जननीवचनो द्रष्टव्यः । नशब्दश्चोपमार्थीयः पत्नीरित्यत्राप्यनुषक्तव्यः । जनन्य इव पत्न्य इव च[2] । यथा मातरो भार्या वा महता यत्नेन पुत्रं पतिं वा रक्षेयुः[3] तद्वदित्यर्थः । ... ... ... ... ... ॥ १० ॥

वेङ्कट० चिरादारभ्य पाणेरेकस्मादुत्पन्नाः[4] अङ्गुलयः[5] सुश्लिष्टाः कर्माणि रक्षन्ते [6]कार्यकरणवेगैः अम्लानाः†[6] पुरूणि सहस्राणीन्द्रार्थम्[7] । पुत्रजनयः[8] पत्न्यः इव पुमांसम् अहीतयानमिन्द्रम्[9] अङ्गुल्यः परिचरन्ति ॥ १० ॥

मुद्गल० सनात् चिरकालादारभ्य सनीळाः समाननिवासस्थानाः अवाताः वातं गमनं तद्रहिताः एकपाण्यवस्थानात् । अवनीः अङ्गुलयः पुरु पुरूणि बहूनि सहस्रा असंख्यातानि व्रता व्रतानि इन्द्रसम्बन्धीनि कर्माणि अमृताः पुनःपुनः करणेऽप्यालस्यरहिताः सत्यः सहोभिः आत्मीयैर्बलैः रक्षन्ते पालयन्ति । अपि च स्वसारः स्वयमेव सरन्त्योऽङ्गुलयः पत्नीः पालयित्र्यः अह्रयाणम् लज्जारहितम् । प्रगल्भमित्यर्थः । जनयः न देवानां पत्न्य इव दुवस्यन्ति परिचरन्ति । अञ्जलिबन्धनेनेन्द्रं प्रीणयन्तीत्यर्थः ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये द्वितीयो वर्गः ॥

सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।
पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन् मनीषाः ॥ ११ ॥

सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः । दस्म । दद्रुः ।
पतिम् । न । पत्नीः । उशतीः । उशन्तम् । स्पृशन्ति । त्वा । शवसाऽवन् । मनीषाः ॥ ११ ॥

स्कन्द० अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यस्त्वम् नमसा नमस्कारेण नव्यः स्तुत्यः *अर्कैः मन्त्रैश्च, तम् सनायुवः चिरकामाः वसूयवः धनकामाः मतयः अस्मदीयाः स्तुतयः ।* चिरं धनमिच्छन्त्योऽस्मदीयाः स्तुतय इत्यर्थः । यश्च स्तोतॄणां कामः स स्तुतिषु पूर्यते । किं कुर्वन्ति । उच्यते । हे दस्म । दद्रुः गच्छन्ति [10]त्वां प्रति[10] । गत्वा च पतिम् न[2] पत्नीः उशतीः उशन्तम् स्पृशन्ति [11]त्वा । त्वया सह सम्बध्यन्त इत्यर्थः । शवसावन् । मनीषाः[11] हे शवसावन् ! बलवन् ! मनीषाः मनसैषणीयाः । अत्यन्तोत्कृष्टा इत्यर्थः । स्तुतिवचनो वा मनीषाशब्दः । मतय इत्येतेन च गमनसम्बन्धित्वेन स्तुतय उपात्ताः, न स्पर्शसम्बन्धित्वेनेत्येवमपुनरुक्तत्वम् ॥ ११ ॥

---

१-१. अमृतानित्यर्थः भ. २. नास्ति भ. ३. रक्षयेयुः कु. ४. उभयोः पाण्योरुत्पन्ना वि[1] अ[1]. ५. °गुल्यः कु. ६-६. कर्माणि रक्षन्तेकोर्यकारण···श्लानाः वि[1] अ[1]. † ग्लानाः वि[1] ल अ[1]. ७. °राणि-कर्माणीन्द्रा° वि[1] अ[1]. ८. पुत्रज° वि[1] अ[1]; जनयः कु. ९. अहित° कु; अभीत° वि[1] १०-१०. त्वा कु. ११-११. त्वा शवसावन् ! मनीषाः इति । त्वया सह सम्बध्यन्त इत्यर्थः मूको.

वेङ्कट० चिरत्वमाश्रयस्य[1] नवतरा[2] नमस्कारेण अद्वैश्व धनकामा मम मतयः स्तुतयो मत्त निर्गच्छन्ति । [3]उशतः वा पतिम् इव पत्न्य कामयमाना कामयमान त्वा स्पृशन्ति बलवन्[3]! ॥ ११ ॥

मुद्गल० हे दस्म! दर्शनीय[1] इन्द्र! अर्के शास्त्ररूपैर्मन्त्रैः नमसा नमस्कारेण यस्त्वम् नव्य स्तुत्यो भवसि । सनायुवः सनातनम् अग्निहोत्रादि नित्य कर्म आरभन्त इच्छन्त वसूयव धनमिच्छन्तः मतव मेधाविन त्वाम् दद्रु बहुना प्रयासेन जग्मु । हे शवसावन्! बलवन्[1] इन्द्र[1] तै प्रयुक्ता मनीषा स्तुतय त्वा त्वाम् ,स्पृशन्ति प्राप्नुवन्ति । दृष्टान्त । उशती उशतस्य कामयमाना पत्नी पत्न्य उशन्तम् कामयमानम् पतिम् न यथा[4] पतिं सम्भजन्ते तद्वत् ॥ ११ ॥

सनादेव तव रायो गभस्तौ न क्षीयन्ते नोप दस्यन्ति दस्म ।
द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥ १२ ॥

सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयन्ते । न । उप । दस्यन्ति । दस्म ।
द्युमान् । असि । क्रतुऽमान् । इन्द्र । धीरः । शिक्ष । शचीऽवः । तव । नः । शचीभिः ॥१२॥

स्कन्द० सनात् चिरात् एव प्रभृति तव राय धनानि गभस्तौ बाहुनामैतत् ( द्र निघ २,४ ) । तत्सम्बन्धाच्चिह हस्त वर्तते । सप्तमीनिर्देशाच्च स्थितानीति वाक्यशेष । हस्ते स्थितानि । न क्षीयन्त न अपि उप दस्यन्ति क्षयस्य समीपीभवन्ति दस्म! । तव यानि धनानि तानि नेदानीं क्षीयन्ते, नाप्यागामिनि काले इत्यर्थ । किञ्च द्युमान् दीप्तिमान् असि क्रतुमान् कर्मवांश्च हे इन्द्र! धीर प्रज्ञावांश्च । य ईदृशोऽसि त त्वाम — शिक्ष देहि धनानि[5] हे शचीव ! कर्मवन्[1] प्रज्ञावन्[1] वा[6] न अस्मभ्यम् तव शचीभि कर्मभि यागादिर्थहेतुभूतै । यस्मात्वां यजामहे तस्मादित्यर्थ ॥ १२ ॥

वेङ्कट० [7]चिरात् एव तव धनानि हस्त स्थितानि न च नश्यन्ति,[7] न च[8] न्यूनीभवन्ति दर्शनीय[1] ! दीप्तिमान् असि कर्मवांश्च [9]इन्द्र[1] धृष्ट[9] । प्रयच्छ कर्मवन्[1] तव प्रज्ञाभि[10] अस्मभ्यम् ॥ १२ ॥

मुद्गल० हे दस्म! दर्शनीय! इन्द्र[1] तव गभस्तौ तव हस्ते सनात् एव चिरकालादारभ्य स्थितानि राय धनानि न क्षीयन्ते न विनश्यन्ति, न उप दस्यन्ति च । स्तोतृभ्यो दत्तेऽपि त्वद्धस्तगत धनम् उपक्षय न प्राप्नोति, अपि तु वर्धत । हे इन्द्र! धीर। बुद्धिमान् त्वम् द्युमान् दीप्तिमान् शोभाक्षणहेतुभूतकर्मयुक्तोऽसि । हे शचीव ! कर्मवन्! इन्द्र! तव शचीभि त्वदीयै कर्मभि न अस्मभ्य धनम् शिक्ष देहि ॥ १२ ॥

सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १३ ॥

---

१ -३ छ अ[1]. २ भा[?]स्तुता नव[?] वि[1] अ[1]. ३,३ नास्ति वि[1] अ[1]. ४ यथा कामयमानं वि[1]. ५ नास्ति मूको. ६ नास्ति अ. ७-७ नास्ति वि[1] अ[1]. ८. नास्ति वि[1] ९-९. इन्द्र धृष्ट वि[1] अ[1]. १०. प्रज्ञाभि वि[1] अ[?]

सनाऽयते । गोतमः । इन्द्र । नव्यम् । अतक्षत् । ब्रह्म । हरिऽयोजनाय ।
सुऽनीथाय । नः । शवसान । नोधाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १३ ॥

स्कन्द० सनायते चिरं कामयमानाय तुभ्यम् गोतमः सोऽयमित्यभिसम्बन्धात् पितृशब्दोऽयं पुत्रे प्रयुक्तः । गोतमपुत्रः हे इन्द्र ! नव्यम् नवम् अन्यैः स्तोतृभिरकृतपूर्वम् अतक्षत् 'तक्षति करोतिकर्मा' ( या ४,१९ ) व्यत्ययेन च उत्तमपुरुषस्य स्थाने प्रथमपुरुषः । अकार्षं[1] स्तुतिलक्षणम् ब्रह्म । कीदृशाय मह्यम् । उच्यते । हरियोजनाय सुनीथाय सुस्तुतये च । नः प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनमेतत् । अहं हे शवसान ! शत्रून् प्रति गन्तः ! बलवतामाचारयन् ! वा नोधाः नामर्षिः । परस्तु पादः[2] प्रत्यक्षकृतः भिन्नं वाक्यमुक्तार्थश्च ॥ १३ ॥

वेङ्कट० चिरन्तनत्वमनुपालयते गोतमः नोधाः इन्द्र ! तुभ्यं नवतरं स्तोत्रम् अकरोत् । अश्वान्[3] यो योजयति गमनाय । शोभननयनाय अस्माकं बलाचरणशील ! । अन्त्योपसंहारार्था । उपान्त्यया धनमाशास्ते । "धनार्थाः स्तुतय" इत्युवाच—'सनायुवो नमसा' ( ऋ १,६२,११ ) इति ॥ १३ ॥

मुद्गल० स इन्द्रः सनायते नित्य इवाचरति, सर्वेषामाद्यो भवति । हे शवसान ! बलवन् ! इन्द्र ! हरियोजनाय हरी अश्वौ रथे योजयतीति हरियोजनः । सुनीथाय सुष्ठु नेत्रे । एवंभूताय तस्मै तुभ्यम् गोतमः गोतमस्य ऋषेः पुत्रः नोधाः ऋषिः नव्यम् नूतनम् ब्रह्म एतत्सूक्तरूपं स्तोत्रम् नः अस्मदर्थम् अतक्षत् अकरोत् । अतोऽस्माभिरनेन स्तोत्रेण स्तुतः सन् धिया बुद्ध्या प्राप्तवसुरिन्द्रः प्रातःकाले मक्षु शीघ्रम् जगम्यात् आगच्छतु ॥ १३ ॥

इति प्रथमाष्टके पञ्चमाध्याये तृतीयो वर्गः ॥

## [ ६२ ]

त्वं म॒हाँ इ॑न्द्र॒ यो ह॒ शुष्मै॒र्द्यावा॑ जज्ञा॒नः पृ॑थि॒वी अमे॑ धाः ।
यद्ध॑ ते॒ विश्वा॑ गि॒रय॑श्चि॒दभ्वा॑ भि॒या दृ॒ळ्हासः॑ कि॒रणा॒ नैज॑न् ॥ १ ॥

त्वम् । म॒हान् । इ॒न्द्र॒ । यः । ह॒ । शुष्मैः॑ । द्यावा॑ । ज॒ज्ञा॒नः । पृ॒थि॒वी इति॑ । अमे॑ । धा॒ः ।
यत् । ह॒ । ते॒ । विश्वा॑ । गि॒रयः॑ । चि॒त् । अभ्वा॑ । भि॒या । दृ॒ळ्हासः॑ । कि॒रणाः॑ । न । ऐज॑न् ॥ १ ॥

स्कन्द० त्वम् महान् हे इन्द्र !, यः ह शुष्मैः हशब्दः पदपूरणः । यः आत्मीयैर्बलैः द्यावा पृथिवी जज्ञानः जायमानः । जन्मन एव प्रभृतीत्यर्थः । अमे भयमिह अमशब्देनोच्यते । 'सेनेव सृष्टामं दधाति' ( ऋ १,६६,४ ) इति यथा । भये धाः दधासि । जन्मन एव प्रभृति द्यावापृथिव्योर्भयमुदपीपद[4] इत्यर्थः । यत् यस्य षष्ठ्या अत्र लुक् । ह पदपूरणः चार्थे[5] वा । यस्य ते विश्वा सर्वाणि भूतानि गिरयः चित् चिच्छब्दश्चार्थे । पर्वताश्च अभ्वा भिया 'अभ्वः'[6] ( निघ ३,३ ) इति महन्नाम । महता भयेन दृळ्हासः गिरीणामिदं विशेषणम् । दृढा अपि

---

१. नास्ति कु. २. नास्ति भ. ३. अश्वौ भ[1,2] वि[1,3]. ४-४. 'यस्तुत' वि[1,1] भ[1]. ५. पदपीरद भ. ६. चार्थो भ. ७. अभु भ.

सन्तो गिरयः। किरणा न ऐजन् 'किरणा' (निघ १,५) इति रश्मिनाम। एजृ कम्पने। यथोदकेऽन्यत्र वा आदित्यस्य रश्मय कम्पन्ते तद्वत् कम्पन्त इत्यर्थ । तदेतत् पुरस्तादप्युक्तम्— 'अभेद्‌तु भिया गिरयश्च' ( ऋ १,६१,१४ ) इति ॥ १ ॥

वेङ्कट० त्वम् महान् इन्द्र! य. खलु बले द्यावा पृथिवी प्रादुर्भवन् भये अधा । यस्माच्च तव गिरय अपि 'व्याहेन महता भयेन' दृढा अपि रश्मय इव चलनस्वभावा. कम्पन्ते। 'स त्वं' महानिति ॥ १ ॥

मुद्गल० 'त्व महान्' इति नवर्चं षष्ठ सूक्तम् । नोधा ऋषि । त्रिष्टुप् छन्द । इन्द्रो देवता ॥

हे इन्द्र! त्वम् महान् गुणै सर्वाधिको भवसि। यः ह य' खलु त्वम् अभे असुरकृते भये सति जज्ञान तदानीमेव प्रादुर्भूत. सन् शुष्मै. शत्रूणा शोषकैरात्मीयैर्बलै' द्यावा पृथिवी द्यावापृथिव्यौ धा. अधारय । तस्मात्भयात् अमुमुच इत्यर्थ.। किञ्च यत् ह ते यस्य खलु तव सम्बन्धिन्या भिया भीत्या विश्वा विश्वानि व्याहानि यानि भूतजातानि गिरय. गिर् ये च शिलोच्चया, अन्या अन्यान्यपि महान्ति यानि सन्ति, सर्वेऽपि दृढास दृढा अपि ऐजत् अकम्पन्त' । दृष्टान्त । किरणा. न यथा सूर्यरश्मय इतस्ततो नभसि कम्पन्ते' तद्वत् ॥ १ ॥

आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।
येनाविहर्यतक्रतो अमित्रान् पुर इष्णासि पुरुहूत पूर्वीः ॥ २ ॥

आ । यत् । हरी इति । इन्द्र । विऽव्रता । वेः । आ । ते । वज्रम् । जरिता । बाह्वोः । धात् ।
येन । अविहर्यतक्रतो इत्यविहर्यतऽक्रतो । अमित्रान् । पुरः । इष्णासि । पुरुऽहूत । पूर्वीः ॥ २ ॥

स्कन्द० आ यत् यदिति व्यत्ययेन नपुंसकता। यदा च हरी प्रति हे इन्द्र!। कीदृशौ। विव्रता विविधकर्माणौ आ वे वेतेर्गतिकर्मणः विदर्था ज्ञानार्थस्येदं रूपम्। रथे योक्तुमागच्छसि' वेत्सि' वेत्यर्थ । यस्य च' ते वज्रम् जरिता स्तोता बाह्वो बाहुसम्बन्धाद्धस्तावत्र 'बाहु'शब्देनोच्यते। हस्तयो आ धात् आधत्ते। स्तुतिभिश्च स्तोता शत्रुवधार्थं हस्ताभ्यां प्रादत्तेत्यर्थ । अथवा भिन्नमेव वाक्य पूर्वानपेक्षम्' । यद्धरी इति तु यच्छब्दो यदाशब्दस्यार्थे । तच्छब्दश्च तदेत्यध्याहर्तव्यम्। यदा रथ हरी योक्तु प्रत्यागच्छसि तदा त वज्र जरिता हस्तयोरादत्त इति। तेन वज्रेण कि क्रियते। उच्यते । येन हे अविहर्यतक्रतो! हर्यति' कान्तिकर्मा (द्र निघ २,६ )। अविगतो हर्यत कामो यस्य सोऽविहर्यत कामवान्। क्रतुरिति प्रज्ञानाम'। अविहर्यत क्रतुर्यस्य सोऽविहर्यतक्रतु[10]। स्तुताहवीषि[11] च प्रति कामयमानचित्त इत्यर्थ । अथवा 'हर्यतः प्रेप्साकर्मा' ( या ७,१७ )। प्राप्तुमशक्यत्वात् अप्रेप्सनीय क्रतु प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतु, तस्य सम्बोधन हे अविहर्यतक्रतो'। अमित्रान् पुर. नगराणि येषाम् इष्णासि इषु आभीक्ष्ण्ये। हननविषय चात्राभीक्ष्ण्यमभिमतम्। अभीक्ष्ण हसीत्यर्थ[12]। हे पुरुहूत! पूर्वी पुराणीर् चिरंतनम्। चिरन्तनी. पुर ॥ २ ॥

---

१-१. स्यते येन वि' भ'. २-२ नास्ति वि' भ' ३. भकम्पन्त मूको. ४. ऽभवते मूको ५. °च्छथ भ. ६ विवेषि भ ७ नास्ति कु. ८-८ नास्ति भ. ९. यज्जन्म मूको. १०. °ऽतु भ. ११. °स्तुताहवींषि' भ. १२ °हंसीत्य मूको

वेङ्कट० यदा इन्द्र! विविधकर्माणावश्वौ[1] रथे योजयसि, तदनन्तरमेव 'आदधाति तव'[2] बाह्वोः स्तोता वज्रं स्तुत्या। येन वज्रेण अबाधितकर्मन्! अमित्रान् तत्पुरश्च बह्वीः प्रेरयसि पुरुहूत! ॥ २ ॥

मुद्गल० हे इन्द्र! त्वम् यत् यदा विव्रता विविधकर्माणौ हरी त्वदीयावश्वौ आ वेः रथे आगमयसि। रथे योजयसीत्यर्थः। तदानीम् ते तव बाह्वोः हस्तयोः जरिता स्तोता वज्रम् आ धात् स्तोत्रेण स्थापयति। 'स्तोत्रा स्तुते' प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दधत इत्यर्थः। हे अविहर्यतक्रतो! प्रेप्सितकर्मन्! इन्द्र! अमित्रान् शत्रून् येन वज्रेण इष्णासि अभिगच्छसि। हे पुरुहूत! पुरुभिर्यजमानैराहूत! त्वम् पूर्वीः बह्वीः पुरः असुरपुराणि भेत्तुमभिगच्छसीत्यर्थः ॥ २ ॥

त्वं स॒त्य इ॑न्द्र धृ॒ष्णुरे॒तान् त्वमृ॑भु॒क्षा नर्य॒स्त्वं षाट् ।
त्वं शुष्णं॑ वृ॒जने॑ पृ॒क्ष आ॒णौ यूने॒ कुत्सा॑य द्यु॒मते॒ सचा॑ह॒न् ॥ ३ ॥

त्वम्। स॒त्यः। इ॒न्द्र॒। धृ॒ष्णुः। ए॒तान्। त्वम्। ऋ॒भु॒क्षाः। नर्यः। त्वम्। षाट्।
त्वम्। शुष्ण॑म्। वृ॒जने॑। पृ॒क्षे। आ॒णौ। यूने॑। कुत्सा॑य। द्यु॒ऽमते॑। सचा॑। अ॒ह॒न् ॥ ३ ॥

स्कन्द० त्वम् सत्यः अविसंवादी हे इन्द्र! धृष्णुः धर्षयिता च। साधु[3] चाभिभवितेत्यर्थः। कान्[4]। एतान् शत्रून्। त्वम् ऋभुक्षाः महान्। नर्यः नरेषु साधुः नरेभ्यो वा[5]। नराणां चानुग्रहपर इत्यर्थः। त्वम् एव षाट्[6] असुराभिभवनशीलः[7] त्वम् एव शुष्णम् नामासुरम् वृजने ऋग्भिः(?) वर्जनीये। बलनाम वा वृजनशब्दः (तु. निघ २,९)। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः। पृक्षे शूरैः सम्पर्चनीये आणौ। सङ्ग्रामनामैतत् (तु. निघ २,१७)। सङ्ग्रामे यूने कुत्साय द्युमते तादर्थ्ये एताश्चतुर्थ्यः[8]। यूनश्च दीप्तिमतश्च कुत्सनाम्न ऋषेरर्थाय। सचा सह कुत्सेनैव मरुद्भिर्वा अहन् हतवानसि ॥ ३ ॥

वेङ्कट० त्वम् सत्यकर्मा इन्द्र! धर्षयसि एतानमित्रान्। त्वम् महान् नृहितः[10]। त्वम् सहसे सपत्नान्। त्वम् शुष्णासुरं[11] शत्रूणां छेदके[12] इतरेतरसम्पर्चने युद्धे यूने कुत्साय दीप्तिमते सहायभूतः हतवानसि ॥ ३ ॥

मुद्गल० हे इन्द्र! त्वम् सत्यः सत्सु भवः। सर्वोत्कृष्ट इत्यर्थः। एतान् शत्रून् अभिगतः सन् धृष्णुः तेषां धर्षयिता तिरस्कर्ता। किञ्च त्वम् ऋभुक्षाः ऋभूणामधिपतिः, नर्यः नेतृभ्यो हितः। तथा त्वम् षाट् शत्रूणामभिभविता, इत्येतरर्थः। किञ्च वृजने[13] इत्यादीनि[14] त्रीणि सङ्ग्रामनामानि। अत्र पूर्वे विशेषणे। वृजने वर्जनयुक्ते। सङ्ग्रामे हि वीराः पुरुषाः वर्ज्यन्ते हिंस्यन्ते। पृक्षे सम्पर्चनीये वीरैः[15] योद्धुं प्राप्तव्ये। एवंविधे आणौ सङ्ग्रामे द्युमते दीप्तिमते यूने तरुणाय कुत्साय सचा त्वं सहायो भूत्वा शुष्णम् शोषयितारम् एतत्संज्ञमसुरम् अहन् अवधीः ॥ ३ ॥

---

1. °श्वमे(१°मां)णा° वि[१] अ[१]. २-२. नास्ति वि[१] अ[१]. ३-३. स्तोत्रस्तुतेः मूको. ४. सधु मूको. ५. कन् कु. ६. वा दशो भ. ७. नास्ति भ. ८. षुष्ट° भ. ९. °तुर्थ्यः भ. १० नृहितम् वि[१]. ११. °रम् र वि[१] अ[१]. १२. °कम् वि[१] १३. वृज मूको. १४. °पर्वाद मे[१]. १५. वार्यैः मै[१].

त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद् वज्रिन् वृषकर्मन्नुभ्नाः ।
यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥ ४ ॥

त्वम् । ह । त्यत् । इन्द्र । चोदीः । सखा । वृत्रम् । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः ।
यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ । अकृतः । वृथाषाट् ॥ ४ ॥

स्कन्द० ह-शब्दः पदपूरणः । त्वम् त्यत् तदा हे इन्द्र । चोदीः वृत्रवधाय चोदितवानसि सखा द्वितीयाबहुवचनस्य स्थाने इदं प्रथमैकवचनम् । सखीन् मरुतः । अथवा प्रत्यक्षकृतत्वाद् मन्त्रस्य सखेत्येतदव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तम् । यत्तच्छब्दावध्याहृत्य एकवाक्यत्वं नेयम् । यस्तव मरुतां सखा स चोदितवानसि । कम् । सामर्थ्याद् मरुतः । कदा । उच्यते । वृत्रम् यत् यदा हे वज्रिन् ! वृषकर्मन् ! वृष्टिकर्मक[1] । सर्वदैव वृष्टिकारिन्[1] इत्यर्थः[1] । उभ्नाः उभ उम्भ पूरणेऽन्यत्र । इह तु सामर्थ्याद् वधार्थः । हतवानसि[1] । यदा च हे शूर ! वृषमणः ! वृष्टिपरमनस्क[1] पराचैः अप्रतिर्गत्यर्थः, परागमनेः । तद्वीयस्थानप्राप्तिमार्गेणैवेत्यर्थः । दस्यून् योनौ स्वस्मिन्नेव स्थाने स्थितान्[2] वि अकृतः कृन्ततेर्वधकर्मण इदं रूपम् । विविधं हतवानसि । वृथाषाट् अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तत्वात् 'यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया'[4] । यस्त्वं वृथाषाट् अयत्नेनैवाभिभविता स यदा दस्यून् योनौ व्यकृत इति ॥ ४ ॥

वेङ्कट० त्वम् खलु तत्[5] अचूचुदः सखा सन् सख्युः कुत्सस्य वर्तयितारं शुष्णम् । यदा शत्रून् वर्षणशीलकर्मन्[1] तेजोभिर्बाधकं पूरितवानसि, 'यदा खलु शूर ![6] वर्षणपरमनस्क[1][0] 'कुत्सस्य शत्रून्[7] पराचीनान्[8] कुत्सावासे[9] विकृत्तवानसि अनायासेन शत्रूनभिभवन् । तदा शुष्णं तत्सहायाश्चाचूचुद इति ॥ ४ ॥

मुद्गल० हे इन्द्र ! त्वम्[11] ह त्वं खलु सखा कुत्सस्य सहायः सन् त्यत् प्रसिद्धं धनं नपलक्षणम् चोदीः प्रेरितवान् । अकार्षीरित्यर्थः । हे वृषकर्मन् ! वृष्ट्युदकसेचनरूपकर्मोपेत[1] वज्रिन् ! वज्रवन्[1] इन्द्र[1] वृत्रम् सर्वस्य धनस्याऽऽवरीतारं कुत्सस्य शत्रुम् यत् यदा उभ्नाः अनुभ्नाः अहिंसीः । अपि च हे शूर ! शत्रूणां प्रेरक[1] वृषमण ! कामाभिवर्षकमनस्क[1] इन्द्र[1] वृथाषाट् अनायासेन शत्रूणामभिभविता त्वम् यत् ह यदा खलु योनौ वीरैर्मिश्रणीये सङ्ग्रामे दस्यून् कुत्सस्य उपक्षययितॄन् अन्यान् शत्रून् पराचैः वि अकृतः पराङ्मुखा यथा भवन्ति तथा व्यच्छिन[12] । तदानीं कुत्सः सर्वं यशः प्राप्नोदित्यर्थः ॥ ४ ॥

त्वं ह त्यदिन्द्रारिषण्यन् दृळ्हस्य चिन्मर्तानामजुष्टौ ।
व्यस्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥ ५ ॥

त्वम् । ह । त्यत् । इन्द्र । अरिषण्यन् । दृळ्हस्य । चित् । मर्तानाम् । अजुष्टौ ।
वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव । वज्रिन् । श्नथिहि । अमित्रान् ॥ ५ ॥

---

१ °द्धतीयार्थे क्रु २ मैदवा° भ ३ स्थितवान् मूको ४-४. °नावपर्य नेयम् भ ५ तत् मूको ६-६ नास्ति वि° ७ °नत वि° अ°. ८-८. कुत्सशत्रून् वि° अ°. ९ °वीतम् वि° अ° द, °तीवम् वि° १० °वासे विकृत्तवान् वि° अ° ११. नास्ति मूको १२. व्यच्छिन मूको

स्कन्द० य उक्तगुण त्वम्, त्यत् व्यत्ययेनात्र नपुंसकता। स त्वं हे इन्द्र! आरिषण्यन् अस्मानहिंसन् अस्मद्धिंसापरिहारार्थमित्यर्थः। वृत्रस्य अपि मेघस्य वृष्टिनिरोधेन मर्तानाम् अजुष्टौ अप्रीतौ वर्तमानस्य स्वभूता। अस्मत् पञ्चम्यर्थे पञ्चम्येषा। अस्माकं स्वभूताय। आ मर्यादायामेऽयम्। मर्यादया काष्ठा अर्वत अश्वाय। अश्वग्रहणं चात्र कृत्स्नस्य द्विपदश्चतुष्पदश्चोपलक्षणार्थं द्रष्टव्यम्। यावत् किञ्चिदस्माकं स्वभूतं द्विपाच्चतुष्पाच्च सर्वस्यार्थायेत्यर्थः। वि व विवृणु प्रकाशीकुरु। पातयेत्यर्थः। किञ्च घनेव यथा घनेन लोहकारो लोहं हन्ति तद्वत्। हे वज्रिन्! श्नथिहि वधकर्माऽयम् (द्र निघ २,१९)। जहि अस्मदीयान् शत्रून् ॥ ५ ॥

वेङ्कट० त्वम्[1] 'ह तत् इन्द्र'[2]! अहिंसन् 'वृत्रम् अपि पुरुष'[3] मनुष्याणामप्रीतौ[4]। नः[5] इति मनुष्यादित मित्यर्थः[6]। स त्वमश्व[7] अस्माकं युद्धं प्रवेशार्थमश्वानाम् दिशः[8] आ वि व। प्रवेशयाश्वान् सङ्ग्राममध्य इत्यर्थः। स त्वम् घनेन लोहपिण्डमिव अमित्रान् श्नथिहि[9] कुरु नानादिक्कानिति ॥ ५ ॥

मुद्गल० हे इन्द्र! त्वम् ह खलु त्यत् तस्य वृत्रस्य चित् वृत्रस्य कस्यचिदपि अरिषण्यन् रिषणं हिंसनमनिच्छन्। एवंस्वभावो भवसि देवतात्वेनानुग्रहीतृत्वात्। तथापि मर्तानाम् स्तोतृणाम् अस्माकं शत्रुभिः अजुष्टौ अप्रीतौ सत्याम् अस्मत् अर्वते अस्मदीयायाश्वाय गन्तुम् काष्ठाः दिशः आ समन्तात् वि व विवृता कुरु। यथा सर्वासु दिक्षु अस्मदीया अश्वाः प्रतिरोधमन्तरेण गच्छन्ति तथा कुर्वित्यर्थः। किञ्च शत्रुभूतान् अमित्रान् हे वज्रिन्! वज्रवन् इन्द्र! घनेव कठिनेन पर्वतनय वज्रेण श्नथिहि जहीत्यर्थः ॥ ५ ॥

त्वां ह॒ त्यदि॑न्द्रार्ण॑सातौ॒ स्व॑र्मीळ्हे॒ नर॑ आ॒जा ह॑वन्ते ।
तव॑ स्वधाव इ॒यमा स॑म॒र्य ऊ॒तिर्वाजे॑ष्वत॒साय्या॑ भूत् ॥ ६ ॥

त्वाम्। ह॒। त्यत्। इ॒न्द्र॒। अर्ण॑ऽसातौ। स्वः॑ऽमीळ्हे। नरः॑। आ॒जा। ह॒व॒न्ते॒।
तव॑। स्व॒धा॒ऽव॒। इ॒यम्। आ। स॒ऽम॒र्ये॑। ऊ॒तिः। वाजे॑षु। अ॒त॒साय्या॑। भू॒त् ॥ ६ ॥

स्कन्द० '[10]त्यत् इति[10]' त्वाम् 'इत्येतेन सामानाधिकरण्यात् द्वितीयास्थाने प्रथमा। व्यत्ययेन चात्र नपुंसकता। य उक्तगुणस्तं त्वां हे इन्द्र! अर्णसातौ। अर्ण उदकम्, तत्संभजनवेलायाम्। मघवधोत्तरकाल उदकदानवेलायामित्यर्थः। स्वर्मीळ्हे उदकार्थं च मघेन सह सङ्ग्रामे नरः मनुष्या आजा अन्यस्मिंश्च सङ्ग्रामे हवन्ते। उदकसंभजनवेलाया दानायमुदकार्थे सङ्ग्रामे युद्धार्थमन्यस्मिंश्च साहाय्यार्थमाह्वयन्तीत्यर्थः। य ईदृशोऽसि स भूम। तव हे स्वधाव! इयम् आ मर्यादया समर्ये सङ्ग्रामे ऊतिः पालनम् वाजेषु निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। समर्य इत्येतेन चास्य सम्बन्धः। अन्नेषु[11] च निमित्तेषु य[12] सङ्ग्रामे। अन्नार्थो यः सङ्ग्राम तत्रेत्यर्थः। अतसाय्या तनु उपक्षये इत्येतस्य, अतः सातत्यगमने

1 नास्ति वि[1]. 2 2 एतत् इन्द्र वि[1'1] कु ल लप, स्वतास्मिन् मत्स्यात् वि[1] अ[1] 3 3 वृत्रस्यापि मलव वि[1] अ[1] 4 °णां न प्र° वि[1] अ[1] 5. नास्ति वि[1] लप 6 मनुष्यादि° कु 7 त्वम् वि[1] अ[1] 8 दिशः स्वतश्च वि[1'1] अ[1] कु ल लप; °दि त्वमेव तत् वि[1] अ[1] 9 श्नथिहि वि[1] अ[1], नास्ति हि लप 10 10 नास्ति मूको 11 अन्नेषु भ 12 नास्ति कु

'हृस्वस्य वैदद्रूपम्'। अनुपक्षीणा सन्ततगामिनी वा भूत् भवतु। 'यद्वदन्नाथ सङ्ग्रामे' प्रवृत्त पालनमवद्रक्षणं सततगामि वा भवत्वित्यर्थः[1]। कस्य। सामर्थ्यादस्माकं स्तोतॄणां वा ॥ ६ ॥

वेङ्कट० '[4]त्वाम् खलु वद्[1] इन्द्र! उदकस्य दातरि सर्वस्य सचके मनुष्या मेधे सह युद्धे तदर्थम् ह्वन्ते। तव अभवन्' इयम् ऊति [‡]युद्धेषु समाश्रयणीया समनुष्ये[‡] प्रदेशे अस्मद्रक्षणाय अभूत्[5] ॥ ६ ॥

मुद्गल० हे इन्द्र! अर्णसातौ अर्णानां गन्तॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् वस्मिन्[1] स्वर्मीळ्हे सुष्ठु अरणीयं धनं यस्मिन्। एवम्भूते आना आजौ सङ्ग्रामे त्यत् प्रसिद्धम् त्वाम् हे त्वामेव नरः योद्धुकामाः पुरुषाः सहायार्थम् ह्वन्ते आह्वयन्ति। वृष्टिनिरोधकेन वृत्रेण सह युद्धार्थं तव मतः युद्धे तत्र स्तोतारः त्वा प्रोत्साहयन्तीति भावः। यस्मादेव तस्मात् हे स्वधाव! अबवन् इन्द्र! समर्थ सङ्ग्रामे तव सम्बन्धिनी इयम् ऊतिः त्वदीयम् इदं रक्षणम् आ अस्मदाभिमुख्येन भूत् भवतु। वाजेषु सङ्ग्रामेषु या सैषा ऊतिः अतसाध्या यादृभि प्राप्तव्या भवति ॥ ६ ॥

त्वं ह त्यदिन्द्र सप्त युध्यन् पुरो वज्रिन् पुरुकुत्साय दर्दः।
बर्हिर्न यत् सुदासे वृथा वर्गंहो राजन् वरिवः पूरवे कः ॥ ७ ॥

त्वम्। ह। त्यत्। इन्द्र। सप्त। युध्यन्। पुरः। वज्रिन्। पुरुऽकुत्साय। दर्दरिति दर्दः।
बर्हिः। न। यत्। सुऽदासे। वृथा। वर्क्। अंहोः। राजन्। वरिवः। पूरवे। करिति कः ॥ ७ ॥

स्कन्द० त्वम् ह[1] 'यत् स हे इन्द्र' असुराणां स्वभूताः सप्त पुरः युध्यन् असुरैः सह वज्रिन्! पुरुकुत्साय पुरुकुत्सनाम्नो राज्ञोऽर्थाय दर्दः दारितवान् नाशितवान्। यान् किं कृतवान्। उच्यते। बर्हिः न दर्भानिव आमूलात् यत्[1] यः सुदासः सुदा नाम राजा[*]। पञ्चम्यर्थे चात्र चतुर्थी। सुदासो राज्ञः वृथा अयत्नेनैव वर्क आवश्चूं छेदने, भित्त्वानसि। अंहो अंहुशब्दस्याह पर्यायस्य द्वितीयार्थे षष्ठी। अंह पापम्। यश्च हे राजन्! दीप्त[1] ईश्वर[1] वा वरिवः धनम् पूरवे राज्ञे कः कृतवान्। दत्तवानित्यर्थः ॥ ७ ॥

वेङ्कट० त्वम् 'ह वद्' इन्द्र! पुरुकुत्साय ऋषये सप्त पुरः युध्यन् दारितवान् असि। किञ्च सुदे[*] सुगम राज्ञे तदर्थम् अंहो असुरस्य यत् धनम् बर्हिः इव अनायासेन अच्छिन, तत् धनम् राजन्! पूरवे प्रयत कृतवान् असि ॥ ७ ॥

मुद्गल० हे वाजन्! वज्रवन्[1] इन्द्र! पुरुकुत्साय[11] ऋषये युध्यन् तदीयैः शत्रुभिः सह युद्धं कुर्वाणः त्वम् ह त्वमेव सप्त पुरः तदीयानि सप्तसंख्याकानि नगराणि दर्दः व्यदारयः। अभैत्सीरित्यर्थः। अपि च सुदासे एतत्संज्ञाय अंहो एतत्संज्ञस्यासुरस्य सम्बन्धि यत् धनमस्ति त्वत् तत् त्वया अनायासेन बर्हिः न बर्हिरिव वर्क अवृणक्। अच्छिन इत्यर्थः। तदनन्तरं पूर्ववत् त्वाम् पूरवे हविषा प्रयते तस्मै सुदासे हे राजन्! स्वामिन् इन्द्र[1] वारव धनम् कः अकार्षीः ॥ ७ ॥

---

१ १ °स्यो° भ[१] २ °दस्पत°कु ३ नव नव° कु ४ ४ नास्ति वि[१] † तम् वि[१] भ[१], ता वि[१] भ[१] ऌ कु लन ‡ ‡ युद्धे समाश्रयणीया स मनुष्यदेशे धृता भूत् वि[१] भ[१] ५ नास्ति मूको ६ नास्ति भ[१] ७ °आ वय मूको ८ मन्त्रूभ ९ ९ एतत् वि[११] भ[१] ऌ कु लप; सत् वि[१] भ[१] १० नास्ति वि[१] भ[१] ऌ कु लन ११ °इ धेत्य मूको

त्वं त्यां न॑ इन्द्र देव चि॒त्रामिषमापो॒ न पी॑पयः॒ परि॑ज्मन् ।
यया॑ शूर॒ प्रत्य॒स्मभ्यं॒ यंसि॒ त्मन॒मूर्जं॒ न वि॒श्वध॒ क्षर॑ध्यै ॥ ८ ॥

त्वम् । त्याम् । नः॒ । इ॒न्द्र॒ । दे॒व॒ । चि॒त्राम् । इष॑म् । आपः॑ । न । पी॒प॒यः॒ । परि॑ऽज्मन् ।
यया॑ । शू॒र॒ । प्रति॑ । अ॒स्मभ्य॑म् । यंसि॑ । त्मन॑म् । ऊर्ज॑म् । न । वि॒श्वध॑ । क्षर॑ध्यै ॥ ८ ॥

स्कन्द० त्वम् नः अस्माकं स्वभूतां[1] हे इन्द्र! देव! चित्राम् पूजनीयां विचित्रां वा इषम् सोमलक्षणमन्नम् यथा वसतीवर्येकधना[2] आपः वर्धयन्ति तद्वत् पीपयः अवर्धयः । परिज्मन् अजेर्गत्यर्थस्येदं रूपम् । सर्वतो गच्छन् । यत्र तत्र वर्तमान इत्यर्थः । या कीदृशी इट् । उच्यते[3] । यया निमित्तभूतया हे शूर! अस्मभ्यम् अस्मदर्थम् प्रति यंसि यमु बन्धने । प्रतिबध्नासि त्मनम्[4] आत्मानम् । क्व । सामर्थ्यात् वेद्याम् । यामस्मदनुग्रहार्थं[5] पातुमस्मदीयायां वेद्यामात्मानं व्यवस्थापयसीत्यर्थः । ऊर्जम् न यथा महता यत्नेन कश्चित्[6] क्वचिद् व्यवस्थापयेत् तद्वत् । किमर्थं पुनर्वर्धयानि । उच्यते । विश्वध क्षरध्यै सर्वदा क्षरितुम् । कथं नाम सर्वदा यजत्स्वस्मासु त्वदर्थः सोमः क्षरेदित्येवमर्थमित्यर्थः ॥ ८ ॥

वेङ्कट० त्वम् तत् [7]अन्नम् अस्माकम् [चित्रम् आपः][7] इव पीपयः परितो गमने[8] 'यथा इषा' शूर! त्वम् आत्मानम् अस्मभ्यम् अन्नम् इव सर्वदा कामानां क्षरणाय प्रतियच्छसि । इन्द्र! तव यागार्थं वर्धय अन्नमिति ॥ ८ ॥

मुद्गल० हे देव! द्योतमान! इन्द्र! त्वम् नः अस्माकम् चित्राम् चायनीयाम् त्याम् ताम्[10] इषम् अन्नम् परिज्मन् परितो व्याप्तायां भूमौ पीपयः प्रावर्धयः । यथा सर्वा भूमिरन्नेन पूर्णा भवति तथा कुर्वित्यर्थः । दृष्टान्तः । आपः न यथा अपो वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि[11] तद्वत् । हे शूर! इन्द्र! यया इषा त्मनम् आत्मानं जीवमस्मभ्यम् प्रति यंसि प्रयच्छसि । दृष्टान्तः । विश्वध विश्वतः सर्वतः क्षरध्यै क्षरितुम् ऊर्जम् न उदकमिव । यथाऽस्मभ्यं बहुलम् उदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवमपि प्रयच्छसीति भावः ॥ ८ ॥

अका॑रि त इन्द्र॒ गोत॑मेभि॒र्ब्रह्मा॒ण्योक्ता॒ नम॑सा॒ हरि॑भ्याम् ।
सु॒पेश॑सं॒ वाज॒मा भ॑रा नः प्रा॒तर्म॒क्षू धि॒याव॑सुर्जगम्यात् ॥ ९ ॥

अका॑रि । ते॒ । इ॒न्द्र॒ । गोत॑मेभिः । ब्रह्मा॑णि । आऽउ॑क्ता । नम॑सा । हरि॑ऽभ्याम् ।
सु॒ऽपेश॑सम् । वाज॑म् । आ । भ॒र॒ । नः॒ । प्रा॒तः । म॒क्षु । धि॒याऽव॑सुः । ज॒ग॒म्या॒त् ॥ ९ ॥

स्कन्द० अकारि इति बहुवचनस्य स्थाने एकवचनम् । अकारिषत । ते त्वदर्थानि । हे इन्द्र! गोतमपुत्रैरस्माभिः[12] स्तुतिलक्षणानि ब्रह्माणि । [13]कृत्वा च[13] ओक्ता मर्यादयोक्तानि । नमसा नमस्कारेण

१. नास्ति कु. २. °कधाना मूको. ३. नास्ति मूको. ४. नास्ति म. ५. °र्थं वा मूको.
६. किश्चिद् कु. ७-७. अन्न चित्रमस्माकमापः वि[1] अ[1]. [-] त्रुटितम् वि[1]. ८. गच्छन् वि[1] अ[1]. ९-९. यया हेतुभूतया वि[1] अ[1]. १०. ता ता मै[1]. ११. °यच्छति मूको. १२. गौतम° कु. १३-१३. नास्ति कु.

सह हविर्लक्षणेनान्नेन वा। हविरपि दत्तमित्यर्थः। एतत् ज्ञात्वा हरिभ्याम् सुपेशसम् सुरूपम् वाजम् अन्नम्। आ भर आहर नः अस्मदर्थम्। प्रातः इत्ययं तु पादः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् उक्तार्थश्च ॥ ९ ॥

वेङ्कट० अकारि ते इन्द्र![1] गोतमैः[2]। तदेवाह — ब्रह्माणि शस्त्राणि[3] च उक्तानि नमस्कारेण तव सह अश्वाभ्याम्। 'आ यद्धरी इन्द्र विव्रता' (ऋ १,६३,२) इत्यश्वयोः स्तुतिः। सुरूपमन्नम् आ भर[4] अस्मभ्यमिति ॥ ९ ॥

मुद्गल० हे इन्द्र! ते तव गोतमेभिः गोतमैरेतत्संज्ञैर्ऋषिभिः अकारि स्तोत्रं कृतमित्यर्थः। एतदेव स्पष्टीकरोति — ब्रह्माणि मन्त्रजातानि नमसा हविर्लक्षणेनान्नेन सह हरिभ्याम् अश्वाभ्यां युक्ताय तुभ्यम् आ उक्ता आभिमुख्येन उक्तानि। स त्वम् सुपेशसम् बहुविधरूपयुक्तम् वाजम् अन्नम् नः अस्मभ्यम् आ भर आहर आदेहीति यावत्। धियावसुः धिया बुद्ध्या प्राप्तधन इन्द्रः प्रातःकाले अस्मद्रक्षणार्थम् जगम्यात् आगच्छतु ॥ ९ ॥

इति प्रथमाष्टके पञ्चमाध्याये पञ्चमो वर्गः ॥

## [ ६४ ]

वृष्णे॒ शर्धा॑य सु॒म॑खाय वे॒धसे॒ नोधः॑ सुवृ॒क्तिं प्र भ॑रा म॒रुद्भ्यः॑ ।
अ॒पो न धीरो॒ मन॑सा सु॒हस्त्यो॒ गिरः॒ सम॑ञ्जे वि॒दथे॑ष्वा॒भुवः॑ ॥ १ ॥

वृष्णे॑ । शर्धा॑य । सु॒ऽम॑खाय । वे॒धसे॑ । नोधः॑ । सु॒ऽवृ॒क्तिम् । प्र । भ॒र॒ । म॒रुत्ऽभ्यः॑ ।
अ॒पः । न । धीरः॑ । मन॑सा । सु॒ऽह॒स्त्यः॑ । गिरः॑ । सम् । अ॒ञ्जे॒ । वि॒दथे॑षु । आ॒ऽभुवः॑ ॥ १ ॥

स्कन्द० मारुतम् सूक्तम्। मरुद्देवतमिदं सूक्तम्। वृष्णे इत्यादि गणापेक्षमेकवचनम्। वर्षित्रे गणाय शर्धाय बलवते सुमखाय सुयज्ञाय वेधसे प्राज्ञाय हे नोधः! आत्मनः एवायं शरीरात्मनः प्रैषः। हे मदीयशरीरात्मन्! सुवृक्तिम् सुष्ठु वर्जितां दोषैः स्तुतिम् प्र भर प्रहर[4]। उच्चारयेत्यर्थः। मरुद्भ्यः पञ्चम्यर्थे चतुर्थ्येषा। वृष्णेत्यादौ च गणशब्दाध्याहारः। मरुतां गणाय[5]। अथवा गुणेऽपि मरुच्छब्दस्तद्विशेषे द्रष्टव्यः। एकवचनस्य स्थाने बहुवचनम्। मारुताय मरुत्समूहाय इत्यर्थः। अहमप्यन्तरात्मा अपः न यथा इन्द्रो वृष्टिलक्षणा अपोऽभिव्यनक्ति तद्वत्। धीरः प्रज्ञावान् मनसा सह सुहस्त्यः सुवर्णालङ्कृतहस्तवान् सुहस्त्यः[6] गिरः सम् अञ्जे अञ्जिः व्यक्त्यर्थः। समभिव्यनज्मि। विदथेषु यज्ञेषु। आभुवः अपदिवमपि महत्त्वमेतत्, महतीः। अहमन्तरात्मा मरुद्गणस्यार्थाय मनसा सह[7] स्तुतीरभिव्यनज्मि। त्वं तु नोधः! शरीरात्मन्! ता उच्चारयेत्यर्थः ॥ १ ॥

वेङ्कट० वर्षित्रे मारुताय शर्धाय सुधनाय 'नञ्सुभ्याम्' (पा ६,२,१७२) इति न दृष्टम्। अपि वा

---

१. नास्ति अ[1]. २. गोतमैर्मम[*] वि[1] अ[1]. ३. नास्ति क. ४. आहर वि[1] अ[1]. ५. नास्ति क. ६. गणाः क. ७. हस्ताः क.

सुष्ठु प्रयच्छते विधात्रे स्तुतिम् प्र भर। तदेवाह—नोधः। त्वं स्तुतिं प्र भर। मरुद्भ्यः इति। आत्मानमित्थमुक्त्वा[1] स्वयमेव तथा करोमीति[2] वदति—उदकानि धृष्टः शोभनाङ्गुलिकः कश्चित् यथोत्सिञ्चत्येवमहमेषां यज्ञे प्रयोक्तुं योग्याः गिरः मनसा सम् अञ्जे संश्लेषयामि[3] रचयामीति[4] ॥ १ ॥

मुद्गल० 'वृष्णे शर्धाय' इति पञ्चदशर्चं सप्तमं सूक्तम्। नोधा ऋषिः। अन्त्या त्रिष्टुप्। शिष्टा जगत्यः। मरुतो देवताः ॥

अत्र पूर्वार्धेन स्तुतौ नोधाः प्रेर्यते। हे नोधः! वृष्णे कामानां वर्षित्रे सुमखाय शोभनयज्ञाय वेधसे पुष्पफलादीनां कर्त्रे। वायौ सति पुष्पाणि फलानि चोत्पद्यन्ते। एवंविधाय मरुद्भ्यः मरुतां मितराविणाम् शर्धाय समूहाय सुवृक्तिम् सुष्ठु आवर्जकं[5] स्तोत्रम् प्र भर प्रेरय, स्तुहीति यावत्। स्तुतौ प्रेरितो नोधा आह—धीरः धीमान् सुहस्त्यः शोभनाङ्गुलियुक्तः। कृताञ्जलिरित्यर्थः। एवंभूतोऽहम्। मनसा गिरः स्तुतिलक्षणा वाचः सम् अञ्जे सम्यग् व्यक्ताः करोमि। या गिरः विदथेषु यज्ञेषु आभुवः यथाशास्त्रं प्रयुक्ता भवन्तीति आभुवो देवताभिमुखीकरणाय समर्थाः। यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः। दृष्टान्तः। अपः न यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् ॥ १ ॥

ते ज॑ज्ञिरे दि॒व ऋ॒ष्वास॑ उ॒क्षणो॑ रु॒द्रस्य॒ मर्या॒ असु॑रा अ॑रे॒पसः॑ ।
पा॒व॒कासः॒ शुच॑यः॒ सूर्या॑इव॒ सत्वा॑नो॒ न द्र॒प्सिनो॑ घो॒रव॑र्पसः ॥ २ ॥

ते । ज॒ज्ञि॒रे॒ । दि॒वः । ऋ॒ष्वासः॑ । उ॒क्षणः॑ । रु॒द्रस्य॑ । मर्याः॑ । असु॑राः । अ॒रे॒पसः॑ ।
पा॒व॒कासः॑ । शुच॑यः । सूर्याः॑ऽइव । सत्वा॑नः । न । द्र॒प्सिनः॑ । घो॒रऽव॑र्पसः ॥ २ ॥

स्कन्द० ते मरुतः जज्ञिरे दिवः सकाशात्। द्यौरेषां मातेत्यर्थः। 'यस्त्वैतिहसिकाः दितौ[6] काश्यपाज्जन्म मरुतां स्मरन्ति, तत् माहाभाग्यादेव जन्मान्तरं द्रष्टव्यम्। ऋष्वासः महान्तः उक्षणः सेक्तारः। वर्षितार इत्यर्थः। रुद्रस्य षष्ठीनिर्देशात् पुत्रा इति वाक्यशेषः। 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (ऋ ६,६६,३), 'याभन् रुद्रस्य सूनवः' (ऋ १,८५,१) इत्यादिषु रुद्रपुत्रत्वदर्शनात्। मर्याः मनुष्याकाराः असुराः प्राणवन्तः प्रज्ञावन्तो वा अरेपसः पापवर्जिताः पावकासः शोधयितारः शुचयः दीप्ताः। कथम्। सूर्याः इव सत्वानः न षणु दाने इत्यस्यैतद्रूपम्। न शब्दश्चोपमार्थीयत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग' (द्र. या ७,३१) इति पदपूरणः। दातारः। द्रप्सिनः वृष्ट्युदकलक्षणेन रसेन रसवन्तः। अथवा सत्वानो नेति नशब्दश्रुतिसामर्थ्याद् यथेन्द्रप्रभृतयो दातारो द्रप्सिनः तथा[7] द्रप्सिन इत्येवं योजयितव्यम्। घोरवर्पसः घोररूपाः ॥ २ ॥

वेङ्कट० ते प्रादुरभवन् द्युलोकाद् दर्शनीयाः सेक्तारः रुद्रपुत्राः बलिनः अपापाः शोधकाः निर्मलाः सूर्या इव भूतानि इव विमुद्भिर्युक्ताः घोररूपाः। सिंहादयः 'सत्वानः इति'[8] ॥ २ ॥

---

1. °मित्युक्त्वा वि[1] अ[1]. 2. °तीति हे अन्तरात्मन् वि[1] अ[1]. 3. °यामीति वि[1] अ[1]. 4. नास्ति वि[1] अ[1]. 5. आर्जकं मूको. 6-6. °तिहासिकमदि° मूको (तु. पृ २९२, टि १२). 7. नास्ति अ. 8-8. सत्वानीति वि[1] अ[1] ल लपं.

मुद्गल० ते मरुतः दिवः अन्तरिक्षात् जज्ञिरे प्रादुर्बभूवुः । कीदृशाः । ऋष्वासः दर्शनीयाः उक्षणः सेक्तारः । युवान इत्यर्थः । रुद्रस्य मर्याः रुद्रस्य पुत्रा मरुतः असुराः शत्रूणां निरसितारः अरेपसः पापरहिताः पावकासः सर्वेषां शोधकाः सूर्याः इव शुचयः दीप्ताः सत्वानः न यथा परमेश्वरस्य भूतगणा अतिशयेन बलपराक्रमाः, तत्सदृशा इत्यर्थः । द्रप्सिनः वृष्ट्युदकबिन्दुभिर्युक्ता मरुतः घोरवर्पसः शत्रूणां भयङ्कररूपाः ॥ २ ॥

युवा॑नो रु॒द्रा अ॒जरा॑ अभो॒ग्घनो॑ वव॒क्षुरध्रि॑गावः॒ पर्व॑ता इव ।
दृ॒ळ्हा चि॒द् विश्वा॒ भुव॑नानि॒ पार्थि॑वा॒ प्र च्या॑वयन्ति दि॒व्यानि॑ म॒ज्मना॑ ॥ ३ ॥

युवा॑नः । रु॒द्राः । अ॒जराः॑ । अ॒भो॒क्ऽहनः॑ । व॒व॒क्षुः । अध्रि॑ऽगावः । पर्व॑ताःऽइव ।
दृ॒ळ्हा । चि॒त् । विश्वा॑ । भुव॑नानि । पार्थि॑वा । प्र । च्य॒व॒य॒न्ति॒ । दि॒व्यानि॑ । म॒ज्मना॑ ॥ ३ ॥

स्कन्द० युवानः तरुणाः रुद्राः सोऽयमित्यभिसम्बन्धात् पितृशब्दस्यैव पुत्रे प्रयोगः । रुद्रपुत्राः अजराः जरावर्जिताः अभोग्घनः यागादिना यस्तेषामभोग्यस्तस्य[1] हन्तारः ववक्षुः 'ववक्षिथ'[2] ( निघ ३,१ ) इति महन्नामसु पाठात् ववक्षतिर्महत्त्वार्थः । बहुवचनस्य स्थाने एकवचनम् । ववक्षवो महान्त इत्यर्थः । अध्रिगावः गौः द्यौः, तत्राऽधृताः अव्ययस्यावारः[3] अध्रिगावः । अधार्यगमना वा अध्रिगावः । पर्वताः इव दृळ्हा चित् पर्वतवत् यानि दृढानि तान्यपि विश्वा भुवनानि भूतानि, यानि न रोचन्ते तानि पार्थिवा पार्थिवानि च स्वेभ्यः स्थानेभ्यः प्र च्यावयन्ति दिव्यानि मज्मना स्वेन बलेन ॥ ३ ॥

वेङ्कट० तरुणाः रुद्रपुत्राः अमृताः[4] देवानामभोजयितॄणामयजमानानां हन्तारः वहन्ति अधृतगमनाः[5] शिलोच्चया इव । दृढानि अपि विश्वानि पार्थिवानि[6] भुवनानि[7] दिव्यानि अपि च बलेन प्रच्यावयन्ति ॥ ३ ॥

मुद्गल० युवानः तरुणाः रुद्राः रुद्रपुत्राः अजराः जरारहिताः अभोग्घनः ये देवान् हविर्भिर्न भोजयन्ति तेषां हन्तारः अध्रिगावः अधृतगमनाः परैरनिवारितगतयः पर्वता इव दृढाङ्गाः । एवम्भूता मरुतः ववक्षुः स्तोतॄणामभिमतं[8] प्रापयितुमिच्छन्ति । अपि च विश्वा सर्वाणि भुवनानि सद्भावं प्राप्तानि पार्थिवा पृथिव्यां भवानि दिव्यानि दिवि भवानि च वसूनि[9] दृळ्हा चित् दृढान्यपि मज्मना शोधकबलेन प्र च्यावयन्ति प्रचालयन्ति ॥ ३ ॥

चि॒त्रैर॒ञ्जिभि॒र्वपु॑षे॒ व्य॑ञ्जते॒ वक्षः॑सु रु॒क्माँ अधि॑ येतिरे शु॒भे ।
अंसे॑ष्वेषां॒ नि मि॑मृक्षुर्ऋ॒ष्टयः॑ सा॒कं ज॑ज्ञिरे स्व॒धया॑ दि॒वो नरः॑ ॥ ४ ॥

चि॒त्रैः । अ॒ञ्जिऽभिः॑ । वपु॑षे । वि । अ॒ञ्ज॒ते॒ । वक्षः॑ऽसु । रु॒क्मान् । अधि॑ । ये॒ति॒रे॒ । शु॒भे ।
अंसे॑षु । ए॒षा॒म् । नि । मि॒मृ॒क्षुः॒ । ऋ॒ष्टयः॑ । सा॒कम् । ज॒ज्ञि॒रे॒ । स्व॒धया॑ । दि॒वः । नरः॑ ॥ ४ ॥

---

१. °स्या भो° भ. २. 'ब विवक्षे भ. ३. °व्ययस्य° मूको. ४. नास्ति कु. ५. अधृ° क वि°° अ° वर्प; रभग° वि°; अधृत° कु. ६. नास्ति भ° कु ल. ७. °नानि पार्थिवानि वि°. ८. °तम्° मूको. ९. वस्तूनि मे°.

स्कन्द० चित्रैरञ्जिभि अञ्जिर्मरुता रुक्माय आभरणविशेष । विविधैरञ्जिभि वपुषे रूपाय। शोभार्थमित्यर्थ । व्यञ्जते अञ्जिस्सामर्थ्यादिह भूषाया द्रष्टव्य । विविध भूषयन्त्यात्मान-मित्यर्थ । वक्षःसु रुक्मान् अधि वक्षो हृदयप्रदेश । रुक्म आभरणविशेष । अधिशब्द उपरिभावे। हृदयप्रदेशाना चोपरि रुक्मान्[1] येतिर यतिरत्र बन्धने द्रष्टव्य, आबध्नन्ति। शुभे शोभार्थम्। असेषु च एषाम् व्यवस्थिता नि मिमृक्षु निशब्द प्रकर्षे। मृक्षतिरपि[2] 'प्रयज्यवो मरुतो भ्राजदृष्टय' ( ऋ ५,५५,१ ) इत्येवमादिषु ऋष्टीना भ्राजितृत्वदर्शनाद् भ्राजनार्थ । सुष्ठु भ्राजन्ते। शोभन्त इत्यर्थ । के। उच्यते। ऋष्टय 'असेषु व ऋष्टय' ( ऋ ५,५४,११ ) इत्यादिदर्शनात्[1] तोरणा शक्तयो वा ऋष्टय उच्यन्ते। साकम् जज्ञिरे सह च ते जाता । न च केवला । किं तर्हि । स्वधया अन्नेन सह दिव सकाशात् नर मनुष्याकारा ॥ ४ ॥

वेङ्कट० नानारूपै आभरणै शोभार्थमङ्गानि[4] अलङ्कुर्वन्ति। वक्षःसु रौक्मान् कवचान् अधियातयन्ति शोभार्थम् । असेषु च एषाम् निषक्ता[5] भवन्ति ऋष्टय आयुधविशेषा । सह प्रादुर्भवन्ति बलेन दिव नेतार ॥ ४ ॥

मुद्गल० वपुषे रूपाय शोभार्थं मरुत[1] चित्रै नानाविधै अञ्जिभि रूपाभिव्यञ्जनसमर्थैराभरणै स्वशरीराणि व्यञ्जते व्यक्त कुर्वन्ति। अलङ्कुर्वन्तीत्यर्थ । वक्षःसु भुजान्तरेषु रुक्मान् रोचमानान् हारान् अधि येतिरे उपरि चक्रिरे। किमर्थम्। शुभे शोभार्थम्। अपि च एषाम् मरुताम् असेषु ऋष्टय आयुधानि नि मिमृक्षु निसृष्टा स्थिता बभूवु । तैरायुधै सहिता नर नेतारो मरुत दिव अन्तरिक्षात् स्वधया स्वकीयेन बलेन साकम् सह ज ज्ञिरे प्रादुर्बभूवु ॥ ४ ॥

ई॒शा॒न॒कृतो॒ धुन॑यो रि॒शाद॑सो॒ वाता॑न् वि॒द्युत॒स्तवि॑षीभिरक्रत ।
दु॒हन्त्यूध॑र्दि॒व्यानि॒ धूत॑यो॒ भूमिं॑ पिन्वन्ति॒ पय॑सा॒ परि॑ज्रयः ॥ ५ ॥

ई॒शा॒न॒ऽकृत॑ । धुन॑य । रि॒शाद॑स । वाता॑न् । वि॒ऽद्युत॑ । तवि॑षीभि । अ॒क्र॒त॒ ।
दु॒हन्ति॑ । ऊध॑ । दि॒व्यानि॑ । धूत॑य । भूमि॑म् । पि॒न्व॒न्ति॒ । पय॑सा । परि॑ऽज्रय ॥ ५ ॥

स्कन्द० ईशानकृत स्तोतृणामीश्वराणा कर्तार धुनय कम्पयितार शत्रूणाम् रिशादस रिशति हिंसार्थ । असु क्षपणे। हिंसितु क्षेप्तार । प्रतिहिंसितार इत्यर्थ । वातान् विद्युत च तविषीभि स्वैर्बलै अक्रत कुर्वन्ति। कृत्वा च दुहन्ति ऊध ऊधस्सादृश्यात् ऊधश्शब्देन मेघ इहोच्यते। प्रक्षारयन्ति मेघम्[3] दिव्यानि अस्यन्तोत्कृष्टान्युदकानि धूतय धूनयितारो मेघस्य। दुग्ध्वा च भूमिम् पिन्वन्ति पिवि सेचने। सिञ्चन्ति पयसा वृष्टिलक्षणेनोदकेन परिज्रय अजेर्गत्यर्थस्येद रूपम्। सर्वतोगामिन ॥ ५ ॥

वेङ्कट० स्तोतॄन् ईशितॄन् कुर्वाणा कम्पयितार रिशादस वातान् विद्युत च वर्षाय बलै कुर्वन्ति। दुहन्ति मेघं दिव्यानि उदकानि कम्पयितार । भूमिम् ओषधी दुहन्ति उदकेन परितो गन्तार ॥ ५ ॥

---

१ रुक्मान्यधि अ, रुक्मानधि कु २ निमृक्षति° अ ३ स्वधया° मूको ४ °मनार्थं° वि[1,2] लप अ[2]
५ °षिक्ता वि[1,2] अ[2] लप ६ नास्ति मे[2] ७ मेघान् अ

मुद्गल० ईशानकृतः स्तोतारमीशानं धनाधिपतिं कुर्वाणाः धुनयः मेघादीनां[1] कम्पयितारः रिशादसः हिंसकानामत्तारः। एवंभूता मरुतः तविषीभिः आत्मीयैर्बलैः वातान् पुरोवातादीन् विद्युतः विद्योतमानान् तडितश्च अक्रत कुर्वन्ति। कृत्वा च परिज्रयः परितो गन्तारः धूतयः कम्पयितारो[2] मरुतः दिव्यानि दिवि भवानि ऊधः ऊधःस्थानीयानि अभ्राणि दुहन्ति रिक्तीकुर्वन्ति। जलरहितानि[3] कुर्वन्तीत्यर्थः। तदनन्तरम् भूमिम् पयसा मेघाद्विनिर्गतेनोदकेन पिन्वन्ति सिञ्चन्ति ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये षष्ठो वर्गः ॥

पिन्व॑न्त्य॒पो म॒रुतः॑ सु॒दान॑वः॒ पयो॑ घृ॒तव॑द् वि॒दथे॑ष्वा॒भुवः॑ ।
अत्यं॒ न मि॒हे वि न॑यन्ति वा॒जिन॒मुत्सं॑ दुहन्ति स्त॒नय॑न्त॒मक्षि॑तम् ॥ ६ ॥

पिन्व॑न्ति। अ॒पः। म॒रुतः॑। सु॒ऽदान॑वः। पयः॑। घृ॒तऽव॑त्। वि॒दथे॑षु। आ॒ऽभुवः॑।
अत्य॑म्। न। मि॒हे। वि। न॒य॒न्ति॒। वा॒जिन॑म्। उत्स॑म्। दु॒ह॒न्ति॒। स्त॒नय॑न्तम्। अक्षि॑तम् ॥ ६ ॥

स्कन्द० पिन्वन्ति[4] पिन्वतिरिह सामर्थ्यात् क्षरणार्थः न सेचनार्थः। क्षारयन्ति वृष्टिलक्षणा अपः मरुतः। न चाप एव केवलाः। किं तर्हि। पयः घृतवत् क्षीरं च घृतसंयुक्तं वर्षयन्ति। वृष्टिद्वारेण गाः प्रभूतक्षीराः कुर्वन्तीत्यर्थः। क्व। विदथेषु यज्ञनामैतत् (तु. निघ ३,१७)। इह तात्स्थ्याद्देशेषु[5]। येषु यज्ञाः क्रियन्ते तेष्वित्यर्थः। आभुवः महान्तः। किञ्च अयम् न मिहे 'अत्यः' (निघ १,१४) इति अश्वनाम। मिह सेचने। यथा 'कश्चिदश्वं सेचनाय' इतश्चेतश्च नयेत् तद्वत् वि नयन्ति विविधमितश्चेतश्च नयन्ति। कीदृशम्। वाजिनम् वाज इत्यपठितमपि[6] बलनाम। वेगवचनं वा। उपमानभूतस्य चात्यस्येदं विशेषणम्। बलवन्तं वेगवन्तं वाऽश्वमिव[7]। अथवा[8] 'वाजः' (निघ २,७) इत्यन्ननाम। इह च तत्कारणत्वाद्वृष्टिलक्षणे[9] उदके प्रवृत्तम्। वक्ष्यमाणमेघस्येदं विशेषणं वृष्ट्युदकवन्तम्। उत्सम् उत्सशब्दोऽत्र मेघवचनः। 'अर्दरुत्सम्' (ऋ ५,३२,१) इति यथा। मेघं विनीय दुहन्ति क्षारयन्ति स्तनयन्तम् गर्जन्तम् अक्षितम् अक्षीणम्। प्रभूतोदकमित्यर्थः। अथवा अक्षितमहिंसितपूर्वमन्येन केनचित् ॥ ६ ॥

वेङ्कट० पिन्वन्ति[11] उदकानि मरुतः सुदानाः, उदकम् क्षरणवत् यज्ञेषु आभवन्तः। अन्तरिक्षादुत्स्य[12] दुहन्ति वर्षोदकमिति। 'घृतेन नो घृतप्वः पुनन्तु' (ऋ १०,१७,१०) इति मन्त्रः। अश्वम् इव बलिनम् मही[13] सेचनाय मेघम् शिक्षयन्ति। दुहन्ति[14] च स्तनयन्तम् अक्षीणम् उत्साख्यम्[15] मेघम्[16] ॥ ६ ॥

मुद्गल० सुदानवः शोभनदानाः मरुतः पयः क्षीरवत् सारवतीः अपः पिन्वन्ति सिञ्चन्ति। आभुवः ऋत्विजः। ते विदथेषु यज्ञेषु घृतवत्। यथा घृतं सिञ्चन्त्येवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः। तत्र हेतुमाह। अयम् न यथा अश्वं सादिनो विनयन्ति युद्धार्थं शिक्षन्त्येवं मरुत-

---

१. मना° मूको. २. कम्पितारः मूको. ३. °रहित मूको. ४. नास्ति मूको. ५. नास्ति भ. ६-६. 'दकेष्ठे' कु. ७. वाजमिव° कु. ८. °मिति भ. ९. अव भ. १०. °लक्षणा° भ. ११. नास्ति वि°; पिन्वन्ति वि[11] क. १२. °दाम् ते कु. १३. नास्ति वि° अ°. १४. नास्ति वि° लपं. १५. अस्ति वि° अ°. १६. मेघस्य वि° अ°.

वाजिनम् वेगवन्तं मेघम् मिहे वि नयन्ति वर्षणाय स्वाधीनं कुर्वन्तीति भावः । विनीय च स्तनयन्तम् गर्जन्तम् अक्षितम् अक्षीणम् उत्सम् । उत्सवन्त्यस्मादाप इत्युत्सो मेघः । तम् दुहन्ति रिक्तीकुर्वन्ति ॥ ६ ॥

महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः ।
मृगा इव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम् ॥ ७ ॥

महिषासः । मायिनः । चित्रऽभानवः । गिरयः । न । स्वऽतवसः । रघुऽस्यदः ।
मृगाःऽइव । हस्तिनः । खादथ । वना । यत् । आरुणीषु । तविषीः । अयुग्ध्वम् ॥ ७ ॥

स्कन्द० खादथ इति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । नचैतानि सम्बोधनानि । अतो यत्तच्छब्दाध्याहृत्यैकवाक्यतां नेयानि । ये यूयम् महिषासः महान्तः मायिनः मायाविनः[१] । चित्रभानवः विचित्रदीप्तयः । गिरयः न स्वतवसः पर्वता इव स्वबलाः । रघुष्यदः स्यन्दतिर्गतिकर्मा । (तु. निघ २,१४) लघुगमनाः । शीघ्रगामिन इत्यर्थः । मृगाः इव हस्तिनः खादथ वना इवशब्दो हस्तिन इत्यत्राप्यनुषक्तव्यः । वनशब्दश्च वृक्षवचन. । यथा मृगास्तृणानि खादन्ति, यथा च हस्तिनो वृक्षान् भङ्क्त्वा[२] खादन्ति, तद्वद्यूयं खादथ । किम् । सामर्थ्याच्छत्रून् । अथवा[३] मृगा इह सिंहा व्याघ्रा वा अभिप्रेताः नान्ये । वनम्' ( निघ १,१२ ) इति उदकनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थम्[४] । यथा सिंहा व्याघ्रा वा भङ्क्त्वा[५] हस्तिनः खादन्ति तद्वद्यूयमुदकवतो मेघानित्यर्थः । कदा । उच्यते । यत् आरुणीषु द्वितीयार्थे सप्तमी । अरुणीः[६] वडवाः । यद्यपि चेदम् 'अरुण्यो गावः उषसाम्' ( निघ, १,१५ ) इत्युपसामादिष्टोपयोजनं तथापि माहाभाग्यात् देवतानां मरुतामप्यविरुद्धम् । तविषीः बलनामैतत् ( तु. निघ,२,९ ) इह चान्तर्णीतमत्वर्थम् । बलवतीः अयुग्ध्वम् युधार्थे स्वरथे न्ययुङ्ग्ध्वम् । यदाऽयुग्ध्वमित्यर्थः[७] ॥ ७ ॥

वेङ्कट० महान्त. प्राज्ञाः चित्रदीप्तयः पर्वताः इव स्वबलाः बलमहत्तया लघुजवाः । सिंहमृगा इव गजान् अरण्यानि परिगृह्य यूयम् खादथ 'यदा अरुणवर्णासु' वडवासु बलानि अयुङ्ग्ध्वं' बलमादाय स्वाश्वा अधितिष्ठथेति ॥ ७ ॥

मुद्गल० महिषासः 'महिषः' ( निघ ३,३ ) इति महन्नाम । महान्तः । मायेति ज्ञाननाम ( तु. निघ ३,९ ) । मायिनः प्राज्ञाः चित्रभानवः शोभनदीप्तयः गिरयः न स्वतवसः पर्वता इव स्वकीयेन बलेन युक्ताः रघुष्यदः शीघ्रगमनाः हे मरुतः! । एवम्भूतगुणविशिष्टा यूयम् हस्तिनः हस्तवन्तः मृगाः इव गजा इव वना वनानि वृक्षजातानि खादथ भक्षयथ । प्रभुङ्क्थेति यावत् । यत् यस्मात् आरुणीषु अरुणवर्णासु वडवासु तविषीः बलानि अयुग्ध्वम् संयोजितवन्तः । तस्मात् भवतामिव वाहनस्यापि प्रबलत्वात् तत्संयुक्ता भवन्तः सर्वं भुञ्जन्तीत्यर्थः ॥ ७ ॥

सिंहा इव नानदति प्रचेतसः पिशा इव सुपिशो विश्ववेदसः ।
क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः समित् सबाधः शवसाहिमन्यवः ॥ ८ ॥

---

१. 'वन्तः अ. २. भङ्क्त्वा कु. ३. 'वा यथा अ. ४. 'मत्वर्थः कु. ५. गत्वा कु.
६. अरुणिः मूको. ७. यथा युग्ध्व' मूको. ८-८. यदरुण' वि' हर्प. ९. 'युग्ध्वं कु.

सिंहाःऽइंव । नानदति । प्रऽचेतसः । पिशाःऽइंव । सुऽपिशः । विश्वऽवेदसः ।
क्षपः । जिन्वन्तः । पृषतीभिः । ऋष्टिऽभिः । सम् । इत् । सऽबाधः । शवसा । अहिंऽमन्यवः ॥ ८ ॥

स्कन्द० सिंहा इव नानदति अत्यर्थं नदन्ति मरुतः । कीदृशाः । प्रचेतसः प्रवृद्धज्ञानाः । पिशा इव सुपिशः पिङ्गलवर्णत्वात् पिशा इह अग्नय उच्यन्ते । सुपिश इति पेशःशब्दस्य रूपनाम्न इदमुपधाह्रस्वत्वम् । व्यत्ययेन च नपुंसकत्वैकवचने । अग्नय इव सुपेशसः । सुरूपा इत्यर्थः । विश्ववेदसः बहुधनाः[1] । किं कुर्वन्तो नानदति[2] । उच्यते । क्षपः जिन्वन्तः 'क्षपः' (निघ १,१२) इत्युदकनाम । जिन्वतिः प्रीतिकर्माऽन्यत्र । इह तु क्षरणार्थः । सम् इत् इत्यत्र च सशब्दः उपसर्गोऽपकृष्य जिन्वन्त इत्यनेन सम्बन्धयितव्यः । उदकं मेघात् सक्षारयन्त इत्यर्थः । केन । पृषतीभिः पृषद्वर्णाभिः वडवाभिः ऋष्टिभिः शक्तिभिश्च तोमरैर्वा । सर्वैर्युद्धोपकरणैरित्यर्थः । समिदिति इच्छब्दः पदपूरणः । कीदृशाः । सबाधः सहभूतानामपि शत्रूणां बाधितारः । शवसा स्वेन बलेन अहिमन्यवः हि गतौ । मन्युर्मन्यते दीप्तिकर्मणः । [3]अगता अविनष्टा[4] दीप्तिर्येभ्यः[5] ते अहिमन्यवः । दीप्तिमन्त इत्यर्थः । अथवा अहीनदीप्तयोऽहिमन्यवः उत्कृष्टदीप्तय इत्यर्थः । अथवा अहिर्मेघोऽसुरो वा । 'मन्युः' (निघ २,१३) इत्यपि क्रोधनाम । अहिविषयः क्रोधो यथा ते अहिमन्यवः । दीप्तिमन्त इत्यर्थः ॥ ८ ॥

वेङ्कट० सिंहा इव शब्दं कुर्वन्ति प्रकृष्टज्ञानाः । यथा पुरुषे मांसानि अवयवश्लिष्टानि एवं[6] पदार्थैः सर्वैरेव मरुतः सुष्ठु आश्लिष्टा भवन्ति । सर्वज्ञाः उदकं पूरयन्तः पृषतीभिः अश्वाभिः[7] ऋष्टिभिः चायुधविशेषैः[8] समेव शत्रून् बाधितारः शवसा आहननशीला अभिमननाः ॥ ८ ॥

मुद्गल० प्रचेतसः प्रकृष्टज्ञानाः मरुतः सिंहा इव नानदति भृशं शब्दम् कुर्वन्ति । यथा सिंहाः गिरिगह्वरेषु गम्भीरं शब्दं कुर्वन्ति, एवं मरुत्स्वभ्यागतेषु गम्भीरशब्द उत्पद्यत इति भावः । तथा सुपिशः शोभनावयवाः । दृष्टान्तः । पिशा इव यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिः शुभ्रलास्तद्वत् । विश्ववेदसः सर्वज्ञाः क्षपः शत्रूणां क्षपयितारः[9] जिन्वन्तः स्तोतॄन् प्रीणयन्तः शवसा बलेन अहिमन्यवः आहननशीलमन्युयुक्ताः[10] । यद्विषये कोपो जायते तस्य [11]हनने समर्थाः[11] इत्यर्थः । एवंभूता मरुतः पृषतीभिः वाहनैः ऋष्टिभिः आयुधैश्च सहिताः सन्तः सबाधः शत्रुभिः बाधितान् यजमानान् सम् इत् समानमेव युगपदेव रक्षितुमागच्छन्तीति शेषः ॥ ८ ॥

रोदंसी आ वंदता गणश्रियो नृषाचः शूराः शवसाहिंमन्यवः ।
आ वन्धुरेष्वमतिर्न दर्शता विद्युन्न तंस्थौ मरुतो रथेषु वः ॥ ९ ॥

रोदंसी इति । आ । वदत । गणऽश्रियः । नृऽसाचः । शूराः । शवसा । अहिंऽमन्यवः ।
आ । वन्धुरेषु । अमतिः । न । दर्शता । विऽद्युत् । न । तस्थौ । मरुतः । रथेषु । वः ॥ ९ ॥

---

१ °घाना भ. २ °नन्दन्ति भ. ३ ३ द. सबाध मूको. ४ ४ आगता° भवन्त्य° अ. ५ दीप्तितेभ्यः भू. ६ °पदार्थ(?)°दिष्टा° वि[1] अ[1]. ७ मास्वि वि[1] अ[1]. ८ भायुधै वि[1] अ[1]. ९ क्षेप° मूको. १० °कं भयुक्ता मूको. ११ ११ हनने न सम° मूको.

स्कन्द० [1]रोदसी आ[1] आकारोऽत्र प्रतिशब्दस्यार्थे । उभे अपि द्यावापृथिव्यौ प्रति वदत । गर्जतेत्यर्थः । हे गणश्रियः ! गणमाश्रिताः ! । गणरूपाः ! इत्यर्थः । नृषाचः ! यागकाले मनुष्याणां सेवितारः ! शूराः ! । केन वदाम[2] । उच्यते । शवसा स्वबलेन । अहिमन्यवः नेदं सम्बोधनम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो [3]यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया[3] । ये यूयमहिमन्यवः ते । किञ्च वन्धुरेषु सारथिस्थानेषु अमतिः न दर्शता 'अमतिः' (निघ ३,७) इति रूपनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । यथा काचिद्रूपवती स्त्री दर्शनीया तद्वद्दर्शनीया । विद्युत् न आ तस्थौ आतिष्ठति । व्यवतिष्ठत इत्यर्थः । नशब्दस्तु उपरिष्टादुपचार[4] उपमार्थीयत्वात् 'अस्त्युपमार्थीयस्य सम्प्रत्यर्थे प्रयोगः' (तु या ७,३१) इति पदपूरणः । अथवा विद्युन्नेति नशब्दश्रुतिसामर्थ्यादुभे अप्येते उपमाने । यथा [5]रूपवती काचित् दर्शनार्हा[5] स्त्री क्वचिद् व्यवतिष्ठते, यथा विद्युद्दीप्यमाना व्यवतिष्ठते, एवं वन्धुरेषु व्यवतिष्ठत इत्यर्थः । कः । सामर्थ्यात् सारथिः । क्व ते[6] वन्धुराः । उच्यते । हे मरुतः ! रथेषु वः युष्माकं सम्भूतेषु ॥ ९ ॥

वेङ्कट० रोदसी स्वनिर्गमनेन[7] शब्दापयत हे गणश्रिय ! इतरेतरयुक्ता ! मनुष्याणां सम्भक्तार ! शूराः ! शवसा अहिमन्यव । रथेषु ये वन्धुरास्तेषु [8]अमतिः इव[8] रूपमिव दर्शनीया विद्युत् न अवतिष्ठते,[9] भूयोभूयः प्रस्फुरति, यथा पदार्थानां रूपं [10]बहिः स्थितमिति[10] ॥ ९ ॥

मुद्गल० हे गणश्रियः ! गणशः श्रयमाणाः ! सप्तगणरूपेणावस्थिताः ! नृषाचः ! नॄन् यजमानान् हविःस्वीकरणाय सेवमानाः ! शूराः ! शौर्योपेताः ! एवंभूता ! हे मरुतः ! शवसा बलेन अहिमन्यवः आहननस्वभावकोपयुक्ताः सन्तः रोदसी द्यावापृथिव्यौ आ वदत आ समन्तात् शब्दयत[11] । युष्मदागमने[12] सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः । किञ्च हे मरुतः ! वः[13] युष्माकं तेजः वन्धुरेषु वन्धककाष्ठनिर्मितं सारथेः स्थानं वन्धुरमित्युच्यते । तद्युक्तेषु रथेषु आ तस्थौ आतिष्ठति, अवस्थितं सत् सर्वैर्दृश्यते । दृष्टान्तद्वयमुच्यते । अमतिः न यथा निर्मलं रूपं सर्वैर्दृश्यते । दर्शता विद्युत् न यथा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यत इत्यर्थः ॥ ९ ॥

विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।
अस्तार इषुं दधिरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः ॥ १० ॥

विश्वऽवेदसः । रयिऽभिः । समऽओकसः । समऽमिश्लासः । तविषीभिः । विऽरप्शिनः ।
अस्तारः । इषुम् । दधिरे । गभस्त्योः । अनन्तऽशुष्माः । वृषऽखादयः । नरः ॥ १० ॥

स्कन्द० विश्ववेदसः सर्वज्ञाः बहुधना वा[14] रयिभिः समोकसः सम् इत्येकीभावे । ओकः स्थानम् । धनैः सहैकस्थानाः । स्वसन्निधौ धनानां स्थापयितार इत्यर्थः । संमिश्लासः तविषीभिः बलैः संमिश्लाः । बलवन्त इत्यर्थः । विरप्शिनः[15] महन्नामैतत् (तु. निघ ३,३) । महान्तः अस्तारः क्षेप्तारः शत्रूणामायुधानां वा ।

---

१-१. नास्ति मूको. २. वदामः मूको. ३-३. °वाक्यता नेया कु; °वाक्यत्वं नेय ख. ४. पुरस्ताद्° कु. ५-५. काचिद्दर्शनीया रूपवती ख. ६. ये मूको. ७. निर्गं° वि[1] अ[1]. ८-८. त्रुटितम् वि[1]. ९. °तिष्ठति वि[2,3] अ[2,3]. १०-१०. °र्बहिःस्थि° वि[1]. ११. शब्दयन्त मूको. १२. °गमे मै[1]. १३. नास्ति मै[1]. १४. नास्ति ख.

इषुम् द धरं धारयन्ति। गभस्त्यो बाहुनामैतत् ( द्र निघ २ ४ ) तत्सम्बन्धात्त्विह हस्तयो प्रयुक्त[1]। आत्मीययोर्हस्तयो । अन तनुष्मा बहुबला[2]। वृषखादय वर्षितुमयस्य खादिता। अथवा खादिशब्द इह कवचस्य वचन, कट्टारिकाकारायुधविशेषवचनो[3] वा। कुत एतत्। अंसेषु व ऋष्टय पत्सु खादय' (ऋ ५ ५४,११), 'त्वेष गण तवस खादिहस्तम्' ( ऋ ५,५८,२, ) इत्यादिषु दर्शनात्। वृषे[4] खादयो यथा त युपखादय नर मनुष्याकारा ॥ १० ॥

वेङ्कट० सर्वज्ञाना धनै समानस्थाना[5] महतोऽपि पर्वतादीन् आत्मबले सम्मिश्रयन्त[6] क्षप्तार इषुन् हस्तयो धारयन्ति अनन्तबला वर्षणशीलखादिनामायुधयुक्ता नेतार ॥ १० ॥

मुद्गल० विश्ववेदस सर्वज्ञा रयाभि धनै समोक्स समाननिवासा समवेता वा[7]। धनाधिपतय इत्यर्थ। तविषीभि बलै साम्मश्लास सम्मिश्रा। सयुक्ता इत्यर्थ। ।वरप्शिन महान्त अस्तार शत्रूणां निरसितार अन तनुष्मा अनवच्छिन्नबला वृषखादय वृषा इन्द्र खादि आयुधस्थानीयो यषां ते वयोक्ता नर नतार। एवभूता मरत गभस्त्यो बाह्वो इषुम् दाधर शत्रूणा निरसनार्थं धनुर्बाणादिकम्[8] आयुध धारयन्ति ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याय सप्तमा वर्ग ॥

हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नन्त आपथ्यो न पर्वतान् ।
मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ॥ ११ ॥

हिरण्ययेभि । पविऽभि । पय ऽवृध । उत् । जिघ्नन्त । आऽपथ्य । न । पर्वतान् ।
मखा । अयास । स्वऽसृत । ध्रुवऽच्युत । दुध्रऽकृत । मरुत । भ्राजत्ऽऋष्टय ॥ ११ ॥

स्कन्द० हिरण्ययाभ पाविभि पवी रथनेमिरुच्यते। हिरण्मयीभि रथचक्रधाराभि पयो [illegible] उदकस्य वर्धयितारः उत् जिघ्नन्ते उच्छब्द ऊर्ध्वतायाम्। प्रदर्शनार्थं चोर्ध्वतोपादानम्। ऊर्ध्वमधस्तिर्यक् च घ्नन्ति। कथम्। आपथ्य न 'आपथयो विपथयोऽन्तस्पथा अनुपथा' ( ऋ ५,५२,१० ) इति प्रयोगदर्शनात् आपथ्या मरुत उच्यन्ते। तथा स्वभूता आपथ्य। अथवा अविद्यमाना[10] नियत पन्था यस्मिन् तदपथम्[11] अन्तरिक्षम्। तत्र भवा आपथ्य। का पुनः। वृष्टिलक्षणा आप। यथा[12] वृष्टिलक्षणा आपो नद्यादिभावेन व्यवस्थिता कूलादीनि घ्नन्ति तद्वदित्यर्थ। किं घ्नन्ति। उच्यते। पर्वतान् मघनामैतत् ( द्र निघ १,१० )। मघानामुपरि चङ्क्रम्यमाणा रथचक्रधाराभिः मेघान् भिन्दन्तीत्यर्थ। इत्याशयोऽपि पश्यति— उत पव्या रथानाम् अद्रिं भिन्दन्त्योजसा' ( ऋ ५ ५२,९ ) इति। कीदृशा। उच्यते। मखा अपरिमितमपि महत्त्वमेतत् [illegible]। महान्त। अथवा मखा इति यज्ञनामैतत्[11] मखयत [13]"अप्रतिक्रमण। [illegible] कुर्वन्तीति"[14] मखा। वृष्टिद्वारेण यज्ञस्य कर्तारः। अयासः गमनशीला स्वसृत। सर्वत्र स्वयगामिन।

1 [illegible] अ 2 बहुला अ 3 [illegible]" मूको 4 कुत्सितम् मूको 5 समान [illegible]
6 [illegible] वि' 7 नास्ति मूको 8 धनुर्बाण' मूको 9 [illegible] मूको 10 [illegible]' अ
11 [illegible] अ 12 नास्ति अ 13 द्र निघ ३,१० [illegible] अ 14 14 नास्ति अ

ध्रुवच्युतः स्थिराणामपि च्यावयितारः। दुध्रकृतः कृन्ततिर्वधकर्मा (तु. निघ २,१९)। दुर्धराणां कर्तितारः[1]। अत्यन्तमपि बलवतां हन्तार इत्यर्थः। अथवा करोतेरेवैतद्रूपम्[2]। दुध्रशब्दस्तु दुर्धरतायां द्रष्टव्यः। आत्मनो दुर्धरतायाः कर्तारः। के। उच्यते। मरुतः भ्राजदृष्टयः दीप्तशक्तयो दीप्ततोरणा वा ॥ ११ ॥

वेङ्कट० हिरण्मयैः[3] पविभिः[4] उदकस्य वर्धयितारः उद्बाधयन्ति[5], तृणानि इव [6]पर्वतान् दातारः† गच्छन्तः[6] स्वयमेव[7] सरन्तः ध्रुवाणामपि च्यावयितारः दुर्धरस्य कर्मणः कर्तारः दीप्तायुधाः मरुतः[8] ॥ ११ ॥

मुद्गल० मरुतः हिरण्ययेभिः सुवर्णमयैः पविभिः रथानां चक्रैः पर्वतान् पर्ववतो मेघान् उत् जिघ्नन्ते ऊर्ध्वं गमयन्ति। स्थानात् प्रच्यावयन्तीत्यर्थः। दृष्टान्तः। आपथ्यः न यथा पथि गच्छन् रथो मार्गे आस्थितं वृक्षादिकं चूर्णीकृत्योर्ध्वं नयति। कीदृशा मरुतः। पयोवृधः पयसो वृष्ट्युदकस्य वर्धयितारः। मखाः यज्ञवन्तः अयासः देवयजनदेशं प्रति गन्तारः स्वसृतः शत्रून् प्रति स्वयमेव सरन्तो गच्छन्तः ध्रुवच्युतः ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः दुध्रकृतः दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः। भ्राजदृष्टयः दीप्यमानायुधाः ॥ ११ ॥

घृषुं पा॒व॒कं व॒नि॒नं॒ विच॑र्षणिं रु॒द्रस्य॑ सू॒नुं ह॒वसा॑ गृणीमसि ।
र॒ज॒स्तुरं॑ त॒वसं॒ मारु॑तं ग॒णमृ॑जी॒षिणं॒ वृष॑णं सश्चत श्रि॒ये ॥ १२ ॥

घृषुम् । पा॒व॒कम् । व॒निन॑म् । विऽच॑र्षणिम् । रु॒द्रस्य॑ । सू॒नुम् । ह॒वसा॑ । गृ॒णी॒म॒सि॒ ।
र॒जः॒ऽतुर॑म् । त॒वस॑म् । मारु॑तम् । ग॒णम् । ऋ॒जी॒षिण॑म् । वृष॑णम् । स॒श्च॒त॒ । श्रि॒ये ॥ १२ ॥

स्कन्द० घृषुम् घृ क्षरणदीप्त्योः। दीप्तम्। अथवा घृषुरित्यपठितमपि महन्नाम। महान्तं परिमाणतः। पावकम् शोधयितारं[10] गन्तारं वा शत्रून् प्रति वनिनम् उदकवन्तं सम्भक्तारं वा यज्ञानाम्। विचर्षणिम् विद्रष्टारं सर्वस्य। रुद्रस्य सूनुम् अपत्यभूतम्। हवसा ह्वयतिरर्चतिकर्मा (तु. निघ ३,१४)। आह्वानं हव.[11] स्तुतिः तया गृणीमसि स्तुमो वयम्। यूयमपि हे मदीयाः पुत्राः! पौत्राः! च ऋत्विजो! वा। रजस्तुरम् रज उदकम् (तु. या ४,१९)। तुर्वतिर्हिंसार्थः। उदकार्थं मेघानां हिंसितारम्। तवसम् महान्तं वीर्यतः। मारुतम् गणम् ऋजीषिणम् यद् सोमस्य पूयमानस्यातिरिच्यते तदृजीषम्। तत्तु हर्योर्भागो न मरुताम्। अतोऽत्र ऋजीषेण[11] स्वसम्बन्धिसोमो लक्ष्यते। ऋजीषसम्बन्धिसोमवन्तमित्यर्थः। वृषणम् वर्षितारम्। सश्चत सश्चतिर्गतिकर्मा (तु. निघ २,१४)। शुद्धोऽपि सोपसर्गार्थो[12] द्रष्टव्यः। स्तुतिभिर्हविर्भिश्च उपगच्छत। किमर्थम्। श्रिये यज्ञफललक्षितायाः[13] श्रियोऽर्थाय ॥ १२ ॥

वेङ्कट० घर्षणशील[14] शोधक[15] भजनवन्तं विद्रष्टारं रुद्रस्य पुत्रं स्तोत्रेण स्तुमः। उदकस्य [16]प्रेरयितारं वृद्धम्[16] मारुतम्[17] गणम् तृतीयसवनेऽन्वयात् ऋजीषिणम् वर्षितारम्। सेवध्वं[18] श्र्यर्थम् ॥ १२ ॥

---

१. कर्तारः कु. २. कृन्त एवै° अ; कृन्ततेरेवै° कु. ३. °रण्मैः वि[1] अ[1]. ४. पवत्स विभिः वि[2,3] अ[1]. ५. उत्थापयन्ति वि[1] अ[1]. ६-६. मुद्रितम् वि[1]. † दातारः उदकस्य वर्धयितारः छ. ७. °मेव सर्वत्र वि[1] अ[1]. ८. नास्ति मूको. ९. नास्ति मै[1]. १०. शोधिता° अ. ११. नास्ति अ. १२. °र्गिणे अ. १३. °सर्गार्थो अ. १४. यज्ञ फल° अ. १५. नास्ति वि[1]. १६. °भकम् यज्ञानाम् वि[1] अ[1]. १७. मरुतां लपं. १८. सेवत मूको.

मुद्गल० पृथुम् शत्रूणां बलस्य धर्षक विनाशयितारम् पावकम् सर्वेषां शोधकम् वनिनम् उदकवन्त वृष्टिप्रदमित्यर्थ । विचर्षणिम् विशेषेण सर्वस्य द्रष्टारम् रुद्रस्य महादेवस्य सूनुम् पुत्रभूतम् एवंविध मरुतां समूहम् हवसा आह्वानसाधनेन स्तोत्रेण गृणीमसि शब्दयाम । स्तुम इत्यर्थ । हे ऋत्विग्यजमाना । यूयमपि । रय ऐश्वर्याय धनार्थम् मारुतम् गणम् मरुतां सघम् सश्चत प्राप्नुत । कारुम्। रजस्तुरम् पार्थिवस्य पासो त्वरयितारम्। प्रेरकमित्यर्थ । तवसम् प्रवृद्धम् ऋजीषिणम्। तृतीयसवने हि मरुत स्तूयन्ते, तत्र च ऋजीषमभिषुण्वन्तीति 'ऋजीषसम्बन्ध श्रुत', अतस्तद्वन्तम् वृषणम् कामानां वर्षितारम् ॥ १२ ॥

प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत ।
अर्वद्भिर्वाजं भरते धना नृभिराप्रच्छ्यं क्रतुमा क्षेति पुष्यति ॥ १३ ॥

प्र । नु । सः । मर्तः । शवसा । जनान् । अति । तस्थौ । वः । ऊती । मरुतः । यम् । आवत ।
अर्वत्ऽभिः । वाजम् । भरते । धना । नृऽभिः । आऽपृच्छ्यम् । क्रतुम् । आ । क्षेति । पुष्यति ॥ १३ ॥

स्कन्द० प्रशब्द प्रकर्षे, तस्थौ इत्यनेन च सम्बन्धयितव्य । नु' (निघ २,१५) इति क्षिप्रनाम। क्षिप्रम् स मर्त शवसा जनान् अति जनानिति कर्मश्रुत अतीति चोपसर्गाद्योग्यक्रियाध्याहार । जनानत्येत्य प्र' तस्थौ प्रकर्षेण तिष्ठति। व ऊता युष्माकं पालनेन। हे मरुत ! यम् आवत पालयत यूयम्। य मनुष्य पालयथ यूय स युष्मत्पालनेनान्येभ्योऽधिकं बल प्राप्नोतीत्यर्थ । न च बलमेव केवलम्। किं तर्हि। अर्वाद्भ अश्वै सह वाजम् अन्नम् भरते हरति आत्मानं प्रति प्रापयति। लभत इत्यर्थ । धनानि च नृभि परिचारकमनुष्यै सह। आपृच्छ्यम् क्रतुम् सर्वार्थेषु च आप्रष्टव्यां प्रज्ञाम्। अथवा नृभिरित्येतदापृच्छ्यमित्येतेन सम्बध्यते। सर्वार्थेषु सर्वैर्मनुष्यैराप्रष्टव्याम्' च प्रज्ञामिति। आ क्षेति सर्वदा च स्वस्मिन् स्थाने निवसति। पुष्यति सर्वप्रकाराम्च पुष्टिं प्राप्नोति ॥ १३ ॥

वेङ्कट० प्रकर्षेण अभितिष्ठति क्षिप्रम् स मर्त अन्यान् जनान्, यं यूयं रक्षणेन मरुत ! रक्षथ। अश्वै अन्नं च बिभर्ति, "धनानि च दासै "। आप्रष्टव्यं चित्रकर्म' अधितिष्ठति, पुष्यति च प्रजादिभि ॥ १३ ॥

मुद्गल० स मर्त मनुष्य शवसा बलेन जनान् अन्यान् पुरुषान् अति अतीत्य नु क्षिप्रम् प्र तस्थौ प्रतिष्ठितो भवति। हे मरुत ! व युष्माकम् ऊती ऊत्या रक्षणेन यम् पुरुषम् आवत अरक्षत। अपि च स पुरुष अर्वद्भि अश्वै साधनभूतै वाजम् अन्नम् नृभि स्वकार्यमनुष्यै धना धनानि च भरते सम्पादयति। तथा आपृच्छ्यम् आप्रष्टव्यं शोभनं क्रतुम् अभिष्टामादिकम् आ क्षेति प्राप्नोति। पुष्यति प्रजया पशुभि पुष्टो भवति च' ॥ १३ ॥

चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्तं शुष्मं मघवत्सु धत्तन ।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥ १४ ॥

---

१ १. धर्मं अन्नं मूको. २. नास्ति भ. ३. स्कन्द॰ भ. ४ ४. पुष्टिम् वि', ५. ° वि'. ६. नास्ति मूको.

चर्कृत्यम् । मरुतः । पृत्ऽसु । दुस्तरम् । द्युऽमन्तम् । शुष्मम् । मघवत्ऽसु । धत्तन ।
धनऽस्पृतम् । उक्थ्यम् । विश्वऽचर्षणिम् । तोकम् । पुष्येम । तनयम् । शतम् । हिमाः ॥ १४ ॥

स्कन्द० चर्कृत्यम् कृन्ततिर्वधकर्मा (तु. निघ २,१९)। अत्यर्थं शत्रूणां हन्तृ हे मरुतः! पृत्सु सङ्ग्रामेषु दुस्तरम् अवतिरतीति[1] वधकर्मसु पाठात् तिरतिर्वधार्थः[1] (तु निघ २,१९)। शत्रुभिः दुर्हणम्। द्युमन्तम् दीप्तिमत् शुष्मम् बलम् मघवत्सु धनवत्सु सत्सु[1] धत्तन स्थापयत। पूर्वमस्मभ्यं धनं दत्त, ततो धनवद्भ्यः सद्भ्यो बलमित्यर्थः। किञ्च धनस्पृतम् स्पृ प्रीतिपालनयोः। धनेन प्रीयमाण धनस्य वा पालयितारम्। उक्थ्यम् प्रशस्यम्। विश्वचर्षणिम् सर्वस्य विद्रष्टारम्। अशेषस्य यज्ञस्य ज्ञातारमित्यर्थः। तोकम् पुत्रम्। पुष्येम दैवादिकः पुषिः वृद्ध्यर्थत्वादकर्मकः,[4] क्रैयादिकस्तु वर्धनार्थत्वात् सकर्मकः। इह तु तोकं कर्म श्रुतम्। अतोऽयं व्यत्ययेन क्रैयादिकस्य पुषेः श्यन्[5] द्रष्टव्यः। युष्मत्प्रसादेन पुष्णीयाम। तनयम् पौत्रञ्च। अथवा पुष्येमेति दैवादिकस्य पुषेः रूपम्। धनस्पृतमित्यादिद्वितीया तृतीयार्थे। धनस्पृत्त्वादिगुणेन तोकेन तनयेन च वर्धिषीमहीत्यर्थः। कियन्तं कालम्। उच्यते। शतम् हिमाः शतवर्षम् ॥ १४ ॥

वेङ्कट० पौन पुन्येन कर्तव्यम् मरुतः सङ्ग्रामेषु तरितुमशक्यं दीप्तिमद् बलं हविष्मत्सु निधत्त[6]। धनानां स्प्रष्टारं प्रशस्यं सर्वस्य[7] द्रष्टारं[8] पुत्रं तत्पुत्रं 'च पोषयेम'[9] लभेमहि शतम् हिमाः[10] जीवन्तः ॥ १४ ॥

मुद्गल० हे मरुतः! मघवत्सु हविर्लक्षणधनयुक्तेषु यजमानेषु पुत्रम् धत्तन स्थापयत, दत्तेति यावत्। कीदृशं पुत्रम्। चर्कृत्यम् कार्येषु पुनःपुनः पुरस्कर्तव्यम्। सर्वकर्मकुशलमित्यर्थः। पृत्सु सङ्ग्रामेषु दुस्तरम् दुःखेन तरितव्यम्। अजेयमित्यर्थः। द्युमन्तम् दीप्तिमन्तम् शुष्मम् शत्रूणां शोषकम् धनस्पृतम् धनानां स्प्रष्टारम् उक्थ्यम् उक्थं स्तोत्रं तदर्हम्। प्रशस्यमित्यर्थः। विश्वचर्षणिम् विशेषेण द्रष्टारं सर्वज्ञम्। एवंविधम् तोकम् पुत्रम् तनयम् पौत्रञ्च शतम् हिमाः हेमन्तर्तूपलक्षितान् शतं संवत्सरान् जीवन्तः सन्त पुष्येम पोषयेम ॥ १४ ॥

नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त ।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १५ ॥

नु । स्थिरम् । मरुतः । वीरऽवन्तम् । ऋतिऽसहम् । रयिम् । अस्मासु । धत्त ।
सहस्रिणम् । शतिनम् । शूशुऽवांसम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १५ ॥

स्कन्द० क्षिप्रं हे मरुतः! वीरवन्तम् पुत्रैः पौत्रैश्च युक्तम् ऋतीषाहम्[11] गन्तव्यत्वात् ऋतयः शत्रव इहोच्यन्ते। तेषामभिभवितारम्। रयिम् अस्मासु धत्त सहस्रिणम् शतिनम् "सहस्रसंख्याकं शतसंख्याकं[12] च। अत्यन्तवृद्धमित्यर्थः। शूशुवांसम् श्वयतिः वृद्ध्यर्थः। प्रवर्धमानम्। प्रातः मक्षू इत्ययं तु पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् उक्तार्थश्च। गणापेक्षं चात्रैकवचनं द्रष्टव्यम् ॥ १५ ॥

---

१. अवतर° मूको. २. तरति° मूको. ३. नास्ति कु. ४. °कस्तयोदि° अ. ५. नास्ति अ.
६. 'धन वि[1] अ[2] लपं. ७ °सर्वस्य अशेषस्य द्रष्टस्य वि[1] अ[2]. ८. ज्ञातारम् वि[2] अ[1]. ९-९. नास्ति वि[1] अ[2].
१०. हिमा. शतवर्षं वि[2] अ[2]. ११. नास्ति अ. १२. °संख्याकं अ.

वेङ्कट० क्षिप्रम् स्थिरम् मरुतः[1] पुत्रयुक्तं शत्रूणामभिभवितारम् रयिम् अस्मासु धत्त सहस्रसंख्याकं वर्धमानमिति ॥ १५ ॥

मुद्गल० हे मरुतः! स्थिरम् स्थास्नुम् वीरवन्तम् वीरैः पुत्रैः तद्वन्तम् ऋतीषाहम् शत्रूणा शत्रूणामभिभवितारम्। एवंविधम् रयिम् पुत्रलक्षण धनम् नु क्षिप्रम् अस्मासु धत्त स्थापयत, सहस्रिणम् शतिनम् एवंसंख्याकधनवन्तम्, अत एव शूशुवांसम् प्रवृद्धम्। अपि चास्माकं रक्षणाय धिया बुद्ध्या प्राप्तधनो मरुद्गणः प्रातःकाले अगम्यात् आगच्छतु ॥ १५ ॥

इति प्रथमाष्टके पञ्चमाध्याये अष्टमो वर्गः ॥

इति प्रथमे मण्डले एकादशोऽनुवाकः ॥

[ ६५ ]

पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम् ।
सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन् विश्वे यजत्राः ॥१॥२॥

पश्वा । न । तायुम् । गुहा । चतन्तम् । नमः । युजानम् । नमः । वहन्तम् ।
सऽजोषाः । धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे । यजत्राः ॥१॥२॥

स्कन्द० 'शाक्त्य पराशरः'। 'पश्वा न तायुम्' इत्यष्टमादि शक्तिपुत्रः पराशरो नामापश्यत्। 'ततोऽग्ने'। यत्पूर्वं मारुतमुक्तं ततः परमिदं सूक्तपञ्चदशकमग्निदेवत्यं प्रत्येतव्यं प्राग् इत्यादिसोमात् (ऋ १, ८०) इत्यर्थः। 'पश्वा न तायुम्' इत्येतस्मिन् ऋग्द्वये इतिहासमाचक्षते— 'अग्निर्यमीन्द्र वरुणानीन्द्र कामयाञ्चक्रे। स परदाराभिमर्शनात् जलाऽऽविवेश। अथ तयाऽऽविष्टो हवींषि वोढुमशक्नुवन् यज्ञाच्च वषट्काराच्च बिभ्यद्[2] अनाशनम्[3] उषित्वा वाप्स्वोषधीषु च प्रविवेश। तमापः स्वेनामृतरसेन वर्धयाञ्चक्रुः। देवा अपि यमवरुणपुरस्सरा उपगम्याऽऽत्मायुत्तस्य कृत्वा प्रयाजानूयाजश्च मतिज्ञाय पुनरपि हविषा वोढारञ्च नियुयुजिरे[4] इति[5]। तदेतद्विस्तरेण 'महत् तदुल्बम्' (ऋ १०, ५१,१) इत्यत्र वक्ष्यति। संक्षेपेण त्विहोच्यते— पश्वा न तायुम् इति। पश्वा इतीत्थंभूत लक्षणे तृतीया। 'तायु' (निघ ३,२४) इति स्तेननाम। पशुनवापहृतेन सम्बद्ध स्तेनम् गुहा गुहं प्रच्छन्नम् चतन्तम् 'तेभिष्ट्वा चातयामसि' (ऋ १०,१५५,१) इति दर्शनात् चातयतिर्नाशने प्रसिद्ध। अतोऽत्र प्रहरयन्तरम्वत्तनिर्देशार्थ[6]। नश्यन्त स्वाम्। नष्ट्वा च नम युजानम् नम कारणत्वादापोऽत्र नम शब्देनोच्यन्ते। तृतीयार्थे चैषा द्वितीया। अप्कारणत्वात्क्षणेन युज्यमानम्। अप्सु प्रविशन्तमित्यर्थः। प्रविश्य च नम वहन्तम् अमृतरसलक्षणमन्नमात्मानं प्रति प्रापयन्तम्। अमृतरस पिबन्तमित्यर्थं। सजोषा सहप्रीतय धीरा प्राज्ञा स्वदीयेषु पदे त्वाम् अनु ग्मन् अनुगतवन्त। अनुगम्य च उप सीदन् त्वाम् विश्वे यजत्रा यष्टव्या देवा ॥ १ ॥

---

१ तदभ्यर्ह्यत्र° वि[1] अ[2], २. बिभ्यन् मूको ३ नास्ति अ. ४ °युयुजे मूको ५. नास्ति अ.
६ °रथातिनांश° मूको.

वेङ्कट० पराशरः शाक्त्यः । द्विपदा विंशत्यक्षरा । प्रायेण द्वयोर्द्वयोरैकार्थ्यं दृश्यते । 'अग्नेरनयो ज्यायांसो भ्रातर आसन्, ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त, सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवताः[1] प्रैषमैच्छन्' ( तै २,६,५,१ ) इति ब्राह्मणम् । तत्रेदमुच्यते पशुना[2] इव स्तेनं गुहायां गच्छन्तम् अन्नमात्मना संयुञ्जानं[3] संयुक्तञ्च[4] अन्नम् वहन्तम् समादाय गच्छन्तं [5]सङ्गताः प्राज्ञाः पदैः अन्वगच्छन्,[5] उपासीदंश्च त्वाम् विश्वे देवाः ॥१॥२॥

मुद्गल० द्वादशेऽनुवाके नव सूक्तानि । तत्र 'पश्वा' इत्यादीनि षट् सूक्तानि द्वैपदानि । तेष्वध्ययनसमये द्वे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते । अयुक्संख्यासु तु याऽन्त्याऽतिरिच्यते सा तथैवाम्नायते । प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव । प्रयोगे तु याः पृथक् शंसनीयाः । तत्र 'पश्वा' इति दशर्चं प्रथमं सूक्तम् । शक्तिपुत्रः पराशर ऋषिः । द्विपदा विराट् छन्दः । 'विंशतिका द्विपदा विराजः' ( ऋअ १,१२,८ ) इति तल्लक्षणम् । अग्निर्देवता ॥

धीराः मेधाविनो देवाः सजोषाः समानप्रीतयः सन्तः हे अग्ने! त्वाम् पदैः मार्गैः पादकृतैर्लाञ्छनैः अनु ग्मन् अन्वगमन् । कीदृशम् । पश्वा अपहृतेन पशुना सह वर्तमानम् तायुम् न यथा स्तेनः परकीयं पश्वादिधनमपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वत् गुहा चतन्तम् अदृश्यायां गुहायां गच्छन्तं वर्तमानम् । चततिर्गतिकर्मा ( तु. निघ २,१४ ) । तथा नमः युजानम् हविर्लक्षणमन्नमात्मना संयुजानम् नमः वहन्तम् देवेभ्यः प्रत्तं हविर्वहन्तम् । यजत्राः यजनीयाः विश्वे सर्वे देवाः हे अग्ने! त्वा त्वाम् उप सीदन् समीपं प्राप्नुवन्, ददृशुरित्यर्थः ॥ १ ॥ २ ॥

ऋ॒तस्य॑ दे॒वा अनु॑ व्र॒ता गु॒र्भुव॒त् परि॑ष्टि॒र्द्यौर्न भूम॑ ।
वर्ध॑न्ती॒माप॑ः प॒न्वा सुशि॑श्विमृ॒तस्य॒ योना॒ गर्भे॒ सुजा॑तम् ॥२॥४॥

ऋ॒तस्य॑ । दे॒वाः । अनु॑ । व्र॒ता । गुः॒ । भुव॑त् । परि॑ष्टिः । द्यौः । न । भूम॑ ।
वर्ध॑न्ति । ई॒म् । आप॑ः । प॒न्वा । सुऽशि॑श्विम् । ऋ॒तस्य॑ । योना॑ । गर्भे॑ । सुऽजा॑तम् ॥२॥४॥

स्कन्द० ऋतस्य[6] गतस्याग्नेरप्सु देवाः यमप्रभृतयः अनु व्रता गुः गमनाख्यानि कर्माण्यनुगतवन्तः । यतोयतो निर्गतस्ततोऽनुगतवन्त इत्यर्थः । भुवत् परिष्टिः नष्टस्य चाग्नेरभवत् पर्येषणा । कियती । उच्यते । द्यौः न भूम विस्तीर्णपर्यायोऽत्र भूमशब्दः, न बहुवचनः । भूतजातवचनो वा । द्यौरिव विस्तीर्णा । सर्वस्मिन् जगतीत्यर्थः । वर्धन्ति ईम् भूतेऽत्र[7] लट् द्रष्टव्यः । ईंशब्दश्च एनमित्यस्यार्थे । अवर्धयंश्चैनमग्निम् आपः पन्वा पननीयेन स्तुत्येनामृतरसेन सुशिश्विम्[8] श्वयतिर्वृद्ध्यर्थः । सुष्ठु वृद्धम् । अथवा शिशुशब्दस्येदं रूपम् । सुष्ठु शिशुं सन्तम् । [9]अत्यन्तं क्षीणमित्यर्थः[9] । क्व प्रदेशे । उच्यते । ऋतस्य योना 'ऋतम्' ( निघ १,१२ ) इत्युदकनाम । उदकस्य योनौ गर्भे गर्भस्थानमत्र गर्भशब्देनोच्यते । आत्मन एव योनौ यः प्रदेशो गर्भस्थानं तत्रेत्यर्थः । सुजातम् सुष्ठु शोभनं वा जातम् ॥ २ ॥

---

१. देवाः वि[1,2] अ[1] कु ल लप. २. नास्ति वि[1]. ३. °युञ्जमानम्, वि[1] लप. ४. युक्त° वि[1]. ५-५. नास्ति वि[1]. ६. ऋतं ऋतस्य म. ७. भूते म. ८. नास्ति म. ९-९. अत्यन्तमज्ञ° म.

वेङ्कट० अग्ने देवा अन्वगच्छन् कर्माणि निलीनस्य। क्व[1] किं कृत्वा गच्छतीति[2] तदाभवत् परिष्टिः पर्येषणम् अन्वेषणम्[3]। द्यौ इव चासीत् भूमिरग्न्यन्वेषणार्थमागतैर्देवैः[4]। त एनमग्निं वर्धयन्ति आपः स्तोत्रेण सुष्ठु वृद्धम् उदकस्य अन्तः गर्भे सुष्ठु प्रादुर्भूतमिति ॥३॥४॥

मुद्गल० [5]उक्त एवार्थः[5] स्पष्टीक्रियते। देवाः ऋतस्य गतस्य पलायितस्याग्नेः[6] [7]व्रता व्रतानि कर्माणि गमनावस्थानशयनादिरूपाणि अनु गुः अन्वेष्टुमगमन्। तदनन्तरम् परिष्टिः परितः सर्वतोऽन्वेषणम् भुवत् अभवत्। भूम भूमिरपि अग्नेः[7] अन्वेष्टृभिर्देवैः द्यौः न स्वर्ग इवाभूत्। इन्द्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ता इत्यर्थः। आपः अब्देवताः ईम् एनम् उदके प्रविष्टम् अग्निम् वर्धन्ति वर्धयन्ति। यथा देवा न पश्यन्ति तथाऽरक्षन्नित्यर्थः[8]। कीदृशम्। एन्वा स्तोत्रा सुशिश्विम् सुष्ठु प्रवर्धितम् ऋतस्य योना यज्ञस्य कारणभूते जले गर्भे गर्भस्थाने मध्ये सुजातम् सुष्ठु प्रादुर्भूतम्। एवमप्सु वर्तमानमग्निं देवेभ्यो मत्स्य प्राब्रवीत्। तदनन्तरं देवास्तमग्निमन्वासिषुरिति भावः ॥३॥४॥

पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु ।
अत्यो नाज्मन्त्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते ॥५॥६॥

पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शम्ऽभु ।
अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिन्धुः । न । क्षोदः । कः । ईम् । वराते ॥५॥६॥

स्कन्द० उपमानोपमेयसाधारणगुणवचनानां शब्दानां सर्वत्रोपमेयवृत्तित्वदर्शनात् इह चाग्नेः पुल्लिङ्गस्योपमेयत्वात् पुष्टिः न रण्वा इत्यादिषु व्यत्ययेन स्त्रीलिङ्गनपुंसकलिङ्गत्वे। रण्वेत्यपि[9] रम रूपम्। धनादिपुष्टिरिव रमणीयः प्रीतिकरदर्शनोऽग्निः[9]। क्षितिः न पृथ्वी 'क्षिति' (निघ १,१) इति पृथिवीनाम। दावरूपसाग्नेरिदमुपमानम्[10]। [11]पृथिवीव च पृथुः[11] दावरूपः [12]सन्। गिरिर्न भुज्म[12] पर्वत इव फलादिनोपभोग्यः। क्षोदो न शंभुः[13] 'क्षोद' (निघ १,१२) इत्युदकनाम। उदकमिव तृट्छेदादिना सुखस्य भावयिता। अथ न एते अपि द्वे दावरूपस्यैवोपमाने। अश्व इव च अज्मन् गमने सर्गप्रतक्तः सर्गशब्दो वेगवचनः। तक्षतिर्गतिकर्मा। वेगगामिदावरूपः। सिन्धुः न क्षोदः सिन्धुर्नदी। षष्ठ्यर्थे चैषा प्रथमा। सिन्धोरिव चोदकम्। कः ईम् एतं[14] दावरूपं सन्तम् वराते वारयति। न कश्चिद्वारयितुं शक्नोतीत्यर्थः ॥ ३ ॥

वेङ्कट० हव्यवाहनाद्[15] भीतोऽरण्यं[16] प्राविशत्, "तद् द्वाभ्यां[17]" स्तौति। पुष्टिः इव रमणीया, भूमिः इव विस्तीर्णा, गिरिः इव भोगसाधनम्, उदकम् इव सुखभावयितृ[18]। सोऽयम् अश्व इव गमने भवति। गमनप्रवृत्तं[19] तम्[20] इमं कः[20] वारयति। यथा सिन्धुः उदकं कूलाभ्यां वारयति तद्वदिति[21] ॥५॥६॥

---

१. नास्ति वि[1,3] भ[1] कु ल लप २ °दीत अन्वेषणं वि[1,3] भ[1] ल लप ३ नास्ति मूको ४ भूत्वने° वि[1] भ[1]. ५-५ उक्तमेव मै[1] ६ °ग्ने° मूको ७-७ नास्ति मै[1] ८ °रक्ष° भ ९ °दर्शनोऽग्नि भ १० °रूपस्य वाग्ने° कु ११-११ पृथिवी पृथु भ १२-१२ नास्ति भ १३ नास्ति भ १४ एवं भ १५ भ(ति)हव्य° वि[1] १६ °रण्यं° वि[1] भ[1] १७-१७ द्वाभ्यां वि[1] १८. °भावयितृ लप १९ °वृ° वि[1,3] भ[1] कु ल २०. नास्ति वि[1] भ[1]. २१ °वत् कु

मुद्गल० रण्वा रमणीया सर्वेषां हृद्या पुष्टि न अभिमतफलानामभिवृद्धिरिव अग्नि सर्वेषां रमणीय ऐहिकामुष्मिकसकलव्यवहारस्याग्न्यधीनत्वात्। यद् 'वा पुष्टिरिव' रण्वा गन्तव्य शब्दनीय । यथा पुष्टि प्राप्यते तद्वदग्नि यज्ञ इविर्भि प्राप्यत इति भाव । पृथ्वी विस्तीर्णा क्षिति न भूमिरिव अग्निरपि विस्तीर्ण सर्वभूतेषु आत्मरूपेणावस्थानात्। गिरि न पर्वत इव भुज्म सर्वेषां भोजयिता। यथा गिरौ विद्यमान फलमूलादिकमाहृत्य सर्वे भुञ्जते तद्वदग्नावपि पचन्त सर्वे भुञ्जत। शम्भु सुखकरम् क्षोद न उदकमिव। यथोदक सुख करोति तद्वदग्नि सर्वेषां सुखकारीत्यर्थ । अज्मन् अज्मनि सङ्ग्रामे अत्य न सततगमनशीलो अश्व इव सर्गप्रतक्त सगाण विसर्गेण प्रगमित । यथा सादिना प्रेषितो ऽत्यश्वो हन्तव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभि प्रेरित सन् शत्रून् हन्तु शीघ्र गच्छतीति भाव । अपि च सिन्धु न क्षोद स्यन्दनशीलमुदकमिव अयमपि शीघ्रगामी। यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवार तद्वत् दग्धव्याभिमुखोऽग्निरपीत्यर्थ । अतो यस्मादेव तस्मात् ईम् एनमग्निम् क वराते को वारयते । न कोऽपि वारयितु शक्नोतीत्यर्थ ॥५॥६॥

जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।
यद् वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥ ७ ॥ ८ ॥

जामि । सिन्धूनाम् । भ्राताऽइव । स्वस्राम् । इभ्यान् । न । राजा । वनानि । अत्ति ।
यत् । वातऽजूत । वना । वि । अस्थात् । अग्नि । ह । दाति । रोम । पृथिव्या ॥७॥८॥

स्कन्द० वैद्युतस्याऽग्नेरनेन पादेन स्तुति । जामि ज्ञाति[1] वैद्युतोऽग्नि सिन्धूनाम् आपोऽत्र सिन्धव उच्यन्ते। 'य सिन्धूनामुपोदये सप्तस्वसा स मध्यम' ( ऋ ८ ४१,२ ) इति यथा। वृष्टिलक्षणानामपाम्। कथम्। भ्राता इव स्वसॄणाम् भगिनीनां यथा भ्राता अत्यन्तसन्निकृष्टो ज्ञातिस्तद्वदित्यर्थ । परैस्त्रिभि पादै दावरूपस्याग्ने स्तुति । इभ्यान् न राजा इभा हस्तिन तेषु भवा साधवो वा इभ्या हस्त्यारोहा । यथा इभ्यान् राजा आक्रम्योपभुङ्क्ते तद्वद् दावाग्नि वनानि वृक्षान् अत्ति भक्षयति। दहतीत्यर्थ । कदा। उच्यते। यत् वातजूत वातेन प्रेरित[1] सर्ववनानि[3] व्यस्थात् विपूर्वस्तिष्ठतिर्गत्यर्थ । विविध गच्छतीत्यर्थ । तदैव च अग्नि दावरूप । ह शब्द पदपूरण । दाति लुनाति[4] रोमस्थानीय तृणम् पृथिव्या । तदैव पृथिव्यास्तृणान्यपि दहतीत्यर्थ ॥ ४ ॥

वेङ्कट० बन्धु सिन्धूनाम् स्यन्दमानानां नदीनाम्[1] । भ्राता इव "स्वसॄणामित्यौपमिकम्। सोऽयम्" इभस्थान् शत्रून् राजा इव काष्ठानि अत्ति । यदा[8] वातप्रेरित वृक्षान् अभिभवति तदानीम् अग्नि खलु छिनत्ति दहति[9] लोमस्थानीयं तृणगुल्मादिकमपि पृथिव्या[10] इति[11] ॥ ७ ॥ ८ ॥

मुद्गल० सिन्धूनाम् स्यन्दनशीलानामपामयमग्नि जामि बन्धु तासामुत्पादकत्वात्। निदर्शनम्।

---

१ १ नास्ति मूको　२ नाति भ　३ पूरित कु　४ वनानि कु　५ पुनाति कु　६ नास्ति वि' भ'　७-७ "नान्तरा मम् वि' भ'　८ नास्ति वि'　९ नास्ति मूको　१० "पीति इत्तं मूको　११ रश्च वि' भ', नास्ति कु

स्वसॄणाम् स्वसॄणाम् भ्राता इव यथा भ्राताऽतिशयेन 'हितकरो भवति' तद्वत्। वाहशोऽग्निः वनानि महान्त्यरण्यानि अत्ति भक्षयति। दहति[2] इत्यर्थः। निदर्शनम्। राजा इभ्यान् न इभ्याः शत्रवः तान् यथा राजा समूलं हिनस्ति तद्वत्। अपि च यत् यदा वातजूतः वातेन प्रेरितः सन् वना वनान्यरण्यानि वि अस्थात् उक्तप्रकारेण[3] विविधमातिष्ठति दग्धुं प्रवर्तते। तदानीम् अग्निः ह असौ अग्निरेव पृथिव्याः भूमेः सम्बन्धीनि रोमा ओषधिरूपाणि दाति छिनत्ति। भूम्याम् ओषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः ॥ ७ ॥ ८ ॥

श्वसि॑त्य॒प्सु ह॒ंसो न सीद॑न् क्रत्वा॒ चेति॑ष्ठो वि॒शामु॑ष॒र्भुत् ।
सोमो॒ न वे॒धा ऋ॒तप्र॑जातः प॒शुर्न शिश्वा॑ वि॒भुर्दू॒रेभाः॑ ॥९॥१०॥

श्वसि॑ति । अ॒प्ऽसु । ह॒ंसः । न । सीद॑न् । क्रत्वा॑ । चेति॑ष्ठः । वि॒शाम् । उ॒षः॒ऽभुत् ।
सोम॑ः । न । वे॒धाः । ऋ॒तऽप्र॑जातः । प॒शुः । न । शिश्वा॑ । वि॒ऽभुः । दू॒रेऽभाः ॥९॥१०॥

स्कन्द० श्वसिति तृणादीनि दहन्नग्निः श्वसनसदृशं शब्दं करोति। कथम्। अप्सु हंसः न हंस इव श्रान्तः[4] निषीदन्। कीदृशः। क्रत्वा चेतिष्ठः प्रज्ञावतां मध्ये प्रज्ञया प्रज्ञावत्तमः। विशाम् षष्ठीनिर्देशादर्थायेति शेषः। यष्टॄणां मनुष्याणाम् अर्थाय उषर्भुत् उषःकाले विबोद्धा। यदग्निहोत्रहोमार्थमुषःकाले अग्निर्विबोध्यते तदभिप्रायमुषर्भुदित्येतत् विशेषणम्। सोमः न वेधाः मेधावी ऋतप्रजातः ऋतमित्यादित्य उदकं वा तत उत्पन्नः। 'उदीचि प्रथमसमावृत्त[5] आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन्[6] धारयति तत्प्रदीप्यते' (या ७, २३)। तेनाग्निरादित्यादुत्पद्यते। वैद्युतात्मनोदकात्। कथं पुनः प्रजातः। उच्यते। पशुः न शिश्वा प्रथमायाः स्थाने तृतीयैषा। पशुरिव शिशुः। यथा शिशुकः पशुः अन्यस्मात् पशोः प्रजायते तद्वदित्यर्थः। विभुः ईश्वरः सर्वस्य। दूरेभाः भा दीप्तौ। दूर एव व्यवस्थितो दीपयिता ॥ ९ ॥

वेङ्कट० अनया पुनरप्सु[7] प्रविष्टं स्तौति। श्वासशब्दं करोति अप्सु हंसः इव सीदन् प्रज्ञापकेनौपसेन[8] तेजसा चेतयितृतमः मनुष्याणाम् उषसि प्रबुद्धः। सोमः इव विधाता उदकात् प्रजातः, पशुः इव शिशुना वत्सेन सह तेजसा प्रादुर्भवन् महान् दूरस्थः प्रकाशयति[11] ॥ ९ ॥ १० ॥

मुद्गल० अयमग्निः देवेभ्यः पलायितः सन् अप्सु उदकेषु श्वसिति प्राणिति। निगूढो[12] वर्तत इत्यर्थः। दृष्टान्तः। हंसः न सीदन् उदकमध्ये उपविशन् हंस इव। कीदृशोऽग्निः। क्रत्वा क्रतुना ज्ञानहेतुना आत्मीयेन प्रकाशेन विशाम् प्रजानाम् चेतिष्ठः अतिशयेन चेतयिता ज्ञापयिता। रात्रौ हि सर्वे जना अन्धकारावृतं सर्वम् अग्नेः प्रकाशाज्जानन्ति। उषर्भुत् उषस्युषःकालेऽग्निहोत्रार्थे प्रबुद्धः[13] सोमः न वेधाः सोम इव विधाता स्रष्टा। सोमो यथा सकलमोषधिरूपं भोज्यजातं सृजति, तथा सकलं भोक्तृजातं सृजति अग्निरेव भोक्तृरूपेणावस्थानात्। ऋतप्रजातः ऋतात् उदकात् प्रादुर्भूतः पशुः न शिश्वा उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः सङ्कुचितगात्रोऽभूत्।

---

१-१. हिनं स्तोति मै[1]. २. नास्ति मूको. ३. °कारो मै[2]. ४. श्रान्तः अ. ५. °त्ती ती मूको.
६. प्रथमावृत मूको. ७. °मयसंस्पर्श मूको. ८. प्रजायेत अ. ९. °रप्स्वपु वि[1]. १०. प्रज्ञापितेनौ° ह.
११. प्रकाश इति वि[1]. १२. निगूढो मूको. १३. °द्धः मूको.

ततः प्रादुर्भूतः सन् विभुः प्रभूतः संपन्नः । दूरेभाः दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः । एवंभूतोऽग्निरप्सु श्वसितीति पूर्वेण सम्बन्धः ॥ ९ ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये नवमो वर्गः ॥

[ ६६ ]

र॒यिर्न चि॒त्रा सूरो॒ न सं॒दृगायु॒र्न प्रा॒णो नित्यो॒ न सू॒नुः ।
तक्वा॒ न भूर्णि॒र्वना॑ सिषक्ति॒ पयो॒ न धे॒नुः शुचि॑र्वि॒भावा॑ ॥१॥२॥

र॒यिः । न । चि॒त्रा । सूरः॑ । न । स॒म्ऽदृक् । आयुः॑ । न । प्रा॒णः । नित्यः॑ । न । सू॒नुः ।
तक्वा॑ । न । भूर्णिः॑ । वना॑ । सि॒सक्ति॒ । पयः॑ । न । धे॒नुः । शुचिः॑ । वि॒भाऽवा॑ ॥ १ ॥ २ ॥

स्कन्द० रयिः न चित्रा धनमिव चित्रः पूजनीयो वाऽग्निः । सूरः न संदृक् सूर्य इव संद्रष्टा संदर्शनीयो वा । आयुः न प्राणः प्राणहेतुरत्र प्राण उच्यते । अन्नमिव च प्राणहेतुः । जाठरात्मना ह्यग्निराहारविपरिणामकरत्वात्तदायत्तत्वाच्च प्राणस्य भवति प्राणहेतुः । किञ्च नित्यः न सूनुः नित्यशब्दो ध्रुववचनः । कृतकाद्यपेक्षया च औरसः पुत्रो नित्य उच्यते । यथौरसः पुत्रोऽग्निरपि तद्वत्[1] । साकाङ्क्षत्वाद्योग्यत्वाच्च इष्टानां लोकानां प्रापकः सुखो वेति वाक्यशेषः । अथवा पुरस्तादुपचारत्वेऽपि नशब्दस्य[2] सूनुः इत्येतावन्मात्रमेव उपमानम् । नित्य इत्येतदुपमेयम् । नित्योऽग्निः सूनुरिव । यथा त्रैवर्णिकैः पितॄणामनृणत्वाय पुत्रोऽवश्यमुत्पाद्यः, एवं देवानामनृणत्वायाग्निरपि अवश्यमाधेय इत्यर्थः । किञ्च तक्वा न भूर्णिः 'तक्वा' (निघ ३,२४) इति स्तेननाम । भूर्णिरित्यपि अमे रूपं द्रष्टव्यम् न बिभर्तेः । यथा भ्रमणशील आटविकश्चोरो वनानि सेवते तद्वद्दावरूपोऽग्निः वनानि सिषक्ति सेवते । किञ्च पयः न धेनुः पञ्चम्यर्थे प्रथमैषा । क्षीरमिव धेनोः स्वभूतम् शुचिः शुद्धः विभावा दीप्तिमांश्चाग्निः ॥ १ ॥

वेङ्कट० दावाग्निमनेन[3] सूक्तेन स्तौति—रयिः इव चित्रा[4] इति । प्रकाशादाह सूर्य इव च[5] सर्वैर्दृश्यमानः । आयुः इव प्राणनहेतुः[6] दग्धे ह्यरण्य ओषधयः प्रादुर्भवन्ति । औरस इव पुत्रः । तस्करः इव हरणशीलः । अरण्यानि सेवते[7] । क्षीरम् इव धेनुः । 'श्वसः पूर्वरूपम् । ज्वलन्[8] दीप्तिमान् ॥ १ ॥ २ ॥

मुद्गल० रयिः इति दशर्चं द्वैपदम् । अध्ययनतः पञ्चर्चं द्वितीयं सूक्तम् । पराशर ऋषिः[9] । विराट् छन्दः[9] । अग्निर्देवता[9] ॥

अयमग्निः रयिः न धनमिव चित्रा चायनीयः सूरः न सूर्य इव संदृक् सद्रष्टा सर्वेषां वस्तूनां दर्शयिता आयुः न प्राणः आयुः मुखे सञ्चरन् प्राणः । प्रश्वसन् वायुरिव प्रियतमः । यद्वा यथा प्राणवायुरायुर्जीवनमवस्थापयति, एवमग्निरपि जाठररूपेणायुषोऽवस्थापयिता । नित्यः न

1. °द्वत् कः अ. 2. °स्य न मूको. 3. दवा° वि[1,1] अ[1,3] ल लपं.; देवा° वि[3]. 4. चित्रा कु. 5. नास्ति वि[1,1] अ[3]. 6. प्राणहेतुः वि[3]. 7. नास्ति वि[3] लपं. 8-8. श्वसः पूर्वरूप ज्वल लप; श्वसः विपूर्वरूप ज्वलन् वि[3]; त्रुटितम् ल, नास्ति मं[1] कु. 9-9. नास्ति मै[3].

सूनु नित्यो ध्रुव पुत्र इव प्रियकारी। यथा औरस पुत्र पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता। तक्वा न गतिमान् अश्व इव भूर्णि भर्ता। यथा अश्व उपर्यारूढ पुरुष बिभर्ति धारयति तद्वदयमपीत्यर्थ। पय न धेनु पय इव प्रीणयिता। शुचि दीप्त। विभावा विशिष्टप्रकाशयुक्त। एवंगुणविशिष्टोऽग्नि वना वनान्यरण्यानि सिषक्ति दग्धु समवैति ॥ १ ॥ २ ॥

दा॒धार॒ क्षेम॒मोको॒ न र॒ण्वो यवो॒ न प॒क्वो जेता॒ जना॑नाम् ।
ऋषि॒र्न स्तु॒भ्वा वि॒क्षु प्र॑श॒स्तो वा॒जी न प्री॒तो वयो॑ दधाति ॥ ३ ॥ ४ ॥

दा॒धार॑ । क्षेम॑म् । ओक॑ । न । र॒ण्व । यव॑ । न । प॒क्व । जेता॑ । जना॑नाम् ।
ऋषि॑ । न । स्तु॒भ्वा । वि॒क्षु । प्र॒ऽश॒स्त । वा॒जी । न । प्री॒त । वय॑ । द॒धा॒ति॒ ॥ ३ ॥ ४ ॥

स्कन्द० दाधार धारयति क्षेमम्। क्षेम[1] करोतीत्यर्थ। ओक न रण्व, यव न पक्व ओक इति गृहनाम। यवोऽपि सस्यावस्थ इहाभिप्रेत। [2]द्वे अपि[2] चैते रण्व इत्यस्योपमाने। गृहमिव च, यव इव च पक्व सर्वस्य रमणीयोऽग्नि, प्रीतिकरः इत्यर्थ। जेता जनानाम् जेता च शत्रुजनानाम्। ऋषि न स्तुभ्वा स्तोभतिरर्चतिकर्मा (तु निघ ३,१४)। होतृत्वादग्नि ऋषिरिव स्तोता देवानाम्। स्वयमपि च विक्षु तृतीयार्थे सप्तमी। विड्भि[3] मनुष्यै प्रशस्त शस स्तुतौ। प्रकर्षण स्तुत। कथम्। वाजी न अश्व इवोत्कृष्ट प्रीत च सन्नपि वय अन्नम् दधाति ददाति स्तोतृभ्य। अथवा वाजी न इत्येतत् वयो दधाति इत्यस्योपमानम्, न प्रशस्त इत्येतस्य। अश्व इव च वयो दधाति। यथा सङ्ग्रामाश्व सङ्ग्राम जित्वा तद्द्वारेणान्न ददाति तद्वत् प्रीतस्सन्नग्नि ददातीत्यर्थ ॥ २ ॥

वेङ्कट० करोति रक्षा गृहम् इव रमणीयम्। यव इव पक्व[4] जेता जनानाम्[5] सोऽयमग्निरन्न प्रयच्छति। [6]यथा ऋषि[6] स्तोता मनुष्येषु प्रशस्त, अभिरक्षणकुशल[7] अन्न प्रयच्छति अश्व इव घ[8] घासेन प्रीत[9] इति[10] ॥ ३ ॥ ४ ॥

मुद्गल० अयमग्नि क्षेमम् लब्धस्य धनस्य रक्षणम् दाधार धारयति। स्तोतृभ्यो दत्तस्य धनस्य रक्षण कर्तुं शक्नोतीति भाव। ओक न निवासस्थान गृहमिव रण्व रमणीय। यव न यव इव पक्व। यथा पक्व यव उपभोगयोग्यो भवति तद्वत् अग्निरपि पाकादिकार्यहेतुतया उपभोग्य इत्यर्थ। जनानाम् जेता शत्रुजनानां मध्येऽभिभविता। ऋषि न मन्त्रद्रष्टा ऋषिरिव स्तुभ्वा देवानां स्तोता विक्षु यजमानलक्षणेषु प्रशस्त प्रख्यात। वाजी न अश्व इव प्रीत हर्षयुक्त। यथाश्वो हर्षयुक्तो युद्धाभिमुख गच्छति, तद्वदयमपि देवानां हविर्वहन हर्षयुक्तो भवतीत्यर्थ। एवंभूतोऽग्नि वय अन्नम् दधाति[11] दधातु। अस्मभ्य ददात्वित्यर्थ ॥ ३ ॥ ४ ॥

---

१. नास्ति भ. २-२ द्वय° भ. ३. विड् विड्भि भ, विड्भिः कु ४ पच च वि°. ५ शत्रु° वि° भ°; भना° वि°. ६ ६. यथपिवद्देवानां वि° भ° ७ भक्षिरणकु° वि° भ° ८ नास्ति वि°. ९ नास्ति मूप १०. प्रक्षे वि°¹² भ° कु छ प्र° ११ नास्ति कु १२ नास्ति मे°.

दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।
चित्रो यदभ्राट् छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥५॥६॥

दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरम् । विश्वस्मै ।
चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥५॥६॥

स्कन्द० दुष्करमोको यस्याम् । यत्र व्यवस्थातुं न शक्यत इत्यर्थः । सा[1] दुरोका[2] । [3]दुरोकाः शोचिर्दीप्तिर्यस्य[3] सः दुरोकशोचिः । [4]छान्दसत्वात् सकारलोपः[4] । दुस्सहदीप्तिकः । क्रतुः न नित्यः क्रतुः कर्म प्रज्ञा वा, तद्वन्नित्यः । जायेव योनौ 'योनिः' ( निघ ३,४ ) इति गृहनाम । यथा सर्वमनुष्याणां भार्या गृहे पर्याप्ता सर्वस्मै कार्याय एवमग्निरलं पर्याप्तः सर्वस्मै कार्याय । स्तोतॄणां सर्वकार्याणि कर्तुं समर्थ इत्यर्थः । कीदृशः । उच्यते । चित्रः यत् अभ्राट् यदिति व्यत्ययेन नपुंसकता । विचित्रो यो भ्राजते । [5]श्वेतः न[5] श्वेतवर्णत्वात् श्वेत आदित्यः । आदित्य इव विक्षु मनुष्येषु । यश्च रथः न रुक्मी त्वेषः समत्सु 'रुक्मम्' ( निघ १,२ ) इति हिरण्यनाम । यथा रुक्मवान् रूप्येण[6] सुवर्णेन वा खचितावयवो रथः सङ्ग्रामेषु दीप्तः स्यात्तद्वत् त्वेषो दीप्तः ॥ ३ ॥

वेङ्कट० दुःसेवतेजा, प्रज्ञा इव अनुस्यूतः जायेव गृहे वर्तमानः[7] पर्याप्तो भवति विश्वस्मै जनाय, चित्रः[8] यदा भ्राजतेऽरण्ये, श्वेतवर्णः इवादित्यः विक्षु, रथः इव च हिरण्मयः दीप्तः सङ्ग्रामेषु ॥ ५ ॥ ६ ॥

मुद्गल० दुरोकशोचिः दुष्प्रापतेजाः क्रतुः न नित्यः क्रतुः कर्मणां कर्ता स इव ध्रुवः । यथा स कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति, तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः । योनौ गृहे वर्तमाना जायेव योषिदिव अग्निहोत्रादिगृहे वर्तमानो वह्निः विश्वस्मै यष्टृजनाय अरम् अलं भूषणं भवति । यथा जायया गृहम् अलङ्कृतं भवति, तद्वदग्निना यज्ञगृहमप्यलङ्कृतं सद् दृश्यत इत्यर्थः । चित्रः चायनीयः यत् यदा अयमग्निः अभ्राट् भ्राजते तदानीम् श्वेतः न शुभ्रवर्ण आदित्य इव भवति । रात्रौ हि अहनि सूर्य इव अग्निः प्रकाशको भवति विक्षु प्रजासु । रथः न रथ इव रुक्मी सुवर्णवद्रोचमानदीप्तियुक्तः समत्सु सङ्ग्रामेषु त्वेषः दीप्तः । एवम्भूतोऽग्निः यदभ्राट् इति पूर्वेणान्वयः ॥ ५ ॥ ६ ॥

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत् त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥७॥८॥

सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ।
यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ॥७॥८॥

स्कन्द० सेनेव यथा सेना सेनापतिना सृष्टा विसृष्टा अभ्यनुज्ञाता सती यान् प्रति गच्छति तेषां

---

१. सः मूको. २. दुरोकाः । छान्दसत्वाद् सकारलोपः मूको. ३-३. दुरोका॰छो॰ अ. ४-४. नास्ति मूको. ५-५. नास्ति कु. ६. रूपेण कु. ७. °माना वि॰ अ॰. ८. चित्रः वि॰॰ अ॰ कु ख लर्प.

भयम् ददाति, एवमतिप्रज्वलितोऽग्नि अमम् अमशब्दोऽत्र भयवचन । 'द्यावा जज्ञान पृथिवी अमे धा' ( ऋ १,६३,१ ) इति यथा । भय ददाति । जनयतीत्यर्थ[1] । कस्य । अतिदेशात् कृत्स्नस्य जगतो रक्षसा वा । अस्तु न दिद्युत् इदमपि भयाधानस्यैव द्वितीयमुपमानम् । 'दिद्युत्' ( निघ २,२० ) इति वज्रनाम । वज्रनामानि चायुधमात्रवचनानि,[2] नेन्द्रायुधविशेषवचनान्येव । तेनात्र दिद्युत् शक्तिरुच्यते । यथा चास्तुः क्षेपणशीलस्य स्वभूता शक्तिर्यं प्रति क्षिप्यते तस्य भय ददाति तद्वत् । कीदशी या शक्ति । उच्यते । त्वेषप्रतीका प्रतीक दर्शनमुच्यते । दीप्तदर्शना । उज्ज्वलेत्यर्थ । किञ्च यम ह जात युगपज्जातत्वात् यमोऽत्राग्निरुच्यते । केन[3] पुन सहाग्निर्युगपज्जात[4] । इन्द्रेण । कुत एतत् । 'समानो वा जनिता भ्रातरा युव यमाविहेहमातरा' ( ऋ ६,५९,२ ) इति [5]मन्त्रान्तरे दर्शनात्[5] । अथवा प्रयच्छति स्तोतृभ्य कामानिति यम । हशब्दस्तु विनिग्रहार्थीय[6] एवार्थे । यम एव जात । यम एव जनित्वम् कर्तर्येष व्यत्ययेन त्व द्रष्टव्य । जनिष्यमाण । यावत्किञ्चित् सर्वमग्न्यायत्तत्वादग्निरेवेत्यर्थ । किञ्च जार कनीनाम् जरयिता कन्यकानामग्नि । अग्निसन्निधौ व्यूढाना कन्यकाना[7] कन्यात्व व्यावर्त्यते । अत[8] एवमुच्यते — जार कनीनामिति । पति जनीनाम् जनयन्त्यपत्यानीति जनयो भार्यास्तासा पति । यावती काचित् स्त्री सर्वस्या प्रथममग्नि पतिर्भवति, पश्चान्मनुष्य । तथाहि वक्ष्यति 'सोम प्रथमो विविदे गन्धर्वो विविद उत्तर । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजा' ( ऋ १० ८५,४० ) इति । पालयितृवचनो वा पतिशब्द । अथवा कनति कान्तिकर्मा ( द्र निघ २,६ ) । कम-नीयत्वात् कनय ओषधय इहोच्यन्ते । जनयोऽप्योषधय एव जायमानत्वात् । तासा ऋबीसात्मना[9] फलपाककरत्वात् जारोऽग्नि । पतिश्च स्वामित्वात् पालयितृत्वाद्वा ॥ ४ ॥

वेङ्कट० सेनेव उद्युक्ता बलम् दधाति,[10] अस्तु[11] इव आयुध[12] दीप्तमुखम् । यम एव जात अग्निरपि यम उच्यते यमनात् । यम एव जनिष्यमाण । जरयिता[13] कन्यकानाम् । "'तृतीयो अग्निष्टे पति' ( ऋ १०,८५,४० ) इत्यपि[14] निगमो भवति । पालयिता जायानाम्[15] तत्प्रधाना हि[16] यज्ञप्रयोगेन भवन्ति" ( या १०,२१ ) ॥ ७ ॥ ८ ॥

मुद्गल० सृष्टा प्रेरिता सेनेव स्वामिना सह वर्तमाना नरसहवर्तिनीवायमग्नि अमम् शत्रूणां भयम् दधाति विदधाति । करोतीत्यर्थ । निदर्शनान्तरमुच्यते । त्वेषप्रतीका दीप्तमुखा अस्तु न दिद्युत् क्षेप्तृसम्बन्धिनी इषुरिव । सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयत इत्यर्थ । य[17] जात उत्पन्नो भूतसङ्घ यच्च जनित्वम् जनयितव्यमुत्पत्स्यमान भूतजात तदुभयमपि यम ह अग्निरेव । सर्वेषा भावानामाहुतिद्वाराऽग्न्यधीनत्वात् । कनीनाम् कन्यकानाम् जार जरयिता । यतो विवाहसमयेऽग्नौ लाजादिद्रव्येण होमे सति तासा कन्यकात्व निवर्तते, अतो जरयितत्युच्यते । तथा जनीनाम् जायाना कृतविवाहानाम् पति भर्ता ॥ ७ ॥ ८ ॥

तं वंश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ।
सिन्धुर्न क्षोदः प्र नीचीरैनोन्नवन्त गावः स्वर्दृशीके ॥ ९ ॥ १० ॥

---

१. जयति° अ २. °युधवचननामानि अ ३. तेन मूको ४ °ग्नीय युग° मु. ५-५ मन्त्र वर्ज° अ. ६. °हार्थो न कु ७. कन्यका म ८. नास्ति अ. ९ °सात्मना अ. १० व(द)धाति वि[1] अ[1]. ११ नास्ति वि[1]. १२ आदिप्य वि[1] अ[1]. १३. जार° वि[1]; °विता कामयिता वि[1] अ[1], १४ नास्ति वि[1] अ[1]. १५ जायमानानाम् वि[1] अ[1] कु ख लप, जनानाम् वि[1] अ[1]. १६. नास्ति मूको, १७ यम मूको.

तम् । वः । चराथा । वयम् । वसत्या । अस्तम् । न । गावः । नक्षन्ते । इद्धम् ।
सिन्धुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥ ९ ॥ १० ॥

**स्कन्द०** वः इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । य उक्तगुणोऽसि तम् त्वाम् चराथा चरतिर्गत्यर्थः । चरतीति चरथः[1] पशुः । तत्प्रभवा या हृदयाद्यवदानाहुतिः सापि कारणधर्मस्य कार्येषूपचारदर्शनात् चराथोच्यते । तया । वयम् वसत्या वसतीति वसतिः स्थावररूपा व्रीहियवाद्योषधिः[2] । तत्प्रभवा पुरोडाशाद्याहुतिरपि वसतिः । तया च । अस्तम् न गावः 'अस्तम्' ( निघ ३,४ ) इति गृहनाम । यथा गृहं गावो व्याप्नुवन्ति उपगच्छन्ति वा तद्वत् । नक्षन्ते 'इन्वति, नक्षति' इति व्याप्तिकर्मसु पाठात् व्याप्त्यर्थोऽयम् ( तु. निघ २,१८ ) । व्यत्ययेन चोत्तमस्य स्थाने प्रथमपुरुषः । नक्षामहे व्याप्नुमः । अथवा नृक्ष स्तृक्ष णक्ष गतौ । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । उपगच्छाम इत्यर्थः । इद्धम् आहवनीयात्मना दीप्तं सन्तम् । परोऽर्धर्चः परोक्षकृतत्वात् भिन्नं वाक्यम् । सिन्धुः न क्षोदः सिन्धोरिवोदकम् । प्र नीचीः ऐनोत् इणो[3] वा गत्यर्थस्य एवतेः(?)[4] वा गतिकर्मण इदं रूपम् । दावरूपोऽग्निः आ मूलाद्वोषधीर्दग्धुं प्रकर्षेण नीचैर्गच्छति । किञ्च नवन्त गावः स्तुतयोऽत्र गाव उच्यन्ते । 'गोभिर्मदामन्ये अस्मत्' (ऋ. ८,२,६) इति यथा । स्तोतारो वा । 'गोभिः वाणा अभिषवः' (ऋ १,१३४,२), इति यथा । अग्निं स्तुवन्ति स्तुतयः स्तोतारो वा । शाकपूणिस्तु 'य उग्रा अर्कमानृचुः' (ऋ १,१९,४), 'आर्चन्नत्र मरुतः' (ऋ १,५२,१५) इत्यादिषु मरुतां स्तोतृत्वदर्शनात् मरुतोऽत्र गाव उच्यन्त इति मन्यते । अग्निं स्तुवन्तो मरुतः । स्वः सर्वे सर्वस्मिन् वा । दृशीके दर्शनीये वेद्यादौ स्थाने । अथवा दृशीके-शब्दो द्रष्टुमित्यस्य चार्थे । स्वर्दृशीके अग्निप्रकाशितं सर्वं द्रष्टुमित्यर्थः । द्युनाम वा स्वः शब्दः । द्युलोकं द्रष्टुम् । स्वर्गं प्राप्तुमित्यर्थः ॥ ५ ॥

**वेङ्कट०** तम् इमं यूयं चरन्त्या पश्वाहुत्या,[5] वयम् निवसन्त्या[6] औषधाहुत्या, गृहं यथा गावः आप्नुवन्ति तथाप्नवाम इद्धम् समृद्धं भोगैः[7] । सिन्धुः इव उदकम् अधःस्थितम् 'अग्निः नीचीः ज्वालाः[8] उद्गमयति । ते च रश्मयः संश्लिष्टा भवन्ति सर्वस्य दर्शनीये अग्नाविति ॥ ९ ॥ १० ॥

**मुद्गल०** वः इति व्यत्ययेन बहुवचनम् । हे अग्ने! तम् त्वाम् चराथा चरतीति चरथः पशुः, तत्प्रभवैः हृदयादिभिः साध्या आहुतिरपि चराथेत्युच्यते । उपचारात् कार्ये कारणशब्दः । चराथा चरथया पशुप्रभवहृदयादिसाधनया आहुत्या वसत्या वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः । पूर्ववत्तत्साध्याऽऽहुतिर्लक्ष्यते । वसत्या पुरोडाशाद्याहुत्या च वयम् इद्धम् प्रदीप्तमग्निम् नक्षन्ते व्याप्नुयाम । पुरुषव्यत्ययः । तत्र दृष्टान्तः । अस्तम् न गावः 'अस्तम्' इति गृहनाम । यथा गावो गृहं व्याप्नुवन्ति[9] तद्वदयमग्निः । सिन्धुः न क्षोदः स्यन्दनशीलमुदकमिव नीचीः नितरां चरन्तीरितस्ततो नितरामुद्गच्छन्तीर्ज्वालाः प्र ऐनोत् प्रेरयति । यथा जलप्रवाहो निम्नदेशे शीघ्रं

---

१. चराथा मूको. २. °णधोः मूको. ३. इणो कु. ४. नास्ति भ. ५. पश्वा आहुत्या कु. ६. निवसन्ति कु. ७. नास्ति वि[3]. ८-८. अग्निज्वाला: कु स्प; अग्निर्ज्वालाः वि[1] भ[2] ल. ९. प्राप्नु° मै[2].

गच्छति तद्वदग्नेर्ज्वाला दग्धव्यं प्रति गच्छन्तीति भावः। स्वः नभसि वर्तमाने द्युलोके दर्शनीये तस्मिन् अग्नौ गावः गमनस्वभावा रश्मयः नवन्त सङ्गच्छन्ते ॥ ९ ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये दशमो वर्गः ॥

## [ ६७ ]

वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम् ।
क्षेमो न साधुः क्रतुर्न भद्रो भुवत् स्वाधीर्होता हव्यवाट् ॥१॥ ॥२॥

वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिम् । राजाऽइव । अजुर्यम् ।
क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः । होता । हव्यऽवाट् ॥१॥२॥

स्कन्द० वनेषु जायुः दावरूपेण जननशीलोऽग्निः। मर्तेषु मित्रः मर्त्येष्विति षष्ठ्यर्थे सप्तमी। मनुष्याणां[1] मित्रम्। वृणीते सम्भजते। किम्। अजुर्यम् अजराम्। न कदाचिज्जीर्यत इत्यर्थः। कथं वृणीते। उच्यते। श्रुष्टिम् राजेव श्रुष्टिशब्दोऽत्र दूतवचनः, न[2] क्षिप्रनाम। दूतमात्मीयं परकीयं वा राजेव। क्षेमः न साधुः क्षेम इति द्वितीयार्थे प्रथमा। क्षेममिव च [3]साधुः। यो हि[3] साधुः न तस्य कुतश्चिदक्षेममस्ति। क्रतुः न भद्रः क्रतुरितीयमपि द्वितीयार्थे एव प्रथमा। विज्ञानमिव च भद्रः पुरुषः। अथवा क्षेमः क्रतुरिति स्वार्थ एव प्रथमा। क्षेमकरस्तु क्षेम उच्यते। नकारस्तु[4] पुरस्तादुपचारोऽप्युपमार्थीयः साधुरित्येतेन सम्बध्यते। साधुरिव क्षेमकरोऽग्निः, विज्ञानमिव भद्र इत्यर्थः। किञ्च भुवत् स्वाधीः स्वाध्यानः कल्याणचित्तोऽग्निः। को भवति। उच्यते। होता च हव्यवाट् च सर्वयजमानानाम् ॥ १ ॥

वेङ्कट० काष्ठेषु जायमानः मर्तेषु सखा वृणीते क्षिप्रकारिणं यजमानम् राजेव अजरं मित्रम्। क्षेमः[5] इव साधुः, कर्मेव भजनीयः भवति सुकर्मा होता हव्यवाट् ॥ १ ॥ २ ॥

मुद्गल० 'वनेषु' इति द्वैपदं दशर्चम्। अध्ययनतः पञ्चमं तृतीयं सूक्तम्। पराशर ऋषिः। विराट् छन्दः। अग्निर्देवता ॥

वनेषु जायुः अरण्येषु जायमानः। मर्तेषु मनुष्येषु मित्रः सखा सोऽयमग्निः[6] श्रुष्टिम् श्रु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिर्यजमानः। क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः[7]। एवम्भूतं यजमानम् वृणीते सम्भजते। अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः। दृष्टान्तः। राजेव अजुर्यम् अजुर्यं जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः। एवम्भूतं पुरुषं यथा राजा वृणीते तद्वत्। क्षेमः न रक्षक इव साधुः साधयिता क्रतुः न क्रतुः कर्मणां कर्ता स इव भद्रः भजनीयः होता देवानामाह्वाता हव्यवाट् हव्यवाहनो नाम देवानामग्निः। एवम्भूतोऽग्निः[8] स्वाधीः शोभनकर्मा भुवत् भवतु ॥ १ ॥ २ ॥

---

१. मनुष्याणां अ. २. नास्ति अ. ३-३. नास्ति अ. ४. नक्षेमकर° अ. ५. क्षेमं अत्रादिद्वं दृ° वि° अ°. ६. सोऽयम° मै°. ७. कर्मानुष्ठा° मै°. ८. एवंभूतो° मूको.

हस्ते दधानो नृम्णा विश्वान्यमे देवान् धाद् गुहा निषीदन् ।
विदन्तीमत्र नरो धियंधा हृदा यत् तष्टान् मन्त्राँ अशंसन् ॥३॥४॥

हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् । गुहा । निऽसीदन् ।
विदन्ति । ईम् । अत्र । नरः । धियम्ऽधाः । हृदा । यत् । तष्टान् । मन्त्रान् । अशंसन् ॥३॥४॥

स्कन्द० हस्ते दधानः नृम्णा 'नृम्णम्' ( निघ २,१० ) इति धननाम । हविर्लक्षणानि धनानि विश्वानि । गृहीतसर्वहविष्कस्सन्नित्यर्थः । अमे भये देवान् धात् निदधाति । अदृश्यमानत्वात् भयं देवानामुत्पादयतीत्यर्थः । किं कुर्वन् । उच्यते । रक्षोऽसुरवञ्चनार्थम् गुहा गूढं प्रच्छन्नम् निषीदन् सविरत्र गत्यर्थः । नियमेन गच्छन् । विदन्ति ईम् अत्र नरः ईम् शब्दः एनमित्यस्यार्थे । मनुष्यास्तु विदन्त्येनमत्राप्स्ववस्थया वर्तमानम् । कीदृशाः[1] । धियंधाः यागकर्मणः[2] प्रज्ञाया[3] वा धारयितारः । यष्टारः प्रज्ञावन्तो वेत्यर्थः । कतमे । उच्यते । हृदा यत्[4] ये तष्टान् कृतान् । मनसा सङ्कल्पितानित्यर्थः[5] । मन्त्रान् अभिस्तुतिरूपान् अशंसन् शंसतिरत्र सामर्थ्यादुच्चारणार्थः । अथवा शंसतिः स्तुत्यर्थ [6]एव । तष्टान् मन्त्रानिति[6] तृतीयास्थाने द्वितीया । ये हृदयेन सङ्कल्पितैः मन्त्रैः स्तुवन्तीत्यर्थः ॥ २ ॥

वेङ्कट० [7]हस्ते धारयन्[7] सर्वाण्येव धनानि देवैर्निहितानि भये [8]देवान् धात्[8] गुहायाम् [9]निषीदन् । विदन्ति एनम्[9] अत्र देवाः कर्मणो धातारः, हृदयेन यदा[10] कृतान् मन्त्रान् अशंसन् ॥ ३ ॥ ॥ ४ ॥

मुद्गल० विश्वानि सर्वाणि नृम्णा नृम्णानि हविर्लक्षणानि धनानि हस्ते स्वकीये बाहौ दधानः धारयन् अयमग्निः गुहा गुहायाम् अप्सु मध्ये निषीदन् निगूढो वर्तमानः सन् अमे भये देवान् धात् अस्थापयत् । अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैपुरित्यर्थः । नरः नेतारः धियंधाः कर्मणां धारयितारो देवाः अत्र अस्मिन् काले ईम् एनमग्निम् विदन्ति जानन्ति । यत् यदा हृदा हृदयावस्थितया[11] बुद्ध्या तष्टान् निर्मितान् अभिस्तुतिपरान् मन्त्रान् अशंसन् अस्तुवन्, अशोचन्नित्यर्थः ॥ ३ ॥ ४ ॥

अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः ।
प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥ ५ ॥ ६ ॥

अजः । न । क्षाम् । दाधार । पृथिवीम् । तस्तम्भ । द्याम् । मन्त्रेभिः । सत्यैः ।
प्रिया । पदानि । पश्वः । नि । पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहम् । गाः ॥ ५ ॥ ६ ॥

स्कन्द० अजातत्वात् अजः प्रजापतिः । स यथा वह्नदग्निः क्षाम् पृथिवीम् दाधार धारयति । न च केवलाम्[12] । किं तर्हि पृथिवीम् अपि । अन्तरिक्षनामैतत् ( तु. निघ १,३ ) । अन्तरिक्षञ्च ।

---

१. °दृशः अ. २. °र्मणा कु. ३. प्रज्ञया मूको ४. नास्ति अ. ५. °कल्पितानी° अ. ६-६. नास्ति अ. ७-७. नास्ति वि[1] अ[1]. ८-८. देवाः वि[1] अ[1]. ९-९. नास्ति वि[1]. १०. यथा वि[1] अ[1], ११. हृदयास्थि° मूको. १२. केवला अ.

तस्तम्भ द्याम् स्तभ्नाति प्रतिबन्धार्थं । दिवञ्च[1] प्रतिबध्नाति । केन । उच्यते । मन्त्रेभि सत्यै । होतृत्वादग्नि सत्यैर्मन्त्रै यागाख्ये धर्मे देवता स्तुवन् धर्मायत्तस्थितीन् त्रीनपि लोकान् प्रजापतिरिव[2] धारयतीत्यर्थः । परोऽर्धर्चं प्रत्यक्षकृतत्वाद्भिन्न वाक्यम् । इह परत्र च लोके प्रियाणि पदानि स्थानानि पश्व पशुसदृशस्य मम नि पाहि नियमेन रक्ष । अथवा पश्व इति द्वयोरिद रूप द्वितीयाबहुवचनान्ताम् । यानि तव प्रियाणि पदानि तानि पश्यतो जानत अस्मान् रक्षेरर्थः । किञ्च विश्वायुः सर्वान्न । गृहीतास्मदीयहविष्क सन्नित्यर्थः । गुहा गुहम् गा रक्षोऽसुरपचनार्थं गूढात् गूढतर गच्छ[3] । अत्यन्तगूढ गच्छेत्यर्थः [4] ॥ ३ ॥

वेङ्कट० सूर्य इव भूमिम् अन्तरिक्षञ्च[5] धारयति,[6] द्याम् च तस्तम्भ मन्त्रै सत्यै स्तूयमान । स त्वम् अग्ने! अस्माक "पशो प्रियाणि" पदानि नितरा रक्ष । सर्वान्नस्त्वम् अग्ने[7] गुहाया अपि गूढ प्रदेश गतवानसि ॥ ५ ॥ ॥ ६ ॥

मुद्गल० अज न अजति गच्छतीति अज सूर्य । स इव क्षाम् भूमिम् दाधार अयमग्नि प्रकाशकत्वेन[8] धारयति । पृथिवीम् अन्तरिक्षञ्च धारयति । द्याम् द्युलोकम् सत्यै अवितथार्थे[9] मन्त्रेभि मन्त्रै तस्तम्भ स्तभ्नाति । यथाऽधो न पतति उपर्येव तिष्ठति तथा करोतीत्यर्थः । हे अग्ने! विश्वायु विश्व सर्वमायुरन्न यस्य स त्वम् पश्व पशो प्रिया प्रियाणि पदानि गोसमृद्धोदकोपेतानि स्थानानि नि पाहि नितरा पालय । मा धाक्षीरित्यर्थः । तर्हि कुत्र निवसामीति चेत्, तत्राह । गुहा गुहाया अपि गुहम् गर्भा सञ्चारायोग्यस्थानम् गा गच्छ । तत्रैव निवसेत्यर्थः ॥ ५ ॥ ॥ ६ ॥

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ।
वि ये चृतन्त्यृता सपन्त आदिद् वसूनि प्र ववाचास्मै ॥ ७ ॥ ८ ॥

य । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य ।
वि । ये । चृतन्ति । ऋता । सपन्त । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ॥ ७ ॥ ८ ॥

स्कन्द० य एनमग्निम्[10] चिकेत जानाति गुहा भवन्तम् हविर्गृहीत्वा गूढ भवन्तम् । यः च आ ससाद आसीदति । करोतीत्यर्थः । धाराम् स्तुतिलक्षणा वाचम् ऋतस्य गतस्य सत[11] । परोक्षस्यापीत्यर्थः । ये वि चृतन्ति पृथी हिसाग्रन्थनयो[12] । विविध सूक्ताध्यायादिलक्षणान् स्तुतिग्रन्थानय कुर्वन्ति । ऋता ऋत सत्य[13]गतवन्तम् अग्निम्[13] । सपन्त सपतिरर्चतिकर्मा (द्र निघ ३,१४) । स्तुवन्त । आत् इत् उभावप्यतौ पदपूरणौ । वसूनि प्र ववाच युष्मभ्य मेतानि धनानीत्येव प्रकरण ब्रवीति । ददातीत्यर्थः । अस्मै बहुवचनस्य स्थाने इदमेकवचनम् । एभ्य सर्वेभ्यो निर्दिष्टेभ्य ॥ ४ ॥

वेङ्कट० य एनं[14] जानाति गुहायाम् [15]भवन्तम् । यश्च आ ससाद[15] सत्यभूतस्याग्ने मार्गम् । ये च

1 नास्ति भ 2 °पतिरिव भ 3 गच्छन् मूको 4 गच्छन्नित्यर्थ मूको 5 त्रुटितम् वि°. 6 नास्ति वि° भ°. 7-7 त्रुटितम् वि° 8 °शत्वेन मूको 9 अवितथार्थं मूको 10 °मग्नि कु 11 सत परोक्षस्य सत कु 12 °थ वधो मूको 13, 13 गतवानि मूको 14 एव वि° अ° 15-15 °भवं तं यश्च आससाद वि°.

वि चृतन्ति मार्गेस्थितानि[1] [2]तिरोधानानि सत्यानि[2] स्पृशन्तः । अनन्तरमेव अस्मै[3] हस्तस्थानि वसूनि अग्निः प्र उवाच इति[4] ॥ ७ ॥ ॥ ८ ॥

मुद्गल० यः पुमान् ईम् एनम् गुहा भवन्तम् गुहायां सन्तमग्निम् चिकेत जानाति । यः च ऋतस्य सत्यस्य धाराम् धारयितारमेनमग्निम् आ ससाद आसीदति । उपास्त इत्यर्थः । ये च ऋता ऋतानि सत्यानि सपन्तः समवयन्तः पुरुषाः एतमग्निम् वि चृतन्ति । अग्निमुद्दिश्य स्तुतिं कुर्वन्तीत्यर्थः । आत् इत् स्तुत्यनन्तरमेव अस्मै सर्वस्मै स्तोतृजनाय वसूनि धनानि प्र ववाच प्रकथयति ॥ ७ ॥ ८ ॥

वि यो वी॒रुत्सु॒ रोध॑न्महि॒त्वोत प्र॒जा उ॒त प्र॒सूष्व॒न्तः ।
चित्ति॑र॒पां दमे॑ वि॒श्वायुः॒ सद्मे॑व॒ धीराः॒ सं॒माय॑ चक्रुः ॥ ९ ॥ १० ॥

वि । यः । वी॒रुत्ऽसु॑ । रोध॑त् । म॒हि॒ऽत्वा । उ॒त । प्र॒ऽजाः । उ॒त । प्र॒ऽसूषु॑ । अ॒न्तरिति॑ ।
चित्तिः॑ । अ॒पाम् । दमे॑ । वि॒श्वऽआ॑युः । सद्म॑ऽइव । धीराः॑ । स॒म्ऽमाय॑ । च॒क्रुः ॥ ९ ॥ १० ॥

स्कन्द० यः अग्निः वीरुत्सु वीरुधः ओषधयः तासु । वि रोधत् रुहेरयं[5] हकारस्य[6] छान्दसो धकारः । विविधमारोहति । महित्वा स्वेन महिम्ना । उत प्रजाः प्रजायन्त इति प्रजाः । सप्तम्यर्थे चैषा प्रथमा । प्रजायमानासु । उत प्रसूषु प्रसूतासु । क्व प्रदेशे आरोहति । उच्यते । अन्तः मध्येऽपि, न बहिरेव केवलम् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः चित्तिः ज्ञाता[7] अपाम् वृष्टिलक्षणानाम् । अथवा 'आपः' ( निघ १,३ ) इत्यन्तरिक्षनाम । साहचर्यात् त्रयोऽपि लोकाः अप्शब्देनोच्यन्ते । त्रयाणामपि लोकानामित्यर्थः । दमे यज्ञगृहे । साकाङ्क्षत्वाद्धोतृत्वेन निषीदति 'स्तूयते वेति' वाक्यशेषः । विश्वायुः सर्वात्मः । यत् कीदृशं यज्ञगृहम् । उच्यते । सद्मेव गृहनामैतत् । एकवाक्यता-प्रसिद्ध्यर्थञ्च यत्तच्छब्दावध्याहर्तव्यौ । यल्लौकिकमिव गृहम् धीराः प्रज्ञावन्तः सम्माय 'सम्यक् मित्वा' चक्रुः कृतवन्तस्तत्र ॥ ५ ॥

वेङ्कट० यः अग्निः वीरुत्सु अन्तः माहात्म्येन रसम् अरुणत्, अपि च प्रजाः पुष्पफलादिरूपाः ओषधीषु अन्तः । एक उतशब्दः पादपूरणः । सोऽयमन्तरिक्षे[10] अपाम् चेतयिता गृहे च सर्वात्मा । [11]तमिमं निलीनमानीय[11] गृहमिवोत्तरवेदिं [12]सम्यक् मित्वा[12] तत्र चक्रुः इति[13] ॥ ५ ॥ १० ॥

मुद्गल० यः अग्निः वीरुत्सु ओषधीषु महित्वा यानि महत्त्वानि सन्ति तानि[14] वि रोधत् विरुणद्धि विशेषेण विवृणोति नावलोपयति । उत अपि च प्रजाः प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः प्रसूषु उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु अन्तः मध्ये विरुणद्धीत्येव । द्वितीय उतशब्दः पादपूरणः । तथा चित्तिः चेतयिता अपाम् दमे जलानां मध्यभूते गृहे विश्वायुः सर्वात्मा योऽग्निर्वर्तत इति शेषः । तमग्निम् धीराः मेधाविनः सम्माय संमाननं[15] पूजनं कृत्वा । स्तुतिभिः

---

1. °र्गस्थानि वि[1] अ[1 2]. 2-2. त्रुटितम् वि[3]. † नास्ति वि[1] अ[1]. 3. अस्मै सर्वस्मै वि[1] अ[1]. 4. नास्ति कु; इति हि वि[3] अ[3]. 5. रुधे° अ. 6. नास्ति अ. 7. जाता अ. 8-8. स्तुनपरत पचे° अ. 9-9. नास्ति अ. 10. °क्षे च वि[1]. 11-11. तमिममानी° कु; °मनन्तलो° वि[1] अ[1]°ल लपं; °मं निरीनमा° वि[1]. 12-12. त्रुटितम् ल; सम्यत्तो लपे रि[1]; नास्ति कु. 13. नास्ति कु. 14. तानि प्रववाच प्रकथयति मै[1]. 15. सायणपर्न मूको.

स्तुत्वेत्यर्थः । चक्रुः कर्माणि कुर्वन्ति । दृष्टान्तः । सद्म इव यथा सदनं गृहं प्रथमतः संपूज्य पश्चात्त् कर्माण्याचरन्ति तद्वत् ॥ ९ ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये एकादशो वर्गः ॥

[ ६८ ]

श्रीणन्नुप॑ स्थाद् दिवं॑ भुर॒ण्युः स्था॒तुश्च॒रथ॑म॒क्तून् व्यू॑र्णोत् ।
परि॒ यदे॑षा॒मेको॒ विश्वे॑षां॒ भुव॑द् दे॒वो दे॒वानां॑ महि॒त्वा ॥ १ ॥ २ ॥

श्री॒णन् । उप॑ । स्था॒त् । दिव॑म् । भु॒र॒ण्युः । स्था॒तुः । च॒रथ॑म् । अ॒क्तून् । वि । ऊ॒र्णो॒त् ।
परि॑ । यत् । ए॒षा॒म् । एकः॑ । विश्वे॑षाम् । भुव॑त् । दे॒वः । दे॒वाना॑म् । म॒हि॒ऽत्वा ॥ १ ॥ २ ॥

स्कन्द० [1]'श्रीणन् श्रीञ् पाके[1] अन्यत्र । इह सामर्थ्याद्दाहार्थः । दावरूपोऽग्निः तृणौषधिवनस्पतीन् दहन् उप स्थात् दिवम् दिवमुपतिष्ठति । दिवं स्पृशतीत्यर्थः । भुरण्युः भुरण्यतेर्गतिकर्मण इदं क्षिप्रनाम (तु. निघ २, १५)। क्षिप्रगामी। किञ्च स्थातुः स्थातृ चरथम् गन्तृ च। स्थावरं जङ्गमं चेत्यर्थः। अक्तून् रात्रिनामैतत् (तु. निघ १,७)। रात्रीश्च। वि ऊर्णोत् प्रकाशयति। कृत्स्नं स्थावरं जङ्गमञ्च प्रकाशयत्यग्निः, रात्रीश्च तमोरूपास्सतीः स्वेन ज्योतिषा प्रकाशरूपाः करोतीत्यर्थः। अथवा अक्तूनिति सप्तम्यर्थे द्वितीया। स्थावरं जङ्गमं रात्रिषु प्रकाशयतीत्यर्थः। कीदृशः। उच्यते। परि यत् परीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। यदिति व्यत्ययेन नपुंसकता। हविर्नयनादिना [2]'परिग्रहीता यः[2] एकः एषाम्[3] विश्वेषाम् भुवत् भवति देवः देवानां महित्वा स्वेन माहात्म्येन। अथवा परीत्ययं भुवदित्येतेनैव सम्बध्यते। परिपूर्वश्च भवतिः परिग्रहे। एषामित्यादिषु तु द्वितीयार्थे षष्ठी। परिगृह्णाति य एतानिति[4] ॥ १ ॥

वेङ्कट० हविर्भिर्मिश्रयन्[5] उपतिष्ठति[6] द्युलोकं हविषः भर्ता[7]। स्थावरं जङ्गमं च तेजसा तमसः प्रकाशयति रात्रीश्च। परिभवति[8] यदा सर्वान् इमान् देवान् एक एव महत्त्वेन ॥ १ ॥ २ ॥

मुद्गल० 'श्रीणन्' इति द्वैपदं दशर्चं चतुर्थं सूक्तम्। अध्ययनतः पञ्चर्चम्। पराशर ऋषिः। विराट् छन्दः। अग्निर्देवता ॥

भुरण्युः हविषां भर्ता धारयिता पयःप्रभृतिना श्रयणद्रव्येण सोममिव तैः हविर्भिः श्रीणन् मिश्रयन् दिवम् उपस्थात् उपतिष्ठति, प्राप्नोतीत्यर्थः। स्थातुः स्थावरम् चरथम् जङ्गमं तदुभयात्मकं जगत् अक्तून् सर्वा रात्रीश्च वि ऊर्णोत् स्वतेजसा विशेषेणाच्छादयति। हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्मेति भावः। विश्वेषाम् देवानाम् दानादिगुणयुक्तानामिन्द्रादीनां मध्ये देवः द्योतमानः एकः एवायमग्निः एषाम् पूर्वोक्तानां स्थावरादीनाम् महित्वा महान्ति माहात्म्यानि यत् यस्मात् परि भुवत् परिभवति परितो व्याप्य वर्तते। परिपूर्वो भवतिः परिग्रहार्थः ॥ १ ॥ २ ॥

1-1. नास्ति भ. 2-2. °गृहीताय मूको. 3. नास्ति मूको. 4. °तान् कु; °तानीति भ. 5. °मन्त्र वि[1] भ[2] क दृष्टं; हविभिमयन् वि[1] भ[1]. 6. °यति कु. 7. भवत वि[1] भ[1]. 8. °वति परिगृह्णाति वि[1] भ[1].

आदित् ते विश्वे क्रतुं जुषन्त शुष्काद् यद् देव जीवो जनिष्ठाः ।
भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ॥ ३ ॥ ४ ॥

आत् । इत् । ते । विश्वे । क्रतुम् । जुषन्त । शुष्कात् । यत् । देव । जीवः । जनिष्ठाः ।
भजन्त । विश्वे । देवऽत्वम् । नाम । ऋतम् । सपन्तः । अमृतम् । एवैः ॥ ३ ॥ ४ ॥

स्कन्द० आत् इत् इति पदपूरणौ, अपिचेत्यनयोर्वार्थे । अपि च ते तव विश्वे सर्वे मनुष्याः देवा वा क्रतुम् हविर्निर्वपनादिकर्म प्रज्ञां वा जुषन्त सेवन्ते । योऽहं कीदृशः । उच्यते । शुष्कात् अपि काष्ठात् यत् यः हे देव! जीवः जनिष्ठाः जायसे । सर्वत्र हि कारणधर्मानुविधायि कार्यम् । त्वं तु निर्जीवादपि काष्ठात् स्वमाहात्म्येन जीव एव जायस इत्यर्थः । किञ्च भजन्त विश्वे बहवो मनुष्याः । किम् । उच्यते । यदेतत् देवत्वम् नाम प्रख्यातम् । बहवो मनुष्याः देवत्वं प्राप्ता इत्यर्थः । किं कुर्वन्तः । उच्यते । ऋतम् सपन्तः सत्यं सर्वगतं वा स्तुवन्तः । अमृतम् एवैः वैस्तैर्देवत्वप्राप्त्यादिकामैर्युक्ताः ॥ २ ॥

वेङ्कट० अनन्तरमेव तुभ्यं सर्वे कर्म अजुषन्त । शुष्कात् काष्ठात् यदा 'जातस्त्वम् जीवः[1] तदा सर्वे च तेन[2] कर्मणा कामानां नामकम् देवत्वम् च अभजन्त ऋतम्[1] सत्यम् अमृतम् च त्वां गमनैः स्पृशन्तः ॥ ३ ॥ ४ ॥

मुद्गल० हे देव! द्योतमानाग्ने! जीवः जीवन् प्रज्वलन् शुष्कात् नीरसात् अरणिरूपात् काष्ठात् यत् यदा जनिष्ठाः प्रादुर्भवसि मन्थनेनोत्पद्यसे । आत् इत् अनन्तरमेव विश्वे सर्वे यजमानाः ते तुभ्यम् क्रतुम् कर्म जुषन्त सेवन्ते अनुतिष्ठन्ति । तथा अनुष्ठाय च विश्वे ते सर्वे[3] नाम नामकम् ऋतम् भवितव्यम् देवत्वम् देवतात्वम् भजन्त भजन्ते प्राप्नुवन्ति । किं कुर्वन्तः । अमृतम् अमरणं त्वाम् एवैः गन्तृभिः स्तोत्रैः सपन्तः समवयन्तः प्राप्नुवन्तः इत्यर्थः ॥ ३ ॥ ४ ॥

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ।
यस्तुभ्यं दाशाद् यो वा ते शिक्षात् तस्मै चिकित्वान् रयिं दयस्व ॥५॥६॥

ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि । चक्रुः ।
यः । तुभ्यम् । दाशात् । यः । वा । ते । शिक्षात् । तस्मै । चिकित्वान् । रयिम् । दयस्व ॥५॥६॥

स्कन्द० ऋतस्य सत्यस्य सर्वगतस्य वा भवतः प्रेषाः पाशुकाः सौमिकाश्च[4] प्रेषाः । यावन्तः केचन प्रैषाः ते होतृत्वात् सर्वे तवेत्यर्थः । ऋतस्य धीतिः कर्म वा प्रज्ञा वा स्तुतिर्वा धीतिरित्युच्यते साम्प्रतस्य तवैव । कीदृशस्य । उच्यते । विश्वायुः पञ्चम्यर्थे प्रथमैषा । विश्वायुषः सर्वायुषः । विश्वे अपांसि चक्रुः । एकवाक्यतासिद्ध्यर्थं यच्छब्दतच्छब्दावध्याहर्तव्यौ । यान्यपि सर्वे मनुष्याः यागादिकर्माणि कुर्वन्ति तान्यपि तवैव । इदंताय यः तुभ्यम् दाशात् हविर्ददाति[5] यः

१-१. °तस्त्वजीवः वि[1] अ[1]; °तस्त्वमजीवः मू. २. ते वि[1] अ[1]. ३. सर्वगत्या वि[1] अ[1]. ४. °श्च[ ] पवनताः अ[1]. ५. °ददाति मूको. ६. °दैवा° अ.

वा ते शिक्षात् दानकर्माऽयं सन्नन्तस्य चार्थे द्रष्टव्यः । तस्मै चिकित्वान् जानन् भक्त्या रयिम् दयस्व धनं देहि ॥ ३ ॥

वेङ्कट० अग्नेरेव 'होता यक्षत्' ( खि ५,७,१, १-१२ ) इत्यादिकाः प्रैषाः[1] । ऋतस्य एव कर्म स[2] सर्वहविष्कः[3] । विश्वे च यस्मै कर्माणि कुर्वन्ति । यः तुभ्यम् प्रयच्छति यो वा तुभ्य मात्मानं नियच्छति[4] । तस्मै जानन् धनं देहि[4] ॥ ५ ॥ ॥ ६ ॥

मुद्गल० ऋतस्य गतस्य देवयजनं प्राप्तस्य यद्वा[5] सत्यभूतस्याग्नेः प्रैषाः प्रकर्षेण इष्यमाण स्तुतयः क्रियन्ते । धीतिः धीयते सोमः पीयतेऽस्मिन्निति "धीतिर्याग । सोऽपि ऋतस्य दे यजनदेशं प्राप्तस्याग्नेरेव क्रियते[6] । अतः सोऽग्निः विश्वायुः विश्वं सर्वम् आयुरन्नं यस तथाविधो भवति । अपि चास्मै विश्वे सर्वे यजमानाः अपांसि दर्शपूर्णमासादीनि कर्मा चक्रुः कुर्वन्ति । हे अग्ने! तुभ्यम् यः दाशात् चरुपुरोडाशादीनि हवींषि ददाति । यः अन्योऽपि यो यजमानः ते शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासम् इति इच्छति । तस्मै विधाय तस्मै यजमानाय चिकित्वान् त्वत्कृतमनुष्ठानं जानन्नेव रयिम् दयस्व धनं देहि ॥ ५ ॥ ६ ॥

होता निर्षत्तो मनोरपत्ये स चिन्न्वासां पती रयीणाम् ।
इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥७॥८॥

होता । निऽसत्तः । मनोः । अपत्ये । सः । चित् । नु । आसाम् । पतिः । रयीणाम् ।
इच्छन्त । रेतः । मिथः । तनूषु । सम् । जानत । स्वैः । दक्षैः । अमूराः ॥ ७ ॥ ८ ॥

स्कन्द० 'स चिन्न्वासाम्' इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । योऽग्निः होता निषत्तः निषण्णः निषीदति वा । मनोः अपत्ये जात्यपेक्षमेकवचनम् । मनोरपत्यभूतायां जातौ । मनुष्येष्वित्यर्थः । सः चित् नु इति पदपूरणः । आसाम् हविर्लक्षणानाम्[7] पतिः स्वामी रयीणाम् । कस्य स्वभूतानाम् । उच्यते इच्छन्त रेतः एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये इच्छन्ति रेतः मिथः सहभूताः अपि । न केवलाया एव । तनूषु आत्मीयेषु शरीरेषु । स्वशरीरं वा रेतः । इच्छया चात्र तत्कारणकौरसप्रजेच्छा[10] प्रतिपाद्यते । ये अग्निपरिचर्यया[11] समुदिता अपि सन्तः स्वशरीरेत कारणिकामौरसीं[11] प्रजामिच्छन्ति तेषां स्वभूतानां हविषां नान्येषामित्यर्थः । ये च सम् जान सम्यग्जानन्त्यग्निम् स्वैः दक्षैः दक्षशब्दः—'चित्तिं दक्षस्य सुभगत्वम्' ( ऋ २, २१, ६ ), 'श्रेयांसं दक्षम्' ( ऋ १०, ३१, २ ) इत्यादिषु मनस्यात्मनि च प्रसिद्धः । इह तु सोऽयमित्यभिसम्ब न्धात् तत्प्रभवे ज्ञाने वर्तते । आत्मीयैर्मनःप्रभवैरात्मप्रभवैर्वा[13] ज्ञानैरित्यर्थः । अमूराः अमूढाः विविक्तप्रज्ञावन्तः ॥ ४ ॥

वेङ्कट० होता निषण्णः[12] मनुष्येषु । सः खलु आसाम् रयीणाम् स्वामी । तस्मिन्नेवाग्निः अन्ते स्थिते मिथः संसर्गान् स्वेषु शरीरेषु पुत्रम् ऐच्छन् समजानत चेतरे[14] स्वैः इन्द्रियैः अमूढाः[15] ॥ ७ ॥ ८ ॥

---

१. प्रैषाः वि[1,2] रुपं अ[1,2]. २. नास्ति ल कु. ३. सर्वान्तस्य वि[1] अ[1]. ४. °ति यो वा वि[1] अ[1] ५. देहि ल कु. ६. ऋतस्य मूको. ७-७. नास्ति मूको. ८. °णानि° अ. ९. स्वभू° अ. १०. °कारणे° न्नेरं° अ. ११. °चर्याय कु. १२. °रेरं रेतः° अ. १३. आत्मीयैः मन° अ. १४. निषण्णः वि[1]. १५. चेतरेः वि[1] अ[2]; चक्षुरेः वि[1]. १६. अमूढः वि[1] अपे.

मुद्गल० हे अग्ने! त्वम् मनोः अपत्ये यजमानरूपायां प्रजायाम् होता देवानामाह्वाता सन् निषत्तः निषण्णः। सः चित् नु स एव त्वम् आसाम् प्रजानाम् रयीणाम् गवादीनां धनानामपि पतिः स्वामी। अतस्ताः प्रजाः तनूषु आत्मीयेषु शरीरेषु मिथः संसृष्टमेकीभूतं पुत्ररूपेण परिणतम् रेतः वीर्यम् इच्छन्त ऐच्छन्। त्वदनुग्रहात् पुत्रमलभन्तेति यावत्। लब्धपुत्राश्च ताः प्रजाः अमूराः अमूढाः सत्यः स्वैः स्वकीयैः दक्षैः समर्थैः पुत्रैः सह सम् जानत सम्यगवगच्छन्ति। चिरकालं जीवन्तीत्यर्थः॥ ७॥ ८॥

पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन् ये अस्य शासं तुरासः।
वि राय औंर्णोद् दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः॥९॥१०॥

पितुः। न। पुत्राः। क्रतुम्। जुषन्त। श्रोषन्। ये। अस्य। शासम्। तुरासः।
वि। रायः। और्णोत्। दुरः। पुरुऽक्षुः। पिपेश। नाकम्। स्तृभिः। दमूनाः॥९॥१०॥

स्कन्द० यथा पितुः पुत्राः, एवमग्नेः क्रतुम् प्रज्ञानम् जुषन्त सेवन्ते। अग्नेः स्वभूतां प्रज्ञां प्राप्नुवन्तीत्यर्थः। श्रोषन् शृण्वन्ति ये अस्य अग्नेः शासम् शासनम्। येऽस्यानुशासने वर्तन्त इत्यर्थः। तुरासः त्वरिताः। सादरा इत्यर्थः। अथवा तुरासः इति तुर्वतेर्हिंसार्थस्य[1] रूपम्। अग्निप्रसादादेव शत्रूणां हिंसितार इत्यर्थः। किञ्च[2] वि रायः और्णोत् दुरः धनस्य च यानि द्वाराणि। यैर्धनं प्राप्यते तानि तेषां व्यौर्णोत् विविधं प्रकाशयति उद्घाटयति[3]। धनं ददातीत्यर्थः। पुरुक्षुः क्षुशब्दोऽत्र कीर्तिवचनः। 'कृधि क्षुमन्तं' (ऋ २,९,५) इति यथा। बहुकीर्तिरग्निः। किञ्च पिपेश पिश अवयवे पठितः। इह तु सामर्थ्यात् रूपवत्करणे द्रष्टव्यः। रूपवती चकार नाकम् दिवम् स्तृभिः नक्षत्रैः दमूनाः दान्तः। उपशमात्मक इत्यर्थः। धर्ममूलत्वात् सर्वस्य, धर्मस्य चाग्निमूलत्वादिदमुच्यते - पिपेश[4] नाकम् इति॥ ५॥

वेङ्कट० [5]पितुः न† पुत्राः[5] कर्म अजुषन्त। अश्रौषन्[6] ये अस्य शासनम् वेदे त्वरमाणाः। सोऽयम् धनस्य[7] द्वाराणि विवृणोति यजमानेभ्यः बहुशब्दः। आश्लेषयति दिवम् आच्छादकैर्द्दीप्तिभिः दम-मना इति। याज्ञिकस्याग्नेः स्तुतिः॥ ९॥ १०॥

मुद्गल० अस्य अग्नेः शासम् शासनम् तुरासः त्वरमाणाः सन्तः ये यजमानाः श्रोषन् शृण्वन्ति ते सर्वे तेनानुशिष्टम् क्रतुम् कर्म जुषन्त सेवन्ते। तत्र दृष्टान्तः। पितुः नः पुत्राः यथा पुत्राः पुरु बहुलं त्रायकाः तनयाः पितुराज्ञां कुर्वन्ति तद्वत्। पुरुक्षुः 'क्षु'[8] (निघ २,७) इति अन्ननाम। बह्वन्नः। सोऽग्निरेषां यजमानानाम् दुरः द्वाराणि यज्ञस्य द्वारभूतानि रायः धनानि वि और्णोत् विवृणोति प्रकाशयति, ददातीति यावत्। अपि च दमूनाः दमे यज्ञगृहे मनो यस्य सोऽग्निः नाकम् द्युलोकम् स्तृभिः नक्षत्रैः पिपेश अवयवीचकार। नक्षत्रैर्युक्तमकरोदित्यर्थः॥ ९॥ १०॥

इति प्रथमाष्टके पञ्चमाध्याये द्वादशो वर्गः॥

---

1. तुर्वे° मूको. 2. किम् कु. 3. उद्घा° अ. 4. पिपेश अ. 5-5. नास्ति वि[1] अ[1,2] ऌ लपं. † इव वि[1]. 6. श्रोषन् वि[1] अ[2] लपं. 7. धनानि वि[1,2] अ[1] कु ऌ लपं. 8. पुरु मूको.

[ ६९ ]

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥१॥२॥

शुक्र । शुशुक्वान् । उष । न । जार । पप्रा । समीची इति सम्ऽईची । दिव । न । ज्योति ।
परि । प्रऽजात । क्रत्वा । बभूथ । भुव । देवानाम् । पिता । पुत्र । सन् ॥ १ ॥ २ ॥

स्कन्द० शुक्र शुक्लवर्णोऽग्नि[1] शुशुक्वान् दीप्तश्च उष न जार उष इति षष्ठ्यर्थे प्रथमा। उषस इव जरयिता आदित्य । पप्रा पूरयति च समीची सगते । उभे अपीत्यर्थ । क। सामर्थ्यात् द्यावापृथिव्यौ। केन। सामर्थ्यात् ज्योतिषा। कथमिव। दिव न[2] ज्योत दिव इव सम्बन्धि ज्योतिरादित्याख्यम्[3]। आदित्य इवेत्यर्थ । परोऽर्धर्च प्रत्यक्षकृतत्वात् भिन्न वाक्यम्। प्रजात जातमात्र एव सन् त्वम् क्रत्वा कर्मणा हविर्नयनादिना प्रज्ञया वा[2] पार बभूथ परिपूर्णो भवति परिग्रहे। परिगृह्णासि सर्वम्। भुव भवसि च देवानाम् दीव्यते स्तुत्यर्थत्वात् स्तोतारोऽत्र देवा उच्यन्ते। स्तोतृणा यजमानानाम् पिता पितृस्थानीय पालयिता वा पुत्र सन्। अग्निर्हि[1] यजमानैर्जन्यते, अत एवमुच्यते—पुत्र सन् इति ॥ १ ॥

वेङ्कट० शुक्रवर्ण शोचनशील[5] उषस इव जरयिता आदित्य । पूरयिता द्यावापृथिवी दिवि भवम् इव ज्योति[6]। प्रजात त्व कर्मणा सर्वम् परि बभूथ। भुव देवानाम् कर्मव पिता पुत्र अपि सन् ॥ १ ॥ २ ॥

मुद्गल० 'शुक्र' इति द्वैपद दशर्चम् अध्ययनत पञ्चर्च पञ्चम सूक्तम्। 'पराशर ऋषि । विराट् छन्द । अग्निर्देवता ॥

शुक्र शुभ्रवर्णोऽयमग्नि उष न जार उषसो जरयिता सूर्य इव शुशुक्वान् शोचयिता सर्वस्य प्रकाशयिता भवति। तथा समीची सङ्गते द्यावापृथिव्यौ दिव न ज्योति[7] द्योतमानस्य सूर्यस्य ज्योतिरिव पप्रा स्वतेजसा पूरयिता। हे अग्ने[1] अतस्त्वम् प्रजात प्रादुर्भूत सन् क्त्वा कर्मणा उक्तप्रकारेण सर्वं जगत् परि बभूथ परितो व्याप्तोषि[8]। देवानाम् ऋत्विजाम् पुत्र सन् पिता भुव पालयिता भवसि ॥ १ ॥ २ ॥

वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम् ।
जने न शेव आहूर्यः सन् मध्ये निषत्तो रण्वो दुरोणे ॥ ३॥ ४॥

वेधा । अदृप्त । अग्नि । विऽजानन् । ऊध । न । गोनाम् । स्वाद्म । पितूनाम् ।
जने । न । शेव । आऽहूर्य । सन् । मध्ये । निऽसत्त । रण्व । दुरोणे ॥ ३ ॥ ४ ॥

---

1 शुक्र° T. 2 नास्ति भ 3 °रादित्यम् भ 4 शोचनाय वि° भ°. 5 द्युतिमन् वि°. 6. नास्ति मै°. 7. नास्ति मूको. 8. व्याप्तोसि मै°

स्कन्द० वेधाः मेधावी अदृप्तः दर्पमोहनयोः। अमूढः अग्निः विजानन्। किम्। सामर्थ्यं भक्ततां यजमानानाम्। ऊधः न गोनाम् यथा गवाम्[१] अवयवभूतमूधः पयआदिना स्वादुतामन्नं करोति तद्वत् पाकेन स्वाद्म स्वादुताम्। करोतीति वाक्यशेषः। कस्य। पितूनाम् अन्नानां हविर्लक्षणानां सर्वेषां वा। किञ्च जने न शेवः जनयितृत्वात् जनः पिताऽभिप्रेतः। प्रथमा चैषा सप्तमी। पितेव सुखकरोऽग्निः सर्वयजमानानाम् आहूर्यः सन् ह्वृ कौटिल्ये चञ्चलत्वाज्ज्वालानां कुटिलस्सन्[२]। किञ्च मध्ये निपत्तः वेद्या मध्ये निषण्णः रण्वः रमणीयोऽग्निः [३]दुरोणे यज्ञगृहे। अथवा जनशब्दो लोकवचनः। स्वार्थ एव सप्तमी। दुरोण इत्येतत् सप्तम्यन्तमेवदुपमानम्। यथा लोके सुखः† तद्वदाहूर्यस्सन् वेद्या मध्ये निषण्णः रमणीयोऽग्निः गृहेऽपि सुख इत्यर्थः ॥ २ ॥

वेङ्कट० विधाता अदृप्यन् अग्निः विजानन्[४] गवाम् ऊधः इव पयसा अन्नानि पचन्[५] स्वादूकर्ता भवति। सार्थे इव सुखकरं मित्रम् आह्वातव्यः सन् मध्ये निषण्णः रमयिता गृहे ॥ ३ ॥ ४ ॥

मुद्गल० वेधाः मेधावी अदृप्तः दर्परहितः विजानन् कर्तव्याकर्तव्यविभागम् अग्निः गोनाम् गवाम् ऊधः न गोसम्बन्धि पयसः आश्रयभूतं स्थानमिव पितूनाम् अन्नानाम् स्वाद्म स्वादयिता[७] रसयिता यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति, तद्वदग्निरपि सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः। अपि चैवम्भूतोऽग्निः जने न शेवः जनपदे लोकसुखकरः पुरुष इव मध्ये यज्ञेषु मध्ये आहूर्यः आह्वातव्यः सन् दुरोणे यज्ञगृहे निपत्तः निषण्णः रण्वः रमयिता भवति ॥ ३ ॥ ४ ॥

पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत्।
विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥ ५ ॥ ६ ॥

पुत्रः। न। जातः। रण्वः। दुरोणे। वाजी। न। प्रीतः। विशः। वि। तारीत्।
विशः। यत्। अह्वे। नृऽभिः। सऽनीळाः। अग्निः। देवऽत्वा। विश्वानि। अश्याः ॥५॥६॥

स्कन्द० पुत्रः न[८] यथा पुत्रो जातः तद्वत् रण्वः रमणीयः प्रीतिकरोऽग्निः दुरोणे यज्ञगृहे[९]। किञ्च वाजी न यथा सङ्ग्रामाश्वः[१०] सङ्ग्रामजयद्वारेण वर्धयति तद्वत् प्रीतः सन्नग्निः विशः स्तोतॄन् यष्टॄंश्च मनुष्यान् वि तारीत्[११] विपूर्वस्तरतिः सर्वत्र वृद्ध्यर्थे। विविध वर्धयति। किञ्च विशः देवविशः। देवानित्यर्थः। यत् यः यदा वा अह्वे आह्वयति। नृभिः[१२] मनुष्यैः ऋत्विग्भिः सनीळाः समानं नीळं स्थानं यासां देवविशां ताः सनीळाः। एकस्वर्गाख्यस्थानाः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। स तदा वा अग्निः देवत्वा विश्वानि स्वार्थिकोऽत्र भावप्रत्ययो

१. गवामर्थं मूको. २. तु. पृष्ठे ४६२ टि. ३-३. नास्ति अ. † सुखा कः; सुखी वि. ४. अस्मद्भक्तता जनयन् वि[१] अ[१]. ५. ॰ पचन् ल; विजपचन वि[२] लुप; विजवचन वि. ६. स्वादु[०] लुपं ७. स्वाद्म मूको. ८. नास्ति अ वि. ९. ॰हे वा अ; ॰हे व वि. १०. सग्रामः मूको. ११. न ता[०] वि. १२. आश्रयद्भिः नृभि. वि.

द्रष्टव्य, चातुर्वर्ण्य चातुराश्रम्यम् इति यथा। देवान् सर्वानसदर्थम् अश्या व्यत्ययेनाय मध्यम। अश्यात् व्याप्नुयादित्याशास्महे ॥ ३ ॥

वेङ्कट० पुत्र इव जात रमयिता गृहे वर्तमान, अश्व इव मुदित मनुष्यान् तारयति[1]। [2]यदाह यज्ञार्थं दैवै समानस्थानान्[†] ऋत्विजो मनुष्यान् आह्वयामि, तदानीम्[‡] अग्नि स्वयमेव इन्द्रत्व §वरुणत्व देवतान्तरत्वञ्च§ प्राप्नोति[२] ॥ ५ ॥ ६ ॥

मुद्गल० पुत्र न पुत्र इव जात प्रादुर्भूतोऽग्नि दुरोणे गृहे रण्व रमयिता भवति। वाजी न अश्व इव प्रीत इषयुक्त सन् विश सङ्ग्रामे वर्तमाना शत्रुभूता प्रजा वि तारीत् विशेषेण तरति अतिक्रामति। अपि च नृभि ऋत्विग्लक्षणैर्मनुष्यै सहितोऽहम् सनीळा समाननिवास स्थाना विश दैवप्रजा यत् यदा अह्वे आह्वयामि, तदानीमयम् अग्नि विश्वानि सर्वाणि दैवत्वा दैवत्वानि अश्या अश्नुते प्राप्नोति। स्वयमेव दैवतारूपो भवतीत्यर्थ ॥ ५ ॥ ॥ ६ ॥

नकिष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।
तत् तु ते दंसो यदहन्त्समानैर्नृभिर्यद् युक्तो विवे रपांसि ॥ ७ ॥ ॥ ८ ॥

नकि । ते । एता । व्रता । मिनन्ति । नृऽभ्य । यत् । एभ्य । श्रुष्टिम् । चकर्थ ।
तत् । तु । ते । दंस । यत् । अहन् । समानै । नृऽभि । यत् । युक्त । विवे । रपांसि ॥७॥८॥

स्कन्द० नकि इति निपात प्रतिषेधेन समानार्थं। न कश्चित् ते तव एता व्रता एतानि दहनपचनादीनि कर्माणि मिनन्ति मीञ् हिंसायाम् इत्यस्यैतद्रूपम्। हिंसन्ति हिंसितु शक्नुवन्तीत्यर्थ। न च [1]केवलानि दहनादीनि[1]। किन्तु[२] नृभ्य यत् एभ्य यश्च एभ्य स्तोतृभ्य यष्टृभ्यश्च मनुष्येभ्य श्रुष्टिम् अपठितमपि सुखनामैतद् द्रष्टव्यम्। सुखम् चकर्थ करोषि। तदपि न कश्चिद्धिंसितु शक्नोति। एवमतिशयवदनेककर्मयुक्तस्यापि तत् तु ते दंस तदेव तव कर्म। अत्यन्तप्रकृष्टमित्यर्थ। यत् कतमत्। उच्यते। यत् अहन् हिंसितवान्। किम्। सामर्थ्यात् तमो वा रक्षांसि वा। समाने नृभि यत् युक्त यश्च समानैरात्मनो योग्यै ऋत्विगाख्यै मनुष्यैर्युक्त यागकरणद्वारेण विवे वेतेरन्तर्णीतण्यर्थस्य रूपम्। गमयसि। नाशयसीत्यर्थ। रपांसि रपो रिप्रमिति पापनामनी' (या ४ २१)। पापानि यजमानानाम् ॥ ४ ॥

वेङ्कट० न केचन तव एतानि कर्माणि हिंसन्ति। यस्मात् त्वं नेतृभ्य मनुष्येभ्य आशु [४]प्राप्ति करोषि[४] सन्निधानं करोषि। तत् एव कर्म, यत्[५] समाने मनुष्यैः युक्त सन् सर्वा पापानि हंसि यत् च जानासि तानि[६] इति[८]। एकमर्थं गता समाना[९], तैर्नियुक्त[१०] इति[११] ॥७॥८॥

मुद्गल० हे अग्ने[1] ते तव सम्बन्धीनि एता व्रता एतानि व्रतानि परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि नकि मिनन्ति राक्षसादयो बाधका न हिंसन्ति। यत् यस्मात् त्वम् एभ्य

---

१ °यति इति वि[1] छप. २ २ नास्ति वि[1] छप. † °स्थान् वि[11] छ छप, 'स्थाना (न्) वि[1] अ[1]. ‡ °नम् वि[1] अ[1]. § § नास्ति वि[1] अ[1]. ३ ३ °केवलानि न ति. ४ ४ कि न न ति. ५ ५ °मर्थ° वि[1] अ[1]. ६ नास्ति वि[1] अ[11] छ छप. ७ नान् मूको. ८ ताता वि[1] अ[1]. ९ °ना वि[1] ङ. १० °न ते° वि[1]; °युक्त वि[1] छप; °क्त नर वि[1] अ[1]. ११ नास्ति मू.

कर्मसु वर्धमानेभ्यः नृभ्यः यज्ञस्य नेतृभ्यो यजमानेभ्यः श्रुष्टिम् शु आशु अश्नुते व्याप्नोति श्रुष्टिर्यज्ञफलरूपं सुखम्। तत् चकर्थ कृतवानसि। सति हि तव व्रतानां बाधके एतन्नोपपद्यते अतोऽवगम्यते तव व्रतानां हिंसका न सन्तीति। हे अग्ने! ते त्वदीयम् तत् तु दंसः तदेकर्म यत् यदि राक्षसादिः[1] अहन् हन्ति विनाशयति तदानीम् समानैः सप्तगणरूपेसदृशैः नृभिः नेतृभिर्मरुद्भिः युक्तः त्वम् रपांसि बाधकानि राक्षसादीनि यत् यस्मात् विवेः गमयसि पलायनं प्रापयसि, तस्मात् तव व्रतानि न[2] हिंसन्तीति योज्यम् ॥ ७ ॥ ८ ॥

उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै ।
त्मना वहन्तो दुरो व्यृण्वन् नवन्त विश्वे स्वर्दृशीके ॥ ९ ॥ १० ॥

उषः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् । अस्मै ।
त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे । स्वः । दृशीके ॥ ९ ॥ १० ॥

स्कन्द० उषः न[3] जारः[4] उषस इव जरयिता आदित्यः विभावा दीप्तिमानग्निः। उस्रः 'उस्रा' (निघ २, ११) इति गोनाम। तस्मादस्यादिहाऽग्नौ प्रयुक्तम्[5]। वृषभसदृशश्चेत्यर्थः। संज्ञातरूपः प्रख्यातरूपश्च। चिकेतत् अस्मै कित ज्ञाने। व्यत्ययेन चेदं बहुवचनस्य स्थाने एकवचनम्। अस्मै इत्यपि[6] द्वितीयार्थे चतुर्थी। तादर्थ्यचतुर्थीश्रुतेर्वा स्तुतिं हवींषि वा कर्तुमिति वाक्यशेषः। एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। ये जानन्त्येतमग्निम् अस्य वाऽग्नेरर्थाय स्तुतिं हवींषि वा कर्तुं ते त्मना आत्मना वहन्तः अग्निं प्रति स्तुतिं हवींषि वा प्रापयन्तः। दुरः द्वाराणि। कस्य। धनस्य। कुत एतत्। 'वि राय और्णोत् दुरः' (ऋ १,६८,१०) इति मन्त्रान्तरे दर्शनात्। वि ऋण्वन् विविधं गच्छन्ति[7] प्राप्नुवन्ति। धनं लभन्त इत्यर्थः। किञ्च नवन्त स्तुवन्त्यग्निम् विश्वे सर्वे मनुष्याः स्वः सर्वस्मिन्[8] दृशीके दर्शनीये वेद्यादौ स्थाने। अथवा दृशीकेशब्दोऽत्र द्रष्टुमित्यस्यार्थे। सर्वमग्निप्रकाशितं द्रष्टुम्। द्युनाम वा स्वःशब्दः। दिवं द्रष्टुम्। स्वर्गं प्राप्तुमित्यर्थः ॥ ५ ॥

वेङ्कट० उषसः इव जरयिता आदित्यः दीप्तिमान् उत्सरणशीलः पुरुषेण संज्ञातरूपः सन्[9] जानाति सम्। स्वयमेव[10] अस्मै हविः वहन्तः अभ्युदयानां द्वाराणि विवृण्वन्ति। सर्वेऽभ्युदयार्थिनः अस्मिन् सर्वस्य दर्शनीये[11] संश्लिष्टा भवन्तीति[12] ॥ ९ ॥ १० ॥

मुद्गल० उषः न जारः उषसो जरयिता आदित्य इव विभावा विशिष्टप्रकाशयुक्तः उस्रः निवासयिता संज्ञातरूपः सर्वैः प्राणिभिरवगतस्वरूपः। देवतान्तरवदप्रत्यक्षो न भवतीत्यर्थः। एवम्भूतोऽग्निः अस्मै यजमानाय चिकेतत् जानातु। अभिमतफलं ददात्वित्यर्थः। तथा अस्य रश्मयः त्मना आत्मनैव स्वयमेव वहन्तः हविर्वहनं कुर्वन्तः दुरः यज्ञगृहद्वाराणि वि ऋण्वन् विशेषेण गच्छन्ति

१. °दीनि मूको. २. यस्माद् त्वम् मूको. ३. नास्ति मै[1]. ४. नास्ति अ. ५. नास्ति मूको. ६. °युक्तः अ. ७. इति ति. ८. गच्छन् मूको. ९. स्वस्मिन् अ. १०. मः वि[1]. ११. स्वमेव वि[1] अ[2]. १२. सदृशे° वि[1] अ[1]. १३. भवन्ति कु.

व्याप्नुवन्तीत्यर्थः। तदनन्तरम् दृशीके दर्शनीये स्व॑ नभसि विश्वे सर्वे ते रश्मयः नवन्त गच्छन्ति। देवान् प्राप्नुवन्तीत्यर्थः ॥ ९ ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये त्रयोदशो वर्गः ॥

[ ७० ]

व॒नेम॑ पू॒र्वीर॒र्यो म॑नी॒षा अ॒ग्निः सु॒शोको॒ विश्वा॒न्यश्याः।
आ दैव्या॑नि व्र॒ता चि॑कि॒त्वाना मानु॑षस्य॒ जन॑स्य॒ जन्म॑ ॥ १ ॥ २ ॥

व॒नेम॑। पू॒र्वीः। अ॒र्यः। म॒नी॒षा। अ॒ग्निः। सु॒ऽशोकः॑। विश्वा॑नि। अ॒श्याः।
आ। दैव्या॑नि। व्र॒ता। चि॒कि॒त्वान्। आ। मानु॑षस्य। जन॑स्य। जन्म॑ ॥ १ ॥ २ ॥

स्कन्द० वनेम वय ता[1] सम्भजेमहीत्येतदाशास्महे। किम्। पूर्वीः चिरन्तनीः। का। सामर्थ्यात्समृद्धीराशिषो वा। अयम् अपि[2] अर्यः ईश्वरः। मनीषा स्तुतिरत्र मनीषोच्यते। सहयोगलक्षणा चैषा तृतीया। मनीषया स्तुत्या सह अग्निः सुशोक सुदीप्ति। विश्वानि सर्वाणि अस्मदीयानि हवींषि अश्याः व्याप्नुयादित्याशास्महे। कीदृशो सोऽग्निः। उच्यते। दैव्यानि व्रता देवानां स्वभूतानि हविर्नयनादिकर्माणि[3] आ चिकित्वान् मर्यादया यो ज्ञातवान्। आ मानुषस्य जनस्य मनुष्यस्य च कृत्स्नस्य जनस्य जन्म आचिकित्वान्। हविर्नयनादिकर्मणा[4] मनुष्याणां च जन्मनो ज्ञातेत्यर्थः ॥ १ ॥

वेङ्कट० भजेमहि[5] बहून्यन्नान्यग्निर्दग्धारण्याज्जातानि[6]। स हि प्रज्ञायुक्तः प्रदाता भवति। सोऽयम् अग्निः सुदीप्तिः विश्वानि हवींषि व्याप्नोति। दैव्यानि कर्माणि आभिमुख्येन जानन् आजानश्चैव[7] मानुषस्य[8] जनस्य उत्पत्तिमिति ॥ १ ॥ २ ॥

मुद्गल० 'वनेम' इति द्वैपदमेकादशर्चमध्ययनतः षडृच षष्ठं सूक्तम्। पराशर ऋषिः। विराट् छन्दः। अग्निर्देवता।

पूर्वीः प्रभूता इषः अन्नानि[9] वनेम सम्भजेमहि। अग्निस्त्वादृशान्यन्नानि ददात्वित्यर्थः। मनीषा मनीषया बुद्ध्या अर्यः गन्तव्यः प्राप्तव्य सुशोकः शोभनदीप्तिः। एवम्भूतः अग्निः विश्वानि सर्वाणि कर्माणि अश्याः अश्नुते व्याप्नोति। किं कुर्वन्। दैव्यानि देवेषु भवानि व्रता व्रतानि कर्माणि चिकित्वान् आ समन्तात् जानन् तथा मानुषस्य जनस्य मनुष्यजातस्य जन्म उत्पत्तिरूपं कर्म आचिकित्वान्[10] आभिमुख्येन जानन्। द्यावापृथिव्योः सम्बन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन्। अवगत्य व्याप्नोतीत्यर्थः[11] ॥ १ ॥ २ ॥

गर्भो॒ यो अ॒पां गर्भो॒ वना॑नां॒ गर्भ॑श्च स्था॒तां गर्भ॑श्च॒रथा॑म्।
अद्रौ॑ चिदस्मा अ॒न्तर्दु॑रो॒णे वि॒शां न विश्वो॑ अ॒मृतः॑ स्वा॒धीः ॥ २ ॥ ४ ॥

---

१. श्व. ४. २. नास्ति मू. ३. 'विनियनादि' वि. ४. 'विनियमनादि' वि. ५. भजेम वि' छप. ६. 'र्ग्नि न्व' वि'' ए, 'नि न्व' भ' छप. ७. 'नैव वि' छप. ८. मनुष्यस्य छप. ९. नास्ति मू'. १०. 'त्वान् मुख्येन मानन् मे'. ११. प्राप्नोती' मूको.

गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् ।
अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ॥३॥४॥

स्कन्द० यः अग्निः अपाम् गर्भः । वैद्युतात्मना ह्यग्निः अद्भ्य उत्पद्यते । अतोऽपां[1] गर्भ उच्यते । यश्च गर्भः वनानाम् वृक्षाणाम् । [2]ततोऽप्यग्नेरुत्पत्तिदर्शनात् । गर्भः च[2] स्थाताम् [3]स्थावराणां च । यो गर्भस्तृणौषध्यादीनाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । गर्भः चरथाम्[4] चरतिर्गत्यर्थः । जङ्गमानां च[5] मनुष्यादीनां यो गर्भः । तदुदरेषु जाठरात्मना विद्यमानत्वात्[6] अग्न्यादिभ्यो वा लोकोत्पत्तिदर्शनात्[6] । यस्य च अद्रौ चित् षष्ठ्यर्थे चात्र[7] सप्तमी । [8]अन्तरित्येतेन चास्य सम्बन्धः । अद्रेरपि अन्तः पर्वतस्यापि मध्ये । अस्मै । इयमपि षष्ठ्यर्थे चतुर्थी । अस्याग्नेः । दुरोणे प्रथमार्थे एषा सप्तमी[2] । दुरोण गृहम् । यस्याग्नेः गृहाणामपि मध्ये स्थानमित्यर्थः । यश्च विशाम् यष्टॄणां स्तोतॄणां च[9] मनुष्याणाम् विश्वः सर्वः । सर्वकार्यकरत्वाच्च सर्व इति व्यपदेशः । न-शब्दस्तु[8] उपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमार्थीयस्य संप्रत्यर्थे प्रयोगः' ( तु. या ७,३१ ) इति पदपूरणः । कीदृशः । अमृतः मरणवर्जितः । स्वाधीः कल्याणचित्तः । य ईदृशस्तस्य किमित्युत्तरयर्चैकवाक्यता ॥ २ ॥

वेङ्कट० पुत्रः यः अपाम्, पुत्रः वृक्षाणाम्, गर्भः च स्थावराणाम्[9], गर्भः जङ्गमानामग्निः । तस्मै एव अद्रौ इव अन्तः गृहे च परिचरन्ति । सोऽयम् विशाम् च निवेशको भवति अमृतः सुकर्मा । समुच्चये नकारः ॥ ३ ॥ ४ ॥

मुद्गल० यः अग्निः अपाम् गर्भः गर्भवदन्तर्वर्ती अपांनपात्संज्ञः[10] । यश्च वनानाम् अरण्यानाम् गर्भः दावाग्निरूपेण तन्मध्ये वर्तते । यः च स्थाताम् स्थावराणां काष्ठादीनाम् गर्भः अन्तरवस्थाता । चरथाम् चरणवतां जङ्गमानाम् गर्भः जाठररूपेण देहमध्येऽवतिष्ठते । एवम्भूताय अस्मै अग्नये दुरोणे दुस्तर्यगृहे अद्रौ चित् पर्वतेऽपि अन्तः मध्ये । हविः प्रयच्छतीति शेषः । सोऽयम् अमृतः अमरणधर्माऽग्निः स्वाधीः शोभनकर्मयुक्तः । अस्माकं भवत्विति शेषः । दृष्टान्तः । विश्वः विवेशयिता राजा विशाम् न प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत् ॥ ३ ॥ ४ ॥

स हि क्षपावाँ अग्नी रयीणां दाशद् यो अस्मा अरं सूक्तैः ।
एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान् ॥५॥६॥

सः । हि । क्षपाऽवान् । अग्निः । रयीणाम् । दाशत् । यः । अस्मै । अरम् । सुऽउक्तैः ।
एता । चिकित्वः । भूम । नि । पाहि । देवानाम् । जन्म । मर्तान् । च । विद्वान् ॥५॥६॥

स्कन्द० हि-शब्दः पदपूरणः[11] । सः क्षपावान् 'क्षपा' ( निघ १,७ ) इति रात्रिनाम । रात्रिमान् । यद्यपि चोभाभ्याम् अहोरात्राभ्याम् अग्निः सम्बद्धः, तथापि रात्रावतिशयेन दीप्तियोगादय तद्य-

---

१. अतो वापा अ. २-२. त्रुटितम् वि. ३. नास्ति अ ४. नास्ति कु. ५. नास्ति वि.
६. उत्पत्ति॰भ कु. ७. एषा वि. ८. ननस्तु वि. ९. °राणाम् तृणौषध्यादीनां वि[1] अ[2]. १०. अपामपात्° मूको. ११. पूरणः कु.

पदेश । अथवा क्षपयन्ति निर्वीर्यतामिति [1]क्षपा स्तुतय[1] इहोच्यन्ते । स्तुतयो हि वीर्यं वृद्धिकरत्वाद् देवतानां निर्वीर्यतां क्षपयन्ति । तद्वान् अग्नि रयीणाम् द्वितीयार्थे षष्ठयेषा । धनानि दाशत् ददाति । कस्मै । उच्यते । य अस्मै अग्नये अरम् समर्थं ऋक्समुदायलक्षणे सूक्ते । तृतीया निर्देशात् स्तोतुमिति वाक्यशेष । य [2]पुनरग्निं सूक्ते[2] शक्नोति स्तोतुमित्यर्थ । परोऽधर्च प्रत्यक्षकृतत्वात् भिन्न वाक्यम् । एता एतानि हे चिकित्व ! ज्ञात ! भूम भूतान्यस्मदीयानि नि पाहि नियमेन रक्ष । देवानाम् जन्म मर्तान् च विद्वान् । यावत् किञ्चित् सर्वं जानन्नित्यर्थं[3] ॥ ३ ॥

वेङ्कट० स हि रात्रिमान् अग्नि धनानि[4] ददातु[4], य अस्मै पर्याप्तो भवति सूक्तै एभि । एतानि [5]प्राज्ञ[5] भूतानि[6] नि पाहि देवानाम् मनुष्याणा च उत्पत्तिस्थान जानन् ॥ ५ ॥ ६ ॥

मुद्गल० स[7] हि अग्नि क्षपावान् रात्रिमान् । एवम्भूतोऽग्नि स्तोत्रे यजमानाय रयीणाम् धनानि दाशत् दाशति प्रयच्छति । य यजमान अस्मै अग्नये सूक्तै यथाशास्त्र प्रयुक्तैर्मन्त्रै अरम् अल पर्याप्त स्तोत्र करोति, तस्मै इत्यर्थ । हे चिकित्व ! चेतनावन्[8] सर्वज्ञ ! अग्ने[9] त्वम् देवानाम् इन्द्रादीनाम् जन्म जन्मानि मर्तान् मनुष्यान् च विद्वान् जानन् एता एतानि भूम भूस्युप क्षितानि भूतजातानि नि पाहि नितरा पालय । यतस्त्व देवमनुष्यादीन् सर्वान् जानासि अत एवम् उच्यत इत्यर्थ ॥ ५ ॥ ६ ॥

वर्धा॒न्यं पू॒र्वीः क्ष॒पो विरू॑पाः स्था॒तुश्च॒ रथ॑मृ॒तप्र॑वीतम् ।
अरा॑धि॒ होता॒ स्व१॒॑र्निष॑त्तः कृ॒ण्वन् विश्वा॒न्यपां॑सि स॒त्या ॥ ७ ॥ ८ ॥

वर्धा॑न् । यम् । पू॒र्वीः । क्ष॒पः । विऽरू॑पाः । स्था॒तुः । च॒ । रथ॑म् । ऋ॒तऽप्र॑वीतम् ।
अरा॑धि । होता॑ । स्वः॑ । निऽस॑त्तः । कृ॒ण्वन् । विश्वा॑नि । अपां॑सि । स॒त्या ॥ ७ ॥ ८ ॥

स्कन्द० [9]वर्धान् वर्धयन् यम्[9] अग्निम् पूर्वी क्षप क्षपा[9] रात्रय स्तुतयो वा विरूपा नानारूपा । स्थातु च स्थावरस्य च । चशब्दात् जङ्गमस्येति वाक्यशेष । ओषधीहविष पशुहविषश्चेत्यर्थ । रथम् रथस्थानीयम् । वोढारमित्यर्थ । ऋतप्रवीतम् ऋतो यज्ञ, तत्र प्रजात[10] प्रगत वा । यज्ञार्थमुत्पन्न यज्ञे वा व्यवस्थित सन्तम् इत्यर्थ । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्य । स[11] अराधि आराध्यति देवान् होता[11] स्व सर्वत्र यज्ञे निषत्त[11] निषण्ण । कृण्वन् विश्वानि अपांसि हविर्नयनादीनि स्वकर्माणि यागकर्माणि वा सत्या अविसंवादीनि ॥ ७ ॥

वेङ्कट० वर्धयन्ति यम् [12]बह्व्य रात्र्य[12] नानारूपा स्थातु ओषध्यादे अपि स्वर्गप्रापक सत्येन परिवीतम्, अपि वा यज्ञेन निषिक्तम् । ऋद्धोऽभवत् होता अग्नि सर्वत्र यज्ञेषु[13] निषण्ण कृण्वन् सर्वाणि कर्माणि सत्यानि ॥ ७ ॥ ८ ॥

---

१ १ एतस्तु° मूको. २ २ पुनरग्निं सूक्ते° अ वि, पुनरग्निं° कु. ३ जानन्नि° अ वि. ४ नास्ति कु. ५. प्रभातु वि[1] अ[1]. ६ ६ नास्ति वि[1] रुपं. ७ नास्ति मै[1]. ८ ८ नास्ति अ. ९. नास्ति मूको. १०. प्रसूत मूको. ११ नास्ति अ. १२ नास्ति अ वि. १३-१३ भवि वद्धो राजवः कु मो वा वि[1] अ[1]. १४ नास्ति वि[1] अ[1] कु ख रुपं

मुद्गल० पूर्वीः बह्वयः उषसः क्षपः निशाश्च विरूपाः शुक्लकृष्णतया विविधरूपाः सत्यः यम् अग्निम् वर्धान् वर्धयन्ति, तथा स्थातुः स्थावरं वृक्षादिकम् रथम् रममाणं जङ्गमं मनुष्यादिकञ्च ऋतप्रवीतम् ऋतेनोदकेन प्रकर्षेण वेष्टितं यमग्निं वर्धयन्ति । सोऽग्निः स्वः सुष्ठु अरणीये देवयजने निषत्त. निषण्ण उपविष्टः सन् होता देवानामाह्वाता अराधि संसिद्धोऽभूत् । किं कुर्वन् । विश्वानि सर्वाणि सत्या सत्सु यजमानेषु भवानि अपांसि कर्माणि कृण्वन् कुर्वन् ॥ ७ ॥ ८ ॥

गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।
वि त्वा नरः पुरुत्रा संपर्यन् पितुर्न जिव्रेर्वि वेदो भरन्त ॥ ९ ॥ १० ॥

गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे । बलिम् । स्वः । नः ।
वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरन्त ॥ ९ ॥ १० ॥

स्कन्द० गोषु प्रशस्तिम् प्रशंसाम् वनेषु वननीयेषु चाश्वादिषु । उदकनाम वा वनशब्दः ( तु. निघ १, १२ ) । उदकेषु । धिषे[1] धारयसि त्वम् । गा वननीयांश्चाश्वादीनुदकानि[2] वा प्रशस्तानि त्वं करोषीत्यर्थः । किञ्च भरन्त हरन्ति त्वां प्रति प्रापयन्ति । तुभ्यं ददतीत्यर्थः[3] । विश्वे बलिम् हविर्लक्षणम् स्वः सर्वम् । यावत् दातुं योग्यं तद् समस्तमित्यर्थः[4] । नः अस्माकं स्वभूताः ऋत्विजः पुत्रादयो वा । किञ्च त्वा नरः पुरुत्रा बहुषु स्थानेषु वि सपर्यन् विविधं परिचरन्ति । पितुः न जिव्रेः यथा च पितुः जीर्णस्य स्वभूतम् वेदः[5] धनं निवृत्तरजसि 'मातरि पित्राऽनुज्ञाता.[6] पुत्रा विभजन्ते एवं देवास्त्वदीयं धनम् वि भरन्त विविधं हरन्ति आत्मानं प्रति प्रापयन्ति । विभजन्ती-त्यर्थः[7] । अथवा वेदः अत्र हविर्लक्षणं धनमभिप्रेतम् । यथा पितुर्जीर्णस्य पुत्राः आदरेण विविधमन्नमुपहरन्ति एवं भवतो हविरित्यर्थः. ॥ ५ ॥

वेङ्कट० गोषु प्रशस्तं पयः धारयसि, या गावः वनेषु चरन्ति । भरन्त[8] च विश्वे बलिम् शोभनम्[9] अस्मभ्यम् । विविधं त्वाम् नरः[10] पूजयन्ति[11] अनेकेषु गृहेषु, पितुः इव जीर्णात्[12] धनं [13]त्वदीयं हरन्ति[13] ॥ ९ ॥ १० ॥

मुद्गल० हे अग्ने! त्वम् वनेषु वननीयेषु सम्भजनीयेषु पशुषु प्रशस्तिम् प्रशंसाम् धिषे दधिषे स्थापयसि । अस्माकं प्रशस्ता गवादिपशवो भवन्त्वित्यर्थः । विश्वे सर्वे जनाः नः अस्मभ्यम् स्वः सुष्ठु अरणीयम् बलिम् उपायनरूपं धनम् भरन्त आहरन्तु । हे अग्ने! त्वा त्वाम् नरः मनुष्याः पुरुत्रा बहुषु देवयजनदेशेषु वि सपर्यन् विविधं पूजयन्ति । पूजयित्वा वेदः धनम् वि भरन्त स्वत्तो विशेषेण हरन्ति । गृह्णन्तीत्यर्थः । दृष्टान्तः । जिव्रेः जीर्णात् वृद्धात् पितुः न पितुरिव । यथा पुत्राः वृद्धात् पितुः[14] सकाशाद् धनं हरन्ति तद्वत् ॥ ९ ॥ १० ॥

साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥११॥
साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । याताऽइव । भीमः । त्वेषः । समत्ऽसु ॥११॥

---

1. नास्ति अ ति.　2. 'दीनि अ.　3. ददाती° अ.　4. समभि° अ.　5. नास्ति मूको.　6-6. मातुपित्रा° अ; मातुः पित्रा° ति.　7. 'भजन्त इ° अ ति.　8. नास्ति वि[1] अ[2].　9. त्रुटितम् वि[1].　10. नराः कु.　11. पूज्य° वि[1] अ[1]. कु ल लपं.　12. जीर्णं वि[1] लपं; त्रुटितम् वि[2].　13-13. नास्ति मूको.

स्कन्द० साधुः न गृध्नुः साधुरिव गृध्नुः अभिकाङ्क्षिता। यथा साधुः पुरुषः न्यायेनैवार्थानभिकाङ्क्षति एवमग्निः स्तुतीर्हवींषि चेत्यर्थः। अस्ता इव शूरः यथा आयुधक्षेपणशीलः पुरुषस्तद्वदग्निः शूरः। याता इव भीमः यातिरत्र वधार्थः। 'अहेर्यातारम्' ( ऋ १,३२,१४ ) इति यथा। हन्तेव भयानकः। त्वेषः समत्सु दीप्तश्च संग्रामस्थानीयेषु यज्ञेषु संग्रामेष्वेव वा[१] ॥ ६ ॥

वेङ्कट० साधयिता इव शत्रूणामभिकाङ्क्षिता, आयुधानाम् क्षेप्तेव[२] शूरः, प्रहर्तेव[३] च भीमः, दीप्तः सङ्ग्रामेष्वग्निरिति। धनमाशास्ते सूक्तेनेति ॥ ११ ॥

मुद्गल० अयमग्निः साधुः न साधक इव गृध्नुः परिग्रहीता[४]। यथा साधकः साध्यफलमाशु गृह्णाति तद्वद् अग्निरपि सर्वं स्वीकरोतीत्यर्थः। तथाऽयमग्निः[५] अस्ता इव शूरः यथा इषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि बहून् सर्वं प्राणिजातं प्रेरयति। तथा[६] याता इव भीमः यथा[७] याता यातयिता हिंसको भीमः सर्वेषां भयङ्करो भवति तद्वदग्निरपि सर्वेषां भयमुत्पादयति। अत एवंविधोऽग्निः समत्सु सङ्ग्रामेषु त्वेषः दीप्तः सन् अस्माकं सहायो भवत्वित्यर्थः ॥ ११ ॥

इति प्रथमाष्टके पञ्चमाध्याये चतुर्दशो वर्गः ॥

## [ ७१ ]

उप॒ प्र जि॑न्वन्नुश॒तीरु॒शन्त॒म् पतिं॒ न नित्यं॒ जन॑यः॒ सनी॑ळाः ।
स्वसा॑रः॒ श्यावी॒मरु॑षीमजुष्रञ्चि॒त्रमु॒च्छन्ती॑मु॒षसं॒ न गावः॑ ॥ १ ॥

उप॑। प्र। जि॒न्व॒न्। उ॒श॒तीः। उ॒शन्त॑म्। पति॑म्। न। नित्य॑म्। जन॑यः। सऽनी॑ळाः।
स्वसा॑रः। श्यावी॑म्। अरु॑षीम्। अ॒जु॒ष्र॒न्। चि॒त्रम्। उ॒च्छन्ती॑म्। उ॒षस॑म्। न। गावः॑ ॥ १ ॥

स्कन्द० उप इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। उपगम्य प्र जिन्वन्। 'जिन्वतिः प्रीतिकर्मा' (धा ६,२२) प्रीणयन्ति प्रीणितवत्यो वाऽग्निम्। काः। सामर्थ्यादाहुतयः। कथम्। उशतीः उशन्तम् पतिम् न नित्यम् कौमारम् जनयः जायाः सनीळाः समानगृहाः। यथैकगृहवासिन्यो भार्याः परस्परस्पर्धया वैस्वैरुप-चारविशेषैः कौमारं भर्तारं कामयमानाः[८] कामयमानं प्रीणयेयुः तद्वदित्यर्थः। स्वसारः कुमारीमेवद् दृष्टव्यम्। स्वसार इव। यथा च भगिन्यः भ्रातरं प्रीणयेयुः तद्वदित्यर्थः। अथवा सनीळाः स्वसारः इत्येताभ्याम् आहुतयः प्रतिनिर्दिश्यन्ते। समानमग्न्याख्यं स्थानं यासां ताः सनीळा आहुतयः। अग्नेरेवैकस्य योग्याः नान्यस्य कस्यचिदित्यर्थः। ता एव एकयजमानप्रभवत्वात् स्वसारः। स्वयंसारित्वाद्वा। किञ्च अजुषून्[९] विश्रम् सेवन्ते सेवितवत्यो वा विचित्रं पूजनीयं वाग्निम्[१०]। कथम्। श्यावीम् अरुषीम् उच्छन्तीम् उपसम् न[१] अरुपाविर्तेत्यर्थः (तु. निघ २,१४)। यथा श्यावर्णान्तां[१] तमनस्-भाविको च तमांसि विवासयन्तीम् उपसं सेवेरन् तद्वत्। का अजुषून्। उच्यते। गावः स्तुतयोऽत्र गावः

---

१. नास्ति भ वि. २. °क्षे° वि°. ३. नास्ति कु. ४. °गृहीता मूको सा. ५. दथा° मूको. ६. नास्ति मूको. ७. नास्ति कु ति. ८. नास्ति भ. ९. वामग्निम् भ वि. १०. रशान ('र कु वि) वर्णो मां मूको.

उच्यन्ते। 'गोभिर्यदीमन्ये अस्मत्' ( ऋ ८,२,६, ) इति यथा[1]। यथा[2] आहुतयोऽग्निं प्रीणयन्ति प्रीणितवत्यो वा एवं[3] स्तुतयोऽपि स्तुवन्ति स्तुतवत्यो वेत्यर्थः ॥ १ ॥

वेङ्कट० उपाचरन् कामयमानाः कामयमानम् पतिम् इव असाधारणं जायाः एकपतिकाः अङ्गुलय एकस्मात्पाणेरुत्पन्नाः 'अञ्जलिकरणात् श्यामवर्णाम् आरोचनशीलामग्नेर्दीप्तिम्[4] चित्रम्[5] अजुषन् सेवन्ते चित्रम्[6] उच्छ्वसन्तीम्[7] उषसम् इव रश्मयः ॥ १ ॥

मुद्गल० 'उप प्र' इति दशर्चं सप्तमं सूक्तम्। शक्तिपुत्रः पराशर ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता ॥

उशतीः उशत्यः कामयमानाः सनीळाः समाननिवासस्थाना एकपाण्यन्तरस्थानात्। स्वसारः अङ्गुलयः उशन्तम् कामयमानमग्निम् जनयः जायाः नित्यम् असाधारणम् पतिम् न भर्तारमिव उप प्र जिन्वन् उपेत्य हविष्प्रदानादिकर्मणा प्रीणयन्ति। प्रीणयित्वा च चित्रम् चायनीयं पूजनीयं तमग्निमञ्जलिबन्धनेन अजुषन् असेवन्त। दृष्टान्तः। श्यावीम् श्याववर्णां रात्रिसम्बन्धात् कृष्णां ततः उच्छन्तीम् सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम्, अत एव अरुषीम् आरोचमानाम् उषसम् न उषोदेवताम् गावः रश्मयो यथा सेवन्ते तद्वत्। यथा रश्मय उषसा नित्यसम्बद्धा[8] एवं सर्वेषु यज्ञेषु अग्निपरिचरणेन अङ्गुलयः[3] नित्यसम्बद्धा[9] इति तात्पर्यार्थः ॥ १ ॥

वी॒ळु चि॑द् दृ॒ळ्हा पि॒तरो॑ न उ॒क्थैरद्रिं॑ रुज॒न्नङ्गि॑रसो॒ रवे॑ण ।
च॒क्रुर्दि॒वो बृ॑ह॒तो गा॒तुम॒स्मे अहः॒ स्व॑र्विविदुः के॒तुमु॒स्राः ॥ २ ॥

वी॒ळु । चि॒त् । दृ॒ळ्हा । पि॒तरः॑ । नः॒ । उ॒क्थैः । अद्रि॑म् । रु॒जन् । अङ्गि॑रसः । रवे॑ण ।
च॒क्रुः । दि॒वः । बृ॒ह॒तः । गा॒तुम् । अ॒स्मे इति॑ । अह॒रिति॑ । स्वः॑ । वि॒वि॒दुः । के॒तुम् । उ॒स्राः ॥ २ ॥

स्कन्द० वीळु चित्[1] वीळयतिः संस्तम्भनकर्मा ( द्र० या ५,१६ )। संस्तब्धमपि। अत्यन्ताप्रणतमप्यसुरवर्गमित्यर्थः। [10]दृळ्हा दृढानि[10] चासुरपुराणि। पितरः नः अस्माकम्। उक्थैः तृतीयानिर्देशात् योग्यक्रियाध्याहारः। उक्थाख्यैः शस्त्रविशेषैः स्तुवन्तः[11]। कम्। प्रकरणसामर्थ्यादग्निम्। अद्रिम् दुर्गपर्वतं चासुराणां स्वभूतम् रुजन् भग्नवन्तः अङ्गिरसः रवेण शब्देनैव महता। कथं पुनरेतदुच्यतेऽग्निं स्तुवन्तो रुजन्निति। यावता इन्द्रेण सह अङ्गिरसोऽसुरबलादीनि अरुजन्[12] नाग्निना। उच्यते। इन्द्रसाहित्यमङ्गिरसां सखित्वात्। इन्द्रसखित्वं च प्रकृष्टाद्धर्मात्। प्रकृष्टश्च धर्मो यागादिरग्न्यायत्तः। अत एतदुच्यते उक्थैः स्तुवन्तो रुजन्निति। एवं चास्या ऋचः आग्नेयत्वमुपपद्यते। किञ्च चक्रुः दिवः बृहतः[13] गातुम् अस्मे अस्मानपि सम्यगनुशासनद्वारेण स्वर्गगमनयोग्यानङ्गिरसोऽग्निप्रसादेनैव चक्रुरित्यर्थः। किञ्च अहः अहश्शब्दोऽत्र कालमात्रोपलक्षणार्थः। कालम् स्वः आदित्यं च विविदुः अग्निप्रसादेनैव अङ्गिरसो ज्ञातवन्तः। कीदृशः स्वः। उच्यते। केतुम् प्रज्ञानमत्त्वम्[14]। कीदृशाः अङ्गिरसः। उच्यते। उस्राः उत्स्राविणः। दातार इत्यर्थः। कस्य। सामर्थ्याद् भोगानां वृष्टेर्वा[15]। अथवा उस्रा इति गोसदृशाः। अत्यन्तजवाः सन्त इत्यर्थः।

---

१. नास्ति वि. २. नास्ति अ. ३. नास्ति मूको. ४-४. मदङ्गुलिबन्धनात् श्याववर्णा आरोचनशीला अग्ने° वि[1] अ; °णात् श्यावव° कु; °प्तिः वि[1]. ५. नास्ति वि[1] अ[3]; चित्रा वि[3]. ६. नास्ति कु. ७. उच्छन्ति वि[1] अ[3]; उच्छन्तीम् ल शोधः. ८. सम्बन्धा मूको. ९. सम्बद्धा मूको. १०-१०. दृढ्हानि मूको. ११. °वन्तो वि. १२. °दीन् न्य° अ. १३. बृहता वि. १४. °नमत्त्वं कु; °नत्त्वं वि. १५. पुष्टे° कु.

अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना । चक्रुरिति सामर्थ्याद्देवाना प्रतिनिर्देश । कृतवन्तो देवा । दिवो बृहतो गातु हवींषि गृहीत्वा महान्त द्युलोक प्रति गन्तारम् । कम् । सामर्थ्यादग्निम् । अस्मे अस्माक मनुष्याणामर्थाय । किञ्च अह स्वर्विविदु केतुमुस्रा । विविदुरिति विन्दत-र्लाभार्थस्येद रूपम् । 'उस्रा' ( निघ १,५ ) इति रश्मिनाम । अहश्चादित्यश्च रश्मयश्च, अग्निप्रसादेन केतु प्रज्ञान प्रकाशरूपता लब्धवन्त इत्यर्थ ॥ २ ॥

वेङ्कट० महान्तम्[1] अपि पितर· अस्माक स्तोत्रै शिलोच्चयम् अरुजन् महता शब्देन । चक्रु द्युलोकात् महत गमनम् अस्माक पितर, तमसो विनाशेन शोभनम् अह प्रज्ञा रश्मीश्च विविदु ॥ २ ॥

मुद्गल० न अस्माकम् पितर अङ्गिरस एतत्सज्ञा ऋषय उक्थै, शस्त्रैरपि स्तुत्वा वीळु चित् दृळ्हा बलवन्त दृढाङ्गमपि अद्रिम् अत्तार पणिनामानमसुरम् रवेण स्तुतिशब्दमात्रेण रुजन् अभञ्जन् । तै स्तुतोऽग्निस्तमसुर हतवानित्यर्थ । किञ्च बृहत महत दिव द्युलोकस्य गातुम् मार्गम्[2] अस्मे अस्माकम् चक्रु कृतवन्त । आवरकस्यासुरस्याग्निना हतत्वात् । मार्ग कृत्वा स्व सुष्ठु अरणीयम् असुरत्वादित्येन सुखेन प्राप्यम् अह दिवसम् विविदु अजानन् । तथा केतुम् अह्ना केतयितार ज्ञापयितारम् आदित्यम् उस्रा पणिनापहृता गाश्च विविदु-रित्यनुषङ्ग ॥ २ ॥

दर्धन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वो३ विभृत्राः ।
अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ।

दर्धन् । ऋतम् । धनयन् । अस्य । धीतिम् । आत् । इत् । अर्य । दिधिष्व । विऽभृत्रा ।
अतृष्यन्ती । अपस । यन्ति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयन्ती ॥ ३ ॥

स्कन्द० कृत्स्नस्य[1] जगतो धर्ममूलत्वात् तस्य च अग्निमुखत्वात् दधन् धारयन्ति अस्मदीया स्तुतय ऋतम् सर्वगतमग्निम् । गुणधारणाच्चैतदग्नेर्धारणमुच्यते । अग्नेर्गुणान् कीर्तयन्त्य तेषामपि स्मरण लोक कुर्वन्तीत्यर्थ. । धनयन् धन धान्ये पठित । इह तु सामर्थ्यात् प्रीणनार्थ । धिनोतेर्वा प्रीणनार्थस्येद रूपम् । प्रीणयन्ति च अस्य[4] अग्ने धीतिम् अपठितमपि प्रज्ञानामैतत् । प्रज्ञाम् मनश्चास्याग्ने प्रीणयन्तीत्यर्थ । आत् इत् इति पदपूरणौ । कीदृश्यश्चास्य[5] स्तुतय[6] । अर्य अरि ईश्वर उच्यत । ईश्वरा । अप्रतिहताग्निगुणप्रकाशनसामर्थ्या इत्यर्थ । दिधिष्व सर्वेषामग्निगुणाना धारयित्र्य । सर्वैरग्निगुणैर्युक्ता इत्यर्थ । विभृत्रा निभृता[7] । अत्यन्तविभिन्नरूपा इत्यर्थ । प्रीणयित्रा चाग्नेर्मन अतृष्यन्ती तृषाऽत्र कारणभूत श्रमो लक्ष्यते । अश्राम्यन्त्य इत्यर्थ । अपस । कर्मनामैतत् ( द्र निघ २,१ ) साहचर्यात् स्तुतिषु प्रयुक्तम् । आहुत्यादिकर्मसहचरिता । सदाहुत्यादिभिरित्यर्थ । अच्छ[8] यन्ति गच्छन्ति आप्तुमन्यानपि देवान् । जन्म । जननात् जन्म भूत जातमुच्यते कृत्स्न भूतजातम् । प्रयसा वृष्टिद्वारेणान्नेन वर्धयन्ती ॥ ३ ॥

१. 'त्मानम् इत्म् वि' अ'. २ मार्गे मूको. ३ अप कृ' मूको ४ तस्य मूको ५ कृदृश्य मूको
६. नास्ति कृ. ७. विभृता अ. ८. नास्ति मूको.

वेङ्कट० धारयन्ति[1] अग्निं पूरयन्ति[2] च अस्य कर्म । अनन्तरमेवाग्निं उदारं धारयति[3] विभूना । ता प्रजा अग्निप्रसादेन पूर्णकामा कर्माणि अभिगच्छन्ति देवान्[4] जायमाने[5] हविषा वर्द्धयन्त्य[6] ॥ ३ ॥

मुद्गल० ऋतम् उदयच्छन्दश माहसमग्निमङ्गिरसो महर्षय दधन् गार्हपत्यादिरूपेणाऽधारयन् । धारयित्वा च अस्य अग्ने धीतिम् कर्म अग्निहोत्रादिलक्षणम् धनयन् धनमकुर्वन् । यथा पुरुषा धनं सम्पादयन्ति तद्वदग्निदेवस्य[7] कर्म अन्वतिष्ठन्नित्यर्थः । आत् इत् अङ्गिरसामनुष्ठानानन्तरमेव अर्यः अर्याः धनस्वामिन्य दिधिष्व तत्र धनेन दिधिष्वोऽग्नेर्धारणं कुर्वत्य । कृताग्न्याधाना इत्यर्थः[8] । विभृत्ना आहिताग्नीन् अग्निहोत्रादिकर्मणि विहरन्त्य, अतृप्यन्ती विषयान्तरतृष्णारहिता अत एव अपस अपसा कर्मणा युक्ता । एवम्भूता यजमानलक्षणा प्रजा प्रयसा हविर्लक्षणनान्नेन देवान् इन्द्रादीन् जन्म जातान् मनुष्यांश्च वर्धयन्ती वर्धयन्त्य सत्य[9] एनमग्निम् अच्छ आभिमुख्येन यन्ति प्राप्नुवन्ति परिचरन्तीति[10] यावत् ॥ ३ ॥

मथीद् यदीं विभृंतो मातरिश्वां गृहेगृहे श्येतो जेन्यो भूत् ।
आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं१॒ भृग॑वाणो विवाय ॥ ४ ॥

मथीत् । यत् । ईम् । विऽभृत । मातरिश्वा । गृहेऽगृह । श्येत । जेन्य । भूत् ।
आत् । ईम् । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यम् । भृगवाण । विवाय ॥ ४ ॥

स्कन्द० अत्रेतिहासमाचक्षते— सर्वमिदमन्धं तम आसीत् । अथ मातरिश्वाऽऽकाशे सूक्ष्ममग्निमपश्यत् । तममथात् । मथित्वा चाऽऽनयत् इति । तदेतदुच्यते । मथीत् मथितवान् यत् यदा ईम् एनमग्निं मातरिश्वा मथित्वा चाऽऽनयत् । कुत एतत्— आ दूतो अग्निमभरद्विवस्वत' (ऋ ६,८,४) इति मन्त्रान्तरे दर्शनात् । यदति वचनात् तत प्रभृतीत्यध्याहार्यम् । तत प्रभृति विभृत[11] विहृत गृहेगृहे श्येत श्वेतवर्णोऽग्नि जन्य जेता तमसां शत्रूणां वा भूत् अभवत् । तत एव च प्रभृति आत् ईम् राज्ञे न सहीयसे आत् ईम् इति पदपूरणौ । यथा कश्चित् राज्ञो बलवतोऽमात्य सर्वाभिप्रेतार्थसिद्धिं कुर्वन् दौत्यं गच्छेदेवम् सचा सह । केन । स्तैर्भा नृभि । कुत एतत् । 'अग्ने पूर्वे भ्रातरो अर्थमेतम्' (ऋ १०,५१,६) इत्यादिषु भ्रातृणामप्यग्ने दूत्यस्य[11] दर्शनात् । प्रशस्तोऽग्नि दूत्यम् दूतकर्म भृगवाण भ्रस्ज पाक इत्यस्य रूप प्रथमान्त पठ्यन्त वा । हविषा पक्ता पचतो यजमानस्य हवींषि वा आ विवाय आगमत् । तत एव प्रभृति यजमानाना दूतकर्मापि करोति स्तोत्यर्थ[12] ॥ ४ ॥

वेङ्कट० बलेनाजहार यदा एनं धारक मातरिश्वा द्युलोकात् । यदा च श्वेतवर्ण जाताऽग्नि[13] अनुगृहम्[14] अभवत् । अनन्तरमेव एनम् राज्ञ इव बलवते सखा[15] सन् आ विवाय । वेतिर्गतिकर्मा (तु निघ २,१४) आनयन् दूत्यम् भृगवाण द सचाणो वायुर्नूत्न[16] चाकराद् इति[17] ॥ ४ ॥

---

१ °यति वि[1] ल कु   २ °यति ल कु   ३ °यन्ति वि[1]   ४ देवं वि[1]   ५ जायमानेन वि[1] भ[1]
६ वर्धय° कु, वर्धयत वि[1] भ[1]   ७ °देवार्थं मे[1]   ८-८ कुर्वं भस्यर्थं मूको   ९ नास्ति मे[1]   १० °चरन्ति मूको   ११ नास्ति भ   १२ दूतस्य भ   १३ °ग्नि वि[1] लपं   १४ °मेरे वि[1] भ[1],   १५, प वि[1] भ[1]   १६ दीप्तनो वायु दूर्यं कु   १७ नास्ति कु

मुद्गल० मातरिश्वा व्यानवृत्तिरूपेणावस्थितो मुख्यप्राण ईम् एनमग्निम् यत् यदा मथीत् अमथात्। अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम् । तदा मातरिश्वा विभृत प्राणिषु प्राणापानादिपञ्चवृत्तिरूपेणावस्थितो[1] विभज्य स्थित । मन्थनेनोत्पन्नोऽयमग्नि. श्वेत शुभ्रवर्णो भूत्वा गृहेगृहे सर्वस्मिन् यज्ञगृहे यदा जेन्य प्रादुर्भूत भूत् अभूत्। आत् यज्ञगृहे प्रादुर्भावानन्तरम् ईम् एनमग्निम् भृगवाण भृगुर्ऋषिरपि स इवाचरन् 'यजमान दूत्यम् दूतस्य कर्म आ विवाय शास्त्रमर्यादया प्रापयामास। दृष्टान्त । सचा सन्[2] सखा भवन्नन्यो राजा सहीयसे अभिभवित्रे प्रबलाय राज्ञे न । यथा राज्ञे स्वपुरुष दूतकर्म प्रापयति तद्वत् ॥ ४ ॥

म॒हे यत् पि॒त्र ईं॒ रसं॑ दि॒वे करव॑ त्सरत् पृश॒न्य॑श्चिकि॒त्वान् ।
सृ॒जदस्ता॑ धृष॒ता दि॒द्युम॑स्मै॒ स्वायां॑ दे॒वो दु॑हि॒तरि॒ त्विषिं॑ धात् ॥ ५ ॥

म॒हे । यत् । पि॒त्रे । ई॒म् । रस॑म् । दि॒वे । क॒ । अव॑ । त्स॒रत् । पृ॒श॒न्य॑ । चि॒कि॒त्वान् ।
सृ॒जत् । अस्ता॑ । धृ॒ष॒ता । दि॒द्युम् । अ॒स्मै॒ । स्वाया॑म् । दे॒व । दु॒हि॒तरि॑ । त्विषि॑म् । धा॒त् ॥ ५ ॥

स्कन्द० 'महे यत् महते' यदा सर्वलोकस्य पितृभूताय रसम्। अन्ननामैतत् (द्र निघ २,७)। हविर्लक्षणमन्नम् दिवे क करोति अग्नि । द्युलोकेन चात्राधारेणाधेयास्तन्निवासिनो देवा लक्ष्यन्ते। मञ्चा क्रोशन्तीति यथा। महति सर्वलोकस्य पितृभूते लोके निवसता देवानामर्थाय यदा हविरग्नि. करोतीत्यर्थ । कृत्वा च[3] अव त्सरत् त्सरतिर्गतिकर्मा (द्र निघ २,१४)। हविर्गृहीत्वा गच्छति। पृशन्य 'ता अस्य पृशनायुव' (ऋ १,८४,११) इति प्रयोगदर्शनात् पृशना शब्दोऽमृतस्वरूपरसवचन[4]। तत्र साधु पृशन्य । अमृतरसरूपाणामपि हविषाम् अमृतरूपरसकारीत्यर्थ । चिकित्वान् ज्ञातवान् स्वमधिकार यष्टृणा वा भक्तताम्। यदेति वचनात् तदेत्यध्याहार्यम्। तदा सृजत् सृजति। क्षिपतीत्यर्थ । अस्ता क्षेपणशील इन्द्र. । धृषता प्रगल्भमनसा। निशङ्कमित्यर्थ । दिद्युम् वज्रम् अस्मै अग्नेरयमन्वादेश । अस्याग्नेरर्थाय। ये रक्षआदयोऽग्नेर्हविःपरिपन्थिन तान् हन्तुमित्यर्थ । तदैव च स्वायाम् देव इन्द्र दुहितरि वृष्ट्या सस्यरूपेण जन्यमानत्वाद् दुहिता क्षितिरत्राभिप्रेता तस्या त्विषिम्[5] सस्यसम्पत्तिलक्षणा दीप्तिम् धात्[6] दधाति । यस्मिन् संवत्सरेऽग्निर्देवानामर्थाय हवींषि करोति, तस्मिन्नेवेन्द्रोऽपि सस्यसंपत्ति करोति, नान्यत्रेत्यर्थ. । अथवा जन्यमानत्वाद् दुहिता स्तुतिरत्राभिप्रेता। स्वस्या स्तुतौ देवोऽग्निरोजस्वित्वलक्षणा दीप्तिम् आधत्ते। यया स्तुत्या होतृत्वेनावस्थित इत्य स्तौति तामोजस्विनी करोतीत्यर्थ ॥ ॥

वेङ्कट० महते पित्रे द्युलोकाय देवेभ्य यदा हविर्लक्षणमन्नम् रसम् अग्नि करोति तदा[7] गच्छन्तम् पुन[8] दृष्ट्वा इति परिमोक्षणाय[9] स्पर्शने साधुर्दस्युर्जानन् गच्छन्तम् अग्निम्[9] अवत्सरति[10] मार्गात्पार्श्वं कुटिलमपगच्छति[11]। स दृष्ट्वा अग्नि च तस्मै धृष्टेन मनसा वज्र सृजति अस्तशील । सोऽयम् स्वायाम् दुहितरि उषसि दीप्तिं दधाति ॥ ५ ॥

---

१. 'पञ्चरूपेण' मूको २-२. नास्ति भ[२]. ३-३ नास्ति भ ४. नास्ति भ ५ 'लक्ष' मूको ६ अनाद भ कु; दधाद वि ७. तदानीम् वि[१] भ[१] ८. नास्ति वि[१] भ[१]. ९ 'मवत्स वि[१] भ[१]. १०. मपधावति वि[१] भ[१]. ११. 'गच्छ' मूको.

मुद्गल० मह्ने महते पित्रे पालयित्रे दिवे द्योतमानाय देवगणाय ईम् इमम् रसम् पृथिव्याः सारभूतं हविः यत् यदा यजमानः कः करोति तदानीम् पृशन्यः स्पर्शनकुशलो राक्षसादिः चिकित्वान् हवींषि वहन्तं हे अग्ने! त्वां जानन् अव त्सरत् त्वद्भयात् पलायते। अस्ता इषुक्षेपणशीलोऽग्निः धृषता धर्षकेण धनुषा अस्मै पलायमानाय राक्षसाद्ये दिद्युम् दीप्यमानं बाणम् सृजत् विसृजति। देवः दीप्यमानः उषःकाले प्राप्तोऽग्निः स्वायाम् स्वकीयायाम् दुहितरि दुहितृवत् समनन्तराभाविन्यामुषसि त्विषिम् स्वकीयां दीप्तिम् धात् स्थापयति। उषःकाले हि सूर्यकिरणाः प्रादुर्भवन्ति, तैः स्वकीयं प्रकाशमेकीकरोति ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः ॥

## स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।
## वर्धो अग्ने वयो अस्य द्विबर्हा यासद् राया सरथं यं जुनासि ॥ ६ ॥

स्वे। आ। यः। तुभ्यंम्। दमे। आ। विऽभाति। नमः। वा। दाशात्। उशतः। अनु। द्यून्। वर्धो इति। अग्ने। वयः। अस्य। द्विऽबर्हाः। यासत्। राया। सऽरथम्। यम्। जुनासि ॥ ६ ॥

स्कन्द० आकारोऽत्र मर्यादायाम्। तुभ्यम् इत्यपि द्वितीयार्थे चतुर्थी। यः त्वाम् 'स्वे दमे गृहे' मर्यादया आ विभाति भा दीप्तौ। अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। आदीपयति। नमः वा दाशात् अन्नं वा हविर्लक्षणं ददाति। उशतः उशते कामयमानाय तुभ्यम् अनु द्यून् अनु अत्र वीप्सायां कर्मप्रवचनीयः। 'द्युः' (निघ १,९) इत्यहर्नाम। दिवसं दिवसमनु। प्रतिदिवसमित्यर्थः। वर्धो वर्ध उ वर्धो। वृधिश्चात्रान्तर्णीतण्यर्थो द्रष्टव्यः। उकारस्तु पदपूरणः। वर्धय हे अग्ने! वयः अन्नम् अस्य द्विबर्हाः वृहिर्वृद्ध्यर्थः। हविर्नयनद्वारेण द्वयोरपि देवमनुष्यलोकयोर्वर्धयिता। प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्यानामन्त्रितमेतत्[1]। अतो 'यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया[1]। यस्त्वं द्विबर्हाः अग्ने! स[2] त्वं वर्धय वयः अस्येति। किञ्च यासत् लिङर्थे लेट्। मध्यमपुरुषस्य स्थाने च प्रथमपुरुषः। यायास्त्वम् राया धनेन सह। केन। रथेन। कं प्रति। उच्यते। यम् स्तोतारं यष्टारं प्रति जुनासि जुनातिर्गतिकर्मा। गच्छसि। तस्मै दातुम्। यस्मिन्नेव रथे स्वयमारोहसि[3] धनान्यपि तत्रैवारोप्य गच्छेरित्यर्थः ॥ ६ ॥

वेङ्कट० स्वे गृहे यः त्वां काष्ठैः प्रज्वलयति, यो वा अन्नम् उशतः कामयमानस्य तव ददाति दिवसेषु। वर्धय अग्ने! अन्नम्[4] अस्य द्वयोः 'स्थानयोर्मध्यमोत्तमयोः परिवृढः[5]'†। यम्[6] त्वम् अग्ने! रथसहितं युद्धे प्रेरयसि, स[7] धनेन सह युद्धात् आगच्छतीति[8] ॥ ६ ॥

मुद्गल० हे अग्ने! तुभ्यम् त्वाम् स्वे दमे स्वकीये यज्ञगृहे यः यजमानः। एक आकारो मर्यादायाम्। यथाशास्त्रम् आ विभाति आ समन्तात् समिदादिभिः काष्ठैः प्रज्वलयति। अनु द्यून् अनुदिवसम् उशतः कामयमानाय तुभ्यम् नमः वा दाशात् हविर्लक्षणमन्नं वा दद्यात्। अस्य यजमानस्य

1-1. नास्ति भ. 2. मन्त्रस्य भ. 3-3. °ध्याहृत्य नेयं भ, °त्य नेयं वि. 4. नास्ति मूको. 5. स्वमारो° मूको. 6. अन्नम् वि[2] अ[2] ल. 7-7. °मयोऽपरि° कु. † °वृद्धो वि[2]; °वृढो वि[3]. 8. यः अ[2] कु ल; नास्ति वि[2]. 9. °च्छति कु.

हे अग्ने! द्विबर्हाः द्वयोर्मध्यमोत्तमस्थानयोर्वृद्धितो वर्धितस्त्वम् वयः अन्नम् वर्धो वर्धयैव। सरथम् रथेन सहितं युयुत्सुम् यम् पुरुषम् जुनासि युद्धे प्रेरयसि स पुरुषः राया धनेन यासत् सङ्गच्छते ॥ ६ ॥

अ॒ग्निं विश्वा॑ अ॒भि पृक्षः॑ सचन्ते समु॒द्रं न स्र॒वतः॑ स॒प्त य॒ह्वीः ।
न जा॒मिभि॒र्वि चि॑किते॒ वयो॑ नो वि॒दा दे॒वेषु॒ प्रम॑तिं चिकि॒त्वान् ॥ ७ ॥

अ॒ग्निम् । विश्वाः॑ । अ॒भि । पृक्षः॑ । स॒च॒न्ते॒ । स॒मु॒द्रम् । न । स्र॒वतः॑ । स॒प्त । य॒ह्वीः ।
न । जा॒मिऽभिः॑ । वि । चि॒कि॒ते॒ । वयः॑ । नः॒ । वि॒दाः । दे॒वेषु॑ । प्रऽम॑तिम् । चि॒कि॒त्वान् ॥ ७ ॥

स्कन्द० अग्निम् त्वाम् विश्वाः सर्वाः पृक्षः सर्वाण्यन्यदेवत्यान्यपि[1] हविर्लक्षणानि अन्नानि अभि सचन्ते सचतिर्गतिकर्मा ( तु. निघ २,१४ )। हूयमानान्यभिगच्छन्ति । कथम् । समुद्रम् न स्रवतः व्यत्ययेनात्र पुँल्लिङ्गता । समुद्रमिव स्रवन्त्यो नद्यः । सप्त गङ्गाद्याः । यह्वीः महत्यः । किञ्च न जामिभिः सजातीयैः वि चिकिते विज्ञायते वयः अन्नम्[2] न, अस्माकम् । अल्पत्वादप्रख्यातमन्नमस्माकम्, तत् बहु ददत् प्रख्यातं कुर्वित्यर्थः । किञ्च विदाः विद्धि जानीहि । ज्ञापयेत्यर्थः । देवेषु निर्धारण एषा सप्तमी । देवानां मध्ये । प्रमतिम् मन्यतिरर्चतिकर्मा ( तु निघ ३,१४ ) । प्रकृष्टां स्तुतिम् । चिकित्वान् शत्रर्थे क्वसुः । जानन् अस्मत्प्रभृतीनां भक्तताम् ॥ ७ ॥

वेङ्कट० अग्निम् विश्वानि हवींषि अभि सचन्ते समुद्रम् इव महत्यः सप्त नद्यः। न बन्धुभिः[1] विज्ञायते अन्नमल्पत्वात् अस्माकम्। तथा सति अग्ने! प्रज्ञापय देवेषु अस्माकं बह्वर्थाभिलाषिणीं बुद्धिं[2] जानन्निति[3] ॥ ७ ॥

मुद्गल० विश्वाः पृक्षः चरुपुरोडाशादीनि सर्वाण्यन्नानि अग्निम् अङ्गनादिगुणयुक्तम्[4] एनम् अभि सचन्ते आभिमुख्येन समवयन्ति प्राप्नुवन्ति । दृष्टान्तः । स्रवतः समुद्रम् न यथा स्रवन्त्यो नद्यः समुद्रमभिगच्छन्ति तद्वत् । कीदृशो नद्यः । सप्त सप्तसङ्ख्याकाः 'इमं मे गङ्गे' ( ऋ १०,७५,५ ) इत्यादयः । यह्वीः महत्यः । जामिभिः जमन्ति एकस्मिन् पात्रे सह भुञ्जत इति जामयो देवास्तैः नः अस्मदीयम् वयः अन्नम् न वि चिकिते न ज्ञायते । तेभ्यो दातुमस्माकमन्नं प्रभूतं नास्तीति भावः । अतो हे अग्ने! त्वम् देवेषु धनपतिषु प्रमतिम् प्रकर्षेण मननीयं धनम् चिकित्वान् अवगच्छन् विदाः अस्मभ्यं लम्भय ॥ ७ ॥

आ यदि॒षे नृ॒पतिं॒ तेज॒ आन॒ट् छुचि॒ रेतो॒ निषि॑क्तं॒ द्यौर॒भीके॑ ।
अ॒ग्निः शर्ध॑मनव॒द्यं युवा॑नं स्वा॒ध्यं॑ जनयत् सू॒दय॑च्च ॥ ८ ॥

आ । यत् । इ॒षे । नृ॒ऽपति॑म् । तेजः॑ । आन॑ट् । शुचि॑ । रेतः॑ । निऽसि॑क्तम् । द्यौः । अ॒भीके॑ ।
अ॒ग्निः । शर्ध॑म् । अ॒न॒व॒द्यम् । युवा॑नम् । सु॒ऽआ॒ध्य॑म् । ज॒न॒य॒त् । सू॒दय॑त् । च॒ ॥ ८ ॥

---

1. °देवत्य° कु. 2. नास्ति अ. 3. बुद्धिभिः कु. 4. ,,दिवम् वि°. 5 अन्न कु. 6. मद्रा° मूको.

स्कन्द० यत् इति व्यत्ययेन नपुंसकता । यम् इषे हविर्लक्षणायान्नाय नृपतिम् मनुष्याणां स्वामिनम् तेजः दीप्तिलक्षणम् आ आनट् मर्यादया व्याप्नोति । यो हविरर्थं मर्यादया दीप्यत इत्यर्थः । यच्छब्दात्तच्छब्दोऽध्याहार्यः । स शुचि रेत उदकम् । कतमत् । उच्यते । निषिक्तम् द्यौ अभीके द्यौरिति षष्ठ्यर्थे प्रथमा । 'अभीके' ( निघ ३,२९ ) इत्यासन्ननाम । यदादित्यरश्मिभिराहृत्य दिवः समीपे निषिक्तं स्थापितम् । आगामिवृष्टिलक्षणमित्यर्थः । न च तदेव केवलम् । किं तर्हि । अग्निं शर्धम् बलमुत्साहं वा । कीदृशम् । अनवद्यम् अगर्ह्यम् । युवानम् तरुणञ्च पुत्रम् । स्वाध्यम् कल्याणचित्तम् । जनयत् जनयत्वस्माकम् । सूदयत् च सूदयतिरत्र सत्कारार्थः । सत्करोतु च ॥ ८ ॥

वेङ्कट० आभिमुख्येन अश्नोति यत् तेन 'नृपतिम् अन्नाय अन्नं जेतुम् । तादृशम्' शुचि रेत मया स्त्रीषु[2] निषिक्तम्[1] निषिञ्चतश्च मम द्योतमानोऽग्निः समीप आसीत् । अथ अग्निं वेगवन्तम् अवद्यरहितं तरुणं सुकर्माणं पुत्रं जनयतु, सूदयतु च शत्रून् तन्मुखेनेति[3] ॥ ८ ॥

मुद्गल० अग्ने यत् तेज नृपतिम् नृणामृत्विजां पालकं यजमानम् आ आनट् जाठररूपेण समन्तात् व्याप्नोति । किमर्थम् । इषे अन्नाय । कीदृशम् । शुचि शुद्धम् द्यौ दीप्तम् । तेन तेजसा परिपक्वमन्नरसरूपम् रेतः वीर्यम् अभीके अभ्यक्ते अभिगतेऽभिप्राप्ते गर्भस्थाने निषिक्तम् नितरां सिक्तम् अग्निं वक्ष्यमाणगुणविशिष्टपुत्ररूपेण जनयत् जनयतु । शर्धम् बलवन्तम् अनवद्यम् अवद्यरहितम् युवानम् तरुणम् । जरारहितमित्यर्थः । स्वाध्यम् शोभनकर्माणम् । उत्पन्नं पुत्रम् सूदयत् च यागादिकर्मसु प्रेरयतु च[4] ॥ ८ ॥

मनो॒ न योऽध्व॑नः स॒द्य एत्येकः॑ स॒त्रा सूरो॒ वस्व॑ ई॒शे ।
राजा॑ना मि॒त्रावरु॑णा सुपा॒णी गोषु॑ प्रि॒यम॒मृतं॒ रक्ष॑माणा ॥ ९ ॥

मनः॑ । न । यः । अध्व॑नः । स॒द्यः । एति॑ । एकः॑ । स॒त्रा । सूरः॑ । वस्वः॑ । ई॒शे ।
राजा॑ना । मि॒त्रावरु॑णा । सु॒पा॒णी इति॑ सु॒ऽपा॒णी । गोषु॑ । प्रि॒यम् । अ॒मृत॑म् । रक्ष॑माणा ॥ ९ ॥

स्कन्द० मन इव यः अग्निः अध्वनः देवलोकमार्गान् सद्यः एति, शीघ्रं गच्छतीत्यर्थः । एकः च सत्रा सदा सूरः सूर्यसदृशः वस्वः धनस्य ईशे ईष्टे । यच्छब्दात् तच्छब्दोऽध्याहार्यः । स राजाना दीप्तौ मित्रावरुणा सुपाणी गोषु सर्वलोकप्रियं पयआख्यम् अमृतम् वृष्टिद्वारेण रक्षमाणा साकाङ्क्षत्वादस्मदर्थं यजत्विति वाक्यशेषः । प्रदर्शनार्थञ्चात्र मित्रावरुणयोर्ग्रहणम् । सर्वदेवता यजत्वित्यर्थः ॥ ९ ॥

वेङ्कट० शीघ्रगमनः इव यः विस्यान् मार्गान् शीघ्रं गच्छति स एकः स्वयमेव 'सूर्यः धनस्य सत्यम्' ईश्वरो भवति । तथा राजानौ मित्रावरुणौ सुपाणी गोषु प्रियम् पयः रक्षमाणौ भवतः प्रीणितावग्निनेति[7] ॥ ९ ॥

---

1-1. त्रुटितम् वि[3]  २ नास्ति कु  ३ °णीक च वि[1,2] अ[1] कु ल ल[2]प  ४ °स्तेन कु
५ च म। पूरण मूको  ६-६ सूर्यसदृशो धनस्य सर्वदाम् वि[1] अ[1]  ७ प्रणीतावग्नि° वि[1] अ[1], °ग्निना कु

मुद्गल० य सूर सूर्य एक एकाकी असहाय सन् अध्वन दिव्यान् मार्गान् सद्य एति आशु गच्छति। दृष्टान्त। मन न यथा मन शीघ्र गच्छति तद्वत्। स च सूर वस्व धनस्य सत्रा सदैव युगपदेव ईश ईष्टे। यो हि शीघ्र गच्छति स बहुदेशेष्ववस्थितानि धनानि प्राप्नोति। तथा राजाना राजमानौ सुपाणी शोभनबाहू मित्रावरुणा मित्रावरुणौ अस्मदीयासु गोषु प्रियम् सर्वेषा प्रीतिकरम् अमृतम् अमृतवत् स्वादुभूत पय रक्षमाणा रक्षन्तौ वर्तेते। हे अग्ने! तत्तद्रूपेण त्वमेव वर्तस इति भाव ॥ ९ ॥

मा नो॑ अग्ने स॒ख्या पित्र्या॑णि॒ प्र म॑र्षिष्ठा अ॒भि वि॒दुष्क॒विः सन् ।
नभो॒ न रू॒पं ज॑रि॒मा मि॑नाति पु॒रा त॒स्या अ॑भि॒श॑स्ते॒रधी॑हि ॥ १० ॥

मा । नः॒ । अ॒ग्ने॒ । स॒ख्या । पित्र्या॑णि । प्र । म॒र्षि॒ष्ठाः॒ । अ॒भि । वि॒दुः । क॒विः । सन् ।
नभः॑ । न । रू॒पम् । ज॒रि॒मा । मि॒ना॒ति॒ । पु॒रा । त॒स्याः । अ॒भि॒ऽश॑स्तेः । अधि॑ । इ॒हि॒ ॥ १० ॥

स्कन्द० [1]मा शब्द प्र मर्षिष्ठा इत्येतेन सम्बन्धयितव्य। [न अस्माक] हे अग्ने! सख्या पित्र्याणि पितुरागतानि। पितुरारभ्य प्रवृत्तानीत्यर्थ। मा प्र मर्षिष्ठा अभि मृषिरत्र सामर्थ्याद् विस्मरणार्थे[1]। अभिशब्दोऽत्र धात्वर्थानुवादी, रम्भते प्रक्रम्यत इति यथा। मा विस्मार्षी। अथवा मृषेरिद रूपम्। मा प्रमार्षी। मापनैषीरित्यर्थ। विदु वेदिता अस्मद्भक्ततायाः। कवि मधावी च[2] सन्। किम् अप्रमृष्यन् करवाणि। उच्यते। नभ न आदित्य इव तमासि रूपम् अस्माकम् जरिमा जरत्वम् मिनाति हिनस्ति। एतत् ज्ञात्वा पुरा तस्या जराया अभिशस्ते हिंसात अधि इहि अधिगच्छ प्राप्नुहि अस्मान्। यावत् सर्वरूपापहारिण्या[3] जरया न हिंस्यामहे तावत् प्राप्यास्माञ्जरातो रक्षेत्यर्थ ॥ १० ॥

वेङ्कट० मा अस्माकम् अग्ने! सख्यानि वसिष्ठमुपक्रम्यागतानि अभिप्रमार्षी। वेत्ता क्रान्त[4] सन्। आदित्य इव कालात्मा रूपम् जरिमा हिनस्ति[5]। पुरा तस्मादुपद्रवादस्मान् रक्षितुमधिगच्छ[6] ॥ १० ॥

मुद्गल० हे अग्ने! पित्र्याणि पितर वसिष्ठम्[7] उपक्रम्यागतानि न [8]सख्या अस्मत्सखित्वानि[8] मा प्र मर्षिष्ठा मा विनाशय। यतस्त्वम् कवि क्रान्तदर्शी सन् अभि आभिमुख्येन विदु सर्वं विद्वान्। नभ न रूपम् यथान्तरिक्ष रूपवन्त सूर्यरश्मय [10]आच्छादयन्ति तद्वत्[10] नाशका जरा मिनाति मा सूनृद्धदार हिनस्ति। अभिशस्ते हिंसाहेतो तस्या जराया पुरा अधोहि मां बुध्यस्व। सा यथा न प्राप्नोति तथा कुरु। अमृतत्व प्रयच्छेति यावत् ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये षोडशो वर्ग ॥

---

१ नास्ति मूको. २-२ नास्ति वि. [ ] नास्ति भ ३ मा वि; व भ ४ सर्वरूपा° भ दु. ५ क्रान्त वि° भ° कु स खर ६ प हिन° मूको ७. °पति वि° भ°° ८. विटद् मूको ९-९ अस्मद् सखी भवि° मूको १०-१० तद्वदाच्छादयति मूको

[ ७२ ]

नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद् रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ १ ॥

नि । काव्या । वेधसः । शश्वतः । कः । हस्ते । दधानः । नर्या । पुरूणि ।
अग्निः । भुवत् । रयिऽपतिः । रयीणाम् । सत्रा । चक्राणः । अमृतानि । विश्वा ॥ १ ॥

स्कन्द० काव्या। कविर्मेधाव्यग्निः, तस्य कर्माणि हविर्नयनादीनि काव्यानि। वेधसः मेधाविनः। शश्वतः बहुनामैतत् (द्र० निघ ३,१)। षष्ठी[1] यजमानस्य नि कः नियमेन करोत्यग्निः[2]। हस्ते दधानः दधत्[3]। अवहेलनैवेत्यर्थः। किम्। उच्यते। नर्या नरेषु भवानि नृभ्यो वा हितानि यज्ञफलानि। पुरूणि बहूनि। किञ्च अग्निः भुवत् भवति[4]रयिपतिः यद्यपि[5] रयीणां पतिः रयिपतिः इत्येवमन्वाख्यायते[6], तथापि प्रवीणशब्दादिवत् स्वामिमात्रवचन इह द्रष्टव्यः। स्वामी। कस्य। रयीणाम् हविर्लक्षणानां सर्वेषां वा[7] यजमानधनानाम्। कस्मात्[8]। उच्यते। सत्रा चक्राणः 'सत्रा' (निघ ३,१०) इति सत्यनाम। सदाशब्दपर्यायो वा। चक्राण इति शानजर्थेऽयं कानच् द्रष्टव्यः। शानच्यव[9] वा छान्दसत्वात् श्लुः[9]। हेतुश्चात्र शानजर्थः। 'शयाना वर्धते दूर्वा' (पाम ३,२,१२६) इति यथा। यस्मात् सत्यानि सदा वा करोतीत्यर्थः। कानि। उच्यते। अमृतानि नित्यानि हविर्नयनादीनि। विश्वा सर्वाणि। यद्धविर्नयनादीनि सर्वाणि करोति तस्माद्धविषां यजमानधनानां स्वामी भवतीत्यर्थः[10] ॥ १ ॥

वेङ्कट० अभिमुखानि करोति[11] स्तोतुः षष्ठी[12] स्तोत्राणि हस्ते प्रयच्छन् गृहीतानि बहूनि धनानि अग्निः। अभवत् रयिपतिः सत्यमेव कुर्वाणः भवानि सर्वाणि पृथूनि वा कुर्वन्निति[13] ॥ १ ॥

मुद्गल० 'नि काव्या' इति द्वासप्ततितमं सूक्तम्। पराशर ऋषिः। अनुष्टुप् छन्दः। अग्निर्देवता ॥

शश्वतः शाश्वतस्य नित्यस्य वेधसः धातुर्ब्रह्मणः सम्बन्धीनि काव्या काव्यानि मन्त्ररूपाणि स्तोत्राणि अयम् अग्निः नि कः नियमेन स्वात्माभिमुखं करोति। किं कुर्वन्। नर्या नृभ्यो हितानि पुरूणि बहुधनानि हस्ते दधानः धारयन्। ईदृग्भूतमग्निमवलोक्य सर्वे जनाः स्तुवन्तीति भावः। स्तोतृभ्यो धनेषु दत्तेष्वप्यग्नेर्धनं न क्षीयत इत्याह—अयम् अग्निः रयीणाम् रयिपतिः भुवत् धनानां मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति। किं कुर्वन्। विश्वा सर्वाणि तानि हिरण्यानि स्तोतृभ्यः सत्रा सहैव चक्राणः कुर्वन्। युगपत्प्रयच्छन्नित्यर्थः ॥ १ ॥

अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥ २ ॥

---

१ नास्ति भ २ करोति भ ३ दधत् कु वि ४-४ नास्ति मूको ५ इत्यन्वा° वि
६ नास्ति कु ७ यस्माद् वि ८ कानच्यव मूको ९-९ °त्वात् भ, °त्वाद् कु, °त्वात् श्लु वि
१० भवतीत्य° मूको ११ °रोतु वि[1] भ[2] १२ षष्ठिवम् ल १३ नाकुर्वन्निति वि[2] ल लपं, नाकुर्वन्नि वि[1], नास्ति कु

अस्मे इति । वत्सम् । परि । सन्तम् । न । विन्दन् । इच्छन्त । विश्वे । अमृताः । अमूराः ।
श्रमऽयुवः । पदऽव्यः । धियम्ऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ॥२॥

स्कन्द० अस्मे इति तादर्थ्ये चतुर्थी । अस्मदर्थम् । अस्माकं हविर्नयनार्थम् इत्यर्थः । वत्सम् परि सन्तम् न नशब्दोऽयमुपमार्थीयो व्यवहितेनापि वत्समित्यनेन सम्बन्धयितव्यः । वत्समिव सर्वतो भवन्तम् । हविर्वहनभयेन इतश्चेतश्च वत्समिव नश्यन्तमित्यर्थः । विन्दन् लब्धवन्तः । सौचीकमग्निम् इच्छन्त कामयमानाः । विश्वे सर्वे । अमृताः मरणवर्जिता देवाः । अमूराः अमूढचेतसः । श्रमयुवः युशब्दोऽत्र मत्वर्थे । 'अश्वयुर्गव्यू रथयुः' (ऋ १,५१,१४) इति यथा । श्रमवन्तः । अग्न्यन्वेषणाद् उपजातश्रमाः सन्त इत्यर्थः । पदव्यः पदशब्देनात्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मोच्यते । वेतिरपि[1] पश्यतिकर्मा । 'पदं देवस्य नमसा व्यन्तः' (ऋ ६,१,४) इति यथा । कारणात्मनो ज्ञातार इत्यर्थः । धियंधाः स्वस्य कर्मणो धारयितारः । कर्मणामस्य कार इत्यर्थः । कस्मादविन्दन् । उच्यते । यस्मात् तस्थुः पदे परमे चारु चारुणि । क्रियाविशेषणं वा चारुशब्दः । चारु तस्थुरिति । कस्य पदम् । उच्यते । अग्नेः । यस्माद्यतो यतो नष्टस्याग्नेः पदानि दृश्यन्ते ततस्ततोऽन्वैषन्तेत्यर्थः[3] । अथवा पदव्य इति पदशब्दस्यहोपादानात् तस्य च 'यना नः पूर्वे पितरः पदज्ञाः' (ऋ १,६२,२ ९,९७,३९) इत्यादिषु अङ्गिरस्सु प्रसिद्धत्वाद् विश्वे अमृता अमूरा इत्यादिभिरङ्गिरस उच्यन्ते, न देवाः । पितरो हि सौचीमग्निमनुसृत्य स्वं स्वं तनोऽस्मिन्न्यदधुरित्येतत्[4] सौचीकसूक्ते दर्शयिष्यामः । एतस्मिंश्च पक्षेऽग्निप्रसादादग्निसालोक्यं प्रत्यपद्यन्तेत्यर्थः[5] ॥ २ ॥

वेङ्कट० अस्माकम् 'वत्सम् अग्निं' परितः सन्तम् इच्छन्त विश्वे देवा अमूढाः [7]अपि न अविन्दन् । श्रमवन्त अग्नेः स्थानमन्वेषमाणाः[7] 'कर्मणो धातारः तस्थुः† पदे परमे चारुणि । यत्राग्निर्निलीनस्तत्र तस्थुर्निलीनं दृष्ट्वेति'[8] ॥ २ ॥

मुद्गल० अस्मे अस्माकम् वत्सम् वत्सवदत्यन्तं प्रियम् परि सन्तम् परितः सर्वत्र वर्तमानम् । देवेभ्यो निर्गत्याऽश्वत्थवणादिषु निलीनं सन्तमित्यर्थः । एवंविधमग्निम् इच्छन्त विश्वे अमृताः सर्वेऽमरणधर्माणो देवा अमूराः अमूढाः । मरुतश्च न विन्दन् तमग्निं नालभन्त । अलभमानाश्च ते श्रमयुवः हव्यवाहनस्याऽभावेन हविषामभावात्तज्जन्येन श्रमेण क्लेशेनैकीभूतास्तस्य अग्नेः अन्वेषणाय पदव्यः पादैर्गच्छन्तः धियंधाः धियामग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः । एवंविधाः सन्तः चारु चारुणि शोभने अग्नेः परमे उत्तमे अन्त्ये[9] पदे । यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः । तस्मिन् पदे तस्थुः स्थितवन्तः । बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ॥ २ ॥

तिस्रो यदग्ने शरदुस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।
नामानि चिद् दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ॥ ३ ॥

---

१ नास्ति अ. २ °व्यन्तप्येति° अ; व्यन्त वि. ३ °न्वैषते° मूको. ४ °दिम अद° अ. ५ प्रतिपद्यन्ते मूको. ६-६ वत्समिवसर्वतमपि वि अ. ७-७ नास्ति वि अ. ८-८ नास्ति वि. † °स्थु भव वि अ. ९ अन्ते मूको.

ति॒स्रः । यत् । अ॒ग्ने॒ । श॒रदः॑ । त्वाम् । इत् । शु॒चिम् । घृ॒तेन॑ । शुच॑यः । स॒प॒र्यान् ।
नामा॑नि । चि॒त् । द॒धि॒रे॒ । य॒ज्ञिया॑नि । अस॑ूदयन्त । त॒न्व॑ः । सुऽजा॑ताः ॥ ३ ॥

स्कन्द० यत् इति प्रथमाबहुवचनान्तं द्रष्टव्यम्। ये हे अग्ने! तिस्रः शरदः त्रीणि वर्षाणि। त्वाम् इत् त्वामेव शुचिम् दीप्तम् घृतेन आज्येन शुचयः शुद्धात्मानः सपर्यान् परिचरन्ति। यजन्त इत्यर्थः। ये च नामानि चित् दधिरे नामान्यपि धारयन्ति। दारिद्र्याद् यष्टुमशक्नुवन्तः[1] भक्त्या नामान्येव केवलानि तव कीर्तयन्तीत्यर्थः। कीदृशानि। यज्ञियानि यज्ञसम्पादीनि[2]। यच्छब्दात्तच्छब्दोऽध्याहार्यः[3]। ते सर्वे असूदयन्त सूदयतिः संस्कारार्थः। विदैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति आत्मीयाः तन्वः सुजाताः संपूर्णाः। अन्यङ्गशरीराः विदैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः ॥ ३ ॥

वेङ्कट० "तिस्रः †यदा अग्ने!† शरदः त्वाम् एव शुचिम् घृतेन शुचयः पर्यचरन्[4]। अथ ते नामानि चित्[4] दधिरे महार्हाणीन्द्रो[5] विष्णुर्वरुणो मित्रोऽर्यमेति। तथा शोभनजनना तनूश्च वह्नीर्यज्ञभागार्थम् ऐरयन् ॥ ३ ॥

मुद्गल० शुचयः शोधयितारो मरुतो हे अग्ने! शुचिम् शुद्धम् त्वाम् इत् देवेभ्यो निर्गतं त्वामेवोद्दिश्य तिस्रः शरदः त्रीन् संवत्सरान् घृतेन आज्येन यत् यदा सपर्यान् पूजां कुर्युः तदानीं त्वमाविरभूः। तदनन्तरं ते मरुतस्त्वयानुगृहीताः सन्तः यज्ञियानि यज्ञार्हाणि यज्ञे प्रयोक्तुं योग्यानि नामानि चित् नामान्यपि दधिरे अधारयन्। नामानि तैत्तिरीयके समाम्नायन्ते— 'ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च संमितश्च सभराः' ( तै ४, ६, ५, ५ ) इत्यादीनि। धारयित्वा च सुजाताः पूर्वजातं रूपं परित्यज्य शोभनममृतत्वं प्राप्ता सन्तः तन्वः स्वकीयानि शरीराणि असूदयन्त स्वर्गं प्रापितवन्तः ॥ ३ ॥

आ रोद॑सी बृह॒ती वेवि॑दा॒नाः प्र रु॒द्रिया॑ जभ्रिरे य॒ज्ञिया॑सः ।
वि॒दन्मर्तो॑ ने॒मधि॑ता चिकि॒त्वान॒ग्निं प॒दे प॑र॒मे त॑स्थि॒वांस॑म् ॥ ४ ॥

आ । रोद॑सी॒ इति॑ । बृ॒ह॒ती इति॑ । वेवि॑दानाः । प्र । रु॒द्रिया॑ । ज॒भ्रि॒रे॒ । य॒ज्ञिया॑सः ।
वि॒दत् । मर्तः॑ । ने॒मऽधि॑ता । चिकि॒त्वान् । अ॒ग्निम् । प॒दे । प॒र॒मे । त॒स्थि॒ऽवांस॑म् ॥ ४ ॥

स्कन्द० रोदसी बृहती आ वेविदानाः जानन्तः। प्रदर्शनार्थञ्चैतद् रोदसीग्रहणं तत्स्थाशेषज्ञेयोपलक्षणार्थं वा। अशेषं ज्ञेय जानन्त इत्यर्थः। रुद्रिया[7] 'रुद्र.' (निघ ३,१६) इति स्तोतृनाम। तस्य स्वभूता तस्मिन् वा भवा रुद्रिया स्तुतिः। सहयोगलक्षणतृतीयान्तञ्चेदं द्रष्टव्यम्। स्तुत्या सह हवींषि प्र जभ्रिरे प्रहरन्ति अग्निं प्रति प्रापयन्ति। यज्ञियासः यज्ञसम्पादिनो मनुष्याः। ज्ञाताशेषज्ञेया यष्टारोऽग्निं स्तुवन्ति, यजन्ति चेत्यर्थः। किञ्च विदत् तत्त्वतो वेत्ति। मर्तः तत्त्ववेदी मनुष्यः। नेमधिता सङ्ग्रामसदृशे यत्ने संसारे वा[8] वर्तमानः। चिकित्वान् ज्ञानी। यष्टारः स्तुवन्ति च यजन्ति च, सम्भग्नज्ञानिनोऽपि सम्यक्[9] जानन्तीत्यर्थः। कम्।

---

१. °याद् द्रष्टु° अ. २. °सेरा° मा ति. ३. °ध्याहर्तव्यः वि. ४-४. नास्ति वि[2]. †-† यदग्ने वि[1] अ[1]; यदा (मनुष्य आश्रयति)अग्ने वि[2] लपं. ५. च वि[1] अ[2]. ६. यज्ञियार्हा° लपं. ७. रुद्रियासः मूको. ८. नास्ति मूको. ९. नास्ति अ.

अग्निम् । क्ष स्थितम् । उच्यते । पद परम तस्थिवासम् वेद्याख्ये[1] परमात्मनि वा ॥ ४ ॥

वेङ्कट० प्र आ नाभ्रे[1] द्यावापृथिवी महती विन्दमाना यज्ञार्हा देवा अस्मा[2] अग्नय स्तोत्राणि। तथा उत्तमे स्थान तस्थिवासम् अग्निम् सङ्ग्रामार्थं[3] प्राज्ञ मनुष्य आश्रयति ॥ ४ ॥

मुद्गल० बृहता महत्यौ रोदसी द्यावापृथिव्यौ आ वेविदाना अत्यर्थं ज्ञापयन्त । कुत्राग्निर्वर्तत इति परस्पर वदन्तो द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थ । [4]यद् वा[4] आ वेविदाना अग्निमुपलभमाना । एवम्भूता याज्ञ्यास. यज्ञार्हा देवा इन्द्रिया रुद्रोऽग्नि । देवानामसुरै सह युद्धसमये तद्वै स्थापित धनमपहृत्य गतवन्तमग्नि देवा आगत्य अग्निसकाशाद्बलेन तद्धनमगृह्णन्। तदानीं सोऽग्निररोदीत्, तस्मात् रुद्र इत्याख्यायते ( तु तै १, ५, १,१ )। तस्य रुद्रस्याऽर्हाणि स्तोत्राणि प्र नाभ्रे प्रजहिरे। चक्रुरित्यर्थ । नेमधिता नेमशब्दोऽर्धवचन । सर्वेषा देवानामर्धभागेन धीयते धार्यत इति नेमधित इन्द्र । सर्वे देवा एकोऽर्ध । इन्द्र एक एवापरोऽर्ध इति यावत् । तनेन्द्रण सहित मर्त मरुद्गण परमे उत्तमे पद स्थानेऽश्वत्थादौ तस्थिवांसम् स्थितवन्तम् अग्निम् चिवित्वान् जानन् विद्वन् अलभत ॥ ४ ॥

सं॒जा॒ना॒ना उप॑ सीदन्नभि॒ज्ञु पत्नी॑वन्तो नम॒स्यं॑ नमस्यन् ।
रि॒रि॒क्वांस॑स्त॒न्वः॑ कृण्वत॒ स्वाः सखा॒ सख्यु॑र्नि॒मिषि॒ रक्ष॑माणाः ॥ ५ ॥

स॒म्ऽजा॒ना॒नाः । उप॑ । सी॒द॒न् । अ॒भि॒ऽज्ञु । पत्नी॑ऽवन्तः । न॒म॒स्य॑म् । न॒म॒स्य॒न्निति॑ नमस्यन् ।
रि॒रि॒क्वांसः॑ । त॒न्वः॑ । कृ॒ण्व॒त॒ । स्वाः । सखा॑ । सख्युः॑ । नि॒ऽमिषि॑ । रक्ष॑माणाः ॥ ५ ॥

स्कन्द० सजानाना सम्यक् जानन्त उप सादन् उपसीदन्ति अग्नि मनुष्या । अभिज्ञु क्रियाविशेषणमेतत् । अभिगत जानुनी यस्मिन् उपसदने तत्[5] अभिज्ञु । भूमौ जानुनी निपात्योप सीदन्तीत्यर्थ । न च केवला । किं तर्हि । पत्नीवन्त पत्नीभि सयुक्ता । उपसद्य च नमस्यम् पूज्यमग्निम्[6] नमस्यन् पूजयन्ति । पूजयन्तश्चाऽग्निप्रसादेन रिरिक्वांस शुद्धोऽप्ययमविपूर्वार्थो द्रष्टव्य । अन्यतोऽतिरिच्यमाना । प्रकृष्टीभवन्त इत्यर्थ । तन्व कृण्वत स्वा करोति शुद्धाऽपि सम्पूर्वार्थो[7] द्रष्टव्य । विधैश्वर्यादिभि सस्कारै सस्कुर्वन्ति। विधैश्वर्यादीनि प्राप्नुवन्तीत्यर्थ यद्वा बहुवचनस्य स्थाने इदमेकवचनम्। सखाय । सख्यु अग्ने । [10]निमिषि निमेष[10] दर्शने। सप्तमीनिर्देशात् वर्तमाना इति शेष । अग्निनाऽनुग्राह्यदर्शनेन दृश्यमाना इत्यर्थ । तत्प्रसादादेव सर्वापद्भ्य आत्मानम् रक्षमाणा । अथवा निमिषि इति तृतीयार्थे सप्तमी। रक्षमाणा[11] इत्यपि व्यत्ययेन कर्मणि कर्तृप्रत्यय । अग्नेरनुग्राह्यदर्शनेन सर्वापद्भ्यो रक्ष्यमाणा इत्यर्थ ॥ ५ ॥

वेङ्कट० एकमत्य गता उपासीदन्, अभिगतजानुक पत्नीसहिता नमस्कार्यमग्निं नमस्यन्ति। तथा रिक्ता भवन्तोऽग्नय स्वानि शरीराणि विधयीकुर्वन्ति सखाय सख्यु अनुग्राह्ये निमेषेऽग्नि हविर्भि रक्षमाणा ॥ ५ ॥

---

१ "सेदा" अ २ नाहिरे वि[1] अ[1] ३ नास्ति वि[1] अ[1] ४ मामभौ वि[1]. ५ ५ नास्ति मूको. ६ नास्ति मूका ७ नास्ति ति ८ °भैं अ ९ °मैं मु. १० १०. °निमेषे ३। निमिषि निमेषे ति ११ °क्षमाणा मूको

मुद्गल० हे अग्ने! त्वाम् संजानानाः सम्यग् जानन्तो देवाः उप सीदन् उपसीदन्ति प्राप्नुवन्ति। उपसत्तिं[1] कृत्वा च पत्नीवन्तः सपत्नीकाः सन्तः नमस्यम् नमस्कारार्हम् अभिज्ञु आभिमुख्येनावस्थितजानुयुक्तं त्वाम् नमस्यन् अपूजयन्। पूजयित्वा च सख्युः मित्रस्य तव निमिषि दर्शने निमित्तभूते सति रक्षमाणाः त्वया परिरक्ष्यमाणाः सखा सखायो देवाः स्वाः तन्वः स्वकीयानि शरीराणि रिरिक्वांसः धनदानादिरूपेण दीक्षानियमेन रिक्तीकुर्वन्तः शोषयन्तः कृण्वत यागान् अकुर्वन्॥ ५॥

इति प्रथमाष्टके पञ्चमाध्याये सप्तदशो वर्गः॥

## त्रिः सप्त यद् गुह्यानि त्वे इत् पदाविदन्निहिता यज्ञियासः।
## तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि॥ ६॥

त्रिः। सप्त। यत्। गुह्यानि। त्वे इति। इत्। पदा। अविदन्। निऽहिता। यज्ञियासः।
तेभिः। रक्षन्ते। अमृतम्। सऽजोषाः। पशून्। च। स्थातॄन्। चरथम्। च। पाहि॥ ६॥

स्कन्द० अत्रेतिहासमाचक्षते—अग्नौ किल एकविंशतिरपि छन्दांसि गुह्यानि देवैर्निहितान्यासन्। तान्यग्निमाराध्याङ्गिरसोऽजानन् इति। तदेतदिहोच्यते। त्रिः सप्त इति। त्रिरावृत्तानि सप्त। एकविंशतिमित्यर्थः। कानि। इतिहासस्मृतेः छन्दांसि[1]। कथं पुनश्छन्दसामेकविंशतित्वम्। उच्यते। गायत्र्युष्णिगनुष्टब्बृहतीपङ्क्तित्रिष्टुब्जगती इत्येतानि चतुरुत्तराणि[2] सप्त छन्दांसि। तेषामेवैकैकं ब्राह्मदैवार्षभेदेन त्रिधा भिद्यते। ऊनत्वपूर्णत्वाधिक्यभेदेन वा। एकेन द्वाभ्यां वाऽक्षराभ्यां न्यूने गायत्र्यादिच्छन्दो निचृत् विराडिति वा विशेषाख्यां लभते, न तु स्वामाख्यां जहाति। तथातिरेके भुरिक्[4] स्वराडिति चोच्यते[5], न तु स्वामाख्यां न प्रपद्यते। तथा च श्रुतावप्युक्तम्—'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' (आन्ना ६, १) इति। यानि यानि[6] तु गायत्र्यादिभ्योऽन्यानि[7] तानि[6] कानिचिदतिच्छन्दांसि[8] कानिचित्तेषां विकार इति नात्र संख्यायन्ते[9]। तदेवं गायत्र्यादीनां सप्तानामेकैकस्याः त्रिधा भेदेन तदन्येषां [10]छन्दसामपरिसंख्यानात् अस्ति[10] छन्दसामेकविंशतित्वम्। तच्चैतदुच्यते। त्रिः सप्त इति यत् यानि गुह्यानि गूहनार्हाणि। त्वे त्वयि। इत् शब्दस्तु पदपूरणः। निहिता देवैर्निहितानि। पदा पदेन। स्वेन ज्ञानेनेत्यर्थः। अविदन् त्वामाराध्य ज्ञातवन्तः। यज्ञियासः यज्ञसम्पादिनोऽङ्गिरसः। तेभिः रक्षन्ते अमृतम् भवन्तम्। अग्निगुणाख्यानार्थं छन्दस्त्वग्नावेव रक्षणव्यपदेशः। अक्रीयमाना [11]हि छन्दोभिरग्नेर्गुणा विस्मरणाद् प्रलयं गच्छेयुः। तान् छन्दोभिः रक्षन्त[11] अग्निमेव रक्षन्तीत्युच्यते। सजोषाः[12] संप्रीयमाणाः। अङ्गिरस एव वा प्रकृतत्वात् [13]सर्वे वा[13] स्तोतारः। य ईदृशो महात्माऽसि तं ब्रूमः। पशून् च स्थातॄन् स्थावराणि च चरथम् च जङ्गमञ्च पशुव्यतिरिक्तमपि पाहि रक्ष त्वम्॥ ६॥

---

1. °स्मृति मूको. 2. जगच्छन्दा° अ. 3. चतुरुत्तराणि अ. 4. भूरि च ति. 5. चोच्यते ति. 6. नास्ति ति. 7. गायत्रीभ्यो° मूको. 8. छन्दांसि ति. 9. °यते ति. 10-10. °मपरिसंख्यानामस्ति अ; °संख्यानाद्। तदस्ति कु. 11-11. नास्ति ति. 12. नास्ति अ. 13-13. नास्ति अ.

वेङ्कट० त्रिः सप्त यत्[1] गुहायां निहितानि त्वयि पदानि [2]निवासस्थानानि धनानि अविदन्[2] निहितानि[3] देवाः । त्वया पुनः प्रत्तानि[4] धनानि अलभन्त । तैर्लब्धैः[5] अमृतम् अग्निं त्वामेव रक्षन्ते सजुषाः[6] । स त्वम् पशून् स्थावराणि जङ्गमम् च पाहि इति ॥ ६ ॥

मुद्गल० त्रिः सप्त एकविंशतिसंख्याकानि[7] गुह्यानि रहस्यानि वेदैकसमधिगम्यानि यत् यानि पदा पदानि । पद्यते गम्यते स्वर्गः एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते । ते च एकविंशतिसंख्याकाः । औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः । अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः । अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः । एकविंशतिसंख्याकानि यज्ञलक्षणानि पदानि हे अग्ने! त्वे इत् त्वय्येव निहिता स्थापितानि । तेषां सर्वेषां त्वत्प्रधानत्वात् । न ह्यग्निमन्तरेण यागा अनुष्ठातुं शक्यन्ते । यज्ञियासः यज्ञार्हा अर्थित्वसामर्थ्यवैदुष्यादिभिः अधिकारहेतुभिर्युक्ताः । एवंविधलक्षणोपेता यजमानास्तानि पदानि अविदन् अलभन्त लब्धवन्तः । तेभिः यज्ञलक्षणैः पदैः अमृतम् अमरणधर्माणं[8] त्वाम् रक्षन्ते पालयन्ति । पूजयन्तीत्यर्थः । सजोषाः तैर्यजमानैः समानप्रीतिस्त्वम् पशून् गवाश्वादिपशून्[9] च स्थातॄन् व्रीह्यादिस्थावराणि चरथम् पशुव्यतिरिक्तमन्यत् यत्प्राणिजातमस्ति तत् च पाहि रक्ष । तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा । अतस्त्वमेवमुच्यसे इत्यर्थः ॥ ६ ॥

विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक् छुरुधो जीवसे धाः ।
अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ॥ ७ ॥

विद्वान् । अग्ने । वयुनानि । क्षितीनाम् । वि । आनुषक् । शुरुधः । जीवसे । धाः ।
अन्तःऽविद्वान् । अध्वनः । देवऽयानान् । अतन्द्रः । दूतः । अभवः । हविःऽवाट् ॥ ७ ॥

स्कन्द० विद्वान् हे अग्ने । वयुनानि त्वद्भक्तिरूपाणि प्रज्ञानानि । क्षितीनाम् क्षितयः इति मनुष्यनाम । मनुष्याणाम् । आनुषक् आनुपूर्व्येण । यथायोग्यमित्यर्थः । शुरुधः शुरुध आप उच्यन्ते (द्र. या ६,१६) वृष्टिलक्षणा अपः[10] जीवसे जीवितुम् वि धाः हविर्नयनद्वारेण विविधं देहि । किञ्च अन्तर्विद्वान् अन्तरिति वेदिमध्यमभिप्रेतम् । विद्वानिति 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इत्येवं हेतौ शता[11] । अन्तर्वन्[12] वसतीति यथा । वेदिमध्यव्यवस्थितज्ञानेन हेतुना । यस्माद्वेदिमध्य एव[13] [14]व्यवस्थितो जानासीत्यर्थः[14] । किम्[15] । अध्वनः मार्गान् । देवयानान् यैर्देवाः प्रतिगम्यन्ते तान् अध्वनः[16] । अतन्द्रः अनलसः । उत्साहीत्यर्थः । देवताह्वानार्थं सर्वयजमानानाम् दूतः अभवः अभूः भवसि या हविर्वाट् हविषां वोढा च ॥ ७ ॥

वेङ्कट० प्रज्ञानानि मनुष्याणां विधेहि । तथा शुचो रोधयित्रीरपश्च[17] जीवनाय अनुषक्तं कुरु । देवयानान् मार्गान् अन्तर्जानन् यत्र यत्र[18] रक्षांसि चरन्ति तं [19]तं देशं[19] जानन् अनलसः[20] दूतः[21] अभवः[22] हविषां वोढा ॥ ७ ॥

---

१. यः वि[१]. २-२. नास्ति वि[१] अ[१]; वासः स्थानानि प° वि[३१]; विदन् ल वि[१] अ[१]. ३. निहिता वि[१] अ[१]. ४. प्रत्तानि वि[१]; प्रत्तानि वि[११] अ[११] कु ल दर्प. ५. °लब्धम् वि[१] अ[१]. ६. सहता वि[१] अ[१]. ७. नास्ति मै[१]. ८. °अमरण° मै[१]. ९. गवादि° मै[१]. १०. आप: मूको. ११. नास्ति कु. १२. अर्थवन् मूको. १३. एवं अ. १४-१४. 'तोऽवस्थि° कु; °तोऽवसीत्° ति. १५. किं च मूको. १६. अध्वान् मूको. १७. °रपश्चैव° दर्प. १८. नास्ति वि[१] अ[१]. १९-१९. नास्ति वि[१] अ[१]. २०. अलसः वि[१] दर्प. २१. दूतो यजमानानाम् वि[१] अ[१] २२. नास्ति वि[१].

मुद्गल० हे अग्ने! वयुनानि सर्वाणि ज्ञातव्यानि विद्वान् जानंस्त्वम् क्षितीनाम् यजमानलक्षणानां प्रजानाम् जीवसे जीवितुम् क्षुरुधः क्षुद्रूपकस्य शोकस्य रोधयित्रीरिषोऽन्नानि आनुषक् अनुषक्तं[1] संततं यथा भवति तथा वि धाः विधेहि कुर्वित्यर्थः। एवं यजमानान् अन्नसमृद्धान् कृत्वाऽनन्तरम् हविर्वाट् वैदेवेभ्यः प्रत्तं हविर्वहन् दूतः अभव. देवानां दूतो भवसि। कीदृशस्त्वम्। अन्तर्विद्वान् द्यावापृथिव्योर्मध्ये जानन्। किं जानन्। अध्वनः मार्गान्। कीदृशान्। देवयानान् देवा यैर्मार्गैर्यान्ति गच्छन्ति ताञ्जानन्नित्यर्थः। अतन्द्रः पुन.पुनर्हविर्वहनेऽप्यनलसः॥ ७॥

स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन्।
विदद् गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट्॥ ८॥

सुऽआध्यः। दिवः। आ। सप्त। यह्वीः। रायः। दुरः। वि। ऋतऽज्ञाः। अजानन्।
विदत्। गव्यम्। सरमा। दृळ्हम्। ऊर्वम्। येन। नु। कम्। मानुषी। भोजते। विट्॥ ८॥

स्कन्द० स्वाध्यः शोभनमाध्यानं येषां ते स्वाध्यः[2] कल्याणचित्ताः। के ते। अङ्गिरसः। कुत एतत्। उत्तरस्यार्धर्चस्य भिन्नवाक्यत्वेऽनाग्नेयत्वप्रसङ्गात्[3] अङ्गिरसश्च मुक्त्वाऽन्येन सह एकवाक्यताया असम्भवात्। दिवः आ सप्त यह्वीः द्युशब्दोऽत्र तत्प्रभृत्युपलक्षणार्थो द्रष्टव्यः। आकारो मर्यादायाम्। 'यह्वः' (निघ ३,३) इति महन्नाम। मर्यादया द्युप्रभृतीन् सप्त लोकान्। रायः दुरः धनस्य द्वाराणि। यैर्धनं लभ्यते तानि। ऋतज्ञाः ऋतस्य यज्ञस्य ज्ञातारः। वि अजानन् अग्निप्रसादादेव विज्ञातवन्तः। प्राप्तवन्त इत्यर्थः। मरणोत्तरकालं द्युप्रभृतीन् सप्त लोकान् प्राप्तवन्तः। जीवन्तोऽपि धनं लब्धवन्त इत्यर्थः। कतमे[4]। उच्यते। विदत् गव्यम् इत्यादि। अत्रैकवाक्यताप्रसिद्ध्यर्थं यैः प्रेषितेत्यध्याहार्यम्[5]। यैः प्रेषिता पणिभिरपहृतं विदत् ज्ञातवती लब्धवती वा। गव्यं गोसमूहम्। सरमा नाम देवशुनी। दृळ्हम् दृढम्। 'ऊर्वान् दयन्त गोनाम्' (ऋ ७,१६,७), 'त एवमूर्वं वि भजन्त गोनाम्' (ऋ १०,१०८,८) इत्यादौ दर्शनादूर्वशब्दः समूहवचनः। समूहम्। बहुविस्तीर्णं वेत्यर्थः। येन हेतुना। नु इति पदपूरणः। कम् सुखम्। मानुषी मनुष्येषु भवा। भोजते[6] उपभुङ्क्ते। [7]विट् मनुष्यजातिः। देवगवीनां हि प्रसादेन मनुष्यजातिः सुखमनुभुङ्क्ते[7]। मनुष्यगवीनां देवगवीप्रभवत्वात्[8] कामदुघत्वाद्य देवगवीनां सर्वसुखानां तत्प्रभवत्वात्[9]॥ ८॥

वेङ्कट० सुकर्माणः दिवः सकाशादसुरपुरं प्रत्यागताः सप्त महती.[10] गोधनस्य दुरः[11] अङ्गिरसः वि अजानन्। पणिभिरपहृतानां गवामानयनाय सप्त मार्गानजानन्। तथा[12] लब्धवती सरमा नाम देवशुनी दृढ महान्तं गोसङ्घम्। येन सङ्घेन [13]कम् सुखम्[13] मानुषी विट् उपभुङ्क्ते, अग्ने कर्मणा तथा अकुर्वन्निति[14]॥ ८॥

मुद्गल० स्वाध्यः शोभनकर्मयुक्ताः यह्वीः महत्यः सप्त गङ्गाद्याः सप्त नद्यः दिवः द्युलोकात् आ आगत्य भूम्यां प्रवहन्तीति शेषः। हे अग्ने! ईदृग्विधा नद्यस्त्वया स्थापिताः। अग्नौ हुते

1. अनुषक्तं मूको. 2. स्वाध्याः कु. 3. °स्यस्तेन भवेय° मूको. 4. कतमः कु. 5. °हार्यः मूको. 6. नास्ति ति. 7-7. नास्ति अ. 8. देवगवि° मूको; °प्रभवात् ति. 9. तत्प्रभवात् ति. 10. महीः छपं. 11. दुरः छप; द्वार: वि'; द्वारः वि' अ'. 12. तथा च वि' 13-13. नास्ति वि''' अ' कु छ छप. 14. कुर्वन्नीति वि', अ'; °वन् कु.

सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तथा ऋतज्ञाः ऋतं यज्ञं जानन्तोऽङ्गिरसः रायः पणिनाम्नाऽसुरेणापहृतस्य गोरूपस्य धनस्य दुरः द्वाराणि गमनमार्गान् अजानन् त्वया ज्ञापिताः । त्वत्साध्येन यागेन प्रीत इन्द्रो गवामन्वेषणाय सरमां देवशुनीं प्रेपितवान् । सा च सरमा गवां स्थानमवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तानङ्गिरसो गाः प्रापयत् । अत्र एतत्सर्वं त्वमेव कृतवान् । अङ्गिरोभ्यः सकाशात् गव्यम् गवि भवम् दृळ्हम् स्थूलम् । बहुलमित्यर्थः । एवंविधं पयोलक्षणम् ऊर्वम् अन्नम् सरमा देवशुनी विदत् अलभत । कम् इत्येतत्पादपूरणम्[1] । येन नु येन हि गव्येन मानुषी विट् मनोः सम्बन्धिनी प्रजा भोजते इदानीं भुङ्क्ते, तदन्नमपि पारम्पर्येणाग्निरेव करोति ॥ ८ ॥

आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम् ।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥९॥

आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः । कृण्वानासः । अमृतऽत्वाय । गातुम् ।
मह्ना । महत्ऽभिः । पृथिवी । वि । तस्थे । माता । पुत्रैः । अदितिः । धायसे । वेरिति वेः ॥ ९ ॥

स्कन्द० ये अङ्गिरसः 'विश्वा बहूनि धनानि स्वपत्यानि' शोभनैरपत्यैः सहितानि आ तस्थुः आस्थिताः[1] । संप्राप्तवन्त इत्यर्थः । कृण्वानासः कुर्वन्तः । अमृतत्वाय अविद्यमानं मृतत्वं यस्य सोऽमृतस्तत्त्वोऽग्निः तदर्थम् । गातुम् 'गायतिरर्चतिकर्मा ( तु. निघ ३,१४ ) । गानं गातुः स्तुतिः[2] । ताम् । येऽङ्गिरसोऽग्निम् आ[3] स्तुवन्तो बहूनि धनानि शोभनानि चापत्यानि लब्धवन्त इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेषाम् मह्ना माहात्म्येन । 'तत्प्रसादेनेत्यर्थः । महद्भिः[2] सस्यजननादिभिरुपकारैर्मनुष्याणाम् । पृथिवी वि तस्थे विविधं स्थिता । अङ्गिरसां प्रसादेन पृथिवी मनुष्याणां महद्भिः सस्यजननादिभिरुपकारैरुपकरोतीत्यर्थः । अङ्गिरसो हि इन्द्रसखत्वात् वृष्टेः कर्तारः । तदायत्ताश्च[4] सस्यजननादयः । न केवला पृथिवी । किं तर्हि । माता पुत्रैः अदितिः देवमाताप्यदितिः पुत्रैः सर्वैर्देवैः सह । देवा अपि हि यत् मनुष्याणामुपकुर्वन्ति तदङ्गिरसामेव प्रसादेन । देवोपकारस्य धर्मायत्तत्वात् धर्मस्य च वृष्ट्यायत्तत्वात् 'वृष्टेश्चाङ्गिरसां कर्तृत्वात्[5] । किमर्थं पुनर्महद्भिः उपकारैर्वितस्थे[6] । उच्यते । धायसे धेट् पाने । आत्मपयआद्याहुतिपानाय । वेः देवान् प्रति गन्तुः अग्नेर्वा[7] । सस्यजननाद्युपकाराभावे हि यागो न शक्यते कर्तुम् । 'यागाभावे च नाग्निराहुतीः पिबेत्[8] । अत एवमुच्यते— धायसे वेः इति ॥ ९ ॥

वेङ्कट० आ तस्थुः ये[9] विश्वानि स्वापत्यनिमित्तानि कर्माणि[10] कुर्वन्तः अमृतत्वसिद्ध्यर्थं मार्गम् । अस्यन्तम् महद्भिः तैरियम् पृथिवी ध्रियमाणा वितिष्ठते, माता पुत्रैः[11] मनुष्यैः सहैव गन्तुः वीतस्यानेः[12] पानाय तं सोमं पाययितुमिति[13] ॥ ९ ॥

मुद्गल० ये आङ्गिरसाः अमृतत्वाय अमरणसिद्धये गातुम् मार्गमुपायम् कृण्वानासः कुर्वाणाः सन्तः । विश्वा सर्वाणि स्वपत्यानि शोभनान्यपत्यजननहेतुभूतानि चतुर्दशरात्रप्रभृतिसत्रत्राण्याशिरसामयनादीनि

1. पूरणम् मूको. २-२. भूद्धितम् वि. ३. भास्थिताः वि. ४. नास्ति अ. ५. [illegible] वि. ६-६. "[illegible]" मूको. ७. [illegible] वि. ८-८. नास्ति अ. ९. ये स्वपत्यनिमित्तम् वर्त. १०. [illegible] वि' अर. ११. पुत्रैरादितिः वि' अ'. १२. [illegible] वि'. १३. [illegible] कु.

कर्माणि आ तस्थुः आस्थितवन्तः। कृतवन्त इत्यर्थः। 'त एनं पद्भ्यामशिक्षन्नपश्यन् तमाहरन् तेनायजन्त' ( तै ७,४,६,१ ) इति च। महद्भिः अनुष्ठानेन महानुभावैस्स्वैः पुत्रैः सहिता माता जनयित्री अदितिः अदीना पृथिवी धायसे सर्वस्य जगतो धारणाय मह्ना स्वकीयेन महत्त्वेन वि तस्थे विशेषेण तिष्ठति। हे अग्ने! यतस्त्वम् वेः आदित्यैरनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींष्यभक्षयः। अत एतत्सर्वं जातमित्यर्थः॥ ९॥

अधि श्रियं नि दधुश्चारुमस्मिन् दिवो यदक्षी अमृता अकृण्वन् ।
अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥ १० ॥

अधि। श्रियम्। नि। दधुः। चारुम्। अस्मिन्। दिवः। यत्। अक्षी इति। अमृताः। अकृण्वन्।
अध। क्षरन्ति। सिन्धवः। न। सृष्टाः। प्र। नीचीः। अग्ने। अरुषीः। अजानन्॥ १०॥

स्कन्द० दीप्तिलक्षणाम् श्रियम् अधि नि दधुः निहितवन्तो देवाः। चारुम् शोभनाम्[1] अस्मिन् त्वय्यग्नौ। कदा। उच्यते। दिवः यत् यदा अक्षी द्वित्वसामान्यात्[2] सूर्याचन्द्रमसावत्राक्षी उच्येते। अक्षिस्थानीयौ सूर्याचन्द्रमसौ अमृताः देवाः अकृण्वन् कृतवन्तः। अहोरात्रविभागार्थं यदैव सूर्याचन्द्रमसौ देवौ उदपीपदन्[3] तदैव त्वामग्निं दीप्तिमन्तम् अकार्षुरित्यर्थः। 'अध क्षरन्ति' अधशब्दोऽत्र ततः प्रभृतीत्यस्यार्थे। [4]तत एव[5] च प्रभृति क्षरन्ति त्वयि। काः। सामर्थ्यादाहुतयः। कथम्। सिन्धवः न नदीनामैतत् ( तु. निघ १,१३ )। नद्य इव। सृष्टाः पर्वतेभ्यो विसृष्टाः सरयः नीचीः अधोमुखाः। स्रुचो[6] ह्याहुतयः क्षरन्त्य अधोमुखाः क्षरन्ति। कीदृश्यः। उच्यते। हे अग्ने! अरुषीः [7]अरुषतिर्गतिकर्मा ( तु. निघ २,१४ )। त्वां[7] प्रति गमनशीलाः[8]। नित्यमेव यास्त्वयि हूयन्त इत्यर्थः। किञ्च प्र अजानन् प्रशब्दः प्रारम्भे। तत एव प्रभृति ज्ञानिनोऽपि त्वां ज्ञातुं प्रारब्धवन्त इत्यर्थः॥ १०॥

वेङ्कट० अधि नि दधुः प्रज्वलनेन शोभां कल्याणीम् अग्नौ दिवः यदा[9] चक्षुषी हविर्निर्भक्षया[10] देवाः अकृण्वन्[11]। प्रज्वलितेऽग्नौ पृथिव्याम् क्षरन्ति सिन्धवः इव उद्युक्ता देवास्ततो ज्वलितोपहान्तस्य अग्ने! तव न्यग्भूताः हेलायमानाः[12] ज्वालाः जानन्ति निरूपणीयं[13] सूक्तं प्राशैः[14]॥ १०॥

मुद्गल० अस्मिन् अग्नौ चारुम् शोभनाम् श्रियम् परिस्तरणपरिषेचनादिरूपां यज्ञसम्पदम् अधि नि दधुः यजमानाः स्थापितवन्तः। निधाय च यत् यदा अक्षी यज्ञस्याज्यभागलक्षणे चक्षुषी अकृण्वन् कुर्वन्ति। तदानीम् दिवः द्युलोकात् अमृताः अमरणधर्माणो देवाः यागसमयो जात इत्यवगम्याऽऽगच्छन्तीति शेषः। अध आज्यभागाऽनन्तरम् सृष्टाः अग्नेरुत्पन्नाः सिन्धवः न शीघ्रं गच्छन्त्यो नद्य इव नीचीः नितरां सर्वासु दिक्षु गच्छन्तीः अरुषीः रोचमानाः। हे अग्ने! एवम्भूतास्त्वदीया ज्वाला उत्पन्ना क्षरन्ति प्रचलन्ति। सर्वासु दिक्षु गच्छन्तीत्यर्थः। आगता देवाश्च प्र अजानन् अस्माकं होमार्थमस्मो ज्वाला उत्पन्ना इति दृष्टा सन्तः प्रकर्षेण जानन्ति॥ १०॥

इति प्रथमाष्टके पञ्चमाध्याये अष्टादशो वर्गः॥

---

१. शोभनं कु. २. छमत्वाद् भ. ३. °दीपदन् कु. ४-४. नास्ति कु. ५-५. पूर्व एव वि. ६. नास्ति भ; स्रुच कु. ७-७. °गतिकर्मासाद् वि° ८. गमनवर्ण धर्मीणां भ; °नन्धमानः वि. ९. यदा वि°. १०. दिधुक्षया वि°; दिधु° भ°. ११. मकुर्वन् कर्त. १२. शोभायमानाः वि° स्क; वेका° वि° १३. रूपणीयम् वि° कर्त. १४. नास्ति कु.

[ ७३ ]

र॒यिर्न यः पि॑तृवि॒त्तो व॑यो॒धाः सु॒प्रणी॑तिश्चिकि॒तुषो॒ न शासुः॑ ।
स्यो॒न॒शीरति॑थि॒र्न प्री॑णा॒नो होते॑व॒ सद्म॑ विध॒तो वि ता॑रीत् ॥ १ ॥

र॒यिः । न । यः । पि॒तृ॒ऽवि॒त्तः । व॒यः॒ऽधाः । सु॒ऽप्रनी॑तिः । चि॒कि॒तुषः॑ । न । शासुः॑ ।
स्यो॒न॒ऽशीः । अति॑थिः । न । प्री॒णा॒नः । होता॑ऽइव । सद्म॑ । वि॒ध॒तः । वि । ता॒री॒त् ॥ १ ॥

स्कन्द० पितृवित्त इत्येतदुपमानभूतस्य रयेर्विशेषणम्। य अग्निर्धनमिव पितृलब्धम् वयोधा अन्नदाता। यथा पि्य धन क्रमेण नियमेन प्रभूतस्यान्नस्य दायक तद्वन्नियमेन प्रभूतदायक इत्यर्थ । यश्च सुप्रणीति प्रणीति कार्येपूपदेश, सा शोभना यस्य स सुप्रणीति। कथम्। चिकित्तुष न शासु विदुष इवानुशासनम्। यश्च स्योनशी शेतिरिह[1] स्थानार्थ। 'तासामहि पत्सुत शीर्वभूव' ( ऋ १,३२,८ ) इति यथा। सामर्थ्याचान्तर्णीतण्यर्थ.। सुखस्य स्थापयिता। सुखकर इत्यर्थ । कथम्। अतिथिः न प्रीणान अतिथिरिव तृप्यन्। होता इव यज्ञसाधनद्वारेण सद्म गृहम् विधत परिचरतो यजमानस्य वि तारीत वर्धयति। तिसृष्वप्यास्वृक्षु 'यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वात्' 'त त्वा नर' ( ऋ १,७३,४ ) इति चतुर्थ्यामृचि श्रुतेन तच्छब्देनैकवाक्यता ॥ १ ॥

वेङ्कट० धनम् इव य[2] पितृतो लब्धम् अन्नस्य दाता सुप्रणय[3] च भवति[4] विदुष इव शासनम्, स[5] "सुखेषु शाययति" अतिथि इव तृप्यन्। होता इव यजमानस्य यज्ञगृहम् वितरति हविर्वहनेन ॥ १ ॥

मुद्गल० 'रयिर्न' इति दशर्चम् नवम सूक्तम्। पराशर ऋषि[6]। त्रिष्टुप् छन्द[7]। अग्नि देवता[8] ॥

पितृवित्त पितु सकाशाल्लब्ध रयि न धनमिव य अग्नि वयोधा अन्नस्य दाता। यथा पैतृक धन विस्रम्भेण व्यवह्रियमाण सदन्नप्रद भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विस्रम्भेण व्यवहृत सन् अन्नप्रदो भवतीत्यर्थ.। चिकित्तुष यज्ञशास्त्राभिज्ञस्य शासु न शासनमिव सुप्रणाति सुखेन प्रणेतव्य। [10]यथा विद्वच्छासन[10] सर्वेष्वनुष्ठेयेषु तत्तत्संशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते। यश्च स्योनशी सुखप्रदे गार्हपत्यायतनादौ शयान अतिथि न सुखासन उपवेशितोऽर्घपाद्यादिभि सत्कृतोऽतिथिरिव प्रीणान. हविर्भिस्तर्पणीय सोऽग्नि विधत परिचरतो यजमानस्य सद्म गृहम् वि तारीत् प्रवर्धयति। दृष्टान्त। होता इव होता होमकर्ताऽध्वर्युस्तत्कर्मकरणेन यजमानस्य गृहम् यथा[11] वर्धयति तद्वत् ॥ १ ॥

दे॒वो न यः स॑वि॒ता स॒त्यम॑न्मा॒ क्रत्वा॑ नि॒पाति॑ वृ॒जना॑नि॒ विश्वा॑ ।
पु॒रु॒प्र॒श॒स्तो अ॒मति॒र्न स॒त्य आ॒त्मेव॒ शेवो॑ दिधि॒षाय्यो॑ भूत् ॥ २ ॥

---

१ रयि॰ [illegible] २ २. [illegible] ३ य अग्नि वि॰ अ॰ ४ [illegible] वि॰ अ॰, [illegible] ५ [illegible] वि॰ अ॰. ६. [illegible] वि॰ अ॰ ७ ७. [illegible] वि॰ अ॰. ८ [illegible] वि॰ अ॰. ९. नास्ति मै॰ १०-१०. यथावत् [illegible] मूको. ११. नास्ति मूको.

देवः । न । यः । सविता । सत्यऽमन्मा । क्रत्वा । निऽपाति । वृजनानि । विश्वा ।
पुरुऽप्रशस्तः । अमतिः । न । सत्यः । आत्माऽइव । शेवः । दिधिषाय्यः । भूत् ॥ २ ॥

**स्कन्द०** यः च देवः इव सविता सत्यमन्मा सत्यज्ञानः क्रत्वा कर्मणा यागादिना प्रज्ञया वा निपाति नियमेन रक्षति । वृजनानि विश्वा 'वृजनम्' ( निघ २,९ ) इति बलनामान्यत्र । इह तु वर्जनीयत्वाद् वृजनं पापम् उच्यते । सर्वाणि पापानि । यश्च पुरुप्रशस्तः बहुभिः स्तुतः अमतिः न सत्यः 'अमतिः' ( निघ ३,७ ) इति रूपनामान्यत्र । इह तु आत्ममतिरमतिरुच्यते । तद्वत् सत्यः । अथवा अम गत्यादिष्वित्यस्मादमतिप्रत्ययः[1] कर्तरि । गमनशीलोऽमतिरादित्यः । तद्वत् सत्यः । यश्च आत्मेव शेवः सुखः सर्वस्य दिधिषाय्यः धारयिता च भूत् भवति ॥ २ ॥

**वेङ्कट०** देवः इव सविता[2] सत्यमनाः[3] कर्मणा[4] निरक्षति विश्वानि उपद्रवाणि । बहुभिः[5] प्रशस्तः रूपम् इव सत्यम् । यद्धि चक्षुर्ग्राह्यं श्रद्धेयं सत्यं भवति । शरीरमिव भरणीयः भवति सुखकरः[6] हि[7] ॥२॥

**मुद्गल०** देवः न सविता द्योतमानः सर्वस्य प्रेरकः सूर्य इव यः अग्निः सत्यमन्मा सत्यज्ञानो यथार्थदर्शी सोऽग्निः क्रत्वा आत्मीयेन कर्मणा विश्वा वृजनानि सर्वेभ्यः सङ्ग्रामेभ्यः निपाति नितरां पालयति । अपिच पुरुप्रशस्तः पुरुभिर्यजमानैः स्तुतोऽग्निः अमतिः न रूपमिव सत्यः बाधरहितः । यथा पृथिव्यादेः स्वरूपमागमापायिषु[8] विशेषेषु सत्स्वपि स्वयमेकरूप्येण[9] नित्यं भवति तद्वदग्निरवान्तरेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः शेवः सुखकरः । दृष्टान्तः । आत्मेव परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा सर्वान् यथा सुखयति तद्वदग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवम्भूतोऽग्निः दिधिषाय्यः भूत् सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति ॥ २ ॥

देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ॥ ३ ॥

देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । अनवद्या । पतिजुष्टाऽइव । नारी ॥ ३ ॥

**स्कन्द०** देवः इति पूर्वस्यामृचि सम्बन्धदर्शनात् दीप्तत्वाच्च सवितैवाभिप्रेतः । [10]'यः च देवः'[10] इव सविता पृथिवीम् विश्वधायाः धेट् पाने । सर्वाहुतिलक्षणम् आज्यादिपेयं यस्य स विश्वधायाः । सर्वासामाहुतीनां पातेत्यर्थः । उपक्षेति उपगम्य निवसति । यथा देवः सविता पृथिवीं रश्मिभिर्व्याप्य निवसति [11]तद्वद् व्याप्य निवसतीत्यर्थः[11] । हितमित्रः न राजा पूर्वस्यैवेयं द्वितीयोपमा । हितानि मित्राणि यस्य भवन्ति स हितमित्रः । यथा च हितैर्मित्रैरुपेतो राजा पृथिवीं सम्यक् पालयन्नुपभुञ्जानश्च निवसति तद्वत्सम्यक् पालयन्नुपभुञ्जानश्च निवसतीत्यर्थः । यश्च पुरःसदः शर्मसदः न वीराः पुरः सीदन्तीति[12] पुरःसदः । सेनाया अग्रतो व्यवस्थातारः ।

1-1. °दिष्वित्यस्मादमतिप्र° भ वि; °दिष्वित्यस्मात् तिप° कु. 2. °विता सत्यज्ञानः वि[1] अ[3]. 3. सत्यमननः वि[1,2] अ[3]. 4. °णा यागादिकर्मणा वि[1] अ[3]. 5. बहूनि वि[1] अ[3]. 6. °करं वि[1] अ[1] कु छ. 7. नास्ति वि[1] अ[3]. 8. नास्ति मूको. 9. °मेकत्वेन मूको. 10-10. यश्च कु. 11-11. निवसति भ. 12. °दन्ति वि.

वेङ्कट० ¹तम् त्वाम्¹ नरः गृहे नित्यम् समिद्धम् अग्ने! सेवन्ते अग्निनिधानयोग्यासु² दृढासु भूमिषु। तथा अस्मिन् अधि नि दधुः च अन्नं³ बहु। स त्वम् भव सर्वाङ्गः⁴ धनानां धारकः ॥ ४ ॥

मुद्गल० हे अग्ने! तम् त्वा पूर्वोक्तगुणविशिष्टं त्वाम् नरः यज्ञस्य नेतारो यजमानाः ध्रुवासु क्षितिषु चलनरहितासु भूमिषु। निरुपद्रवेषु ग्रामेष्वित्यर्थः। दमे स्वकीये यज्ञगृहे नित्यम् इद्धम् अनवरतं समिद्भिः प्रज्वलितं कृत्वा आ सचन्त आभिमुख्येन सेवन्ते। किञ्च अस्मिन् अग्नौ द्युम्नम् हविर्लक्षणमन्नम् भूरि चरुपुरोडाशादिरूपेण बहुविधम् अधि नि दधुः स्थापितवन्तः। एवंगुणविशिष्टो योऽग्निः स त्वम् विश्वायुः उक्तप्रकारेण सर्वान्नो भूत्वा रयीणाम् धनानाम् धरुणः धारयिता भव। अस्मभ्यं दातुं धनानि धारयेत्यर्थः ॥ ४ ॥

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ ५ ॥

वि। पृक्षः। अग्ने। मघऽवानः। अश्युः। वि। सूरयः। ददतः। विश्वम्। आयुः।
सनेम। वाजम्। समिथेषु। अर्यः। भागम्। देवेषु। श्रवसे। दधानाः ॥ ५ ॥

स्कन्द० पृक्षः अन्नं हे अग्ने! मघवानः धनवन्तः। प्रभूतहविष्करणयोग्या इत्यर्थः। वि अश्युः विविधं प्राप्नुयुः। त्वत्प्रसादेन लभेरन्नित्यर्थः। न च मघवान एव केवलाः। किं तर्हि। सूरयः स्तोतारश्च वि अश्युः। ददतः तुभ्यं हवींषि। ये च धनवन्तः प्रभूतानि हवींषि कुर्वन्ति, ये च दारिद्र्यात् प्रायेण स्तुवन्त्येव न प्रभूतानि हवींषि कर्तुं शक्नुवन्ति, त उभयेऽपि तुभ्यं हविर्ददतोऽन्नानि प्राप्नुयुरित्यर्थः। न च केवलान्यन्नानि। किं तर्हि। विश्वम् आयुः सर्वमायुश्च वर्षशतलक्षणम्। वयमपि सनेम वाजम् अन्नम् समिथेषु सङ्ग्रामेषु अर्यः अरेः स्वभूतम् भागम् हविर्लक्षणम्। देवेषु सम्प्रदानस्येयमधिकरणत्वेन विवक्षा। 'सप्तमब्राह्मणे दानम्' (मस्मृ ७,८५) इति यथा। देवेभ्यः श्रवसे 'श्रवः' (निघ २,७) इत्यन्ननाम। अन्नार्थम्। दधानाः ददतः। देवान्यजन्त इत्यर्थः ॥ ५ ॥

वेङ्कट० वि अश्युः अग्ने! अन्नं धनवन्तः, वि अश्युः प्राज्ञाः, ददतः⁵ विश्वम् अन्नं दरिद्रेभ्यः। ⁶वयञ्च लभेमहि अन्नं सङ्ग्रामेषु शत्रोः भागम् देवेषु अन्नार्थं निदधानाः⁶ ॥ ५ ॥

मुद्गल० हे अग्ने! मघवानः हविर्लक्षणेन धनेन युक्ता⁷ यजमानाः पृक्षः अन्नानि वि अश्युः व्याप्नुवन्तु। ⁸त्वयाऽनुगृहीताः सर्वाण्यन्नानि लभन्ताम्। ये च सूरयः विद्वांसस्त्वां स्तुवन्ति, ददतः ये च तुभ्यं हवींषि ददतः प्रयच्छन्तो वर्तन्ते ते सर्वे विश्वम् आयुः सर्वं जीवितम्† वि अश्युः प्राप्नुवन्तु⁸। वयञ्च समिथेषु सङ्ग्रामेषु अर्यः अरेः शत्रोः सम्बन्धिनम् वाजम् अन्नम् सनेम

1-1. नास्ति वि³. † त्वा वि¹ अ¹ लपं. 2. अग्निधान° वि¹ अ¹; °निधान ⋯ वि. 3. °न हविर्लक्षणं वि¹ अ¹. 4. सर्वाङ्गः अस्माकम् वि¹ अ¹. 5. ददतः वि¹ अ¹. 6-6. त्रुटितम् वि³. 7. युक्ताय मूको. 8-8. नास्ति मै². † जीवितुम् मूको.

त्वदनुमहात् संभजेमहि । तदनन्तरम् देवेषु त्वत्प्रमुखेष्विन्द्रादिषु श्रवसे यशसे तदर्थम् भागम् हविर्भागम् दधानाः स्थापयन्तो भूयास्मेति शेषः ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये एकोनविंशो वर्गः ॥

ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ॥ ६ ॥

ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः ।
पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ॥ ६ ॥

स्कन्द० हि शब्दः पदपूरणः । ऋतस्य सर्वत्र गतस्याग्नेः स्वभूताः धेनवः गावः वावशानाः वाश्र शब्दे । पुनःपुनर्वाश्यमानाः । स्मदूध्नी.[1] स्मच्छब्दः प्रशस्तवचनः अमृतवचनत्वात्[2] । प्रशस्तमूधो यासां ताः स्मदूध्न्यः । पीपयन्त[3] अमृतेनाप्याययन्ति अग्निम् । द्युभक्ताः दिवं या भजन्ते ता द्युभक्ताः । द्युनिवासिन्य इत्यर्थः । किञ्च परावतः दूरनामैतत् ( द्र. निघ ३,२६ ) । सुमतिम् कल्याणचित्तमग्निम् भिक्षमाणाः याचमानाः । अन्वेषमाणा इत्यर्थः । सिन्धवः स्यन्दनाः अमृतस्राविण्य वि सस्रुः विविधमभिगच्छन्त्यग्निम् । समया अद्रिम् समयाशब्दः सामीप्ये । अद्रिर्मेरुर्नामा पर्वतः । मेरोः समीपेनेत्यर्थः । अग्नेः स्वभूता गावो द्युच्युतिता मेरुमार्गेण प्रत्यागत्य विविधमग्निम् अभिगच्छन्ति । अभिगम्य च स्वेनामृतरूपेण पयसा अग्निमाप्याययन्ति इति समस्तार्थः । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना—धेनव इति धिनोतेः प्रीणनार्थस्य रूपम् । ऋतस्याग्नेः प्रीणयित्र्यः आहुतयः । वावशानाः अत्यर्थं कामयमानाः । स्मदूध्नीः । यत्रसस्थानमाहुतीनां तदूध उच्यते । अमृतरसयुक्ता इत्यर्थः । पीपयन्त द्युभक्ताः । द्युगामिन्य इत्यर्थः । परावतः दूरात् । पृथिवीत इत्यर्थः । शिष्टपदयोजना तु सदृशी ॥ ६ ॥

वेङ्कट० "अग्नेः हि[4] धेनवः कामयमानाः प्रशस्तोध्न्य.[5] अवृद्धवयस्का आसन् 'सम्भक्तस्वर्गाः । तत्रैवाह' दूरात् "सुमतिम अग्निमवेक्षितम्" 'भिक्षमाणाः वि सस्रुः' सिन्धवः 'अद्रिम् अग्निम् समया अग्निसमीपे' । अद्रिरादरणात्यमित्यान् इति । स्वर्गस्था आपोऽग्निं प्रत्यागच्छन्ति[10] ॥ ६ ॥

मुद्गल० ऋतस्य हि ऋतं देवयजनदेशं प्राप्तमग्निमेव धेनवः अग्निहोत्रादिहविषां दोग्ध्र्यो गावः पीपयन्त क्षीरादिलक्षणं गव्यमपाययन् । कीदृश्यो गावः । वावशानाः अग्निं पुनःपुनः कामयमानाः । स्मदूध्नीः नित्यमूधसा युक्ता । सदा पयस[11] प्रदाम्य इत्यर्थः । द्युभक्ताः दिवा प्रकाशेन संभक्ताः संश्लिष्टाः । तेजस्विन्य इत्यर्थः । अपि च सिन्धवः स्यन्दनशीलाः नद्यः सुमतिम् अस्याग्नेः शोभमानामनुग्रहात्मिकां बुद्धिम् भिक्षमाणाः याचमानाः सत्यः अद्रिम् समया अद्रेः पर्वतस्य समीपे परावतः दूरदेशात् वि सस्रुः विशेषेण गच्छन्ति प्रवहन्ति । अग्नये तदग्न्यार्थो हविषां निष्पत्तये प्रवहन्तीत्यर्थः ॥ ६ ॥

---

१. नास्ति म. २. "तपच" कु. ३. नास्ति म ति. ४-४. शुद्धिवम् वि[1]. ५. 'स्तोध्न्ये वि[1]; स्तोन्यो वि[1]. ६-६. सम्भरस्य स्वर्देशाद वि[1] अ[1]. ७-७. "ग्निमवधितुम् वि[1] अ[1]; अग्निरिवक्षि' कु "मेरे·· वि[1] ८-८. 'माण' सर्प;·· सस्रुः वि[1]; "रिस्या वि. ९-९. मति ··· वि[1] अ[1]. १०. प्रत्यव' वि[1] अ[1]. ११. पयः मे[1].

त्वे अ॑ग्ने सुम॒तिं भिक्ष॑माणा दि॒वि श्रवो॑ दधिरे य॒ज्ञिया॑सः ।
नक्ता॑ च च॒क्रुरु॒षसा॒ विरू॑पे कृ॒ष्णं च॒ वर्ण॑मरु॒णं च॒ सं धुः॑ ॥ ७ ॥

त्वे इति॑ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । भिक्ष॑माणाः । दि॒वि । श्रवः॑ । द॒धि॒रे॒ । य॒ज्ञिया॑सः । नक्ता॑ । च॒ । च॒क्रुः । उ॒षसा॑ । विरू॑पे॒ इति॒ विऽरू॑पे । कृ॒ष्णम् । च॒ । वर्ण॑म् । अ॒रु॒णम् । च॒ । सम् । धु॒रिति॑ धुः ॥

स्कन्द० त्वे इति द्वितीयैकवचनस्य वो आदेशः । त्वां हे अग्ने! सुमतिम् [1]भिक्षमाणाः धना॰ याचमानाः दिवि श्रवः हविर्लक्षणमन्नम् दधिरे स्थापयन्ति । देवेभ्यो हवींषि ददतीत्यर्थः अथवा दिवीति सप्तमीनिर्देशात् व्यवस्थितायेति वाक्यशेषः । दिवि व्यवस्थिताय तुभ्यं श्रव॰ दधिरे ददति[1] । यज्ञियासः यष्टारः । न च केवलम्, न च[2] कदाचिदेव । किं तर्हि । नक्ता च चक्रुः 'नक्ता' ( निघ १,७ ) इति रात्रिनाम । सप्तम्याश्चाकारः । रात्रौ चैतत् कुर्वन्ति उषसा उषसि च । उषसा चात्रानन्तर्यादहर्लक्ष्यते । अहनि चेत्यर्थः । कीदृशयोरहोरात्रयोः विरूपे सप्तमीद्विवचनस्यायं[3] दे आदेशः । विभिन्नरूपयोः । किञ्च कृष्णम् च वर्णम् अरुणम् च अरुण आरक्तो वर्णः । सुसमिद्धस्याग्नेर्ज्वालाया उपरि कृष्णो वर्णो[4] भवति शिष्टोऽरुणः[5] । तौ[6] सम् धुः सन्दधति । तथा त्वां यष्टारः[7] समिन्धते यथा तव कृष्णारुणौ वर्णावपि भिन्नौ भवत इत्यर्थः । अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना — नक्ता च चक्रुरुषसा विरूपे इति द्विती यान्तान्येतानि, न च[8] सप्तम्यन्तानि । दिवि[9] श्रवो [10]दधिरे ये[10] यज्ञियासः ते[11] नक्तोषसौ विभिन्नरूपे कुर्वन्तीत्यर्थः । नक्तोषसोरेव कृष्णं च वर्णमरुणं च सन्धुः । कथं पुनः यष्टार एतत् कुर्वन्ति । उच्यते । यागकारित्वात्, यागस्य च धर्मत्वात्, कृत्स्नस्य जगतो धर्ममूलत्वात् ॥ ७ ॥

वेङ्कट० [12]त्वयि अग्ने! सुमतिम् स्वदीयाम् भिक्षमाणाः दीप्ते† हविः निदधिरे ‡यजमानाः । यद्वा देवेभ्योऽन्नं‡ कुर्वन्ति[12] [13]तथा यज्ञकरणात्[13] । अहोरात्रे विरूपे चक्रुः । कृष्णम् अरुणम् च वर्णम् अहोरात्रयोः सम् दधुः[14] ॥ ७ ॥

मुद्गल० हे अग्ने! सुमतिम् शोभनामनुग्रहात्मिकां बुद्धिम् भिक्षमाणाः याचमानाः यज्ञियासः यज्ञार्हाः सर्वे देवाः दिवि द्योतमाने[15] त्वे त्वयि श्रवः हविर्लक्षणमन्नम् दधिरे अस्थापयन् । तदनन्तरं तादृशे हविर्युक्तयागानुष्ठानाय विरूपे विविधरूपे उषसा उषःकालोपलक्षितमहः नक्ता च नक्तं रात्रिञ्च चक्रुः अकुर्वन् । एतदेव स्पष्टयति । कृष्णम् च वर्णम् रात्र्या श्यामलवर्णमन्धकारम् अह्नि अरुणम् आरोचमानं श्वेतवर्णं तेजः च सम् धुः सम्यक् स्थापितवन्तः ॥ ७ ॥

यान् रा॒ये मर्ता॒न्त्सुषू॑दो अग्ने॒ ते स्या॑म म॒घवा॑नो व॒यं च॑ ।
छा॒येव॒ विश्वं॒ भुव॑नं सिसक्ष्याप॒प्रि॒वान् रोद॑सी अ॒न्तरि॑क्षम् ॥ ८ ॥

---

१. दध॰ भ. २. नास्ति कु वि. ३. ॰चनस्य वि. ४. नास्ति कु. ५. ॰णो भ. ६. तेन भ. ७. ॰ष्टार भ. ८. नास्ति भ. ९. भुवि भ. १०-१०. ॰येय कु, ॰रे भ वि. ११. नास्ति मूको. १२-१२. त्रुटितम् वि[1]॰लर्प. † प्रदीप्तम् ल. ‡-‡ ॰मानाय यज्ञ॰ वि[1] भ[1]; ॰मानाय यज्ञार्हाः कु, ॰मानाय यज्ञा … म॰ ल. १३-१३. नास्ति कु. १४. चक्रुः कु. १५. ॰मानाः मूको.

यान् । राये । मर्तान् । सुसूदः । अग्ने । ते । स्याम । मघऽवानः । वयम् । च ।
छायाऽइव । विश्वम् । भुवनम् । सिसक्षि । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ॥८॥

स्कन्द० यान् राये धनाय मर्तान् सुसूद संस्करोषि हे अग्ने । यान् धनप्राप्तियोग्यान् करोषीत्यर्थः । ते स्याम मघवानः धनेन हविर्लक्षणेन धनवन्तः । वयम् च चशब्द एवार्थे । 'वयमेव । अस्मानेव[1] धनप्राप्तियोग्यान् कुर्वित्यर्थः । चशब्दश्रुतिसामर्थ्याद्वा[2] मघवानश्च वयञ्च स्यामेत्येवं व्याख्यातव्यम् । ये चान्ये हविर्लक्षणेन धनेन धनवन्तो वयञ्चेत्यर्थः । किञ्च छायेव यथा छाया नित्यसन्निहिता एवं त्वम् विश्वम् भुवनम् भूतजातम् सिसक्षि दहनपचनादिना सेवसे आपप्रिवान् स्वेन ज्योतिषा पूरयन् रोदसी अन्तरिक्षम् च ॥ ८ ॥

वेङ्कट० यान् त्वम् अग्ने ! धनाय मनुष्यान् प्रैरयः, ते वयम् स्याम । तदेवाह[3]—धनवन्त वयम् च इति छायेव विश्वम् भूतजात सेवसे 'पूरयन् त्रीन्' लोकान् ॥ ८ ॥

मुद्गल० हे अग्ने ! यान् मर्तान् मनुष्यानस्मान् राये धनाय सुसूद अग्निहोत्रादिकर्मसु प्रेरयसि, ते तादृशाः वयम् च मघवान धनिन स्याम भवेम । रोदसी द्यावापृथिव्यौ अन्तरिक्षम् च आपप्रिवान् स्वतेजसा आपूरितवान् त्वञ्च विश्वम् भुवनम् सर्वं जगत् सिसक्षि सेवसे । अनुगृह्य सर्वं रक्षसीत्यर्थः । दृष्टान्तः । छायेव यथा छत्रादेश्छाया आतपादिजनित क्लेशं निवार्य रक्षति तद्वत् ॥ ८ ॥

अर्वद्भिरग्ने अर्वतो नृभिर्नॄन् वीरैर्वीरान् वनुयामा त्वोताः ।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥ ९ ॥

अर्वत्ऽभि । अग्ने । अर्वत । नृऽभिः । नॄन् । वीरैः । वीरान् । वनुयाम । त्वाऽऊता ।
ईशानासः । पितृऽवित्तस्य । रायः । वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥९॥

स्कन्द० अर्वद्भिः आत्मीयैरश्वैः हे अग्ने । शत्रूणा स्वभूतान् अर्वत अश्वान्, नृभि नॄन् मनुष्यै मनुष्यान्, पुत्रैः पुत्रान् वनुयाम 'वनुष्यतिर्हन्तिकर्मा' ( या ५,२ ) । हन्यामेत्येवदाशास्महे । त्वोता त्वया रक्षिता सन्त । किञ्च ईशानासः पितृवित्तस्य पित्रा लब्धस्य राय धनस्य । सूरय सव स्तोतार सन्त । शतहिमा[4] 'शत हिमा.[5] । वर्षशतमित्यर्थ । न[6] अत्र षष्ठीनिर्देशात् पितृवित्तस्येति वचनात् पुत्रा इति वाक्यशेष । अस्माकं पुत्रा वि अश्युः विविध प्राप्नुयुरित्याशास्महे । त्वत्प्रसादेनास्मत्पुत्रा. पित्र्येण धनेनोपेता वर्षशत जीव्यासुरित्यर्थ. ॥ ९ ॥

वेङ्कट० अग्ने ! त्वया रक्षितास्सन्तो वयम् अश्वादिभि सहायभूतान् अश्वादीन् भजेमहि । ईश्वरा पितृलब्धस्य धनस्य अस्माकं पुत्रा.[7] शत संवत्सरान्[10] [11]वि अश्नुवीरन्[11] पितृलब्ध धनमिति ॥ ९ ॥

---

१ १. वयं च वास्मदेव अ. २. °शब्दः श्रुति° अ ३ हविर्लक्षणेन वि[1] अ[1]. ४ ४. पूरयित्रीन् वि[1] अ[1]. ५. हिमा म. १-६. नास्ति भ कु ७. नास्ति कु. ८ न. मरमा° कु. ९ नास्ति वि[1] अ[1], १०. वत्स° वि[1] अप; °रवाणि वि[1] अ[1]. ११-११. भश्नुवीरन् विविधं प्राप्नुयुः वि[1] अ[1].

मुद्गल० हे अग्ने! त्वोताः त्वया रक्षिताः सन्तो वयम् अर्वद्भिः अस्मदीयैरश्वैः अर्वतः शत्रुसम्बन्धिनोऽश्वान् नृभिः वीरैरस्मदीयैर्भटैः नॄन् शत्रोर्भटान् 'वीरैः स्वपुत्रैः' वीरान् शत्रुपुत्रांश्च वनुयाम हन्याम। पितृवित्तस्य पित्रादिपरम्परया लब्धस्य रायः धनस्य ईशानासः स्वामिनः सूरयः विद्वांसः नः अस्माकं पुत्राः शतहिमाः शतं संवत्सरान् जीवन्तः सन्तः वि अश्युः विशेषेण भुञ्जताम्[1]। अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः ॥ ९ ॥

एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥ १० ॥

एता। ते। अग्ने। उचथानि। वेधः। जुष्टानि। सन्तु। मनसे। हृदे। च।
शकेम। रायः। सुऽधुरः। यमम्। ते। अधि। श्रवः। देवऽभक्तम्। दधानाः ॥ १० ॥

स्कन्द० एतानि ते हे अग्ने! उचथानि अस्मदीयानि स्तुतिवचनानि हे वेधः! मेधाविन्! जुष्टानि प्रियाणि सन्तु। मनसे हृदे च मनोऽन्तःकरणम्। हृदयं[2] तदधिष्ठानम्, तयोरुभयोरपि। किञ्च शकेम शक्नोतेः कर्मभूतधात्वन्तरसापेक्षत्वात् कर्तुमिति वाक्यशेषः। शक्नुयाम कर्तुमित्येतदाशास्महे। किमर्थम्। रायः धनस्यार्थाय। किम्। उच्यते। सुधुरः यमम् ते शोभना धूर्यस्य स सुधूः[3] रथः, तस्य। यमं[4] बन्धनम्। स्ववेदां धारणमित्यर्थः। ते तव स्वभूतस्य। अधिशब्दः 'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः। श्रवः हविर्लक्षणमन्नम्। देवभक्तम् देवैः सेवितं देवानां वा आहारभूतम्। दधानाः [5]दधतः। यजन्त[5] इत्यर्थः ॥ १० ॥

अत्रान्तरे सौपर्णानि शौनकेनानुक्रान्तानि। तानि विशिष्टव्रतकाध्ययनत्वात् दुरध्येयानि इति प्रायेण लोको[6] नाधीते इति अतिप्रसङ्गभावान्नेहास्माभिः व्याख्यायन्ते। खिलव्याख्याने तु व्याख्यास्यन्ते ॥

वेङ्कट० एतानि ते अग्ने! वचनानि सूक्तानि विधातः! पर्याप्तानि भवन्तु[7] मनसे हृदयाय च। तव धनस्य यमनं[8] कर्तुम् सुधुरः वयम् शकेम, त्वया दत्तां लक्ष्मीं नियन्तुं[9] समर्था भवेम[10], देवैर्दत्तम्[11] अन्नं हविरग्नौ अधि दधानाः[12] ॥ १० ॥

मुद्गल० हे वेधः! मेधाविन्! अग्ने! एता उचथानि एतानीदानीमस्माभिः प्रयुक्तानि स्तोत्राणि ते तव मनसे मनोवृत्तये हृदे तद्वृत्तिमते अन्तःकरणाय च जुष्टानि सन्तु प्रियाणि भवन्तु। ते तव सम्बन्धिनः सुधुरः सुष्ठु निर्वाहकस्य रायः धनस्य यमम् नियमनं कर्तुम् शकेम शक्ता भूयास्म। किं कुर्वन्तः। देवभक्तम् देवैः सम्भजनीयम् श्रवः हविर्लक्षणमन्नम् अधि दधानाः अग्नेरुपरि धारयन्तः। अग्नौ हविर्भिर्होमं कुर्वन्त इत्यर्थः ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये विंशो वर्गः ॥

इति प्रथमे मण्डले द्वादशोऽनुवाकः ॥

---

१-१. भुञ्जताम् मूको. २. हृदं ति. ३. °धुरः मूको. ४. यमः भ. ५-५. ददत यजत कु भ; दधतः यजत ति. ६. लोके भ. ७. भवन्ति वि[1] अ[1]. ८. °मन बन्धन वि[1] अ[1]. ९. नास्ति एपे. १०. °वेम देवाः वि[1] अ[1]. ११. °देवरिवैत्तम् वि[1] अ[1]; देवैर्भक्तम् वि[2,3] अ[2] कु छ एप. १२. निर° वि[1] अ[1].

[ ७४ ]

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १ ॥

उपऽप्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति । च । शृण्वते ॥१॥

स्कन्द० 'उपप्रयन्तो गोतमो[1] राहूगण ऋषिः स्मृतः' । 'उपप्रयन्तः' इत्येवमादि गोतमो नाम रहूगणपुत्रोऽपश्यत् । उपगच्छन्तः अध्वरम् स्तुतिलक्षणम् मन्त्रम् नित्यम् वोचेम अग्नये इत्येतद्विरयमाशास्महे[2] । आरे सन्निकृष्टे व्यवस्थितायेति वाक्यशेषः । अस्मे[3] अस्माकं च शृण्वते । अस्मदीयस्तुतिश्रवणं प्रति सादराय, न निरादरायेत्यर्थः ॥ १ ॥

वेङ्कट० [4]गोतमो राहूगणः[†][5] । उपप्रगच्छन्तः[6] यज्ञम् मन्त्रम् वोचेम अन्वहम् अग्नये दूरेऽपि स्थित्वा अस्माकं वचनम् शृण्वते । अपेक्षिते[7] धने दूरे स्थितेऽपि[8] स्तोतुर्वचनं[9] शृणोतीति वाजसनेयके[10] उक्तम् इति[11] ॥ १ ॥

मुद्गल० त्रयोदशे अनुवाके एकादश सूक्तानि । तत्र 'उपप्रयन्तः' इति नवर्चं प्रथमं सूक्तम् । राहूगण [11]ऋषिः । गायत्री छन्दः[11] । अग्निर्देवता[12] ॥

अध्वरम् हिंसाप्रत्यवायरहितम् अग्निष्टोमादियज्ञम् उपप्रयन्तः उपेत्य प्रकर्षेण यन्तो गच्छन्तः । प्राप्याविच्छेदेन[13] सम्यगनुतिष्ठन्त इत्यर्थः । तादृशा वयम् अग्नये अङ्गनादिगुणयुक्ताय देवाय मन्त्रम् मननसाधनमेतत्सूक्तरूपं स्तोत्रम् वोचेम वक्तारो भूयास्मेत्याशास्यते । कीदृशायाग्नये[14] । आरे अस्मे च आरे च दूरेऽपि स्थित्वाऽस्माकं स्तुतीः शृण्वते । अस्मासु प्रीत्यतिशयेन सर्वत्र वर्तमानोऽग्निरस्मदीयमेव स्तोत्रं शृणोतीति भावः ॥ १ ॥

यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद् दाशुषे गयम् ॥ २ ॥

यः । स्नीहितीषु । पूर्व्यः । सम्ऽजग्मानासु । कृष्टिषु । अरक्षत् । दाशुषे । गयम् ॥ २ ॥

स्कन्द० किं करोत्यग्निः । उच्यते । यः[14] अग्निः पूर्व्यः पूर्वः । सर्वत उत्कृष्ट इत्यर्थः । [14]स्नीहितीषु क्रोधपतिर्वधकर्मा[†][14] ( तु. निघ २,१९ ) । हन्त्रीषु[15] । संजग्मानासु कृष्टिषु शत्रुमनुष्यजातिषु । अरक्षत् रक्षति । दाशुषे षष्ठ्यर्थे चतुर्थी । हवींषि दत्तवतो यजमानस्य । गयम् गृहम् । तस्मै मन्त्रं वोचेमेति यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता[17] ॥ २ ॥

१. गो° मूको. २. °ल्पिति° अ. ३. नास्ति अ. ४-४. राहूगणोः गोतम वि[1]; राहूगणः गोतमः अ[1]. † एतु° वि[1]. ५. °प्रपच्छ° कु लपं; उपगच्छ° वि[1] अ[1]. ६. °हे सति वि[1] अ[1]. ७. स्थितोऽपि कु लोपः. ८. स्तोतुश्च° वि[1]. ९. °नेयिके वि[1,1] लपं अ[1]. १०. नास्ति मै[1]. ११. नास्ति मै[1]. १२ °वतरि° मै[1]. १३. °दाग्ने मै[1]. १४. य स्नीहितीषु प्रतिस्निहते हन्त्री स्निहः अ. १५-१५. नास्ति अ. † °स्नेहिति° मूको. १६. हन्त्रीषु अ. १७. °ऽऽदे कु.

वेङ्कट० यः इन्तीषु सङ्गच्छमानासु शत्रुभूतासु[1] प्रजासु पुराणः अरक्षत्[2] यजमानाय[3] गृहं मह्यम्[4], तस्मै मन्त्रं[5] वोचेम ॥ २ ॥

मुद्गल० पूर्व्यः चिरन्तनः यः अग्निः स्नीहितीषु वधकारिणीषु कृष्टिषु शत्रुभूतासु प्रजासु संजग्मानासु सङ्गतासु[6] सतीषु दाशुषे हवींषि दत्तवते यजमानाय गयम् धनम् अरक्षत् रक्षति । तस्मै मन्त्रं वोचेम इति पूर्वेण सम्बन्धः ॥ २ ॥

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥ ३ ॥

उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रऽहा । अजनि । धनम्ऽजयः । रणेऽरणे ॥ ३ ॥

स्कन्द० उत शब्दोऽप्यर्थे । 'अपि अस्मदीयाः' ब्रुवन्तु मन्त्रमग्नये । जन्तवः जायमानत्वाज्जन्तवः पुत्रा इहाभिप्रेताः । अस्मदीयाः पुत्रा अपि ब्रुवन्तु, इत्येतदाशास्मह इत्यर्थः । अग्निः अपि वृत्रहा अस्मच्छत्रूणां हन्ता उत् अजनि ऊर्ध्वो[7] जायताम् । अस्मद्यज्ञेषु दीप्यतामित्यर्थः । धनञ्जयः[8] धनानां जेता रणेरणे[8] सर्वसङ्ग्रामेषु ॥ ३ ॥

वेङ्कट० काममेनं स्तुवन्तु मनुष्याः[8] । उत् अजनि अरण्योः अग्निः वृत्रहा युद्धे युद्धे धनस्य जेता[9] ॥ ३ ॥

मुद्गल० अग्निः उत् अजनि अरण्योः सकाशादुत्पन्नः । उत अनन्तरम् जन्तवः जनाः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु । कीदृशोऽग्निः । वृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता । रणेरणे[10] सर्वेषु सङ्ग्रामेषु धनञ्जयः शत्रुधनानां जेता ॥ ३ ॥

यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत् कृणोष्यध्वरम् ॥ ४ ॥

यस्य । दूतः । असि । क्षये । वेषि । हव्यानि । वीतये । दस्मत् । कृणोषि । अध्वरम् ॥ ४ ॥

स्कन्द० यस्य यजमानस्य दूतः असि भवसि क्षये गृहे च वेषि[11] वेतिः कान्त्यर्थः । कामयसे । हव्यानि वीतये भक्षणाय । भक्षयितुमिच्छसीत्यर्थः । दस्मत् दसि दर्शनदंशनयोः[12] इत्यस्यैतद्रूपम् । दर्शनीयं च कृणोषि अध्वरम् ॥ ४ ॥

वेङ्कट० यस्य दूतः भवसि । गृहे कामयसे च [13]हव्यानि भक्षणाय[13] । यस्य च यज्ञं दर्शनीयं करोषि ॥४॥

मुद्गल० हे अग्ने! यस्य यजमानस्य क्षये देवयजनलक्षणे गृहे देवानाम् दूतः त्वम् असि भवसि । यस्य च हव्यानि चरुपुरोडाशादीनि हवींषि वीतये देवानां भक्षणाय वेषि गमयसि । यस्य च अध्वरम् यज्ञम् दस्मत् सर्वैर्दर्शनीयम् कृणोषि करोषि । 'तमित् सुहव्यम्' इति उपरितन सम्बन्धः ॥ ४ ॥

---

1. शत्रून् (?'त्रुभू)तासु वि[1] अ[1]. 2. रक्षन् मूको. 3. 'नाय वि[1] अ[1]. 4. नास्ति वि[1] अ[1]. 5. नास्ति मूको. 6-6. नास्ति कु, भग्नाय् अ[1] अ वि. 7. ऊर्ध्वे वि. 8. 'नुष्याः देवो वि[1] अ[1]. 9. देवाः वि[1], जाग सर्व. 10. नास्ति मे[1]. 11. नास्ति अ. 12. दंदशदंनयोः मूको. 13-13. हव्य' भक्षणाय वि[1]; हव्याद्य' वि[1]; हव्यं भक्षणा सर्व.

तमित् सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषम् ॥ ५ ॥

तम् । इत् । सुऽहव्यम् । अङ्गिरः । सुऽदेवम् । सहसः । यहो इति । जनाः । आहुः । सुऽबर्हिषम् ॥ ५ ॥

स्कन्द० इत् शब्दोऽत्र एवार्थे । अङ्गिरःशब्दोऽपि कारणशब्दः सोऽयमित्यभिसम्बन्धात् कारणे प्रयुक्तः । अग्निर्ह्यङ्गिरसः कारणभूतः । एवं ह्यैतिहासिकाः स्मरन्ति — 'ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः' ( तु. बृदे ५,९९ ) इति । अथवाऽङ्गानि शरीरावयवाः । तद्वदङ्गि शरीरम् । तस्य स्थितिहेतुरशितपीतरसोऽङ्गिरसः । तस्य कर्ता अग्निः[1] अङ्गिराः । जाठरात्मना ह्यग्निरशितपीतं शरीरस्थितिहेतुभूतरसतामापादयति[2] । तस्याग्नेः सम्बोधनमिदम् अङ्गिरः ! इति । तम् एव सुहव्यम्[3] सुदेवम् शोभना 'देवा यस्य[4] स सुदेवस्तं सुदेवम् । देवानामानुग्राह्यमित्यर्थः । हे सहसः यहो ! बलस्य पुत्र ! बलेन मथ्यमानोऽग्निर्जायते तेन बलस्य पुत्र उच्यते । जनाः आहुः । न च केवलं सुहव्यं सुदेवञ्च । किं तर्हि । सुबर्हिषम् च ॥ ५ ॥

वेङ्कट० तम् एव[5] शोभनहविष्कम् अङ्गिरः ! जनाः आहुः सुदेवम् च सहसः पुत्र ! शोभनयज्ञञ्च ॥ ५ ॥

मुद्गल० हे सहसः यहो ! बलस्य पुत्र ! अङ्गिरः ! अङ्गनादिगुणयुक्ताग्ने ! यो यजमानः पूर्वमुक्तः तम् इत् तमेव यजमानम् सुहव्यम् शोभनहविष्कम् सुदेवम् शोभनदेवतम् सुबर्हिषम् शोभनयज्ञञ्च जनाः सर्वे मनुष्याः आहुः कथयन्ति ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये एकविंशो वर्गः ॥

आ च वहासि ताँ इह देवाँ उप प्रशस्तये । हव्या सुश्चन्द्र वीतये ॥ ६ ॥

आ । च । वहासि । तान् । इह । देवान् । उप । प्रऽशस्तये । हव्या । सुऽचन्द्र । वीतये ॥ ६ ॥

स्कन्द० उप शब्दोऽप्यपकृष्य आ[6] च वहासि इत्येतेन सम्बन्धयितव्य. । उपावह च । चशब्दश्रुतेर्यज चेति वाक्यशेषः । पदपूरणो वा चशब्दः । तान् तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । 'ये आवोढुं'[7] योग्याः तानिहास्मदीये यज्ञे देवान् । किमर्थम् । प्रशस्तये हव्या[8] षष्ठ्यर्थे तृतीयैषा[9] । हविषां च । हे सुश्चन्द्र ! 'चन्द्रः[10] चन्दतेः कान्तिकर्मणः' ( या ११,५ ) । सुकान्त ! वीतये भक्षणाय ॥ ६ ॥

वेङ्कट० उप आ वहसि च[11] तान् इह देवान् प्रशंसनाय इमानि हव्यानि सुकान्त ! देवानामशनाय भवेयुः ॥ ६ ॥

मुद्गल० हे सुश्चन्द्र ! शोभनाह्लादनाग्ने ! तान् देवान् इह अस्मिन् कर्मणि उप अस्मत्समीपम् प्रशस्तये स्तुतये आ वहासि च आवह प्रापय च । आगतेभ्यः हव्या हव्यानि[12] चरुपुरोडाशादीनि हवींषि वीतये भक्षणाय प्रापयेत्यर्थः ॥ ६ ॥

---

१. नास्ति कु. २. 'भूतं रस' कु लि. ३. 'व्यमङ्गिरः अ. ४-४. देवा वा यस्यानुग्राह्याः लि. ५. एव देवं वि[1] अ[1]. ६. नास्ति कु. ७-७. आवोढुं ये अ. ८. हव्या अ लि. ९. तथा तृतीय लि. १०. चन्द्र अ; नास्ति लि. ११. चेद् वि[1,2] अ[1]. १२. 'नि च मै'.

न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यम् ॥ ७ ॥

न । योः । उपब्दिः । अश्व्यः । शृण्वे । रथस्य । कत् । चन । यत् । अग्ने । यासि । दूत्यम् ॥७॥

स्कन्द० न तव यो यातीति यु, तस्य योः । देवलोकं गच्छत इत्यर्थः । उपब्दिः वाङ्नामैतत् ( नि घ १,११ )। अश्व्यः अश्वेषु भवः । ईदृशशब्दः शफशब्दो वेत्यर्थः । शृण्वे श्रूयते । नापि रथस्य कत् चन कदाचिदपि । कदा गच्छतः । यत् यदा हे अग्ने ! यासि दूत्यम् दूत कर्म । यजमानानां दूततां प्रतिपद्य देवलोकं गच्छसीत्यर्थः ॥ ७ ॥

वेङ्कट० न[1] गच्छतः शब्दः अश्वेषु भवः श्रूयते[2] कदाचिदपि रथस्य, यदा[3] अग्ने ! गच्छसि दूत्यम् । रक्षसामनन्ववचाराय[4] नि शब्दं गच्छसीति[5] ॥ ७ ॥

मुद्गल० हे अग्ने ! यत् यदा दूत्यम् देवानां दूतत्वम् यासि प्राप्नोषि कत् चन कदाचन तदानीं सर्वदाऽपि योः गच्छतस्तव रथस्य अश्व्यः अश्वैरुत्पादितः उपब्दिः श्रवणार्हः शब्दः न शृण्वे न श्रूयते । रथस्य शीघ्रगमनेनास्माभिः शब्दो नोपलभ्यत इत्यर्थः ॥ ७ ॥

त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः । प्र दाश्वाँ अग्ने अस्थात् ॥ ८ ॥

त्वाऽऊतः । वाजी । अह्रयः । अभि । पूर्वस्मात् । अपरः । प्र । दाश्वान् । अग्ने । अस्थात् ॥८॥

स्कन्द० त्वोतः त्वया उतः । सर्वकालं त्वया रक्षितः । वाजी हविर्लक्षणेनान्नेनान्नवान्[6] । उपकल्पितहविष्क इत्यर्थः । अह्रयः ह्री लज्जायाम् । शोभनत्वाद्धविषाम् अलज्जितः[7] । पूर्वस्मात् अपरः अर्वाग्देशवर्ती । नातिदूरचर इत्यर्थः । दाश्वान् यजमानः । हे अग्ने ! अभि प्र अस्थात् प्रपूर्वस्तिष्ठतिर्गत्यर्थः अभिप्रतिष्ठते । 'हविर्भिः स्तुतिभिर्भवन्तमभिगच्छतीत्यर्थः'[8] । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना । त्वद्रक्षितो हविष्मानलज्जितः पूर्वस्माद् अपरः । पूर्वमस्थितादनन्तर एवत्यर्थः । दाश्वान् हे अग्ने ! अभि प्र अस्थात् स्वर्गलोकमभिगच्छति । मरणोत्तरकालं स्वर्गलोकं प्राप्नोतीत्यर्थः ॥ ८ ॥

वेङ्कट० त्वया रक्षितः अन्नवान् अलज्जमानः[9] पूर्वस्मात् अपरः[10] याग्याकारः[11] पूर्वम् अयागाकारः[12] अभि प्र तिष्ठति उत्कृष्टे पदे यजमानः ॥ ८ ॥

मुद्गल० यः पुरुषः पूर्वस्मात् स्वस्मादधिकात्[13] अपरः निकृष्टो भवति, हे अग्ने ! स इदानीम् दाश्वान् तुभ्यं हवींषि दाता सन् त्वोतः त्वया ऊतः रक्षितः वाजी अन्नवान् अह्रयः लज्जारहितः प्रगल्भः सन् अभि प्र अस्थात् पूर्वमभिप्राप्य प्रतितिष्ठति । सर्वोत्कृष्टो भवतीत्यर्थः ॥ ८ ॥

उत द्युमत् सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ॥ ९ ॥

---

१. नास्ति वि[1] अ[1] २ यो न वि[1] ३. नास्ति लं[1] ४ °नववाराय ल कु, °नवचराय वि[1] अ[1] ५. गच्छति कु. ६ सेना अ, नास्ति कु वि ७ °लज्जयाद् कु ८ नास्ति भ ९ ९ हविर्भिरन्तं स्तुतिभिरभिगच्छती[1] भ; 'स्तुतिभिरभिगच्छती' कु वि ९ अलज्जमान् मूको ११ °पौरुषवान्[1] ... दारवप्र ... । यजमान अभि प्र ... स्वर्गलोकमभिगच्छति । मरणोत्तरकाले ... वि[1] अ[1] १२. ... ल कु. १३-१३ पूर्वस्मा° कु. ... वि[1] अ[1] १४ °धिकं मै[1].

उत । द्युऽमत् । सुऽवीर्यम् । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ॥ ९ ॥

स्कन्द० पूर्वस्यामृचि यद्यग्निरभिगम्यमानः, ततोऽत्र उत शब्दः पदपूरणः । अथ स्वर्गः, तत फलसमुच्चयादुतशब्दोऽप्यर्थे । मरणोत्तरकाल[1] स्वर्गं प्राप्नोति । अपि[2] असौ जीवते द्युमत् दीप्तिमद्धनं वा सुवीर्यम् शोभनेन वीर्येण सहितम् बृहत् महत् हे अग्ने! विवाससि विवासतिः परिचर्यायामन्यत्र । इह तु[3] दाशुष इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । ददासि । देवेभ्यः देव! दाशुषे हवींषि दत्तवते । यष्ट्रे[4] इत्यर्थः ॥ ९ ॥

वेङ्कट० अपि च दीप्तिमत् शोभनवीर्यम्[5] बृहत् अन्नं गमय प्रयच्छ देवेभ्यः देव! दाशुषे ॥ ९ ॥

मुद्गल० उत अपि च हे देव! द्योतमान! अग्ने! देवेभ्यः दाशुषे चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय बृहत् प्रौढं धनम् विवाससि गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । द्युमत् अतिशयेन दीप्तम् सुवीर्यम् शोभनवीर्योपेतम् ॥ ९ ॥

इति प्रथमाष्टके प्रथमाध्याये द्वाविंशो वर्गः ॥

[ ७५ ]

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥ १ ॥

जुषस्व । सप्रथःऽतमम् । वचः । देवप्सरःऽतमम् । हव्या । जुह्वानः । आसनि ॥ १ ॥

स्कन्द० जुषस्व[6] सप्रथस्तमम् सर्वत पृथुतमम् अत्यन्तविस्तीर्णमस्मदीय स्तुतिलक्षणम् वचः । देवप्सरस्तमम् प्सरः इति रूपनाम । देवस्याग्नेः रूपे अतिशयेन युक्तम् । अग्नेरूपाभिरूपप्रकाशनमित्यर्थः । हव्या जुह्वान प्रक्षिपन् आसनि आत्मीय आस्ये । हवींषि भक्षयन्नित्यर्थः ॥ १ ॥

वेङ्कट० सेवस्व सर्वत पृथुतमम्[7] वच अतिशयेन दीप्तरूपम्[8] । प्सः इति रूपनाम । रो मत्वर्थीयः । हव्यानि मास्ये प्रक्षिपन्[9] ॥ १ ॥

मुद्गल० 'जुषस्व' इति पञ्चर्चं द्वितीयं सूक्तम् । [10]राहूगण ऋषिः । गायत्री छन्दः । अग्निर्देवता[10] ॥

हे अग्ने! सप्रथस्तमम् अतिशयेन विस्तीर्णम् वच स्तोत्रलक्षणम्[11] अस्मदीयं वचनम् जुषस्व सेवस्व । कीदृशम् । देवप्सरस्तमम् देवाना प्रीणयितृतमम् । किं कुर्वन् । आसनि स्वास्ये हव्या हव्यानि स्तोकलक्षणानि हवींषि जुह्वान प्रक्षिपन् । इमानि स्तोकलक्षणानि हवींषि यथा मा नूनम्, तस्तथैव स्वकीयेन मुखेन स्वीकुर्वित्यर्थः ॥ १ ॥

अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसि ॥ २ ॥

अथ । ते । अङ्गिरःऽतम । अग्ने । वेधःऽतम । प्रियम् । वोचेम । ब्रह्म । सानसि ॥ २ ॥

---

१. अपि मर° मूको. २. नास्ति म कु. ३. तु कु. ४. यष्टे मः; पो वि. ५. ०वीर्यं वि°. ६. जुषे मः; नास्ति कु वि. ७. °तमः वि° अ°. ८. °रूप वि° अ°. ९. °ण वि°; °प वि° अ° ८. १०. नास्ति मै°. ११. स्तोत्र° मै°.

स्कन्द० अथ-शब्द आनन्तर्ये । अतोऽस्यानन्तरम् । अत परमित्यर्थ । ते तव हे अङ्गिरस्तम![1] अङ्गिरस ऋषेरतिशयेन कारणभूत[2] शरीरस्थितिहेतोर्वा अशितपीतस्य रसस्यातिशयेन कर्त ! हे अग्ने! वेधस्तम ![3] मेधाविंतम[4] प्रियम् वोचेम स्तुतिलक्षणम् ब्रह्म इत्याशास्महे । चिर सम्भजनीय वा ॥ २ ॥

वेङ्कट० अथ[4] ते अङ्गिरसा वरिष्ठ[1] अग्ने! प्राज्ञतम[5] प्रियम् वोचम स्तोत्र भजनीयम् ॥ २ ॥

मुद्गल० हे अङ्गिरस्तम! अतिशयेनाङ्गनादिगुणयुक्त[1] वेधस्तम! अतिशयेन मेधाविन्[1] अग्ने! अथ अनन्तरम् ते तुभ्यम् मानसि सम्भजनीयम् प्रियम् प्रीतिकरम् ब्रह्म स्तोत्रम् वोचेम वक्तारो भूयास्म ॥ २ ॥

· कस्ते॑ जा॒मिर्जना॑ना॒मग्ने॒ को दा॒श्व॑ध्वरः । को ह॒ कस्मि॑न्नसि श्रि॒तः ॥ ३ ॥

कः । ते॒ । जा॒मिः । जना॑नाम् । अग्ने॑ । कः । दा॒शुऽअ॑ध्वरः । कः । ह॒ । कस्मि॑न् । अ॒सि॒ । श्रि॒तः ॥३॥

स्कन्द० क ते तव जामि ज्ञाति[6] जनानाम् यजमानाना मध्ये[7] । हे अग्ने! को दाश्वध्वर दत्ताध्वर । पूर्वमपि कृतयाग इत्यर्थ । क ह हशब्दोऽत्र चार्थे । को वा साकाङ्क्षत्वात् प्रिय इति वाक्यशेष । कस्मिन् वा यजमाने असि श्रित आश्रितोऽसि । कश्चन 'ज्ञाति कृतोपकार' प्रियो[8] वा आश्रितो[9] येन निरुद्धोऽस्माकम् नागच्छसीति[11] आगमनविलम्बनादुपालम्भोऽयम् ॥ ३ ॥

वेङ्कट० क ते बन्धु जनेषु । कीदृशो वा तव इत्यज्ञ । कीदृशशीलस्त्वम् असि । कीदृशशीले वा आश्रितो भवसि ॥ ३ ॥

मुद्गल० हे अग्ने! जनानाम् मनुष्याणां मध्ये ते तव क जामि को बन्धु । त्व सर्वगुणैरधिकोऽसि । तवानुरूपो बन्धुर्नास्तीति भाव । को दाश्वध्वर दाशुर्दत्तोऽध्वरो यज्ञो यस्य स तथोक्त । त्वां यष्टुमपि समर्थ कोऽपि नास्तीत्यर्थ । क ह त्व कथम्भूत । त्वम् ईदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थ । कस्मिन् स्थाने श्रित आश्रित असि वर्तसे । तत्स्थानमपि न केनचित् ज्ञायते । मतस्त्वमस्माभि मासदृशिभि[12] कथमुपलब्धव्य इत्यपि प्रशस्यते ॥ ३ ॥

त्वं जा॒मिर्जना॑ना॒मग्ने॑ मि॒त्रो अ॑सि प्रि॒यः । सखा॒ सखि॑भ्य॒ ईड्यः॑ ॥ ४ ॥

त्वम् । जा॒मिः । जना॑नाम् । अग्ने॑ । मि॒त्रः । अ॒सि॒ । प्रि॒यः । सखा॑ । सखि॑ऽभ्यः । ईड्यः॑ ॥ ४ ॥

स्कन्द० त्वम् जामि जनानाम् ज्ञातिः सर्वयजमानानाम्, हे अग्ने! मित्र असि मित्रश्च असि, प्रिय च, सखा च । सखिभ्य षष्ठ्यर्थे चतुर्थ्येषा । सखीनाम् ईड्य- स्तुत्य ॥ ४ ॥

वेङ्कट० त्वम् बन्धु जनानाम् अग्ने! [13]प्रियम् मित्रश्च[14] भवसि । सखा[15] सखिभ्य[16] स्तोतृभ्य ॥ ४ ॥

मुद्गल० हे अग्ने! त्वम् उक्तप्रकारेणाऽचिन्त्यरूपोऽप्यनुग्रहीतृतया[16] सर्वेषां जनानाम् जामि बन्धु भासि ।

---

1. नास्ति कु. 2 नास्ति मूको. 3 °तरमं म; °स्तम् कु, °रिष ति. 4 अथा वि° अव. 5 प्रज्ञातम वि° म°. 6 जा त अति 7 मध्ये मध्ये म 8-8. प्रा°हितो° म, प्रा°हितो° ति. 9. कस्मिन् विशे ष. 10 कस्मिन्सद्भावोऽसि कु ति. 11. नागम° ति. 12. °दृशै°. 13 प्रियं मित्रश्च वि° म°. 14. सखा च वि° म°. 15 °भ्य स्तोतृणां च वि° म°. 16. °दृते° मूको

वथा प्रिय प्रीणयिता त्व यजमानानाम् मित्र प्रमीतेस्त्रायकोऽसि । ईड्य स्तुतिभि स्तुत्यस्त्वम् सखिभ्य समानख्यानेभ्य ऋत्विग्भ्य सखा सखिवद्वृत्यन्त प्रियोऽसि ॥ ४ ॥

यजा॑ नो मि॒त्रावरु॑णा॒ यजा॑ दे॒वाँ ऋ॒तं बृ॒हत् । अग्ने॒ यक्षि॒ स्वं दम॑म् ॥ ५ ॥

यज॑ । न॒ । मि॒त्रावरु॑णा । यज॑ । दे॒वान् । ऋ॒तम् । बृ॒हत् । अग्ने॑ । यक्षि॑ । स्वम् । दम॑म् ॥ ५ ॥

स्कन्द० यज न अस्माकमर्थाय मित्रावरुणौ । यज अन्यानपि देवान् । ऋतम् सत्यम् बृहत् महद् । सुष्ठु इत्यर्थ । अग्ने! यक्षि स्वम् दमम् उपशाम गृह वा । दमशब्देन[1] तद्वतोऽग्नरेव याग उच्यते । उपशामवन्तमात्मान यज्ञगृहादिगृहवन्त वा यजेत्यर्थ ॥ ५ ॥

वेङ्कट० यज अस्माक मित्रादीन् [2]बृहत् ऋतम् आदित्यम्[2] । स्वो दम स्वशरीरम् । त[3] च यज । 'अग्निमग्न आवह' ( तै २,५,९,४ ) इति मन्त्र [4] । सूक्ते मित्रादीना यागमाशास्ते ॥ ५ ॥

मुद्गल० हे अग्ने! न अस्मदर्थम् मित्रावरुणा एतत्सज्ञौ देवौ यज हविषा पूजय । तथा देवान् इन्द्रादीन् यज पूजय । ऋतम् सत्य यथार्थफल यज्ञ च यजेत्येव । तदर्थम् बृहत् प्रौढम् स्वम् स्वकीयम् दमम् यज्ञगृहम् यक्षि यज संगच्छस्व । त्वय्यन्तर्विद्यमाने सति हि यज्ञगृह पूज्यते ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये त्रयोविंशो वर्ग ॥

[ ७६ ]

का त॒ उपे॑ति॒र्मन॑सो॒ वरा॑य॒ भुव॑दग्ने॒ शंत॑मा॒ का म॑नी॒षा ।
को वा॑ य॒ज्ञैः परि॒ दक्षं॑ त आप॒ केन॑ वा ते॒ मन॑सा दाशेम ॥ १ ॥

का । ते॒ । उप॑ऽइति । मन॑स । वरा॑य । भुव॑त् । अग्ने॑ । शम्ऽत॑मा । का । म॒नी॒षा ।
क । वा॒ । य॒ज्ञै । परि॑ । दक्ष॑म् । ते॒ । आ॒प॒ । केन॑ । वा॒ । ते॒ । मन॑सा । दा॒शे॒म॒ ॥ १ ॥

स्कन्द० का ते तव उपेति उपगति[5] । मनस वराय वरशब्द श्रेष्ठवचन । षष्ठ्यर्थे चैषा चतुर्थी । श्रेष्ठस्य भुवत् भवति । हे अग्ने! शन्तमा सुखतमा । का वा मनीषा स्तुति । कयोपगत्योप गम्यमान स्तुत्या वा स्तूयमानस्त्व मनसा प्रीयस इत्यर्थ । क वा यजमान यज्ञै दक्षम् ते दक्षशब्दोऽत्रात्मवचन । 'धिय'स दक्ष मनसा जगृभ्यात्' ( ऋ १०,३१,२ ) इति यथा । मनोवचनो वा । 'उर्ति दक्षस्य सुभगत्वमस्मे' ( ऋ २,२१,६ ) इति यथा । तवात्मानं मना वा । परि आप सर्वतो व्याप्नोति । केन वा ते मनसा दाशेम हवींषि ददाम[6] । एतत्सर्व कथय । सुम्न वयम् ज्ञात्वा[7] कुर्म इत्यर्थ ॥ १ ॥

---

१ दमशब्देन अ. २-२. इत्यन्यमरि° वि[1] अ[2]. ३ त वि[1] अ[2]. ४. नास्ति वि[1]. ५. उपगत्यभिप्रेति ६. ददाम मूको ७. नास्ति अ.

वेङ्कट० कीदृशम्[1] तत्र उपगमनम् मनसः वारणाय का वा भवति सुखतमा[2] तव स्तुतिः कः वा यज्ञै त्वस्य वृद्धिम् आप। कीदृशेन[3] वा मनसा युक्ताः तुभ्यं ददाम[4] ॥ १ ॥

मुद्गल० 'का' इति पञ्चर्चं तृतीयं सूक्तम्। राहूगणो गोतम ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता॥

हे अग्ने! ते तव मनसः वराय निवारणाय अस्मास्ववस्थापनाय वा उपेतिः भुवत्। कीदृशम् उपगमनं भवेत्। न काप्यस्ति। तवोचितमुपगमनं वयं कर्तुं न शक्नुम इति भावः। मनीषा स्तुतिः शन्तमा तवातिशयेन सुखकरी। का कीदृशी भवेत्। तवोचिता स्तुतिरपि नास्तीत्यर्थः। कः वा यजमानः यज्ञैः ते तव सम्बन्धिभिर्यागैः दक्षम् वृद्धिम् परि आप पर्याप्नोत्[5]। न कोऽपीत्यर्थः। तवोचितान् यागान् अनुष्ठाय तैः फलं प्राप्यते इत्येतदपि दुर्घटमेवेति भावः। उपगमनादिकं तावदास्ताम् तस्य सर्वस्य साधनभूतं मनः एवास्माकं दुर्लभमित्याह केनेति। हे अग्ने! ते तुभ्यम् केन मनसा कीदृश्या बुद्ध्या दाशेम हवींषि प्रयच्छाम। तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यते इत्यर्थः ॥ १ ॥

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ २ ॥

आ। इहि। अग्ने। इह। होता। नि। सीद। अदब्धः। सु। पुरःऽएता। भव। नः। अवताम्। त्वा। रोदसी इति। विश्वमिन्वे इति विश्वम्ऽइन्वे। यज। महे। सौमनसाय। देवान् ॥ २ ॥

स्कन्द० एहि हे अग्ने! आगत्य च इह अस्मद्यज्ञे होता निषीद। निषद्य च अदब्धः[1] अहिंसितः केनचित्। सुष्ठु पुरएता सर्वकर्मस्वग्रतोगामी भव नः। पुरएतारं च भवन्तम् अवताम् त्वा रोदसी विश्वमिन्वे सर्वव्यापिन्यौ यज च महे सौमनसाय सौमनस्यायास्माकम् देवान् ॥ २ ॥

वेङ्कट० आगच्छ अग्ने! अत्र होता सन्। नि षीद अहिंसितस्त्वम्। सुष्ठु अस्माकम् अग्रतो गन्ता[7] भव। होत्रं कुर्वाणं त्वा सर्वव्यापिन्यौ द्यावापृथिव्यौ रक्षताम्। महते[8] सौमनसाय जय देवान् इति[9] ॥ २ ॥

मुद्गल० हे अग्ने! एहि आगच्छ। इह अस्मिन् यज्ञे होता देवानामाह्वाता सन् नि षीद उपविश। उपविश्य नः अस्माकम् पुरएता पुरतो गन्ता सु भव सुष्ठु भव। यस्मात् त्वम् अदब्धः राक्षसादिभिरहिंस्योऽसि। तादृशम् त्वा त्वाम् विश्वमिन्वे सर्वं व्याप्नुवत्यौ रोदसी द्यावापृथिव्यौ अवताम् रक्षताम्। आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्च सन् महे महते सौमनसाय सौमनस्याय देवान् दानादिगुणयुक्तान् इन्द्रादीन् यज हविर्भिः पूजय ॥ २ ॥

प्र सु विश्वान् रक्षसो धक्ष्यग्ने भवा यज्ञानामभिशस्तिपावा।
अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ ३ ॥

---

1. अतनुते कर्मो जपता भवत् कोमु दीप्यता कीदृशम् वि° अ°　2. नास्ति कु　3. एतावेन वि° अ°　4. °दाम वि° अ°　5. °प्नोत् मूको　6. नास्ति अ　7. गन्ता भवति सुखतमा तव स्तुतिः कः　8. °हते सौमन वि° अ°, ते वि° अ°.

प्र । सु । विश्वान् । रक्षसः । धक्षि । अग्ने । भव । यज्ञानाम् । अभिशस्तिऽपावा ।
अथ । आ । वह । सोमऽपतिम् । हरिऽभ्याम् । आतिथ्यम् । अस्मै । चकृम । सुऽदाव्ने ॥ ३ ॥

स्कन्द० सुष्ठु विश्वान् रक्षसः प्र धक्षि प्रदह हे[1] अग्ने ! । भव चास्माकं[2] यज्ञानाम् अभिशस्तिपावा हिंसितुः हिंसातो वा रक्षिता[3] । अथ अनन्तरञ्च आ वह सोमपतिम् इन्द्रम् हरिभ्याम् । किं कारणम् । उच्यते । वयम् आतिथ्यम् अस्मै चकृम कुर्मः सुदाव्ने[4] शोभनदात्रे ॥ ३ ॥

वेङ्कट० 'प्र दह सुष्ठु विश्वान् राक्षसान् अग्ने !'[5] । भव[6] त्वम् यज्ञानाम् उपद्रवस्य रक्षकः[7] । तत इन्द्रं[8] त्वदीयाभ्यामश्वाभ्यां सह आ वह[9] । आतिथ्यम् अस्मै इन्द्राय वयं कुर्मः शोभनदानाय ॥ ३ ॥

मुद्गल० हे अग्ने ! विश्वान् सर्वान् रक्षसः राक्षसान् प्र सु धक्षि प्रकर्षेण दह । दग्ध्वा च यज्ञानाम् अस्माभिरनुष्ठेयानां यज्ञानाम् अभिशस्तिपावा अभिशस्तेर्हिंसायाः पाता रक्षिता भव । अथ अनन्तरम् सोमपतिम् सर्वेषां सोमानां पालकमिन्द्रम् हरिभ्याम् तदीयाभ्यामश्वाभ्याम्[10] आ वह अस्मदीयं प्रापय । आगताय अस्मै सुदाव्ने शोभनफलस्य दात्रे इन्द्राय आतिथ्यम् अतिथ्यर्हं सत्कारम् चकृम कुर्मः ॥ ३ ॥

प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः ।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयन्तर्जनितर्वसूनाम् ॥ ४ ॥

प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः ।
वेषि । होत्रम् । उत । पोत्रम् । यजत्र । बोधि । प्रऽयन्तः । जनितः । वसूनाम् ॥ ४ ॥

स्कन्द० प्रजननं प्रजा, तद्वता अतिशयवद्देवतागुणोत्पादनशक्तियुक्तेनेत्यर्थः । वचसा आह्वानवचनेन । आसा तात्स्थ्यात् ताच्छब्द्यम् । मञ्चाः क्रोशन्तीति यथा । आस्यस्थेन । स्वयमेवोच्चारितेनेत्यर्थः । यद्वि प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रणम् । अतो "यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया" । यस्त्वं वह्निर्वोढा हविषां बलवान् वा स आ च हुवे व्यत्ययेनायं मध्यमस्य स्थाने उत्तमपुरुषः । आह्वय च देवान् । नि च सत्सि निषीद च इह अस्मदीयायां वेद्याम् आहूतैर्देवैस्सह । निषद्य च वेषि होत्रम् वेतिर्गत्यर्थः । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । उपगच्छ होतृताम् । होत्रं कुर्वित्यर्थः । उत पोत्रम् पोतृता[11] पोतृकर्माणि[11] च । सर्वकर्माणीत्यर्थः । हे यजत्र ! यष्टः ! यष्टव्य[12] वा । बोधि[13] बुध्यस्व चास्मदीयाः स्तुतीरित्यर्थः । हे प्रयन्तः ! दातः[†] जनितः ! उपायान्तरैश्चोत्पादयितः[14] । वसूनाम् धनानाम् ॥ ४ ॥

वेङ्कट० प्रजननवता प्रादुर्भवता वचसा गोत्राहम्[15] आस्येन 'आ हुवे त्वाम्' । त्वञ्च[16] निषीद यज्ञे देवैः

1 नास्ति भ 2 चास्मा° भ वि[1] [?], भस्मा° कु 3 नास्ति वि 4 °दाव्रे भ 5-5 नास्ति वि[1] भ[?] 6 भवत वि[1] भ[?] 7 °क्षक ह[?] 8 इन्द्रं वह वि[1] भ[?]. 9 नास्ति वि[1] भ[?] 10-10 अश्वाभ्यां मूको. 11-11. °मकर्म नेदं भ 12. नास्ति कु 13 पोत्रकर्मा° वि 14. नास्ति मूको 15. °न्त्रैर्य दिनवन्द भ; °पादयित कु, °पादयिता वि. 16 बोध्य हवियान् वि[1] भ[?]. † नास्ति वि[1] [?]

सह। कामयसे होतृकर्म पोतृकर्म च[1] यष्टव्य!। बुध्यस्व[2] प्रदावः! जनयितः!, धनानां दाता भवासीति[3] ॥ ४ ॥

मुद्गल० प्रजावता यजमानेभ्यो दातव्यापत्यादिफलोपेतेन वचसा स्तोत्रेण स्तुतः सन् योऽग्निः आसा आस्यस्थानीयया ज्वालया वह्निः देवेभ्यो हविषां वोढा, तमग्निम् आ न हुवे आह्वयामि। आहूतः सन् त्वम् इह अस्मिन् कर्मणि देवैः अन्यैः सह नि सत्सि च निषीद च। निषद्य च हे यजत्र! यजनीय! अग्ने! होत्रम् होत्रा क्रियमाणं कर्म उत अपि च पोत्रम् पोत्रा कृतं कर्म च वेषि कामयस्व। वसूनाम् धनानाम् प्रयन्तः! प्रकर्षेण नियन्तः! वसून्यस्मदायत्तानि कुर्वन् जनितः! आहुतिद्वारा सर्वस्य जनयितः! अग्ने! बोधि अस्मान् बोधय ॥ ४ ॥

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥ ५ ॥

यथा। विप्रस्य। मनुषः। हविःऽभिः। देवान्। अयजः। कविऽभिः। कविः। सन्।
एव। होतः। सत्यऽतर। त्वम्। अद्य। अग्ने। मन्द्रया। जुह्वा। यजस्व ॥ ५ ॥

स्कन्द० यथा विप्रस्य मनुषः मेधाविनो मनुष्यस्य हविर्भिः देवान् अयजः कविभिः मेधाविभिः ऋत्विग्भिः सह कविः[4] सन्, एवमेव ममापि हे होतः! अतिशयेन सत्य! त्वम् अद्य हे अग्ने! मन्द्रया मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। मोदयित्र्या जुह्वा हूयमानत्वात् जुहूराहुतिरभिप्रेता। तया यजस्व देवान् ॥ ५ ॥

वेङ्कट० यथा मेधाविनः मनोः प्रजापतेः हविर्भिः देवान् अयजः कविभ्योऽपि कविः सन्, एवम् होतः! अतिशयेन सत्य![5] अद्य त्वम् अग्ने! मन्द्रया ज्वालया देवान् यजस्व इति[6] ॥ ५ ॥

मुद्गल० कविः क्रान्तदर्शी सन् कविभिः मेधाविभिर्ऋत्विग्भिः सह विप्रस्य मेधाविनः मनुषः मनोर्यज्ञे[7] हविर्भिः चरुपुरोडाशादिभिः हे अग्ने! देवान् अयजः, एवमेव होतः! होमनिष्पादक! सत्यतर! अतिशयेन सत्सु साधो! अग्ने! त्वम् अद्य अस्मिन् यज्ञे मन्द्रया हर्षयित्र्या जुह्वा होमसाधनभूतया स्रुचा यजस्व देवान् हविर्भिः पूजय ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः ॥

[ ७७ ]

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत् कृणोति देवान् ॥ १ ॥

कथा। दाशेम। अग्नये। का। अस्मै। देवऽजुष्टा। उच्यते। भामिने। गीः।
यः। मर्त्येषु। अमृतः। ऋतऽवा। होता। यजिष्ठः। इत्। कृणोति। देवान् ॥ १ ॥

---

१. नास्ति वि[1]. २. प्राकस्व वि[1] अ[1]. ३. भवामि कु. ४. कविरिति भ. ५ सत्यतर(?) वि[1] अ[1]. ६. नास्ति कु. ७. °यज्ञे मे[1].

स्कन्द० कथा केन प्रकारेण हवींषि दाशेम ददाम अग्नये । या वा अस्मै एतदर्थो[1] देवजुष्टा अस्य देवस्य प्रिया अन्यै स्तोतृभि उच्यते भामिने 'भाम' (निघ २,१३) इति क्रोधनाम। स्तोतॄणामुपरि क्रोधवते दीप्तिमते वा गी स्तुतिः[2]। कथयत भो स्तोतार 'ऋत्विज' वा, सुखं ज्ञात्वा वयमपि तथा कुर्म इत्यर्थ । किं करोत्यग्नि । उच्यते । य मर्त्येषु अमृत ऋतावा सत्यवान् यज्ञवान् वा । होता यजिष्ठ यष्टृतम । इत् शब्द पदपूरण । कृणोति देवान्। यो मनुष्यलोके देवानाह्वयतीत्यर्थ ॥ १ ॥

वेङ्कट० 'कथम् अग्नये हवि'[3] दाशेम । या वा अस्मै देवै जुष्टा कल्याणी उच्यते शत्रुषु[4] क्रोधवते स्तुति. । य अमृत मनुष्येषु देवान् कृणोति सत्यवान् ह्वाता[5] यष्टृतम ॥ १ ॥

मुद्गल० 'कथा' इति पञ्चर्चं चतुर्थं सूक्तम् । 'गोतम ऋषि । अनुष्टुप् छन्द । अग्निर्देवता'[6] ॥
अस्मै अग्नये कथा दाशेम कथं हवींषि ददाम । अग्नेरनुरूप यज्ञ कर्तुमशक्ता वयमित्यर्थ । अथ च तस्मै भामिने तेजस्विनेऽग्नये देवजुष्टा सर्वैर्देवै सेवितव्या गी स्तुतिरपि का कीदृशी उच्यते । तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः । अमृत मरणरहित ऋतावा ऋतवान् सत्यवान् होता देवानामाह्वाता यजिष्ठ अतिशयेन यष्टा, एवम्भूत य अग्नि मर्त्येषु मरणधर्मसु अस्मासु वर्तमान सन् देवान् इत् कृणोति हविर्भिर्युक्तान् करोत्येव । तादृशायाऽग्नये कथा दाशेमेति पूर्वेणान्वय ॥ १ ॥

यो अ॑ध्व॒रेषु॒ शंत॑म ऋ॒तावा॒ होता॒ तमू॒ नमो॑भि॒रा कृ॑णुध्वम् ।
अ॒ग्निर्यद् वेर्मर्ता॑य दे॒वान्त्स चा॒ बोधा॑ति॒ मन॑सा यजाति ॥ २ ॥

यः । अ॒ध्व॒रेषु॑ । शम्ऽत॑म । ऋ॒तऽवा॑ । होता॑ । तम् । ऊं॒ इति॑ । नमः॑ऽभिः । आ । कृ॒णु॒ध्व॒म् ।
अ॒ग्निः । यत् । वेः । मर्ता॑य । दे॒वान् । सः । च॒ । बोधा॑ति । मन॑सा । य॒जा॒ति ॥ २ ॥

स्कन्द० य अग्नि अध्वरेषु शतम सुखतम ऋतावा होता । यज्ञेषु हौत्र करोतीत्यर्थ । तम् उ उकार[7] एवार्थे । तमेव[8] नमोभि नमस्कारै स्तुतिर्विलक्षणैर्वा[9] आ कृणुध्वम् [10]आत्माभिमुख कुरुत[10] हे मत्पुत्रा 'ऋत्विज' वा । कस्मात् । उच्यते । अग्नि यत् यस्मात् वे हवींषि गृहीत्वा गच्छति । मर्ताय मनुष्यस्यार्थाय[11] देवान् प्रति । स च बोधाति चशब्दो बोधातीत्यस्मात् परो द्रष्टव्य । यस्माच्च सोऽग्निर्बोधयति च देवान् । किम् । सामर्थ्याद् स्तुती । देवान् स्तोतीत्यर्थ । मनसा यजाति चित्तेन च[12] यजति सादरश्च देवान् यजतीत्यर्थ ॥२॥

वेङ्कट० य यज्ञेषु [13]सुखतम ऋतावा होता भवति, [13]तम् यूय नमस्कारै आत्माभिमुख कुरुत । अग्नि यस्मात् मनुष्यार्थं †देवान् जानाति†[12] स चेद् बुध्यते यक्ष्यामीति, तत बुद्धिपूर्वमेव यजति ॥ २ ॥

---

१. ॰दर्थाय कु. २ स्तुती अ ३-३. त्रुटितम् वि[1] ४. नास्ति वि[1] ल्प ५. होता वि[1] अ[1] ६-६. नास्ति मे[1]. ७ उकार मूको. ८. नास्ति मूको ९ ॰र्वा तमेव मूको १०-१० ॰री कुरुत अ ११ ॰र्थम॰ अ वि. १२ नास्ति अ. १३-१३ त्रुटितम् वि[1]. †-† देवार्थं जा(या) वि[1] वि[1] ल्प; देवान् जानाति वि[1] अ[1]; देवान् गच्छति कु, देवान् छ.

मुद्गल० यः अग्निः अध्वरेषु यागेषु शन्तमः अतिशयेन सुखकारी ऋतावा सत्यवान् । यथार्थदर्शीत्यर्थः । होता देवानामाह्वाता भवति । हे ऋत्विग्यजमानाः! यूयम् तमु तमेवाग्निम् नमोभिः स्तोत्रैः आ कृणुध्वम् अभिमुखीकुरुत । यत् यदा अयम् अग्निः मर्ताय मनुष्याय यजमानार्थम् देवान् वेः वेति गच्छति तदानीम् सः अग्निर्यष्टव्यान् सर्वान् देवान् बोधाति च जानाति च। ज्ञात्वा च मनसा नमसा तान् यजाति हविर्भिः पूजयति। अतस्तमेवाग्निम् आ कृणुध्वमिति योज्यम् ॥ २ ॥

स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥ ३ ॥

सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ।
तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ॥ ३ ॥

स्कन्द० हि-शब्दः पदपूरणः । सः अग्निः क्रतुः[1] कर्ता प्रज्ञानरूपो वा । सः मर्यः मनुष्याकारः । सः साधुः सानुग्रहचित्तः । कथम् । मित्रः न मित्र इव देवताविशेषः । अथवा मित्र इति व्यत्ययेन पुँल्लिङ्गता । मित्रम्[2] इव । यथा यद्यस्य मित्रं तत्तस्योपरि साधु[3] एवं सर्वस्योपरीत्यर्थः । भूत् भवति अद्भुतस्य महतो यज्ञस्य रथीः नेता । तम् एव मेधेषु यज्ञेषु प्रथमम् उत्कृष्टम् देवयन्तीः देवान् कामयमानाः विशः ब्राह्मणादिमनुष्यजातयः[4] उप ब्रुवते उपगम्य ब्रुवते यद्विवक्षितम् । दस्मम् दर्शनीयमुपक्षपयितारं वा तमसां शत्रूणां वा । कीदृश्यो विशः । उच्यते । आरीः अर्तेर्वा गत्यर्थस्य आङ्पूर्वस्य वा रातेर्दानार्थस्येदं रूपम् । अभिगन्त्र्यः दात्र्यो वा हविषामित्यर्थः ॥ ३ ॥

वेङ्कट० [5]सः हि कर्ता, सः मारकः, सः साधयिता सखेवाऽभूत्[5] महतः [6]नेता । तम्[6] यज्ञेषु प्रथमम् [7]देवयन्त्यः प्रजाः[7] उप स्तुवन्ति [8]दर्शनीयं गमन्यः[8]† ॥ ३ ॥

मुद्गल० सः हि अग्निः क्रतुः कर्मणां कर्ता । सः एव मर्यः मर्त्यः मारयिता विघ्नस्योपसंहर्ता साधुः साधयितोत्पादयिताऽपि । सः एव अद्भुतस्य अल्पस्य धनस्य रथीः रंहयिता प्रापयिता भूत् भवति । दृष्टान्तः । मित्रः न यथा सखा धनानि प्रापयति तद्वत् । एवम्भूतो योऽग्निः तम् तमेव[9] मेधेषु यज्ञेषु देवयन्तीः देवयन्त्यो देवानात्मन इच्छन्त्यः विशः प्रजाः प्रथमम् उप ब्रुवते स्तुतिभिरुपेत्य प्रधानभूत इति कथयन्ति । कीदृश्यो विशः । दस्मम् दर्शनीयं तमग्निम् आरीः गच्छन्त्यः । भजन्त्य इत्यर्थः ॥ ३ ॥

स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिम् ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयन्त मन्म ॥ ४ ॥

---

१. नास्ति मूको. २. नास्ति भ. ३. साधुः कु. ४.४. °जातिः वि. ५-५. पुरहितम् वि[१]. ६-६. नेतारम् वि[२]. ७-७. देवस्य वि[१] अ[१]. ८-८. °नोयाग्म्यः वि[१]. † अर्यः कु; मरयः(?) ल. ९. तमेव मे[१].

स । नः । नृणाम् । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिम् ।
तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयन्त । मन्म ॥ ४ ॥

स्कन्द० स नः अस्माकं स्वभूतानाम् नृणाम्[1] नृतमः मनुष्याणां मध्ये प्रकृष्टो मनुष्यः । देवा अपि हि मनुष्याकारत्वात् मनुष्याः उच्यन्ते । रिशादाः रिशतामसिता[2] क्षेप्ता । हिंसतां प्रतिहिंसितेत्यर्थः । अग्निः गिरः स्तुतीः अवसा हविर्लक्षणेनान्नेन सह वेतु कामयताम् । धीतिम्[3] कर्म च यागाख्यम् । न च केवलानामस्माकम् । किं तर्हि । तना च 'तना' ( निघ २,१० ) इति धननाम । हविर्लक्षणेन धनेन । अन्येऽपि ये मघवानः धनवन्तः सन्तः । शविष्ठाः 'शवतिर्गतिकर्मा' ( या २ २ ) । अतिशयेनोपगन्तारः । वाजप्रसूताः षू प्रेरणे । लिप्सितेनान्नेन प्रेरिताः । अन्नलाभार्थमित्यर्थः । इषयन्त इषु गतौ । गमयन्ति[4] । उच्चारयन्तीत्यर्थः[5] । मन्म मन्यतेरर्चतिकर्मण इदं रूपम् । मननम् । स्तुतिं ये इषयन्त[6] तेषामपि गिरोऽवसा अग्निः[7] वेतु धीतिम् चेत्येवं[8] तच्छब्दमध्याहृत्य यच्छब्दो निराकाङ्क्षीकर्तव्यः[9] ॥ ४ ॥

वेङ्कट० स अस्माकं नेतॄणां वरिष्ठः रिशतामसिता[10] [11]अग्निः स्तुतीः रक्षणार्थं कामयतां कर्म च । धनेन।[11] ये धनवन्तः अतिशयेन बलिनः प्रेरितहविष्काः ऐच्छन् अग्ने स्तोत्रं तेषामस्माकम् इति ॥ ४ ॥

मुद्गल० नृणाम् यज्ञस्य नेतॄणां मध्ये नृतमः अतिशयेन नेता रिशादाः रिशानां शत्रूणामत्ता भक्षयिता । एवंविधः स अग्निः नः अस्माकम् गिरः स्तुतीः अवसा हविर्लक्षणेनान्नेन युक्ताम् धीतिम् कर्म च वेतु कामयताम् । अपि च ये यजमानाः तना विस्तृतेन धनेन मघवानः धनवन्तः शविष्ठाः अतिशयेन बलिनश्च सन्तः वाजप्रसूताः प्रसूतः प्रेरितः वाजो हविर्लक्षणमन्नं यैस्तादृशाः भूत्वा मन्म अर्चेर्मननरूपं स्तोत्रम् इषयन्त एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति । तेषामपि स्तुतिमग्निः कामयतामिति भावः ॥ ४ ॥

एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।
स एषु द्युम्नं पीपयत् स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥ ५ ॥

एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट । जातऽवेदाः ।
स । एषु । द्युम्नम् । पीपयत् । सः । वाजम् । सः । पुष्टिम् । याति । जोषम् । आ । चिकित्वान् ॥

स्कन्द० एवमस्माभिः अग्निः गोतमैः ऋतावा विप्रेभिः अस्तोष्ट स्तुतः जातवेदाः जातप्रज्ञानः । सः एषु द्युम्नम् धारयन् एष्विति पञ्चम्यर्थे सप्तमी । 'द्युम्नम्' ( निघ २, १० ) इति धननाम ।

---

१. नृणां ति २. 'तामसि मूको ३. नास्ति अ. ४. गमयति मूको ५ 'रयतीव' मूको. ६. इषयन्ते कु. ७ नास्ति मूको. ८ चेत्येव अ ९ 'ङ्क्षीकार्यं अ १० 'ताम् वि^२ अ^२. ११-११. नास्ति वि^२ अ^२. † भतं कु →

सोऽग्निरेयामस्माक धन वर्धयतु। स एव वाजम् अन्नम्। स एव[1] पुष्टिम् याति यातिरत्रान्तर्णी तण्यर्थो द्रष्टव्य। लोडर्थे च लट्। यातु। ददात्वित्यर्थ। जोषम् 'जुषते हर्यति' (निघ २,६) इति कान्तिकर्मसु[2] पाठात् जोपशब्दोऽत्र कामवचन। कामम् आ चिकित्वान्। प्रार्थना[3] जानन्नित्यर्थ ॥ ५ ॥

वेङ्कट० [4]एवम्† अग्नि गोतमै‡ सत्यवान् ब्राह्मणे अस्तोष्ट जातप्रज्ञ। स § गोतमेषु अन्न बलञ्च वर्धयतु। स पोष गमयति अभिलषित जानन्[7] इति[8] ॥ ५ ॥

मुद्गल० ऋतावा यज्ञवान् जातवेदा जातधनोऽयम् अग्नि विप्रभि मधाविभि गोतमभि ऋषिभि एव एवमुक्तेन प्रकारेण अस्तोष्ट स्तुतोऽभूत्। स्तुतश्च स अग्नि एषु गोतमेषु द्युम्नम् द्योतमान सोमम् पायथत् अपिबत्। स एव वाजम् सोमलक्षण[9] चरुपुरोडाशादिलक्षण हविश्च स्वीकरोतु। स अग्नि जोषम् अस्माभि कृत सेवनम् आ चिकित्वान् आ समन्तात् जानन् पुष्टिम् याति पोषमाप्नोतु ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये पञ्चविंशो वर्ग ॥

[ ७८ ]

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे। द्युम्नैरभि प्र णोनुमः ॥ १ ॥

अभि। त्वा। गोतमा। गिरा। जातऽवेद। विऽचर्षणे। द्युम्नै। अभि। प्र। नोनुम ॥ १ ॥

स्कन्द० अभि इत्युपसर्ग अभि प्र णोनुम इत्याख्यातेन सम्बध्यते। त्वा त्वा वय गोतमा गोतमनामान गिरा हे जातवेद! विद्रष्टव्य[1] द्युम्नै धनै गोभिरश्वैर्वा[6] हेतुभूतै[6]। धनादिलाभायेत्यर्थ। अभि अभि प्र णोनुम। नौतिरर्चतिकर्मा (द्र निघ ३,१४)। यत्र पौन पुन्येन[7] उपसर्गाभ्यास[12] तत्र[13] तत्सम्बन्धिन[11] क्रियापदस्याप्यभ्यासो द्रष्टव्य। अभिप्रणोनुमोऽभिप्रणोनुम इति। 'अभ्यास[11] भूयांसमर्थं मन्यन्ते, यथा अहो दर्शनीय! अहो दर्शनीय!' (या १०,४२) इति। पुन पुन पुनरभिष्टुम इत्यर्थ ॥ १ ॥

वेङ्कट० आभिमुख्येन प्रकर्षेण स्तुम त्वाम् गोतमा वयम् गिरा जातवेद! विद्रष्ट[1] भयार्थम्[13]। अभि[14] द्वितीयासारक ॥ १ ॥

मुद्गल० 'अभि त्वा' इति पञ्चर्चं पञ्चम सूक्तम्[15]। गोतम ऋषि[15]। गायत्री छन्द[15]। अग्निर्देवता[15] ॥

हे जातवेद! जातानां वेदित[1] विचर्षणे! विशेषेण सर्वस्य द्रष्ट[1] एवम्भूतात्र[1] त्वा त्वाम् गोतमा अस्य सूक्तस्य द्रष्टा गोतम ऋषि। ऋषेरेकत्वेऽपि पूजार्थं बहुवचनम्। गिरा स्तोत्रलक्षणया वाचा अभि आभिमुख्यनाम्नोदिति शेष। तद्वत् वयमपि त्वाम् द्युम्नै त्वदीयगुणप्रकाशकैर्मन्त्रै अभि प्र णोनुम आभिमुख्येन पुन पुन स्तुम ॥ १ ॥

---

१ नास्ति ति २ °तत्र° भ ३. °नयो भ ति ४ ४ नास्ति वि° अ°. † ए° वि[11] अ° ल सर्पे ‡ गो° वि° अ° § म° वि° अ° ५. नास्ति कु ६ 'धन मैं' ७ दतोमि° भ कु ८ °शैरी भ ९ °पुन्ये भ १० °भ्यास भ ११ नास्ति भ ति १२ नास्ति वि १३ °से न मूको १४ भद्र ने ल कु १५ नास्ति वि° लर १६ नास्ति मैं°.

तमु॑ त्वा॒ गोत॑मो गि॒रा रा॒यस्का॑मो दुवस्यति । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥ २ ॥

तम् । ऊँ इति॑ । त्वा॒ । गोत॑मः । गि॒रा । रा॒यःऽका॑मः । दु॒व॒स्य॒ति॒ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥२॥

स्कन्द० उकारः पदपूरणः । य उक्तगुणोऽसि, तम् त्वा गोतमः गिरा रायस्कामः धनकामः दुवस्यति परिचरति । स्तौतीत्यर्थः । परस्तु पाद आध्यात्मिकत्वात् बहुवचनयोगाच्च[2] भिन्नं वाक्यम् । तेन तुल्यार्थत्वेऽप्यपुनरुक्तता ॥ २ ॥

वेङ्कट० तम् त्वाम्[3] गोतमः स्तुत्या धनकामः परिचरति । वचनयोरुक्ता[4] सङ्गतिः ॥ २ ॥

मुद्गल० रायस्कामः धनकामः गोतमः यमग्निम् गिरा स्तुत्या दुवस्यति परिचरति, तमु तमेव त्वा त्वाम् द्युम्नैः द्योतमानैः स्तोत्रैः अभि प्र णोनुमः आभिमुख्येन पुनःपुनः स्तुमः ॥ २ ॥

तमु॑ त्वा वाज॒सात॑ममङ्गिर॒स्वद्ध॑वामहे । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥ ३ ॥

तम् । ऊँ इति॑ । त्वा॒ । वा॒ज॒ऽसात॑मम् । अ॒ङ्गि॒र॒स्वत् । ह॒वा॒म॒हे॒ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ३ ॥

स्कन्द० तम् त्वा वाजसातमम् षणु दाने । अन्नानां दातृतमं सम्भक्तृतमं[5] वा हविर्लक्षणानामन्नानाम् अङ्गिरस्वत् हवामहे । आहूय च द्युम्नैः अभि प्र णोनुमः ॥ ३ ॥

वेङ्कट० तम् त्वामतिशयेनान्नानां[6] दातारम् अङ्गिरस्वत् हवामहे ॥ ३ ॥

मुद्गल० हे अग्ने! वाजसातमम् वाजानामन्नानामतिशयेन सनितारं दातारम्[7] तमु तमेव त्वा त्वाम् अङ्गिरस्वत् अङ्गिरस इव हवामहे आह्वयामः । द्युम्नैः । 'शिष्टं पूर्ववत्' ॥ ३ ॥

तमु॑ त्वा वृत्र॒हन्त॑मं॒ यो दस्यूँ॑रव॒धूनु॒षे । द्यु॒म्नैर॒भि प्र प्रणो॑नुमः ॥ ४ ॥

तम् । ऊँ इति॑ । त्वा॒ । वृ॒त्र॒हन्ऽत॑मम् । यः । दस्यू॑न् । अ॒व॒ऽधू॒नु॒षे । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ४ ॥

स्कन्द० यः दस्यून् अनार्यान् अवधूनुषे धूञ् कम्पने । भयेन कम्पयसि । तम् त्वा वृत्रहन्तमम् शत्रूणां हन्तृतमम् द्युम्नैः ॥ ४ ॥

वेङ्कट० तम् एव त्वाम्[8] अतिशयेनोपद्रवाणां हन्तारम्, यः त्वं राक्षसानवधूनोषि[10] ॥ ४ ॥

मुद्गल० हे अग्ने! दस्यून् उपक्षपयितॄन् राक्षसादीन् यः त्वम् अवधूनुषे अवधाळयसि स्थानात्प्रच्यावयसि । वृत्रहन्तमम् वृत्राणां पाप्मनामतिशयेन हन्तारम् तमु त्वा तमेव त्वाम् द्युम्नैः । शिष्टं पूर्ववत् ॥ ४ ॥

---

१. नास्ति मूको. २. "वनयोगो" अ वि. ३. त्वा वि[1] अ[1] छपं. ४. °योरुक्ता कु. ५. सम्भक्तृतमं कु. ६. 'शयेनाथ धनानां वि[1] अ[1]. ७. नास्ति मै[2]. ८-८, नास्ति मूको. ९. त्वा वि[1] अ[1]. १०. 'धूनोषि छपं; °नेव धुनोषि वि[1] अ[1].

अवो॑चाम॒ रहू॑गणा अ॒ग्नये॒ मधु॑मद्व॒चः॑ । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥ ५ ॥

अवो॑चाम । रहू॑गणाः । अ॒ग्नये॑ । मधु॑ऽमत् । वचः॑ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ५ ॥

स्कन्द० पूर्वं यावत् अवोचाम उक्तवन्तो वयम् रहूगणाः रहूगणस्य पुत्राः अग्नये मधुरं मधुमत् प्रीतिकरं स्तुतिलक्षणम् वचः । इदानीमपि द्युम्नैः अभि 'प्र नोनुमः'[1] ॥ ५ ॥

वेङ्कट० उक्तवन्तः रहूगणपुत्राः[2] अग्नये रसवत् स्तोत्रम् । द्युम्नैः च अभि प्र नोनुमः ॥ ५ ॥

मुद्गल० ऋषिः कृतं स्तोत्रमनयोपसंहरति । रहूगणाः रहूगणस्य पुत्रा वयं गोतमाः अग्नये अङ्गनादिगुणयुक्ताय देवाय मधुमत् वचः माधुर्योपेतं वचनम् अवोचाम प्रावादिष्म । तद्वचनरूपैः द्युम्नैः द्योतमानैः स्तोत्रैः पुनःपुनरग्निं वयम् अभि प्र नोनुमः आभिमुख्येन प्रकर्षेण स्तुमः ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये षड्विंशो वर्गः ॥

[ ७९ ]

हिर॑ण्यकेशो॒ रज॑सो विसा॒रेऽहि॒र्धुनि॒र्वात॑ इव॒ ध्रजी॑मान् ।
शुचि॑भ्राजा उ॒षसो॒ नवे॑दा॒ यश॑स्वतीरप॒स्युवो॒ न स॒त्याः ॥ १ ॥

हिर॑ण्यऽकेशः । रज॑सः । वि॒ऽसा॒रे । अहिः॑ । धुनिः॑ । वातः॑ऽइव । ध्रजी॑मान् ।
शुचि॑ऽभ्राजाः । उ॒षसः॑ । नवे॑दाः । यश॑स्वतीः । अ॒प॒स्युवः॑ । न । स॒त्याः ॥ १ ॥

स्कन्द० 'तृचो हिरण्यकेशादिरग्नये[3] मध्यमाय वा'। अयं तृचो हिरण्यकेशादिः[4] मध्यमाय वा[5] वैद्युताग्नये पार्थिवायैव वा पूर्वप्रकृताय । उज्ज्वलवर्णतया हिरण्यसदृशी दीप्तिर्यस्य सः हिरण्यकेशः अग्निः । रजसः उदकस्य विसारे विगमनकाले । वृष्टिकाले इत्यर्थः । अहिः धुनिः 'अहिः' ( निघ १,१० ) इति मेघनाम । षष्ठ्यर्थे चैषा प्रथमा । मेघस्य धूनयिता कम्पयिता । वृष्टिकाले वैद्युतोऽग्निर्वर्षितेत्यर्थः[6] । कीदृशः । उच्यते । वात इव ध्रजीमान् ध्रजिर्गतिकर्मा ( तु. निघ २,१४ ) । गतिमान् । अत्यन्तशीघ्रगतिरित्यर्थः । शुचिभ्राजाः[7] शुद्धदीप्तिः । क इव । उषसः नवेदाः यशस्वतीः अपस्युवः न सत्याः अपस्युवो नेति नशब्द उपमायाम् । शिष्टानि तूपमानभूतानाम् उषसां विशेषणानि । यथोषसः नवेदाः मेधाविनामैतत् ( तु. निघ ३,१५ ) । व्यत्ययेन चानेकवचनम् । मेधाविन्यः । यशस्वतीः कीर्तिमत्यः हविर्लक्षणेन च[8] धनेन[9] धनवत्यो वा । अपस्युवो यागकर्मकामाः । सत्याः अविसंवादिन्यः शुचिभ्राजसः[6] तद्वत् । अथवा नवेदा इत्येकवचननिर्देशाद् उपमेयस्याग्नेः[6] विशेषणम् । यशस्वतीरित्यादिगुणाः यथोषसः शुचिभ्राजसः तद्वन्मेधावी अग्निः शुचिभ्राजाः इत्येवं मध्यमेऽग्नौ योजना । 'पार्थिवे तु' उदकं विसार्यते येन स रजसो विसारः यज्ञः । अहिरिति

---

1-1. नास्ति मूको. 2. रहू॰ ल कु. 3. 'केशादिभिर' भ; 'केशाभिर' वि. 4. 'केशादिभिः भ; 'केशानिः वि. 5. नास्ति वि. 6. 'यति' भ. 7. नास्ति मूको. 8. 'भ्राजः मूको. 9. मधुमेव' वि. 10-10. नास्ति भ.

आङ्पूर्वस्य हि गतावित्यस्य रूपम्। वृष्टिहेतौ पक्षे पार्थिवोऽग्निराहवनीयात्मनाङ्गभाव[1] गन्तरयर्थ । धुनि कम्पिता स्वयम्, भयन वा[2] कम्पयिता शत्रूणाम्। शिष्टपदयोजना[3] तु सदृशी ॥ १ ॥

वेङ्कट० हिरण्यसदृशरश्मि उदकस्य विसारे अन्तरिक्षे आहन्ता कम्पयिता वात इव गमनवान्[4] निर्मलदीप्ति उपस अजानन्[5] अश्ववती । कर्मच्छव इव सत्यभूता[6] । यथा कर्मण कर्तार फलेन युज्यन्त[7] ॥ १ ॥

मुद्गल० हिरण्यकेश' इति द्वादशर्चं षष्ठ सूक्तम्। रहूगणपुत्रस्य गोतमस्यार्षम्। पूर्वत्र गायत्र तु' इत्युक्तत्वादिदमपि गायत्र सूक्तम्। एतावास्तु विशेष । आद्यस्तृचस्त्रैष्टुभ, द्वितीयस्त्वौष्णिह । प्रथमतृचस्य मध्यमस्थानो वैद्युतोऽग्नि शुद्धाग्निर्वा देवता। शिष्टा नवर्चं केवलाग्निदेवताका ॥

हिरण्यस्य हितरमणीया कशस्थानीया ज्वाला यस्य स तथोक्त सुवर्णवद्रोचमानज्वालो वा अहि
घा आगस्य हन्ता मघोनाम् धुनि तपा कम्पयिता वात इव वायुरिव भ्रजीमान् शीघ्रगतियुक्त ।
एवम्भूतो वैद्युतोऽग्नि रजस उदकस्य विसार विसरणे मेघान्निर्गमने निमित्तभूते सति शुचिभ्राजा शोभनदीप्ति सन् मेघाज्जलानि निर्गमयितु जानाति। उपस उषोदेवता नवेदा न विदति इति नवेदा । मेघादुदकस्य नि सारणमग्निरेव जानाति, उपसस्तु न जानन्तीत्यर्थ । अत्रान दृष्टान्त । अश्वस्वती अश्वयुक्ता अश्वथाय अपस्युव अप कर्म आत्मन इच्छन्त्य सत्या अवितथारम्भा न एवम्भूता प्रजा इव । अत्र उपसामज्ञानेनाग्नि प्रशस्यत, न तु ता निन्द्यन्त । 'न हि निन्दा निन्द्य निन्दितुम् अपि तु स्तुत्य स्तोतुम्' इति न्यायात् ॥ १ ॥

आ ते सुपर्णा अमिनन्तँ एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिरागात् पतन्ति मिहः स्तनयन्त्यभ्रा ॥ २ ॥

आ । ते । सुऽपर्णाः । अमिनन्त । एवैः । कृष्णः । नोनाव । वृषभः । यदि । इदम् ।
शिवाभिः । न । स्मयमानाभिः । आ । अगात् । पतन्ति । मिहः । स्तनयन्ति । अभ्रा ॥ २ ॥

स्कन्द० ते इति तादर्थ्य चतुर्थी षष्ठी वा । तवार्थाय तव वा स्वभूतान् रसान्। सुपर्णा रश्मिनामैतत् ( निघ १,५ )। आदित्यरश्मय । आ[8] अमिनन्त मीञ्[9] हिंसायाम्। मर्यादया हिंसन्ति। आददत इत्यर्थ । एवै अयनै । गत्वा भुव[10] ततो रसानाददत इत्यर्थ । कृष्ण नोनाव वृषभ कृष्णवर्णश्च वर्षिता मघ नोनाव । नौतिरत्र सामर्थ्याच्छब्दनार्थे । गर्जितलक्षणेन शब्दनार्थं पुन पुनर्वा शब्दयति। इदम्[11] जगत्। यदि शब्दस्तु पदपूरणो वा, यदिशब्दश्रुतिसामर्थ्याद्वा पूर्वस्मिन् पाद तत इत्यध्याहार्यम्। कृष्णो नोनाव वृषभो यदि तत सुपर्णा अमिनन्ति। यदि मघ वर्षति गर्जति च तदा रसान् रश्मय आददत इत्यर्थ । उत्तरार्धर्च पाक्षवता भिन्न वाक्यम्। शिवाभि न स्मयमानाभि 'शिवम्' ( निघ ३,६ ) इति सुखनाम । स्मिङ्[12] ईषद्धसन । यथा कश्चित्सुखाभि हसन्तीभि[13] स्त्रीभि सहागच्छत् तद्वत् मध्यमोऽग्निरग्निना सह क्रीडमान आ अगात् आगच्छति अन्तरिक्ष अस्मान् वा प्रति। पतन्ति च मिह सवण्या[8] वृष्टिलक्षणा आप । स्तनयन्ति चाभ्राणि ॥ २ ॥

---

१ °स्नेहा°' अ २ नास्ति मूको ३ विशिष्ट° अ ४ °गम् छर्ग. ५ नास्ति वि' अ'
६ °भूत छर्ग ७ °न्यन्ते कु ८ नास्ति वि ९ मीङ् मूको १० भुवनं अ ११ नास्ति अ
१२ स्मिङ् कु. विर्द अ १३ °तीभि मूको

वेङ्कट० अग्ने! तव रश्मयः मरुद्भिः सह प्रक्षिपन्ति[1]। कृष्णवर्णः[2] मेघश्च शब्दं करोति, यदि भवत्युदकम्। 'इदम्' ( निघ १,१२ ) इति[3] उदकनाम[4]। कल्याणीभिः [5]स्मयमानाभिः इव स्त्रीभिः[5] नदीभिः[6] सहाग्निरस्मानिहागच्छति। पतन्ति च सेक्तारः मरुतः स्तनयन्ति चाभ्राणि ॥ २ ॥

मुद्गल० हे अग्ने! ते तव सुपर्णाः शोभनपतनाः रश्मयः एवं गन्तृभिः मरुद्भिः सह आ अमिनन्त आ समन्तात् मेघं हिंसन्ति। वर्षणार्थं ताडयन्ति। प्रहृतश्च कृष्णः कृष्णवर्णः वृषभः वर्षिता मेघः नोनाव भृशं शब्दमकरोत्। यदि यदा इदम् ईदृशं कर्म तदानीम् शिवाभिः न [7]स्मयमानाभिः सुखकारिणीभिः[7] हसनवतीभिः कान्ताभिरिव शुभ्रवर्णाभिः फेनयुक्ताभिरद्भिर्विद्युद्भिर्वा सह आ अगात् वैद्युताभिरद्भिरिव पर्जन्यः आगच्छति। तदनन्तरम् मिहः आपः पतन्ति दिवः सकाशात् प्रवृष्टा भवन्ति, अभ्राः अभ्राणि अद्रिः पूर्णाः मेघाः स्तनयन्ति इवस्तत शब्दं कुर्वन्ति ॥ २ ॥

यदी॑मृ॒तस्य॒ पय॑सा॒ पिया॑नो॒ नय॑न्नृ॒तस्य॑ प॒थिभी॒ रजि॑ष्ठैः ।
अ॒र्य॒मा मि॒त्रो वरु॑णः॒ परि॑ज्मा॒ त्वचं॑ पृ॒ञ्चन्त्युप॑रस्य॒ योनौ॑ ॥ ३ ॥

यत् । ईम् । ऋ॒तस्य॑ । पय॑सा । पिया॑नः । नय॑न् । ऋ॒तस्य॑ । प॒थिऽभिः॑ । रजि॑ष्ठैः ।
अ॒र्य॒मा । मि॒त्रः । वरु॑णः । परि॑ऽज्मा । त्वच॑म् । पृ॒ञ्चन्ति॑ । उप॑रस्य । योनौ॑ ॥ ३ ॥

स्कन्द० कदा कस्माद्वा। उच्यते। यत् यदा यस्माद्वा ईम् ईंशब्दोऽयमित्यस्यार्थे[1]। अयं मध्यमोऽग्निः ऋतस्य आदित्यस्य। पयसा उदकेन। रश्म्याहृतेनोदकेनेत्यर्थः। पियानः वर्धमानः। नयन् हेतावयं शतृप्रत्ययः। प्रयोजनस्य च[9] हेतुत्वेन विवक्षा। भुवं प्रति नेतुमित्यर्थः। किम्। ऋतस्य उदकनामैतत् ( द्र निघ १,१२ )। द्वितीयार्थे च[10] षष्ठी। दृष्टिलक्षणमुदकम्। पथिभिः रजिष्ठैः ऋजुतमैः। न च केवलोऽयम्। किं तर्हि। अर्यमा मित्रः वरुणः परिज्मा सर्वतोगामी त्वचम् पृञ्चन्ति त्वचाप्येकदेशेन कृत्स्नशरीरं[11] लक्ष्यते। पृचिरत्र सामर्थ्याद्धार्थे। शरीरं धन्तीत्यर्थः। कस्य। उपरस्य मेघस्य। योनौ अन्तरिक्षैकदेशभूते[1] स्थाने। अथवा योनिरित्युदकनाम ( द्र निघ १,१२ )। 'निमित्तात् कर्मसंयोगे' ( पावा २ ३,३६ ) इत्येषा सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा। उदके निमित्ते। उदकार्थमित्यर्थः। यदा यस्माद्वाऽयं मध्यमोऽग्निरित्थमादयश्च त्वचं पृञ्चन्त्युपरस्य तदा तस्माद्वा शिवाभिर्न स्मयमानाभिरागात्' इत्यवमस्या ऋचः पूर्वस्याः उत्तरार्धर्चेनैकवाक्यता। एवमनयार्ऋचामप्यमग्निः याजना[1]। पार्थिवं तु 'आ ते सुपर्णाः' इति सुपर्णशब्देन[12] रश्मिसाहचर्यात् सुपतनाद्वा ज्वाला उच्यन्ते। 'अमिनन्त[14]' इत्यपि भक्षणं हिंसाऽभिप्रेता। 'कृष्णो नोनाव वृषभो यदीदम्' इति च यदिशब्दात् पूर्ववत् तदा इत्यध्याहार्यम्। यदि कृष्णवर्णा वायवः मेघा नोनाव इदं जगत्, यदि च शिवाभिः स्मयमानाभिरागात् मध्यमः यदि च पतन्ति मिहः स्तनयन्ति अभ्रा, ततस्तत्र स्वभूता

---

१ म वि[1] अ[1] २ कृष्णवर्णो वि[1] अ[2] ३ नास्ति वि[1,2] अ[3] लप ४ °दं नाम वर्तिता वि[1] अ[3] ५-५. °नाः सहाग्नेरस्मान्प्रत्यवोपयन्तां वि[1] अ[3] ६ नास्ति वि[3] ७-७ सुप्र वर्तिनीभिः स्मयमानाभि मूको ८ °ब्दो.य° अ ९ चेय वि १० नास्ति वि ११ इत्सनं शु° अ वि १२ °देशेऽ वि १३ °नन् कु १४ °ब्दो कु १५ °नि° कु

सुपर्णा आ अभिनन्त मर्यादया हिंसन्ति भक्षयन्ति। किम् । सामर्थ्यात् हवींषि । एवै हवींषि प्रति गमने । यदि देवो वर्धति ततो मनुष्येषु यजत्सु तव ज्वाला सर्वतो व्याप्य हवींषि नि सशय दहन्तीति समस्तार्थ । सोऽह कि करोमि । उच्यत । यदामृतस्य इत्यादि । यदिति व्यत्ययेन नपुसकता । यो भवानृतस्य पयसा । ऋतशब्दोऽत्र यज्ञवचन । यज्ञसम्बन्धिना हविर्लक्षणेनान्नेन पिबान वर्धमान, नयश्च हविर्देवान् प्रति ऋतस्य यज्ञस्य पथिभि रजिष्ठै, अर्यमा मित्रो वरुणश्च परिज्मा। प्रदर्शनार्थं चात्र अर्यमादिग्रहणम्। सर्वे च[१] देवा इत्यथ । त्वच[२] पृच्छन्ति शरीराणि सम्पर्चयन्ति । भवाश्च गृहीतहविष्को देवाश्च परस्परत सम्पृच्यन्ते इत्यर्थ । क। उच्यत । उपरस्य योनौ। उपरिवर्तित्वादुपरो देवलोक इहाभिप्रत । तस्यैकदेशभूते स्थाने । स्वर्गे इत्यर्थ । यो भवानर्यमादयश्च त्वच पृच्छन्ति उपरस्य योनौ तस्य ते सुपर्णा अभिनन्तेत्येव यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या ॥ ३ ॥

वेङ्कट० यदि एनम्[१] उदकस्य सारेण[२] प्रत्यक्षोदकेन प्यायमान नयन् उदकस्य पथिभि ऋजुतमै अर्यमा मित्र वरुण वायुश्च मेघस्य योनौ उदकनिर्गमनमार्गे स्थितामुदकनिरोद्ध्रीं त्वच रश्मिभि सम्पृच्छन्ति । अग्निना सहिता वर्षस्येशत एते देवा इति[४] ॥ ३ ॥

मुद्गल० यत् इम् यदा अयमग्नि ऋतस्य उदकस्य पयसा पयोवत्सारभूतेन रसेन पिबान जगदाप्यायन कुर्वन् आप्यायितञ्च जगत् ऋतस्य उदकस्य सम्बन्धिभि रजिष्ठै ऋजुतमै पथिभि मार्गै स्नानपानादिभि नयन् प्रापयन् वर्तत तदानीम् अर्यमा मित्र वरुण च परिज्मा परितो गन्ता मरुद्गणश्च उपरस्य मेघस्य योनौ वृष्ट्युदकोत्पत्तिस्थाने त्वचम् पृच्छन्ति वृष्ट्युदकस्याच्छादक प्रदेश स्वकीयैरायुधै सयोजयन्ति, उद्घाटयन्तीति यावत् ॥ ३ ॥

अग्ने॒ वाज॑स्य॒ गोम॑त॒ ईशा॑नः सहसो यहो । अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रवः॑ ॥ ४ ॥

अग्ने॑ । वाज॑स्य । गोऽम॑त । ईशा॑न । स॒ह॒स॒ । य॒हो॒ इति॑ । अ॒स्मे इति॑ । धे॒हि॒ । जा॒त॒ऽवे॒द॒ । महि॑ । श्रवः॑ ॥ ४ ॥

स्कन्द० हे अग्ने! वाजस्य गोमत गोभि सहितस्य ईशान हे सहस यहो! बलस्य पुत्र[१] बलेन मथ्यमानोऽग्निर्जायत इति बलस्य पुत्र उच्यत । अस्मे अस्मभ्यम् धेहि देहि । हे जातवेद ! जातप्रज्ञान[१] महि श्रव धनम् 'अन्न वा[१] ॥ ४ ॥

वेङ्कट० अग्ने! अन्नस्य[७] पशुमत ईश्वर सहस पुत्र! अस्मासु धेहि जातवेद ! महत् अन्नम्[८] ॥ ४ ॥

मुद्गल० हे सहस यहो! बलस्य पुत्र[१] अग्न[१] गोमत बहुभिर्गोभिर्युक्तस्य वाजस्य अन्नस्य ईशान ईश्वरस्त्वमसि । अत अस्मे अस्मासु हे जातवेद ! जातधन[१] अग्न! महि श्रव प्रभूतमन्नम् धेहि स्थापय ॥ ४ ॥

स ई॑धा॒नो वसु॑ष्क॒विर॒ग्निरी॒ळेन्यो॑ गि॒रा । रे॒वद॒स्मभ्यं॑ पुर्वणीक दीदिहि ॥ ५ ॥

सः । इ॒धा॒नः । वसुः॑ । क॒विः । अ॒ग्निः । ई॒ळेन्यः॑ । गि॒रा । रे॒वत् । अ॒स्मभ्य॑म् । पु॒रु॒ऽअ॒नी॒क॒ । दी॒दि॒हि॒ ॥

---

१ नास्ति वि २ तत्त्व म वि ३ नास्ति वि[१] अ[१], ४ नास्ति कप ५. नास्ति कु
६ ६ नास्ति वि ७ पय गोभि सहितस्य वि[१] अ[१] ८ धनम् कु

स्कन्द० य उक्तगुणोऽसि, स इधान दीप्यमान । वसु प्रशस्यो धनवान् वा । कवि मधावी । अग्नि ईळेन्य[1] सर्वै स्तोतृभि स्तोतव्य । गिरा स्तुत्या । परस्तु पाद प्रत्यक्षकृतत्वात् भिन्न वाक्यम् । रेवत् धनसयुक्तम् । धन च ददिदित्यर्थ[2] । अस्मभ्यम् अस्मदर्थम्[3] । हे पुर्वणीक[4] 'पुरु' ( निघ ३ १ ) इति बहुनाम । अनीकमिति च लोके खड्गस्य मुखमुच्यते । इह तु[5] तीक्ष्णात्वादेस्तत्सादृश्यात् ज्वाला उच्यन्ते[6] । बहुखड्गमुखसदृशबहुज्वालासमूह[7] । दीदिहि दीप्यस्व ॥ ५ ॥

वेकट० [8]स दीप्यमान[8] वासयिता कवि अग्नि स्तुत्य स्तोत्रेण धनयुक्तम्[9] अस्मभ्यम् दीप्यस्व बहुज्वाल![8] ॥ ५ ॥

मुद्गल० स अग्नि इधान दीपनशील वसु निवासयिता सर्वेषाम् कवि क्रान्तदर्शन गिरा स्तोत्ररूपया वाचा ईळन्य स्तोतव्यो भवति । हे पुर्वणाक! अनीक मुखम्[9] । पुरुभिर्बह्वीभि अनीकस्थानीयाभिर्[10] ज्वालाभिर्युक्ताग्ने! अस्मभ्यम् रेवत् धनयुक्तमन्न यथा भवति तथा दीदिहि दीप्यस्व ॥ ५ ॥

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ६ ॥

क्षप । राजन् । उत । त्मना । अग्ने । वस्तो । उत । उपस । स । तिग्मऽजम्भ । रक्षस । दह । प्रति ॥

स्कन्द० क्षप[11] 'क्षपा' ( निघ १ ७ ) इति रात्रिनाम । क्षपाया राजन्! ईश्वर[1] दीपयित[1] वा त्मना[11] आत्मनैव । हे अग्ने[12] । उत वस्तो अह्न राजन्[13] उत उपस राजन्[13] । य उक्तगुणोऽसि स हे तिग्मजम्भ! जम्भा दंष्ट्रोच्यते । ज्वालाश्चाग्नेर्दंष्ट्रास्थानीया । तीक्ष्णदंष्ट्रास्थानीयज्वाल[1] रक्षस दह प्रति प्रतिशब्दस्तूपसर्गो धात्वर्थानुवादी 'लम्बत प्रलम्बत' इति यथा । अथवा प्रतिशब्दो लक्षण कर्मप्रवचनीय क्षप वस्तो[14] उपस इत्येतै सम्बन्धयितव्य । सर्वत्र च[15] द्वितीयार्थे विभक्ति । क्षप[14] रात्री प्रति । उत वस्तो अह[16] प्रति । उत उपस प्रति । रात्रिषु चाहनि च उषउदयवेलासु च रक्षसो दहेत्यर्थ । एवञ्च कृत्वा न[1] आमन्त्रितनिमित्तत्वात् क्षप इत्येतस्य पराङ्गवद्भावेनामन्त्रितानुदात्तत्व[17] प्रवर्तेत ॥ ६ ॥

वेङ्कट० क्षपय राजन्! अग्ने! त्वमात्मनैव रक्षस अह्न रात्रश्च । स त्वम् अग्ने[18]! तीक्ष्णदंष्ट्र! रक्षासि प्रति दह । यद्वा क्षपाया[1] उपस अह्नश्च[18] रक्षासि प्रति दह[20] [8]इति ॥ ६ ॥

मुद्गल० हे राजन्! राजनशील! अग्ने! क्षप क्षपय । राक्षसादीन् स्वकीयै पुरुषैबाधस्व । उत अपि च त्मना न केवलमन्यैरेव आत्मना च तान् बाधस्व । कदेति चेत् । उच्यते । वस्तो सर्वाण्यहानि उत अपि च उषस उषःकालोपलक्षिता रात्री । अत्यन्तसयोग द्वितीया । सर्वेष्वह सु सर्वासु रात्रिषु चेत्यर्थ । हे तिग्मजम्भ! तीक्ष्णमुखाग्ने! रक्षस राक्षसान् उक्तप्रकारेण क्षपयित्वा स एव त्वम्[21] प्रति दह प्रत्येक दह । न किञ्चिदवशेषयमित्युदास्त्यर्थ ॥ ६ ॥

इति प्रथमाष्टके पञ्चमाध्याये सप्तविंशो वर्ग ॥

---

1 अग्नि अ, नास्ति कु वि　२ ददातित्यथ कु　३ मदर्थं कु　४ नास्ति कु　५ उच्यते कु ६ ६ नास्ति वि[1] अ[2]　७ युतम् वि[1] अ[2]　८ [8]ज्वाल ल अ[1]　९ मुखम् मे[2]　१० अनेक[8] मूको　११ नास्ति मूको　१२ १२ युदितम् ति　१३ हे राजन् अ कु　१४ नास्ति अ १५ क्षपा अ　१६ अह कु　१७ [8]ल न अ　१८ नास्ति वि[1] अ[2]　१९ क्षपया वि[1] अ[2], २० दहति वि[1] लप　२१ त्वान् मूको

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥ ७ ॥

अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि । विश्वासु । धीषु । वन्द्य ॥ ७ ॥

स्कन्द० अव नः पालयास्मान् हे अग्ने ! ऊतिभिः स्वैः पालनैः । क्व । गायत्रस्य प्रभर्मणि गायत्रं नाम सामविशेषः, 'साममात्रं वा', गीयमानत्वात् । बिभर्तिर्धारणार्थः । गायत्रं यत्र धार्यते न त्यज्यते । क्रियत इत्यर्थः । स गायत्रस्य प्रभर्मा सोमयागः, तत्र च । न सोमयाग एव केवलं । किं तर्हि । विश्वासु धीषु सर्वेषु दर्शपूर्णमासादिषु कर्मसु हे वन्द्य ! ॥ ७ ॥

वेङ्कट० रक्ष अस्मान्[2] अग्ने ! ऊतिभिः[3] गायत्रसाम्नः[4] प्रभर्मणि सर्वेषु कर्मसु स्तुत्य ![5] ॥ ७ ॥

मुद्गल० विश्वासु धीषु सर्वेषु कर्मसु वन्द्य ! स्तुत्य ! हे अग्ने ! गायत्रस्य गायत्रसाम्नः प्रभर्मणि प्रभरणे सम्पादने निमित्तभूते सति नः अस्मान् ऊतिभिः त्वदीयैः पालनैः अव रक्ष ॥ ७ ॥

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥ ८ ॥

आ । नः । अग्ने । रयिम् । भर । सत्राऽसहम् । वरेण्यम् । विश्वासु । पृत्ऽसु । दुस्तरम् ॥ ८ ॥

स्कन्द० नः अस्मदर्थं हे अग्ने ! रयिम् आ भर । अस्मभ्यं देहीत्यर्थः । सत्रासाहम् सदा शत्रूणाम् अभिभवितारम् वरेण्यम्[6] उत्कृष्टं सर्वेषु संग्रामेषु दुष्टरम् 'अवतिरति[7]' ( निघ २,१९ ) इति वधकर्मसु पाठात् तिरतिर्वधार्थः[8] । दुर्हिंसम् । शत्रुभिः दुरपहरमित्यर्थः ॥ ८ ॥

वेङ्कट० [10]आ भर अस्मभ्यम् अग्ने ![10] रयिम् बहुसहम् वरणीयं सर्वेषु सङ्ग्रामेषु तरितुमशक्यम् ॥ ८ ॥

मुद्गल० हे अग्ने ! रयिम् धनम् नः अस्मभ्यम् आ भर प्रयच्छ । कीदृशम् । सत्रासाहम् युगपदेव दारिद्र्यस्य नाशकम् वरेण्यम् सर्वैर्वरणीयम् विश्वासु पृत्सु सर्वेषु सङ्ग्रामेषु दुष्टरम् शत्रुभिस्तरितुमशक्यम् ॥ ८ ॥

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ ९ ॥

आ । नः । अग्ने । सुऽचेतुना । रयिम् । विश्वायुऽपोषसम् । मार्डीकम् । धेहि । जीवसे ॥ ९ ॥

स्कन्द० अस्मभ्यं हे अग्ने ! सुचेतुना शोभनेनानुग्रहपरेण चित्तेन रयिम् विश्वायुपोषसम् सर्वस्मिन्नायुषि पोषकम् । यावज्जीवं पुष्टिकरमित्यर्थः । मार्डीकम्[11] मृड सुखने । सुखयितारम् आ[11] धेहि आभिमुख्येन देहि जीवसे जीवनायास्माकम् ॥ ९ ॥

वेङ्कट० आ धेहि अस्मभ्यम् अग्ने ! शोभनज्ञानेन मनसा धनम् सर्वमनुष्याणां पोषकम् सुखयितृ[12] जीवनाय ॥ ९ ॥

1-1. नास्ति वि. २. नः वि[1] अ[1]. ३. ऊती वि[1]. ४. °सत्रस साम्नः वि[1] अ[1]. ५. स्तुत्यः वि[1] अ[1] ख. ६. वरणीयम् अ. ७. अवति तरति कु वि; भवति मति अ. ८. इति च मूको. ९. तरति° मूको. १०-१०. भामराध्वे वि[1] अ[1]. ११. नास्ति अ. १२. नास्ति कु. १३. °यितार वि[1] अ[1].

मुद्गल० हे अग्ने! नः अस्माकम् जीवसे जीवनाय सुचेतुना शोभनेन ज्ञानेन युक्तम् रयिम् धनम् आ धेहि स्थापय। कीदृशम्। मार्डीकम् मृडीकं सुखं तद्धेतुभूतम् विश्वायुपोषसम् सर्वस्मिन्नायुषि देहादेः पोषकम्। यावज्जीवमस्मदुपभोगपर्याप्तमित्यर्थः ॥ ९ ॥

प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये। भरस्व सुम्नयुर्गिरः ॥ १० ॥

प्र। पूताः। तिग्मऽशोचिषे। वाचः। गोतम। अग्नये। भरस्व। सुम्नऽयुः। गिरः ॥ १० ॥

स्कन्द० पूताः शुद्धा निर्दोषाः तीक्ष्णदीप्तये वाचः हे गोतम! आत्मन एवायम् अन्तरात्मन आमन्त्रणं प्रैषश्च। हे मदीयान्तरात्मन्नित्यर्थः। अग्नये प्र भरस्व प्रभर प्रापय। उच्चारये-त्यर्थः। सुम्नयुः सुखकामः सन्। गिरः स्तुतिरूपाः ॥ १० ॥

वेङ्कट० प्र भरस्व[1] उग्रतेजसे शुद्धा वाचः गोतम! अग्नये सुखमिच्छन् गरणीया वचनीयाः ॥ १० ॥

मुद्गल० हे गोतम! सूक्तद्रष्टः! सुम्नयुः सुम्नं धनमात्मन इच्छंस्त्वम् तिग्मशोचिषे तीक्ष्णज्वालाय अग्नये पूताः शुद्धाः वाचः अग्नेर्गुणान् सम्यक् अभिदधतीः गिरः स्तुतीः प्र भरस्व प्रक-र्षेण सम्पादय ॥ १० ॥

यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः। अस्माकमिद् वृधे भव ॥ ११ ॥

यः। नः। अग्ने। अभिऽदासति। अन्ति। दूरे। पदीष्ट। सः। अस्माकम्। इत्। वृधे। भव ॥ ११ ॥

स्कन्द० यः अस्मान् हे अग्ने! अभिदासति[2] उपक्षपयति[3] अन्ति अन्तिके दूरे च। पदीष्ट सः पदिरत्र शुद्धोऽपि सोपसर्गार्थो[4] द्रष्टव्यः। विपद्यतां सः। विनश्यतु स[5] इत्यर्थः। अस्माकम् तु वृधे 'वृद्ध्यै भव'[6] त्वम्। वृद्धिं कुर्वित्यर्थः ॥ ११ ॥

वेङ्कट० यः अस्मान् अग्ने! अभिदिनस्ति[7] अन्तिके दूरे वा, नश्यतु सः। अस्माकम् एव भव वर्धनाय ॥ ११ ॥

मुद्गल० हे अग्ने! नः अस्मान् अन्ति अन्तिके समीपे दूरे विप्रकृष्टदेशे च स्थितः सन् यः शत्रुः अभिदासति उपक्षपयति, सः शत्रुः पदीष्ट पततु नश्यतु। त्वं च अस्माकम् इत् अस्माकमेव वृधे वर्धनाय भव ॥ ११ ॥

सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति। होता गृणीत उक्थ्यः ॥ १२ ॥

सहस्रऽअक्षः। विऽचर्षणिः। अग्निः। रक्षांसि। सेधति। होता। गृणीते। उक्थ्यः ॥ १२ ॥

स्कन्द० सहस्राक्ष-[8] अक्षिशब्देन अत्राक्षिस्थानीयत्वात् ज्वाला उच्यन्ते। सहस्राक्षिस्थानीयज्वालः। विचर्षणिः[9]

---

१. प्र हर° वि[१] अ[१], २. °सति अभिक्षयति अ. ३. °क्षपति मूको. ४. °गार्थे अ कु. ५. नास्ति अ. ६-६. नास्ति अ. ७. °दि(°भि)दिन° वि[१] अ[१]. ८. °हस्राक्षि अ; नास्ति कु लि. ९. नास्ति मूको.

विद्रष्टा अग्नि रक्षांसि सेधति[1] सेधतिरत्र सामर्थ्याद्धिंसार्थः । हिनस्ति । होता च सन् यज्ञेषु गृणाति स्तौति देवान् उक्थ्यः प्रशस्य ॥ १२ ॥

वेङ्कट० अनेकज्वाल विद्रष्टा अग्नि रक्षांसि निरुणद्धि, होता स्तौति च[2] देवान् प्रशस्य. ॥ १२ ॥

मुद्गल० सहस्राक्ष असंख्यातज्वाल. विचर्षणिः विशेषेण सर्वस्य द्रष्टा अयम् अग्नि रक्षांसि सेधति प्रतिषेधति यज्ञाद्विर्गमयति । स चाग्नि. उक्थ्य. उक्थै. शस्त्रैरस्माभि स्तूयमान सन् होता देवानामाह्वाता भूत्वा गृणाति तान् स्तौति ॥ १२ ॥

इति प्रथमाष्टके पञ्चमाध्याये अष्टाविंशो वर्ग. ॥

[ ८० ]

इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ १ ॥

इत्था । हि । सोमे । इत् । मदे । ब्रह्मा । चकार । वर्धनम् ।
शविष्ठ । वज्रिन् । ओजसा । पृथिव्याः । निः । शशाः । अहिम् । अर्चन् । अनु । स्वऽराज्यम् ॥ १ ॥

स्कन्द० 'ऐन्द्रमुत्तरम्' । उत्तर सूक्तम् ऐन्द्रम्[3] इन्द्रदैवतम् । "हि शब्दो यस्मादर्थे"[4] । यस्मात् इत्था[4] अमुना 'वक्ष्यमाणेन प्रकारेण'[5] सत्यम् वा । सोमे इत् मदे 'यस्य च भावेन' ( पा २,३,३७ ) इत्यधा सप्तमी । तच्छब्दश्रुतश्च लक्षणभूतयोग्यक्रियापदाध्याहार । सोमे मदकरे उपकल्पिते । ब्रह्मा चकार ब्रह्मन्शब्दो[6] ब्राह्मणशब्देन समानार्थ । आत्मन एवायमपरोक्षरूपेण प्रथमपुरुषेण निर्देश. । अयं गोतमो नाम ब्राह्मण होता वा करोति । वर्धनम् वृद्धिकर स्तोमम् । यस्मादिति वचनात् तच्छब्दोऽध्याहार्य. । तस्मात् हे शविष्ठ ! वज्रिन् ! त्वं ओजसा पृथिव्या 'पृथिवी' ( निघ १,३ ) इत्यन्तरिक्षनाम । अन्तरिक्षात् । नि शशा शशा प्लुतगतौ । सामर्थ्याच्चान्तर्णीतण्यर्थ । निर्गमय । भूमौ पातयेत्यर्थ. । कम् । उच्यते । अहिम् मेघम् । वृष्टिमित्यर्थ । अर्चन् अनु अर्च पूजायाम् । अनुपूजयन् स्वराज्यम्[7] आत्मीय त्रैलोक्याधिपत्यम् । माध्यितानुग्रहेण ह्याधिपत्य प्राप्यते[8] । कीदृशो हि स प्रभु. यो नानुग्राहक. ॥ १ ॥

वेङ्कट० "इत्थम् हि सोमे[9]" मदकरे त्वया पीत सति ब्राह्मणस्तव वर्धनम् स्तोत्रम् चकार । बलवत्तम ! वज्रिन् ! बलेन स्तुतिजनितेन पृथिव्या निरगमयस्त्वमसि[10] अहिम् । अत्र यास्क — 'अर्च यो ऽनुराज्य स्वाराज्यम्[11]' ( या १२,३४ ) इति ॥ १ ॥

१. नास्ति भ वि २. नास्ति वि[1] अ[1]. ३. नास्ति वि ४-४. हि[4]° कु. ५. 'सत्यम्' ॥ ६६ 'मा—त्रा' अ. ७ स्वरा° कु. ८. नास्ति मूको ९. पूर्व दे अ. १०-१०. नास्ति कु ११. नि अमि° क कु। निरगमि° वि[1] अ[1]. १२. स्वरा° वि[1] अ[1] कु.

मुद्गल० 'इत्था' इति षोडशाय सप्तम सूक्तम्[1] । गोतम ऋषि[1] । पङ्क्ति छन्द[1] । इन्द्रो देवता[1] ॥

हे शविष्ठ! अतिशयेन बलवन्[1] वज्रिन्! वज्रवन्निद्[1] इत्था हि इत्थमेव अनेन शास्त्रोक्तप्रकारेणैव मद मदकरे हर्षकरे सोमे त्वया पीते सति ब्रह्मा ब्राह्मण स्तोता वर्धनम् तव वृद्धिकर स्तोत्रम् चकार अनेन सूक्तेन कृतवान्। इत् पादपूरणम्। अतस्त्वम् ओजसा बलेन पृथिव्या सकाशात् अहिम् आगत्य हन्तारं वृत्रम् निः शशाः निःशेषेण शशाः । मा बाधस्वेति शासन कृत्वा पृथिव्या सकाशात् निर्गमय इत्यर्थ । किं कुर्वन् । स्वराज्यम् स्वस्य राज्यं राजत्वम् अनु अनुलक्ष्य अर्चन् पूजयन् । स्वस्य स्वामित्व प्रकटयन्नित्यर्थ ॥ १ ॥

स त्वा॑मद॒द् वृषा॒ मद॒ः सोम॑ः श्ये॒नाभृ॑तः सु॒तः ।
येना॑ वृ॒त्रं निर॒द्भ्यो ज॒घन्थ॑ वज्रि॒न्नोज॒सार्च॒न्ननु॑ स्व॒राज्य॑म् ॥ २ ॥

स । त्वा॒ । अ॒म॒द॒त् । वृषा॑ । मद॑ । सोम॑ । श्ये॒नऽआ॑भृत । सु॒त ।
येन॑ । वृ॒त्रम् । निः । अ॒त्ऽभ्य । ज॒घन्थ॑ । व॒ज्रि॒न् । ओज॑सा । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ २ ॥

स्कन्द० स त्वा अमदत् मद तृप्तौ । तर्पितवान् । वृषा[1] वर्षिता । यस्सोम पीतवन्द्रो वर्षति तदिदं सोम एवोपचर्यते । मद मदकर सोम । श्येनाभृत । अत्रैतरेयब्राह्मणाधीतमितिहासमाचक्षते— सोमो वै राजा अमुष्मिन् लोक आसीत् । त देवाश्च ऋषयश्चाभ्यध्यायन्, कथमयमस्मान् सोमो राजा आगच्छेदिति तेऽब्रुवन् छन्दांसि, यूय न इम सोम राजानमाहरतेति । तानि तथेति प्रतिपद्य[1] सुपर्णरूपाणि भूत्वोदपतन्निति । तेषा जगती प्रथमोदपतत् । सा अर्ध मध्वनो गत्वाऽश्राम्यत् । सा दक्षिणा च[1] तपश्चाहरत् न सोमम् । अथ[1] त्रिष्टुबुदपतत् । सा भूयोऽर्धाद्ध्वनो गत्वाऽश्राम्यत् । सा दक्षिणामाहरत्, न सोमम् । अथ गायत्र्युदपतत् । सा गत्वा सोमपालान् भीषयित्वा पद्भ्या च मुखेन सोम परिगृह्याऽऽहरदिति ( तु ऐब्रा ३,२५,२६ ) । तदेतदुच्यते—श्येनाभृत[1] इति । श्येनरूपया गायत्र्या आभृत[1] श्येनाभृत । सुत अभिषुत । य कीदृश सोम । उच्यते । येन हेतावियं तृतीया । मद हेतुना । य पीत्वा पातुं चेत्यर्थ । वृत्रम् मेघम् अद्भ्य अपामर्थाय निर्जघन्थ निश्चयेन हसि हतवान् वा । हे वज्रिन्[1] स्वेन ओजसा । अर्चन् अनु स्वराज्यम् ॥ २ ॥

वेङ्कट० स त्वा[1] अमदत् वृषा 'सोम मदकर श्येनेनाहृत, येन[1] वृत्रम् अन्तरिक्षादपि[1] निर्जघन्थ वज्रिन्! बलेन ॥ २ ॥

मुद्गल० हे इन्द्र[1] त्वा त्वाम् स सोम अमदत् अमदयत् हर्षं प्रापयत् । कीदृश सोम । वृषा सेचनस्वभाव मद मदकरो हर्षकर[11] श्येनाभृत श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिव सकाशादाहृत सुत अभिषुत । हे वज्रिन्! वज्रवन्निद्[1] येन पीतेन सोमेन ओजसा बलकरेण अद्भ्य अन्तरिक्षसकाशात् वृत्रम् निर्जघन्थ हतवानसि । अन्यत् पूर्ववत् ॥ २ ॥

१ नास्ति मै  २. नास्ति ति  ३ प्रायश्च म  ४ नास्ति मूको  ५ नास्ति कु.
६ 'भृतश्च म  ७ आहृत म  ८ त्वाम् म[1]  ९.९ त्रुटितम् म[1]  १० 'दपि बलेन मूको.
११ 'करः कारी मै'.

प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।
इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ३ ॥

प्र । इहि । अभि । इहि । धृष्णुहि । न । ते । वज्रः । नि । यंसते ।
इन्द्र । नृम्णम् । हि । ते । शवः । हनः । वृत्रम् । जयाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ॥३॥

स्कन्द० प्र इहि प्रगच्छ । प्रगम्य च अभि इहि अभिगच्छ । अभिगम्य च धृष्णुहि धर्षय अभिभव शत्रून् । किं कारणम् । यस्मात् ते तव वज्रः न[1] नि यंसते न नियम्यते केनचित् । केनचिद्विरोद्धुं न शक्यत इत्यर्थः । किञ्च हे इन्द्र ! नृम्णम् हि ते शवः यस्मान्नृणां शत्रुभूतानामपि मनुष्याणां नमनकरं तव बलं तस्मात् हनः जहि वृत्रम् । हत्वा च तदन्तर्भूता जयाः अपः । अर्चन् अनु स्वराज्यम् ॥ ३ ॥

वेङ्कट० 'समुच्चयेऽन्यतरस्याम्' (पा ३,४,३) इति लोट् । तव वज्रः प्रैति अभ्येति धर्षयति च । न क्वचिन्नियम्यते तव[2] वज्रः । [3]इन्द्रस्यैवानुशासनम् । इन्द्र ! नृम्णम् हि[3] तव बलम् । नॄन् नमयति । जहि वृत्रम्, उदकानि च जय ॥ ३ ॥

मुद्गल० हे इन्द्र ! प्र इहि प्रकर्षेण गच्छ, अभि इहि इन्तव्यान् शत्रूनाभिमुख्येन प्राप्नुहि । प्राप्य च धृष्णुहि तान् शत्रून् अभिभव । तथा ते तव वज्रः न नि यंसते शत्रुभिर्न नियम्यते । अप्रतिहतगतिरित्यर्थः । तथा ते शवः त्वदीयं बलम् नृम्णम् नृणां पुरुषाणां नामकमभिभावकम् । हि यस्मादेवं तस्माद् वृत्रम् असुरम् हनः जहि । ततोऽनन्तरं तेन निरुद्धाः अपः उदकानि जयाः जय । वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः । अन्यत् समानम् ॥ ३ ॥

निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः ।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम् ॥ ४ ॥

निः । इन्द्र । भूम्याः । अधि । वृत्रम् । जघन्थ । निः । [4]दिवः ।
सृज । मरुत्वतीः । अव । जीवऽधन्याः । इमाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ॥ ४ ॥

स्कन्द० हे इन्द्र ! भूम्याः अधि अधिशब्दः 'अधिपरी अनर्थकौ' (पा १,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । पञ्चमीनिर्देशात्त्वार्थायेति वाक्यशेषः । भूम्या अर्थाय । वृत्रम्[5] निः जघन्थ निश्चयेन जहि । न च केवलाय भूम्या अर्थाय । किं तर्हि । निः दिवः दिवोऽप्यर्थाय निर्जघन्थ । उभयोरपि देवमनुष्ययोरर्थायेत्यर्थः । अथवा भूम्या अधि इत्यधिशब्दः उपरिभावे । योऽयं भूम्या द्विवद्योपरि भवत्यन्तरिक्षो मेघः तं निर्जघन्थेति । निर्हत्य च[6] यत्र मरुत्वतीः अव भवसृज देहि मरुत्वतीः । दातृत्वेन मरुतो यासां सन्ति ता मरुत्वत्यः । त्वत्सखायो मरुतः य[1] दातुं समर्थाः, नान्यः कश्चिदित्यर्थः । जीवधन्याः धनमेव धन्यम् । स्वार्थिके

---

1. नास्ति म ति. 2. नास्ति वि[1] अ[2]. 3-3. 'इन नृम्णमिन्द्र हि वि[1] अपं. 4. नास्ति अ. 5. नास्ति कु ति. 6. वे अ कु.

पचप्रत्ययः। सर्वजीवानां धनभूताः। अथवा धन्या इति धिनोतेः प्रीणनार्थस्य इदं रूपम्। सर्वजीवानां प्रीणयित्रीः। इमाः अपः वृष्टिलक्षणाः। अर्चन् अनु स्वराज्यम् ॥ ४ ॥

वेङ्कट० द्यावापृथिव्योः वृत्रम् निः जघन्थ। स त्वम् मरुत्वतीः अपः अव सृज, याभिः जीवा धन्या भवन्ति ॥ ४ ॥

मुद्गल० हे इन्द्र! भूम्याः अधि भूलोकस्योपरि वृत्रम् निः जघन्थ निःशेषेण हतवानसि। तथा दिवः द्युलोकात् निः जघन्थ। हत्वा च इमाः अपः वृष्ट्युदकानि अव सृज अधः पातय। कीदृशीरपः। मरुत्वतीः मरुद्भिः संयुक्ताः। जीवधन्याः जीवाः प्राणिनः धन्याः तृप्ता याभिस्ताः। अन्यत्समानम् ॥ ४ ॥

इन्द्रो॑ वृ॒त्रस्य॒ दोध॑तः॒ सानुं॒ वज्रे॑ण हीळि॒तः।
अ॒भि॒क्रम्याव॑ जिघ्नते॒ऽपः सर्मा॑य चो॒दय॒न्नर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ५ ॥

इन्द्रः॑। वृ॒त्रस्य॑। दोध॑तः। सानु॑म्। वज्रे॑ण। ही॒ळि॒तः।
अ॒भि॒ऽक्रम्य॑। अव॑। जि॒घ्न॒ते॒। अ॒पः। सर्मा॑य। चो॒दय॑न्। अर्च॑न्। अनु॑। स्व॒ऽराज्य॑म् ॥ ५ ॥

स्कन्द० इन्द्रः वृत्रस्य दोधतः क्रुध्यतिकर्माऽयम् (तु. निघ २,१२)। क्रुध्यतः सानुम् समुच्छ्रितं प्रदेशं वज्रेण हीळितः क्रुद्धः सन् अभिक्रम्य[1] अव जिघ्नते हन्ति। वृष्टिलक्षणा अपः सर्माय सरणाय भूमिं प्रति गमनाय चोदयन्। वृष्टिपातार्थमित्यर्थः। अर्चन् अनु स्वराज्यम् ॥ ५ ॥

वेङ्कट० इन्द्रः वृत्रस्य क्रुध्यतः[2] समुच्छ्रितं प्रदेशम् वज्रेण क्रुद्धः सन् अभिक्रम्य 'अव हन्ति,'[3] उदकानि सरणार्थम्[4] चोदयन् [5]सर्वः स्तोता स्तौति[5] ॥ ५ ॥

मुद्गल० हीळितः क्रुद्धः इन्द्रः अभिक्रम्य आभिमुख्येन गत्वा दोधतः भृशं कम्पमानस्य वृत्रस्य सानुम् समुच्छ्रितं हनुप्रदेशम् वज्रेण अव जिघ्नते प्रहरति। किं कुर्वन्। अपः वृष्ट्युदकानि सर्माय सरणाय निर्गमनाय चोदयन् प्रेरयन् ॥ ५ ॥

इति प्रथमाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः ॥

अधि॒ सानौ॒ नि जि॑घ्नते॒ वज्रे॑ण श॒तप॑र्वणा।
म॒न्दा॒न इन्द्रो॒ अन्ध॑सः॒ सखि॑भ्यो गा॒तुमि॑च्छ॒त्यर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ६ ॥

अधि॑। सानौ॑। नि। जि॒घ्न॒ते॒। वज्रे॑ण। श॒तऽप॑र्वणा।
म॒न्दा॒नः। इन्द्रः॑। अन्ध॑सः। सखि॑ऽभ्यः। गा॒तुम्। इ॒च्छ॒ति॒। अर्च॑न्। अनु॑। स्व॒ऽराज्य॑म् ॥ ६ ॥

---

१. अभिसंक्रम्य अ. २. क्रुध्यतः वि¹. ३-३. माध्यर्दशो मू; 'दम् मूर्ध. ४. सरणा° वि¹ अ². ५-५. सर्वः स्तोता स्तौति वि¹ अ²; सर्वस्तोता स्तौति इति वि¹ अ³; सर्वस्तोता स्तौति इति मूर्ध; मुदितम् क.

स्कन्द० अधि इत्युपरिभावे। सानौ सानुन समुच्छ्रितस्य प्रदेशस्य नि जिघ्नते नियमेन मेघमित्यर्थः हन्ति। वज्रेण शतपर्वणा पर्वशतोपेतेन। अत्यन्त हन्तेरित्यर्थः[1]। मन्दान मोदमान। तृप्यन्नित्यर्थः। क। इन्द्र। केन। अन्धस तृतीयार्थे षष्ठी। सोमलक्षणेन अन्नेन[2]। कस्मात् निनिघ्नते[3]। उच्यते। यस्मात् सखिभ्य सर्वेषामर्थाय गातुम् भूमिं प्रति गमनम् इच्छति। कस्य। सामर्थ्याद् वृष्टि लक्षणानामपाम्। अर्चन् 'अनु स्वराज्यम्'[4] ॥ ६ ॥

वेङ्कट० समुच्छ्रित देशे मेघं[5] निहन्ति वज्रेण पर्वशतोपेतेन[6] मोदमान इन्द्र सोमेन, सखिभ्य गमनम् इच्छति आत्मान प्रति ॥ ६ ॥

मुद्गल० इन्द्र शतपर्वणा शतसङ्ख्याकधाराभिर्युक्तेन वज्रेण सानौ अधि नि जिघ्नते अधि सप्तम्यर्थानुवादी। समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति। स च इन्द्र मन्दानः मन्दमानः स्तूयमान सन् सखिभ्य समानख्यानेभ्य स्तोतृभ्य अन्धस अन्नस्य गातुम् मार्गमुपायम् इच्छति। अन्यत् पूर्ववत् ॥ ६ ॥

इन्द्र॒ तुभ्य॒मिद॑द्रि॒वोऽनु॑त्तं वज्रिन् वी॒र्य॑म् ।
यद्ध॒ त्यं मा॒यिनं॑ मृ॒गं तमु॒ त्वं मा॒यया॑वधी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ७ ॥

इन्द्र॑ । तुभ्य॑म् । इत् । अ॒द्रि॒ऽवः॒ । अनु॑त्तम् । व॒ज्रि॒न् । वी॒र्य॑म् ।
यत् । ह॒ । त्यम् । मा॒यिन॑म् । मृ॒गम् । तम् । ऊँ॒ इति॑ । त्वम् । मा॒यया॑ । अ॒व॒धीः॒ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥

स्कन्द० हे इन्द्र! तुभ्यम् षष्ठ्यर्थे चतुर्थ्येषा। तव। हे अद्रिव![7] अद्रय सोमाभिषवग्रावाण, तद्वन्[7]। अथवा अद्रिर्मेघ[8], तेन हन्तव्येन तद्वन्[8]। मघाना हन्तरित्यर्थः। अनुत्तम् अप्रेरितम्। अनभिभूतपूर्वं केनचिदित्यर्थः। हे वज्रिन्! वीर्यम् सामर्थ्यम्। येन किं कृतम्। उच्यते। यत् ह त्यम् यत् त्यमिति विलिङ्गावपि समानाधिकरणौ। उभयत्र च तृतीयार्थे द्वितीया। हशब्दश्च पदपूरण। यत् तेन। मायिनम् मृगम् मृगनामानमसुर मार्गणीय वा मेघम्। तच्छब्दश्रुतेर्यच्छब्दार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यमन्ये नाशक्नुवन् हन्तुम्, तम् त्वम् स्वया मायया अवधीः। अर्चन् 'अनु स्वराज्यम्' ॥ ७ ॥

वेङ्कट० इन्द्र![9] तव एव केनचिदहिंसितम्[10] वीर्यम्[11] वज्रिन्!। अद्रिरादरणात्पर्वतानिति [12]वज्र एवोक्त.[12]। यत् खलु [13]तम् मायाविनम्[13] मृगासुरम् अपश्य ‡ तम् त्वम् मायया एव हतवान्[13] ॥ ७ ॥

मुद्गल० हे अद्रिव! वाहनरूपमेघयुक्त! वज्रिन्! वज्रवन्! इन्द्र! तुभ्यम् इत् तवैव वीर्यम् सामर्थ्यम् अनुत्तम् शत्रुभिरतिरस्कृतम्। यत् ह यस्मात् खलु मायिनम् मायाविनम् त्यम् तं प्रसिद्धं बलविदारम्। शोकापद्रवकारिणमित्यर्थः। मृगम् मृगरूपमापन्नम् तम् वृत्रम् त्वम् अपि मायया एव अवधीः हतवानसि। अन्यत् पूर्ववत् ॥ ७ ॥

---

१. °तेरर्थ° मूको २ नास्ति भ ३ °से भ. ४ ४ नास्ति मूको. ५ नास्ति वि[1] अ[1] कु छ स्प. ६ पर्वशतेन वि[1] स्प ७ ७ त्रुटितम् ति ८ ८ यथाद्रिमें° ति ९ नास्ति वि[1] अ[1] १० °विदमिंसि° अर्च ११ नास्ति वि[1] स्प. १२-१२. वज्रेणोत्त्व वि[1] स्प १३-१३ त्रुटितम् वि[1] अ[1] † °विन् कु. ‡ °श्यत्(?) अ; वि[1] अ[1]. °श्यत् कु

वि ते वज्रासो अस्थिरन्नवतिं नाव्या३ अनु ।
महत् त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ॥ ८ ॥

वि । ते । वज्रासः । अस्थिरन् । नवतिम् । नाव्याः । अनु ।
महत् । ते । इन्द्र । वीर्यम् । बाह्वोः । ते । बलम् । हितम् । अर्चन् । अनु । स्वऽराज्यम् ॥ ८ ॥

स्कन्द० ते तव स्वभूताः वज्रासः वज्राः वि अस्थिरन् विपूर्वस्तिष्ठतिर्गत्यर्थः । अगच्छन् । कं प्रति । उच्यते । नवतिम् नाव्याः अनु अनुशब्दो 'अनुर्लक्षणे'[1] (पा १,४,८४) इति[2] कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । नवतिम् असुरपुरः प्रति । कीदृशीः । नाव्याः नावा तार्याः । सर्वत उदकेन परिक्षिप्ता इत्यर्थः । किञ्च महत् ते हे[3] इन्द्र । वीर्यम् । बाह्वोः च[4] ते बलम् हितम् आहितम् । स्वबाहुबलेनैव [5]चासि बलवान् न[5] सहायबलेनेत्यर्थः । कीदृशस्य । उच्यते । अर्चन् ते इत्येतेन षष्ठ्यन्तेन सामानाधिकरण्यात् षष्ठ्यर्थे प्रथमैषा । अर्चतः अनु स्वराज्यम् ॥ ८ ॥

वेङ्कट० तव आयुधानि व्यतिष्ठन्त नवतिसंख्याः नदीः अनु । महत् ते इन्द्र वीर्यम् बाह्वोः च तव बलम् निहितम् ॥ ८ ॥

मुद्गल० हे इन्द्र! ते तव वज्रासः वज्राः त्वत्सकाशान्निर्गतान्यायुधानि नाव्याः नावा तार्याः नवतिम् नवतिसंख्याका वृत्रेण निरुद्धा नदीः अनु उपलक्ष्य वि अस्थिरन् विविधम् अस्थिषत । सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः । किञ्च हे इन्द्र! ते तव वीर्यम् महत् प्रभूतम् । अन्यैरजेयमित्यर्थः । तथा ते बाह्वोः त्वदीययोर्हस्तयोः बलम् हितम् निहितम् । त्वदीयौ बाहू[6] अप्यतिशयेन बलिनावित्यर्थः । अन्यत् पूर्ववत् ॥ ८ ॥

सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।
शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यम् ॥ ९ ॥

सहस्रम् । साकम् । अर्चत । परि । स्तोभत । विंशतिः ।
शता । एनम् । अनु । अनोनवुः । इन्द्राय । ब्रह्म । उत्ऽयतम् । अर्चन् । अनु । स्वऽराज्यम् ॥ ९ ॥

स्कन्द० हे मदीयाः पुत्रपौत्राः! ऋत्विजः! वा सहस्रम् सहस्रसंख्याकाः सन्तः साकम् सह अर्चत स्तुत इन्द्रम् । परि स्तोभत विंशतिः स्तोभतिरर्चतिकर्मा (तु. निघ ३,१४) । विंशतिसंख्याकाः सन्तः परिष्टुत । सहस्रविंशतिसंख्याभ्यां[7] चात्र सम्भविसंख्या[8] लक्ष्यते । यावन्तः सम्भवथस्तावन्तः[9] स्तुतेत्यर्थः । कस्मात् । उच्यते । शता एनम् अनु अनोनवुः बहूनि स्तोतृशतान्येनमिन्द्रमनु स्तुतवन्तः ।

1. लक्षणे कु वि. 2. नास्ति कु वि. 3. नास्ति भ. 4. एव च भ; एव वि. 5-5. त्रुटितम् वि. 6. बाहो मूको. 7. °संख्याभ्यः भ. 8. संभवो सं° मूको. 9. °संभवत ता° वि.

यस्माच्च मयापि इन्द्राय स्तुतिलक्षणम् ब्रह्म उद्यतम् उपकल्पितम्। कीदृशाय। अर्चन्, चतुर्थ्यर्थे प्रथमैषा। 'अर्चेते अनु' स्वराज्यम्। अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना। सहस्रमिति वसुरोचिषो नाम ऋषय इहाभिप्रेताः। कुत एतत्—'आ यदिन्द्रश्च दद्वहे सहस्रं वसुरोचिषः' (ऋ ८,३४,१६) इति सहस्रसंख्याकत्वस्य तेषां प्रसिद्धत्वात् इन्द्रस्तुतिकरत्वाच्च। अर्चत परिष्टोभत इत्येतदपि लङर्थे लोट्। व्यत्ययेन मध्यमपुरुषः। विंशतिरित्यङ्गिरसोऽभिप्रेताः[2]। यद्यपि[3] दशाङ्गिरस इति ऐतिहासकाः स्मरन्ति, तथापि[4] बृहस्पत्यादिभ्रात्रपेक्षया विंशतिसंख्यावचनम्। सहस्रसंख्याका वसुरोचिषः विंशतिसंख्याकाश्चाङ्गिरसः सहेन्द्रमस्तुवन्नित्यर्थः।[1] शतैनमित्यपि वैखानसा नाम ऋषयोऽभिप्रेताः। ते हि प्रसिद्धशतत्वाः[5]। तथा च[6] शौनकेन वक्ष्यते—'पव-स्वेत्यृषयः सूक्तं शतं वैखानसा विदुः'[7] इति। शतसंख्याकाश्च वैखानसा पुनमस्तुवन्नित्यर्थः। अन्यैरपि स्तोतृभिरिन्द्राय ब्रह्म उद्यतम्। अर्चन्ननु स्वराज्यम् ॥ ९ ॥

वेङ्कट० इन्द्रं[8] सहस्रसंख्याकाः सह स्तुत। परिगायत[9] विंशतिसंख्याकाः[10]। शतानि स्तोतॄणामेनमिन्द्र-मतिशयेन अनु अस्तुवन्। इन्द्राय सर्वं स्तोत्रं स्तोतृभिः उद्यतम् ॥ ९ ॥

मुद्गल० सहस्रम् सहस्रसंख्याका मनुष्याः साकम् अर्चत एनमिन्द्रं युगपदेवापूजयन्। तथा विंशतिः षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विंशतिसंख्याकाः। तेषां या विंशति-संख्या सा परि स्तोभत परितः सर्वतोऽस्तौत्।[1] तथा च शता शतसंख्याका ऋषयः एनम् इन्द्रम् अनु अनोनवुः पुनःपुनरस्तुवन्। अस्मा एव इन्द्राय ब्रह्म हविर्लक्षणमन्नम् उद्यतम् वानुपूर्व्येण कृतम्। अत एवंविध इन्द्रो बृषमहत्त्वित्यर्थः। अन्यत् पूर्ववत् ॥ ९ ॥

इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्त्सह॑सा॒ सहः॑ ।
म॒हत् तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १० ॥

इन्द्रः॑ । वृ॒त्रस्य॑ । तवि॑षीम् । निः । अ॒ह॒न् । सह॑सा । सहः॑ ।
म॒हत् । तत् । अ॒स्य॒ । पौंस्य॑म् । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १० ॥

स्कन्द० महत् तत् अस्य इति यच्छब्दात् यच्छब्दोऽध्याहार्यः[11]। येन इन्द्रः वृत्रस्य तविषीम् सेनालक्षणं बलम् निः अहन्। सहसा बलेन। सहः शरीरबलञ्च[12]। महत्तदस्य पौंस्यम्। किञ्च वृत्रम् जघन्वान् यदिन्द्रः असृजत् सृजति विसृष्टवान्[13] वा। किम्। सामर्थ्याद् वृष्टिलक्षणा अपः[14]। अर्चन् [15]इत्यादि पूर्ववत्[15] ॥ १० ॥

वेङ्कट० इन्द्रः वृत्रस्य बलम् निः अहन् सहसा च[16] सहः। येन सहते परं तत् सहः[17]। महत् तत् अस्य[18] पुंस्त्वम् वृत्रम् घ्नन्[19] प्रकाशितवानिन्द्र इति[19] ॥ १० ॥

मुद्गल० इन्द्रः वृत्रस्य असुरस्य तविषीम् बलं स्वकीयेन बलेन निः अहन् हतवान्। सहसा सहनेन अभिभवसाधनेनायुधेन सहः अभिभवसाधनं वृत्रायुधं निरहन् हतवान्। अस्य इन्द्रस्य तत्

---

१-१. °चेतो नु म ठि; °चेत नः कु. २. °त्यादृगि° भ. ३. मय वि. ४. यथापि वि. ५. °ताः वि. ६. हि वि. ७. मु. षड्गुरुशिष्यः (क्रम ९, ३३). ८. नास्ति वि[1] अ[2]. ९. °यत च वि[1] दर्प. १०. °संख्याकाः वि[2]. ११. त्रुटितम् वि. १२. °रं च बलं अ वि. १३. सृष्टवान् वि. १४. नापः कु. १५-१५. नास्ति मूको. १६. नास्ति कु. १८. नास्ति वि[2]. १७. °स्य तु वि[1] दर्प. १९. नशितान् वि[1] अ[1].

पौंस्यम् बलम् महत् अतिमौढम्। यस्मादयम् वृत्रम् जघन्वान् हतवान् हत्वा च सखिवदा अपः असृजत् तस्माद् वृत्राधिरगमयत्। अन्यत्पूर्ववत् ॥ १० ॥

इति प्रथमाष्टके पञ्चमाध्याये त्रिंशो वर्गः ॥

इमे चित् तव मन्यवे वेपेते भियसा मही ।
यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ॥ ११ ॥

इमे इति । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति ।
यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥

स्कन्द० 'इमे चित् अपि तव मन्यवे 'मन्युः' ( निघ २,१३ ) इति[1] क्रोधनाम। भियसा इत्येतेन चास्य सम्बन्धः। तत्र च 'भीत्रार्थानाम्°' ( पा १, ४, २५ ) इत्यपादानत्वात् पञ्चम्यर्थे चतुर्थ्येषा[1]। क्रोधात् [3]भयेन वेपेते[3] कम्पेते[4]। मही द्यावापृथिवीनामैतत् ( तु. निघ ३.३० )। द्यावापृथिव्यौ। इमे अपि द्यावापृथिव्यौ भवतः क्रुद्धात् बिभ्यत्यौ कम्पेते। किं पुनरन्ये प्राणिन इत्यर्थः। 'कदा। उच्यते'। यत् यदा हे इन्द्र! वज्रिन्! ओजसा वृत्रम् मरुत्वान् मरुद्भिः सहितः अवधीः। अर्चन् अनु स्वराज्यम् ॥ ११ ॥

वेङ्कट० द्यावापृथिव्यौ तव क्रोधाय[5] भयेन कम्पेते। यत्[6] त्वम् इन्द्र! वज्रिन्! बलेन वृत्रम् असुरम् मरुद्भिः सह अवधीः ॥ ११ ॥

मुद्गल० मही चित् महत्यौ इमे द्यावापृथिव्यावपि हे इन्द्र! तव मन्यवे त्वदीयकोपात् भियसा भीत्या वेपेते कम्पेते। हे वज्रिन्! वज्रवन्! इन्द्र! मरुत्वान् मरुद्भिर्युक्तस्त्वम् ओजसा बलेन यत् यदा वृत्रम् अवधीः, तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः ॥ ११ ॥

न वेपसा न तन्यतेन्द्रं वृत्रो वि बीभयत् ।
अभ्येनं वज्र आयसः सहस्रभृष्टिरायतार्चन्ननु स्वराज्यम् ॥ १२ ॥

न । वेपसा । न । तन्यता । इन्द्रम् । वृत्रः । वि । बीभयत् ।
अभि । एनम् । वज्रः । आयसः । सहस्रऽभृष्टिः । आयत । अर्चन् । अनु । स्वऽराज्यम् ॥ १२ ॥

स्कन्द० "न वेपसा" 'वेपः' ( निघ २,१ ) इति कर्मनाम। प्रत्युद्धरणादिना[8]। न अपि तन्यता स्तनयित्नुलक्षणेन शब्देन। इन्द्रम् वृत्रः वि बीभयत् भायितवान्। किं तर्हि। अभीतेनेन्द्रेण क्षिप्तः एनम् वृत्रम् वज्रः आयसः लोहमयः गमनशीलो वा। सहस्रभृष्टिः भृष्टिरभिरुच्यते। सहस्राभ्रिः[9]। आयत अभिगतः[10] प्राप्तः। अभीत इन्द्रो वज्रं क्षिप्तवानेवेत्यर्थः। अर्चन् अनु स्वराज्यम्

---

१-१. त्रुटितम् ति. २. चतुर्थी ति. ३-३. भयेन वै अ; भयेनैव कु. ४. कम्पेते अ कु; नास्ति ति. ५. क्रुद्धाय वि[1] अ[1]. ६. नास्ति वि[1] अ[1]; यः वि[2,3] लप. ७-७. नास्ति कु, ति; न वे अ. ८. प्रत्यु···रणा° ति. ९. °साभ्रीः मूको. १०. °गतैः मूको.

इत्येतत्तु वज्रस्य विशेषणम् । यद्वेन्द्रस्य स्वराज्यार्चन तत्[1] तत्सम्बन्धिनो वज्रस्योपचर्यते । अथवा अर्चन्निति षष्ठ्यर्थे प्रथमा । अर्चत स्वराज्यमिन्द्रस्य स्वभूतो वज्र इति[2] ॥ १२ ॥

वेङ्कट० न वेपेन[3] न[4] च गर्जितशब्देन[5] इन्द्रम् वृत्र निर्भीतमकरोत् । वृत्र तु वज्र इन्द्रविसृष्ट सहस्रधार अभ्यगच्छत् अयोमय ॥ १२ ॥

मुद्गल० वृत्र इन्द्रम् वेपसा स्वकीयेन वेपनेन कम्पनेन न वि बीभयत् भीत नाकरोत् । तथा तन्यता स्वकीयेन घोरेण गर्जनशब्देन न वि बीभयत् । अपि च इन्द्रेण विसृष्टः आयस अयोमयः सहस्रभृष्टि अनेकाभिर्धाराभिर्युक्तः वज्रः एनम् वृत्रम् अभि आयत हन्तुमाभिमुख्येनागच्छत् । अन्यत् पूर्ववत् ॥ १२ ॥

यद् वृत्रं तव॑ चाशनिं॒ वज्रे॑ण स॒मयो॑धयः ।
अहि॑मिन्द्र॒ जिघां॑सतो दि॒वि ते॑ बद्बधे॒ शवो॒ऽर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १३ ॥

यत् । वृत्रम् । तव॑ । च । अ॒शनि॑म् । वज्रे॑ण । स॒म्ऽअयो॑धयः ।
अहि॑म् । इ॒न्द्र॒ । जिघां॑सतः । दि॒वि । ते॒ । ब॒द्बधे॒ । शवः॑ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १४ ॥

स्कन्द० 'यद् वृत्रम्' यदा वृत्रम् तव अशनिम् । वज्रेण "अशनिः शक्तिरिहोच्यते" । तवेत्येतेन च व्यवहितोऽपि वज्रो विशेष्यते नाशनि । कुत एतत् । वज्रेण योधनासम्भवात् इन्द्राशने । च शब्दश्चाशनिमित्येतस्मात्परो द्रष्टव्य । वृत्रमशनिञ्च तदीया तव स्वभूतेन वज्रेण त्वमेव समयोधय सम्यक् योधितवान् । हतवानित्यर्थः । अथवा तवेत्येतेनाशनिरेव विशेष्यते । अशनिमिति तु[10] तृतीयार्थे द्वितीया । यदा वृत्र स्वभूतया अशन्या वज्रेण च त्वमेव समयोधय इति । यदति वचनाच्च [11]इत्यध्याहार्यम् । तत[11] प्रभृति अहिम् हे इन्द्र[1] जिघांसत नित्यमेव हन्तुमिच्छत दिवि ते बद्बधे बध बन्धने । आबद्धम् । दिव यावत् प्रख्यातता[12] गतमित्यर्थः । किं तत् । उच्यते । शव बलम् । अर्चन् इति तु शवसो विशेषणम् इन्द्रस्य वा । यदि शवस ततो व्यत्ययेन पुंलिङ्गत्वम् । [13]स्वराज्यमर्चच्छव इति[13] । अथेन्द्रस्य[14] तत षष्ठ्यर्थे प्रथमा । स्वराज्यम् इच्छतस्तव शव इति ॥ १३ ॥

वेङ्कट० [15]यत् वृत्रम्[15] वृत्रेण त्वदर्थं विसृष्टाम् अशनिम् च तव वज्रेण सह अयोधय तदा[16] अहिम् हन्तुमिच्छत तव अन्तरिक्षे बद्धमासीत् बलम्[17] । प्रसिद्धमभूत् इति[1] ॥ १३ ॥

मुद्गल० हे इन्द्र ! यत् यदा वृत्रम् तव हननार्थं तेन सृष्टाम् अशनिम् च त्वम् वज्रेण समयोधयः सम्यक् प्राहार्षीः तदानीम् अहिम् आगत्य हन्तारं वृत्रम् जिघांसतः हन्तुमिच्छत ते तव शव बलम् दिवि बद्बधे बद्धमनुष्यूत स्थापितमासीत् । शिष्टं पूर्ववत् ॥ १३ ॥

१. नास्ति अ २. नास्ति कु ३. वेपनेन वि[1] अ[1,2], वेपनेन वि[1] ४. नास्ति वि[1] अ[1]. ५ °शब्दे वि[1]. ५-६ नास्ति कु. ७-७. अशनिम्° कु. ८. °तोऽपि च कु ९ °तदेवेन वज्रं विशिष्ट° वि. १० नास्ति अ वि ११-११. नास्ति अ कु. १२. प्रख्यापिततः वि. १३-१३ स्वराज्यमिच्छतस्तव[?] अ, स्वराज्यमर्चन् वि, नास्ति कु. १४. अथवेन्द्र° १५-१५. नास्ति वि[1,2] अ एवं. १६. तदानीम् वि[1] अ[1,1] १७. नास्ति वि[1] एवं.

अभिष्टने ते अद्रिवो यत् स्था जगच्च रेजते ।
त्वष्टा चित् तव मन्यव इन्द्र वेविज्यते भियार्चन्ननु स्वराज्यम् ॥ १४ ॥

अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते ।
त्वष्टा । चित् । तव । मन्यवे । इन्द्र । वेविज्यते । भिया । अर्चन् । अनु । स्वऽराज्यम् ॥ १४ ॥

स्कन्द० अभिष्टने[1] अभिष्टनः स्तनयित्नुशब्दः । सप्तमी चात्र 'यस्य च भावेन०' (पा २,३,३७) इत्येवं द्रष्टव्या । तच्छ्रुतेश्च लक्षणभूतयोरर्थक्रियापदाध्याहारः । स्तनयित्नुशब्दे प्रवृत्ते । ते तव स्वभूते हे अद्रिवः! अद्रिविकारत्वादद्रिर्वज्रः, तद्वन्! । यत् स्थाः '[2]यच्छब्दात् तच्छब्दोऽध्याहार्यः[2]' यत् स्थावरं तच्च । जगत् च जङ्गमं च । रेजते बिभेति भयेन वा कम्पते । न च केवलं स्थावरं जङ्गमं च । किं तर्हि । त्वष्टा अपि तव मन्यवे[3] मन्योः क्रोधात् हे इन्द्र! वेविज्यते विजी भयचलनयोः । अत्यर्थं चलति । कम्पत इत्यर्थः । भिया भयेन । त्वष्टृग्रहणं चात्र सर्वेषां देवानां प्रदर्शनार्थं द्रष्टव्यम् । देवा अपि तव क्रोधात् भयेनात्यर्थं कम्पन्त इत्यर्थः । अर्चन् अर्चतः अनु स्वराज्यम् ॥ १४ ॥

वेङ्कट० सिंहनादे[4] ते वज्रिन्! यत् स्थावरं तत् रेजते, जङ्गमं च कम्पते । त्वष्टा च तव क्रोधाय कम्पते भयेन अनिन्द्रं सोमम् '[4]आहरन् इति[4]' ॥ १४ ॥

मुद्गल० हे अद्रिवः! वज्रवन्! इन्द्र! ते तव अभिष्टने सिंहनादे सति स्थाः स्थावरम् जगत् जङ्गमम् च यत् अस्ति तदुभयम् रेजते कम्पते । त्वष्टा चित् वज्रनिर्माता त्वष्टा च तव मन्यवे त्वदीयाय कोपाय भिया भीत्या वेविज्यते भृशं कम्पते । अन्यत् समानम् ॥ १४ ॥

नहि नु यादधीमसीन्द्रं को वीर्या परः ।
तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ॥ १५ ॥

नहि । नु । यात् । अधिऽइमसि । इन्द्रम् । कः । वीर्या । परः ।
तस्मिन् । नृम्णम् । उत । क्रतुम् । देवाः । ओजांसि । सम् । दधुः । अर्चन् । अनु । स्वऽराज्यम् ॥ १५ ॥

स्कन्द० नहि इति निपातो न इत्यनेन समानार्थः । नु इति पदपूरणः । न वयम् यात्[5] व्यत्ययेनात्र नपुंसकता, द्वितीयायाश्च स्थाने प्रथमा । यान्तमिन्द्रं कञ्चिच्छत्रुम् अधीमसि अधिगच्छामः । सर्वशत्रूणामुपरि इन्द्रः याता । न कश्चिदिन्द्रस्योपरि गन्तुं समर्थ इत्यर्थः । वधार्थो[6] वात्र याति । 'अहेर्यातारम्' (ऋ १,३२,१४) इति यथा । न कञ्चिदिन्द्रस्य[7] हन्तारमधिगच्छाम इत्यर्थः । कस्मात् । उच्यते । यस्मात् इन्द्रम् पञ्चम्यर्थे द्वितीयैषा । इन्द्रात् । कः वीर्या[8] वीर्येण परः उत्कृष्टः । यस्माच्च तस्मिन् इन्द्रे नृम्णम् धनम् उत क्रतुम् प्रज्ञाम् देवाः

---

१. नास्ति मूको. २-२. तच्छब्दो यच्छब्दादध्या° अ. ३. सि(° दे वि[1] म[1]. ४-४. °रति म[1]; °रन् कु. ५. यात् यान्तं अ. ६. °र्थे अ. ७. कश्चिदि° कु. ८. °र्येरात् अ; वीर्यात् वि.

